श्रीहरिः

# चातुर्वर्ण्य-संस्कृति-विमर्शः

## द्वितीयो भागः

प्रथम भागश्च



धर्मसम्राट्

स्वामी श्री करपात्री जी महाराज

श्रीहरिः

# चातुर्वर्ण्य-संस्कृति-विमर्शः

## द्वितीयो भागः

### प्रथम भागश्च

परमहंसपरिव्राजकाचार्यानन्तश्रीविभूषित
स्वामिश्रीहरिहरानन्दसरस्वती
( श्रीकरपात्री स्वामी )
महाराजैः प्रणीतः ।

संपादकौ

श्रीरामगोविन्दशुक्लः, न्याय-व्याकरण-साहित्याचार्यः
स्वामिश्रीसदानन्दसरस्वती, वेदान्तवाचस्पतिः

प्रकाशकः

स्वामीश्रीसदानन्दसरस्वती [ श्रीवेदान्तीस्वामी ]
धर्मसंघ, दुर्गाकुण्ड, वाराणसी

प्रथम भागस्य

# किञ्चिन्निवेदनम्

अस्मिन् भूमण्डले सन्ति लोकसंस्थापनार्था अनेका व्यवस्थाः। याः दस्युप्रायान् जनान् लोकमार्गे प्रवर्तयन्ति। किन्तु तासु नास्ति काचित् स्थायिनी व्यवस्था, केवलं वैदिकी व्यवस्थैव स्थायिनीं वर्णव्यवस्थां प्रकाशयति। कति चतुर्युगी न गता, कियन्तः अस्याः विनाशका नोत्पन्नाः, भारतीयजनमनोभिरियं न गता। अद्यापि वैज्ञानिके युगे यत्र समस्तं भूमण्डलं निकटतया प्रतीयते। यावता कालेन पूर्वजैः तीर्थयात्रा कृता। ततोऽपि स्वल्पेन कालेन वयं चन्द्रमण्डलं दृष्ट्वा आगच्छामः, अमेरिकादिदेशानां का कथा। यतः प्रातरासं कृत्वा प्रचलितः मध्याह्नभोजनं रूसदेशे सायकालिकं जापाने शयनं च भारते कर्तुं शक्यते। तत्र भारतीया वर्णव्यवस्था, आचारव्यवस्था, आराधनप्रकारः क्लेशद इवानुभूयते। अत एव बहुभिः अस्या उन्मूलनाय प्रयत्नः महता प्रयासेन आरब्धो वर्तते। भारतीयं धर्मनिरपेक्षं शासनं तु कटिबद्ध एव आस्ते।

तत्र केचन शासनप्रेरिताः, अपरे तस्मात् सहयोगाभिलाषुकाः अन्यथायोजितैः शास्त्रीयैः वचनैः, कथानकैः, अल्पमतीन् वञ्चयन्ति। अस्यां परम्परायां आंग्लाः, तत्सजातीयाः अन्ये, तेभ्यो लब्धभाषापरिचयाः भारतीया अपि अभारतीयासु भाषासु बहोः कालात् किमपि जल्पन्तः आसन्। यत्र भारतीयपरम्परायां परिनिष्ठिताः विद्वांसः अवधानं न दत्तवन्तः।

अधुना शासनात् साहाय्यं प्राप्य तेषां ग्रन्थानां लोकभाषायामनुवादः उपलब्धो वर्तते। तानवलोक्य कोऽपि वर्णेन गौरः संन्यासदीक्षायां दीक्षितः, कर्मणा ब्राह्मण्यमुपगतमात्मानं समर्थयितुं कोपि निबन्धो निबद्धः। यस्य तादृशाएवानेके समर्थकाश्च जाताः। ये लोकान् वर्णव्यवस्थातो शिथिलादरान् विदधति।

इमामनर्थपरम्परामवलोक्य वैदिकमार्गप्रतिष्ठापनाचार्यैः **श्रीकरपात्र** स्वामीत्याख्यया प्रसिद्धैः पदवाक्यप्रमाणपारावारीणैः **स्वामिश्रीहरिहरानन्दसरस्वतीमहाराजैः** पुराणानि सम्यगवलोक्य युक्तिप्रमाणाभ्यां विचार्य

'चातुर्वर्ण्यसंस्कृतिविमर्शो' नाम रुचिरो ग्रन्थः निरमीयत। यत्र विविधैः प्रकारैरुपक्षिप्तानाक्षेपान् अनेकैः प्रकरणैः विचरितं यस्यायं प्रथमोभागः विदुषां करकमलेषु उपायनीकुर्वन् प्रसीदामि।

अयं ग्रन्थः भागद्वयेन मुद्रणीयो वर्तते। तत्र प्रथमे भागे निम्नलिखिताः विषयाः विचारिताः।

## १. जन्मना वर्णवादः

अत्र वर्णशब्दार्थः, जातिशब्दार्थः, जन्मना जातिवादः, जातिभेदकाः, ब्राह्मणभेदः, कर्मब्राह्मणपक्षे पूर्वपक्षाः तेषामुत्तराणि, तत्र वेदपुराणयोरैकमत्यम्, टीकाकाराणां संगतयः।

## २. वर्णद्वयवादः

अस्य उपस्थापनम् समाधानं च

## ३. एकवर्णवादः

अस्य उपस्थापनम् समाधानं च

## ४. आजीविकावर्णवादः

अत्र जातिशब्दार्थः वर्णव्यवस्थाकारणविचारः, तस्याः स्थिरत्वपक्षे दोषाः, तेषां समाधानानि, वृद्धविवाहः, तस्य समाधानम्।

## ५. वर्णसम्बन्धिनो विचाराः

अत्र वर्णसम्बन्धे प्रस्तुतानां विचाराणामुपस्थापनम्, समाधानञ्च।

## ६. वेदाध्ययनाधिकारः

अत्र वेदाध्ययने केऽधिकारिणः, स्त्रीशूद्रयोः विद्यासम्बन्धः, तयोरध्यापकत्वम्, वेदमन्त्रार्थः; दयानन्दकृतमन्त्रार्थखण्डनम्, सर्वपक्षाणां समाधानम्।

द्वितीयभागः शीघ्रमेव प्रकाशितो भविष्यति यत्र निम्नलिखिताः विषयाः विचारिताः सन्ति।

१— जातिभेदे वैदेशिकानां विचाराः,

२—जातिपरिष्कारः, तस्याः समर्थनम् स्वरूप परिचयश्च।

३—वेदप्रामाण्यम् ।

४—गोत्रप्रवरविमर्शः ।

५—पुराणानां प्रामाण्यम् ।

इत्थं भागद्वयेन मुद्रयिष्यमाणस्यास्य ग्रन्थस्य कलेवरं सहस्रपृष्ठपरिमितं भवितुमर्हति ।

आसीदयं प्रकाशनस्य मनोरथः यत् प्रयागस्य 'अर्धकुम्भा' वसरे समग्रः ग्रन्थः प्रकाशितो भवेत् किन्तु मुद्रणशैथिल्यात् तथा नाभवत् । अधुना अस्य प्रथमोभागः पाठकानां करकमलेषु समर्पयन् सन्तोषमनुभवामि । अशासे च शीघ्रमेव द्वितीयो भागः हस्तगतो भविष्यति ।

अस्य ग्रन्थस्य प्रकाशनकर्मणि साहाय्यमुपरचयन्तः **श्रीमार्कण्डेयब्रह्मचारि** महोदयः, **श्रीवासुदेवब्रह्मचारिणः**, **श्रीसन्तशरणवेदान्तिनः**, **ब्रह्मचारिश्रीब्रह्मचैतन्य ( प्रबल )** महोदयाः सादरं स्मरणीयाः । येषां सहयोगेनायं ग्रन्थः प्रकाशमायातः ।

अस्य ग्रन्थस्य गोवर्धनपीठसम्बद्धैः अधिकारिभिः महता हर्षेण प्रकाशनभारो गृहीत इति सर्वथा धन्यवादार्हाः ।

अन्ते भगवन्तं विश्वनाथं प्रार्थये यत् अस्मिन् कर्मणि बलमुत्साहञ्चादधातु इति ।

**रामगोविन्दशुक्लस्य**

जन्माष्टमी
२०३० विक्रमे ।



# विषय-सूची

❀०❀

॥ श्रीहरिः ॥

# चातुर्वर्ण्य-संस्कृति-विमर्शः

●

यच्छक्तयो वदतां वादिनां वै विवाद-संवादभुवो भवन्ति ।
कुर्वन्ति चैषां मुहुरात्ममोहं तस्मै नमोऽनन्तगुणाय भूम्ने ॥

श्रौतस्मार्त-सकलधर्मोपासन-विज्ञानानामाश्रमव्यवस्थायाश्च वर्णव्यवस्थामूलकत्वात् वर्णस्वरूपस्य तद्धेतूनाञ्च पूर्वं निर्धारणमत्यावश्यकम् । तत्र 'पयोव्रतं ब्राह्मणस्य यवागूराजन्यस्यामिक्षा वैश्यस्य' 'ब्राह्मणो यजेत' 'ब्राह्मणेन न म्लेच्छितवै नापभाषितवै' 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत एकादशवर्षं राजन्यं द्वादशवर्षं वैश्यम्' 'ब्राह्मणो निर्वेदमायात्' 'निषादस्थपतिं याजयेत्' इत्यादिश्रुतिभिः सिद्धान् वर्णानुद्दिश्यैव कर्मविधानाद् यद्यपि सिद्धमेव जन्मजत्वं, तथापि ब्राह्मणादिवर्णस्वरूपमाश्रित्य केचनाधुनिकास्तत्र संशेरते, कर्मनिष्पाद्यमेव च वर्णं मन्वते । अतो वर्णस्वरूपप्रतिपादनाय साम्प्रतमुपक्रम्यते—

## जन्मना वर्णव्यवस्था

'वर्णो द्विजादौ शुक्लादौ' इति कोषोक्त्या वर्णशब्दो द्विजादिजातौ रूढः । जातिशब्दस्तु जन्ममूलक एव । यथा सिंहत्वादिजातयः जन्ममूलिका एव ।

अत एव—

"ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत॥"

इति मन्त्रेण जन्मना वर्णव्यवस्था निगदव्याख्याता। तथाहि—अस्य महाविराड्रूपस्य भगवतो ब्राह्मणः मुखमासीत् मुखाज्जात इत्यर्थः। अस्य बाहू राजन्यः बाहुभ्यां जातत्वात्। कृतः। अस्य पुरुषस्य यत् यौ ऊरू तद्रूपो वैश्य आसीत्। अस्य भगवतः पद्भ्यां शूद्रः अजायत।

नन्वत्र ब्राह्मणो मुखमिति सामानाधिकरण्यव्यपदेशेन ब्राह्मणोऽस्य मुखमिति काल्पनिकमेव ब्राह्मणस्य तन्मुखरूपत्वम्। एवमेव राजन्यादीनामपि सम्बन्धे प्रतिपत्तव्यमिति चेन्न, 'पद्भ्यां शूद्रो अजायते'ति वाक्यशेषेण शूद्रस्य पज्जत्ववत् ब्राह्मणादीनामपि मुखजत्वमेव प्रतिपत्तव्यम्। न चैवं सामानाधिकरण्यमनुपपन्नमिति वाच्यम्; 'मृद्घटः', 'सुवर्णकुण्डलमित्यादौ तज्जत्वेन सामानाधिकरण्यवत्, तदुपपत्तेः। अतएव महर्षिणा शौनकेन 'तदस्योत्पन्नत्वादिति' तदुत्पन्नत्वेनैव ब्राह्मणादीनां मुखादिरूपतोक्ता। 'स मुखतस्त्रिवृतं निर्मिमीत' इत्यादितैत्तिरीयश्रुत्यापि निर्माणोक्त्या जन्मजत्वमेव ब्राह्मणत्वादीनामुक्तम्। मुखबाहूरुपज्जत्वादेव भगवता मनुना प्रतिपादितम्।:

'लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्तयत्॥'

अत्र कुल्लूकभट्टः—'भूरादीनां बाहुल्यार्थं मुखबाहूरुपादेभ्यो ब्राह्मणक्षत्रियवैश्यशूद्रान् यथाक्रमं निर्मितवान्। ......दैव्या च शक्त्या मुखादिभ्यो ब्राह्मणादिनिर्माणम्।' मुखादिभ्यो जायमानानामेव ब्राह्मणत्वादिजातित्वसिद्ध्या जन्मनैव जातिरिति लोकप्रसिद्धः सिद्धान्तोऽप्यत्र सङ्गच्छते। लोके सिंहादीनां जन्मनैव जातित्वस्य प्रसिद्धेः। जातित्वादेव यथा सिंहादयो न गुणकर्मादिमूलका, एवं ब्राह्मणादयोऽपि।

ननु—"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः" इति गीतासु गुणकर्मभिरेव चातुर्वर्ण्यस्य सृष्टिर्ज्ञायत इति चेन्न; तात्पर्याज्ञानविजृम्भितत्वात्। तथाहि—घटोत्पत्तौ दण्डादीनामिव चातुर्वर्ण्यसृष्टौ गुणकर्मादीनां निमित्तत्वमुक्तम्। यथोत्पन्ने घटे न दण्डादिभिस्तदवस्थितिः किन्तु घटोत्पत्तेः प्रागेव विद्यमानानां दण्डादीनां घटहेतुत्वम्, तथैव ब्राह्मणादियोनिषु

तत्तद्ब्राह्मणादिशरीरप्राप्तौ गुणकर्मादीनां हेतुत्वम्। तेन यैर्गुणैः, कर्मभिश्चेश्वरेण ब्राह्मणादिदेहनिर्माणं कृतं तेषामेवात्र चातुर्वर्ण्यनिमित्तत्वमुक्तम्। तच्च सनातनधर्मानुयायिभिः सर्वत्रैव कार्यमात्रस्य गुणकर्ममूलकत्वादिष्यत एव। अत एवेश्वरेण मया वियत्सोमसूर्य्यादिवत् चातुर्वर्ण्यमित्युक्तम्। यथा वियदादयो न सर्वैर्निर्मातुं पार्यन्ते तथैव ब्राह्मणादयोऽपि। गुणकर्ममूलकचातुर्वर्ण्यव्यवस्थावादिभिस्तु तत्तच्छरीरोत्पत्त्यनन्तरं तद्देहादिगतैः गुणकर्मभिः ब्राह्मण्यादिनिर्धारणम्-इष्यते, तच्च नानेन वाक्येन सिद्ध्यति।

विश्वामित्रवृत्तान्तः

न च शास्त्रप्रसिद्धानां जात्यन्तरविशिष्टानां विश्वामित्रवसिष्ठादीनां स्वकीयतपःप्रभावाज्जातिपरिवर्तनं सम्पन्नमतः गुणकर्मादिमूलकत्वमेव तदिति मन्तव्यमिति वाच्यम्; तेषां मूलतः ब्राह्मणादीनां सतामेव तपःप्रभावात्प्रतिबन्धकावरणापनयनेन ब्राह्मणत्वादीनामभिव्यक्तेः। तथाहि विश्वामित्रस्य वाल्मीक्युक्तवृत्तान्ते ऋचीकमहर्षिनिर्मितब्राह्मचरुविपर्यासेन विश्वामित्रशरीरोपादानत्वेन ब्राह्मणत्वेऽपि क्षेत्रजदोषापाकरणायैव तप आदीनामुपयोगः। वसिष्ठस्य तु ब्रह्मपुत्रत्वेन ब्राह्मणत्वमेव। निमिशापानन्तरं कुम्भनिष्ठोर्वशीनिमित्तसंक्षुब्धमित्रावरुणतेजोजातत्वेन देवजत्वमेव। तच्च न ब्राह्मणत्वापनोदकम्। देवापिसम्बन्धे तूपरिष्टाद्वक्ष्यते।

भगवता भाष्यकारेणापि कर्मभिस्तदपोद्बलितैः सत्त्वादिगुणप्रभेदैस्तारतम्योपेतैर्ब्राह्मणादीनामुत्पत्तय उक्ताः।

> 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।
> तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्॥' (भ. गी० ४।१३)

'चातुर्वर्ण्यं चत्वार एव वर्णाः चातुर्वर्ण्यं मया ईश्वरेण सृष्टं उत्पादितं 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिश्रुतेः। गुणकर्मविभागशः, गुणविभागशः कर्मविभागशश्च। गुणाः सत्त्वरजस्तमांसि। तत्र सात्त्विकस्य सत्त्वप्रधानस्य शमो दमस्तप इत्यादीनि कर्माणि। सत्त्वोपसर्जनरजःप्रधानस्य क्षत्रियस्य शौर्यतेजःप्रभृतीनि कर्माणि। तम उपसर्जनरजःप्रधानस्य वैश्यस्य कृष्यादीनि कर्माणि। रज उपसर्जनतमःप्रधानस्य शूद्रस्य शुश्रूषा एव कर्म, इत्येवं गुणकर्मविभागशः चातुर्वर्ण्यं मया सृष्टमित्यर्थः। तच्चेदं चातुर्वर्ण्यं नान्येषु लोकेषु अतो मानुषे लोके इति विशेषणम्' इति तत्रत्यं शाङ्करभाष्यम्।

अत्र गीतोक्ताः शमादमादयो गुणास्तु ब्राह्मणादीनां स्वाभाविका एवोक्ताः । नतु तन्मूलकम् ब्राह्मण्यादिकम्, भगवद्वचसां तात्पर्य्यगोचरः । तस्माद्यथा- सिंहात् सिंह्यां जातः शौर्यक्रौर्यादिभिर्गुणैरुपेतः मुख्यः सिंहो भवति तथैव ब्राह्मण्यादिषु ब्राह्मणादिभ्यो जाताः शमदमादिभिस्तत्तद्वर्णोचितैर्गुणैरुपेता एव मुख्या ब्राह्मणादयः स्वाभाविकगुणरहिता जन्ममात्रनिबन्धना ब्राह्मणादयो जातिब्राह्मणादय एव, तादृशजन्मविहीनाः शमदमादिगुणोपेतास्तु गुणकृताः गौणा एव ब्राह्मणादयः । यथा शौर्यादिगुणहीनः सिंहो जातिसिंहः, जातिहीनः शौर्यादिगुणोपेतस्तु देवदत्तादिर्गौणसिंहस्तद्वदत्रापि बोध्यम् । तदुक्तम्-महाभाष्यकारैः—

"तपःश्रुतञ्च योनिश्चेत्येतद् ब्राह्मणकारकम् ।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥" (म० भा० २।२।६)

## पुराणसम्मतिः

अत्र कैश्चिदुच्यते—यत् परमेश्वरस्य मुखात्केषाञ्चिदपि ब्राह्मणानामुत्पत्तयः पुराणेषु न श्रूयन्ते प्रत्युत भागवतादिपुराणेषु 'अङ्गुष्ठान्नारदो जज्ञे' इत्येवमादिभिः प्रजापतेरङ्गुष्ठादिभ्योऽङ्गान्तरेभ्य एव तेषां तेषां ब्राह्मणानामुत्पत्तिः श्रूयते । तत्तुच्छम् । महाभारतादिषु ब्राह्मणादियुग्मसहस्राणां मुखादिभ्य उत्पत्तिवर्णनात् । मूलब्राह्मणेषु तथात्वेऽप्यन्यत्र मुखादिशक्तिजत्वस्यैव विवक्षणात् ।

ब्राह्मणानां शतं श्रेष्ठं मुखादेवासृजत् प्रभुः ।
बाहुभ्यां क्षत्रियशतं वैश्यानामूरुतः शतम् ॥ ३१ ॥
पद्भ्यां शूद्रशतञ्चैव केशवो भरतवर्षभ ॥३२॥(म०भा०शा २०७।

तत्र 'ब्राह्मणोऽस्य मुखम्' इत्यादौ मुखादिपदेन तत्तत्प्रधानशक्तीनामेव निर्देशात् । तथा च मुखशक्तेर्ब्राह्मणोत्पत्तिः बाहुशक्तेः क्षत्रियोत्पत्तिः । सङ्कल्पवशात्तेषां तेषामुत्पत्तौ वृक्षादीनाञ्चोत्पत्तौ प्रत्यक्षेण योनिजत्वाभावेऽपि योनिशक्तिजत्वस्य सर्वत्रानपायात्सर्वेषां योनिजत्वोपपत्तिः । योनिशब्देनोपादानभूता प्रकृतिशक्तिरेव गृह्यते । अत एव शिवशक्त्यात्मकं सर्वं जगत् शिवशक्त्योर्योनिलिङ्गादिरूपेण क्वचिद्योगाभावेऽपि व्यापकशिवशक्त्यात्मना अङ्कुरादावपि तत्सत्त्वमव्याहतम् । अत एव ब्राह्मणादिदेहारम्भकेषु तत्तत्परमाण्वाद्युपादानेषु

मुखात्मिकाया ब्राह्मयाः शक्तेः प्राधान्याद् ब्राह्मणत्वम्। यत्रेश्वरस्य देवानां सत्यसङ्कल्पानामृषीणाञ्च वचनबलात् क्षत्रदेहाद्यारम्भकोपादानपरमाण्वादिविघटनं ब्राह्मणादिदेहारम्भकब्राह्मीशक्तिसमन्वितपरमाण्वादि सङ्घटनं जायते । तत्र तस्मिन्नेव जन्मनि जातिपरिवर्तनं सम्पद्यते । अन्यथा जन्मपरिवर्तनमन्तरा सिंहादीनामिव जातिपरिवर्तनमशक्यमेव । यथा जन्मान्तरमन्तरा सिंहात्सिह्यां समुत्पन्नस्य सिंहशरीरस्य जातिपरिवर्तनं न भवति। मृते रुग्णे शौर्यादिगुणहीनेऽपि सिंहे च सिंहत्वव्यवहारदर्शनात्, तथैव प्रकृतेऽपि बोध्यम्।

## वरशापाभ्यां जातिः

यत्र च महर्षीणां वरेण शापेन वा सिंहस्य देवत्वं सूकरत्वं वा सम्पद्यते । तत्र पूर्वोक्तया प्रक्रियया शक्तिवरणभेदेन प्रकृत्यापूरात् पूर्वदेहारम्भकोपादानविघटनपुरस्सरं जात्यन्तरारम्भकोपादानसङ्घटनं जायते तत्रैतस्मिन्जन्मनि जातिपरिवर्तनमपवादभूतमेव ।

## सांकर्यनिवृत्या जात्याप्तिः

कचित्स्मृतिषु प्रकारान्तरेणापि जातिपरिवृत्तिः स्मियते। यथा शूद्रकन्या ब्राह्मणेनोढा सती कन्यां जनयेत् सापि पुनर्ब्राह्मणेनोढा कन्यां जनयेत् एवं रीत्या सप्तमे पर्याये सा कन्या ब्राह्मणत्वं लभते। एतेष्वेव भेदेषु शास्त्रीयाणि सर्वाण्यपि वाक्यानि समन्वितानि भवन्ति ।

## गौणशूद्रत्वकथनम्

यत्तु केनचित् 'जन्मना जायते शूद्र' इति सर्वेषामेव जन्मना शूद्रत्वं प्रतिज्ञातं' तदपि तुच्छम्, तादृक् प्रामाणिकवचनानुपलम्भात् । 'जन्मना ब्राह्मणो ज्ञेयः' इति 'जन्मना ब्राह्मणः श्रेयान्' इत्यादि विपरीतस्मृत्युपलम्भाच्च। कचित्सत्त्वे वा शूद्रसम एव तदर्थः।

'साहित्यसङ्गीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः।'

नह्यत्र साहित्यसङ्गीतकलाविहीनः साक्षात्पशुरेव सम्पद्यते। किन्तु पशुसदृश इत्येव तदर्थ इतिवत्।

एतेन

'सन्ध्यां नोपासते यस्तु ब्राह्मणो हि विशेषतः ।
स जीवन्नेव शूद्रः स्यात् मृतः श्वा चैव जायते ॥
दक्षस्मृतिः-२।३२ ॥
यो भुङ्क्ते हि च शूद्रान्नं मासमेकं निरन्तरम् ।
इह जन्मनि शूद्रत्वं मृतः श्वा चैव जायते ॥
अङ्गिरास्मृतिः ६ । ७
✓ योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥
मनुस्मृतिः २ । १६८

'त्र्यहेण शूद्रो भवति' इत्यादावपि गौणमेव शूद्रत्वं मन्तव्यम् । एवमेव 'क्षत्रियपुत्रा ब्राह्मणा बभूवुः । 'द्वौ वैश्यो ब्राह्मणतां गतौ' इत्यादि वचनेष्वपि ब्राह्मणसाम्यमेव गौणसिंहवज्ज्ञातव्यम् । नचैतैर्वचनैः ब्राह्मणत्वशूद्रत्वादि-प्राप्तिः, जातेर्नित्यत्वेन यावच्छरीरं तद्व्यावृत्तेरसम्भवात् । 'एकादशेऽहनि पिता नाम कुर्यात्' इति श्रुत्या ब्राह्मणादीनामेकादशेऽहन्येव तत्तद्वर्णोचितनाम-करणानि विहितानि। न च तदानीं गुणकर्मानुरोधि ब्राह्मण्यादिकं निर्णेतुं शक्यम् । अतएव शास्त्रेषु ब्राह्मणादीन् तांस्तान् वर्णानुद्दिश्य तानि तानि कर्माणि विहितानि । 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत, एकादशवर्षं राजन्यं, द्वादशवर्षं वैश्यम् । ब्राह्मणो वसन्ते अग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः, 'राजा स्वाराज्यकामो राजसूयेन यजेत्' इत्यादिषु जन्मसिद्धानेव वर्णानुद्दिश्य कर्माणि विहितानि । न तु यो ब्राह्मणो बुभूषेत् स एवं कुर्यात्, य एवं कुर्यात् स ब्राह्मण इत्येवमादिरीत्या तत्तत्कर्मभिर्ब्राह्मण्यादि विधानं श्रूयते । यथा दुहित्रादयो जन्मसिद्धा एव । जन्मसिद्धानामेव दुहित्रादीनां तदुचितानि कर्माणि लोके निर्दिश्यन्ते । न तु या एवं कुर्यात्सा दुहिता या एवं कुर्यात्सा पत्नी, तथात्वे दुहित्रादीनामपि पत्नीकर्मकरणेन पत्नीत्वं स्यात् इति तद्वत्प्रकृतेऽपि ज्ञेयम् । ब्रह्मवित्त्वादि प्रयुक्तं ब्राह्मण्यन्तु ततो भिन्नमेव, तस्य जातिनिरपेक्षत्वादजातिरूपत्वाच्च ।

## ब्राह्मणादियोनिभेदसमर्थनम्

ननु यथा सिंहश्वादीनां योनिभेदेन जातिभेदो न तथा ब्राह्मणक्षत्रियादीनां

योनिभेद इति चेन्न, छान्दोग्ये ब्राह्मणादीनां योनिभेदश्रवणात्। 'तद्य इह रमणीयचरणा अभ्यासो ह यत्ते रमणीयां योनिं ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा य इह कपूयचरणा अभ्यासो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं शूकरयोनिं चाण्डालयोनिं वा प्रपद्यन्ते' इति (छान्द० ५-१०) इह श्वशूकरादियोनिवदेव ब्राह्मणादियोनिवर्णनम्। तेन यथा श्वशूकरयोर्जातिभेदस्तथैव ब्राह्मणादीनां जातिभेदः। न च वैलक्षण्याभावे कथं जातिभेदः? अश्वभेदहयादीनामिव मनुष्यभेदब्राह्मणादीनामपि जातिभेदोपपत्तेः। 'हयो भूत्वा देवानवहद् वाजी भूत्वा गन्धर्वान्' (बृ॰ उ॰ प्र. १।१।२)

अपि च न दृष्टं वैलक्षण्यमेव वैलक्षण्यम्, तथात्वे गन्धादिवैलक्षण्यानुपपत्तेः। आम्रवृक्षाणामवैलक्षण्येऽपि फलैर्वैलक्षण्यप्रतीतेः। अनेकाम्रफलानाम् वैलक्षण्याप्रतीतावपि रसादिभिर्वैलक्षण्यावगमात्। तथैव मनुष्यत्वादिनाऽवैलक्षण्येऽपि मुखादिशक्तिजत्वादिवैलक्षण्येन ब्राह्मणादीनां वैलक्षण्योपपत्तेः। अतएव पित्रादिब्राह्मणत्वोपदेशसापेक्षपुत्रादिब्राह्मणत्वादिकं सकृदाख्यातग्राह्यमेव। तेनैव ब्राह्मणीत्यादौ जातेरस्त्रीविषयादयोपधादिति ङीष् सिद्ध्यति। 'ब्राह्मोऽजातौ' इत्यत्र अजातौ ब्राह्मः निपात्यते जातौ तु ब्राह्मणा एव।

✓ अत एव—"दुःशीलोऽपि द्विजः पूज्यः न शूद्रो विजितेन्द्रियः।
कः परित्यज्य दुष्टां गां दुहेच्छीलवतीं खरीम्॥ इति
(पराशरः अ० ८। श्लो० ३२)

'अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत्।
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत्॥' इति मनुश्च।

योन्युत्कर्षमभिप्रेत्य जन्मना वर्णभेदसत्त्वे एव—

माङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम्।
वैश्यस्य धनसंयुक्तं, शूद्रस्य स्याज्जुगुप्सितम्॥

इत्यादि नामकरणभेदसङ्गतिः।

## गुणकर्मवादव्यवस्था

यदुक्तम्—'सर्वे एते शब्दाः गुणसमुदाये प्रवर्तन्ते। ब्राह्मणः क्षत्रियो वैश्यः शूद्रः (पा॰ सू० २।२।६) इति पतञ्जल्युक्तरीत्या ब्राह्मणादिशब्दा गुणशब्दा

एव न जातिशब्दाः । तथा च तपःश्रुतादिगुणकर्मसमुदायनिबन्धनैव वर्णव्यवस्था । एवं च ब्राह्मणोऽस्य मुखमासीदिति मन्त्रस्य तदनुगुणैव व्याख्या युक्ता । तेन ब्रह्माण्डविग्रहस्य ब्रह्मणः ब्राह्मणत्वप्रयोजकशमदमादिगुण-विशिष्टो ब्रह्म भवितुकामः सत्त्वगुणबहुलो वेदादिविद्यासम्पन्नः परमेश्वरो-पासको मुखमासीत् । मुखस्थानीयः मुख्यः सर्वोत्तम आसीत् । यथा मुखं ज्ञानप्रधानमितराङ्गापेक्षया श्रेष्ठम्, तथास्यापि ज्ञानप्रधानत्वाच्छमादिगुणैः श्रेष्ठत्वाच्च मुखत्वव्यपदेशः ।

'अथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात्प्रैति स ब्राह्मणः' (बृ. उ. ३ । ८ । १०) इत्यादि श्रुतिषु ज्ञाननिबन्धनो ब्राह्मण्यव्यपदेशः । राजन्यः शौर्यादिगुणविशिष्टः सत्त्वोपसर्जनरजो बहुलः बाहूकृतः । बाहुस्थानापन्नत्वेन सम्पादितो बाहुवद्बलप्रधानत्वात् । तथास्य पुरुषस्य यत् यौ ऊरू तत्तद्रूपः तत्स्थानापन्नः वैश्यः कृषिवाणिज्यादिकर्मविशिष्टो धनसञ्चयप्रधानः, तम उपसर्जनरजोबहुल ऊरुत्वेन सम्पादितः । यो यत्र तत्र पुनः पुनर्विशति प्रविशति कार्य्यार्थमसौ विट् तदपत्यं वैश्य इति व्युत्पत्तेः । तथास्य पद्भ्यां यौ पादौ विभक्तिव्यत्ययः किमूरू पादा उच्येते इति प्रश्नोपक्रमानुरोधात् । पञ्चमी च प्रथमार्था । पादस्थानीयकः शूद्रः परि-चर्य्याशिल्पकौशल्यः परिश्रमत्वादिगुणविशिष्टो रज उपसर्जनः तमोबहुलः अजायत इत्यकल्पयन् ।

एवमेव ब्राह्मणादयः तद्गुणविशिष्टा एव मुखप्रभृतयो अवयवा अस्य ब्रह्माण्डविग्रहस्य प्रजापतेः विद्यन्ते इति कल्प्यते' इति तन्न, यतः ब्राह्मणोऽस्य मुखमासीदित्यस्यापि मुखजत्वादिभिरेव ब्राह्मण्यादि-कमुक्तम्, पद्भ्यां शूद्रोऽजायतेति वाक्यशेषात् । नहि प्रश्नानुरोधेन पञ्चमी प्रथमात्वेन परिणमयितुमर्हा मुख्यार्थविरोधात्; गौणार्थत्वा-पत्तेश्च । ब्राह्मणादीनां मुख्यं गौणं वा मुखत्वादिकम्? सामानाधिकरण्य-ञ्चेदं मुख्यममुख्यं वा? सिंहो देवदत्त इति गौण्या वृत्त्या वा? स्थाणुरेष पुमानितिवत् बाधायां वा? सोऽयं देवदत्त इतिवत् मुख्यं वा सामानाधि-करण्यम्? मृद् घटः इतिवत्कार्यकारणभावमूलकं वा सामानाधिकरण्यमित्यादि विचिकित्सानिवृत्तिपूर्वकप्रतिपित्सितार्थप्रतिपादकत्वेन पञ्चम्या एव श्लिष्ट-

त्वात् । यथा मृज्जत्वाद्घटो मृदित्युच्यते तथैव मुखवत्प्राधान्यादिकमपि सूपपद्यते । अतएवोत्तरत्र 'चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽजायत' इत्यादौ सृष्टिवर्णनं सङ्गच्छते । 'मुखबाहूरुपज्जानामि'ति मनुनापि स्पष्टं तज्जत्वेन ब्राह्मणत्वादिकमुक्तम् ।

किञ्च यदि ब्राह्मणत्वप्रयोजकाः शमादयस्तर्हि तद्विशिष्टो ब्राह्मणः सम्पन्न एव कथं तस्य ब्रह्म बुभूषोपपद्यते ? यदि ब्रह्मपदेन सर्वाधिष्ठानभूतं परमतत्त्वमेव विवक्षितं तदपि नोपपद्यतेऽब्रह्मणो ब्रह्मत्वानुपपत्तेः, ब्रह्मैव सन् ब्रह्माप्येतीति श्रुतिविरोधाच्च । अविद्ययाऽब्रह्मभूतस्य विद्यया ब्रह्मत्वमिष्यते चेत्तदपि नोपपद्यते । तस्य विद्यैकसाध्यत्वेन ब्राह्मणत्वाद्यनपेक्षत्वात् । अत एव 'मनुष्येषु देवेषु तथर्षिषु यो ह वै तत्परमं ब्रह्म वेद स एव ब्रह्म भवति ।' 'यो देवानां प्रत्यबुद्ध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणामि'त्यादि श्रुतिः ।

किञ्च ब्रह्माण्डविग्रहस्य देवा एव मुखस्थानीयास्तेषां मनुष्यापेक्षयापि सत्त्वबाहुल्येन प्राधान्यात्, न मनुष्यास्तेषां मर्त्यत्वात् ।

### ब्राह्मणशब्दद्वैविध्यम्

यदुक्तम्—"यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणोऽथ यदा तदक्षरं विदित्वा अस्माल्लोकात् प्रैति स ब्राह्मण' इत्यादि श्रुतिषु ज्ञाननिबन्धनब्राह्मण्यव्यपदेशः" इति । तदपि न ब्राह्मणत्वादिजातिबाधकम्, तस्याः श्रुतेस्तु पाणिनीयगुणवृद्ध्यादिवत् पारिभाषिकब्राह्मणविषयकत्वेनादोषात् । अत एव जात्या ब्राह्मणस्यापि ब्रह्मनिष्ठत्वरूपब्राह्मण्यस्य लाभाय प्रयत्नः श्रुतः । 'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च व्युत्थाय भिक्षाचर्य्यां चरन्ति' ...... 'ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् । बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिरमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मणः ।' अत्र पूर्वोक्तो ब्राह्मणशब्दो जातिपरो द्वितीयस्तु ब्रह्मवित्परः, ब्राह्मणस्यैव पारिव्रज्यादावधिकारात् । नात्र ब्रह्मविद् ब्राह्मणः पाण्डित्यबाल्यादावधिक्रियते तस्य कृतार्थत्वात् । अतएव वज्रसूच्युपनिषद्यपि जातिब्राह्मणादन्यस्यैव ब्रह्मवित्त्वलक्षणस्य ब्राह्मण्यस्य प्रतिपादनं न जातेरपलापः । तत एव तत्रोक्तम्—"एतेषां ( अगस्त्यादीनां ) जात्या विनाऽप्यग्रेज्ञानप्रतिपा-

दिता ऋषयो बहवः सन्ति। तस्मान्न जातिर्ब्राह्मण इति।" मोक्षहेतुत्वात्तदेव तु मुख्यं ब्राह्मण्यम्।

एतेन बाहोबलप्रधानत्वादेव तज्जत्वेन राजन्यस्यापि बलप्राधान्यम्। एवमेव विट्शूद्रयोरप्यूरुपज्जत्वेनैव तत्त्वम्। अतएव स्मृतिषु मुखजत्वादिकं स्पष्टमुक्तम्।

'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्।
बाहुजातोरुजातानां नायं धर्मो विधीयते। भारत-भावदीपे।

मुखबाहूरुपज्जानाम् इत्यादिना मन्वादिभिस्तट्टीकाकारैः कुल्लूकभट्टादिभिश्च तज्जत्वादिकमेवोक्तम्। सर्वथापि श्रुतेरिवार्थं स्मृतिरन्वगच्छदिति महाकविकालीदासोक्तरीत्या श्रुत्यर्थमेव स्मृतिर्वक्ति। तथा च स्मृत्युक्तार्थ एव श्रुत्यर्थ इति मन्तव्यम्। मनुविपरीता याः काश्चन कुदृष्टयस्ता हेया एव।

या वेदबाह्या स्मृतयः याः काश्चन कुदृष्टयः।
सर्वास्ताः निष्फला ज्ञेया तमोनिष्ठा हि ताः स्मृताः।'

'पद्भ्यां शूद्रो अजायत' 'बाहू कृतः' इत्यत्र मुख्यार्थत्यागेन अजायत अकल्पयन् इत्यादि गौणार्थकल्पनमसङ्गतमेव। मुख्यार्थसंभवे भाक्तस्यार्थस्यान्याय्यत्वात्।

### देवापिवृत्तान्तः

यदप्युक्तम् "आर्ष्टिषेणो होत्रमृषिर्निषीदन् देवापिर्देवसुमतिं चिकित्वान् स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद् वर्ष्या अभि। यद्देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत्। देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत् (ऋ. सं. १०। ९८। ५–७)

अनेन मन्त्रेण देवापेः कौरव्यस्य शन्तनुभ्रातुः तपसा प्रतिभातवेदत्वं ब्राह्मणत्वं पुरोहितत्वं च संवृत्तमिति ज्ञायते। यास्केनापि मन्त्रस्तथैव व्याख्यातः। तथाहि—तत्रेतिहासमाचक्षते देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः। स शन्तनुः कनीयान् अभिषेचयांचक्रे। देवापिस्तपः ब्राह्मणधर्मं प्रतिपेदे। ततः शन्तनोः राज्ये द्वादशवर्षाणि देवो न ववर्ष। तमूचुर्ब्रह्मविदो ब्राह्मणाः अधर्मस्त्वयाचरितो ज्येष्ठं भ्रातरमन्तरित्याभिषेचितम् तस्मात्ते देवो न वर्षतीति। स शन्तनुः देवापिं शिशिक्ष राज्येन, तमुवाच

देवापिः पुरोहितस्तेऽसानि याजयानि च त्वेति तस्यैतद्वर्षकामसूक्त तस्यैषा भवति। ( नि०२-१० ) मन्त्रार्थसारस्तु-देवापिः शन्तनवे पुरोहितः होत्राय वर्षार्थीये होमकर्मणि वृतः सन् कृपयन् राज्ञेऽदीधेत् वृष्टिर्भवेदिति अन्वध्यायत्। तं देवश्रुतं वृष्टिवनिं वृष्टियाचिनं मत्वा बृहस्पतिः देवापिं वर्षसाधिकां वाचमस्मै अयच्छत्। तया वाचा स्तुतिरूपया देवान् स्तुत्वा तेभ्यो वर्षमलभत। 'निषीद होत्रमृतुथा यजस्व देवान् देवापे हविषा सपर्य्य' ( ऋ० स० १०।६८।४) इत्यनेनापि मन्त्रेण हे देवापे होत्रं निषीद ऋत्विक्कर्म करणायावस्थितो भव। ऋतुथा यथाकालं देवप्रसादाय यजस्व। हविषा ( सपर्य्य ) परिचर इत्यर्थकेन इदमेव समर्थ्यते। तथाहि—

'यत्रार्ष्टिषेणः कौरव्यो ब्राह्मण्यं संशितव्रतः।
तपसा महता राजन प्राप्तवान् ऋषिसत्तम।
सिन्धुद्वीपश्च राजर्षिर्देवापिश्च महातपाः।
ब्राह्मण्यं लब्धवान् यत्र विश्वामित्रस्तथा मुनिः।
महातपस्वी भगवानुग्रतेजा महातपाः।

( म० भा० शल्य० प० ३९।३६-३८ )

एवमेव विश्वामित्रवृत्तान्तेनाऽपि गुणकर्मादिभिरेव वर्णव्यवस्था समर्थ्यते। तथाहि—

'गाधेरभून्महातेजाः समिद्ध इव पावकः।
तपसा क्षात्रमुत्सृत्य यो लेभे ब्रह्मवर्चसम्॥

म० भा० ६।१६।२८

ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः।
क्षत्रियः सोऽप्यथ तथा ब्रह्मवंशस्य कारकः॥

म० भा० शा० ४।४८

एवमेवैकाशीतिसंख्याकानां ऋषभदेवपुत्राणां गुणकर्मभिर्ब्राह्मण्यं सम्पन्नम्। तथाहि—"यवीयांस एकाशीतिर्जायन्तेयाः पितुरादेशकराः महाशालीना महाश्रोत्रिया यज्ञशीला कर्मविशुद्धा ब्राह्मणा बभूवुः" भा० ५।४।१३

"कर्मतन्त्र प्रणेतारः एकाशीतिर्द्विजातयः। भा० ११।२।९९

एतेऽपि क्षत्रियाः सन्तः क्षात्रमुत्सृज्य तप आदिभिर्ब्राह्मणाः सञ्जाताः

इति। तदपि न जन्ममूलकब्राह्मणादिवर्णव्यवस्थाबाधकम्। जन्मान्तरमन्तरा न जातिपरिवर्तनमित्यस्यौत्सर्गिकत्वात्।

यत्तु—"आर्ष्टिषेणो होत्रमृषिर्निषीदन् देवापिर्देवसुमतिं चिकित्वान्। स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि। यद्देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत देवश्रुतं वृष्टिवनिं रराणो बृहस्पति-र्वाचमस्मा अयच्छत्॥" (ऋ० १०।९८।५—७) इत्यनेन मन्त्रेण क्षत्रियस्य देवापेः पुरोहितत्वश्रवणेन पुरोहितत्वस्य च ब्राह्मणवृत्तित्वेन देवापेः क्षत्रियस्य सतः तस्मिन्नेव जन्मनि ब्राह्मणोचितकर्मणा तप आदिना ब्राह्मण्यमङ्गीकृतं तेन गुणकर्मादिमूलकमेव ब्राह्मण्यं सिद्ध्यती" ति तत्तुच्छम्; ब्राह्मणेतरस्येडाभक्षप्रतिषेधेनार्त्विज्यप्रतिषेधात्। मन्त्रश्च यास्केनेत्थं व्याख्यातः—तत्रेतिहासमाचक्षते। देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः स शन्तनुः कनीयान् अभिषेचयाञ्चक्रे। देवापिस्तपः प्रतिपेदे ततः शन्तनो राज्ये द्वादशवर्षाणि देवो न ववर्ष तमूचुर्ब्राह्मविदो ब्राह्मणा अधर्मस्त्वयाचरितः, ज्येष्ठं भ्रातरमन्तरित्याभिषेचितम्। तस्मात्ते देवो न वर्षतीति। स शन्तनु र्देवापिं शिशिक्ष राज्येन। तमुवाच देवापिः पुरोहितस्तेऽसानि याजयानि च त्वेति। तस्यैतद्वर्षकामसूक्तं तस्यैषा भवति (नि० २।१०)।

ऋष्टिषेणस्य पुत्र आर्ष्टिषेणः शन्तनोर्वर्षार्थीये कर्मणि होतृत्वे वृतो हौत्रं कर्म प्रतिनिषीदन् उपविष्टवान्। ततो देवापिः देवसुमतिं देवानां कल्याणीं मतिमुदकसम्प्रदानाभिमुखीं कर्त्तुं चिकित्वान् जानानः। स हि तथास्तौद्यथा देवानामुदकसम्प्रदानाभिमुखी मतिरभूत। ततः परितुष्टेषु देवेषु स देवापिः उत्तरस्मादधरम् उत्तरस्मादन्तरिक्षाख्यादधरं समुद्रं पार्थिवं प्रति एष विभागः समुद्रयोः। अपो दिव्याः प्रशस्ताः सस्यसंपत्करीः असृजदक्षारयत्। किं लक्षणाः? वर्ष्या वर्षभूताः अभिसर्वभूतानामुपरि। स पुरोहितः सन् देवापिः होत्राय होतृकर्मणे वर्षार्थीये कर्मणी वृतः सन् कृपायमाणो राज्ञेऽदीधेत् अन्वध्यायत वृष्टिर्भवेदिति।

ननु मन्त्रे निरुक्ते भाष्ये च देवापेः क्षत्रियत्वं तस्यैव च पुरोहितत्व-मुक्तमेवेति चेन्न, आर्ष्टिषेणो वर्ष्या अभि त्रिष्टुप् एतया देवानस्तौत् इति

देवस्तुतिपरस्य मन्त्रस्यातत्परस्य भक्ष्यप्रतिषेधकतत्परवचनविरोधेन तदविरोधेन नेयत्वात्। अत एव निरुक्तव्याख्यात्रा दुर्गाचार्य्येण अन्यकल्पान्तरीणोऽन्य-कल्पान्तरीणस्यैव शन्तनोर्वर्षार्थीये कर्मणि होतृत्वे वृतो होत्रं कर्मप्रतिषीदन्निन्त्युक्तम्।

## तपसा जन्मान्तरे ब्राह्मण्यम्

तत्र 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्ध' इत्युक्तरीत्या शब्दार्थसम्बन्धानां स्वाभाविकत्वेन नित्यत्वमुक्तम्। जननमरणवतां मनुष्यादीनामनित्यानां नित्यवदेव वर्णनासंभवात्। वैदिकाः शब्दा न व्यक्तिपराः। किन्तु नित्यजाति-परा भवन्ति। यथा इन्द्रशब्द इन्द्रत्वजातिपर एव। व्यक्तीनामनित्यत्वेनाऽपि जातेर्नित्यत्वमेव। अथवा प्राड्विवाकादिवत्स्थानपरा वा। यथा प्राड्विवाको न व्यक्तिविशेषः किन्तु स्थानविशेष एव भवति। य एव तत्स्थानमागच्छति स एव तद्वाच्यो भवति। एवं वैदिकदेवाप्यादि शब्दानामपि जाति-विशेषः स्थानविशेषो वार्थः। तस्माद्देवापिस्तपसा जन्मान्तरे ब्राह्मणो भूत्वै-वार्त्विज्यं चक्रे। अत एव स देवाप्यधिकारे वर्त्तमान एतदकरोत्। अन्यस्मिन्कल्पे देवापिर्ममाप्येतदेवमेवास्त्वित्येवं वर्त्तमानेनाभिसंबध्यते इति समस्तार्थ इत्युक्तं दुर्गाचार्य्येण।

यत्तु रराण रममाणः स्तुतिजपध्यानादिना प्रसीदन् इत्युक्तम्, तत्तु निरुक्तवि-रुद्धम्। रराण रातिरभ्यस्तमिति तद्वचनात्। रातिर्दानार्थ इति दुर्गवचनाच्च। रराणो ददत् इत्येव दुर्गाचार्य्येण तद्व्याख्यातम्।

यथा कल्पान्तरीय एव विश्वामित्रः तपसा परमर्षित्वं प्राप्तो गायत्र्यादि-मन्त्राणां द्रष्टा यज्ञादिषु पौरोहित्यं चकार। तथैवायमपि।

## तपसा जातिप्राप्तिः

अथवा तपसा तपो विशेषेण ब्राह्मणत्वमाप इत्यस्याप्ययमेवार्थः। यथागस्त्येन सिद्धेन महर्षिणा स्ववचनबलेन नहुषस्याजगरत्वमापादितम्। नहुषदेहारम्भकपरमाणुविघटनेन अजगरदेहारम्भकपरमाणुसंघटनेन च तथा सम्पत्तिस्तथैव तपोविशेषेण सिद्धानां स्वीयक्षत्रियदेहारम्भकपरमाणुविघटनेन ब्राह्मणारम्भकपरमाणुसंघटनेन च ब्राह्मणत्वसम्पादनेन तत्र पौरोहित्यमपि संभवत्येव। तच्चेष्यत एव। न च तावता यः मूषिकामपि परिवर्त्तयितुं न शक्नोति सोऽपि क्षत्रियः कर्मणा स्वस्य ब्राह्मण्यं सम्पादयितुं शक्नोति।

तपः प्रभावातिशयाद्वरशापादिप्रभावाच्च जन्मान्तरमन्तरैव नन्दिनो देवत्वप्राप्तिर्नहुषस्य चाजगरत्वप्राप्तिः, अहल्यामेनकादीनां शिलात्व-शैलीत्वादिप्राप्तिरित्यपवादस्तथैव तपः प्रभावादित्ययमपवादः । जन्मनैव वर्णव्यवस्थेत्युत्सर्गः । देवापिविश्वामित्रादीनां तु तपः प्रभावातिशयाज्जन्मान्तरमन्तराऽपि ब्राह्मणत्वप्राप्तिरित्यपवादः । अत एव महत्या तपस्यया सिद्धानामीश्वरस्य वा कर्तुमकर्तुमन्यथा वा कर्तुं समर्थेन वरशापादिलक्षणेन सङ्कल्पेन प्रकृतिप्राकृतपरिवर्तनं नातीव दुष्करम् । विश्वामित्रस्य तपस्यया मेनकायाः शैलीत्वं संवृत्तम्, वासिष्ठाश्च नाशमुपगताः, त्रिशङ्कुश्च सदेहः स्वर्गं प्रेषितः, नवतमसृष्टिश्च विरचिता । तदा तेन क्षत्रियदेहारम्भक-सत्त्वोपसर्जनरजोबहुलगुणविशिष्टबाहुशक्तिप्रधानपरमाणुविघटनेन ब्राह्मणदेहा-रम्भकसत्त्वगुणबहुलमुखशक्तिविशिष्टपरमाणुसंघटनेन ब्राह्मणत्वनिर्माणं न दुःशकम् । एवमेव क्वचित्तादृक् तपसा सङ्कल्पनेन उपसर्जनरजोबहुल-वैश्यदेहारम्भकोरुशक्तिसंवलितपरमाणुविघटनेन सत्त्वबहुलमुखशक्तिसंव-लितपरमाणुसंघटनेन रज उपसर्जनतमोबहुलपच्छक्तिसंवलितशूद्रदेहारम्भक-परमाणुविघटनपूर्वकब्राह्मदेहारम्भकपरमाणुसंघटनं न दुष्करम् । यथा मृद्धटस्य स्वर्णघटत्वं पूर्वघटारम्भकावयवविघटननवघटारम्भकावयवसंघटनमन्तरा नोपपद्यते तथैव प्रकृतेऽपि ज्ञेयम् ।

अत्र गीतासम्मतिः

अत एव—'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' इति गीतावचनमपि तदनुगुणमेव । गुणकर्मविभागानुरोधेनैव तत्तद्योनिषु जन्मप्राप्त्युपपत्तेः । रमणीय-कपूयकर्मभिर्योनिप्राप्तेः श्रुतिसिद्धत्वोक्तेः । अत एव कर्मफलदात्रा मया परमेश्वरेण गुणकर्मविभागानुरोधेनैव ब्राह्मणादिचातुर्वर्ण्यं सृष्टमित्युक्तं न तु येनकेनचित् तत्स्रष्टुं शक्यम् । जन्मनैव जातिः । जन्म च गुणकर्मान-नुरोधीति को ह्यनुन्मत्तो ब्रूयात् ।

किञ्च यथा घटोपादानादिभूतैर्मृज्जलादिभिरेव घटो निर्मीयते, न घटोत्प-त्त्यनन्तरमुपादानादिभिन्नमृज्जलादिकम् तदुत्पत्तावुपयुज्यते तथैव ब्राह्मणादिदे-हारम्भकगुणकर्मविशिष्टमुखशक्तिसंवलितपरमाण्वादिभिर्ब्राह्मणादि देहोत्पत्तौ सत्यां तद्भिन्नम् परवर्तिगुणकर्मादिकम् तदुत्पत्तावुपयुज्यत इति संभावयितु-

मपि न शक्यते। परवर्तिभिः गुणकर्मभिः कालान्तरे स्वानुरूपयोनिरवश्यं प्रापयितुं शक्यते, कर्मणां तदनुगुणगुणानाञ्च जात्यायुर्भोगारम्भकत्वस्य सुप्रसिद्धेः। 'अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते' इति रीत्या क्वचित्तेषामस्मिन्नेव जन्मनि जात्यन्तरारम्भकत्वमपवाद एव।

यदुक्तं—"यदीदानीं तादृग्गुणकर्मादयो न भवेयुस्तदा जन्मान्तरीयाणां तेषामस्तित्वमेव कुतो ज्ञायेतेति। तत्तुच्छम्, अन्येषामज्ञातत्वेऽपि कर्मफलदातुरीश्वरस्य तज्ज्ञानसंभवात्। नहि जन्मारम्भकाणि कर्माणि सर्वैर्ज्ञातुं शक्यानि। तथापि तेषामस्तित्वं न संदिग्धम्' फलबलकल्प्यत्वात्। तथैव ब्राह्मणादियोनिप्राप्तिरूपफलबलकल्प्यता तेषां न विरुद्ध्यते। तस्माद् ब्राह्मणादिवर्णदेहप्राप्तिहेतुभूतैरेव गुणकर्मभिर्जन्मप्राप्तिस्तया च वर्णव्यवस्था। देहानन्तरभाविदेहगतैर्गुणकर्मभिर्वर्णव्यवस्थायामभ्युपगम्यमानायां तेषां परिवर्त्तनेन प्रतिदिनं प्रतिक्षणञ्च वर्णस्यापि परिवर्त्तितत्वेऽव्यवस्थैव स्यात्।

## कर्मणोत्कर्षः जातेः

ननु तर्हि ब्राह्मणोचितगुणकर्मणां तद्देहकारणत्वे तत्र सदैव ब्राह्मणोचितगुणकर्मण्येव भवेयुर्न विपरीतानि स्युरिति चेन्न, तेषां योनिप्रापकत्वेनैवोपक्षीणत्वात्। समुचितवातावरणैः पित्रादिनिर्वर्त्यसंस्कारैः योग्याचार्य्यलाभाधीतिबोधाचरणप्रचारणादिभिरेव देहे ब्राह्मणोचितगुणकर्माणि व्यज्यन्ते, 'मातृमान् पितृमानाचार्यवान्' इति श्रुतेः। अन्यथा पित्रादिसाध्यसंस्कारादिविधानवैयर्थ्यापत्तिः स्यात्। तेन, समुचितोपचाराभावेन प्राक्तनशुभगुणकर्मादिभिर्ब्राह्मणयोनिजन्मप्राप्तावपि प्रमादात् दुःसङ्गाद् दुष्टवातावरणप्रसङ्गाच्च ब्राह्मणोचितशमदमादयो गुणा अभिभूयन्ते। विपरीता गुणा कर्माणि च समुद्भवन्ति। तैरन्ते श्वशूकरादियोनिप्राप्तिश्च संभवति। एवमेव शूद्राणां रज उपसर्जनतमोबहुलगुणैः तदुचितैः कर्मभिः शूद्रोचितानि गुणकर्माण्यभिभूयन्ते, स्ववर्णविरुद्धानि कर्माणि भवन्ति, ब्राह्मणोचिता गुणा व्यज्यन्ते। तैश्च क्रमेण जन्मान्तरे ब्राह्मण्यादिप्राप्तिश्च भवति। अतएव जन्मना वर्णः कर्मणा उत्कर्ष इति सिद्धान्तः। अतएव तत्रोत्तममध्यमाधमत्वादिकमपि संगच्छते।

एतेन विरोधाभावाद्वाक्यभेदापाताच्च 'न तु वर्तमानगुणकर्मविभागश' इति

निषेद्धुं न शक्यत इत्यपास्तम्। जात्यायुर्भोगप्रापककर्मभिः प्राक्तनैस्तत्सिद्धौ तदर्थं तन्नैरर्थक्यात्, साध्यसिद्धौ साधननैरर्थक्यध्रौव्यात्। नहि स्वकारण-मृज्जलादेर्घटहेतुत्वं प्रतिपद्यते। जन्मान्तरीयगुणकर्मादिभिर्ब्राह्मणत्वादिसिद्धौ सत्यां तदर्थं गुणकर्माद्युपयोगे सिद्धसाधनम्। गुणकर्मणां जन्मकारणत्वेन जन्मनाञ्च चातुर्वर्ण्यहेतुत्वेन चातुर्वर्ण्ये गुणकर्मणां हेतुत्वे कारणकारणत्वेन कुलालपित्रादिवदन्यथासिद्धिरपरिहार्य्यैव।

'चातुर्वर्ण्यं मया सृष्टं' मित्यत्र चातुर्वर्ण्यसृष्टौ गुणकर्मविभागस्य निमित्तत्वमुक्तम्, सृष्टिनिर्माणं जन्मेत्यनर्थान्तरमेव। तथा च भगवता गुणकर्मानुरोधेन ब्राह्मणादियोनिषु जन्मदानेन ब्राह्मणादिः सृज्यत इति स्पष्टमाभाति। जन्मनैरपेक्ष्येण गुणकर्मानुरोधेन वर्णव्यवस्थायामभ्युपगम्यमानायां भगवता सृष्टमिति च विरुद्ध्येत।

यदुक्तम्—"तत्तद्वर्णजातानामपि भूयसां तत्तद्गुणकर्मानुपलब्धेरन्यत्रापि तदुपलब्धेश्च बहुत्रानुभूतव्यभिचारत्वात् जन्मान्तरविद्यमान-गुणकर्मविभागश एव चातुर्वर्ण्यविभाग इति नियमो नोपपद्यत" इति तत्तुच्छम्, यतः जन्मान्तरीयगुणकर्मणामिह देहेऽनुपलब्धिर्जन्मान्तरीयत्वेनैवोपपन्ना कार्य्यजन्मनैव कारणस्योपक्षीणत्वात्। शुभाशुभकर्मभिः शुभाशुभ-देहोत्पत्तौ सत्यामपि तत्तद्देहविपरीतकर्मारम्भवत् प्रकृतेऽपि तत्संभवस्या-दोषत्वात्। देहारम्भककर्मभिरेव शुभाशुभकर्मसंपत्तौ पुरुषार्थस्य दत्त-जलाञ्जलित्वप्रसङ्गात, विधिनिषेधशास्त्रवैयर्थ्यापाताच्च। प्राक्तनैः कर्म-भिर्लब्धदेहः प्रमादेन निषेधशास्त्रमनपेक्ष्य निषिद्धमाचरति। सावधानः शास्त्र-दृष्टिः सन् निषिद्धाद्विरम्य विहितमाचरति। अतएव कश्चित् प्राक्तनैः कर्मभिः शुभाँ योनिं धनधान्यादिसम्पत्तिमापाद्यापि प्रमादात्प्रत्यवैति। कश्चिच्च प्राक्तनैः कर्मभिरशुभावस्थां प्राप्य बहुधा क्लिश्यन्नपि तपस्यया महत्त्वमुपयाति। रावणस्य प्राक्तनैस्तपोभिः परमैश्वर्य्यमवाप्तस्यापि प्रमादात्पतनं स्मर्यते।

'प्राप्तं धर्मफलं तावद्भवता नात्र संशयः।
फलमस्याप्यधर्मस्य क्षिप्रमेव प्रपत्स्यसे॥

(वा. रा. सु. ७।५१।२१

परमेश्वरस्य भूतवर्तमानादिसर्वविश्वकारणतयाऽतीतजन्मवर्तमान-

देहाभिव्यक्तगुणकर्माण्यपेक्ष्य सृष्टत्वोपपत्तेश्चे'ति तु निःसारं निरर्थकञ्च, विप्रतिषिद्धत्वात्। तथात्वे सर्वस्यैव तत्सृष्टत्वेन चातुर्वर्ण्यमिति विशिष्योक्तिर्व्यर्थैव स्यात्। अत एव केषाञ्चित् साक्षादीश्वरकर्तृकत्वं केषाञ्चित्तु तत्तद्भावापन्नेश्वरकर्तृकत्वमिति विभागः प्रसिद्धः।

किञ्चातीतजन्मवर्तमानदेहाभिव्यक्तगुणकर्माणीति निरर्थकं वचनम्। यदि चातीतजन्मगतानि गुणकर्माणीति वर्तमानदेहेऽभिव्यक्तानीत्यर्थोऽभिप्रेतस्तथात्वे तथाविधः शब्दः प्रयोक्तव्यः। तत्रापि नोपपत्तिः। सन्तुष्यतु दुर्जनन्यायेन कुलालकृतस्य घटस्येश्वरकर्तृकत्ववदन्यकृतचातुर्वर्ण्यस्येश्वरकर्तृकत्वव्यपदेश इति स्वीक्रियमाणे शक्तिमपहाय भक्तिरेवाङ्गीकृता स्यात्। कुलालस्थानीयोऽप्यत्रावान्तरः कर्त्ताऽनिर्णीत एव। समाजश्चेत्तस्य व्यक्तिसमुदायानतिरेकात्, समुदायस्य व्यक्त्यनतिरेकाच्च। व्यक्तीनामल्पज्ञत्वेन सुसूक्ष्मगुणकर्मादि निर्णयासामर्थ्याच्चानिर्णय एव पर्यवस्यति।

कश्चिद्विद्वान् तत्समितिश्चातुर्वर्ण्यं निर्धारयिष्यतीत्यपि मूढजल्पितमेव-सर्वसंमता विप्रतिपन्नविद्वत्तत्समित्यसिद्धेः।

## कर्मणा वर्णव्यवस्थादोषाः

किञ्च नह्येकस्मिन्जन्मन्येकरूपाण्येव गुणकर्माणि भवन्ति तेषां क्षणविपरिवर्त्तित्वात्। शुभगुणकर्मवानपि प्रमादादशुभेषु गुणकर्मस्वनुरज्यते। अशुभगुणकर्मप्रसक्तोऽपि सतां प्रसङ्गात् पौरुषोपायाच्च गुणकर्मोत्कर्षमवाप्नोति। वाल्मीक्यजामिलादयश्चानेके दृष्टान्ताः सन्ति। गुणानां प्रतिक्षणविपरिणामित्वेन कृतत्रेताद्वापरकलिप्रभेदवदेकैकयुगेष्वपि त एव भेदाः परिलक्ष्यन्ते। एकैकग्रहाणां महादशास्वन्तर्दशास्तासु प्रत्यन्तरदशा इव प्रतिदिनं प्रतिव्यक्ति च तत्तारतम्यमनुभूयते। तथा च गुणकर्मभेदेन प्रतिदिनमपि वर्णपरिवर्तनं स्यात्। सर्वोऽपि जनः यदा प्रातः सत्त्वसमन्वितः परमेश्वरध्यानपूजनादिकं करोति तदा ब्राह्मणो भविष्यति। यदा श्वादिनिवारणाय दण्डादिकं गृह्णाति तदा क्षत्रियः, यदा लवणादिक्रयणे कृषिपशुपालनादि कार्य्ये प्रवर्तते तदा वैश्यः। यदा गृहपरिष्करणमार्जनादिकार्ये सम्प्रवृत्तः तदा शूद्रः सम्पद्यते। न हीयं व्यवस्था व्यवस्थापदव्यपदेश्या भवितुमर्हति।

किञ्चैवं कदाचिद् ब्राह्मणोऽपि तामसगुणकर्मविशिष्टः शूद्रः सन् सत्त्वादि-

गुणविशिष्टां ब्राह्मणीमभिगच्छन् तस्यां चाण्डालं जनयिष्यति। पातिव्रत्यानुरोधेन दुर्वृत्तमपि पतिं पत्नी न वारयितुं प्रभवति। सत्त्वादिगुणविशिष्टः पुत्रः तामसादिगुणविशिष्टं पितरं शूद्रं मत्वा परिचर्य्यां कारयिष्यति। एवं गुणकर्मानुरोधिन्यां वर्णव्यवस्थायां परमाव्यवस्थैव भविष्यति।

न च गुणाः कर्माणि च जन्मान्तरगतानि जन्मान्तरे स्वेन रूपेण व्यक्तानि भवितुमर्हन्ति। क्षणप्रध्वंसित्वात्तेषामदृष्टापूर्वादिरूपेण तु तेषामारब्धफलानां दैवरूपेणाचिन्त्यत्वेनाभिव्यक्त्यनर्हत्वेन फलवत्कल्प्यस्वरूपत्वात्।

तथा च 'यदचिन्त्यं तु तद्दैवम् भूतेष्वपि न हन्यते' ॥ २० ॥

कश्च दैवेन सौमित्रे योद्धुमुत्सहते पुमान्।
यस्य तु ग्रहणं किञ्चित्कर्मणोऽन्यत्र दृश्यते ॥' २१ ॥
( वा॰ रा॰ अयोध्या । २२ । )

इत्यादि रामायणवचनानि। सञ्चितानामपि तेषां नैवाभिव्यक्तिः संभवति। अपूर्वादृष्टादिरूपस्य तस्य प्रत्यक्षानुमानागम्यत्वात्।

स्वभावपदार्थः

किन्तु कर्मज्ञानाभ्यासजन्यसंस्कारप्रचय एव प्रकृतिस्वभावादिपदव्यपदेश्यो भवति। तानि तानि कर्माणि विद्या वा अभ्यस्यन् प्रसुप्तश्छात्रः प्रबुद्ध्यमान एवाभ्यासजन्यसंस्कारवशात् पुनस्तत्र प्रवर्तते। तथैव तानि कर्माणि विद्या वा अभ्यसन् मृतो जन्तुर्जन्मान्तरम्प्राप्य तेनैव पूर्वाभ्यासेन तत्र तत्र प्रवर्तते।

'पूर्वाभ्यासेनः तेनैव ह्रियते ह्यवशोऽपि सः।'
( गी० ६।४४। )

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥३।३३॥
स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा।
कर्त्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥
( गीता ॥१८।६० । )

स्वापप्रबोधप्रायमेव मरणजननादिकमन्यत्रोक्तम्।

"जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः।
जन्म त्वात्मतया पुंसः सवभावेन भूरिद ॥
विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथौ"।

इति श्रीमद्भागवतवचनात्।

स्वभाववादे पुरुषार्थावकाशः

नन्वेवं यदि सर्वोऽपि प्रकृतिपरतन्त्र एव कर्माणि करोति तदा पुरुषार्थानवकाशो विधिनिषेधात्मकशास्त्रवैयर्थ्यापत्तिश्चे'ति चेन्न; सत्सङ्गशास्त्राभ्यासजनितैः शास्त्रीयैः रागद्वेषादिभिः स्वाभाविकरागद्वेषनिवारणेन प्रकृतिसहकारी रागद्वेषविघटनेन पुरुषार्थावकाशसंभवात्। तदुक्तम्—

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।
न तयोर्वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ॥ (गी०।३।३४।)

तेन यद्यपि तत्तज्जात्यायुर्भोगारम्भकाणि कर्माणि जात्यादिफलकान्येव न तानि साक्षात्कर्मान्तरारम्भकाणि तथापि संस्कारद्वारा स्वानुरूपकर्मनिमित्तानि भवन्त्येव। संस्कारद्वारा कर्मान्तरारम्भकाणि तान्येव कर्माणि क्वचित्स्वभावदैवादिशब्देनाख्यायन्ते। प्रमादे सति तानि शुभान्यपि न शुभारम्भकाणि भवन्ति। किन्तु दुःसङ्गादिभिर्निकृष्टकर्माण्यारम्भन्ते। पुरुषार्थप्रभावात् सत्सङ्गादिभिरशुभान्यपि तानि नाशुभारम्भकाणि भवन्ति। किन्तु शुभानि कर्माणि प्रादुर्भवन्ति। यथा कुसूले प्राक्तनानि बीजानि विद्यमानान्यपि न निस्सरन्ति यानि नवानि तत्र निधीयन्ते तान्येव पूर्वं निष्कासनवेलायां निःसरन्ति। तद्वदेव नूतनपौरुषप्रादामादिकर्मजनिताः संस्कारा एव व्यज्यन्त, स्वानुरूपाणि कर्माणि च जनयन्ति। ब्राह्मणादिदेहारम्भकाणि शुभानि प्रारब्धकर्माणि तदैव स्वानुरूपाणि ज्ञानानि कर्माणि च जनयन्ति यदा विरोधिभिः प्रमादप्रसूतैर्ज्ञानकामकर्मभिरभिभूतानि न भवन्ति। पुरुषार्थप्रसूतैः कामकर्मज्ञानादिभिरुपोद्वलितानि स्वानुकूलैः समुचितैर्वातावरणैः सङ्गैः शास्त्रीयसंस्कारैश्च तानि सम्यक् फलन्ति।

महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।

तदभावे शुभगुणकर्मादिभिः ब्राह्मणदेहारम्भे जातेऽपि विपरीतैर्वातावरणैः सङ्गैश्च, शास्त्रीयसंस्काराभावाच्च जातिब्राह्मण्यसत्त्वेऽपि क्वचिद् व्यवहारेषु तन्निमित्तकपूजादिलाभेऽपि परिणामेऽशुभयोनिप्राप्तिरेव भवति। एवमेव शूद्रदेहारम्भकैस्तामसकर्मभिस्तद्देहप्राप्तौ शुभैः सङ्गैः शास्त्रोक्तैस्तदनुगुणसंस्कारैः कर्मभिस्तद्देहप्राप्तौ शुभैः सङ्गैः शास्त्रोक्तैस्तदनुगुणसंस्कारैः कर्मभिश्च वेदाध्य-

यनतदर्थानुष्ठानतदुचितस्थित्यलाभेऽपि विदुरादिवदादरणीयताऽन्ते सद्गति-लाभश्च सिद्ध्यति ।

### कर्मानुगुणैव ईश्वरकृतिः

तत एव सर्वान्तर्यामिणः परमेश्वरस्य सर्वनियामकत्वेन सर्वकारयितृत्वेऽपि कर्मसापेक्षत्वादेव न वैषम्यनैघृण्यादिकम् । प्राक्तनकर्मसंस्कारैर्यो यथाकरोति तं तथा कुर्वन्तमेव परमेश्वरः प्रेरयित्वा कारयति न स्वतन्त्रः ।

सक्रियस्य च यः प्रैषः स प्रैषो विषयाणि च । इत्याप्तोक्तेः ।

तथा च प्राक्तनः संस्कारप्रचय एव स्वभावः । तत्प्रभवैर्गुणैःप्रविभक्तानि शमदमादीनि ब्राह्मणादीनां विहितानि । ईश्वरेण तदनुगुणकर्मा ब्राह्मणादयो वर्णा निर्मिताः । अतस्तद्गुणानुरोधीन्येव शमदमादीनि कर्माणि तेषां कृते विहितानि । यस्य यद्वर्णे जन्म संवृत्तं तेन तदुचितान्येव कर्माणि कर्तव्यानि न यथेच्छम् ।

किञ्च 'ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परंतप ।
कर्माणि विभक्तानि स्वभावप्रभवैर्गुणैः ।।' ( गी० १८।४१ )

अत्र स्वभावप्रभवैर्गुणैः ब्राह्मणादीनां कर्माणि प्रविभक्तानि । तेन ब्राह्मणादिकर्मविभागस्य प्रयोजकाः स्वभावप्रभवा गुणा एवोक्ता इति मिथ्यैव जल्पितम् । अतएव वर्णभेदमनुसृत्य कर्मभेदविधानमुक्तम् । नतु कर्मभेदमनुसृत्य वर्णभेदविधानम् । 'ब्राह्मणो यजेत' 'राजा स्वाराज्यकामः राजसूयेन यजेत' इत्यादिषु जातिरेव तत्तदधिकारप्रयोजिकेत्युक्तमेव । अत एव नीलकण्ठाचार्य्यव्याख्यानमपि न जन्मना ब्राह्मण्याद्यपनोदकम् । किन्तु तस्य व्याख्यानत्रयमपि प्रायेण शङ्करभगवत्पादव्याख्यानानुसार्य्येव ।

### शङ्कराचार्यमतम्

अथेदानीं सर्वगीताशास्त्रार्थमुपसंहृत्य मसंगशस्त्राप्त्युपायं च प्रदर्शयितुं प्रकरणान्तरमारभते ब्राह्मणेत्यादिना । 'शूद्राणामसमासकरणं एकजातित्वे सति वेदानधिकारात्' (शा० भा) प्रविभक्तान्यसङ्कीर्णानि । तत्र हेतुमाह—स्वभावप्रभवैर्गुणैः स्वभाव ईश्वरस्य प्रकृतिस्त्रिगुणात्मिका सैव प्रभवो हेतुर्येषां गणानां ते स्वभावप्रभवास्तैः । यद्वा । ब्राह्मणस्वभावस्य सत्त्वगुण एव प्रभवः शान्तत्वात् । क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रज ईश्वरस्वभावत्वात् । वैश्य

स्वभावस्य तम उपसर्जनं रजः कृष्यादिस्वभावत्वात्। शूद्रस्वभावस्य रज उपसर्जनं तमः शुश्रूषास्वभावत्वात्।

नीलकण्ठव्याख्यानम्

अथवा। स्वभावः प्राग्भवीयः संस्कारस्तत्प्रभवैर्नतु जातिमात्रप्रभवैः पक्षिणामाकाशगमनवत्। अत एव जात्यन्तरव्यावृत्तानां धर्माणां शमादिषु पाठो न दृश्यते। नहि शूद्राद् व्यावृत्तं त्रैवर्णिकानामध्यापनादिकं वा इतरद्वयाद् व्यावृत्तं ब्राह्मणानामध्यापनादिकं वेह पठ्यते। किन्तु सर्वे सर्वजातीयानां साधारणा धर्मा शमादयो दृश्यन्ते। यथा हि द्रोणादिषु ब्राह्मणेष्वपि शौर्यादिकं, भरतादिषु क्षत्रियेष्वपि शमादिकं दृष्टम्, एवमितरत्र। तस्मात्—यस्मिन्कस्मिंश्चिद्वर्णे शमादयो दृश्यन्ते स शूद्रोऽप्येतैर्लक्षणैर्ब्राह्मण एव ज्ञातव्यः। यत्र च ब्राह्मणेऽपि शूद्रधर्मा दृश्यन्ते स शूद्र एव। तथा चारण्यके सर्पभूतं नहुषं प्रति युधिष्ठिर वाक्यम्—

सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा।
दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः॥

तथा च—यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः।
यत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशेत्॥ इति।

जातिधर्मास्तु मनुना दर्शिताः—

'अध्यापनमध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत्॥ ८८॥
प्रजानां रक्षणं दानमिज्याध्ययनमेव च।
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः॥ ८९॥
पशूनां रक्षणं दानमिज्याध्ययनमेव च।
वणिक्पथं कुसीदञ्च वैश्यस्य कृषिमेव च॥ ९०॥
एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत्।
एतेषामेव वर्णानां शुश्रूषामनुसूयया॥ ९१॥

(मनु० अ० १)

तस्मात् शमादयो यत्राब्राह्मणे ब्राह्मणे वा दृश्यन्ते स एव ब्राह्मण इत्यत्र विवक्षितम्।

'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः'। इत्यत्र तु मनूक्तान्य-

ध्यापनादीन्येव स्वकर्माणि ग्राह्याणि न तु शमदमादीनि। नहि ज्ञानविज्ञानवतोऽन्या संसिद्धिर्लब्धव्याऽस्ति। तस्माच्छमदमादयो ब्रह्मनिष्ठस्यैव ब्राह्मणस्य लक्षणमिति दिक्।

नहि पूर्वोक्ते नीलकण्ठव्याख्याने वृत्तेन गुणेन वा गुणकृतब्राह्मणस्य प्रतिपादनेन जात्यपलापस्तदनुगुणधर्माभिलापो वा संभवति। अतएव 'स्वे स्वे कर्मण्यभिरतः' इत्यत्र मनूक्तान्यध्यापनादीन्येव स्वकर्माणि ग्राह्याणीत्युक्तम्। यदि तस्य ब्राह्मणत्वादयो जन्मसिद्धा जातयो नेष्टा भवेयुस्तदा कथं तत्र जातिविहितानि कर्माणि ग्राह्याणीति कथयेत्। पार्थेन च कथमुच्येत—

'उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वता'। इति।

भगवत्पादास्तु-'स्वे-स्वे कर्मण्यभिरत' इत्यत्रापि प्रकृतत्वाच्छमादीन्येवाभिप्रेतानि। एतेषां जातिविहितानां कर्मणां सम्यगनुष्ठानेन स्वर्गप्राप्तिः। 'स्वभावतः वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलधर्मायुःश्रुतवित्तसुखमेधसो जन्म प्रपद्यन्ते।'

(आपः २-२-२-३)

ब्राह्मणानामेवाधिकारोव्युत्थानेऽतो ब्राह्मणग्रहणम् इति शां० भाष्यम्। एतं वमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणाया × × × × × व्युत्थाय भिक्षाचर्य्यं चरन्ति इति च। बृहदारण्यके कहोलप्रश्ने। परधर्मश्च भिक्षा जीवनादिकं कर्त्तुं प्रववृते। (शां० भा०) अशोच्यानन्वशोचस्त्वं (गीता २।१०) क्षात्रकर्मयुद्धलक्षणं गुरुभ्रातृपुत्रादिहिंसालक्षणमत्यन्तक्रूरमपि स्वधर्म इति कृत्वा नाधर्माय। तदकरणे च ततः स्वधर्मं कीर्त्तिञ्च हित्वा पापमवाप्स्यसि (गी. २।३३) इति ब्रुवता यावज्जीवादिश्रुतिचोदितानां पश्वादिहिंसालक्षणानां कर्मणां नाधर्मत्वमिति सुनिश्चितमुक्तं भवति। अयमंशो यद्यपि पूर्वपक्षस्तथापि समुच्चयस्यैव तदसदित्यादिना खण्डनम् नास्येत्यखण्डितत्वात् कर्मिणां तन्मान्यमेव अशोच्यानन्वशो...(शा० भा०२।११)

चातुवर्ण्यं मयेश्वरेण सृष्टम्—'ब्राह्मणोऽस्य मुखमासीदिति श्रुतेः...गुणविभागशः कर्मविभागशश्च। गुणाः सत्त्वरजस्तमांसि। तत्र सात्त्विकस्य सत्त्वप्रधानस्य ब्राह्मणस्य शमो दमस्तपः इत्यादीनि कर्माणि। सत्त्वोपसर्जनरजः प्रधानस्य क्षत्रियस्य शौर्य्यतेजः प्रभृतीनि कर्माणि। तम उपसर्जनरजः प्रधानस्य वैश्यस्य

कृष्यादीनि कर्माणि। रज उपसर्जनतमः प्रधानस्य शूद्रस्य शुश्रूषैव कर्मेत्येवं गुणकर्मविभागशश्चातुर्वर्ण्यं मया सृष्टं। (४।१३) एतानि गुणकर्माणि भगवतश्चातुर्वर्ण्यसृष्टौ निमित्तानि। तेनैव ब्राह्मणदीनां तत्तत्प्राधान्येन तानि-तानि कर्माणि। अत एव

"ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परंतप।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः॥" (गी० १८।४१)

इत्यत्र स्वभावप्रभवैरित्यस्य व्याख्याने स्वभाव ईश्वरस्य प्रकृतिस्त्रिगुणात्मिका माया सा प्रभवो येषां गुणानां ते स्वभावप्रभावागुणास्तैः शमदमादीनि कर्माणि विहितानि। अर्थात् प्रकृतिप्रसूतसत्त्वादिगुणानुसारेण तदनुरूपाणि कर्माणि विहितानि।

द्वितीयव्याख्याने स्वभावपदेन ब्राह्मणादीनां स्वभावा गृहीतास्तेषां प्रभवाः कारणानि सत्त्वादयो गुणास्तैः शमादीनि कर्माणि प्रविभक्तानि। ब्राह्मणस्वभावस्य सत्त्वगुणः प्रभवः कारणम्, क्षत्रियस्वभावस्य सत्त्वोपसर्जनतमः प्रभवः प्रशान्त्यैश्वर्य्येहामूढतास्वभावदर्शनाच्चतुर्वर्णानाम्। तेन ब्राह्मणादीनां स्वभावकारणैः उक्तैः सत्त्वादिभिस्तदनुगुणानि शमादीनि कर्माणि विहितानि।

तृतीये व्याख्याने स्वभावशब्देन जन्मान्तरकृतसंस्कारः प्राणिनां वर्तमान-जन्मनि स्वकार्य्याभिमुखत्वेनाभिव्यक्तो गृहीतः। स प्रभवो येषां गुणानां ते स्वभावप्रभवा गुणाः। गुणप्रादुर्भावस्य निष्कारणत्वानुपपत्तेः। तैः कर्माणि प्रविभक्तानि तथा च स्वकार्य्योन्मुखत्वेन प्राणिनामभिव्यक्तजन्मान्तरीय-कर्मजसंस्कारप्रसूतैर्गुणैस्तदनुरोधीनि शमादीनि कर्माणि विहितानि। यैर्गुणैः कर्मभिर्ब्राह्मणादियोनिषु जन्मानि भवन्ति। तान्येव प्रायेण वर्तमानजन्मनि फलोन्मुखत्वेनाभिव्यज्यन्ते। तान्येव स्वभावपदवाच्यानि भवन्ति। तदुत्पन्नैः सत्त्वादिभिर्गुणैर्ब्राह्मणादीनां शमदमादीनि कर्माणि प्रविभज्यन्ते।

ननु शास्त्रप्रविभक्तानि शास्त्रेण विहितानि ब्राह्मणादीनां शमादीनि कथमुच्यन्ते सत्त्वादिगुणप्रविभक्तानीति नैष दोषः, शास्त्रेणापि ब्राह्मणादीनां सत्त्वादि-गुणविशेषापेक्षयैव शमदीनि कर्माणि प्रविभक्तानि न गुणानपेक्षया इति शास्त्रप्रविभक्तानि न गुणानपेक्षया इति शास्त्रप्रविभक्तान्यपि कर्माणि गुण-प्रविभक्तानीत्युच्यन्ते। (शां० भा०)

### वातावरणस्य प्रभावः

ननु साम्प्रतं विपरीतमेव दृश्यते। क्वचिद् ब्राह्मणेषु मूढतैव दृश्यते शूद्रेषु च प्रशान्तिर्दृश्यते इति चेन्न; विपरीतैः सङ्गैः वातावरणैः तदनुरूपैः कर्मभिस्तथात्वस्य कादाचित्कत्वात्। अत एव परशुरामस्य द्रोणस्य च शौर्य्येऽपि न क्षत्रियत्वं, भीष्मस्य युधिष्ठिरस्य च शमादिमत्त्वेऽपि न ब्राह्मण्यम्। अत एव युद्धकालेऽर्जुनस्य वैराग्यादिमत्त्वेऽपि 'क्षत्रधर्मो न मुण्डन'मित्याद्यनुरोधेन भिक्षाचर्य्यं निषिद्धमेव भगवता। गुणा अपि सूक्ष्मा दुर्ज्ञेया मानवबुद्ध्यगम्या। तत एव शमदमादीनां रागप्राप्तत्वेन शास्त्रैकगम्यत्वेनैव तद्विधानं युज्यते। 'विधिरत्यन्तमप्राप्तौ' इत्यभियुक्तोक्तेः। अतः भिक्षाचर्य्ये परधर्मे प्रवर्त्स्यमानमप्यवरुध्य क्षात्रधर्मेऽनभीप्सिते भगवान् अर्जुनं प्रवर्तयामास।

'स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि।' इति। ( गी० २।३१ )

स्वो धर्मः क्षत्रियस्य युद्धम् ( शां० भाष्यम् )। नहि रागप्राप्तो विधीयते। न वा रागप्राप्तो धर्मो भवति।

'श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।' इति।

'स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्विषम्।' इति च।

यथा विषजातस्य कृमेर्विषं न दोषकरं तथा स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्विषम्। (शा० भा०) 'स्वभावजमि'ति। ब्रह्मकर्म स्वभावजमित्यादिना। तदुक्तम्—स्वभावनियतमिति' ( शां० भा० )

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्।<br>
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः॥' ४८॥

सहजं सहजन्मनैवोत्पन्नम् ( शां० भा० ) तेन ब्राह्मणादि जन्मना सहोत्पन्नं जातिमूलकमेव यस्य यत्कर्म तेन तदेव स्वभावजं कर्मानुष्ठेयं, तदेव कल्याणकरं परधर्मस्य भयावहत्वात्।

किञ्च भगवत्पादानुयायित्वेन ब्रह्मनिष्ठत्वमात्मनः ख्यापयन्नपि यदि तन्मतमपहाय नीलकण्ठीयमतमाश्रयेत्, तथापि तत्साधनाय यत् न सिद्ध्यतीत्युक्तमेव। यस्य मते गुणकर्मानुरोधेन वर्णपरिवर्तनं भवति तस्य स्वभावजं सहजमित्यादि शब्दानां भाष्यकारीयव्याख्यानानुसारी वाक्यार्थः कथं संगच्छते। गुणकर्मणां विपरिवर्तनशीलत्वात्। पुराणे वर्णितानामाश्रमिणाञ्च लोकफलभेदवि-

शेषस्मरणात्। स्वे स्वे यथोक्तलक्षणे कर्मण्यभिरतः संसिद्धिं स्वकर्मानुष्ठानाद- शुद्धिक्षये सति कायेन्द्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां संसिद्धिं लभते नरः अधिकृतः' (शां० भाष्यम्।) अत्र ब्राह्मणादि कर्मणां शमादीनां जातिविहिता- नामित्युक्त्या ब्राह्मणादीनां जातित्वं स्पष्टं सिद्ध्यति।

अत एव पुराणेषु वेदभाष्येषु सायणादिभाष्येषु च — जन्मनैव वर्णा उक्ताः।

मुखतो वर्त्तत ब्रह्म पुरुषस्य कुरूद्वह।
यस्तून्मुखत्वाद्वर्णानां मुख्योऽभूद् ब्राह्मणो गुरुः॥ ३०॥
बाहुभ्योऽवर्त्तत क्षत्रं क्षत्रियस्तदनुव्रतः।
यो जातस्त्रायते वर्णान् पौरुषः कण्टकक्षतात्॥ ३१॥
विशोऽवर्त्तन्त तस्योर्वो लोकवृत्तिकरीर्विभोः।
वैश्यस्तदुद्भवो वार्तां नृणां यः समवर्त्तयत्॥ ३२॥
पद्भ्यां भगवतो यज्ञे शुश्रूषा धर्मसिद्धये।
तस्यां जातः पुरा शूद्रो यद्वृत्त्या तुष्यते हरिः॥ ३३॥
एते वर्णाः स्वधर्मेण यजन्ति स्वगुरुं हरिम्।
श्रद्धयात्मविशुद्ध्यर्थं यज्जाताः सहवृत्तिभिः॥ ३४॥
(श्री० भा० स्क० ३।६)

उव्वट :—'ये शूद्राः ते पद्भ्यां अजायन्त इति कल्प्यन्ते तदस्योत्पन्न- त्वात्।' महीधरः—'ब्राह्मणः ब्राह्मणत्वजातिविशिष्टः पुरुषोऽस्य प्रजापतेर्मुख- मासीत् मुखादुत्पन्न इत्यर्थः। राजन्यः क्षत्रियत्वजातिविशिष्टो बाहूकृतः बाहु- त्वेन निष्पादितः। तत्तदानीमस्य प्रजापतेः यौ ऊरू तद्रूपो वैश्यः सम्पन्नः ऊरुभ्यामुत्पादित इत्यर्थः। तथास्य पद्भ्यां शूद्रत्वजातिमान् पुरुषोऽजायत उत्पन्नः।' सायणाचार्या अपि ऋग्वेदीये पुरुषसूक्ते-'अस्य प्रजापतेर्ब्राह्मणो ब्राह्म- णत्वजातिविशिष्टः पुरुषो मुखमासीत् मुखादुत्पन्न इत्यर्थ'। योऽयं राजन्यः क्षत्रियत्वजातिविशिष्टः स बाहूकृतः बाहुत्वेन निष्पादितः बाहूभ्यामुत्पादित इत्यर्थः। तत्तदानीमस्य प्रजापतेर्यद्यौ ऊरू तद्रूपो वैश्यः सम्पन्नः ऊरुभ्या- मुत्पन्न इत्यर्थः। तथास्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान् पुरुषोऽजा- यत। इयन्तु मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिः याजुषे सप्तमे काण्डे 'स मुखतस्त्रिवृतं निरमिमीत' इत्यादौ विस्पष्टमाम्नाता। अतः प्रश्नोत्तरे उभे अपि तत्परत्वेनैव योजनीये।

## पतञ्जलिमतम्

यदुक्तं महाभाष्येऽपि ब्राह्मणादयो गुणशब्दा उक्तास्तस्माद् गुणकृतमेव ब्राह्मण्यादिकमिति तदेतन्महाभाष्याद्यज्ञानविजृम्भितम्। 'तपः श्रुतञ्च योनिश्चे'ति वचनविरोधात्। अथवा छद्मना मूढजनप्रतारणाय तपः श्रुतञ्चोक्त्वा योनिश्चेति नोक्तम्। तथाहि नञ् ( पा० सू० २।२।६ ) इत्यत्र किं प्रधानोऽयं समास इत्युपक्रान्तः। अत्र प्रदीपे—'इहाब्राह्मणादिना क्षत्रियादेरभिधानं लोके दृश्यते। तत्र प्रक्रियागतगुणदोषनिरूपणाय प्रश्नः। यदा जातौ ब्राह्मणशब्दो वर्तते अविद्यमानं ब्राह्मण्यं यस्य सोऽब्राह्मणः क्षत्रियादिस्तदान्यपदार्थः प्रधानम्। एवमन्यपदपूर्वपदोत्तरपदार्थप्राधान्यपक्षानुत्थाप्यानुपपत्तय उक्ताः। उत्तरपदार्थप्राधान्यपक्षे पुनरपि अब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोतीत्याक्षेपे तत्र राजपुरुषमानयेत्युक्ते पुरुषमात्रस्य कुतो नानयनमिति प्रतिक्षेपे 'यथा तत्र विशेषोऽभ्युपेयते तथैवात्रापि नञ्विशेषको ब्राह्मणः प्रयुक्त इति तस्यैवानयनं नतु ब्राह्मणमात्रस्ये'ति समाहितम्।

'कः पुनरसौ इति' पृष्टे 'निवृत्तिपदार्थकः' इति समाहितमेवं प्रश्नप्रतिवचनपरम्परयाऽन्यदपि बहूक्त्वा 'पश्चादर्थप्रत्यायनाय शब्दः प्रयुज्यते। स चेन्निवृत्तः किमर्थं प्रयुज्यत' इत्युक्तम्। ततः प्रतिषेधविषयप्रदर्शनाय बुद्ध्या ब्राह्मणार्थं निरूप्य तस्य क्षत्रियादौ मुख्यसत्ताविरहप्रतिपादनाय नञ्सहितो ब्राह्मणशब्दः प्रयुज्यत इत्युक्तम्। यस्यैव गुणस्य स्वाभाविकी निवृत्तिः क्षत्रियादौ तस्यैवासौ नञा द्योत्यते। अवशिष्टानां गुणानामर्थात्सद्भावो गम्यते। अस्मिन् प्रसङ्गे महाभाष्यकार आह—'सर्वे एते शब्दा गुणसमुदायेषु वर्त्तन्ते। ब्राह्मणः क्षत्रियो वैश्यः शूद्र' इति।

अत्र प्रदीपोक्तरीत्या गुणशब्दे धर्ममात्रं पराश्रयमुच्यते। अत एव योनिशब्दितं जन्मापि गुणसमुदायान्तर्गतम्। तेन नात्र जन्मनिरपेक्षं मुख्यं ब्राह्मण्यमुक्तम्। तथा च महाभाष्यकृतैवोद्धृतं स्मृतिशास्त्रम्—

'तपः श्रुतञ्च योनिश्चेत्येतद् ब्राह्मणकारकम्।
तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः॥' इति।

अत्र प्रदीपः—

तपः चान्द्रायणादि कर्म, श्रुतं वेदवेदाङ्गादीनामध्ययनम्, योनिः ब्राह्मणाद्

ब्राह्मण्यां जन्म ब्राह्मणकारकम् ब्राह्मणव्यपदेशस्यैतन्निमित्तम्। गुणसमुदायाभावेऽपि तदेकदेशे प्रयोगदर्शनादाह —

तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥' इति

'गौरः शुच्याचारःपिङ्गलः कपिलकेशः इत्येतानप्यभ्यन्तरान् ब्राह्मण्ये गुणान् कुर्वन्ति।' (म० भा०) 'अत्र लोकप्रसिद्धान् बाहुल्येन तथादृष्टान् गुणानाह' इति प्रदीपः। 'तथाचैते गुणा व्यभिचारिण इति भाव' इति उद्योतः। केचिल्लौकिका एतान् बाहुल्येन दृष्टान् व्यभिचारिणो गुणानपि ब्राह्मणशब्दार्थे गुणसमुदाये कुर्वन्ति। 'समुदायेषु च वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते।' (म० भा०) 'अवयवे समुदायारोपाच्छब्दप्रवृत्तिर्विज्ञेया। न तु शब्दः स्वार्थं परित्यज्यार्थान्तरं वक्तुं समर्थः, शब्दार्थसम्बन्धस्यानित्यताप्रसङ्गात्।' (प्रदीपः) 'पूर्वे पाञ्चालाः, उत्तरे पञ्चालाः।··· एवमयं समुदाये प्रवृत्तो ब्राह्मणशब्दोऽवयवेष्वपि वर्तते। जातिहीने गुणहीने च। गुणहीने तावत् अब्राह्मणोऽयं यस्तिष्ठन् मूत्रयति। अब्राह्मणोऽयं यो गच्छन् भक्षयति (म० भाष्यम्) प्रदीपानुसारेण तपःश्रुतयोरभावान्निन्दया यत्राब्राह्मणशब्दप्रयोगस्तत्र जातिमात्रेऽवयवे समुदायरूपारोपाद् ब्राह्मणशब्दप्रयोगः। नव्या तु स्वाभाविकी तपःश्रुतयोर्निवृत्तिर्द्योत्यते।

'जातिहीने संदेहाद् दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते। संदेहात्तावद्गौरं शुच्याचारं पिङ्गलं कपिलकेशं दृष्ट्वाऽध्यवस्यति ब्राह्मणोऽयमिति' (म० भा०) तत्र प्रदीपः–'तत्र स्तुत्या ब्राह्मणशब्दप्रवृत्तिरध्ययनादिगुणसद्भावप्रतिपादनाय।' ततःपश्चादुपलभते नायं ब्राह्मणः अब्राह्मणोऽयम्। तत्र संदेहाद् ब्राह्मणशब्दो वर्तते। जातिकृताचार्थस्य निवृत्तिः।'(म० भा०) प्रदीपानुसारेण अत्र जात्यभावकृतोऽयमर्थः। यथा वर्षाकृतं दुर्भिक्षमित्यत्र वर्षाभावकृतमित्यर्थो भवति तद्वत्। "दुरुपदेशात् दुरुपदिष्टमस्य भवति। अस्मिन्नवकाशे ब्राह्मणस्तमानयेति। स तत्र गत्वा यं पश्यति तमध्यवस्यति ब्राह्मणोऽमिति। ततः पश्चादुपलभते····· अब्राह्मणोऽयमिति। तत्र दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते। जातिकृताचार्थस्य निवृत्तिः।" (म० भा०) एकदेशविगमात्समुदायो निवृत्त उच्यते। एकदेशान्तरसद्भावाच्च तस्य सद्भावोऽभिधीयते। यथैकदेशकरणाभ्यां कृतः सङ्घात उच्यते।' (प्रदीपः) तपःश्रुतयोरभावे जातिमात्रसत्त्वेऽपि ब्राह्मणस्य निन्दितत्वमेव, तपः श्रुतयोः सत्त्वे जातेरभावेऽपि क्षत्रियादेः स्तुत्यत्वमेव, तपःश्रुतयो-

जातेश्च सत्त्वे मुख्यं ब्राह्मण्यं भवति। तेन पूर्वोक्तमेव फलति। यथा सिंहस्य शौर्यक्रौर्यादिगुणैर्जात्या च मुख्यं सिंहत्वं 'गुणाभावे जातिसिंहत्वम्' जात्यभावे गौणं सिंहत्वं, तथैव ब्राह्मणाद् ब्राह्मण्यां जातस्य तपः श्रुताभ्यां सम्पन्नस्य मुख्यं ब्राह्मण्यम्। तद्रहितस्य जातिब्राह्मण्यम्। तत्सहितस्य क्षत्रियात्क्षत्रियायां जातस्य गौणं ब्राह्मण्यम् स्तुत्यर्थमेवोच्यते। यथा देवदत्तः शौर्यादिभिः स्तुत्यर्थं सिंह उच्यते।

१ जातिकृतेति। अनेन जातिब्राह्मणाद् ब्राह्मण्यां जन्म विना नैव ब्राह्मण्यम्। तपःश्रुते तु ब्राह्मण्याश्रयत्वसंपादके त्रीणि यस्यावदातानि'' इति वक्ष्यमाणस्मृतेः। ( महाभाष्ये टिप्पणी )

२ तथा च बौधायनगृह्यसूत्रे प्रथमप्रश्ने सप्तमेऽध्याये—ब्राह्मणेन ब्राह्मण्यामुत्पन्नः प्रागुपनयनाज्जात इत्यभिधीते। उपनीतमात्रो व्रतानुचारी वेदानां किञ्चिदधीत्य ब्राह्मणः ॥२।१॥ एकां शाखामधीत्य श्रोत्रियः॥३॥अङ्गाध्याध्याय्यनूचानः ॥ ४ ॥ कल्पाध्यायी ऋषिकल्पः ॥ ५ ॥ सूत्रप्रवचनाध्यायी भ्रूणः ॥ ६ ॥ चतुर्वेदादृषिः ॥ ७ ॥ अत ऊर्ध्वं देवः ॥ ८ ॥ इति सूत्राणि समुपलभ्यन्ते। यदि भाष्यलिखितस्मृतौ ॥ 'जातब्राह्मण' इति पाठो भवेत्। तदा जातसंज्ञको ब्राह्मण इत्यर्थो भवेत्।

यद्वा जातमात्रो ब्राह्मण इत्युत्तरपदलोपी समासो भवेत्। तथाचोक्तं दक्षेण।

''जातमात्रः शिशुस्तावद्यावदष्टौ समा वयः।
स हि गर्भसमो ज्ञेयो व्यक्तिमात्रप्रदर्शितः ॥ ४ ॥
भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथानृते।
तस्मिन्काले न दोषोऽस्ति स यावन्नोपनीयते ॥ ५ ॥
उपनीतस्य, दोषोऽस्ति क्रियमाणैर्विगर्हितैः।
अप्राप्तव्यवहारोऽसौ यावत् षोडशवार्षिकः ॥६॥'' इति।
(दक्षस्मृतिः अ० १)

राजशब्दार्थः

''राजा स्वाराज्यकामो राजसूयेन यजेत' इति राजसूययागे पूर्वोत्तरमीमांसकानामैकमत्येन क्षत्रियस्यैवाधिकारः, न ब्राह्मणादीनां राज्ञां सतामपि

क्षत्रियश्च जात्यैव न प्रजापालनादिकर्मणा। तदुक्तम्-'परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः (३।३।५२) इत्यत्र भामत्याम्। 'अस्ति राजसूयः 'राजा स्वाराज्यकामो राजसूयेन यजेत' इति। ते प्रकृत्यामनन्ति अवेष्टिं नामेष्टिम्। आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणेत्येवमादि'तां प्रकृत्याधीयते। यदि ब्राह्मणो यजेत बार्हस्पत्यं चरुमाग्नेयेन्द्रपुराडाशयोर्मध्ये निधायाहुतिमाहुतिं हुत्वाभिधारये-द्यदि वैश्यो वैश्वदेवं, यदि राजन्य ऐन्द्रमिति। तत्र संदिह्यते किं ब्राह्मणादीनां प्राप्तानां निमित्तार्थेन श्रवणमुत ब्राह्मणादीनामयं यागो विधीयते इति। यदि प्रजापालनकण्टकोद्धारणादि कर्म राज्यं तस्य कर्ता राजेति राजशब्दस्यार्थस्ततो राजा राजसूयेन यजेतेति राज्यस्य कर्तुं राजसूयेऽधिकारः। तस्मात्संभवन्ति ब्राह्मणक्षत्रियवैश्या राज्यस्य कर्तार इति सिद्धं सर्व एवैते राजसूये प्राप्ता इति। यदि ब्राह्मणो यजेत इत्येवमादयो निमित्तार्थाः श्रुतयः। अथ तु राज्ञः कर्म राज्य-मिति राजकर्तृयोगात्तत्कर्म राज्यं ततः पूर्वं को राजे'त्यवधारणीयम्। तत्र येषां पिकनेमादिशब्दनामार्य्येषु न प्रसिद्धोऽर्थः, तेषां किं निगमादिभ्योऽर्थः कल्पनीयः उत म्लेच्छप्रसिद्ध एवार्थो ग्राह्य इति संदेहे शास्त्रस्थत्वान्निगमादि प्रसिद्ध एवार्थो ग्राह्यो म्लेच्छप्रसिद्धेरार्य्याणामर्थप्रतिपत्तौ विप्लवप्रसङ्गादिति प्राप्ते समुदायप्रसिद्धेरवयवप्रसिद्धितो बलवत्त्वात् पिकनेमादि पदानि यद्रूपाणि वेदे दृश्यन्ते तद्रूपाणामेव तेषां म्लेच्छैरर्थविशेषेषु प्रयुज्यमानत्वात् तदर्थसम्बन्धे च पदानां बाधाभावाद्विप्लुतिशङ्कानुत्थानान्म्लेच्छप्रसिद्ध एवार्थो ग्राह्यः तथाच पिकः कोकिलः, नेमोऽर्धम्, तामरसं पद्ममिति प्रमाणलक्षणे स्थितम्। उक्तस्थलेषु यथा म्लेच्छप्रसिद्ध्या पिकादिशब्दार्थावधारणं तथैवान्ध्रम्लेच्छादीनां क्षत्रियजातौ राजशब्दप्रसिद्ध्या राजशब्दार्थावधारणं युक्तम्। तथा च क्षत्रिय एव राजा तस्यैव राजसूयेऽधिकारो न ब्राह्मणवैश्ययोः प्राप्तिरिति राजसूय-प्रकरणं भित्त्वा ब्राह्मणादि कर्तृकाणि पृथगेव कर्माणि प्राप्यन्ते। न नैमित्ति-कानि। तत्र पूर्वपक्षः—ब्राह्मणादिषु प्रजापालनकर्तृषु कनकदण्डातपत्रश्वेत-चामरादिलाञ्छनेषु राजपदस्यार्य्याणामान्ध्राणाञ्चाविवादेन प्रयोगात् क्षत्रिय-जातावार्य्याणां राजपदप्रयोगाभावात् विप्रतिपत्तेः, राज्यस्य कर्ता राजेत्येवार्थो ग्राह्यः। शास्त्रसहितार्य्यप्रसिद्ध्या तद्विहीनान्ध्रम्लेच्छप्रसिद्धिबाधान्न जाति-मात्रं राजशब्दार्थः।

विप्रतिपत्तौ तु 'यवमयश्चरुर्भवति वाराही उपानहौ, इत्यत्र यववराह-शब्दयोर्म्लेच्छैः प्रियङ्गुवायसयोः प्रयोगादार्यैश्च दीर्घशूकसूकरयोः प्रयोगादुभयोश्च प्रयोगयोरनादित्वेन तुल्यबलत्वाद्विकल्पेनाभिधानं प्राप्तम्। तत्र सिद्धान्त उक्तम् 'शास्त्रस्था वा तन्निमित्तत्वात्' (जै० १।३।६) यवमय इत्यस्य वाक्यशेषे 'यदान्या ओषधयो म्लान्त्यथैते मोदमानास्तिष्ठन्ति' इति श्रूयते।

'यवाश्चान्यौषधिम्लानौ मोदन्ते न प्रियङ्गवः।'

उक्तं हि

'फाल्गुने ह्यौषधीनां हि जायते पत्रशातनम्।
मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः॥
प्रियङ्गवः शरत्पक्वास्तावद् गच्छन्ति हि क्षयम्।
यदा वर्षासु मोदन्ते सम्यग्जाताः प्रियङ्गवः॥
तदा नान्योषधिम्लानिः सर्वासामेव मोदनात्।'

एवमेव 'वाराहो उपानहौ' इत्यस्य वाक्यशेषे 'वराहं गावोऽनुधावन्ती'ति श्रूयते। सूकरञ्च गावोऽनुधावन्ति अनुकुर्वन्ति चतुष्पात्त्वेन न काकम्। तस्माद् यववराहशब्दयोर्दीर्घशूकशूकरावर्थावित्यार्यप्रसिद्धिरेव बलीयसी।

ननु नान्ध्रप्रसिद्धिरेव किन्तु 'गुणवचनब्राह्मणादिभ्यः कर्मणि चे'ति सूत्रे पाणिनिना गणवचनेभ्यः शुक्लादिशब्देभ्यः ब्राह्मणादिशब्देभ्यश्च ष्यञ् प्रत्ययस्मरणाद्राज्ञः कर्म राज्यमिति सिद्ध्यति। ततः स्मृतिसंहिताया आन्ध्रप्रसिद्धेर्बलीयसीत्वेन क्षत्रियजातिरेव राजपदार्थ इति चेन्न; बलवदार्य्यप्रसिद्धिविरोधेत्वतन्मूलायाः पाणिनीयप्रसिद्धेः विरोधेत्वनपेक्ष्यं स्यादसति ह्यनुमानमिति न्यायेन बाधनात्तदनुगुणतया कथञ्चिन्नखनकुलादिवदन्वाख्यानमात्रपरतयानीयमानत्वाद्राज्यस्य कर्ता राजेत्येव युक्तः। तथा च निमित्तार्थाः श्रुतयस्तथात्वे यदि शब्दोऽप्याञ्जसः स्यात्ततः सिद्धान्तः।

रूपतो न विशेषोऽस्ति ह्यार्यम्लेच्छप्रयोगयोः।
वैदिकाद्वाक्यशेषात्तु विशेषस्तत्र दर्शितः॥' इति।

अनादिवृद्धव्यवहारारूढत्वादार्यम्लेच्छप्रयोगयोःस्वरूपतो न विशेषः। यवादिशब्देषु तु वैदिकवाक्यशेषादार्यप्रसिद्धेर्बलवत्वम्। राजशब्दे-

स्वार्य्यप्रसिद्धिर्नास्ति अस्ति च वेदानुग्रह उभयोरिति द्वयोः प्रसिद्धयोरविशेषः। तदिह राजशब्दस्य कर्मयोगाद्वा कर्त्तरि प्रयोगः, कर्तृप्रयोगाद्वा कर्मणीति संशये वैदिकवाक्यशेषवदभियुक्ततरस्यात्रभवतः पाणिनेः स्मृतेर्निर्णीयते। प्रसिद्धि-रान्ध्राणामनादिः, आदिमती चार्य्याणां प्रसिद्धिः, गोगाव्यादिशब्दवत्।

न च संभावितादिमद्भावप्रसिद्धिः! पाणिनिस्मृतिमपोह्यानादिप्रसिद्धिमादि-मतीं कर्त्तुमुत्सहते। गाव्यादिशब्दप्रसिद्धेरनादित्वेन गवादिपदप्रसिद्धेरप्यादि-मत्त्वोपपत्तेः। तस्मात्पाणिनिस्मृत्यनुमतान्ध्रप्रसिद्धिबलीयस्त्वेन क्षत्रियत्वजातौ राजशब्दो मुख्यः। तत्कर्त्तृय्येतज्जातौ तु गौण इति क्षत्रियस्यैवाधिकाराद्राज-सूये तत्प्रकरणमपोह्यावेष्टेरुत्कर्षः। अन्वयानुरोधी यदि शब्दो नत्वपूर्वविधौ सति तमन्यथयितुमर्हति। अन्वयः प्राप्तिस्तदनुरोधी यदि शब्दो निपातः। निपाताश्चोत्सर्गतः प्राप्तिमपेक्षन्ते। अप्राप्ते चार्थे वाक्याद् गम्यमाने यदि शब्दो भञ्जनीयः।

'यदि शब्दपरित्यागो रुच्यध्याहारकल्पना।
व्यवधानेन सम्बन्धो हेतुहेतुमतोश्च लिङ्।'

यदि रोचयेत फलं मे स्यात्तर्हि 'ब्राह्मणो यजेत' इति रुच्यध्याहारकल्पनान्न विधित्वक्षतिरित्यर्थः। व्यवधानेन सम्बन्धो यदि बार्हस्पत्यं मध्ये निधायाहुतिं हुत्वाऽभिघारयेदभिघारयितुमिच्छेदिति। कामप्रवेदने लिङ्। अर्थात्तु विधिः। एकस्मिन् वाक्ये विधिद्वयायोगात् तर्हि ब्राह्मणो यजेतेति विधिरेव। हेतुहेतुम-तोरिति यदि ब्राह्मणयजनमाहुत्यभिघारणे हेतुस्तदाहुत्यभिघारणमेवं कर्तव्यम्। अत्रैको लिङ्हेतुमत्त्वेऽपरो विधौ। तत्राप्येकस्य विधिरर्थादपरस्य श्रौतः इति भामत्यां कल्पतरौ च स्पष्टम्।

परिमलकारस्तु–राजशब्दस्य क्षत्रियत्वं पालकत्वं वार्थ इत्यत्र बहूनि साधक-बाधकप्रमाणान्युपन्यस्यान्ते राजसूयवाक्ये क्षत्रिय एवार्थो ग्राह्यः, स प्रतियोगिकौ-पाधिकधर्मरूपपालकत्वापेक्षया निष्प्रतियोगिकाखण्डरूपधर्मः क्षत्रियजातेर्लघु-त्वेनासति बाधके लघुप्रवृत्तिनिमित्तकार्थग्रहणौचित्यात्। श्रुतिस्मृतिप्रयोग-वैयाकरणव्यवहाराणामुभयत्र साम्येऽपि क्षत्रियेष्वेव राजशब्दस्य शक्तिः। तेषु क्षत्रियत्वजातेरिव पालकेष्वनुगतानतिप्रसक्तशक्यतावच्छेदकरूपाभावात्। तथाहि न पालनमात्रं निमित्तं सर्वसाधारण्यप्रसङ्गात्। सर्वेषां हि पुत्रदारधनादि-

विषयमन्ततः स्वशरीरविषयं वा पालनम् साधारण्येन वर्तत एव । नापि जनपदपालनं निमित्तम् । राज्ञा नियुक्ते तत्तत्पदाधिकारिणि सत्यपि तस्मिन् राजपदाप्रयोगात् । नापि स्वतन्त्रपालनं निमित्तं सम्राजा देशविशेषे राजभावेनाभिषिक्ते तदभावात् ।

किञ्च विनाऽपि पालकत्वं श्रेष्ठत्वमात्रेण राजपदप्रयोगो मृगराजः, पक्षिराज इति दृश्यते । तस्य राजदन्तादिषु परमित्युपसर्जनपरनिपातविधायकपाणिन्यनुग्रहोऽप्यस्ति । तस्मादनुगतानतिप्रसक्तजातिनिमित्तक्षत्रियार्थ एव राजशब्दः, क्षत्रियेषु प्रायेण पालकत्वस्य तत्कृतस्य श्रैष्ठ्यस्य च सद्भावात् । क्वचित्पालके केनचिद्गुणेन श्रैष्ठ्ये च तस्य निरूढा लक्षणेत्येव युक्तम् । इत्थं यद् राजसूयवाक्ये राजशब्दस्य क्षत्रियार्थत्वव्यवस्थापनम्, तत्तु स्मृत्याद्यनुगृहीतं म्लेच्छप्रसिद्धिप्रसादलभ्यम् ।

शौनकवृत्तान्तः

यदपि "गृत्समदस्य शौनकश्चातुर्वर्ण्यस्य प्रवर्तयिताभूत् ।

(विष्णु० अ० ४-८-१)

'पुत्रोगृत्समदस्यापि शुनको यस्य शौनकाः ।
ब्राह्मणाश्क्षत्रियाश्चैव वैश्याः शूद्रास्तथैव च ॥'

हरिवंशे (२६।१५।२०) ।

तत्तद्गुण कर्मभिर्व्यवस्थिता ब्राह्मणादयश्चत्वारो वर्णाः ।

'ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः ।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥
मरीचेः कश्यपः पुत्रः कश्यपातु इमाः प्रजाः ।

(म. भा. आ. ६५।१०।११)

अत्रापि गुणकर्मानुरोधेन ब्राह्मणाद्याः प्रजाः सम्पन्नाः । अत एव गोत्रविस्मरणे कश्यपगोत्रं मन्तव्यम् । महाभारतस्य शान्तिपर्वणि विश्वकारणान्महादेवात् प्राक् ब्राह्मणा एव सृष्टाः, नान्ये क्षत्रियादयः । पश्चाद्राष्ट्ररक्षादिप्रयोजनायैव तेभ्य एव तन्तुभ्यः पटा इव सुवर्णाद् भूषणानीव क्षत्रियाद्या वर्णाः सृष्टाः । तथाहि "वाक् संयमकाले हि तस्य वरप्रदस्य देवदेवस्य सकाशात् ब्राह्मणाः प्रथमं प्रादुर्भूताः । ब्राह्मणेभ्यश्च शेषाः वर्णाः प्रादुर्भूताः ।" (म० भा० शा० प० ३४९-२१) इति ।

'संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः ।' ( म० भा० शां० प० ६०-४२ ) सृष्टयः सन्तानानि । तेन सर्वेषां वर्णानां ब्राह्मणजत्वात् अस्त्येव शूद्रस्यापि यज्ञेऽधिकार इत्यर्थ इति नीलकण्ठः ।

'तस्माद्वर्णा ऋजवो ज्ञातिवर्णाः संसृज्यन्ते तस्य विकार एव ।
एकं साम यजुरेकमृगेका विप्रश्चैको निश्चये तेषु सृष्टः ।।, इति
( म० भा० शा० पर्व ६०-४७ )"

तन्न, राष्ट्ररक्षणाद्यर्थमपि जातिविशिष्टानामेव क्षत्रियादीनां निर्माणेनापि तदुपपत्तेः । नह्यनेन जात्यपलापः सिद्ध्यति । ब्रह्मकारणकत्वेऽपि यथाऽऽकाश-वाय्वादीनां जातिभेदस्तथैव महादेवकारणकत्वेऽपि ब्राह्मणक्षत्रियादीनां जातिभेदे न काचिद् बाधा । यज्ञाधिकारस्तु सर्वेषां पारम्पर्येणैव न स्वातन्त्र्येण 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' तै० सं० ७।१।१।६ इति प्रत्यक्षश्रुतिविरोधात् , अपशूद्राधिकरणविरोधाच्च । अतएव नीलकण्ठेनापि मानसो यज्ञ इत्युक्तम् ।

यदपि 'कर्मैकं कारणञ्चात्र सुगतिं दुर्गतिं प्रति ।
कर्मैव प्राक्तनमपि क्षणं किं कोऽस्ति चाक्रियः ।।' ३७ ।।
प्राक्कर्मवशतः सर्वं भवत्येवेति निश्चितम् ।
तदोपदेशा व्यर्थाः स्युः कार्य्याकार्य्यप्रबोधकाः ।। ४७ ।।
प्राक्कर्मफलभोगार्हा बुद्धिः सञ्जायते नृणाम् ।
पापे कर्मणि पुण्ये वा कर्त्तुं शक्तो नचान्यथा ।। ४५ ।।
धीमन्तो वन्द्यचरिता मन्यन्ते पौरुषं महत् ।
अशक्ताः पौरुषं कर्त्तुं क्लीबा दैवमुपासते ।।४८।। इति ।
( शुक्रनीतिः-अध्यायः १ )

तदपि न जातिबाधकम् । शास्त्रीयमार्गेणैव पुरुषकारस्याप्युपादेयत्वात् । जातिव्यवस्थासम्मानन्तु निम्नोद्धृतैर्वाक्यैरपि बोध्यम् ।

✓ "उत्कृष्टजातिशीलानां गुर्वाचार्य्यतपस्विनाम् ।
आरण्यास्तु स्वकैः कुर्य्युः सार्थिकाः सार्थकैः सह ।।"५४६।।
"जातिजानपदान् धर्मान् श्रेणीधर्मांस्तथैव च ।।५६८।।
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपालयेत् ।।
देशजातिकुलानाञ्च ये धर्माः प्राक्प्रवर्तिताः ।।५६९।।

तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा।
उदूह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ॥५७०॥
मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः।
मत्स्यादाश्च नराः सर्वे व्यभिचाररताः स्त्रियः ॥५७१॥
उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वला।
खशजाताः प्रगृह्णन्ति भ्रातृभार्य्यामभर्तृकाम् ॥५७२॥
अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः।
येषां परम्पराप्राप्ताः पूर्वजैरप्यनुष्ठिताः ॥५७३॥
त एव तैर्न दुष्येयुराचारान्नेतरस्य तु।" इति ॥

(शुक्रनीतिः अध्यायः ४)

शास्त्राविरुद्धानामेवाचाराणां प्रामाण्यम्। येषामाचाराणां पारम्पार्येण येषां-कृते प्राप्तिस्तेषामेव कृते तदादरणीयतापि।

यदपि

"शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति ॥३६८॥
वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना।
पुराणाद्युक्तमन्त्रैश्च नमोऽन्तैः कर्मकेवलम् ॥३६९॥
विप्रवद्विप्रविन्नासु क्षत्रविन्नासु क्षत्रवत्।
प्रजाताः कर्मकुर्य्युर्वै वैश्यविन्नासु वैश्यवत् ॥३७०॥
वैश्यासु क्षत्रविप्राभ्यां जाताः शूद्रासु शूद्रवत्।
अधमादुत्तमायां तु जातः शूद्राधमः स्मृतः ॥३७१॥
वेदभिन्नप्रमाणास्ते प्रत्यगुत्तरवासिनः।
तदाचार्य्यैश्च तच्छास्त्रं निर्मितं तद्धितार्थकम् ॥३७३॥
नीचोत्तमत्वं भवति श्रेष्ठत्वं क्षेत्रबीजतः।
विश्वामित्रश्च वाशिष्ठो मातङ्गो नारदादयः ॥३७५॥
स्वस्वजात्युक्तधर्मो यः पूर्वैराचरितः सदा।
तमाचरेच्च सा जातिर्दण्ड्या स्यादन्यथा नृपैः" ॥३७६॥

(शु० नी० अ० ४)

"यदा न कुर्य्यान्नृपतिः स्वयं कार्य्यविनिर्णयम्।
तदा तत्र नियुञ्जीत ब्राह्मणं वेदपारगम् ॥५३५॥

दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम् ।
यदा विप्रो न विद्वान् स्यात् क्षत्रियं तन्नियोजयेत् ॥
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्" ॥५३७॥

( शुक्रनी० अ० ४ )

"माहिष्येण करण्यां तु रथकारः प्रजायते ।
असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः ॥९५॥

( याज्ञ० स्मृति-आचार० )

तथा च दशमेऽध्याये षष्ठं श्लोकमारभ्य षट्षष्ठितमं यावत् मूर्धावसिक्तादयो नानाजातयो मनुस्मृतौवर्णितास्तथान्यैः स्मृतिकारैरपि अभ्युपगताः । जात्युत्कर्षश्च—

जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा ।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥' ९६

( याज्ञ० स्मृ० आचा० )

जातयो मूर्धावसिक्ताद्यास्तासामुत्कर्षो ब्राह्मणत्वादिजातिप्राप्तिर्जात्युत्कर्षो युगे जन्मनि सप्तमे पञ्चमे, अपिशब्दात् षष्ठे वा बोद्धव्यः । व्यवस्थितश्चायं विकल्पः । व्यवस्था च ब्राह्मणेन शूद्रायामुत्पादिता निषादी, सा ब्राह्मणेनोढा दुहितरं काञ्चिज्जनयति, सापि ब्राह्मणेनोढान्यां जनयतीत्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति । ब्राह्मणेन वैश्यायामुत्पादिता अम्बष्ठा, साप्यनेन प्रकारेण पञ्चमो षष्ठं ब्राह्मणं जनयति । मूर्धावसिक्ताप्यनेन प्रकारेण-चतुर्थी पञ्चमं ब्राह्मणं जनयति । एवमुग्रा क्षत्रियेणोढा माहिष्या च यथाक्रमं षष्ठं पञ्चमं क्षत्रियं जनयति । तथा करणी वैश्येनोढा पञ्चमं वैश्यमिति । एवमन्यत्राप्यूह्यम् ।

किञ्च वृत्त्यर्थानां कर्मणां व्यत्यये विपर्यासे ब्राह्मणादयोऽपकर्षं प्राप्नुवन्ति । यथा ब्राह्मणो मुख्यया वृत्त्या अजीवन् क्षात्रेण कर्मणा जीवेदित्यनुकल्पः । तेनाप्यजीवन् वैश्यवृत्त्यातयाप्यजीवन् शूद्रवृत्त्या । क्षत्रियोऽपि स्वकर्मणाजीवनार्थेनाजीवन् वैश्यवृत्त्या, शूद्रवृत्त्या वा । वैश्योऽपि स्ववृत्त्या अजीवन् शूद्रवृत्त्येति कर्मणां व्यत्ययः । तस्मिन् व्यत्यये सति यद्यापद्विमोक्षेऽपि तां वृत्तिं न परित्यजति तदा सप्तमे षष्ठे पञ्चमे वा जन्मनि साम्यम् । यस्य हीनवर्णस्य कर्मणा जीवति तत्समानजातित्वं भवति । तद् यथा ब्राह्मणः शूद्रवृत्त्या जीवन् तामपरित्यजन् यदि पुत्रमुत्पादयति सोऽपि

तयैव वृत्त्या जीवन् पुत्रान्तरमित्येवं पुत्रपरम्परया सप्तमे जन्मनि शूद्रमेव जनयति। वैश्यवृत्त्या जीवन् षष्ठे वैश्यम्। क्षत्रियवृत्त्या जीवन् पुत्रान्तरमित्येवं पुत्रपरम्परया सप्तमे जन्मनि शूद्रमेव जनयति। वैश्यवृत्त्या जीवन् षष्ठे वैश्यम्। क्षत्रियवृत्त्या जीवन् पञ्चमे क्षत्रियम्। क्षत्रियोऽपि शूद्रवृत्त्या जीवन् षष्ठे शूद्रम्। वैश्यवृत्त्या जीवन् पञ्चमे वैश्यम्। वैश्योऽपि शूद्रवृत्त्या जीवन् तामपरित्यजन् पुत्रपरम्परया पञ्चमे जन्मनि शूद्रं जनयतीति। पूर्ववच्चाधरोत्तरम्। अस्यार्थः-वर्णसङ्करे अनुलोमजाः प्रतिलोमजाश्च दर्शिताः वर्णसङ्करजाताश्च रथकारनिदर्शनेन दर्शिताः।

वर्णसंकरजातयः

इदानीं वर्णसङ्करजाताः प्रदर्श्यन्ते। अधरे च उत्तरे च अधरोत्तरम्। यथा मूर्धावसिक्तायां क्षत्रियवैश्यशूद्रैरुत्पादितस्तथाम्बष्ठायां वैश्यशूद्राभ्यां निषाद्यां शूद्रेणोत्पादिता अधराः प्रतिलोमजास्तथा मूर्धावसिक्ताम्बष्ठानिषादीषु ब्राह्मणेनोत्पादिताः, माहिष्योग्रयोर्ब्राह्मणेन क्षत्रियेण चोत्पादिताः, करण्यां ब्राह्मणेन क्षत्रियेण वैश्येन चोत्पादिता उत्तरे अनुलोमजाः। एवमन्यत्राप्यूहनीयम्। एतदधरोत्तरम् पूर्ववदसत्सदिति बोद्धव्यम्। वर्णसंकरसृष्ट्या राष्ट्रं विनश्यति।

"यत्र त्वेते परिध्वंसाजायन्ते वर्णदूषकाः।
राष्ट्रियैः सह तद्राष्ट्रं क्षिप्रमेव विनश्यति॥"
(म. १०। ६१)

अत एव कौटल्येनापि वर्णव्यवस्थारक्षणमुक्तम्—

'व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः।
त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति॥"

इति साङ्कर्यविस्तारेण लोकनाशश्चोक्तः।

ब्राह्मणजातेरेव राष्ट्रियत्वम्—

"ब्राह्मणो जायमानो हि पृथिव्यामधिजायते।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये॥ ९९॥
सर्वस्वं ब्राह्मणस्येदं यत्किञ्चिज्जगतीगतम्।
श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति॥१००॥

स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च।
आनृशंस्याद् ब्राह्मणस्य भुञ्जते हीतरे जनाः॥
॥१०१॥' (मनु१)

ब्राह्मणं दशवर्षं तु शतवर्षं तु भूमिपम्।
पितापुत्रौ विजानीयाद् ब्राह्मणस्तु तयोः पिता॥
(मनु २।१३५)

अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत्।
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत्॥
(मनु ९।३१७)

भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः॥
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः।
ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः॥
(मनुः १।९६।८७)

उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती॥
(मनुः १।९८)

ऊर्ध्वं नाभेर्मेध्यतरः पुरुषः परिकीर्तितः।
तस्मान्मेध्यतमन्त्वस्य मुखमुक्तं स्वम्भुवा॥
उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद् ब्राह्मणश्चैव धारणात्।
सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः॥
तं हि स्वयंभूः स्वादास्यात्तपस्तप्त्वादितोसृजत्॥
हव्यकव्याभिवाह्याय सर्वस्यैवास्य गुप्तये।
(मनुः १।९२।९४)

मुखबाहूरुपज्जानां या लोके जातयो बहिः।
म्लेच्छवाचश्चार्य्यवाचः सर्वे ते दस्यवः स्मृताः॥

निम्नोद्धतवचनेषु तत्तत्कर्मभिः जन्मान्तरेषु वर्णोत्कर्षप्राप्तिरुक्ता।

अग्निहोत्रमुपासश्च जुह्वानश्च यथाविधि।
सर्वातिथ्यमुपातिष्ठन् शेषान्नकृतभोजनः॥ ३३॥

०००स वैश्यः क्षत्रियकुले शुचौ महति जायते ।।३४।।
स वैश्यः क्षत्रियो जातः जन्मप्रभृतिसंस्कृतः ।
उपनीतो व्रतपरो द्विजो भवति सत्कृतः ।। ३५ ।।
अधीत्य स्वर्गमन्विच्छंस्त्रेताग्निशरणः सदा ।। ३६ ।।
ज्ञानविज्ञानसम्पन्नः संस्कृतो वेदपारगः ।।
विप्रो भवति धर्मात्मा (म० भा० अ० प० १४३) ।।"

कस्यचिदहिंसकस्य तपस्विनः सर्वे सत्त्वाः सिंहव्याघ्रादयः समीपस्था भवन्ति स्म । तस्यर्षेः कश्चित् ग्राम्यः श्वा परमानुरक्तः । तत्र तद्भक्षणाय कदाचिद्द्वीपी समायातः । तं क्रूरं दृष्ट्वा जीवितार्थी श्वा मुनिं शरणमागतः । मुनिस्तद्भयमपनेतुं तमपि द्वीपिनं चकार । एवं क्रमेण व्याघ्रं कुञ्जरं सिंहं शरभञ्च चक्रे । स च शरभो भूत्वा तमृषिमेव भोक्तुं प्रववृते । तदा तेनोक्तम्-

"श्वा त्वं द्वीपित्वमापन्नो द्वीपी व्याघ्रत्वमागतः ।।२०।।
व्याघ्रान्नागो मदपटुर्नागः सिंहत्वमागतः ।
सिंहस्त्वं बलमापन्नो भूयः शरभतां गतः ।। २१ ।।
मया स्नेहपरीतेन विसृष्टो न कुलान्वयः ।
यस्मादेवमपापं मां पाप हिंसितुमिच्छसि ।। २२ ।।
तस्मात्स्वयोनिमापन्नः श्वैव त्वं हि भविष्यसि ।। २३ ।।
( म० भा० शा० पर्व० ११६ अ० )

एवं 'भृत्याः ये यत्र योग्याः स्युस्तत्र स्थाप्याः सुरक्षिताः ।'
अकुलीननराकीर्णो न राजा सुखमेधते ।
अकुलीनस्तु पुरुषः प्राकृतः साधुसंश्रयात् ।
दुर्लभैश्वर्यतां प्राप्य निन्दितः शत्रुतां व्रजेत् ।
कुलीनं शिक्षितं प्राज्ञं ज्ञानविज्ञानपारगम् ।'
( म० भा० शा० प० ११८ )

सचिवं कुर्यात् ।

'शरभः शरभस्थाने सिंहः सिंह इवोर्जितः ।
व्याघ्रो व्याघ्र इव स्थाप्यो द्वीपी द्वीपी यथा तथा ।। ५ ।।
कर्मस्विहानुरूपेषु न्यस्या भृत्या यथाविधि ।। ६ ।।

'नाकुलीना नराः सर्वे स्थाप्या गुणगणैषिणा ॥ ८ ॥
साधवः कुलजाः शूरा ज्ञानवन्तोऽनसूयकाः ॥ ६ ॥
न श्वा स्वं स्थानमुत्क्रम्य प्रमाणमभिसत्कृतः ।
आरोप्यः श्वा स्वकात्स्थानादुत्क्रम्यान्यत्प्रमाद्यति ॥ २ ॥
स्वजातिगुणसम्पन्नाः स्वेषु कर्मसु संस्थिताः ।
प्रकर्तव्या ह्यमात्यास्तु नास्थाने प्रक्रिया क्षमा ॥ ३ ॥
( म० भा० शा० प० ११९ )

यदि मनुष्येषु मनुष्यत्वावान्तरजातिरेव न भवेत्तदा कः स्वजातिः, कश्च परजातिः, कश्च श्वस्थानीयः, कः सिंहस्थानीयः, कश्च शरभस्थानीयः ? सर्वमेतदपार्थकमेव वचः स्यात् ।

स्वाहाकारवषट्कारौ मन्त्रः शूद्रे न विद्यते ॥ ३७ ॥
तस्माच्छूद्रः पाकयज्ञैर्यजेताव्रतवान् स्वयम् ॥
पूर्णपात्रमयीमाहुः पाकयज्ञस्य दक्षिणाम् ॥ ३८ ॥
शूद्रः पैजवनो नाम सहस्राणां शतं ददौ ।
ऐन्द्राग्नेन विधानेन दक्षिणामिति नः श्रुतम् ॥ ३६ ॥
( मा भा. शा० ६० अध्याये )

'अष्टमुष्टिर्भवेत् किञ्चित् किञ्चिदष्टौ च पुष्कलम् ।
पुष्कलानि तु चत्वारि पूर्णपात्रं प्रचक्षते ॥'

ननु 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' ( तै० सं० ७।१।१।६ ) इति श्रुतेः कथं शूद्रस्य यज्ञ इत्याह—

यतो हि सर्ववर्णानां यज्ञस्तस्यैव भारत ।
अग्रे सर्वेषु यज्ञेषु श्रद्धायज्ञो विधीयते ॥४०॥
( म० भा० शा० प० ६० )

श्रद्धया गुर्वग्नीन् परिचरत उपकोशलस्याग्नयो ब्रह्मविद्यां दत्तवन्तः । एवं श्रद्धया ब्राह्मणादीनाराधयतः शूद्रस्यापि ब्राह्मणकृतयज्ञफलभागित्वमस्त्येव इति नीलकण्ठः ।

दैवतं हि महच्छ्रद्धा पवित्रं यजतांच यत् ।
दैवतं हि परं विप्राः स्वेन स्वेन परस्परम् ॥

अयजन्निह सत्रैस्ते तैस्तैः कामैः समाहिताः ।
संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः ॥'

( म० भा० शा० प० ६०।४१-४२ )

सृष्टयः सन्तानानि । सर्वेषां वर्णानां ब्राह्मणजत्वादस्त्येव शूद्रस्यापि यज्ञेऽधिकार इत्यर्थः इति नीलकण्ठः ।

देवानामपि ये देवा यद्ब्रूयुस्ते परं हितम् ।
तस्माद् वर्णैः सर्वे यज्ञाः संसृज्यन्ते न काम्यया ॥४३॥
ऋग्यजुः सामवित्पूज्यो नित्यं स्याद्देववद्द्विजः ।
अनृग्यजुरसामा च प्राजापत्य उपद्रवः ।
यज्ञो मनीषया तात सर्ववर्णेषु भारत ॥४४॥

वर्णैः सशूद्रैः सर्वयज्ञाः श्रौताः स्मार्त्ताश्च न काम्यया स्वभावात्संसृज्यन्ते । द्विजस्त्रैवर्णिकः पूज्यः शूद्रेण । उपद्रवन्तीति तत्समोपगामित्वादुपद्रवो दासः शूद्रः । स वेदहीनोऽपि प्राजापत्यः प्रजापतिदेवताकः । यथाग्नेयो ब्राह्मणः ऐन्द्रः क्षत्रियस्तद्वत् । मानसे ( यज्ञे ) देवतोद्देशेन द्रव्यत्यागात्मके यज्ञे सर्वे वर्णा अधिक्रियन्ते इत्यर्थः इति नीलकण्ठः ।

नास्य यज्ञकृतो देवा ईहन्ते नेतरे जनाः ।
ततः सर्वेषु वर्णेषु श्रद्धायज्ञो विधीयते ॥४५॥

( म० भा० शा० ६० )

"स्वं दैवतं ब्राह्मणः स्वेन नित्यं परान् वर्णानयजन्नेव आसीत् ।
अधरो वितानः संसृष्टो वैश्यो ब्राह्मणस्त्रिषु वर्णेषु यज्ञसृष्टः ॥४६॥
तस्माद्वर्णा ऋजवो ज्ञातिवर्णाः संसृज्यन्ते तस्य विकार एव ।
एकं सामयजुरेकमृगेका विप्रश्चैको निश्चये तेषु सृष्टः ॥४७॥

( म० भा० शा० प० ६० )

ब्राह्मणस्त्रयाणामपि वर्णानां स्वयमसाधारणं दैवतमतः कारणात्ते स्वे आत्मीया ब्राह्मणाः परान् वर्णानुद्दिश्य नायजन्निति नैवासीदपि त्वमुककामेनामुकशर्मणाहं वृतोऽमुकयज्ञेन यक्ष्य इत्युद्देशं कृत्वा अयजन्नेव यागं कृतवन्त एव । एवमासीदिति पुराकल्पदर्शनमुखेनायं विधिर्ज्ञेयः । आयजन्निति परस्मैपदप्रयोगस्तु परगामित्वात् क्रियाफलस्य युक्तः । अधरो नीचः

वैवाहिकाच्छ्रौताच्चान्यत्वात् । वितानोऽग्नीनां विस्तारः । तस्याग्नयो लौकिका एव पञ्चकुण्डी विधानादौ ज्ञेयाः । एककुण्डपक्षे त्वेक एव लौकिकः । 'स वाऽथ खलु यत्र कचन होष्यन स्यादित्युपक्रम्य गृह्यकारैर्दर्शितः । तत्रापि मन्त्रसंसर्ग उच्यते । वैश्यो वैश्यगृहादानीतः श्रौतेऽपि विट्कुला द्वित्तवतो वेति वैश्यगृहाद्दक्षिणाग्न्यर्थमग्न्यानयनं दृश्यते । यस्मादेवं तस्माद् ब्राह्मणस्त्रिषु वर्णेषु यज्ञसृष्टः । एवं साम्येऽपि ज्ञातिसाम्यं नास्तीत्याशङ्क्याह-ज्ञातिवर्णा अपि क्षत्रियवैश्यशूद्रास्तस्य ब्राह्मणस्यैव विकारो क्षत्रियादिकन्या-सूत्पन्ने मूर्धाभिषिक्तादौ संसृज्यन्त एव । तेन धर्मतो जन्मतश्च सर्वे वर्णा ब्राह्मणसंसृष्टा इति स्थितम् । तेषु तत्त्वनिश्चये क्रियमाणे एको विप्रो ब्रह्मैव प्रथमो ब्राह्मणः सृष्टो जातः ब्राह्मणसंततित्वात् । सर्वेऽप्येते ब्राह्मणा एवेत्यर्थः । तत्र दृष्टान्तः एकं साम अकारो वै सर्वा वाक् सैषास्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवतीति श्रुतेरेकमकाररूपमेवाक्षरं यथा सामादिरूपं तथा ब्रह्मैव ब्राह्मणादिरूपमपीत्यर्थ इति नीलकण्ठः ।

अत्र गाथा यज्ञगीता कीर्त्तयन्ति पुराविदः ।
वैखानसानां राजेन्द्र मुनीनां यष्टुमिच्छताम् ॥४८॥
उदितेऽनुदिते वापि श्रद्दधानो जितेन्द्रियः ।
वह्निं जुहोति धर्मेण श्रद्धा वै कारणं महत् ॥४६॥
यत्स्कन्नमस्य तत्पूर्वं यदस्कन्नं तदुत्तरम् ।
बहूनि यज्ञरूपाणि नानाकर्मफलानि च ॥५०॥
(म० भा० शा० प० ६०)

'रौद्रं गवि सद्वायव्यमुपावसृष्ट' मित्यादि ब्रह्वृचब्राह्मणे षोडशकमग्नि-होत्रमुक्तम् । तत्र मारुतं विष्यन्दमानमिति स्कन्नमपि मरुद्दैवत्यं भवतीति तत्पूर्वमाद्यम् ।

अग्निहोत्रं यदस्कन्नं यथाविधिहुतमुत्तरम् सर्वोत्कृष्टं बहूनीति रौद्रादीनि तानि षोडशाग्निहोत्ररूपाणि इति नीलकण्ठः ।

'तानि यः सं प्रजानाति ज्ञाननिश्चयनिश्चितः ।
द्विजातिःश्रद्धयोपेतः स यष्टुं पुरुषोऽर्हति ॥ ५१ ॥
स्तेनो वा यदि वा पापो यदि वा पापकृत्तमः ।
यष्टुमिच्छति यज्ञं यः साधुमेव वदन्ति तम् ॥ ५२ ॥

ऋषयस्तं प्रशंसन्ति साधुचैतदसंशयम् ।
सर्वथा सर्वदा वर्णैर्यष्टव्यमिति निर्णयः ॥
नहि यज्ञसमं किञ्चित्त्रिषु लोकेषु विद्यते ॥ ५३ ॥
तस्माद्यष्टव्यमित्याहुः पुरुषेणानसूयता ।
श्रद्धापवित्रमाश्रित्य यथाशक्ति यथेच्छया ॥ ५४ ॥

आश्रित्य शास्त्रमिति शेष इति नीलकण्ठः ।

( म० भा० शा० प० ६० )

छान्दोग्यादिश्रुतिषु तद्भाष्येषु च जन्मनैव ब्राह्मण्यादिकमुक्तम् । तथाहि— 'तद् य इह रमणीचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिंवा वैश्ययोनिं वाथय इह कपूयचरणास्ते अभ्याशोह यत्ते कपूयां योनिं मापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा । "तत्र तत्र तेष्वनुशयिनां य इहलोके रमणीयं शोभनं चरणं शीलं येषां ते रमणीयचरणा रमणीयचरणेनोपलक्षिताः शोभनोऽनुशयः पुण्यं कर्म येषां ते रमणीयचरणा उच्यन्ते । क्रौर्यानृतमायावर्जितानां हि शक्य उपलक्षयितुं शुभानुशयसद्भावः । तेनानुशयेन पुण्येन कर्मणा चन्द्रमण्डले भुक्तशेषेणाभ्याशो ह क्षिप्रमेव यदिति क्रिया विशेषणं ते रमणीयां क्रौर्यादिवर्जितां योनि मापद्येरन् प्राप्नुयुः ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा स्वस्वकर्मानुरूपेण । अथ पुनर्ये तद्विपरीताः कपूयचरणोपलक्षितकर्माणोऽशुभानुशया अभ्याशो यत्त कपूयां यथा कर्म योनिमापद्येरन् ।...... श्वयोनिं वा शूकरयोनिं वा चण्डालयोनिं वा स्वकर्मानुरूपेणैव ।" (शा० भा०) एतेन पूर्वजन्मार्जितकर्मानुशयानुरोधेनैव ब्राह्मणादियोनिजन्मप्राप्तिः । श्वसूकरयोनिभेदवद् ब्राह्मण-क्षत्रियादियोनिभेदोऽपि निगदव्याख्यातः ।

अथेत्यभ्यमन्थत् स मुखाच्च योनेर्हस्ताभ्याञ्चाग्निमसृजत । तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतः ।" ( बृ० उ० १।४।६ ) "स प्रजापतिः मुखे ...... हस्तौ प्रक्षिप्याभ्यमन्थत् आभिमुख्येन मन्थनमकरोत् । मुखाच्च योनेर्हस्ताभ्यां च योनिभ्यामग्निं ब्राह्मणजातेरनुग्रहकर्त्तारमसृजत ।...... तथा ब्राह्मणोऽपि मुखादेव जज्ञे प्रजापतेः । तस्मादेकयोनित्वाज्ज्येष्ठेनेवानुजोऽनुगृह्यतेऽग्निना ब्राह्मणः । तस्माद् ब्राह्मणोऽग्निदैवत्यो

मुखवीर्य्यश्चेति श्रुतिस्मृतिप्रसिद्धम्। तथा बलाश्रयाभ्यां बाहुभ्यां बलभिदादिकं क्षत्रियजातिनियन्तारं क्षत्रियञ्च। तस्मादैन्द्रं क्षत्रं बाहुवीर्य्यञ्चेति श्रुतौ स्मृतौ चावगतम्। तथोरुत ईहा चेष्टा तदाश्रयत्वाद्वस्वादिलक्षणं विशोनियन्तारं विशं च। तस्मात्कृष्यादिपरो पश्वादिदैवत्यश्च वैश्यः। तथा पूषणं पृथ्वीदेवतां शूद्रञ्च पद्भ्यां परिचरणक्षममसृजतेति श्रुतिस्मृतिप्रसिद्धेः। तत्र क्षत्रादिदेवतासर्गमिहानुक्तम् वक्ष्यमाणमप्युक्तवदुपसंहरति सृष्टिसाकल्यानुकीर्त्यै···। ( शा· भा· )

एतेन भगवत्पादाः ब्राह्मणादीनां प्रजापतेर्मुखादिभ्यः स्पष्टमुत्पत्तिं व्याचक्षाणा जन्मनैव वर्णव्यवस्थां ब्रह्मणादिजातिञ्चाभ्युपगच्छन्तीति स्पष्टमेव विज्ञायते। 'ब्रह्म वा इदमग्र आसीदेकमेव तदेकं सन्नव्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति। तस्मात् क्षत्रात् परं नास्ति। तस्माद् ब्राह्मणःक्षत्रिय मधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति। सैषा क्षत्रस्य योनिर्यद् ब्रह्म। तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्ततः उपनिश्रयति स्वां योनिं य उ एवं हिनस्ति स्वां स योनिमृच्छति स पापीयान् भवति। यथा श्रेयांसं हिंसित्वा' ( बृ· उ· १।४।११ )

'ब्रह्म वा इदमग्र आसीत् यदग्निं सृष्ट्वाऽग्निरूपापन्नं ब्रह्म ब्राह्मणजात्यभिमानात् ब्रह्मेत्यभिधीयते। वै इदं क्षत्रादिजातं ब्रह्मैवाभिन्नमासीदेकमेव। ······तद्ब्रह्मैकं क्षत्रादिपरिपालयित्रादिशून्यं सन्नव्यभवत् विभूतिवत् कर्मणे नालमासीदित्यर्थः। ततस्तद्ब्रह्म ब्राह्मणोऽस्मि। ममेत्थं कर्तव्यमिति ब्राह्मणजातिनिमित्तं कर्म चिकीर्ष्वात्मनः कर्मकर्तृत्वविभूत्यै श्रेयोरूपं प्रशस्तरूपमत्यसृजते अतिशयेन। सृजतसृष्टवत्। किं पुनस्तद्वत् सृष्टं क्षत्रं क्षत्रियजातिः' ( शा· भा० )

किमद्यापि ब्राह्मणक्षत्रियादिजातिसम्बन्धे शाङ्करमतानुयायिनां संदेहः संभवति। किं वा भ्रान्तिनिमित्तोऽयमाचार्य्यप्रयोगः ?··· इन्द्रो देवानां राजा वरुणो यादसाम् सोमो ब्राह्मणानाम् रुद्रः पशूनाम् पर्जन्यो विद्युदादीनाम् यमः पितृणाम् मृत्यू रोगादीनां ईशानो भासाम्। ( शा· भा० )··· तदनु ·····मनुष्यक्षत्राणि सोमसूर्यवंश्यानि सृष्टान्येव द्रष्टव्यानि। (शां· भा·)

'स नैव व्यभवत् । स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ( बृ० १।४।१२ )। 'स नैव व्यभवत् । स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयं हीदं सर्वं पुष्यति यदिदं किञ्च (बृ० १।४।१३) तदेतद् ब्रह्म क्षत्रं विट्शूद्रस्तदग्निनैव देवेषु ब्रह्माभवत् । ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते । ब्राह्मणे मनुष्येष्वेताभ्यां हि रूपाभ्यां ब्रह्माभवत् ।

( बृ० उ० १ । ४ । १ ५)

तदेतच्चातुर्वर्ण्यं सृष्टं ब्रह्मक्षत्रं विट्शूद्रः'''यत्तत्स्रष्टृब्रह्म तदग्निनैव नान्येन रूपेण देवेषु ब्रह्म ब्राह्मणजातिरभवत् ब्राह्मणस्वरूपेण मनुष्येषु ब्रह्माभवत् । इतरेषु वर्णेषु विकारान्तरं प्राप्य क्षत्रियेण क्षत्रियोऽभवत् वैश्येन वैश्यः शूद्रेण शूद्रः यस्मात् क्षत्रादिषु विकारापन्नमग्नौ ब्राह्मण एव चाविकृतं स्रष्टृब्रह्म तस्मादग्नावेव देवेषु देवानां मध्ये कर्मफलमिच्छन्त्यग्निसम्बद्धं कर्म कृत्वेत्यर्थः । तदर्थमेव हि तद्ब्रह्म कर्माधिकरणत्वेनाग्निरूपेण व्यवस्थितम् । तस्मात्तस्मिन्नग्नौ कर्म कृत्वा तत्फलं प्रार्थयन्त इत्येतदुपपन्नम् । ब्राह्मणे मनुष्येषु मनुष्याणां पुनर्मध्ये कर्मफलेच्छायां नाग्न्यादिनिमित्तक्रियापेक्षा; किं तर्हि जातिमात्रस्वरूपप्रतिलम्भेनैव पुरुषार्थसिद्धिः । यत्र तु देवाधीना पुरुषार्थसिद्धिः तत्रैवाग्न्यादिसंबद्धक्रियापेक्षा । स्मृतेश्च—

"जप्येनैव तु संसिद्धयेद् ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥"

(मनु० २।८७)

पारिव्राज्यदर्शनाच्च ( शा० भा० )

यदुक्तं दीक्षावशाद्वैश्यक्षत्रिययोरपि ब्राह्मणत्वमुपपद्यते । ततः कर्मणैव ब्राह्मणादिकमिति तन्न, भावानवबोधात् ।

तथाहि शतपथब्राह्मणे तृतीयकाण्डे द्वितीयप्रपाठके प्रथमब्राह्मणे (३९-४०) ऊनचत्वरिंशतच्चत्वारिंशत्तम कण्डिकयोर्दीक्षितस्य ब्राह्मणत्वं यज्ञरूपाद् ब्रह्मणो जन्यत्वादुक्तम् । तथाहि अथैक उद्वदति दीक्षितोऽयं ब्राह्मणो दीक्षितोऽयं ब्राह्मण इति निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदित्ययं युष्माकैकोऽभूत्तं गोपायतेत्येवैतदाह त्रिःकृत्व

आह त्रिवृद्धियज्ञः। इतः पूर्वं ज्योतिष्टोमप्रसङ्गे शालानिर्माणसमन्त्रकशाला प्रवेशमुक्त्वा दीक्षासंस्कारा उक्ताः, दीक्षाहुतयश्चोक्ताः। एवमप्सु दीक्षामुक्त्वा कृष्णाजिनदीक्षा चोक्ता। तत्रैव प्रतिप्रस्थातृकर्तृकं वा दीक्षितावेदनमुच्यते।

तदर्थस्तु एकः अध्वर्युः उद्वदति उच्चैरावेदयति। अयं ब्राह्मणः दीक्षितः दीक्षणीयेष्टिकृष्णाजिनादिदीक्षासंस्कारेण संस्कृतः। एवं निवेदितमेवैनं देवेभ्यो निवेदयति। अयं वीर्य्यः यो यज्ञं प्रापत् युष्माकं मध्ये एकः सम्पन्नः तं गोपायत एवमुच्चैस्त्रिःकृत्वा वदति यतस्त्रिवृद्यज्ञो भवति। तत्रावेदनवाक्यगतस्य ब्राह्मणशब्दस्य प्रयोजनं स्वयमेव श्रुतिराह-अथ यद्ब्राह्मण इत्याह अनद्धेव वा अस्यातः पुरा जातं भवतीदँ᳭ह्याहू रक्षांसि योषितमनुसचन्ते तदुत रक्षांस्येव रेत आदधतीत्यथात्राद्ध जायते यो ब्राह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयात्। ब्रह्मणो हि जायते यो यज्ञाज्जायते तस्मादाहुर्न सवनकृतः हन्यादेनस्वी है व सवनकृतेति।४०।

अतः अस्याः दीक्षायाः पुरा जातं जन्म अनद्धैव अनिश्चितमेव भवति अनाद्धात्वे कारणमाह—इदं वक्ष्यमाणमाहुः यतो राक्षसाः स्त्रियं अनुसचन्त अनुसंश्रयन्ति गर्भाधानसमये रेतश्चादधति। अतो योनितो जन्यते तदनद्धायो यज्ञाद् ब्रह्मणो जायते तस्य ब्राह्मणशब्दव्यवहारः। अत एव दीक्षितयोः राजन्यवैश्ययोरपि दीक्षितोऽयं ब्राह्मणः। (का० श्रौ० सू० ७।१।१०५) इत्येव ब्रूयात्। यज्ञजन्मप्रशंसार्थं कञ्चिन्नियममाह-सवनकृतं अभिषवकर्त्तारं यष्टारं त्रैवर्णिकेष्वन्यतममपि न हन्यात्। यतः सवनकृतनिमित्तेन तद्धननेन एनस्वीभवति। स्पष्टमेवात्र दीक्षायाः प्रशंसनम्। अत एवात्र केनचिद्गुणयोगेन गौणमेव ब्राह्मण्यं तादात्विकम् न जातिब्राह्मण्यम्। अत एव दीक्षितयोरपि राजन्यवैश्ययोर्नार्त्विज्यं भवति। जाति ब्राह्मणस्यैवार्त्विज्यविधानात्।

मनुनापि ब्राह्मणस्यैव—'उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः'। (म. २।१४०) इत्यादिभिराचार्योपाध्यायगुर्वर्त्विक्त्वादिकमुक्तम्।

"वैशेष्यात् प्रकृतिश्रैष्ठ्यात् नियमस्य च धारणात्।
संस्कारस्य विशेषाच्च वर्णानां ब्राह्मणः प्रभुः॥

जात्युत्कर्षात् हिरण्यगर्भोत्तमाङ्गोद्भवाच्च ब्राह्मणस्योत्कर्षः उक्त —

ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः।
चतुर्थ एकजातिस्तु शूद्रो, नास्ति तु पञ्चमः॥ ( म० १०।४)
'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः।
अनिन्द्येषु विवाहेषुपुत्राः सन्तानवर्धनाः'॥ ६॥ (या.स्मृ. आ.अ.)

सवर्णेभ्यो ब्राह्मणादिभ्यः सवर्णासु ब्राह्मण्यादिषु सजातयः मातृपितृ-समानजातीयाः पुत्राः भवन्ति. ( मिताक्षरा )। 'विन्नास्वेष विधिः स्मृतः इति' ब्रुवाणः स्वपत्न्युत्पादितस्यैव ब्राह्मण्यादि जातित्वं निश्चिकाय। उक्तेन विधिनोढायां सवर्णायां वोढुः सवर्णादुत्पन्नास्तस्मात्समानजातीया भवन्ति। अतश्च कुण्डगोलककानीनसहोढजादीनामसवर्णत्वमुक्तम्। ब्राह्मणादिजातिस्तु स्मृतिलक्षणा। यथा स्मरणं भवति। यथा समानेऽपि ब्राह्मण्ये कुण्डिनो वाशिष्ठोऽत्रिर्गौतम इति स्मरणलक्षणं गोत्रं तथा मनुष्यत्वे समानेऽपि ब्राह्मण्यादिजातिः स्मरणलक्षणा।

मन्दाग्नितायां स्वीया अपि निष्कास्यन्ते'' इति तत्तुच्छम्, यतो भक्ष्याभक्ष्यविचारहीनानामेव सर्वभक्षकत्वं संभवति। नच कोऽपि पाषाणकाष्ठविषादिकं पाचयितुं शक्नोति, उद्दीप्ताग्नेरपि योग्यभक्षण एव प्रवृत्तिर्भवति, नायोग्यभक्षणे, अभक्ष्यानिष्टकरभक्षणेनात्तुर्विनाशो ध्रुवः। योग्याः प्रायश्चित्तादिभिः सङ्ग्राह्या अवश्यं भवन्ति। उच्छृङ्खलाः स्वेच्छाचारिणः संगृहीताः समाजमेवोच्छेत्स्यन्ति। ततो यथा दुश्चिकित्स्यस्य पाकव्रणादेर्बहिष्करणमेव योग्यं तथैव तेषां बहिष्करणमपि नायोग्यम्।

तत्र कैश्चिदुच्यते-पूर्वमेकवेदः पश्चाच्छाखाभेदेन तद्बहुभवनम्। पश्चाच्च बहुशाखाविलोपश्च जातः। संभाव्यते कदाचित्सर्वथा लोपोऽपि स्यात्। ह्रासदर्शनाद्ध्रासानुमानमवशिष्टानामपि संभवत्येव। तथात्वेऽपौरुषेयनित्यत्वादिकमपि संदेहाक्रान्तं भवति वर्णाश्रमतदाचाराणमपि तथैव सन्देहास्पदत्वं जायते" इति, तन्न, नित्येश्वरस्य तत्कृपापात्रभूतानां महर्षीणाच्च हृदयेष्वनादिनिधनाया वेदलक्षणाया वाचः सर्वदैव विद्यमानत्वेन क्वचित्सम्प्रदायलोपेन तल्लोपव्यवहारेऽपि क्षत्यभावात्। तथाहि—

'ऋषीणां विषयज्ञो यः स शरीराद्विमुच्यते।
अतीत्य तमसस्पारं स्वर्गे लोके महीयते॥

सहस्रयुगपर्य्यन्तमहर्ब्राह्मं यदुच्यते ।
नाकस्य पृष्टे तं कालं दिवि सूर्य्य इव रोचते ॥
ततः कृतयुगस्यादौ ब्रह्मपूतो महायशाः ।
सर्वज्ञो धृतिमानृषिः पुनराजायते स्मरन् ॥'

इति सामवेदीयदेवताध्यायब्राह्मणे ।

एतेन तपः स्वाध्यायादिभिर्दिव्यशक्तिप्राप्तौ नित्यसिद्धानां मन्त्राणां दर्शनसामर्थ्यमुपलभ्यत इति सिद्ध्यति । ब्रह्मपुराणे च —

'प्रवृत्ते तु ततस्तस्मिन् पूते कृतयुगे तु वै ।
उत्पन्नाः कलिशिष्टाश्च प्रजाः कार्त्तयुगास्तदा ॥
तिष्ठन्ति चेह ये सिद्धा अदृष्टा विचरन्ति च ।
सह सप्तर्षिभिश्चैव तत्र ते च व्यवस्थिताः ॥
ब्रह्मक्षत्रविशः शूद्रा बीजार्थं ये स्मृता इह ।
कलिजैः सह ते सन्ति निर्विशेषास्तदाऽभवन् ॥
तेषां सप्तर्षयो धर्मं कथयन्तीतरेषु च ।
वर्णाश्रमाचारयुतः श्रौतः स्मार्त्तो द्विधा तु सः ॥
ततस्तेषु क्रियावत्सु वर्त्तन्ते वै प्रजाः कृते ।
श्रौते स्मार्त्ते कृतानाञ्च धर्मे सप्तर्षिदर्शिते ॥
केचिद्धर्मव्यवस्थार्थं तिष्ठन्तीह युगक्षयात् ।
मन्वन्तराधिकारेषु तिष्ठन्ति मुनयस्तु ते ॥
यथा दावप्रदग्धेषु तृणेष्विह तपेन तु ।
वनानां प्रथमं वृष्ट्या तेषु मूलेषु संभवः ॥
तथाकार्त्तयुगानां तु कलिजेष्विह संभवः ।
एवं युगे युगस्येह सन्तानस्तु परस्परम् ॥
वर्त्तते ह्यव्यवच्छेदाद्यावन्मन्वन्तरक्षयः ।' इति ।

याज्ञवल्क्योऽप्याह

तत्राष्टाशीतिसाहस्रा मुनयो गृहमेधिनः ।
पुनरावर्त्तिनो वीजभूता धर्मप्रवर्त्तकाः ॥

यतो वेदाः पुराणानि विद्योपनिषदस्तथा ।
श्लोकाः सूत्राणि भाष्याणि यच्च किञ्चन वाङ्मयम्॥
( प्रायश्चित्ताध्याये १८६-१८९ )

वायुपुराणेऽपि

तिष्ठन्ति चेह ये सिद्धाः सुदृष्टा विचरन्ति च ।
सदा सप्तर्षयश्चैव ये च तत्र व्यवस्थिताः ॥
ब्रह्मक्षत्रविशः शूद्रा बीजार्थे ये स्मृता इह ।
तेषां सप्तर्षयो धर्मं कथयन्तीतरेषु च ॥
वर्णाश्रमाचारयुतः श्रौतस्मार्तो द्विधा तु सः ।
तेषां धर्मव्यवस्थार्थं तिष्ठन्तीहायुगक्षयात् ॥
मन्वन्तराधिकारेषु तिष्ठन्ति मुनयस्तु वै ।
यथा दावप्रदग्धेषु तृणेष्विह तपे ऋतौ ॥
वनानां प्रथमं वृष्टाया तेषां मूले तु संभवः ।
एवं युगायुगस्येह सन्तानस्तु परस्परम् ॥
वर्तते ह्यव्यवच्छेदाद्यावन्मन्वन्तरक्षयः ।'
( ५ ।१०३।११० )

एतेन वेदादिशास्त्राणां तदुक्तधर्मस्य जन्ममूलकवर्णव्यवस्थायाश्चानादिनिधनत्वं स्पष्टं विज्ञायते ।

## विकासवादो जातिश्च

अद्यत्वे मनुष्येषु श्वेतपीतजातिव्यवहारो भवति । रङ्गरूपादिपरिवर्त्तनमपि दृश्यते । जलवायुदेशकालादिभेदेन कफवातपित्तानामपि प्राधान्याप्राधान्यभेदेन रङ्गरूपस्वभावेषु भेदो दृश्यते । यथा वातावरणैर्विचारैश्च रजस्वलायोषित्प्रभाविता भवति, देशकालवातावरणादिभिः प्रभावितस्त्रीपुरुषाणां प्रभावस्तदीयसन्ततिष्वपि जागर्ति । बृहदारण्यके चैतदुक्तम्—'य इच्छेत् पुत्रो मे शुक्लवर्णो एकवेदविच्च भवेत् संविधानोपेतं क्षीरोदनं पाचयित्वा घृतेन सपत्नीकैः प्राश्नीयात् । य इच्छेत् कपिलः पिङ्गलवर्णो मे पुत्रः द्विवेदविच्च स्यात् स घृतयुक्तं दध्योदनं सपत्नीकः प्राश्नीयात् । एवमेव श्यामो लोहिताक्षो वेदत्रयप्रवक्ता मे पुत्रः स्यादिति कामयमानस्यापि तत्र विधानं

दृश्यते। 'य इच्छेत् पुत्रो मे शुक्लो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै।'

( बृ० उ० ६।४।१४ )

तत्रैव च 'कपिलः पिङ्गलो जायेत......दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयित वै ( बृ. ६।४।१५ ) श्यामो लोहिताक्षो ...'। पुष्पेषु फलेषु रूपरङ्गास्वादाः रससेकोपचादिबाह्योपचारैः परिवर्त्तयितुं शक्यन्ते। तात्कालिकैः प्राक्तनैश्च कर्मभिरपि रूपादिपरिवर्त्तनं तु शास्त्रसम्मतमेव। देवानामृषीणां वरशापादिभिस्तीव्रैः पुण्यैः पापैश्च जातिपरिवर्त्तनमपि नहुषनन्द्यादीनां योगादिशास्त्रसम्मतमेव। सर्वज्ञः परमेश्वरस्तत्तत्प्राणिकर्मवशात् तत्तद्विलक्षणरूपरङ्गशरीराणि निर्मातुं समर्थ एव। जडप्रकृतिः परमाणवो विद्युत्कणा वा अचेतना सर्वथाऽपि तत्र नेशते।

गौरश्यामवादः

आर्य्याणां गौरत्वमनार्य्याणां श्यामलत्वमिति कल्पना तु निर्मूलैव, यतश्चक्रवर्तिदशरथात् रामभरतौ श्यामलौ, लक्ष्मणशत्रुसूदनौ गौरौ, वसुदेवाद् गौरश्यामलौ रामकृष्णौ च जाताविति प्रसिद्धमेव। व्यासशुकादयोऽपि श्यामला एवासन्।

वस्तुतस्तु भारते षण्णामृतूनां विकासाद्देशकालभेदेनात्र विविधरङ्गरूपादिसम्पन्नानां मानवानामाविर्भावो युक्त एव। अत एव मैथिल-वङ्गीय-पञ्चनदीयोत्तरप्रदेशीय - महाराष्ट्रिय-द्राविडादिष्वार्य्यत्व - ब्राह्मणत्वाविशेषेऽपि रूपरङ्गरचनादिवैशेष्यदर्शनं भवत्येव। देवेष्वपि शिवो गौरो, विष्णुस्तु श्यामलः, ब्रह्मा रक्तवर्णः। महाकालीमहालक्ष्मीमहासरस्वत्यादीनामपि तथैव रूपभेद इष्यते। सत्त्वस्य शुक्लत्वेन तत्प्रधानानां शुक्लत्वं, रजसो रक्तत्वेन तत्प्रधानानां रक्तत्वं, तमसः कृष्णत्वेन तदुपहितानां कृष्णत्वं श्लिष्यत एवं। तेनैव युगभेदेन विष्णोरपि 'शुक्लो रक्तस्तथापीत इदानीं कृष्णतां गत' (भा. १०।८। १३) इत्युक्तिरीत्या शुक्लादिवर्णभेदो जातः संगच्छते।

पृथिव्याः पीतवर्णो, जलस्य शुक्लोऽग्नेः रक्तो, वायोः कृष्णो, वियतश्च धूम्रो वर्णो योगतत्त्वोपनिषदि प्रसिद्धः। तत्तद्भूतप्राधान्येनापि रङ्गभेदो युज्यते। सूर्य्यचन्द्र-मङ्गल - बुध-गुरु-शुक्र - शनिग्रहाणां ताम्र-श्वेत-हरित-पीत-भास्वर-

शुक्ल-कृष्णवर्णाः प्रसिद्धाः। जन्मकालिकलग्ननवांशस्वामिनो बलवत्त्वेनापि स्वामिग्रहानुरोधेन पुरुषरङ्गो जायते। लग्ननवांशाधिपतेर्नैर्बल्ये लग्नस्थितस्य ग्रहस्य तद्द्रष्टुर्वा ग्रहस्यानुसारेण वर्णो जायते।

'लग्ननवांशकतुल्यतनुः स्याद् वीर्ययुतग्रहतुल्यवपुर्वा।
चन्द्रसमेतनवांशकवर्णः' (बृहज्जातके ५।२३) इति।

तत्रापि देशकुलजातिभेदेन वर्णतारतम्यं भवति। 'परं विधाय्याः कुलजातिदेशा' इत्युक्तेः। विकासवादिनां रीत्याऽपि कदाचिदाकस्मिके विप्लवे दोषयुक्ता जातयो नश्यन्ति। तदानीमेव च गुणयुक्ता जातयो जीवन्ति। मैथिला-दिरूपसंस्थानादिषु देशजलवायुप्रभावाः प्रतिफलन्ति। तत्राङ्गप्रत्यङ्गादिसौन्दर्य-माधुर्य्यादिप्रादुर्भावे प्राणिनां पुण्यमपि हेतुतां नातिवर्त्तते। पुण्यादितारतम्य-मूलकं तत्तारतम्यमपि भवत्येव। योगैस्तपोभिर्वा येषां प्रकृतिः स्वायत्ता तैस्तु संकल्पबलेन पूर्वजात्यारम्भकपरमाणुविघटनेनाभीष्टजात्यारम्भकपरमाणु-संघटनेन जातिपरिवर्त्तनं कर्त्तुं शक्यमेव।

तादृशानां वचनेनैव नहुषस्याजगरत्वं, नन्दिनश्च देवत्वं तस्मिन्नेव जन्मनि संवृत्तम्। साधारणानां वाचोऽर्थानुसारिण्यो भवन्ति। विशिष्टानां तु वाचोऽर्था अनुधावन्ति।

"लौकिकानां हि साधूनामर्थं वागनुवर्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति" ॥इति॥

यदुक्तम् "श्यामलायाः कुक्कुट्याः श्वेतकुक्कुटेन सम्बन्धेन जातेषु चतुर्षु शिशुषु श्वेतश्चैकः श्यामलश्चैको भवति द्वौ च मिश्रितौ भवतः। द्वितीये पर्याये षोडशसंख्याकेषु शिशुषु एकः श्वेतः श्यामलश्चैकः शेषाश्चतुर्दश संख्याकाः मिश्रवर्णा भवन्ति। तृतीये पर्याये चतुःषष्टिसंख्याकेषु द्वौ माता-पितृवर्णानुसारिणौ। अनया रीत्या संकरेष्वपि केचिन्मातापितृजातीयाः शुद्धा एव शिशवो भवन्ति। तथैव श्वेतानां पाश्चात्त्यानां पीतानां मङ्गोलानाञ्च मिश्रणेन केचित्पाश्चात्यरूपरङ्गवन्तो भवन्ति, केचिच्च मङ्गोलजातीया भवन्ति। आधिक्येन तु ईरानी-पारसीक-तुल्या भवन्ति। एतेन "पारसीकादयो मिश्रिता ज्ञायन्ते" इति, तन्मन्दमन्यत्र तद्व्यभिचारदर्शनात्। तथा अन्योऽन्य-साङ्कर्येणोत्पन्नेष्वाम्रेषु कस्यचिदपि मूलाम्र जातीयता न दृश्यते।

यदप्युक्तम् "व्यक्तीनां रूपरङ्गतौल्यं उत्कर्षे च तौल्यमङ्गानां स्पष्टता च शुद्धायाः जातेर्लक्षणम्" इति, तदपि न । प्रामाणिकाधाराभावेन निर्मूलत्वात् । वयं तु पश्यामः स्पष्टाङ्गवत्योऽस्पष्टाङ्गवत्यश्च जातय एव भिन्ना भवन्ति, न तत्र मिश्रणामिश्रणादिभेदकृता विशेषाः ।

यदुक्तम् "भारतीयेषु शास्त्रेष्वपि पञ्चम्यां षष्ठ्यां सप्तम्यां सन्ततौ अशुद्धं शुद्धं भवती"ति तदपि तुच्छम्, भावानवबोधात् । तत्र शूद्रजातिप्राप्तिरीतेर्भिन्नत्वात् । 'जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा ।' इत्यादिवचनव्याख्यानप्रसङ्गेन तस्य विवृतत्वात् । शूद्रकन्या ब्राह्मणेनोढा कन्यामेव यदि जनयेत् सापि ब्राह्मणेनोढा सती कन्यामेव जनयेदेवं सप्तमे पर्य्याये सा शुद्धं ब्राह्मणं जनयतीति कन्यानामेव सप्तमे पञ्चमे वा पर्याये पितृजातीयत्वस्योक्तत्वात् ।

रक्तमिश्रणेन जातिभेदस्तु संकरजातिवर्णनेन वर्णित एव । वैदेशिकवातावरणदर्शनेन यद्यपि स्त्रीशुद्धौ विश्वासो न संभवति तथापि वैदिकसंस्कारसंस्कृतेष्वार्य्येषु न तदसंभवः, पितृकुले मातापित्रोर्भ्रातॄणां, श्वसुरकुले श्वसुरपतिभर्तॄणां पुत्राणाञ्च नियन्त्रणे या तिष्ठति रजो दर्शनात्प्रागेवोद्वाहिता सती पतिकुले निगूढा तिष्ठति, ज्येष्ठश्वसुरादिभिरसंम्भाषमाणा स्वातन्त्र्येण कुटुम्बिजनमन्तरागमनागमनवर्जिता बाह्यैः संभाषणसंबन्धाद्यसंभवात् सा सर्वथैव शुद्धा संभाव्यते । पतिव्रताधर्म-वैधव्यधर्म-सतीधर्मपालनप्रसारादिभिरपि स्त्रीशुद्धिरेव संरक्ष्यते । मैथिलपञ्चनदीयवंगीयब्राह्मणादीनां रूपरङ्गभाषादिवैविध्येऽपि ब्राह्मणत्वादिकं समानमेव तिष्ठति, गोत्वमिव नीलरक्तश्वेतगवादिषु । अतएव सर्वत्र गोत्रमन्त्रशाखादिसमानता दृश्यते ।

## रुच्यनुसारेण वर्णलाभवादः

यत्तु कश्चिदाह—"वनवासकाले द्रौपद्याः स्वयंवरकाले क्षत्रियप्रवराणां सत्यवादिनां धर्मनिष्ठानां युधिष्ठिरादिपाण्डवानां च ब्राह्मणत्वकथनं भिक्षाटनादिकञ्च तेषां वर्ण्यमानं गुणकर्मादिमूलकं ब्राह्मण्यमित्येव द्योतयति । यथा हि द्रौपदी स्वयंवरस्थाने वयं ब्राह्मणाः स्मेति ब्रुवाणास्ते ब्राह्मणसमाजेऽवस्थिताः । ब्राह्मणत्वेन च व्यवह्रियमाणा आसन् ।

'वृत्तो ब्राह्मोत्तरोरङ्गः पाञ्चाली ब्राह्मणैर्वृता'
(म० भा० आदि प० १६०;३९,४०)

कर्णेन च 'तुष्यामि ते विप्रमुख्य भुजवीर्यस्य संयुगे ।' ( म० भा० आ० प० १९०।१६ ) इत्यर्जुनाय विप्रमुख्यत्वमुक्तम् । अर्जुनेनापि 'ब्राह्मणोऽस्मि युधां श्रेष्ठ' ( म०भा० आ० प० ) इत्यात्मनो ब्राह्मणत्वमुक्तम् । ब्राह्म तेजोऽसह्यं मत्वा कर्णो युद्धान्निवृत्त इत्यप्युक्तम् ।

'एवमुक्तस्तु राधेयो युद्धात्कर्णो न्यवर्त्तत ।
ब्राह्मं तेजस्तदाजय्यं मन्यमानो महारथः ॥'
( म० भा० आ० १९० )

इत्थमनेकेषु प्रसङ्गेषु पाण्डवैः स्वस्य ब्राह्मणत्वमुक्तम् । तेनेदं विज्ञायते यत्तदानीं स्वेच्छावशात् स्वस्वरुच्यनुसारेणार्य्यजनो यं यं ब्राह्मणादिवर्णं प्राप्तुं यद्यद्वर्णधर्मांश्च पालयितुमभिललाष तं तं वर्णं प्राप्तुं शशाक । तत्तद्धर्मांश्चाभ्युपगन्तुं प्रबभूव । कठिनं वर्णबन्धनं नाभूत् । तत्तद्गुणकर्मवेषादिपरिवर्त्तनतः सहजतया तद्वर्णपरिवर्त्तनं कर्तुमार्य्याः प्राभवन्" इति, तत्तुच्छम्, स्वस्वरुच्यनुसारेण वर्णतद्धर्मप्राप्तावभ्युपगम्यमानायां 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' । गी०३।३५ इत्यादि विरोधापत्तेः । रुचीनामव्यवस्थितत्वेन वर्णव्यवस्थाया अप्यनवस्थितत्वापातात् । पाण्डवास्तु गूढचर्य्यया समयमतियापयमानाः स्वब्राह्मण्यं ख्यापयामासुः । जरासन्धवधप्रसङ्गे कृष्णभीमार्जुना अपि ब्राह्मणवेषेण गत्वा स्वस्य ब्राह्मण्यं प्रख्यापितवन्तः । द्यूतप्रसङ्गानन्तरमपि विराटनगरे वेषान्तरेण स्वक्षत्रियत्वं प्रच्छाद्य तस्थिवांसः तदनुरोधेन ब्राह्मणत्वव्यवहारो न तेषां मुख्यमेव ब्राह्मणत्वं साधयति । एवं प्रयोजनानुसारेण वेषान्तरग्रहणेन तादृग्व्यवहारेण च न वस्तुभूततत्तद्वर्णतत्तद्धर्मप्राप्तिः संभवति । किञ्च यदि वेषादिग्रहणेन यथेच्छवर्णपरिवर्त्तनं शक्यं स्यात्तदा 'ब्राह्मं तेजस्तदा जय्यमिति ( म० भा० आ० १९०।२३ ) ब्राह्मतेजसः किमिवाजय्यता स्यात् ?

यदप्युच्यते 'क्षत्रियस्य सतो ब्राह्मणधर्माचरणं न संभवतीति क्षत्रियस्य कृते ब्राह्मणधर्मस्य निषिद्धत्वादिति' । तदपि न;

'वैश्यवृत्त्या तु राजन्यो जीवेन्मृगययापदि ।
चरेद्वा विप्ररूपेण न श्ववृत्त्या कथञ्चन ॥'
( श्रीभागवते ११।१७।४८ )

क्षत्रियस्य विप्ररूपेणापदि समययापनस्यानुमतत्वेन तद्दोषात् ।

## आचार्यकृतो वर्णविभागः

यदुक्तम् 'तत्तद्रोगपरीक्षणकुशलस्य राजवैद्यस्येव मनुजस्वभावाकृतिवर्णादिपरीक्षणकुशलस्याचार्य्यस्यापक्षपातितया परीक्षया बाल्येऽपि 'आकृतिर्गुणान् कथयती'ति न्यायेन विशेषतोऽनभिव्यक्तगुणकर्मादिनिर्णयसंभवेन ब्राह्मण्यादिनिर्णयसंभवः ।

'आचार्य्यस्त्वस्य यां जातिं विधिवद्वेदपारगः ।
उत्पादयति सावित्र्या सा सत्या साजरामरा ॥'

(मनुः २।१४८)

इति वचनात्, माणवकस्याकृतिवर्णोच्चारणादिपरीक्षणेन सावित्र्या गायत्रीमन्त्रप्रदानादिद्वारा यां ब्राह्मणत्वादिजातिम् उत्पादयति प्रकटयति सैव जातिरजरामरा भवति । अत्र जातिशब्देन ब्राह्मणत्वादिजातिर्ज्ञेया । सा नैव जन्मतः सिद्धा किन्त्वाचार्य्येण जन्यते ।

'स्वाध्यायेन व्रतैर्होमैः त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥'

(मनुः २।२८)

पितृभ्यां शरीरमात्रस्योत्पत्तिः, न तु ब्राह्मण्यादिजातेः, तस्यास्तत्तद्गुणकर्मभिरेवोत्पाद इति ।

कामान् माता पिता चैवं यदुत्पादयतोमिथः ।
संभूतिं तस्य तां विद्यात् यद्योनावभिजायते ॥' इति

(म० २।१४७)

तन्न, रोगादिपरीक्षणसाधनायुर्वेदादिशास्त्रस्येवेह बालस्य ब्राह्मण्यादिपरीक्षणसामग्र्यनुपलब्धेः । दशमे दिवसे नामकरणविधानं दृश्यते । ब्राह्मण्याद्यनुसारेण शर्मान्तादिकं नामकरणं भवति । नहि तदानीं कस्यापि गुणकर्मादिनिर्णयः संभवति ।

किञ्च एवमेव पञ्चाष्टादिवर्षवयस्कस्य बालस्य ब्राह्मणस्योपनयनकालस्तदानीमपि ब्राह्मण्यनिर्णायकगुणकर्मादिज्ञानमसंभवमेव । कथञ्चिज्जीविकासाधनकर्मयोग्यतानिर्णयसंभवेऽपि वेदाध्ययनज्योतिष्टोमराजसूयवैश्यस्तो-

माद्यौपयिकत्रैवर्णिकत्वब्राह्मणत्वक्षत्रियत्वादिज्ञानन्तु सर्वथा न संभवत्येव। अत एव राजसूये राजशब्दो न कर्ममूलकः किन्तु, जातिमूलक इति निर्णीतं मीमांसायाम्। 'आकृतिगुणान् कथयतीति' न्यायो दुर्जनत्वसज्जनत्वादिसामान्यस्य सत्सु सहकार्य्यन्तरेषु निर्णायको भवति न स्वातन्त्र्येण ब्राह्मण्यादिनिर्णायकः।

अत एव समवेतेषु ब्राह्मणादिषु नाकृत्या कश्चिद्वर्णेन् निर्णेतुं प्रभवति। तत एव ब्राह्मणत्वादिजातिर्नाकृतिग्रहणा जातिः, किन्तु सकृदाख्यात निग्राह्या जातिरभ्युपगम्यते। जन्मना जातित्व एव मातृदोषाद् ब्राह्मणत्वादि संदेहोऽपि 'वयं ब्राह्मणा वा अब्राह्मणा वा स्म' इति श्रुत्युक्तः संदेहोऽपि संभवति। कर्मणा तत्त्वे तु तदनवकाश एव स्यात्। 'आचार्यस्त्वस्य यां जाति'मित्यत्र जातिपदस्य जन्मैवार्थः। तथैव कुल्लूकभट्टादिभिर्व्याख्यातत्वात्। तथाहि आचार्यो वेदज्ञः माणवकस्य यां जातिं यज्जन्म विधिवत्सावित्र्या साङ्गोपनयनसावित्र्यनुवचनेनोत्पादयति सा ब्रह्मप्राप्तिफलत्वादजरामरा। उपनयनपूर्वकवेदाध्ययनतदर्थानुष्ठानैर्निष्कामस्य मोक्षलाभात्। द्विजातेर्जन्मद्वयमूलकत्वात्। तत्रैकं जन्म मातापितृजन्यं, द्वितीयं तु आचार्य्यजन्यम्। आचार्य्योऽपि ब्राह्मणत्वादिकं परीक्ष्यैवोपनयति। अत एव ब्राह्मणादीनामेवोपनयनविधानमुक्तं न शूद्राणाम्। यथेच्छसंस्कारेण द्विजत्वनिर्माणसंभवे ब्राह्मणादीनामेव कुतस्तद्विधानम्। सिद्धस्यैवोद्दिष्टता संभवति न साध्यस्य। अत एव सिद्धं ब्राह्मणत्वादिकमुद्दिश्योपनयनादिकं विधीयते सर्वाणि च कर्माणि सिद्धानेव ब्राह्मणदीनुद्दिश्य विधीयन्ते। अत एव द्वाभ्यां जन्मभ्यां द्विजत्वं जायते, तेन न यथेच्छगुणानुरोधेनापि कस्यचिद् ब्रह्मणत्वादिविधानं संभवति।

"महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः", ( म० २।२८ )

इत्यनेन ब्रह्मप्राप्तियोग्यशरीरनिर्मितिरुक्ता। अत एव ब्रह्मप्राप्तियोग्येयं तनुस्तन्ववच्छिन्न आत्मा क्रियते, कर्मसहकृतब्रह्मज्ञानेन मोक्षावाप्तेः। नात्र ब्राह्मणजातिनिर्माणमुक्तम्, तत्र प्रमाणाभावात्। 'नत्वेवं जन्ममात्रेण ब्राह्मीजातिर्भवेन्नृणां' मित्यादि वचनं तु प्रमत्तगीतमेव। स्मृतौ ब्राह्मी तनुरुक्ता न तु ब्राह्मी जातिः।

धर्मपरिवर्तनवादः

यत्तूक्तम् "गुणकर्मानुसारेणानेकधर्मपरिवर्त्तनमिष्टमेव। अत एव स्तेनो वाल्मीकिरभून् महर्षिः, विप्रोऽपि दशकन्धरोऽभद्दैत्यः" तदपि न, विषमोपन्यासात्। स्तेनस्य स्तैन्यत्यागे सत्कर्मानुष्ठानेन संभवति महर्षित्वम्। ब्राह्मणस्यापि दुराचरणादिना दुर्वृत्तत्वम्, परन्तु ब्राह्मणस्य क्षत्रियत्वं क्षत्रियस्य ब्राह्मणत्वं तु न तस्मिन्नेव जन्मनि संभवति। जन्मान्तरे तु संभवत्येव। विश्वामित्रादीनां क्षेत्रदोषापोहेन सत एव ब्राह्मण्यस्याभिव्यक्तिरित्यन्यत्रोक्तमेव। परिवर्त्तनशीलत्वे त्वव्यवस्थितत्वात् वर्णस्य न व्यवस्था।

"स्वधर्मे निधनं श्रेयः परधर्मो भयावहः" (गी० ३।३५)

इत्यादि स्वधर्म-परधर्म व्यवस्थाया अवकाशश्च न स्यात्। रुच्यनुसारेण वर्णतद्धर्मलाभसंभवे प्रतिदिनं परिवर्त्तनस्याप्यदोषत्वे व्यवस्था विधायकानि वचनानि निरालम्बनान्येव स्युः। स्तेनोऽपि साधुर्भवति, मुनिर्भवति न तावता शूद्रो ब्राह्मणो भवति। शूद्रोऽपि सदाचारः साधुर्भवति। ब्राह्मणोऽपि दुराचारोऽसाधुर्भवति, न स शूद्रो भवति।

यदुक्तम् 'यथा औष्ण्यप्रकाशविहीनेन सूर्यत्वावच्छिन्नेन तमो विहन्तुं-विश्वाह्लादकमालोकञ्च विस्तारयितुं न शक्यते चेत्तथाभूतस्य सूर्यस्यास्तित्वपरिचयोऽपि न स्यात्, तथैव तत्तद्गुणकर्मरहितब्राह्मणक्षत्रियादेः चिकित्सादिगुणकर्मरहितस्य डाक्टरस्येव (सौश्रुतिकस्येव) कानून(विधि)ज्ञानादिरहितस्य वैरिस्टरस्ये(प्राङ्विवाकस्ये)वास्तित्वपरिचयोऽपि केन कथं लभ्यः स्यात्? पृथिव्यादाविव व्यवहारविषयाया अनिर्वचनीयायास्तत्तज्जातेरपि परिचयस्तत्तदसाधारणगुणादिकमादायैव सिध्यती"ति तत्तुच्छम्, दृष्टान्तवैषम्यात्।

तथाहि नहि सूर्यस्य तमो विहन्तृत्वमिवाज्ञानाद्यपनोदकत्वमेव ब्राह्मणस्य ब्राह्मण्यम्। वेदाध्ययनाध्यापन तदर्थानुष्ठानोपयोगि ब्राह्मण्यस्यान्यादृशत्वात्। नहि ब्रह्मज्ञानमूलकस्य ब्राह्मण्यस्य कर्मोपयोगित्वम्। ब्रह्मज्ञानस्य कर्माधिकारापनोदकत्वात्। डाक्टरवैरिस्टरा(सौश्रुतिकप्राङ्विवाका)दीनां गुणकर्ममूलकत्वमपि प्रतिपन्नमेव डाक्टरत्वादेर्जातित्वानभ्युगमात्। न खलु ब्राह्मण्यमपि तथाविधम् तस्याद्यापि सिषाधयिषितत्वात्।

वज्रसूच्यां तु ब्रह्मज्ञानमूलकत्वमेव ब्राह्मण्यमुक्तम्। नात्र वर्णव्यवस्थायाः

कर्मप्रयोजकं ब्राह्मण्यस्य वा प्रतिपादनम्। अत एव ब्राह्मणस्यैव विचारस्तत्र दृश्यते न क्षत्रियादीनाम्। वर्णविचारे तु तेषामपि विचारेणावश्यं भवितव्यम्।

यदुक्तम् राजगोपालाचार्य्येण दाक्षिणात्यब्राह्मणेन स्वकन्याया वैश्यजातित्वेन व्यवहृतस्य गान्धिमहात्मनः पुत्रेण, क्षत्रियेण ययातिराजेन सह ब्राह्मणेन शुक्राचार्य्येण स्वपुत्र्या देवयान्या इव समुद्रिक्तगुणकर्मसाम्यमालोक्यैव विवाहः कृतः। वर्ण्यन्ते निरूप्यन्ते इति वर्णास्तद्गतगुणकर्मादय इति रीत्या द्वयोः समान एव वर्णः। अतएव राजगोपालाचार्येणोक्तम् "यतोऽहं यादृशदेहवर्णवान् वैरिस्टरो वैष्णवः शाकाहारी रामनामप्रियो गीतापाठकश्च तथा महात्मागान्धिरपि। अत एव मत्कन्यायास्तत्पुत्रस्य च समान एव वर्णो विद्यते" इति तदेतदज्ञानविजृम्भितम्, श्रुतिस्मृतिविरुद्धत्वात्। ब्राह्मणादिमातापितृजन्यत्वस्यैव ब्राह्मणत्वादिप्रयोजकत्वस्योक्तत्वात्। देवयान्यास्तु—महर्षिकचशापेन ब्राह्मणवरप्राप्त्यभावदशायां दैवयोगेन कूपपतितायाः समुद्धरणाय ययातिना पाणिग्रहणस्य कृतत्वेन तपः सिद्धस्य शुक्रस्यानुमत्या धर्मविदग्रगण्यस्य ययातेरन्तःकरणस्य तद्गतत्वेन च तद्वृत्तस्य धर्मत्वं ज्ञायते।

राजगोपालाचार्यादिप्रभृतीनां तु रागादिमूलकसम्बन्धस्य प्रोत्साहनायैव जुगुप्सिते कर्मणि प्रवृत्तिः। अपि च महतामपि धर्मविरुद्धानीतिवृत्तानि न धर्मे प्रमाणानि, किमुत धर्मविमुखानां शास्त्रविरुद्धानामितिवृत्तानि।

तपः श्रुतञ्च योनिश्चेत्येतद् ब्राह्मणकारकमि' ति (म० भा० २।२।६) रीत्या योनेर्ब्राह्मण्यकारकत्वेऽपि विद्यातपसोरप्यपेक्षोक्तैव। तत एव—

किं ब्राह्मणा ये सुकृतं त्यजन्ति किं क्षत्रिया लोकमपालयन्तः।
स्वधर्महीना हि तथैव वैश्याः, शूद्राः स्वमुख्यक्रियया विहीनाः॥

इत्याद्युक्तिः, भविष्यपुराणीयजातिनिषेधकानि वचनानि जातिकर्मणोः समुच्चयार्थकानीति स्पष्टमन्यत्रोक्तमेव। यथा दण्डविशेषणाभावाद्दण्डी पुरुषो नास्तीति व्यवहारो भवति पुरुषस्य सत्त्वेऽपि, तथैव योनिसत्त्वेऽपि तपआदिविशेषणाभावान्मुख्यं ब्राह्मण्यं नास्तीति व्यवहारो युक्त एव। नैतावता कर्मणा वर्णो व्यवतिष्ठते। अतएव कर्मणाऽपि वर्णो न संभवतीति भविष्ये तत्रैव

स्पष्टमुक्तम्। वज्रसूच्यामपि कर्मणाऽपि ब्राह्मण्यं न सम्भवतीत्युक्तम्। अत एव वचनान्तरानुरोधेनैव—

'शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्।' ( म० १०।६५)

इत्यादि वचनान्यपि जन्मान्तरे वर्णान्तरापत्तिरित्येवंपराण्येव ज्ञातव्यानि। क्वचित्तु देवदत्तस्य शौर्य्यादिभिर्गुणैर्गौणं सिंहत्वमिव शूद्रस्य शमदमादिभिर्गौणं ब्राह्मण्यं प्राप्यत इत्येवमर्थानि वा।

### चित्तपावनब्राह्मणोत्पत्तिः

यदुक्तम् महाराष्ट्रादौ प्रसिद्धानां चित्तपावनब्राह्मणानामुत्पत्तिरुक्ता सह्याद्रिखण्डादौ—

एवं निवासं कुर्वत्सु अकस्माद्दैवयोगतः।
नीत्वा सागरमध्यस्थैर्म्लेच्छैर्बर्बरकादिभिः॥
बहून्यब्दान्यतीतानि तेभ्यो जाता च संततिः।
चितास्थाने तु सहसा ह्यागतांश्च ददर्श सः॥

सः = परशुरामः।

का जातिः कश्च धर्मश्च क्व स्थाने चैव वासनम्।
एवं रामेण ते पृष्टा ऊचुः कैवर्त्तका इदम्॥
जातिं पृच्छसि हे राम जातिः कैवर्त्तकः स्मृतः।
सिन्धुतीरे कृतो वासः व्याधकर्मविशारदः॥
चतुर्दशगोत्रकुलं स्थापितं चतुरङ्गके।
सर्वे च गौरवर्णास्ते सुनेत्राश्च सुदर्शनाः॥
तेषां षष्टिकुलं श्रुत्वा पवित्रमकरोत्तदा।
ब्राह्मण्यञ्च ततो दत्त्वा सर्वविद्यासु लक्षकम्॥
चितास्थाने पवित्रत्वाच्चित्तपावनसंज्ञकाः॥

इत्यादि वचनैर्निषादानामेव ब्राह्मण्यं परशुरामेण दत्तं, न स्वाभाविकं ब्राह्मण्यम्, किन्तु कृत्रिममेवेति तत्तुच्छम्, सिद्धस्य भगवतः परशुरामस्य तपोबलात्तेषां ब्राह्मण्यलाभेऽपि बाधानुपपत्तेः। तपसो लोकोत्तरमाहात्म्यश्रवणात्।

यद् दुस्तरं यद्दुरापं यद् दुर्गं यच्च दुष्करम् ।
सर्वं तत्तपसा साध्यं तपो हि दुरतिक्रमम् ॥'
(मनुः ११ । २३८)

इति मनुस्मरणात् ।

'दुरन्वयं दुष्प्रधर्षं दुरापं दुरतिक्रमम् ।
सर्वं वै तपसाऽभ्येति तपो हि बलवत्तरम् ॥
(भारते अनु० १२२।८)

इत्यादिभिस्तपसो लोकोत्तरमाहात्म्यस्मरणात् ।

वस्तुतस्तु ब्राह्मणा एव संसर्गदोषेण निषादभावमापन्नाः परशुरामेण शुद्धिमापादिताः । माधवकृतशतप्रश्नलतिकाग्रन्थानुसारेण ते ब्राह्मणा एवासन् ।

सह्यस्य पश्चिमे भागे (विप्राः) सकुटुम्बाश्चतुर्दश ।
वेदवेदांगसंपन्नाः पुत्रपौत्रादिसंयुताः ॥
रक्षितेष्वग्निहोत्रेषु इष्टापूर्त्तेषु चैव हि ।
शिष्ये विद्यां प्रयच्छत्सु अन्नदानादिकं यथा ॥

दुरभिसन्धिना पूर्वपक्षिणेमम्ंशं परित्यज्यैवांशान्तरं गृहीतम् ।

एवं निवासं कुर्वत्सु अकस्माद्दैवयोगतः ।
नीत्वा सागरमध्यस्थैर्म्लेच्छैर्बर्बरकादिभिः ॥
बहून्यब्दान्यतीतानि तेभ्यो जाता च संततिः ॥
तत्संपर्काच्च सञ्जातास्तद्रूपाः पुत्रपौत्रकाः ।
उद्वाह्यन्ते न विधिना दाम्पत्यं हि परस्परम् ॥
अभवन्पतिताः सर्वे संसर्गे द्वीपवासिनः ।
कालेन कियता रामो जातः परशुपूर्वकः ॥
प्रताप इति व्याख्याता शब्दकर्त्ता नु चापरः ।
विप्रोऽसौ सर्वधर्मज्ञो ज्ञानी परमधार्मिकः ॥
सर्वशास्त्रेषु निपुणः सर्ववेदप्रपाठकः ।
प्रियकृत्सर्वलोकानां ज्ञात्वा शरणमाययुः ॥
तेन विप्रेण सर्वेषां प्रायश्चित्तं यथोदितम् ।
दत्त्वैषां चित्तशुद्धिन्तु यस्मात्परशुरामतः ॥
चित्तशुद्धिः कृता तेषां तस्मात्ते चित्तपावनाः ।'
(ब्राह्मणोत्पत्तिमार्तण्डे पृ० ३२२—३२३)

इत्यादिना मूलतस्तेषां ब्राह्मण्यं विज्ञायते। संसर्गदोषात्ते निषादप्राया जाताः। परशुरामानुग्रहेण तेषामुद्धारः। न च तावताऽपि कर्मणा वर्णव्यवस्था, नवा जन्मनस्तदहेतुता सिद्ध्यति।

## आभीरब्राह्मणोत्पत्तिः

यदपि ब्राह्मणोत्पत्तिमार्तण्डकथायां "श्रीरामचन्द्रः किरातान् शूद्रान् ब्राह्मणान् कृत्वा तेभ्यः पितुः श्राद्धकर्म समाचरत्, पश्चात्तेभ्यो रामोऽब्रवीत् यूयमद्यारभ्य ब्राह्मणा भवन्तु। ते रामाज्ञया तथैव संवृत्ताः। साम्प्रतमपि आभीरभिल्ल नामधेयेन ते व्यवह्रियन्ते। तथाहि

"वनाद्वनान्तरं गच्छन् विन्ध्याद्रिनिकटे यदा।
श्राद्धं प्राप्तं कुदेशेऽत्र कथं कर्म भविष्यति।
विप्राभावेन चिन्तायां निमग्ने सति राघवे।
तत्रैव पञ्च कैवर्त्ताः सम्प्राप्ता वनचारिणः॥
तांश्च पप्रच्छ रामो वै के यूयमिति तेऽब्रुवन्।
वय किराता राजेन्द्र किं कार्य्यं वद नः प्रभो॥
रामोऽपि चिन्तयामास करिष्यामि द्विजानिमान्।
चकार भूमौ रेखानां सप्तकं तदनन्तरम्॥
उल्लङ्घयन्त्विमा रेखा इति तानब्रवीत्प्रभुः।
प्रथमायां शुद्धाभिल्ला द्वितीयायां च शिल्पिनः।
तृतीयायाञ्च शूद्रा वै सच्छूद्राश्च ततः परम्॥
पञ्चम्यां हि वयं वैश्या षष्ठ्यां वै क्षत्रिया इति।
सप्तम्यां तु वयं विप्रा इति रामो वचोऽब्रवीत्॥
अथ रामश्च तैः सर्वैः (साकं) श्राद्धकर्म समाचरत्।
अथ तानब्रवीद्रामो पूर्वमार्गेण गच्छथ।
हे राम ते कृपालेशादीदृशीं पदवीं गताः।
न गच्छामः पुनर्योनिं कैवर्त्ताख्याधमां प्रभो॥
तदा रामोऽब्रवीत्तान्वै यूयं भूमौ द्विजातय।
भवन्तु भिल्लनामानश्चाभीरा परनामकाः॥" इति,

तदपि न कर्मणा वर्णसिद्धान्तपोषकम्। सर्वज्ञस्य सर्वशक्तिमतो रामस्य

परमेश्वरत्वेन तस्य संकल्पेन विश्वसृष्टिवद् ब्राह्मणसृष्टौ विरोधाभावात्। नात्र कथायां गुणकर्मभिस्तेषां ब्राह्मण्यं निर्णीतवान्। किन्तु स्वसंकल्पबलेन तान् द्विजान्कृतवान्। यस्य पादरजः स्पर्शेन पाषाणभूताप्यहल्या दिव्याङ्गना सञ्जाता, अयोध्यावासिनः सर्वेऽपि सरयूजलस्पर्शमात्रेण दिव्यदेहाः साकेतलोकमुपगताः; तस्य संकल्पेन किराताः षड्रेखारूपाःशुद्धभिल्लादिरूपाः जातीरतिक्रम्य ब्राह्मणजातिमवाप्ता इत्यत्र किमाश्चर्यम्। तैरपि किरातयोनिमधमयोनिं त्यक्त्वा ब्राह्मण्यमुपगता वयमित्यनुभूतमेव।

निम्बूद्रीपादब्राह्मणोत्पत्तिः।

यदुक्तमेवमेव—

'अब्राह्मण्ये तदा देशे (केरले) कैवर्त्तान्प्रेक्ष्य भार्गवः।
विशिष्टाचारमादिश्य यज्ञसूत्रमकल्पयत्॥
स्थापयित्वा स्वकीये स क्षेत्रे विप्रान्प्रकल्पितान्।
जामदग्न्यस्तदोवाच सुप्रीतेनान्तरात्मना॥
(स्कन्धपुराणे सह्याद्रिखण्डे १०३।३१)

इत्यादिवचनैः 'कैवर्त्तैर्ब्राह्मण्यं लब्धमि'ति विज्ञायते। त एव नम्बूद्रि (नम्पूतरि) नाम्ना प्रसिद्धाः परशुरामकल्पिता ब्राह्मणाः। नम्पूशब्दः केरलभाषायां कर्णधार (पतवार) बोधकः। तिरिशब्दस्य त्यागोऽर्थः। नौकादित्यागेन कैवर्त्ता ब्राह्मण्यमुपगता इति नम्पूतरि इति शब्द एव तेषामितिहासं बोधयति। सम्प्रत्यपि विवाहसमये नम्बूद्रिब्राह्मणाः मत्स्यस्पर्शं कुर्वाणाः स्वपूर्वतमपुरुषनिष्ठं मत्स्यजीवित्वं ज्ञापयन्ति।[1]

तदपि तुच्छम्। पूर्वोक्तश्रुतिस्मृत्यनुरोधेन कैवर्त्ताचारान् ब्राह्मणानेव स्वतपोबलेन शोधयित्वा तेषां ब्राह्मण्यं सम्पादितवान् परशुराम इत्येव तदर्थं इति ज्ञातुं युक्तत्वात्। चित्तपावनशोधनस्येव तच्छोधनस्यापि संभवात्। महताऽपि तपसा मतङ्गो यद्ब्राह्मण्यं प्राप्तुं नाशक्नोत् तदनासेन कथं प्राप्तुं शक्येतेति सुधियो विदाङ्कुर्वन्तु। भारत में जातिभेद इति नामकं पुस्तकं त्वप्रमाणमेव। श्रीपरशुरामस्य सिद्धत्वात्तपोबलाज्जातिपरिवर्त्तनमपि संभवत्येव। सिद्धानां वरशापादिप्रभावान्नन्दिनहुषादीनामपि जातिपरिवर्त्तनस्मरणात्। भविष्यपुराणीये—

[1](भारतवर्ष में जाति भेद) इति पुस्तके स्पष्टमिति

अथवाधीत्य वेदांस्तु क्षत्रवैश्यास्तु वानराः ।
गो अपूर्वा कृतिमोयुर्जातिं वा दाक्षिणात्यजाम् ॥
अपरिज्ञातशूद्रत्वाद्ब्राह्मण्यं याति कामतः ।
तस्मान्न जायते भेदो वेदाध्यायक्रियाकृतः ॥
( भविष्ये ४।१।४०५।६ )

इत्यादि समाधानन्तु विस्तरेणास्मिन्नेव पुस्तकेऽन्यत्र कृतमेव । तत्र च वेदाध्ययनादिक्रियाकृतोऽपि भेदो न संभवतीत्यनुपदमेवोक्तम् । तेन कर्मणा वर्णव्यवस्थावादोऽपि निन्दित एव । अज्ञानभ्रान्त्यादिमूलकः प्रमादस्तु प्रमादत्वादेव नोदाहरणमर्हति । सर्वमप्येतद् गुणकर्मजन्मादिनिन्दनं कर्मजन्मसमुच्चयबिधित्सया कृतं काल्पनिकमेव न तात्त्विकमिति तत्रैव कर्णेहत्यालोचनीयम् ।

## नागरब्राह्मणवृत्तान्तः

यदप्युक्तम् 'बहवोऽवरवर्णजाः शूद्रा अपि वलशौर्य्यादिकमवाप्य भूप्रदेशानात्मसात्कृत्य राजानो भूत्वा क्षत्रियाः संवृत्ताः । उत्तरप्रदेशस्था भटनागरसंज्ञया संप्रत्यपि प्रसिद्धाः कायस्थाः सहस्राधिकवत्सरेभ्यः पूर्वं गुर्जरदेशं गत्वा केचन नागरब्राह्मणाः, केचन नागरवैश्याश्च जाताः । एवं डा० भाण्डारकरमहोदयास्तु तद्गोत्रोपाधीनामुभयत्र समानरूपेणोपलब्धत्वात् बंगदेशीयाः कायस्थाः गुर्जरदेशीया नागराश्च मूलत एक एव सन्तीति वदन्ति । भारतवर्ष मे जातिभेदपुस्तके तदतीव स्पष्टमिति तदपि तुच्छम् । स्कन्दपुराणीयनागरखण्डादिप्रामाण्येन तदनुगुणपरम्परया च सदाचारादिभिश्च नागरब्राह्मणानां विशुद्धब्राह्मणत्वावगमात् । मिथिलादेशनिवासित्वेन ब्राह्मणक्षत्रियादीनां मैथिलत्वे समानेऽपि ब्राह्मणादिभेदस्य सत्त्ववत्प्रकृतेऽपि तत्संभवात् । दृश्यन्ते हि ब्राह्मणात्राह्मणेष्वपि गुरुशिष्यादिष्वपि समानगोत्रत्वादयः । अनेके राजान :—सन्तोऽप्यक्षत्रिया दृश्यन्ते इन्दौर-ग्वालियर-बड़ौदादयः ।

यदुक्तम्

'सर्वज्ञातिषु चाण्डालाः सर्वज्ञातिषु ब्राह्मणा' ।
ब्राह्मणेष्वपि चाण्डालाः चाण्डालेष्वपि ब्राह्मणाः ॥

इत्याश्रयेण जन्ममूलकवर्णव्यवस्थापलापायास' इति, तदपि तुच्छम्, सिंहभिन्नेष्वपि देवदत्तादिमनुष्येषु शौर्यादिगुणयोगेन गौणसिंहशब्द-प्रयोगवद्ब्राह्मणेष्वपि गौण्या वृत्त्या ब्राह्मणपदप्रयोगाविरोधात्। अत एव स्मृत्यादिषु ब्राह्मणेषु क्वचिद् ब्रह्मदेवमुन्याद्यनेके भेदा उक्ताः। वशिष्ठपराश-रव्यासादीनां महर्षीणां यथा जन्मनैव ब्राह्मण्यं यथा वा भविष्यपुराणीयवच-नानाञ्च समुच्चयविधित्वया जन्मसंस्कारनिन्दार्थवादत्वं तथात्रैव पुस्तकेऽन्यत्र स्फुटम्।

बौद्धानां ब्राह्मणत्वप्राप्तिः

यदुक्तम् 'भगवत्पादेनाद्यशङ्कराचार्य्येण तत्तद्गुणकर्मादिभिर्ब्राह्मणादिवर्ण-व्यवस्था विहिता। ततः पूर्वम् अशोकसम्राट्प्रभृतयो राजानो धनाढ्याश्च सर्वे श्रुतिस्मृतिविमुखा बौद्धमेव धर्मं प्रभूतया श्रद्धया मन्वाना अभवन्। भगव-त्पादप्रयोजितवैदिकधर्मप्रचारसमये ते सर्वे निष्कासिता विध्वंसिता वेति न वक्तुं शक्यते। किन्तु ते श्रीशङ्कराचार्य्यप्रभावेण बौद्धधर्मं परित्यज्य ब्राह्मणादिवर्गमण्डितहिन्दुरूपेण कथं संवृत्ता इति प्रश्नस्येदमेव सदुत्तरम्। यथा पूर्वजाः शौनकमन्वादयस्तत्तद्गुणकर्मानुसारेण चातुर्वर्ण्यव्यवस्था-मकुर्वत तथैव भगवत्पादोऽपि गुणकर्मानुसारेणैव तान् बौद्धान् हिन्दूरूपान-करोत्। तत एवात्रैकोऽपि बौद्धो नावशिष्यते' इति, तदपि तुच्छम्, श्रुतिस्मृति-पुराणादिविरुद्धत्वात्। जन्मनैव वर्णव्यवस्था न कर्मणेति व्युत्पादितमेव। बौद्धेषु वेदप्रामाण्यानादरादहिंसादिप्रवणत्वाच्च यद्यपि वैदिकयागादिषु विद्वेष एवासीत्तथापि पारम्पर्येण सदाचारोपासनादिस्वर्गनरकादिभक्ष्याभक्ष्यादि-विचारोऽविच्छिन्न एवासीत्। अत एव लङ्कावतारेऽभक्ष्यभक्षणादिभ्यो निकृष्ट-योनिप्राप्तिरुक्ता। तत्र हि अष्टमे परिवर्ते निम्नोद्धृतानि वचनानि समुपलभ्यन्ते-

'लशुनं गृञ्जनञ्चैव योगी नित्यं विवर्जयेत्।'
'उभौ तौ पापकर्माणौ पच्येते रौरवादिषु।
ते यान्ति परमं घोरं नरकं पापकर्मिणः॥'
'चाण्डालपुक्कसकुले डोम्बेषु च पुनः पुनः।
डीकिनीजातियोन्याश्च मांसादे जायते कुले॥'
'राक्षसी मार्जारयोनौ च जायतेऽसौ नराधमः।'

नह्येतावदेव। किन्तु मांसादिकं वर्जयतां ब्राह्मणयोनौ जन्म तत्रैवोक्तम्—

ब्राह्मणेषु च जायेत अथवा योगिनां कुले।

बुद्धिर्धनञ्चैव शुभकर्मणामेव फलं तैरङ्गीक्रियते—

'प्रज्ञावान् धनवांश्चैव मांसाद्यानां विवर्जनात्।' इति।

'कृण्वन्तो विश्वमार्यम्' इति मन्त्रस्यापि तथैवार्थो निर्णेयः।

तथा चास्य सूक्तस्य द्रष्टा निध्रुविः काश्यप ऋषिः। 'ऋषिदर्शनात्' इति निरुक्तात्। तथा 'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति' ( नि० ७।१।१ ) इति निरुक्तवचनात्। मन्त्रस्तुत्यः पवमानसोमो देवता। तथाचानुक्रान्तम्—'आपवस्व निध्रुविः काश्यपः' इति। एवञ्च—'एते असृग्रमाशवोऽतिह्वरांसि बभ्रवः। सोमा ऋतस्य धारया।'

( ऋ० सं० ९।६३।४ )

निध्रुविः काश्यपो ब्रवीति-बभ्रवः बभ्रुवर्णाः। आशवः शीघ्राः। एते इमे। सोमाः। ऋतस्य उदकस्य धारया। असृग्रम् सृज्यन्ते। ह्वरांसि रक्षांसि। अति अभिगच्छन्ति च।

'इन्द्रं वर्धन्तो अप्तुरः। कृण्वन्तो विश्वमार्यम्। अपघ्नन्तो अराव्णः।'

( ऋ० सं० ९।६३।५ )

इन्द्रं वर्धन्तः वर्धयन्तः। अप्तुरः उदकस्य प्रेरकाः। विश्वं सोममस्मदीयकर्मार्थम्। आर्यं भद्रं। कृण्वन्तः कुर्वन्तः। अराव्णः अदातॄन् अपघ्नन्तः विनाशयन्तः। अभ्यर्षन्तीत्युत्तरया सम्बन्धः।

'सुता अनुस्वमारजोऽभ्यर्षन्ति बभ्रवः। इन्द्रं गच्छन्त इन्दवः।

( ऋ० सं० ९।६३।६ )

बभ्रवः बभ्रुवर्णाः। सुताः अभिषुताः। इन्दवः सोमाः। इन्द्रम्। आ। गच्छन्तः आभिमुख्येन प्राप्नुवन्तः। स्वं स्वकीयम्। रजः स्थानं अनुप्रति। अभ्यर्षन्ति अभिगच्छन्ति।

एवं विवेचनेन ज्ञायते यत् 'कृण्वन्तो विश्वमार्यम्' इत्यत्र आर्यशब्दस्य न जातिरर्थः किन्तु अभिगम्यः श्रेष्ठ इत्येवार्थः। अनया स्तुत्या सर्वं यज्ञोपयुक्तम्।

शासनादिव्यवस्था च प्राचीनैव बौद्धैरप्यङ्गीकृता। तत एव हिन्दूकोड-

निर्मातृभिरपि हिन्दूलाभिधानेन राजकीयनियमेन ये शिष्यन्ते ते हिन्दव इति परिभाषां विधाय तत्र जैनबौद्धावप्यन्तर्भावितौ। हिन्दूलाभिधाने नियमे मिताक्षरा-दायभाग-व्यवहारमयूखादीनामेव प्राधान्यं विद्यते। तेषाञ्च मूलं नारदाङ्गिरःप्रभृतिप्रोक्ताः स्मृतय एव। तासाञ्च मूलं वेद एव। बौद्धत्वेऽपि वर्णव्यवस्थाऽपलापित्वेऽपि व्यवहारतः परम्पराप्राप्तभेदस्तत्रावशिष्ट एवासीत्। यथाऽद्यत्वे आर्य्यसामाजिका यद्यपि कर्मणैव वर्णव्यस्थामङ्गीकुर्वन्ति तथापि तेषु प्राचीनो जन्मना वर्णभेदोऽनुवर्त्तत एव, अयं शूद्रोऽयञ्च ब्राह्मण इति व्यवहारदर्शनात्। न च कर्मकृतो वर्णभेदः समाजे प्रचलितः, तथैव बौद्धेष्वपि व्यवस्थासीत्। बुद्धेनापि लङ्कावतारे कदाचित्स्वस्य ब्राह्मणकुले जन्म प्रोक्तं कदाचिच्च क्षत्रियकुले जन्म उक्तम्।

यदप्युक्तम् 'कृण्वन्तो विश्वमार्य्यमि'त्यादि श्रुत्या विश्वस्यार्य्यत्वकरण-मनुमन्यत एवे'ति, तदपि तुच्छम्, श्रुत्यर्थानवबोधात्। वेदार्थनिर्णय-पद्धत्या वक्तुः ऋषित्वस्य प्रतिपाद्यस्य देवतात्वस्य निर्णयो भवति। सोमादि-कमार्य्यं श्रेष्ठं सम्पाद्यते मन्त्रैः संस्कारैश्च। एवमेव मिश्रदेशस्थान-नार्य्यान् कण्वादय आर्य्यानकार्षुरित्यस्यापि समाधानमन्यत्र कृतमेव।

## शाकद्वीपिब्राह्मणवृत्तान्तः

यदपि च 'शाकद्वीपादितः बहवः संघशः समागत्य यथायोग्यं ब्राह्मणा क्षत्रिया वैश्याश्च सञ्जाताः। सर्वज्ञकल्पा महर्षयः शाकद्वीपादिगतानाम् तेषां जन्मादिगतं वैलक्षण्यं ज्ञात्वैव तेषु ब्राह्मण्यादिप्रभेदं कृतवन्तः। इति। यदपि च 'तेषां मध्ये काश्यपश्च सर्वज्ञानसमन्वितः।

मिश्रदेशे मुनिर्गतः ············।
सर्वान्म्लेच्छान् मोहयित्वा कृत्वाथ तान् द्विजन्मनः॥
संख्या दशसहस्रञ्च नरवृन्दं द्विजन्मनाम्।
द्विसहस्रं स्मृताः क्षत्राः वैश्याः शूद्रा इति स्मृताः॥

(भविष्य पु० प्रति अ० १३।०६)

मिश्रदेशोद्भवा म्लेच्छाः काश्यपेनैव शासिताः।
संस्कृताः शूद्रवर्णास्ते ब्रह्मवर्णमुपागताः॥

शिखा सूत्रं समाधाय पठित्वा वेदमुत्तमम् ।
यज्ञैश्च पूजयामासुः ...... शचोपतिम् ॥
( भविष्य० पु० प्र० पर्वअ० २०।७०।७६ )

सरस्वत्याज्ञया कण्वो मिश्रदेशमुपाययौ ।
म्लेछान्संस्कृतमाभाष्य तदा दशसहस्रकान् ॥
वशीकृत्य स्वयं प्राप्तो ब्रह्मावर्त्ते महोत्तमे ।
सपत्नीकांश्च तान्म्लेच्छान् द्विजवर्णान् हि प्राकरोत् ॥
( भविष्य० पु० ४ अ० २१ )

एवं रामानन्दसम्प्रदायेऽपि–

म्लेच्छास्ते वैष्णवा आसन् रामानन्दप्रभावतः ।
संयोगिनश्च ते ज्ञेया रामानन्दमते स्थिताः ।
भाले त्रिशूलचिह्नञ्च श्वेतरक्तं तदाभवत् ।
कण्ठे च तुलसीमाला जिह्वा राममयी कृता ॥'

इत्यादिभिरपि गुणकर्मादिभिरेव हिन्दुत्ववैष्णवत्वादिकं जातमिति निश्चीयते इति, तदपि तुच्छम्, भावानवबोधात्। तथाहि म्लेच्छादिप्रादुर्भावात्पूर्वं सर्वत्र ब्राह्मणादयो वर्णाश्रमिणो व्याप्ता आसन्। तेषु कण्वस्तपोबलान्म्लेच्छप्रायेष्वपि ब्राह्मण्यादिकं ज्ञात्वा प्रायश्चित्तादिना तेषां शुद्धिं कृत्वा ब्राह्मण्यादिकं पुनरपि प्रतिष्ठापितवानिति नात्र जन्मना वर्णसिद्धान्तखण्डनम्। श्रीरामानन्दादिप्रभावेण म्लेच्छा अपि वैष्णवा संवृत्ता इत्यत्र तु न मनागपि विरोधः। विष्णोरुपासनं रामनामादिमन्त्रजपस्तु न क्वचिदपि निषिद्धम्। तुलसीमालादिधारणमपि न निषिद्धम्। तेन न वैष्णवत्वेऽपि जन्मना वर्णविरोधः।

एवमेव श्रीरामानुजसम्प्रदायेऽपि शठकोपादीनां न कर्मणा ब्राह्मण्यादिकं, किन्तु तेषां सिद्धानां लोकोत्तरत्वमेव। सिद्धाः सर्वत्रैव भवन्ति न तेषामितरसाधारण्यम्।

"श्रेष्ठः श्रीवैष्णवाचार्यः शठकोपोऽन्त्यजात्मजः ।
जन्मकर्मविशुद्धानां ब्राह्मणानामभूद् गुरुः ॥
( दिव्य० चरि० सर्गः ४ )

इतिवचनमपि लोकोत्तरचरित्रत्वादेवानुदाहरणम् ।

एतेन भक्तिसारे परकालमुनिवाहनादयः श्रीवैष्णवाचार्य्याः शर्पकारभिल्ल-वेणुकाराद्यवरजातिकुलजन्मान एव श्रूयन्ते ।

'विचक्षणो विश्वविमोहहेतोः कुलोचिताचारकलानुषक्तः ।
पुण्ये महीसारपुरे विधाय विक्रीय शूर्पं विचचार योगी ॥' (२ सर्गः)

इत्यादिकमपि व्याख्यातम् , सिद्धानां लोकोत्तरत्वादेव ।

म्लेच्छानामार्यत्वप्राप्तिः

यदुक्तम्—

शङ्कराचार्य एवापि शवधर्मपरायणः ।
त्रिपुण्ड्रश्च स्थितं भाले कण्ठे रुद्राक्षमालिकाः ॥
मुखे गोविन्दमन्त्रश्च तेषां तत्र बभूव ह ॥
( भ पु० प्र० प० अ० २१।६७-६८ )

इत्यादिवचनैः "म्लेच्छाः शङ्कराचार्य्येण संस्कृता आर्य्याः संवृत्ताः" इति, तदपि तुच्छम् , यतः ते म्लेच्छा इति म्लेच्छप्राया इत्येवार्थः । यद्वा म्लेच्छा-सन्तोऽपि भस्मत्रिपुण्ड्ररुद्राक्षादिधारणेन ते शैवाः सम्पन्ना, नतु ब्राह्मणाः सम्पन्ना इति कुतो विरोधः । पूर्वोक्तश्रुतिस्मृतिपुराणादिविरोधात् न क्वापि कर्मणा वर्णव्यवस्था सिद्ध्यति ।

यदुक्तम्—

शकाश्च यवना हूणा अन्ये चाप्यन्यधर्मिणः ।
वैदेशिका विजातीयाश्चातुर्वर्ण्ये प्रवेशिताः ॥'

इति, तदपि तुच्छम् , प्रमाणाभावात् । उक्तवचनस्य चानार्षत्वेनाप्रमाण-त्वात् । तथात्वे वा भारते चातुर्वर्ण्यव्यतिरिक्तजात्यनुपलम्भप्रसङ्गात् ।

विभाजकश्रुतिः—

यदुक्तम् विभक्तारं हवामहे' ( शु० य० वे० ३०।४ ) वयं ऋषयो गुणकर्मा-नुसारेण ब्राह्मणादिवर्णानां विभक्तारं प्रजापतिं हवामहे आह्वयामः इति उव्वटाचार्य्यः । 'ब्रह्मणे ब्राह्मणं, क्षत्राय राजन्यं, मरुद्भ्यो वैश्यम् , तपसे शूद्रम्' (शु० य० ३०।५) ब्रह्मणे वेदाय तदध्ययनप्रवचनतज्ज्ञानप्रचाराय कर्मणे ब्राह्मणं नियोजयाम इति शेषः । अर्थात् तत्कर्मकर्त्तारं ब्राह्मणं वयं जानीमहे । क्षत्राय

क्षतात् शत्रुसमाक्रमणदुष्टपीडादिलक्षणात् लोकानां त्राणाय राजन्यं क्षत्रियं वयं नियोजयामः तत्कर्मकर्त्तारं क्षत्रियं वयमभ्युपगच्छामः। मरुद्भ्यः प्राणेभ्योऽन्नदानादिभिः, लोकेषु प्राणसन्तोषप्रदानाय वैश्यं नियोजयामः। कृषिगोरक्षवाणिज्यादिकर्तारं वैश्यं वयं विद्मः। तपसे लोकसेवा कर्मणे शूद्रं वयं नियोजयामः" इति, तत्तु वेदार्थाज्ञानविजृम्भितम्, वेदार्थसम्प्रदायशून्यत्वात्। शबरस्वामिप्रभृतयो वेदार्थव्याख्यातारो वेदार्थकरणे य एव लौकिकाः शब्दास्तदर्थाश्च त एव वैदिका भवितुमर्हन्तीति सिद्धान्तमाश्रित्य वेदार्थं व्याचक्षते। तथा च ये शब्दा येष्वर्थेषु प्रसिद्धाः सति सम्भवे तेषां त एवार्था ग्राह्याः। अत्र ब्रह्मक्षत्रमरुदादिशब्दाः तेषु तेषु देवेषु प्रसिद्धा अतस्त एव तेषामर्थाः। तेषां वेदादिपरत्वन्तु प्रकरणविरुद्धमेव।

यदुक्तम् 'गणकर्मानुसारेण ब्राह्मणादिवर्णानां विभक्तारमित्यर्थ उव्वटेन कृतस्तत्तु मिथ्यैव, उव्वटभाष्ये तदनुपलम्भात्। 'विभक्तारं कर्मानुरूपेण विभक्तारम् हवामहे आह्वयामः' इति तत्रत्यं भाष्यम्। अत्र कर्मानुसारेण विभक्तारमव्याकृतविश्वस्य नामरूपाभ्यां व्याकर्त्तारमित्येवार्थः। विश्वविभागस्य कर्मजन्यादृष्टफलत्वेन कर्मानुरूपता युक्तैव। ब्राह्मणादयोऽपि जन्मान्तरीयकर्मानुसारेणैव ब्राह्मणादियोनिजन्मानः। 'रमणीयचरणा.....रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वैश्ययोनिं वा' (छा० उ० ५।१०।७) इत्यादिश्रुतिभ्यः। जन्मान्तरीयैः कर्मभिस्तस्मिन्नेव जन्मनि ब्राह्मण्यादिलाभस्तु प्रमाणविरुद्ध एव।'

वस्तुतस्तु विभक्तारमिति विभजतेः कर्ममूल एवोक्तम्। नात्र ब्राह्मणादीनां विभाग उक्तः। किन्तु वसोश्चित्रस्य राधसः"(शु० य० ३०।४)दापयितुः चित्रस्य राधसो धनस्य विभक्तारमित्येव सम्बन्धो युक्तः। उव्वटमहीधरयोरुभयोरपि तत्रैकमत्यात्। अत्र प्रजापतिशब्दस्याध्याहारोऽप्ययुक्तः, सवितारमिति विशेष्यस्य निर्देशादेव। उपस्थितं परित्यज्यानुपस्थितकल्पने मानाभावात्। किञ्चात्र ब्राह्मणादयः पशुत्वेनोक्ताः। पशवश्च भिन्नजातीया भवन्ति। यथा छागादयः पशुबोधकाः शब्दा जातिविशेषविशिष्टव्यक्तिपरास्तथैव ब्राह्मणादि शब्दा अपि जातिविशेषविशिष्टव्यक्तिपरा भवितुमर्हन्ति। अत्र नियोजयामः अभ्युपगच्छामः इत्यपि नार्थः। तत्र यूपबन्धनस्यैव नियोगशब्दार्थत्वात्।

तदुक्तं महीधरभाष्ये 'अतः परं पुरुषमेधकाः पशवः आ अध्यायसमाप्तेः। ततः प्रतियूपमेकैकमेकादशिनं नियुज्य ब्राह्मणादीनष्टचत्वारिंशत् संख्यान् पुरुषान् प्रकामोद्यायसदमित्यन्तानग्निष्टे यूपे नियुनक्ति। इतरेषु यूपेष्वेकादशैकादश पुरुषान् वर्णायानुरुधमित्यादीन्नियुनक्ति। ब्रह्मणे ब्राह्मणं तत्र ब्रह्मणे जुष्टं नियुनज्मीति अग्निष्टे ब्राह्मणं प्रथमं नियुनक्ति। एवमग्रे सर्वेषां यूप एव बन्धनम्। चतुर्थ्यन्तदेवतापदं द्वितीयान्तं पुरुषपदं बोद्धव्यम्।' ब्राह्मण-पदं जातिपरमिति बृहदारण्यकोपनिषद्भाष्ये शङ्करभगवत्पादेन त्वदाचार्येण गृहीतम्। 'योगाद्रूढिर्बलीयसी' ति न्यायेन यौगिकार्थापेक्षया रूढार्थस्यैव ग्राह्यता-भ्युपगम्यते आचार्य्यैः। न च सर्वेषां शब्दानां यौगिकार्थः संभवति। अत्रैव 'मेधायै, रथकारम्' 'धैर्य्याय तक्षाणम्' इत्यत्र रथकारस्तक्षा च जातिविशेषौ गृहीतौ।

'माहिष्येण करण्यां तु रथकारः प्रजायते। इति (या० आ० ९५) स्मृतेः। तक्षशब्देनापि जातिविशेषो ग्राह्यः, छान्दोग्यभाष्ये भगवत्पादैस्तथोक्तेः। 'ब्रह्मसंस्थोऽमृतत्वमेति २।२३।१ छान्दोग्योपनिषद्वचनभाष्ये भगवत्पादैरुक्तम्।

यत्पुनरुक्तं रूढशब्द निमित्तं नोपाददत इति तन्न; गृहस्थतक्षपरिव्राजकादि-शब्ददर्शनात्। गृहस्थिति-पारिव्राज्य-तक्षणादिनिमित्तोपादाना अपि शब्दा गृहस्थपरिव्राजकाश्रमिविशेषे विशिष्टजातिमति च तक्षेति रूढा दृश्यन्ते। न यत्र यत्र तानि तानि निमित्तानि तत्र-तत्र वर्त्तन्ते प्रसिद्ध्यभावात्।[1] एवं मिथ्योल्लेखं स्वाचार्य्यं विरुद्धोल्लेखञ्च कृत्वा वचनाभासैर्युक्त्याभासैश्च कर्म-मूलकं वर्णव्यवस्थापनमुपहासास्पदमेव। किञ्च सवितारमिति षूङ् प्राणिप्रसवे इति धातोर्निष्पन्नस्य शब्दस्योत्पादयिताऽर्थस्तच्चोत्पादनं प्राक्तनकर्मानुसारे-णैव भवत्यन्यथावैषम्यनैर्घृण्यदोषप्रसङ्गः स्यात्।

यदुक्तं "रुचं नो धेहि ब्राह्मणेषु रुचꣳ राजसु नस्कृधि।
रुचं विश्येषु शूद्रेषु मयि धेहि रुचारुचम्॥' (यजु० १८।४८)

इत्यत्र स्वस्वगुणकर्मधारणजन्यां रुचं कान्तिं शोभां नः अस्माकं धेहि कृधि कुरु, विश्येषु वैश्येषु मयि एतन्मन्त्रेण प्रार्थनाकर्त्तरि मयि रुचा रुच विविधकान्तिपरम्परामित्यर्थः" इति, तदपि तुच्छम्, मन्त्रस्य तथार्थकत्वे

[1] (छा० २ अध्याये त्रयोविंशे प्रथमे शाङ्कर भाष्यम्)

मानाभावात् । स्वस्वगुणकर्मधारणजन्यामित्यस्यार्थस्य निर्मूलत्वाच्च । उव्वटादिरीत्या रुचं न इत्यग्निदेवत्यानुष्टुप् । तथा च हे अग्ने नः अस्माकं ब्राह्मणेषु अस्मत्सम्बन्धिषु विप्रेषु रुच दीप्तिं धेहि । दीप्त्यधिष्ठातृत्वादग्नेः । गुणकर्मधारणजन्यादीप्तिगुणकर्मभिरेव सम्पद्यते, तदर्थमग्निप्रार्थनाया नैरर्थक्यात् । एव नोऽस्मत् सम्बन्धिराजसु क्षत्रियेषु वैश्येषु शूद्रेषु रुचं कुरु मयि च रुचा सह रुचं अविच्छिन्नां रुच धेहि । यद्वा विप्रादिशूद्रान्तेषु या रुक् तां नो अस्माकं धेहि देहि इति उव्वटमहीधराद्यनुसारिभाष्यम् ।

एतेन "कृतयुगे सर्वे समा एक वर्णा एकभाषा एकरूपाश्चासन् । सत्ययुगापरपर्य्याये कृतयुगे सर्वेऽधर्मोत्तमवर्जिता आसन् ।

आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतः ।
कृतकृत्याः प्रजा यस्मात्तस्मात्कृतयुगं विदुः ॥ इति ।

महाभारतेऽपि --

'असृजद् ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतीन् ।'

ततस्त्रेतायां कर्मणैव पूर्वं वर्णव्यवस्था जाता, तथैवाद्यापि कर्मणा वर्णव्यवस्थापने सुखशान्तिः समृद्धिश्च भवित्री । जन्मना वर्णाभ्युपगमेनैव वृत्तिसाङ्कर्य्यं दुःखपारम्पर्य्यञ्च जायते ।

"ब्रह्मक्षत्रं हि सर्वेषां वर्णानां मूलमुच्यते ।
ब्रह्मक्षत्रप्रसूतास्तु वैश्याः शूद्राश्च मानवाः ॥"

इति कथन गुणकर्मवाद एव सगच्छते" इत्यपास्तम् । वाय्वादेः सृष्टेः प्रागाकाशस्येव सत्त्ववत् क्षत्रियादिसृष्टेः प्राग्ब्राह्मणानामेव सत्त्वसंभवेऽपि वाय्वादिभेदस्येव क्षत्रियादिभेदस्यासत्त्वासिद्धेः । वैश्यशूद्रापेक्षया ब्रह्मक्षत्रयोः प्राधान्येनैव ब्रह्मक्षत्रमूलत्वोक्तिः । 'ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत' ( ऋ० सं० १०।९०।१२ ) इति मन्त्रविरोधात् ।

अत एव 'ब्राह्मणः संभवेनैव देवानामपि दैवतम् , ( म० ११।८४ )

'जन्मनैव महाभागो ब्राह्मणो नाम जायते' ( म० भा० अनु० ३५।१ ) इत्यादिभिः स्पष्टं जन्मनैव वर्णव्यवस्थोक्ता ।

यदुक्तम्—'जातमात्रस्य तावद्बालस्य पूर्वं कर्मणा शमशौर्य्यादिना वर्णो

निश्चीयते पश्चाद् वृत्त्या अध्यापनयुद्धादिना स व्यवस्थितो भवति ।' इति, तदपि निरस्तम ।

जातमात्रस्य शमशौर्य्यादिज्ञानासभवात् । शमशौर्य्यादिका ब्राह्मणादिस्वभावास्तु यथायोग्यदेशकालादिभिरेव व्यज्यन्ते । वर्णनिर्णयस्तु मातापित्रादिवर्णज्ञानेनैव । श्वयोनिजातस्य श्वत्ववद् ब्राह्मणादियोनिजातस्य ब्राह्मणत्वादिकमपि जन्मनैव निर्णीयते । अत एव छान्दोग्ये श्वयोनिं········ ब्राह्मणयोनिं········इति कपूयाचरणफलश्वादियोनिवद् रमणीयाचरणफलब्राह्मणादियोनिरुक्ता ।

वंशानुक्रमवादः

यदुक्तम्—'वंशानुक्रमसिद्धान्तः प्रकृत्या विरुद्धः प्रत्यक्षमेव च तद् दृश्यते—जन्मवर्णाभिमानिषु वंशानुक्रमणं न भवति । वर्णोचिताः शमशौर्य्यादयो न दृश्यन्ते । केषुचित् ब्राह्मणम्मन्येषु शूद्रधर्मा दृश्यन्ते । शूद्राश्च भूयांसो ब्राह्मैः क्षात्रैः स्वभावैयुक्ता दृश्यन्ते । तस्माद्यत्र क्वापि वंशे वर्णसंपदादयो दृश्यन्ते तत्र तथैव वर्णनिश्चयो युक्त'इति तदपि कुशकाशावलम्बनमेव, विपरीतस्यैव सुवचत्वात् । प्रकृत्या हि वंशानुक्रमणं दृश्यते । मत्स्येषु जन्मनैव जलप्लवनसमर्था मत्स्या जायन्ते । नाविकेषु जन्मनैव नौचालनसंस्कारवन्तो जायन्ते । वर्धकिषु वर्धकिसंस्कारयुता वर्धकिनो जायन्ते, तथैव ब्राह्मणेषु शमादिमन्तः, क्षत्रियेषु युद्धोत्साहवन्तो जायन्ते । विपरीतसंस्कारैश्च यथा क्वचित्सिंहोऽपि मेषायते तथैव क्वचिद् ब्राह्मणोऽपि शूद्रायते, क्वचिच्छूद्रोऽपि ब्राह्मणायते ।

त्रेतायां कर्मणैव वर्णव्यवस्थासीदिति मुधैव प्रलपितम् । निष्प्रमाणत्वात् । श्रुतिस्मृतिपुराणादिषु जन्ममूलकवर्णव्यवस्थाया एव प्रतिपादितत्त्वात् । तस्या एव सर्वदैवप्रसरणमासीत्, तयैव च समृद्धिः शान्तिश्चासीत् । बौद्धादिनास्तिकाभ्यूहितकर्मवर्णवादस्यैव पतनहेतुत्वम् । तत एवारभ्याद्य यावत् नास्तिक्यमूलकमेव पतनं दृश्यते । वृत्तिसाङ्कर्य्यन्तु क्वचिदापन्मूलकं क्वचिच्चाज्ञानमूलकमेव । जन्मना वर्णव्यवस्थाया एवेदं माहात्म्यं यद्घोरेऽपि कलिकाले जन्मनैव ब्राह्मणेषु वेदरक्षाभारस्ततस्तैरेवाद्य यावत्साङ्गावेदा अनेकशाखोपबृंहिता अद्यापि सुरक्षिताः । के नाम कर्मणा ब्राह्मणाः एकमपि मन्त्रं शुद्धं सस्वरमुच्चारयितुं समर्थाः ।

युद्धेऽपि क्षत्रिया एवाद्यापि बाहुल्येन साफल्यमासादयन्ति। व्यापारेऽपि जन्मना वैश्या एव बाहुल्येन सफला भवन्ति। शिल्पादिषु शूद्रा एव संलग्नाः साफल्यमासादयन्ति।

वर्णशब्दनिर्वचनम्।

यदुक्तम् 'वृ संवरणे, वृञ् संभक्तौ, वृञ् आवरणे इत्यादिधातुभ्यो निष्पन्नस्य वर्णशब्दस्य स्तुतिविस्तारशुल्काद्युद्युक्तिदीपने इति कविकल्पद्रुमानुरोधेन च वर्णयति वर्णापयति कविः स्तौतीत्यर्थः। वर्णयति तन्तुं विस्तारयतीत्यर्थः। वर्णयति प्रतिमां शुक्लादिवर्णां करोतीत्यर्थः। वर्णयति - उद्युङ्क्ते दीप्यते वेत्यर्थः। तथा च वर्ण्यते प्रेर्य्यते स्वधर्मेण समाजस्य योगक्षेमयोः, वर्णयति प्रेरयति स्वकर्मसु परस्परम्, वर्णयति उद्युङ्क्ते स्वकर्त्तव्ये, दीप्यते वर्चःपराक्रमैश्वर्य्यप्रभृतिभिर्वर्णयति विस्तृणाति अभिवृद्धिं गमयति समाजं, आवृणोति आच्छादयति गोपायति समाजं स्वकर्त्तव्यपालनेन, व्रियतेऽनेन यथायोग्यस्वभावानुगुणावृत्तिः। व्रियतेऽसौ गुणकर्मानुसारतस्तत्तद्वर्णत्वाय महाजनैः, एवमादयोऽर्था अवगन्तव्या" इति, तदपि न जन्ममूलकवर्णव्यवस्थाविरोधकम्। यथायथं तत्रापि तत्तदर्थानां समन्वयात्।

नहि कर्मणा वर्णः शुक्लादिवर्णं करोति। अदृष्टद्वारेण तु जन्मना वर्णो जन्मान्तरे शुक्लादिवर्णं संपादयत्येव। उद्योजनमुद्दीपनञ्चापि स एव संपादयति। वर्ण्यते प्रेर्य्यते धर्मेणेति तु विरुद्धमेव, शास्त्रेणैव स्वधर्मानुष्ठानाय योगक्षेमाभ्याञ्च वर्णस्य प्रेर्य्यत्वदर्शनात्। वर्णयति प्रेरयति स्वकर्मसु परस्परमित्यप्यशुद्धम् परस्परप्रेरणस्य शास्त्रविरुद्धत्वात्। ब्राह्मणस्यैव धर्मोपदेशकत्वेन तत्प्रेरकत्वसंभवात्।

> 'विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः।
> शिष्येभ्यश्च प्रवक्तव्यं सम्यङ् नान्येन केनचित्॥' (१।१०३)

इति मनुस्मृतिविरुद्धत्वाच्च।

जन्मना वर्ण एव ब्रह्मवर्चः पराक्रमादिभिर्दीप्यते। कर्मणा वर्णपक्षे तु पराक्रमादिभिरुत्पद्यते वर्णो न दीप्यते पूर्वमविद्यमानत्वात्। स्वभावानुगुणवृत्तिवरणमपि वर्णशब्दस्य नार्थः, अव्यवस्थापातात्। 'स्वधर्मे निधनं श्रेयः' (३।३५) 'स्वकर्मणा तमभ्यर्च्येति' (१८।४६) गीतादिवचनविरुद्धत्वाच्च। कर्मणा वर्णपक्षे तु यो यत्कर्म करोति स कर्मानुसारेण तत्तद्वर्णो भवतीति सर्वमपि कर्म तस्य तस्य स्वधर्म एव भवतीति स्वधर्म स्वकर्म व्यवस्थैव लुप्येत।

वस्तुतस्तु वर्णो द्विजादौ शुक्लादौ इति प्रसिद्धामरकोषानुसारेण द्विजादि-जातिविशेषपरोऽयं वर्णशब्दो योगरूढ एव, पङ्कजादिशब्दवत् । रूढिर्योगमप-हरतीति न्यायेन तद्विरुद्धः सर्वोऽप्यर्थोऽसंगत एव ।

यदुक्तम् "ब्रह्म हि ब्राह्मणः क्षत्रं हीन्द्रः (श० ब्रा० का० ५ अ० १।७।१) 'बाहू वै मित्रावरुणौ (श० ब्रा० ५।४।३) इति तत्तद्गुणकर्म द्योतयितुं समाम्नायते, तदपि न । मनुष्येष्विव देवेष्वपि ब्राह्मणादिवर्णप्रतिपादन एव श्रुतितात्पर्य्यात्, गुणकर्मबोधकपदाभावाच्च ।

यदुक्तम् 'वर्णो वृणोतेरिति निरुक्तप्रामाण्याद् वर्णीयाः वरीतुमर्हाः स्वीकर्त्तुं योग्या गुणाः कर्माणि तान्, तानि च दृष्ट्वा व्रियन्ते ये ते वर्णाः' इति, तदपि तुच्छम् । नैरुक्तनिर्वचनस्य शुक्लादिवर्णपरत्वेन द्विजादौ तदप्रवृत्तेः । तथाहि 'द्वितीयाध्याये' तृतीये खण्डे रूपसमासोदाहरणप्रसङ्गे 'कल्याणवर्णरूपः' इत्युक्तम् । कल्याणवर्णः सुवर्णं तस्येव यस्य रूपं स कल्याणवर्णरूपः, अग्निरन्यो वा कश्चित् । तत्रैव वर्णशब्दस्य निर्वचनप्रसङ्गे वर्णो वृणोतेरित्युक्तम । तत्रैव दुर्गाचार्य्यः—'आवृणोति हि स आश्रयम्, शक्लादिवर्णो हि स्वाश्रय द्रव्यमा-वृत्त्यैव तिष्ठति' इति नैरुक्तनिर्वचनेन न द्विजादिवर्णसम्बन्धः । 'सन्तुष्यतु' न्यायेन तथाभ्युपगमेऽपि यथा—पङ्कजस्य पङ्कजनिकर्तृत्वेऽपि पद्मे पङ्कज-शब्दो रूढो न यौगिकशक्तया कुमुदादिस्तदर्थस्तथैव प्रकृतेऽपि ज्ञेयम् ।

जीविकावरणात् वर्णत्वाभ्युपगमेऽपि तद्वरणं स्वेच्छया, शास्त्रानुसारेण वा । नाद्यः अनापदि वृत्त्यन्तरग्रहणस्य निषेधात् । शास्त्रेण तु वर्णमुद्दिश्य जीविका विहिता, उद्दिष्टस्य प्राक् सिद्धतैव भवति, न तु जीविकामुद्दिश्य वर्णो विधीयते, येन जीविकावरणाद्वर्णत्वं स्यात् । किञ्च नात्र गुणा वर्णपदव्यपदेश्या येन वरीतुमर्हा गुणा वर्णा भवेयुः, किन्तु ब्राह्मणादि मनुष्या वर्णपदेन व्यप-दिश्यन्ते ।

यदुक्तम् "क्षत्रं क्षत्रियकुलम् इन्द्रः परमैश्वर्य्यवान् इदिपरमैश्वर्य्ये' इति स्मरणात् । शत्रूणां क्षयकारणात् युद्धोत्सुकत्वाच्च धर्मदेशप्रजारक्षणतत्पर इन्द्रो भवितुमर्हति । मित्रः वैश्यः सर्वेभ्यो अन्नरसादिसमर्पणेन सुखदाता । वरुणः शूद्रः सेवाकर्मधारणेन श्रेष्ठः । इमावेव मित्रावरुणौ ब्राह्मणस्य क्षत्रियस्य द्वौ बाहू बाहुवदुपकारकौ भवेतामिति, तदपि न युक्तम्, यत इन्द्र-

मित्रवरुणादिपदानि रूढ्या देवताविशेषपराणि। नहि मित्रोऽनैश्वर्य्यवान् न वा इन्द्रो न सुखदाता तथापि नेन्द्रो मित्रो न वा मित्र इन्द्र तत्कस्माद्धेतोः 'रूढिर्योगमपहरती'ति न्यायात्।

## न जातिवर्णस्वरूपभेदः

यदप्युक्तम् 'जाति वर्णस्वरूपयोरस्ति पार्थक्यम्। याज्ञवल्क्यस्मृतिः १।६० ) मिताक्षराटीकायां 'प्रत्यक्षगम्या जातिर्भवति। ब्राह्मणत्वादिवर्णस्तु स्मृति-लक्षणः' इत्यभिहितत्वात्। यथा गोत्वोष्ट्रत्वमनुष्यत्वादयो जातयो निसर्गजा इत्याकृतिग्रहणा भवन्ति, न तथा ब्राह्मणत्वादयो वर्णा निसर्गजा आकृति-ग्रहणा भवन्ति। किन्तु समाजस्यैहिकाभ्युदयकार्य्यव्यवहारसौकर्य्यात्माद्युन्नति-सिद्ध्यर्थाः पूर्वगुणकर्मानुसारतः प्राक्कालिकसामाजिकैः परिकल्पिताः। तदेतदैतरेयब्राह्मणेनापि समाम्नायते—'देवविशः कल्पयितव्या इत्याहुः, ताः कल्पमाना अनुमनुष्यविशः कल्पयन्ते, ( ऐ० ब्रा० पं०१ अ० २ ख० ३ ) अर्थात् देवेष्वपि तत्तद्गुणकर्मभिः कल्पिता ब्राह्मणादयो वर्णविशेषा अग्निर्बृहस्पतिश्च देवेषु ब्राह्मणौ 'अग्ने महां असि ब्राह्मण भारत' 'ब्रह्म वै देवानां बृहस्पतिः' इति श्रुतेः। इन्द्र-रुद्र-यम-सोम-प्रभृतयो देवक्ष-त्रियाः, वसु-मरुत्—विश्वेदेवादयो देववैश्याः। पूषप्रभृतयः शूद्राः कल्पमानास्ताः देवविशोऽनुसृत्य मनुष्यविशः ब्राह्मणादयो मनुजप्रजा अपि तत्तद्गुणकर्मभिः कल्प्यन्ते। अतः वेदस्मृतिपुराणेषु वर्णोत्कर्षा-पकर्षयोः सिद्धान्त ऐकमत्येन स्वीकृतो दृश्यते। स च कर्मणा वर्णव्य-वस्थायामेव सङ्गच्छते। वर्णत्वे जन्मना सिद्धे न स्यात्तत्परिवर्त्तनम्। विना वर्णपरिवृत्तिं तदुत्कर्षो न सिद्ध्यति। नापकर्षश्च तस्मात्सा कर्मणा, नैव जन्म-ने'ति तत्तुच्छम्। भावानवबोधात्। ब्राह्मणत्वादिजातेर्ब्राह्मणमातापित्रादि-ज्ञानसहकृतप्रत्यक्षगम्यत्वाभ्युपगमात्। स्मृतिनिर्देशानुसारेण विवाहे सत्येव ब्राह्मणमातापित्रादिजन्यस्य ब्राह्मणत्वं नान्यथेति जन्मना एव ब्राह्मणत्वादिजातेः स्मृतिलक्षणत्वमुक्तम्।

यत्तु—"ऐतरेयश्रुत्या तु देवादिषु कल्पना मया ब्राह्मणादयो भवन्तीति कल्पन्ते इति पदेन सूच्यते इति तत्सायणभाष्यविरुद्धम्। तत्र कल्पन्ते इत्यत्र सम्पद्यन्ते इत्यर्थो बोध्यते। तथाहि—

प्रायणीयेष्टौ काम्यान् प्रयाजप्रकारान् विधाय देवताश्च प्रशस्य तासां देवतानां सम्बन्धिन्यौ याज्यानुवाक्ये क्रमेण अभिसन्धातुं प्रस्तौति मन्त्रः—'देवविशः कल्पयितव्या इत्याहुस्ताः कल्पमाना अनुमनुष्यविशः कल्पन्त इति सर्वा विशः कल्पन्ते, कल्पते यज्ञोऽपि, ( ऐं. ब्रा. १।६ ) इति। अत्र भाष्यम्—"विश इत्ययं शब्दः प्रजामात्रवाची वैश्यजातिविशेषवाची वा। सन्ति हि देवेष्वपि जातिविशेषाः। अग्निर्बृहस्पतिश्च देवेषु ब्राह्मणौ अग्ने महाँ असि ब्राह्मण भारत। ब्रह्म वै देवानां बृहस्पतिः, इति श्रुतेः। क्षत्रियादिजातयस्तु सृष्टिप्रकरणे वाजसनेयिभिः स्पष्टमेवाम्नाताः।

( ऐ० ब्रा० प्रथमपञ्चि० ६ खण्डे )

'तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवता क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान' इति।

'स विशमसृजत यान्येतानि देवजातानि गणश आख्यायते ( न्ते ) वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति।

'तमथ शौद्रं वर्णमसृजत् पूषणम्' इति। एवम् 'आदित्यो वै देवं क्षत्र'मित्यादिकमुदाहार्यम्। एवं सति देवेषु विशो वैश्यजातिरूपाः प्रजामरुदादयो याः सन्ति ता अस्मिन्यागे कल्पयितव्याः सम्पादयितव्या इत्येवं ब्रह्मवादिन आहुः। कल्पमानाः—सम्पन्नास्ता देवविशोऽनुसृत्य मनुष्यविशोऽपि तदनुग्रहात् सम्पद्यन्त इत्येवं दैव्यो मानुष्यश्च सर्वा विशो यजमानस्य सम्पद्यन्ते। तासु सम्पन्नासु द्रव्यलाभात् यज्ञोऽपि कल्पते स्वप्रयोजनसमर्थो भवति।" तथा च काल्पनिकी वर्णव्यस्था इति नोक्तवचनेन सिद्ध्यति।

अत्र कल्पयितव्या इति तव्यप्रत्ययेन विधानं गम्यते। यज्ञः कल्पते इति तत्फलमप्युक्तम्। यज्ञाश्च तेषां तेषां यजमानानां प्रातिस्विका भवन्ति। नहि देवादि-प्रजानां मनुष्यादि-प्रजानां वा विशां वा विद्यमानानामेव कल्पनं संभवति। किञ्च कल्पयितव्या इति चोदनाऽपि व्यक्तिविशेषान् यजमानान् प्रत्येव संभवति। नहि व्यक्तिकल्पनयापि समाजे तत्प्रसिद्ध्यति। वैयक्तिकरूपेण शुक्तौ रूप्यकल्पनायामपि सर्वान्प्रति तदसिद्धेः। नहि यज्ञोऽपि कल्पनामात्रम्। किन्तु क्रियामयो व्यावहारिक एव। अन्यथा व्यावहारिकस्वर्गहेतुत्वमपि तस्य कथं स्यात्? तस्मादत्र प्रजा विशो वा विद्यमाना एव यजमानसम्बन्धित्वेन

कल्पन्ते सम्पद्यन्त इत्येवार्थः। यथा विद्यमाना अपि गावो यजमानसम्बन्धित्वेन सम्पद्यमाना एव पुरुषार्थाः प्रभवन्ति। उत्कर्षापकर्षौ च जातिविपरिवृत्त्यैव भवतः। जातिश्चात्र जन्मैवोच्यते, जन्मान्तरे वर्णान्तरप्राप्त्योत्कर्षापकर्षौ संगच्छेते। जातिश्च न केवलमाकृतिग्रहणैव भवति, महाभाष्यादिभिर्जातिलक्षणभेदाभ्युपगमात्।

'आकृतिग्रहणा जातिर्लिङ्गानाञ्च न सवभाक्।
सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणैः सह॥'

इति रीत्या सकृदाख्यातनिर्ग्राह्या ब्राह्मणत्वादिजातिः। जातित्वादेव 'जातेरस्त्रीविषयादयोपधात् (४।१।६३) इति पाणिनिसूत्रेण ब्राह्मणीत्यत्र ङीष् विधानम्। ब्राह्मोऽजातौ इति रीत्या च जातावेव ब्राह्मणशब्दः सिद्ध्यति, अजातौ तु ब्राह्म इत्येव सिद्ध्यति। तस्माद्वर्णस्याजातित्वसाधनं निष्प्रमाणकमेव। 'वर्णो द्विजादौ इति कोषविरोधाच्च।

एतेन "ब्राह्मण-क्षत्रिय-प्रभृतिशब्दास्तत्तद्गुणकर्मबोधकगुणशब्दाः परिवर्त्तनशीलवर्णवाचका" इत्यपास्तम्, श्रुतिस्मृतिपुराणादिभिः श्रीशङ्कराचैराचार्य्यैश्च ब्राह्मणादिशब्दानां जातिवाचकत्वाभ्युपगमात्।

यदुक्तम् 'पतञ्जलिना सर्वे एते शब्दा गुणसमुदायेषु वर्त्तन्ते, ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति' (अष्टा ५।१।११५) इत्युक्तत्वाद् गुणशब्दा एवैते, तदपि तुच्छम्, इति, महाभाष्याभिप्रायानवबोधात्। तत्र हि गुणविशिष्टजातावेव ब्राह्मणशब्दो मुख्यः। गुणहीने तु जातिमात्रमूलकोऽपि ब्राह्मणशब्दो भवतीति अभिप्रैति महाभाष्यकारः।

तपः श्रुतञ्च योनिश्च त्रयं ब्राह्मणकारकम्।
तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः॥

इति तेन तुल्यमिति (५।१।११५) सूत्रे तद्वचनस्य जागरूकत्वात्।

## गौणब्राह्मणपदप्रयोगः

यदुक्तम् 'यदि ब्राह्मणादिशब्दा जातिवाचका भवयुस्तदा जात्यन्तरे न प्रयुज्येरन्। नह्यश्वशब्दो गवि गोशब्दश्चाश्वे कदाचित्प्रयुज्यते' इति, तदप्यविचारितरमणीयम्। जातिविशेषवाचकस्यापि सिंहशब्दस्य शौर्य्यक्रौर्य्यादिगुणयोगाद्द् वदत्तादौ मनुष्येऽपि प्रयुज्यमानत्वात्। तद्वदेव गौण्या वृत्त्या गुणयोगेन शमदमादिगुणयोगिनि शूद्रेऽपि जातिविशेषवाचकस्यापि ब्राह्मणशब्दस्य गौणप्रयोगसंभवात्।

## पशुषु गौणवर्णव्यवस्था

यदुक्तम् 'ब्रह्म वा अजः (श० ब्रा० ६।४।४।१५) 'क्षत्रमश्वः' (१३।२।२।१७) 'वैश्यश्च शूद्रश्च रासभः' (६।४।४।१२) 'ब्रह्म वै पलाशः' (१।३।६।१९) 'क्षत्रं वा एतदोषधीनाम् यद्दूर्वा (ऐ० ब्रा० ८।८) इत्यादिस्थलेषु जात्यन्तरे ब्राह्मणादिप्रयोगदर्शनान्नूनमेते गुणशब्दाः नतु जातिशब्दा' इति, तदपि तुच्छम्। मनुष्येष्विव देवपश्वादिष्वपि वर्णव्यवहारार्थं तत्र ब्राह्मणादिशब्द-प्रयोगे बाधाभावात्।

यदुक्तम् "ब्राह्मणत्वादिवर्णव्यवहारेषु क्वचिज्जातिशब्दप्रयोगस्तयोर-पृथक्त्वभ्रान्त्यैव वेदितव्य" इति, तदपि निरस्तम् वेदितव्यम्। मनुव्यास-शंकराचार्य्यादिभिरपि ब्राह्मणादिषु जातिप्रयोगस्य कृतत्वात्। बृहदारण्यक-भाष्योद्धरणं कृतमिहैवान्यत्र द्रष्टव्यम्। 'जातिब्राह्मण एव सः 'ब्राह्मोऽजातौ' इत्यादिषु च जातावेव ब्राह्मणशब्दप्रयोगश्चानुपदमेव दर्शितः। सूत्रभाष्यादि-विरोधादेव गुणवाचका अप्येते शब्दा जातिविशिष्टगुणेष्वेव वर्तन्ते। अतएव तपःश्रुताभ्यां सार्द्धं योनेरपि ब्राह्मण्यकारकत्वमुक्तम्। तपः श्रुतञ्च योनिश्च एतद् ब्राह्मणकारकम्' इति योन्यभावे गुणमात्रसत्त्वे तु गौणमेव ब्राह्मण्यम् गुणाभावे तु जातिब्राह्मण्यम्, तदुभयसत्त्वे तु मुख्यं ब्राह्मण्यमित्यन्यत्रोक्त-मेव। अतएव गुणानां परिवर्त्तनसंभवेऽपि यावद्देहयोनिपरिवर्त्तनासंभवेन वर्णपरिवर्त्तनमप्यसंभवमेव।

## ज्योतिःशास्त्रानुसारिवर्णव्यवस्था

यदुक्तम्—

"एकपित्रोः प्रजातानामेकजातिमतां नृणाम्।
ज्योतिःशास्त्रानुसाराच्च श्रूयते भिन्नवर्णता ॥" इति

तदतीव मौर्ख्यम्, तत्र मूषकमार्जारादिभिन्नयोनित्वस्यापि श्रवणेन मनुष्यस्य मूषकत्वाद्यापत्तेर्दुर्निवारत्वात्। यदि तच्छ्रवणेन गौणमेव मूषक-त्वादिकं तदा भिन्नवर्णत्वेऽपि सैव नीतिः कुतो नावलम्ब्यते? किमर्धजरती-यत्वेन? एतेन पारस्करगृह्यसूत्रभाष्योदाहृतानां कारिकाणामपि भावार्थो व्याख्यातः।

अन्नप्राशनप्रसङ्गे च—

कृतप्राशनमुत्सङ्गाद्धात्री बालं समुत्सृजेत्।
कार्य्यं तस्य परिज्ञानं जीविकाया अनन्तरम्॥
देवताग्रेऽथ विन्यस्य शिल्पभाण्डानि सर्वशः।
शास्त्राणि चैव शस्त्राणि ततः पश्येत्तु लक्षणम्॥
प्रथमं यत्स्पृशेद् बालो रिङ्गमाणः स्वयं तदा।
जीविका तस्य बालस्य तेनैव तु भविष्यति॥'

(पा० गृ० का० १ कं १९)

इति कारिका उक्ताः। तादृक्परीक्षया जीविकावृत्तेरेव निर्णयो भवति। जीविकावृत्तिस्तु सम्पदापदादिभेदेन विभिद्यत एव। तत एव न जीविकानिबन्धनो वर्णव्यवहारः, किन्तु जन्मनिबन्धन एव। न वा जीविकैव वर्णफलम् किन्तु तत्तद्वर्णाधिकारिकवेदाध्ययनतदर्थानुष्ठानादिकमेव मुख्यं वर्णफलम्। योनि-ब्राह्मणादीनामेव संस्कारादिविधानात्। गुणवृत्त्यादिभेदेन तु ब्राह्मणेष्वपि ब्रह्म-देव-मुनि-ब्राह्मण-क्षत्रिय-वैश्य-शूद्र-चण्डालाद्यनेकभेदास्तत्र तत्रोक्ता इह प्रदर्शिताश्च।

यदुक्तम् धर्मचर्य्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते 'जाति परि-वृत्तौ' (प्र.२ क. ११ सू. १०–११) इत्यादिसूत्रेण वर्णान्तरप्राप्तिरुक्ते'ति तदतीव मन्दम्, तत्र जातिपरिवृत्ताविति स्पष्टं जन्मान्तरे वर्णान्तरप्राप्तेरुक्तत्वात्, जातिशब्दस्य जनिधातोर्निष्पन्नत्वेन जन्मार्थताया अनायासलभ्यत्वाच्च।

यदुक्तम् "वर्णमापद्यते इति वर्त्तमानक्रियाबोधकवाक्यविरोधाज्जीवतामेव नराणां वर्णान्तरप्राप्ति"रिति, तदपि मन्दम्, जातिपरिवृत्ताविति विरोधेन तत्र लटोऽविवक्षितार्थत्वात्। यथा 'वारिदस्तृप्तिमाप्नोति' ४।२२९ (मनुः) इत्यत्र नहि वारिदानस्य तृप्तिरूपं फलं दानकाल एव लब्धुं शक्यते, यज्ञदानादि फलस्य कालान्तरभावित्वात्, किन्तु कार्य्यकारणभावबोधन एव लटस्तात्पर्य्यं तथैवात्रापि बोध्यम्। 'शरदि पुष्पन्ति सप्तच्छदाः।

'वसन्ते सर्वसस्यानां जायते पत्र शातनम्।
मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः'॥ इति।

वर्षास्वपि वदन्त्येव जनाः। नहि तदानीं तत्क्रियाणां वर्तमानता। तथा

वर्त्तमानकालप्रयोगः क्रियते। न च तत्र वर्तमानता विवक्ष्यते, शरद्वसन्तादि-सम्बन्धबोधन एव वाक्यतात्पर्य्यात्।

एवमेव—

वर्णोत्कर्षमवाप्नोति नरः पुण्येन कर्मणा ॥१॥
उत्कर्षार्थं प्रयतेत नरः पुण्येन कर्मणा।
वर्णेभ्यो हि परिभ्रष्टो न वै सम्मानमर्हति ॥३॥

(म० शा० प० २९१)

इत्यादि महाभारतवचनैरपि जन्मान्तर एव वर्णोत्कर्ष प्राप्तिरुक्ता। तेनैव मतङ्गो महताऽपि तपसा ब्राह्मण्यं नाप्तवान्। निषादेषु वसन् निषादाचारो निषाद्यासक्तोऽपि ब्राह्मणो निषादत्वं नाप्तवान् इति भारतीया कथापीहैवोद्धृता द्रष्टव्या।

पुराणेतिहासवचसां जन्ममूलकवर्णव्यवस्थायामेव तात्पर्य्यम्। तद्विरुद्धानां कर्मणा वर्णबोधकवचनाभासानाञ्च समन्वयोऽन्यत्रैहैवोक्तः।

यदुक्तम् 'भगवता पतञ्जलिना तपसा विश्वामित्रेण न केवलं स्वनिष्ठं ब्राह्मण्यं संपादितमपि तु स्वपितुः गाधेः स्वपितामहस्य कुशिकस्य च ब्राह्मण्यं सम्पादितम्। तद्यथा 'विश्वामित्रस्तपस्तेपे नानृषिः स्यामिति तत्र भवानृषिः सम्पन्नः, स पुनस्तपस्तेपे नानृषेः पुत्रः स्यामिति तत्र भगवान्गाधिरप्यृषिः सम्पन्नः, स पुनस्तपस्तेपे नानृषेः पौत्रः स्यामिति तत्र भवान् कुशिकोऽपि ऋषिः सम्पन्नः' (पा० सू० ४।१।१०४) इति तदपि न गुणकर्मादिमूलकवर्णव्यवस्थापोषकम्। तथात्वे तपोविशेषस्यानावश्यकत्वापत्तेः। येन महता तपसा नव्यसृष्टिनिर्माण-सामर्थ्यं लभ्यते। तेन स्वस्य स्वपित्रादेश्च ब्राह्मण्यसम्पादने सामर्थ्यमभ्युप-गम्यत एव। न च तावता यो मूषकस्यापि शरीरपरिवर्त्तनं कर्त्तुं न पारयति तस्यापि ब्राह्मण्यप्राप्तिसामर्थ्यं परिकल्पितुं शक्यम्।

किञ्च यद्यब्राह्मणपुत्रस्यापि ब्राह्मण्यं संभवत्येव तदा किमर्थमतीतानां पित्रादीनां ब्राह्मण्यसंपादने प्रयासः? तत्प्रयत्नेन तु स्पष्टं विज्ञायते यदब्राह्मणस्य कुशिकादेः पौत्रपुत्रादेः ब्राह्मण्यं निन्दितमेवासीत्। तत एव तदपनोदनार्थं तपोविशेषबलेन तेषामपि ब्राह्मण्यादिकं संपादितम्।

शूद्रस्य ब्राह्मण्यलाभवृत्तान्तः।

यदप्युक्तम् भविष्यपुराणे प्रतिसर्गपर्वणि द्वितीयखण्डे-विक्रमादित्यराज्ये कस्यचिद् द्विजस्य मदाघूर्णितलोचना कामपीडिता पत्नी व्याधवीर्य्येण पुत्रमुत्पादितवती। स च द्वादशवर्षीयो धूर्त्तो व्याधकर्मकरो जातः। स च शुभेन कर्मणा विप्रो जातो विक्रमादित्यस्य यज्ञाचार्य्यश्च सम्पन्नः। तेन धर्मचर्य्यया आपस्तम्बोक्तरीत्या स ब्राह्मणो जात' इति, तदपि तुच्छम्, व्यभिचारजातस्य निन्द्यत्ववर्णनेन वैधविवाहजातस्यैव प्रशस्तत्वावगतेः। अज्ञानेनैव तस्य प्रतिलोमसंकरस्य यद्यपि ब्राह्मणेन पित्रा संस्कारः कृतस्तथापि स निरर्थको जात इत्यपि तत्रैवोक्तम्—

'द्वादशाब्दे गते काले स धूर्त्तो वेदवर्जितः।
व्याधकर्मकरो नित्यं व्याधकर्मा ह्यतोऽभवत्॥'

तथापि तस्य जन्मान्तरीयकर्मयोगेन शिवामन्दिरे देव्याश्चरित्रश्रवणप्रभावेण धर्मबुद्धिर्जाता। ततस्तेन सर्वस्वं ब्राह्मणायार्पितम्। ब्राह्मणाच्च भगवत्या बीजमन्त्रः प्राप्तः। बीजमन्त्रप्रभावेण तदङ्गादुल्वणं पापं कृमिरूपेण निःसृतम्। ततः स निष्पापो जातः। ततोऽक्षरमालां पठित्वा प्रथमचरित्रं जजाप। द्वादशाब्दमिते काले काश्यां गत्वान्नपूर्णां तुष्टाव। भगवती च समागत्य तस्मै ऋग्विद्यां ददौ। ततः स यज्ञाचार्य्यो जातः। एतत्कथयाऽपि ब्राह्मण्यप्राप्तौ महती तपस्या देवानुग्रहश्चापेक्षित इति ज्ञायते। दैवप्रभावेण सत्समागमस्ततो बुद्धिशुद्धिस्ततः सर्वस्वदानं ततो बीजमन्त्रलाभस्तज्जपेन च कृमिरूपेण पापनिर्गमनं, ततो निष्पापता, ततः प्रथमचरित्रपठनपूर्वकजपस्ततो भगवत्या दर्शनम्, ततः ऋग्वेदादिलाभः। अद्यापि यद्येवं देवानुग्रहेण कस्यचिद्वेदलाभः स्यात्तदा तस्य ब्राह्मण्यादिकं श्रद्धातुं तु शक्यमेव। परमद्य सामाजिकाः बौद्धाः भवादृशाः सुधारकास्तु एतादृशं महान्तमायासमन्तरैव गैरिकवस्त्रादिप्रदानमात्रेणैव ब्राह्मणं ब्रह्मविदामाचार्यञ्च सम्पादयितुं प्रवर्त्तन्ते किमेतया कथया तत्समर्थयितुं शक्यते? तत्रत्यानि वचनानि तु—

एकदा दैवयोगेन शिवामन्दिरमाययौ।
चौरवृत्तिपरो धूर्त्तः स्त्रिया भूषणमाहरत्॥
कदाचित्प्राप्तवांस्तत्र द्विजं देवीपरायणम्।

श्रुतं तत्रादिचरितं तेन शब्दप्रियेण वै ॥
पाठपुण्यप्रभावेण धर्मबुद्धिस्ततोऽभवत् ।
दत्त्वा चौर्य्यधनं सर्वं तस्मै विप्राय पाठिने ॥
शिष्यत्वमगमत्तस्याक्षरमैशं जजाप ह ।
बीजमन्त्रप्रभावेण तदङ्गात्पापमुल्वणम् ॥
निःसृतं कृमिरूपेण पश्चात्तापेन तापितम् ।
त्रिवर्षान्ते च निष्पापो बभूव द्विजसत्तम ॥
पठित्वाक्षरमालाञ्च जजापादिचरित्रकम् ।
द्वादशाब्दमिते काले काश्यां गत्वा तु सद्विजः ॥
अन्नपूर्णां महादेवीं तुष्टाव परया मुदा ।
सुष्वाप तत्र मुदितः स्वप्ने प्रादुरभूच्छिवा ॥
दत्त्वा तस्मै हि ऋग्विद्यां पुनरन्तरधीयत ।
उत्थाय स द्विजः श्रीमान् लब्ध्वा विद्यामनुत्तमाम् ॥
विक्रमादित्यभूपस्य यज्ञाचार्य्यो बभूव ह ।

( भ० पु० प्रतिसर्गे २खं० )

दैवानुकूल्येन समुचितसङ्गे सन्मन्त्रप्राप्तौ भगवत्याः प्रसादविशेषेण ऋग्वेदलाभे को हि तस्य महाभाग्यतायां सन्दिह्येत ? देवानुग्रहादेव शुनी सरमापि मन्त्रद्रष्ट्री सम्पन्ना । वेदानधिकारिण्यो घोषाऽपालादयो योषितोऽपि मन्त्रद्रष्ट्र्यो जाता एव । तथैवास्याधमस्य चण्डालस्यापि देवानुग्रहादृग्वेदप्राप्तिः स्याच्चेत् भवतु वैशिष्ट्यम् ।

वस्तुतस्तु मतङ्गोपाख्यानविरोधादतत्परस्याख्यानस्यार्थवादभूतस्य सप्तशती माहात्म्यवर्णन एव तात्पर्य्यं, न तु स्वार्थप्रतिपादने, तस्य प्रमाणविरुद्धत्वात् । अर्थवादवचनस्य सप्तशती स्तुतिपरस्यापि स्वार्थेऽवान्तरं तात्पर्य्यं स्याद्यदि मतङ्गाख्यानविरोधो न स्यात् । तत्र तु मतङ्गेन बहुकालं तपस्तप्तमनेकधा इन्द्रः स्वयं प्रादुर्भूय वरं वरीतुं तं छन्दयामास । तेन तु ब्राह्मण्यं वृतं तथापीन्द्रेण तदशक्यमुक्त्वा तस्यान्ते किमप्यन्यदेव दत्तं न ब्राह्मण्यमिति महाभारतीयाख्यानं प्रसिद्धमेव । पुराणापेक्षयेतिहासस्याभ्यर्हितत्वादपि भारतीयाख्यानेनास्य बाध एव युक्तः, केवलं सप्तशती स्तुतावेवास्य तात्पर्य्यं बोद्धव्यम् ।

पापीयसः व्याधस्य वृत्तान्तः

यदुक्तम् "एवमेवान्यव्याधकथापि भविष्यपुराणेऽस्ति । यत्कस्यचित्पापकारिणो व्याधस्य विशिष्टब्राह्मणदर्शनेन बुद्धिः शुद्धा । तेनैव कदाचित्तस्य ब्राह्मणस्य व्याधाद्रक्षा कृता । ब्राह्मणश्च प्रसन्नो भूत्वा तमुवाच ।

इदानीं तव पापानि देविकाभिषवेण च । (देविका नदीस्नानेन)
मद्दर्शनेन च चिरं विष्णुनाम श्रुतेन च ।
नष्टानि शुद्धदेहोसि साम्प्रतं नात्र संशयः ।
इदानीं वरमेकं त्वं गृहाण मम सन्निधौ ॥
तपः कुरुष्व साधो त्वं चिरकालं यदिच्छसि ।
इत्येवमृषिणादिष्टो व्याधोऽतप्यत संयतः ।
तपः सिद्धिप्रभावोत्थस्वन्नदानादिसेवया ।
ऋषिं दुर्वाससं सोऽयं कदाचित्समतोषयत् ॥
दुर्वासा च संतुष्टस्तमुवाच.......... ।
उवाच वेदाः साङ्गास्ते सरहस्यपदक्रमाः ।
ब्रह्मविद्या पुराणानि प्रत्यक्षाणि भवन्तु ते ।
एवं प्रादाद्वरं तस्य दुर्वासा नाम चाकरोत् ॥
भवान्सत्यतपाः नाम ऋषिराद्यो भविष्यति ।

( भ० प्रतिसर्ग खं० २ अ० ३३ )

कथमहं व्याधो भूत्वा वेदानध्यापयामीत्येवं तत्प्रश्ने—दुर्वासा उवाच—तपः प्रभावेण ते पापमयं प्राक्शरीरं नष्टमिदानीं तपोमयं शुद्धं वेदादिविद्यासम्पन्नमभिनवं शरीरमुत्पन्नम् ।

'अतस्त्वं शुद्धकायोऽसि सत्यमेतद् ब्रवीमि ते ।'

पुनश्च किं मे द्वे शरीरे स्त इति तत्प्रश्ने मुनिनोक्तम् । एकस्मिन्नेव स्थूलशरीरे वर्त्तमानं सूक्ष्मशरीरं प्राग्ज्ञानवर्जितमधर्मोपचितञ्चासीत् । तदिदानीं तपः प्रभावेण नष्टम् । तत्स्थानेऽत्यन्तधार्मिकं ब्रह्मचर्य्याहिंसाशमदमदयादिव्रतसंयुक्तं शरीरमभिनवं जातमिति । अतस्त्वं तपो वेदादिशास्त्रज्ञानशमदमादिप्रभावेण महान् सत्यतपाः नामाग्रगण्यो यशस्वी ऋषिः सञ्जातोऽसि । एतेन वेदान्तदर्शनस्यापशूद्राधिकरणं समालोचितम् । ऋषीणा-

मौदार्य्यस्य परा काष्ठा च दृश्यत इति" तदपि न गुणकर्ममूलवर्णव्यवस्थापोषकम्। ब्राह्मणरक्षणस्तुतावेवास्याख्यानस्य तात्पर्य्येण मतङ्गाख्यानविरोधेन स्वार्थे तात्पर्य्याभावात्। अवान्तरतात्पर्य्येऽपि तपःसिद्धस्य दुर्वाससो वरप्रभावेण व्याधस्यर्षित्वसम्पत्तेरपवादभूतत्वेनोत्सर्गस्य जन्ममूलकचातुर्वर्ण्यस्याबाध्यत्वात्।

'ऋषीणां पुनराद्यानां वाचमर्थोनुधावति'

इति रीत्या सिद्धा ऋषयो यथा वदन्ति तथैवार्था भवन्ति। अन्यत्र 'नहि शब्दशतमपि घटं पटयितुमीष्टे' परन्तु सिद्धानां तु शब्दाः नहुषमजगरयितं, मानुषं नन्दिनं तु देवयितुं प्रभवन्त्येव। तथैव ते शब्दाः शूद्रं ब्राह्मणयितुमपि प्रभवन्त्येव। तथा च नायमुत्सर्गः। नाद्यत्वे कश्चित्तादृशः सिद्ध उपलभ्यते यो मूषकं मार्जारयितुं शक्नोति। शूद्रस्य ब्राह्मणत्वसम्पादनन्तु दूरतोऽपास्तम्।

भविष्यपुराणे प्रतिसर्ग पर्वणः प्रक्षिप्तत्वं बहुभिरुपेयते। तत्र विक्टोरिया प्रभृतीनां वर्णनदर्शनात्। चित्रमेतद्यत्सुधारका मन्त्रस्य ब्राह्मणस्य महाभारत-रामायणादिप्रमाणसिद्धजन्ममूलकब्राह्मण्यमनङ्गीकृत्य पुराणीयप्रक्षिप्तांशाश्रयणेनापि स्वसमीहितं साधयितुमीहन्ते।

## सत्यकामवृत्तान्तः

यदुक्तम् 'छान्दोग्योपनिषदि सत्यकामजाबालोपाख्याने सत्यकामस्य जाबालस्य स्वपितृ-जाति-गोत्रज्ञानरहितस्य सत्यवचनगुणमात्रेण ब्राह्मणत्व-प्रतिपादनमुपलभ्यते। तथाहि गुरुकुलं प्रवेष्टुकामेन जाबालेन किं गोत्रोन्वहमस्मि माता पृष्टा। सा हैनमुवाच नाहमेतद्वेद तात, यद्गोत्रस्त्वमसि, बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे' (छा० उ० ४।४।२) अहमेकाकिनी युवती जीवननिर्वाहाय बहुचरन्ती इतस्ततोऽनेकस्थलं गच्छन्ती परिचारिणी विविधानां जनानामृषीणाञ्च विविधां परिचर्यां सेवां कुर्वाणा सती यौवने यौवनकाले त्वां पुत्रं अलभे लब्धवती। साहं नैव जानामि बहूनां समागमे कस्मात्त्वं संभूतोऽसि? कस्त्वदीयः पितासीत्? पितृज्ञानमन्तरा तज्जातिज्ञानं तद्गोत्रज्ञानं च कथं संभवेत्? अतस्तव पितुर्नामाप्यहं न जानामि। कुतस्तज्जातिः कुतस्तरां तद्गोत्रमप्यहं जानीयाम्? अतो जाबाल माताहमस्मि त्वन्तु

मदीयः पुत्रः सत्यकामोऽसीत्येतावदहं जानामि। एतदेव स्पष्टतया निर्भयतया च गुरवे वक्तव्यम्। एवं सत्यकामाय मात्रापि निष्कपटं लोकविगर्हितमप्ये-तादृशं निर्भयं सत्यमेव वचः संभाषितम्।

यदि सत्यकामस्य कश्चन पिता जीवितो वा मृतो वा भवेत्तर्हि बृहस्पति-भार्यया तारया प्रबोधितः स्वपुत्रस्य बुधस्य चन्द्रमा पितेव तत्पृथक्तया विज्ञा-पितः स्यात् तन्मात्रा जबालया तदा तत्पार्श्ववर्त्तिभ्यस्तत्सम्बन्धिभ्यो जनेभ्य-तज्जातिगोत्रादिज्ञान सुलभं भवेत्। परन्तु तत्पितुस्तत्पृथक्तया ज्ञानाभावादेव तन्मात्रा स्पष्टतया नाहमेतद्वेद इति सत्यमेवाभिहितम्। तस्य सत्यकाम-जाबालस्य गुरुकुले समागतस्य प्रशस्ताकृतिं दृष्ट्वा स्वपरनिष्ठघृणाजनकमपि तदतिस्पष्ट निर्भयं सत्यवचनं श्रुत्वा हारिद्रुमतो गौतम आचार्यः प्रसन्नः सन्निदमुवाच 'नैतदब्राह्मणो विवक्तुमर्हति। समिधं सोम्याहर उप त्वा नेष्ये। न सत्यादगाः।' (इति छा० ४।४।५) ब्राह्मणाद् भिन्नो विशेषतयाऽतिस्पष्टतया वक्तुं नार्हति। अर्थात् अतिस्पष्टं निर्भयं निरभिमानत्वपोषकं सत्यवचनमेव ब्राह्मणलक्षणम्। तेन लक्षणेन संयुक्तत्वात्। स्वपितृजातिगोत्रज्ञानरहितमपि त्वामहं ब्राह्मणमेव मन्ये न ब्राह्मणभिन्नमिति। अत एव समिधमाहर त्वामह-मुपनेष्ये। यतस्त्वं तस्मात् ब्राह्मणलक्षणान्न अगाः प्रचलितवानसि। परं धर्मं सत्यं रक्षितवानसि। तदुक्तं भारते—

'य एव सत्यान्नापैति स श्रेयो ब्राह्मणस्त्वया।' (म० भा० वनपर्व २८।७)

एतेन सरलस्वभावाः कुलपतय आचार्य्या पुरोवर्त्तिनं विद्यार्थिनं दृष्ट्व-तद्वचनं श्रुत्वा तस्य योग्याधिकारञ्च विनिर्णीय, तस्मै प्रशस्ततत्तद्गुणकर्म-निबन्धनां तां तां तद्योग्यां कक्षां समर्प्य स्वराष्ट्राभ्युदयाय वर्णविभाग व्यवस्थापयामासुः।

अत एव यजुर्वेदस्य काठकसंहितायां ब्राह्मणपरिचयस्य न मातृपितृजन्यत्व-लक्षणं जात्या, अपि तु प्रशस्तविद्यादिगुणत एव कर्त्तव्यत्वप्रतिपादनमित्थमुप-लभ्यते। यथाहि—किं ब्राह्मण पितरं पृच्छसि, किमु भ्रातरं श्रुतं चेदस्मिन वेद्यं हि स पिता स पितामहः॥' (३०।१) अयमर्थः-केनचित् कश्चित् सद्विद्या-दिगुणाढ्यो महर्षिः भवतः कः पिता का च माताऽस्ति तव। पित्रोः किं जातिवै-शिष्ट्यं विद्यते। तदीयं प्रश्नं श्रुत्वा स आह-ब्राह्मणस्य ब्राह्मणत्वाभिव्यञ्जक

तत्तत्प्रशस्तविद्यादिसात्त्विकगुणविशिष्टस्य किं पितरं मातरं वा पृच्छसि ? यः कोप्यस्य शरीरस्योत्पादकः पिता माता वा स्यात् तेन किं तत्कुले शरीरजन्मनो दैवायत्तत्वाद् ।

'दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम् ।' इति स्मरणात् ।

यद्यस्मिन्शरीरे वेद्यं श्रुतं वेदनीयमभ्यर्हणीयं सद्विद्यादिलक्षणं प्रशस्तं ब्राह्मणत्वप्रयोजकं गुणकर्मादिकं विद्यते । स एव पिता स एव पितामहो वेदितव्य इति तेन स्पष्टमेवोक्तम् ।" तदपि न क्षोदक्षमम्, निष्प्रमाणत्वेन स्वकपोलकल्पितत्वात् । आकृतिं दृष्टवा, वचनं श्रुत्वा वर्णनिर्धारणरीतिरासीत्तर्हि किमर्थमाचार्येण गोत्रप्रश्नः कृतः ? गोत्रप्रश्नादेव विज्ञायते । यत् गोत्रादिज्ञानपूर्वकमेवोपनयनादिकं क्रियते स्म इत्युत्सर्गः । प्रकृते गोत्रज्ञानाभावात् तत्स्वभावज्ञानेन ब्राह्मणत्वन्निश्चित्य समिदाहरणायाज्ञप्तमित्यपवाद एव । नैतद्ब्राह्मणो विवक्तुमर्हतीति वचनस्वारस्यात् । नहि सत्यवदनमेव ब्राह्मणस्याव्यभिचारिलक्षणम्, क्षत्रियेषु हरिश्चन्द्रयुधिष्ठिरादिष्वपि तत्सत्त्वदर्शनात् । तुलाधारादि वैश्येषु विदुरादि शूद्रेष्वपि च तद्दर्शनात् । अत एव सत्यं सर्ववर्णसाधारणधर्मेषु परिगणितम् ।

'धृतिः क्षमादयोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥' (म० स्मृ० ६।६२)

अत एव वेश्यापुत्रो जाबालो गुणेन ब्राह्मणत्वमगादित्युच्छृङ्खलोक्तिरपि पराहता । सत्यस्य ब्राह्मणत्वप्रयोजकत्वे तन्मातुरपि ब्राह्मणत्वनिश्चयेन वेश्यात्वासिद्धेः । वस्तुतस्तन्मातुरेव मुख्यं सत्यनिष्ठत्वम् । जाबालस्य त्वबोधबालकस्य मात्रुक्तस्यानुवादकत्वमेव । सप्ताष्टवर्षस्य कस्यचिद्वेश्यापुत्रस्य कोसीति प्रश्ने स्वस्य वेश्यापुत्रत्वकथनं साधारणी वार्ता, नो महत्त्वपूर्णा । सत्यवादित्वेनैव ब्राह्मणत्वे बहूनां वेश्यापुत्राणां ब्राह्मणत्वप्रसक्तेः, तथात्वेऽव्यवस्थैव स्यात् । एवं सत्यनायासेन ब्राह्मणसंख्यावृद्धिः । ब्राह्मणपुत्राणामपि पित्रादिपरिचयदानाशक्त्याऽब्राह्मणत्वापत्तिश्च, न च तथात्वं युज्यते ।

किञ्च गुणकर्मणो ब्राह्मणत्वप्रयोजकत्वे सत्यवदनात्त्वं ब्राह्मण इत्येवं वक्तव्यमासीद् गुरुणा । 'नैतदब्राह्मणो विवक्तुमर्हतीति' एतत्कथनेन जन्मजातब्राह्मणस्यैव जाबालस्य ब्राह्मणत्वं ज्ञातं न त्वारोपितम् । अत्रैव शाङ्कर-

भाष्यम् । नैतद्वचोऽब्राह्मणो विशेषेण वक्तुमर्हत्यार्जवार्थमुक्तम् । ऋजवो हि ब्राह्मणाः, नेतरे, स्वभावतः । अन्यैस्त्वनुष्ठेयतयार्जवमाद्रियते । तस्मान्न सत्याद् ब्रह्मणजातिधर्मादगाः नापेतवानसि अतो ब्राह्मणं त्वामुपनेष्ये ।' (शा० भा० छा०) अत्र जातिस्वभावजेन सत्येन ब्राह्मणत्वजातिज्ञानम्, न पुनः सत्येन कर्मणा ब्राह्मणत्वजातेस्तद्वर्णस्य वोत्पत्तिरिति स्पष्टम् । इतरे तु साधनरूपेण सत्यादिधर्ममनुतिष्ठन्ति । न तेषां स्वभावस्तथा शौर्यञ्च क्षत्रियादेर्यथा स्वभावजमन्येषां तु प्रयत्नेन तदर्ज्यते । न केवल जाबालस्य पितुस्तन्मातुरपि तथैवार्जवार्थयुक्तसत्यवचनेन सुतरां विद्यमानमेव ब्राह्मण्यं सिद्धयति । तद्वेश्यात्वकल्पनन्तु निरङ्कुशतुण्डानां परं प्रत्यवायकरमेव ।

किञ्च यदि जबाला गणानुरोधेन ब्राह्मणी, तदा तत्पुत्रस्य निर्णीतमेव ब्राह्मणत्वम्, न पुनर्निर्णेतव्यम् । यदि शूद्रा तदा गुणकर्मकृतवर्णव्यवस्थेति सिद्धान्तहानिः । यतस्तत्र छान्दोग्ये सत्यवदनं जबालाया एव मुख्यम् । जाबालस्य तु मातृवचनानुसरणमेव । तता मुख्यसत्यार्जवादियुक्ताया जबालाया ब्राह्मणभिन्नत्वं तत्पुत्रस्यानवबुद्धस्य मात्रुक्तानुवादकस्य ब्राह्मणत्वमिति स्पष्टं विरुद्धयते । वेश्यापुत्रकथनेन तस्य का हानिरिति बालस्य नावबाधः संभवति । न च तस्य तद्वचनं स्वज्ञानपूर्वकम् । हानिलाभज्ञानवत्याः सत्यवक्त्र्या मातुरब्राह्मणीत्वोक्तिर्विरुद्धैव ।

अतएव 'नैतदब्राह्मणो विवक्तुमर्हति' इत्यस्यायमेवार्थो यत् ब्राह्मणपुत्रमन्तराऽन्य एतदार्जवयुक्तं वचनं न वक्तुमर्हति । ब्रह्मणोऽपत्यं ब्राह्मणः । 'ब्राह्मोऽजातौ' (६।४।१७१) पाणिनीयस्मरणेनाजातौ ब्राह्मः, जातौ तु ब्राह्मण इति सिद्धान्तात् । 'अथ हो वाच महाशालं जाबालकम् । औपमन्यव कं त्वं वैश्वानरम्' इति शतपथ-(अ० अ० प्र० ब्रा० १०।६।४।४।६) वचनानुसारेण जाबालस्योपमन्युपुत्रत्वावगमात् उपमन्योश्च व्याघ्रपादपुत्रत्वात् व्याघ्रपादस्य बौधायनकल्पसूत्रे ब्रह्मवंश्यत्वोक्तेः । तस्माज्जाबालस्य जन्मब्राह्मणत्वमेव ।

किञ्च परिचारिणीति शब्दस्य न बहुपुरुषगामिनी वेश्या वार्थः । प्रकृतशब्दानां तद्बोधकशक्त्यभावात् । परिपूर्वस्य चरतेः परिचर्यार्थत्वात् । तथा च पतिगृहे समागतातिथिपरिचर्यापरायणाऽऽसमिति तदर्थः । निघण्टौ (३।५) परिचरणार्थेषु सपर्यति प्रभृतिधातूनां सन्निवेशात् । तस्माद्-

तिथिपरिचर्य्यापरत्वादेव गोत्रादिप्रश्नस्यावसरो न लब्धः । अद्यापि तादृश्यो बह्व्यः सन्ति स्त्रियो या पतिगोत्रं न जानन्ति । न तावता तासामब्राह्मणीत्व साधयितुं शक्यमतिप्रसङ्गात् । अतएव मनोः स्मृतौ ( १०।५ ) पद्ये मेधातिथिना स्पष्टीकृतम् —'गौतमस्यापि न ततो वचनाद् ब्राह्मणोऽयमित्यवगमः । प्रागेवासौ तं ब्राह्मणं वेद । गोत्रं तु न वेद । गोत्रप्रश्नेन चरणप्रश्नो वेदितव्यः । तत्रोपनयनभेदोऽस्ति । न तु गोत्रभेदेनोपनयने प्रयोजनम् ।' अतएवात्र गोत्रप्रश्नो न वर्णप्रश्नः । ब्रह्मर्षिवंश्यानामेवार्षेयगोत्रस्मृतिर्नान्येषाम् ।

श्रीशङ्करभगवत्पादैरपि जबालायाः पतिगृहागतातिथिपरिचर्य्यापरायणत्वेनैव गोत्रप्रश्नानवकाशादेव तदपरिज्ञानमुक्तम् । तथाहि—कस्मान्न वेत्सीत्युक्ताह—बहुभर्तृगृहे परिचर्य्या जातातिथ्यभ्यागतादिचरन्त्यहं परिचरणशीलैवाहं परिचरणचित्ततया गोत्रादिस्मरणे मम मतिर्नाभूत् । यौवने तत्काले त्वामलभे । 'नैतदब्राह्मणो विवक्तुमर्हति' नैतद्वचोऽब्राह्मणः विशेषेण वक्तुमर्हत्याजवार्थमुक्तम् । ऋजवो हि ब्राह्मणाः नेतरे, स्वभावतः, तस्मान्न सत्याद् ब्राह्मणादिजातिधर्मादगा नापेतवानसि । अतो ब्राह्मणं त्वामुपनेष्ये । अत्र परिचर्य्यया बहुशब्दः सम्बद्ध्यते । तथा च बहुपुरुषसम्बन्धकल्पना हृदयकालुष्यमूलिकैव । शाङ्करभाष्यटीकाकृताऽनन्दगिरिणाऽपि च तदनुगुणमेव व्याख्यातम् ।

तथाहि-अतिथ्यभ्यागतावधिकृत्य परिचर्य्याजातं बहुचरन्ती भर्तृगृहे यतोऽहं स्थिता तेन परिचरणचित्ततया गोत्रादीन्नापृच्छम् । यौवने लज्जया प्रथमं पतिं प्रति न प्रश्नः । पुनश्च तस्योपरतत्वाद् दुःखबाहुल्याच्च । एतेन तत् सम्बन्धिनां तत्राभावात्तेभ्योऽपि तज्ज्ञानं न लब्धमित्यपि सम्यग्ज्ञातुं शक्यम् । एतेन गोत्रादिनिर्णयमन्तरोपनयनादि संस्कारो न भवति स्म । गोत्रप्रश्नो द्विजत्वस्थैर्य्यार्थम् । गोत्रज्ञानाभावाच्छूद्रत्वनिश्चयाद् यज्ञोपवीतं न दीयते । अत्र तु गोत्राज्ञानेऽपि ब्राह्मणत्वानुमानादुपनयनं कृतम् । अत एव जाबालस्याज्ञातकुलस्यापि गुणकर्मादिना ब्राह्मण्यनिर्णयत्वोक्तिरपि परास्ता । यतः श्रुतौ गोत्रप्रश्न उक्तो न कुलप्रश्नः । 'न भोजनार्थे स्वे विप्रः कुलगोत्रे निवेदयेदिति मनुवचनानुसारेण कुलगोत्रयोर्भेदो ज्ञायते । विवाहे स्त्रीणां गोत्रं परिवर्तते, न

कुलम्। पितुरसगोत्रा कन्या विवाहार्थे युक्ता कुलगोत्रयोरैक्ये पितुरसमानवर्णा कन्या ग्राह्या भवेत्। तच्च मन्वादिविरुद्धमेव। तत्र सवर्णाया एव ग्राह्यत्वोक्तेः। गुणकर्मादिभिर्वर्णव्यवस्थायां वर्णप्रश्नोऽपि नोपपद्यते, जन्मना तत्त्वे एव तत्प्रश्नावकाशात्। किञ्च कोऽपि पिता भवेत्, कापि माता भवेत् गुणकर्मभ्यामेव ब्राह्मण्ये कुलप्रसूतजारजयोरवैशेष्यापत्तिः स्यात्। तथात्वे जातिसाङ्कर्य्यवर्णसाङ्कर्य्यादिनिन्दावचनानां नैरर्थक्यापत्तेश्च।

जाबालस्य तन्मातुश्च गोत्राज्ञानमेवोक्तम्। नाहमेतद्वेद भो यद्गोत्रोहमस्मि-मात्रापि तदेवोक्तम्, गुरुणापि गोत्रमेव पृष्टम्। किं गोत्रोऽसि, नात्र ब्राह्मणादि कुलस्याप्यज्ञानमुक्तम्। अतिथिसत्कारव्यग्रतया यौवने गोत्रप्रश्नो न कृतः, पश्चात् त्वत्पिता तपस्तमुं गतः। अतः गोत्रप्रश्नावकाशो न लब्धः। अन्यथा वेदाध्ययनारम्भात्प्राक् गुणकर्मादिभिरपि कथं ब्राह्मणनिर्णयः स्यात्। नैतद-ब्राह्मणो विवेक्तुमर्हति इति सत्यवदनस्वाभाव्येनैव ब्राह्मण्यं निर्णीतम्। यथाग्नेरौष्ण्यं तथैव ब्राह्मणस्य सत्यवदन स्वभावस्तेनैव ब्राह्मण्यनिर्णयः। नहि सत्यवदनलक्षणकर्मणा ब्राह्मण्यनिर्णयसम्भवः। क्षत्रियादीनामपि सत्यवदनस्य धर्मत्वात्। परं तेषां सत्यवदने धर्मो न स्वभावः, स्वभावस्तु ब्राह्मणस्यैव। उग्रकष्टसहनमपलायनञ्च योद्धुर्ब्राह्मणस्यापि धर्मः, क्षत्रियस्य तु स्वभावः। यत्र ब्राह्मणमातापित्रादिनिर्णयो न स्यातत्र तादृक्स्वभावेन ब्राह्मणनिर्णयो युक्तः।

## ऐलूषकवषवृत्तान्तः

ऐलूषकवषस्यापि ब्राह्मणत्वमेव न शूद्रत्वम्, तस्य 'अक्षैर्मादीव्य' इति मन्त्रदर्शनात् प्राक् द्यूतपरायणतासीत्, तस्यैवोक्तमन्त्रद्रष्टृत्वात्। तस्मादेव 'दास्याः पुत्र' इति निन्दार्थवादेन दासीपुत्रत्वोक्तिः। 'आम्नायस्य क्रियार्थत्वे-नानर्थक्यमतदर्थानाम्' 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' इति रीत्या अर्थवादानां नाक्षरार्थो ग्राह्यो भवति, किन्तु विवक्षितार्थ एव ग्राह्यः, तस्यैव तात्पर्य्यगोचरत्वात्। 'यत्परः शब्दः स शब्दार्थ' इति सिद्धान्तात्। यथा 'प्रजापतिरात्मनो वपामुदखिदत्' इत्यस्य न प्रजापतिकर्त्तृकवपोत्खेद-बोधने तात्पर्य, तस्य निरर्थकत्वात्, किन्तु वपाहोमस्तुतौ तात्पर्य्यम्। एवं प्रशस्तो वपाहोमो यदर्थमन्यवपाऽलाभे प्रजापतिना स्ववपैव होमार्थमुत्खिन्ना।

वस्तुतस्तु वपोत्खेदेन मृत्यौ निश्चिते वपाहोमो न संभवत्येव। तस्माद्वपो-

त्वेदृघटनाबोधे नार्थवादतात्पर्यं, किन्तु वपाहोममाहात्म्यबोधन एव। तदिति तद्वत्। एतेन "एतरेयब्राह्मणे कवषस्यैलूषस्य शूद्रस्यापि महता तपसा द्विजोत्तमत्वस्य मन्त्रद्रष्टृत्वरूपमहर्षित्वस्य प्राप्तिः। 'ऋषयो हि वै सरस्वत्यां सत्रमासत। ते कवषमैलूषं सोमादनयन्। दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्ये दीक्षीष्टेति'। (ऐ० ब्रा० ८।१) इत्यादिग्रन्थेन समाम्नायते। तदर्थस्तु शूद्रो हि कवषः यज्ञे प्रविश्य दीक्षां गृहीतवान्। तस्य शूद्रत्वं विज्ञाय सावेश-मृषिभिस्तत्रत्यैः स बहिष्कृतः तस्यानधिकारचेष्टायाः कटुफलं विधातुम्। सरस्वत्याः पावनं जलमयं मा पिबतु, किन्तु पिपासयैवायं म्रियतामित्यभि-प्रेत्य निर्जले मरुप्रदेशेऽयं वराकः कवषः तैर्निक्षिप्तोऽभूत्।

तदुक्तं 'तं बहिर्धन्वोऽदवहन् अत्रैनं पिपासा हन्तु। सरस्वत्या उदकं मा पा'दिति (ऐ० ब्रा० ८।१) तं मरुप्रदेशभूमिं प्रति उदवहन् उद्धृतवन्तः बलादपसारितवन्तः। एवं पिपासामारयत्वित्यभिप्रायेण सारस्वत्याः पवित्र-मुदकं मा पिबतु।

तत्र गतोऽयं तीव्रेण तपसानन्यसाधारणेन साधारणविज्ञानशक्तिमवाप। तया किल 'अपां न पा'दित्यादि ऋग्वेदीयसूक्तसमूहस्य तत्रावस्थितविविध-मन्त्राणाञ्चायं द्रष्टा भूत्वा प्रमुखो महर्षिरभवत्। ततो भूयोपि महर्षिभि-रभ्यर्हणीयतामापेदे। तस्य इलूषपुत्रस्य कवषस्य तपः सामर्थ्येन संजाते विशुद्ध एकाग्रे हृदये स्वयं प्रतिभातमन्त्रप्रार्थनाप्रभावात् प्राक् कुरुक्षेत्रे प्रवहणशीला सरस्वती नदी मरुप्रदेशेऽपि दर्शनीयरूपा प्रवाहिताभूत्। सरस्वती समन्तात् पर्य्यधावत्। (ऐ० ब्रा० ८।१) तेन जप्तेन सूक्तेन सरस्वती नदी तं कवषं मरुप्रदेशेऽवस्थितं पिपासाव्याकुलं पर्य्यधावत्। 'अपांनपान्मधुमती-रपोदा।' (ऋ० सं० १०।३०।४) इत्यादि मन्त्रे तन्माहात्म्यं स्फुटम्। हे अपां न पात्! (अब्देवताकं त्रैष्टुभमिदं तेनाप एवात्र स्तूयन्ते) स त्वं मधुमतीर्मा-धुर्य्यगुणयुक्ता अपो दाः देहि 'याभिः सोमो मोदते हर्षते च। कल्याणीभि-र्युवतिभिर्नमर्यः (ऋ० सं० १०।३०।५) याभिः सोमो देवो मोदते हर्षते च। यथामर्य्यः कल्याणीभिर्युवतिभिः मोदते तद्वत्। 'प्रास्मै हिनोत मधुमन्त भूर्मिगर्भो यो वः सिन्धवो मध्व उत्सः। (ऋ० सं० १०।३०।८) हे सिन्धवः स्यन्दनशीलाः आपः वः युष्माकं मध्वः मधुररसस्य गर्भः सारभूतः उत्सः

प्रस्रवणः। तं मधुमन्तं ऊर्मिं अप्संघातं अस्मै यज्ञस्याधिष्ठात्रे इन्द्राय प्राहिणोत प्रगमयत। 'आग्मन्नाप उशतीर्बर्हिरेदंन्यध्वरे असदन् देवयन्तीः।' ( ऋ० सं० १०।३०।१५ ) उशती उशत्यः आपः सारस्वतानि जन्यानि इदं बर्हिर्वेदिस्तरणं अस्मिद् यज्ञं प्रति आग्मन् आगच्छत्। अस्मद् यज्ञे देवयन्तोर्देवान् कामयमानास्तर्पयितुमिच्छन्त्यः,। नि असदन् निवासं चक्रुः।

'तस्माद्धाप्ये तर्हि परिसारकमित्यावक्षते।
यदेन सरस्वती समन्तं परिससार॥' (ऐ० ब्रा० ८।१)

यस्मिन्स्थाने सरस्वती एनं कवषं परिससार तत्स्थानमेतर्हि अपि तीर्थविशेषज्ञाः परिसारकमिति नाम्ना व्यवहरन्ति। एवं कवषस्य प्रत्यक्षं सामर्थ्यं सरस्वती समानयनलक्षणं मन्त्रद्रष्टृत्वलक्षणञ्च ज्ञात्वा सर्वेऽपि महर्षयस्तं धन्य धन्यमभिधाय विश्वामित्रादिवत् तस्मै ब्रह्मर्षिपदवीं समर्पयामासुः। अनया गाथया स्पष्टमेव गम्यते यत्पूर्वमुत्तमगुणकर्माणि समवाप्याधमत्वं विहाय विशिष्टसामर्थ्यशाली भूत्वा सर्वोत्तमः पूज्यश्चाभवत्।" इत्यपि समाहितम्।

ऐलूषकवषस्य देवतानुग्रहेण मन्त्रद्रष्टृत्व, महर्षित्वं, महर्षिसमादरणीयत्वादिकञ्च सम्पन्नं नास्त्यत्र विवादः। स शूद्र आसीद् गुणकर्मभिस्तस्य ब्राह्मणत्वादिकं सम्पन्नमित्यत्र तु न किञ्चिदपि मानम्। ब्राह्मणोप्युत्तमगुणकर्माभावान्निन्द्यो भवति। तत्सद्भावाच्च पूज्यो भवतीत्यत्रापि नास्ति विवादः। शूद्रोऽपि समोचीनगुणकर्मसद्भावादादरं लभते। परं शूद्रो गुणकर्मभिर्ब्राह्मणो भवतीत्यत्र प्रदर्शितमन्त्रेषु नैकमपि वचनं पदं वा प्रमाणम्। 'दास्याः पुत्रोः कितवोऽब्राह्मणः इत्येवमादयः शब्दास्तु तस्य द्यूतादिपरायणत्वेन ब्राह्मणस्यैव सतोऽपि निन्दार्थवादगतत्वेन निंदा सूचका एव। 'दास्याः पुत्रः' इति 'षष्ठ्या आक्रोशे' ( पा० सू० ६।३।२१ ) इत्याक्रोशसूचनार्थमेवालुक समासः। अब्राह्मण इत्यपि शब्दोऽप्रशस्तब्राह्मणबोधक एव न शूद्रबोधकः।

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिता॥

इति रीत्या नञोऽत्राप्राशस्त्यबोधकत्वेन दोषाभावात्। विरोधान्यत्वाद्यर्थकत्वेऽपि न शूद्रस्तदर्थः क्षत्रियादीनामपि तदन्यत्वादिना बोधसंभवात्।

अत एव सदाचारादिभिः कवषस्य ब्राह्मण्यं जातमित्यपास्तम् । तावताल्प-कालेन सदाचारादिभिर्ब्राह्मण्यलाभमन्त्रदर्शनाद्यसंभवात् । तथात्वेऽन्येषामपि तत्संभवापत्तेः । तस्माज्जन्मान्तरीयपुण्यप्रभावात् प्राप्तदेवता प्रसादादेव मन्त्रदर्शनादिकं मन्तव्यम् । अत एव 'विदुर्वा इमं देवा उप इमं ह्वयामहा' ( ऐ० ब्रा० ८।१ ) इति श्रुतिर्वदति ।

सायणभाष्यानुसारि ब्राह्मणप्रघट्टकार्थस्त्वित्थम्—
'ऋषयो वै सरस्वत्यां सत्रमासत । ते कवषमैलूषं सोमादनयन् । दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्येऽदीक्षिष्टेति । तं बहिर्धन्वोऽदवहन्नत्रैनं पिपासा हन्तु । सरस्वत्या उदकं मा पादिति स बहिर्धन्वोद्वहलः पिपासया वित्त एतद-पोनप्त्रीयमपश्यत् । प्रदेवत्रा ब्रह्मणे गातुरेत्विति । तेनापां प्रियं धामोपागच्छत्, तमापोऽनूदायस्तं सरस्वती समन्तं पर्य्यधावत् ।'

( ऐ० ब्रा० ८ अ० १ ख० )

ऋषयः सरस्वत्यां सत्रमासत तदानीं तेषां मध्ये कश्चिदिलूषाख्यस्य पुरुषस्य पुत्रः कवषनामकोऽवस्थितोभूत् । ते तं कवषं सोमयागान्निःसारित-वन्तः । तेषामभिप्राय उच्यते । दास्याः पुत्र इत्युक्तिरधिक्षेपार्था कितवो द्यूतकारस्तस्मादब्राह्मणोऽयं ईदृशो नोऽस्माकं शिष्टानां मध्ये स्थित्वा कथं दीक्षां कृतवानिति तेषामभिप्रायः । तं सरस्वतीतीराद् दूरे धन्वजलरहितां भूमिं प्रत्युद्वहन् बलादपसारितवन्तः । यथा एनं कवषं पिपासा मारयतु, नद्याः पवित्रमुदकमयं पापिष्ठो मा पिबतु । स तत्र तं दिशं प्रति उत्कर्षेणापसारितः पिपासया वित्तो लब्ध आक्रान्तस्तत्परिहारार्थमेतत्प्रदेवत्रेत्यादिकमपो नप्तृदेवताकं सूक्तं वेदमध्ये विचार्य्यापश्यत् । तेन सूक्तेन जप्तेनापां जलाभि-मानिनीनां देवतानां प्रियं स्थानमुपागच्छत् । तत्रागतमापो देवताः अनूदायन् अनुग्रहेणोत्कर्षो यथा भवति तथा प्राप्नवत्यः । ततः सरस्वती नदी तं पर्य्यधावत् प्रवाहवेगेन प्रवृत्तासीत् । 'तस्माद्धाप्येतर्हि परिचारकमित्याचक्षते । यदेनं सरस्वती समन्तं परिससार ।' ( ऐ० ब्रा० ८।१ ) 'ते वा ऋषयोऽब्रुवन् विदुर्वा इमं देवा उपेमं ह्वयामहा इति । तथेति तमुपाह्वयन्ततमुपहूयैतदपो न प्रीयम-कुर्वत । प्रदेवत्रा ब्रह्मणे गातुरेत्विति । तेनापां प्रियं धामो गच्छन्नुपदेवानाम् । ( ऐ० ब्रा० ) ते भृग्वादयः परस्परमिदमब्रुवन् । इमं कवषं देवाः सर्वेऽपि

जानन्त्येवातोऽस्य कितवत्वादि दोषो नास्ति । तस्मादिममस्मत्समीपं प्रत्याह्वयाय इति विचार्य तमुपहूय तेन इष्टमेतदपोनप्तृदेवताकं सूक्तमकुर्वन् प्रयुक्तवन्तः । तेन सूक्तेन जलदेवतानामन्यदेवतानाञ्च प्रियं स्थानमुपागच्छन् ।

वाचा विरूपनित्यया' (ऋ० सं० ८।७५।६ इति मन्त्रेण वेद लक्षणाया वाचो नित्यत्वमाम्नातम् । 'औत्पत्तिकस्तु' इति ( १।१। ) जैमिनिसूत्रानुसारेण शब्दार्थयोरौत्पत्तिकत्वेन नित्यत्वमेवोक्तम् । तथा च वसिष्ठविश्वमित्रादिवदनादिप्रसिद्धोऽयं कवषो महर्षिः प्रतिकल्पं तदाविर्भावबोधिकाख्यायिकापि नित्यवेदान्तर्गतत्वान्नित्यैव । तत एव 'इमं देवा विदुः' इति कथनं संगच्छते । नहि कश्चित्साधारणो ब्राह्मणो वा शूद्रो वा तथा तिरस्कृतो मरुप्रदेशे प्रक्षिप्तः पूर्वं विरुद्धाचारोऽपि कतिभिः क्षणैर्दिवसैर्वानुष्ठितैस्तपोभिः सदाचारैर्वा ब्राह्मण्यं मन्त्रदर्शनं वा प्राप्तुं शक्नोति । न वा 'तं देवा जानन्तीति महर्षीणामवगमः सम्भवति । तस्मान्नानेन कवषस्य शूद्रत्वम , न वा तपसा तस्य ब्राह्मण्यप्राप्तिर्नवा तद्दृष्टान्तेनान्येषामपि तपसा ब्राह्मण्यप्राप्तिः साधयितुं शक्या ।

किञ्चैवमैलूषकथाया ऐतिहासिकत्वेन तद्दृष्टसूक्तानामप्यैतिहासिकत्वे ततः प्राक् तेषामभावापत्त्यानादित्वाभावेन सादित्वेनानित्यत्वापत्तिश्च । शूद्रभ्रान्त्या तद्बहिष्कारेण त्वद्रीत्या वेदकालेऽपि शूद्रैः सह भेदव्यवहारेण तस्य वैदिकत्वेन तद्विपरीतव्यवहारस्यावैदिकत्वमेव सिद्ध्यति ।

कैश्चित्तु सरस्वत्या उदकं मा पादिति विद्याध्ययननिषेधः परिकल्पते । तत्त प्रकरणादिविरुद्धत्वात्कपोलकल्पितमेव ।

दास्याः पुत्रः' 'अब्राह्मण' इत्यादयः शब्दाः ऋषिभिर्द्यूतव्यसनिनः कितवस्य कवषस्य निन्दार्थमेव प्रयुक्ताः । अतएव सायणेनोक्तम्—दास्याः पुत्र इत्युक्तिरधिक्षेपार्था । नहि तस्य वस्तुतः शूद्रत्वेऽधिक्षेपार्थता संभवति, तस्य सत्यत्वेन तादृगुक्तेरपमानजनकत्वाभावात् । नहि दासीपुत्रः तथोक्तः सन्नात्मनोऽवमानं मनुते । गुणेषु दोषारोपणमसूया । अर्थात् दोषेषु गुणारोपणमप्यसूया । गुणेषु गुणारोपणं, दोषेषु दोषारोपणञ्च स्तुतिः ।" ( स० प्र० ४ समुल्लासे ) इति रीत्याऽपि शूद्रस्य शूद्रत्वोक्तिः स्तुतिरेव नाधिक्षेपः । 'नादिन्याक्रोशे पुत्रस्य' ( पा० सू० ८।४।४८ ) इति सूत्रेण पुत्रादिनी त्वमसि पापे इति प्रयोगेऽसत्यत्वेनाक्रोशवशादेव पुत्र शब्दस्य द्वित्वं निषिद्धम् ।

पुत्रादिनी सर्पिणीत्यत्र सत्यत्वेनाक्रोशाभावाद्‌द्वित्वं भवत्येव । एवमेव दासीपुत्रस्य दासीपुत्रत्वोक्तिर्नाधिक्षेपार्था संभवति सत्यत्वात् । एवमेवाब्राह्मणस्याब्राह्मणत्वोक्तिरपि । ब्राह्मणस्य दासीपुत्रस्यैव तथोक्तिरधिक्षेपार्था संभवति, मिथ्यात्वात् । 'षष्ठ्या आक्रोशे' ( पा० सू० ६।३।२२ ) इतिसूत्रस्थाक्रोशपदानुवृत्त्या 'पुत्रेऽन्यतरस्या' मिति सूत्रेणाक्रोशार्थे एव पुत्रशब्दे विकल्पेनालुक् समासो भवतीत्युक्तम् । तदुदाहरणम् दास्याः पुत्रः, दासीपुत्रः इति । अतत्त्ववचनमेवाक्रोशः । तत्त्ववचने तु समासेऽलुक्समासता सर्वथा न भवति । व्यस्तता कामं भवति । तेन श्रुतौ दास्याः पुत्र इति समासयुक्त एव शब्द आक्रोशबोधकः । अतः कवषः शूद्रापुत्रो न सिद्ध्यति । किन्तु ब्राह्मण एव सन् द्यूतव्यसनित्वात् दास्याः पुत्र इति शब्देन निन्दितः । यथा व्याकरणज्ञानमन्तरा 'नताद् ब्राह्मणम्' इत्यत्र 'सुपां सुलुक्पूर्वसवर्णाच्' ( पा० ७।१।३९ ) सूत्रानुसारेण नतादिति द्वितीयान्तमपि पञ्चम्यन्तं बुद्ध्यते । यथा 'देवानांप्रिय' इति अलुक्समासान्तशब्दस्य विदुषांप्रिय इत्यर्थोऽवगम्यते, तथैव दास्याः पुत्र इत्यलुक् समासान्तशब्दो निन्दितब्राह्मणरूपोऽशूद्रार्थकोऽप्यनभिज्ञैः शूद्रार्थकोगृह्यते ।

कालिदासप्रणीतेऽभिज्ञानशाकुन्तले द्वितीयाङ्के विदूषकेन सेनापतये 'दास्याः पुत्र' इति शब्दः प्रयुक्तः । 'गच्छ भो दास्याः पुत्र ? ध्वंसितस्ते उत्साहवृत्तान्तः । न चात्र सेनापतिः शूद्र एवेति वक्तुं युक्तम् । तस्य संस्कृतभाषित्वेन नाटकरीत्याऽशूद्रत्वनिश्चयात् । शूद्रस्य प्राकृतभाषित्वमेवेति नाटकरीतिः । तस्मादनादिकालादेव गालिप्रदान एव 'दास्याः पुत्र' इति शब्दः प्रयुज्यते ।

मृच्छकटिके च प्रथमाङ्के विदूषकेन 'एते खलु दास्याः पुत्राः अर्थाः' इति धनाय दास्याः पुत्र इतिशब्दः प्रयुक्तः । नह्यर्थस्य शूद्रत्वं संभवति । तत्रैव नाटके तृतीयाङ्के 'किमत्र उज्जयिन्यां कोपि चौरो नास्ति, य एतद् दास्याः पुत्रम् सुवर्णभाण्डं नापहरति ।' अत्र तत्पात्ररक्षापरित्रस्तोऽधिचिक्षेपिषुरेव विदूषको वक्ति । पञ्चमाङ्के दुर्दिनमपि दास्याः पुत्रशब्देनाधिक्षिप्तम् । शाकुन्तलस्य द्वितीयाङ्केऽपि विदूषकेन 'त्वं तावद् दास्याः पुत्रोटवीतोऽटवीमाहिण्डमानो यावत् नरनासिकालोलुपस्य कस्यापि जीर्णर्क्षस्य मुखे निपतितो भव' इति सेनापतिरधिक्षिप्तः । षष्ठेऽङ्के 'ही ही भोः एष दास्याः पुत्रः कुसुमरसपाटच्चरो दुष्टमधुकरस्तत्रभ-

वत्याः वदनकमलमभिलषति' इति भ्रमरोऽपि' तेनैव शब्देनाधिक्षिप्तः। न च मधुपस्य वस्तुतः शूद्रत्वं संभवति। मृच्छकटिकनिर्माता शूद्रकः भगवद्दत्त लिखितभारतवर्षीयबृहदितिहासपुस्तकानुसारेण कलिसंवत् २६४५ वर्षे-ख्रिस्तीयसंवत्सरात् पूर्वं ४५५ वर्षे आसीत्। तस्मिन्नाटके प्रथमेऽङ्के 'आः दास्या पुत्र जूर्णवृद्ध' इति सूत्रधारेण जूर्णवृद्धेति ब्राह्मणः संबोधितः। यद्येतेषु प्रयोगेषु दास्याः पुत्रशब्देन शूद्रो न गृह्यते, तर्हि श्रुतौ दास्याः पुत्र-शब्देन कवषः शूद्र इतिकथं निर्धारयितुं शक्यः ?।

यथा श्रीदयानन्देन पोप-गवगण्ड-कजर-चाण्डालवर्णोत्पन्न-आदिसम्बोधनैर्वञ्चकाः भर्त्सितास्तथैव ऋषिभिरपि द्यूतव्यसनी कवषोऽपि भर्त्सितः। यथा पूर्वोक्तैः शब्दैरधिक्षेप एव विवक्षितस्तथैव प्रकृतेऽपि बोध्यम्। यथा वा 'अविद्यायामन्तरे वर्तमाना स्वयं धीरा पण्डितंमन्यमानाः। दन्द्रम्यमाणाः परियान्ति मूढा अन्धेनैव नीयमाना यथान्धाः' ( मुण्डक० १।२।८ ) यथा वा 'असुतृप उक्थशासश्चरन्ति ( ऋ० सं० १०।८२।७ ) इति च मन्त्रेऽपि कर्मठा आक्रुष्टास्तथैव ऐतरेयब्राह्मणे ऋषिः कवषः दास्याः पुत्र इत्यादि शब्दैराक्रुष्टः। यथा वा कुत्सशत्रुः 'निमायावान् अब्रह्मादस्युरर्त्त' ( ऋ० सं० ४।१६।६ ) इतिमन्त्रे अब्रह्मादिशब्दैरधिक्षिप्तस्तथैव कवषोऽपि तादृशैः शब्दैरधिक्षिप्तः। यथा मन्त्रे 'मायावान्' तथैव ब्राह्मणे कितवः, मन्त्रे यथा 'अब्रह्मा' तथैव ब्राह्मणे 'अब्राह्मणः' यथामन्त्रे 'दस्यु'स्तथा ब्राह्मणे दास्याः पुत्रः'। ब्रह्मब्राह्मणशब्दौ समानार्थकौ। "समानार्थावेतौ ब्रह्मन्शब्दो ब्राह्मणशब्दश्च। अतश्च समानार्थयोरेकेन विग्रहः।" (५।४।१।७) मन्त्रे अब्रह्मा शब्दो शूद्रार्थबोधकः। 'वेदोक्तकर्मस्वास्तिक्य रहितः' इति सायणेन तदर्थकरणात्। दस्युशब्दस्य शत्रुरर्थः कृतः। 'स्त्रियं दृष्ट्वाय कितवं' ( ऋ० सं० १०।३४।११ )।

मन्त्रे गालिप्रदानार्थमेव द्यूतव्यसनो कितवो वृषलशब्देनोक्तः। अतएव सायणेन वृषल इत्यस्य वृषलकर्मा इत्यर्थः कृतः। किञ्च यावत्पर्यन्तं कवषस्य पित्रोश्शूद्रत्वं प्रमाणैर्न सिद्ध्येत् तावदन्यपरैरधिक्षेपार्थैः शब्दैस्तस्य शूद्रत्वं न सिद्ध्यत्येव। कितवशब्दसान्निध्येन अब्राह्मणशब्दोऽपि अप्रशस्तब्राह्मण-बोधकः नतु ब्राह्मणभिन्नपरः। यथा 'अपशवो वा अन्ये गो अश्वेभ्यः' अत्र अपशुशब्दो न पशुभिन्नपरः, किन्त्वप्रशस्तपशुपर एव। गोऽश्वादिभिन्न

महिषादीनां पशुभिन्नत्वाभावात्। यथा वा 'दस्युः' 'अमानुषः' ( ऋ० सं० १०।२२।८ ) मन्त्रे दस्युरमानुषः उक्तः । तत्राप्यप्रशस्तमनुष्य एवार्थः। न मनुष्यभिन्नत्वमर्थः । प्रत्यक्षविरुद्धत्वात्।

अतएव सायणेन मनुष्यसंव्यवहाराद् बाह्यः, असुरप्रकृतिः इत्युक्तम्। तथैवात्रापि ब्राह्मणसंव्यवहाराद् बाह्यः अब्राह्मण उक्तः, अब्राह्मणप्रकृतिर्ग्राह्यो द्यूतस्य तदप्रकृतित्वात्।

किञ्च दास्याः पुत्र-शब्देन कवषस्य शूद्रत्वे सिद्धेऽब्राह्मणशब्द-प्रयोगो व्यर्थ एव स्यात्। शूद्रस्याब्राह्मणत्वे संशयाभावात् । अब्राह्मणशब्देन तु क्षत्रिय-वैश्ययोरपि ग्रहणसंभवः । शूद्रपुत्रत्वे तु सिद्धेऽब्राह्मण-शब्दप्रयोगः सर्वथा व्यर्थ एव स्यात्। तस्मात्सर्वे चैते शब्दाः निन्दार्था एव, न कवषस्य शूद्रत्व-बोधनपराः। तेनाप्रशस्तोऽयं ब्राह्मणः कथमनेन दीक्षा गृहीता इत्येव ऋषीणां तात्पर्यमासीत्। षट्सु नञर्थेषु-अप्राशस्त्यस्यापि गणितत्वात्। तत्सदृशः-अब्रा-ह्मणः, अभावः-अपापम्, तद्भिन्नः-अनश्वः, अल्पः-अनुदरा कन्या, अप्रशस्तः-अपशवो वा अन्ये गोऽश्वेभ्यः, विरुद्धः अधर्मः, यथा प्रशस्तपशुगोऽश्वा-द्यपेक्षया महिषादयोऽपशवः अप्रशस्त पशव एव, तथैव द्यूतव्यसनित्वात् कवषः प्रशस्तब्राह्मणापेक्षया अप्रशस्तब्राह्मण इति हेतोरब्राह्मण उक्तः ।

अतएव नञ् (पा०२।२।६) सूत्रे महाभाष्ये गुणहीनब्राह्मणोदाहरणेऽब्राह्म-णशब्दः प्रयुक्तः। 'अब्राह्मणोऽयं यस्तिष्ठन्मूत्रयति······यस्तिष्ठन् भक्षयति 'तपः श्रुतयोरभावात् निन्दयात्र अब्राह्मणशब्दप्रयोगः। तत्र जातिमात्रेऽवयवे समुदाय-रूपारोपात् ब्राह्मणशब्दप्रयोगः । नञा तु स्वाभाविकी तपः श्रुतनिवृत्तिर्द्योत्यत इति कैयटः । तपः श्रुतयोनिसमुदाये ब्राह्मणशब्दस्य मुख्यत्वात्। तदवयवे जातिमात्रे तदभावात्। समुदायारोपात्। अब्राह्मणशब्दे नञा तन्निवृत्तिर्द्योत्यते। नहि यो ब्राह्मणस्तिष्ठन् मूत्रयति स ब्राह्मणभिन्नो भवति । तस्मादैतरेयकण्डि-कास्थेनाब्राह्मणशब्देनैव कवषस्य ब्राह्मणत्वं सिद्धयति । यद्यत्र अब्राह्मणशब्दो न स्यात्तदा ब्राह्मणत्वनिर्णयासंभव एव स्यात्। 'दास्याः पुत्र' शब्देन समभि-व्याहृतेनाब्राह्मणशब्देन तु पूर्वोक्तरीत्या अप्रशस्तब्राह्मणत्वं स्पष्टं निर्णीयते । अब्राह्मणशब्देन गालिदानं ब्राह्मणस्यैव भवति, नान्यस्य। अन्यथा दास्याः पुत्र-शब्देनैव तस्याब्राह्मणत्वप्रतीतौ पुनरब्राह्मणत्वोक्तिरपार्थैव स्यात्। अतएव साय-

णेनोक्तं कितवो द्यूतकारः तस्मादब्राह्मणोऽयमीदृशो ( द्यूतदेवनव्यसनी ) नोऽस्माकं शिष्टानां मध्ये स्थित्वा कथं दीक्षां कृतवान् इति तेषामभिप्रायः। न दासीपुत्रत्वेन ब्राह्मण उक्तः, किन्तु कितवत्वेन। अब्राह्मशब्दोऽतस्तस्याप्रशस्तत्व एव पर्य्यवस्यति। तदभावेऽपि निन्दार्थं तच्छब्दप्रयोगः। 'पुंयोगादाख्यायाम्' (४।१।४८) इति पणिनिसूत्रे महाभाष्ये चतुर्भिः प्रकारैरतस्मिन् स इत्येतद्भवति। तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्यात् च। तत्र तात्स्थ्यात् मञ्चाः हसन्ति, गिरिर्दह्यते। ताद्धर्म्यात्—जटिनं यान्तं ब्रह्मदत्त इत्याह। ब्रह्मदत्ते यानि कार्य्याणि जटिन्यपि तानि क्रियन्ते इत्यतो जटी-ब्रह्मदत्त उच्यते। तत्सामीप्यात्—गङ्गायां घोषः, कूपे गर्गकुलम्। तत्साहचर्यात्—कुन्तान् प्रवेशय, यष्टीः प्रवेशय इति।

अत्र कैय्यटेनोक्तम्—'आरोप्यते ताद्रूप्यम्, नतु मुख्यमित्यर्थः। बालेषु मञ्चत्वारोपात् मञ्चशब्दप्रवृत्तिः; हसन्तीति पदान्तरयोगात् विज्ञायते। प्रकृतेऽपि तथैव कितवशब्दयोगात्कवषेऽब्राह्मणशब्दप्रयोगः। आरोपाद्भवति। ब्रह्मदत्तवद्धर्मलाभाज्जटिनि तद्रूपारोपः। सिंहो माणवको गौर्वाहीक इत्यादावपि ताद्धर्म्यात्ताद्रूप्यारोपात्तच्छब्दप्रवृत्तिः। तदुक्तं हरिणा—

'गोत्वानुषङ्गो वाहीके निमित्तात्कैश्चिदिष्यते।
अर्थमात्रविपर्यस्तशब्दः स्वार्थव्यवस्थितः।' वाक्यपदीये।

यथा हसन्ति पदयोगात् मञ्चस्थितबालके मञ्चशब्दप्रयोगः, तथैव 'कितवोऽब्राह्मणः' इत्यत्र कितवशब्दयोगात् निन्दार्थमब्राह्मणशब्दप्रयोगः।

न्यायदर्शने ( २।२।६३ ) इति सूत्रावतरणिकायां वात्स्यायनेनोक्तम्—'निमित्तादतद्भावेऽपि तदुपचारो दृश्यते खलु, सूत्रानुसारेण सहचरण १ स्थान २ तादर्थ्य ३ वृत्त ४ ब्राह्मण १ मञ्च २ कट ३ राज ४ पुरुषेषु अतद्भावेऽपि तदुपचारः। उदाहरणानि च तत्र भाष्ये द्रष्टव्यानि।''वृत्ताद् यमो राजा, कुबेरो राजा इति वस्तुतो राज्ञो यमत्व-कुबेरत्वाभावेऽपि वृत्तात् आचरणात्तद्वत्त्वं व्यवह्रियते, तथैव कवषेऽपि द्यूतव्यसनित्वेन वृत्तादब्राह्मणत्वम्।

अथवा ब्रह्मवेदस्तज्ज्ञानाद् ब्राह्मणस्तद्भिन्नो अब्राह्मण इति वेदानभिज्ञः कवष इति अब्राह्मणः, 'अक्षैर्मा दीव्य' ( ऋ० सं० १०।३४।१३ ) इति वेद

मन्त्रमपि न जानाति । तेनाब्राह्मण उक्तः । इदानीं यावत्सूक्तस्यादर्शनात् स कितव शब्देन संबोधितः । तेनैव लक्षणया परिभाषया यौगिकवृत्त्या वा अब्राह्मण उक्तः ।

अतएव वीरमित्रोदये उपनयनप्रकरणे उपनेयनिर्णयप्रसङ्गे ३९२ पृष्ठे 'दास्याः पुत्रः कितवोऽब्राह्मण इति आक्षेपमात्रम्, नतु वस्तुगत्यैव तन्मातुर्दासीत्वम्' इति भाष्यव्याख्यानात् । अतएव दास्याः पुत्र इत्युक्तिरधिक्षेपार्था । कितवो द्यूतकारस्तस्माद् अब्राह्मणोऽयम ( अप्रशस्तब्राह्मणोयम् ) ईदृशो नः अस्माकं शिष्टानां मध्ये कथं दीक्षां कृतवान् इति तेषामभिप्रायः' इति सायणोक्तिः संगच्छते । शूद्रापुत्रोऽयमस्माकं ब्राह्मणानां मध्ये कथं प्रविष्ट इति सायणेन न व्याख्यातम् । सरस्वत्या पवित्रमुदकमयं पापिष्ठो मा पिबतु इति निन्दार्थमेव पापिष्ठशब्दः सायणेनोपात्तः । तस्य शूद्रापुत्रत्वे तु न किञ्चिदपि प्रमाणम् । प्रत्युत ब्रह्मपुराणे—

'पैलूष इति विख्यातः कवषस्य सुतो द्विजः ।' ( १३६।२ )

इति पद्ये कवषस्य द्विजपितृत्वात् द्विजत्वमेव विज्ञायते । द्विजशब्दस्य क्षत्रियादिपरत्वेऽपि तस्य शूद्रत्व-साधकः पक्षः पराणुद्यते । सर्वथाऽपि नोक्तब्राह्मणेन शूद्रस्य कर्मणा तपसा वा ब्राह्मणत्वं सिद्धयति ।

किञ्च ऋषीणां स यज्ञ आसीन्नानृषीणाम् । कवषस्तु द्यूतकारत्वेनाप्रशस्तब्राह्मणत्वादनृषित्वात्तथाधिक्षिप्तो निराकृतश्च । ऋ० सं० १८।३४ )

अक्षसूक्तस्य कवषद्रष्टृकत्वेनापि कवषस्य द्यूतकारत्वं विज्ञायते । कवषस्य बोधनार्थमेव देवताभिस्तन्मुखादनेकवारं कितवशब्दः प्रयोजितः । तेन तस्य यज्ञप्रवेशेन ऋषीणां क्रोधः सञ्जातः । तस्यानृषेऋषियज्ञप्रवेशे 'दास्याः पुत्रः कितवोऽब्राह्मण' इति शब्दा आक्रोशार्थमृषिभिः क्रोधात्प्रयुक्ताः । पश्चाद्देवतानां कृपया अपो नप्त्रीयसूक्तदर्शनात्तस्यर्षित्वे निश्चिते देवतानामनुग्रहं विज्ञाय तस्य कैतवदोषमुपेक्ष्यापि तस्मिन्नृषियज्ञे तत्प्रवेशः कारितः ।

एतेन कवषो अब्राह्मणो ब्राह्मणः सम्पन्न इति कथमपि न सिध्यति । अनृषिः सन् स देवानुग्रहादृषिः सम्पन्न इत्येव सिध्यति । मन्त्रद्रष्टृत्वादृषिस्तु क्षत्रियादिरपि भवत्येव । निरुक्ते ( ६।२८।१ ) इत्यत्र 'जालबद्धा मत्स्या ऋषयः' इत्युक्तम् ।

यत्तु केनचिन्मन्त्रार्थद्रष्टृत्वात्तस्य ब्राह्मण्यं ज्ञात्वा ऋषिभिः स यज्ञ आहूतः' इत्युक्तम्, तन्निर्मूलत्वात्पराहतम्। 'विदुर्वा इमं देवा उप इमं ह्वयामहै' (ऐ० ब्रा० ११९) इति ब्राह्मणवचनेन येषामाराधनार्थं यज्ञः क्रियते तेषामनुग्रहं विदित्वा स यज्ञे प्रवेशितः। 'ते भृग्वादयः परस्परमब्रुवन् इमं कवषं देवाः सर्वेऽपि विदुर्वै जानन्त्येव। अतोऽस्य कितवत्वादिदोषो नास्ति। तस्मादिममस्मत्समीपं प्रत्याह्वयामः' इति सायणोक्त्या च तस्य कितवत्वेनाप्रशस्तत्वमेव न शूद्रत्वम्। 'अक्षैर्मा दीव्यः' (ऋ० सं० १०।३४।१३) इति सूक्तस्य द्रष्टृत्वेन द्यूतक्रीडाया अपि तस्य घृणा जाता।

किञ्च संतुष्यतु न्यायेन कवषस्य दासीपुत्रत्वाभ्युपगमेऽपि शूद्रापुत्रत्वं न सिद्ध्यति। द्रौपद्यादीनामपि विराटगृहे सैरन्ध्रीरूपेण दासीत्वस्मरणात्, हरिश्चन्द्रपत्न्याः शैव्यायाः कस्यचिद्दासीत्वप्राप्तावपि शूद्रत्वाभावाच्च। न च तावता रोहिताश्वस्य दासीपुत्रस्यापि शूद्रत्वम्, ययातिपत्न्याः शर्मिष्ठायाः देवयानीदासीत्वेऽपि न शूद्रात्वम्, न वा तत्पुत्राणां शूद्रत्वम्। पत्न्यपि पत्युर्दासी भवति। न तावता सा शूद्रा भवति। विनतायाः कद्रूदासीत्वेऽपि न गरुडस्य शूद्रत्वम्।

यत्तु केनचिदिलूषाख्याया दास्याः पुत्रः कवष इत्युक्तम् तदपि, निर्मूलम्। तादृशस्येतिहासस्याभावात्। इलूषस्तु कवषस्य पिता। इलूषस्यापत्यमैलूष इति तद्व्युत्पत्तेः। सायणः (ऋ० सं० १०।३०।७) 'इलूषपुत्रस्य कवषस्यापत्यम्' इत्याह। इलषापुत्रस्येत्यनुक्तेश्च।

ऐतरेयब्राह्मणभाष्येऽपि तेषां मध्ये कश्चित् इलूषाख्यस्य पुरुषस्य पुत्रः कवषनामकः इत्युक्तया सायणेन इलूषाख्यस्य पुरुषस्यैव पुत्रः कवषो मन्यते। यदि कवषो दासीपुत्रः स्यात्तदा तन्नाम्ना प्रसिद्धः स्यात्। तदभावादिलूषाख्यस्य पुरुषस्य पुत्रस्य कवषस्य निन्दार्थमेव दास्याःपुत्रशब्दप्रयोगः। तस्य मातुर्दास्या नामाप्रसिद्धेः। तन्नाम्ना च कवषस्याव्यवहाराद्दास्याः पुत्रत्वोक्तिर्निन्दार्थैव मन्तव्या।

एतेन 'भारत वर्ष में जाति भेद' पुस्तके क्षितिमोहनसेनमहोदयेन यदुक्तमिलूषाख्या काचिच्छूद्रा दासी तस्याः पुत्र ऐलूषः (२५ पृ०) तदप्यपास्तम्, टाबन्तस्येलूषाशब्दस्याभावेन तदयुक्तः। कवषस्य दासीपुत्रत्वं सुधारकाणां कपोलकल्पितमेव।

यत्तु केनचिदुक्तं 'ऋग्वेदस्याध्ययनेनापूर्वविषयावभासनादृषिभिः कवष आहूत' इति, तदपि निराधारम्। ऐतरेयब्राह्मणेऽन्यत्र वा तदनुक्तेः। ऐतरेय-ब्राह्मणे तु 'स बहिर्धन्व उदूढः पिपासया वित्त एतद् अपोनप्त्रीयमपश्यत्' (२१९) इति तत्क्षणमेव देवानुग्रहेण सूक्तस्फुरणमुक्तम्। तस्य वेदाध्ययनतदर्थ-प्रतिभानादिकं न तत्रोक्तम्। ३१।३२।३३।३४ सूक्तन्यपि प्रतिभातानि। अन्यत्तु कल्पनामात्रं निराधारमेव।

एतेन 'सम्पूर्णस्य ऋग्वेदस्याध्ययनादभिनवाभिनवविषयाणां हृदयङ्गम-करणात् ऋषिभिराहूय स आचार्यत्वेन वृत' इति रजनीकान्तशास्त्रि-णोप्युक्तिर्निराधारैव, ऐतरेयब्राह्मणविरुद्धत्वात्। यज्ञान्निःसारणाह्वान-योर्मध्ये मासाद्यन्तराभावात्। कथमत्यल्पावधौ तदध्ययनार्थावधारणसंभवः? यज्ञारम्भकाले दीक्षाप्रसङ्गे स ऋषिभिर्निष्कासितः प्रत्यागमनात् प्रागेव ऋषीणां समक्ष एव कवषस्यापोनप्त्रीयं सूक्तमध्ययनमन्तरैव प्रतिभातम्। तादृक् चमत्कृत्यैव देवानुग्रहं विज्ञाय स तस्मिन्नेव यज्ञे तैः संनिवेशितः। सातवलेक-रेणापि यदुक्तम् 'नीचकुलोत्पन्नमुक्त्वा कवषो यैस्त्यक्तस्तैरेव तस्य वेदविद्यां ज्ञात्वा यज्ञे स सन्निवेशितः' इति, तदपि निर्मूलमेव। यदि पूर्वमविद्वानासीत्तर्हि कथं कतिभिश्चित्क्षणैः विद्वान् संवृत्तः? यदि पूर्वमेव विद्वानासीत्तदा कथम-ब्राह्मण इत्युक्त्वा स बहिष्कृतः।

वस्तुतः तस्मिन्यज्ञे संमिलिता मन्त्रस्तोमद्रष्टार ऋषयः आसन्। कव-षस्यर्षित्वाभावात्स अब्राह्मणः, यौगिकवृत्त्या ब्रह्म मन्त्रानभिज्ञः, अनृषिः, कितवः, दास्याः पुत्रः इति निन्दया निराकृतः। यदि दासीपुत्रत्वात् स निरा-कृतो भवेत्तदार्वादिमतरीत्येदानीमपि तस्य दासीपुत्रत्वमस्त्येवेति कुतः स परिगृहीतः? तस्माद् गालिप्रदानार्थमेव दास्याःपुत्रशब्दप्रयोगो न तस्य दासीपुत्रत्वशूद्रत्व-ज्ञापनार्थो वा।

तपोविशेषाद्देवतानुग्रहान्मन्त्रद्रष्टृत्वे जाते ऋषित्वं भवति। तस्मिन्सम्पन्ने तस्य तत्र प्रवेशो युक्त एव। पश्चाद्देवानुग्रहादेव द्यूतविरतये (ऋ० सं० १०। ३४) सूक्तप्रतिभानात् कितवत्वनिवृत्तिरपि जाता। अब्राह्मणत्वेऽपि तस्य शूद्रत्वं न सिद्ध्यति, क्षत्रियादीनामप्यब्राह्मत्वाविशेषात्। ऋषित्वमपि तत्र न व्याहतम्, देवशुन्याः सरमाया अपि ऋषित्वप्राप्तेः। ( निरुक्ते

११।२७।१ ) एतेन 'परिश्रमेण कवषो ब्राह्मणत्वं प्रतिपेदे' इत्यप्यपास्तम्, प्रमाणाभावात्। देवकृपामन्तरा तत्रैतरेये तत्परिश्रमस्याप्रामाणिकत्वात्। अद्विजानामव्रतानामनधिकारो वेद इति तु कवषस्य बहिष्कारादेव सम्यग्ज्ञायते। 'वेदमाता प्रचोदयन्तां पावमानी द्विजानामिति ( अ० सं० १९।७१।१ ) द्विजानामेव तत्राधिकारश्रवणं स्पष्टमेव। शूद्रत्वे कवषस्य प्रथमत एव यज्ञदीक्षायां प्रवेशो न स्यात्। 'ब्राह्मणो वैव राजन्यो वा वैश्यो वा ते हि यज्ञियाः' ( ३।१।१।९ श० ब्रा० ) 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्त' ( तै० सं० ७।१।१।६ ) द्विजातय इवेज्याभिः ( मनुः ८।३११ ) इत्यादिवचनेभ्यः। तस्माद्द्यूतव्यसनित्वादप्रशस्तोऽपाङ्क्तेयो ब्राह्मणोऽपि यज्ञान्निराकृत इति मन्तव्यम्।

## मतङ्गचाण्डालवृत्तान्तः

यत्तु-'मतङ्गस्य चाण्डालस्य ब्राह्मणत्वप्राप्तिरित्युक्तम्' तन्न, सतां प्रमाणविरुद्धत्वात्। तथाहि—तपस्यया ब्राह्मणत्वप्राप्त्यर्थं प्रार्थयानं मतङ्गम्प्रति ब्राह्मण्यमतिदुर्लभं बहुजन्म साध्यमितीन्द्रेण स्पष्टमुक्तम्। ( म० भा० अनुशासनपर्व २७।२८।२९ अध्यायेषु )

'ब्राह्मण्यं दुर्लभं तात प्रार्थयानो न लप्स्यसे' ( २८।२ )
वृणीष्व काममन्यं त्वं ब्राह्मण्यं हि सुदुर्लभम्।' (२८।१६)
चण्डालयोनौ जातेन (ब्राह्मण्यं) नावाप्यं वै कथञ्चन।
अन्यं कामं वृणीष्व त्वं मा वृथा तेऽस्त्वयं श्रमः।' ( २९।४ )
'मतङ्ग ब्राह्मणत्वं ते विरुद्धमिह दृश्यते।' २९।८
बह्वीस्तु संविशन् योनीर्जायमानः पुनः पुनः॥ ११॥
पर्य्याये तात कस्मिंश्चिद् ब्राह्मण्यमिह विन्दति॥
'तमुत्सृज्येह दुष्प्रापं ब्राह्मण्यमकृतात्मभिः॥ २९।१२॥
अन्यं वरं वृणीष्व त्वं दुर्लभोऽयं हि ते वरः॥' (२९।११।१३)
'एवमेतत्परं स्थानं ब्राह्मण्यं नाम भारत।
तच्च दुष्प्रापमिह वै महेन्द्रवचनं यथा॥' ( २९।२६ )
ब्राह्मण्यं तात दुष्प्राप्यं वर्णैः क्षत्रादिभिस्त्रिभिः।' (२७।५ )

न च स्थाने मतङ्गो ब्राह्मण्यं नालभद् भरतर्षभ।
चाण्डालयोनौ जातो हि कथं ब्राह्मण्यमाप्तवान्।
( म० भा० अनु० ३।१९ )

इति युधिष्ठिरप्रश्नेन तस्य ब्राह्मण्यप्राप्तिर्ज्ञायते इति वाच्यम्, प्रश्नस्य पूर्वपक्षत्वेन सिद्धान्ते ब्राह्मण्यासिद्धेः स्पष्टत्वात्।

वस्तुतस्तु 'स्थाने मतङ्गो ब्राह्मण्यं नालभद्भरतर्षभ।

चण्डालयोनौ जातो हि"......इति तृतीयपादान्तश्लोको मतङ्गकथाशेषः। कथं ब्राह्मण्यमाप्तवान् इति। चतुर्थपादस्तु-

'देहान्तरमनासाद्य कथं स ब्राह्मणोऽभवत्'? (३।१७)

कथं प्राप्तं महाराज क्षत्रियेण महात्मना।

विश्वामित्रेण धर्मात्मन् ब्राह्मणत्वं नरर्षभ॥ (३।१-२)

विश्वामित्रः शरीरान्तरधारणमन्तरैव कथं ब्राह्मण्यं प्राप्तवान्। मतङ्गश्चाण्डालयोनौ जातो ब्राह्मण्यं नालभत् इति स्थाने युक्तमेव। परन्तु विश्वामित्रेण कथं ब्राह्मण्यं प्राप्तमिति वर्णय इति तदर्थः। अन्यथा उत्तरवचनविरोधध्रौव्यात्। रामायणीयमहामुनिर्मतङ्गस्तु ततो भिन्न एव। तयोरैक्ये प्रमाणाभावात्। महाभारतस्य रामायणादर्वाचीनत्वेन तदैक्ये स एव मतङ्गो महामुनिरूपेण रामायणे प्रसिद्ध इति वेदव्यासेनावश्यमुच्येत। भारतस्थस्य मतङ्गस्य गत्यन्तरप्राप्तिस्तत्र स्पष्टमुक्ता।

मातङ्ग उवाच—

इदं वर्षसहस्रं वै ब्रह्मचारी समाहितः।

अतिष्ठमेकपादेन ब्राह्मण्यं नाप्नुयाङ् कथं॥

(अनुशासने २८ अ० ३ श्लोकः)

शक्र उवाच—

चण्डालयोनौ जातेन नावाप्यं वै कथञ्चन।

अन्यं कामं वृणीष्व त्वं मा वृथा तेऽस्त्वयं श्रमः॥ ४॥

एवमुक्तो मतङ्गस्तु भृशशोकपरायणः।

अध्यतिष्ठद् गयां गत्वा सोऽङ्गुष्ठेन शतं समाः॥ ५॥

सुदुर्वहं वहन् योगं कृशो धमनिसन्ततः।

त्वगस्थिभूतो धर्मात्मा स पपातेति नः श्रुतम्॥

तं पतन्तमभिद्रुत्य परिजग्राह वासवः॥ ६॥

शक्र उवाच—

मतङ्ग ब्राह्मणत्वं ते विरुद्धमिह दृश्यते ।
ब्राह्मण्यं दुर्लभतरं संवृतं परिपन्थिभिः ॥ ८ ॥
पूजयन् सुखमाप्नोति दुःखमाप्नोत्यपूजयन् ॥
बह्वीस्तु संविशन् योनीर्जायमानः पुनः पुनः ॥११॥
पर्याये तात कस्मिंश्चित् ब्राह्मण्यमिह विन्दति ।
तदुत्सृज्येह दुष्प्रापं ब्राह्मण्यमकृतात्मभिः ॥१२॥
अन्यं वरं वृणीष्व त्वं दुर्लभोऽयं हि ते वरः ।

मतङ्ग उवाच—

किं मां तुदसि दुःखार्त्तं मृत मारयसे च माम् ॥१३॥
त्वां तु शोचामि यो लब्ध्वा ब्राह्मण्यं न बुभूषसे ।
ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्वर्णैः शतक्रतो ॥१४॥
सुदुर्लभं सदावाप्यं नानुतिष्ठन्ति मानवाः ।
यः पापेभ्यः पापतमस्तेषामधम एव सः ।
ब्राह्मण्यं यो न जानीते धनं लब्ध्वेव दुर्लभम् ।
दुष्प्रापं खलु विप्रत्वं प्राप्तं दुरनुपालनम् ।
एकारामो ह्यहं शक्र निर्द्वन्द्वो निष्परिग्रहः ॥१७॥
अहिंसादममास्थाय कथं नार्हामि विप्रताम् ।
दैवं तु कथमेतद् वै यदहं मातृदोषतः ॥१८॥
एतामवस्थां संप्राप्तो धर्मज्ञः सन् पुरन्दरः ।
नूनं दैवं न शक्यं हि पौरुषेणातिवर्त्तितुम् ॥१९॥
यदर्थं यत्नवानेव न लभे विप्रतां विभो ।
एवं गते तु धर्मज्ञ दातुमर्हसि मे वरम् ॥२०॥
यदि तेऽहमनुग्राह्यः किंचिद् वा सुकृतं कृतम् ॥

वैशम्पायन उवाच—

वृणीष्वेति ततः प्राह ततस्तं बलवृत्रहा ।
चोदितस्तु महेन्द्रेण मतङ्गः प्राब्रवीदिदम् ।
यथा कामविहारी स्यां कामरूपी विहङ्गमः ॥ २२ ॥

ब्रह्मक्षत्राविरोधेन पूजां च प्राप्नुयामहम् ।
यथा ममाक्षया कीर्त्तिर्भवेच्चापि पुरन्दर ।
कर्त्तुमर्हसि तद्देव शिरसा त्वां प्रसादये ॥ २३ ॥

शक्र उवाच—

छन्दो देव इति ख्यातः स्त्रीणां पूज्यो भविष्यसि ।
कीर्तिश्च तेऽतुला वत्स त्रिषु लोकेषु यास्यति ॥
एवं तस्मै वरं दत्त्वा वासवोऽन्तरधीयत ॥ २५ ॥
प्राणांस्त्यक्त्वा मतङ्गोऽपि संप्राप्तः स्थानमुत्तमम् ।
एवमेतत् परं स्थानं ब्राह्मण्यं नाम भारत ।
तच्च दुष्प्रापमिह वै महेन्द्रवचनं यथा ।

( अनुशासन २६ अध्याये )

एतेन स एव मतङ्गो वाल्मीकिरामायणप्रसिद्धो महर्षिर्मतङ्गः संजातः इत्युक्तिर्मूढजनप्रतारणायैव । उपर्युक्तं 'प्राणांस्त्यक्त्वा मतङ्गोऽपि संप्राप्तः स्थानमुत्तममिति महाभारतवचनविरोधाद् ॥

वृत्तेनादरणीयत्वसमर्थनम् ।

ननु 'कर्मभिः शुचिभिर्देवि शुद्धात्मा विजितेन्द्रियः ।
शूद्रोऽपि द्विजवत्सेव्यः इति ब्रह्माब्रवीत्स्वयम् ॥ ४८ ॥
स्वभावः कर्म च शुभं यत्र शूद्रेऽपि तिष्ठति ।
विशिष्टः स द्विजातेर्वै विज्ञेय इति मे मतिः ॥ ४९ ॥
न योनिर्नापि संस्कारो न श्रुतं न च संततिः ।
कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ॥ ५० ॥
सर्वोऽयं ब्राह्मणो लोके वृत्तेन च विधीयते ।
वृत्ते स्थितस्तु शूद्रोऽपि ब्राह्मणत्वं नियच्छति ॥ ५१ ॥
ब्राह्मः स्वभावः सुश्रोणि समः सर्वत्र मे मतिः ।
निर्गुणं निर्मलं ब्रह्म यत्र तिष्ठति स द्विजः ॥ ५२ ॥

( म०भा०अ०प० १४३ )

'ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥' ( १८।४१ )

इति श्रीमद्भगवद्गीतायाम् ।

अत्र कर्मगुणस्वभावैरेव ब्राह्मणादिकमिति चेन्न —

शमो दमः तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥
शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम।
दानमीश्वरभावश्च क्षत्रकर्म स्वभावजम्॥ ४३॥'(श्री० भ० गी० १८)
'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।' (श्री० भ० गी० ३।३५)
'स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम्॥' (श्री० भ० गी० १८।४७)
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्।' (श्री० भ० गी० १८।४८)

इत्येवमादिभिः गीतावचनैः जन्मान्तरीयगुणकर्मस्वभावानुरोधेन ब्राह्मणादिजन्मप्राप्तौ ईश्वरप्रकृतिगतसत्त्वरजस्तमोगुणेष्वन्यतम प्राधान्यानुरोधेन त्रिगुणात्मप्रकृत्यनुरोधेनैवेदानीं स्वकर्माभिमुखजन्मान्तरीयसंस्कारेणाभव्यक्तगणानुरोधेनैव वा वर्णसम्बन्धितया धर्मशास्त्रेषु विहितानां शमदमादीनां शौर्य्यादीनां, कृषिगोरक्ष्यादीनां परिचर्य्यादीनाञ्च व्यवस्थापितत्वेनोक्तस्वरूपकर्मानुष्ठानमात्रतत्परः स्वस्वकर्मानुष्ठानेनेश्वरमभ्यर्च्य शुद्धान्तःकरणः सन् मुक्तो भवति। स्वधर्मातिरिक्ते नान्यधर्मेण सम्यगनुष्ठितेनापि सद्गतिं न प्राप्नोति। यस्य यो धर्मो विहितस्तस्य दुष्टत्वेऽपि तदन्यस्यादुष्टत्वेऽपि तदतिरिक्त धर्मानुष्ठाने प्रत्यवाय एवेति स्वभावः नियतस्वधर्मातिरिक्तो धर्मो नानुष्ठेय इति सिद्धत्येवेति स्वधर्मातिरिक्तं क्षत्रियादिधर्मानुष्ठाने क्षत्रियत्वादिकं प्राप्नोतीत्यर्थस्यासङ्गतत्वमेव

'न यानिर्नापि संस्कार' इत्यादीनामपि न योन्याद्यपवादे तात्पर्य्यं, किन्तु वृत्तावश्यकत्वप्रतिपादन एव तात्पर्य्यं वाक्यान्तरेषु योनेरपि ब्राह्मण्यकारणत्वप्रतिपादनात्।

यथा 'नाहं वेदैर्न तपसा न दानेन न चेज्यया।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा॥'
(श्री० भ० गी० ११।५३)

'भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप॥'
(श्री० भ० गी० ११।५४)

इत्यत्र न यज्ञादीनामपवादः, किन्तु भक्त्यावश्यकत्वप्रतिपादन एव वाक्यतात्पर्यं यज्ञादीनां विधानेनापवादासंभवात् । यथाङ्करहितानां शून्यानां शून्यत्वेऽपि वामाङ्कसन्निविष्टाङ्कशून्यानामुत्तरोत्तरं दशगुणितपदार्थबोधकत्वं तथैव भक्तिरहितानां यज्ञादीनां शून्यप्रायत्वेऽपि भक्तिसहितानां तेषां भगवदाराधनौपयिकत्वेनात्यन्तमहत्त्वपूर्णत्वमवबोद्धव्यम् ।

'वृत्ते स्थितस्तु शूद्रोऽपि ब्राह्मणत्वं नियच्छति ।'

( म० भा० अ० प० १४३।५१ )

'ब्राह्मणो वा च्युतो धर्माद्यथाशूद्रत्वमाप्यते ॥५६॥'

( म०भा०अ०प० १४३।५६ )

इत्यादिषु शूद्रब्राह्मणसदृशत्वमेवार्थः । अतएव 'शूद्रोऽपि द्विजवत्सेव्य' ( म० भा० अ० प० १४३।४८ ) इति सत्कार उक्तः । सेव्य इत्यस्य आदरणीय इत्येवार्थः ।

अतएव

'ब्राह्मणः पतनीयेषु वर्तमानो विकर्मसु ।

दाम्भिकोऽदुष्कृतः प्राज्ञः शूद्रेण सदृशो भवेत् ॥'

( म० भा० वनपर्व ) ( २१६ अ० १३ )

इति दुष्कर्मकृतः शूद्रतुल्यतोदिता ।

मनुना च 'शूद्रेण हि समस्तावद्यावद्वेदे न जायते ।' ( २।१७२ ) इत्युक्तम् ।

गोतमेनापि 'प्रागनुपनयनात् कामचार - कामवाद - कामभक्षाः इति समर्थितम् । इदमेव ब्रह्मक्षत्रविशां शूद्रसादृश्यं न तु निषिद्धमांसभक्षणादिकम् । तत एव निषिद्धवर्जमित्युक्तं गोतमेन । अतएव चाधर्मचर्य्ययोत्तमवर्णस्य जघन्यवर्णत्वापत्तिर्जातिविपरिवृत्तावुक्तम् । जघन्यवर्णस्योत्तमचर्य्ययोत्तमवर्णत्वप्राप्तिरपि 'जातिपरिवृत्तावेवोक्तमापस्तम्बेनापि जातिपरिवृत्तौ जन्मपरिवर्त्तन इत्यर्थः । जात्युत्कर्षो युगे ज्ञेयः" ( या० १।९६ ) इत्यत्रापि सप्तमे पञ्चमे युगे जात्युत्कर्ष उक्तः ।

'तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे ।

उत्कर्षञ्चापकर्षञ्च मनुष्येष्विह जन्मतः ॥'(मनु १०।४२)

मनुनापि तपो बीजादिभिर्जन्मान्तर एवोत्कर्षप्राप्तिरुक्ता ।

जात्या कुलेन वृत्तेन स्वाध्यायेन श्रुतेन च।
एभिर्युक्तो हि यस्तिष्ठेन्नित्यं स द्विज उच्यते ॥'
इत्याग्नेये वृत्तादिभिः सार्धं जातेरपि द्विजत्वे हेतुतोक्ता।
तपःश्रुतञ्च योनिश्च एतद् ब्राह्मणकारकम्।
तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥१॥
(५।१।१३ पा० सू०)

इति पतञ्जलिना तपःश्रुताभ्यां सार्द्धं योनेश्च ब्राह्मण्ये हेतुत्वमुक्तम्। 'तपः श्रुताभ्यामिति— नासौ परिपूर्णो ब्राह्मणः। जातिलक्षणैकदेशाश्रयस्तु तत्र ब्राह्मणशब्दप्रयोगः। अतएव च तस्य सर्वासु ब्राह्मणक्रियासु नास्त्यधिकारः' इति कैयटः।

'विद्या योनिः कर्म चेति त्रयं ब्राह्मणकारकम्।
सेवा संग्रहबुद्धिश्च कायाश्च पातनम् ॥'

इति पिङ्गलसूत्रव्याख्यया उपोद्घाते।

जन्मशारीरविद्याभिराचारेण श्रुतेन च।
धर्मेण च यथोक्तेन ब्राह्मणत्वं विधीयते ॥
चित्रकर्म यथानेकैरङ्गैरुन्मील्यते शनैः।
ब्राह्मणत्वमपि तद्वत् संस्कारैर्विधिपूर्वकैः ॥ (८।१९)

इति पराशरमाधवीये अङ्गिरस उक्तिः संगच्छते। 'वर्णान्तरगमन-मुत्कर्षापकर्षाभ्यां सप्तमेन पञ्चमेन (४।८ गौ० स्मृतौ) योनिस्तपः श्रुताभ्यां सहिता ब्राह्मणत्वस्य संपादिका। द्विजातीयोत्कृष्टपरम्परा कुलपरम्परागता योनिस्तु पञ्चमे सप्तमे वा जन्मनि बीजजातीयमानुलोम्यं उक्तबीजजातीयं जनयति, अन्यथाऽपकृष्टम्।

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ॥'
(म० भा० शा० प० १८८।१०)

'एकवर्णमिदं सर्वं विश्वमासीद्युधिष्ठिर।
कर्म क्रिया विभेदेन चातुर्वर्ण्यं प्रतिष्ठितम्।
सर्वे वै योनिजा मर्त्याः सर्वे मूत्रपुरीषिणः।
एकेन्द्रियेन्द्रियार्थाश्च तस्माच्छीलगुणैर्द्विजः ॥

इत्यादि वचनानामयमेवार्थो यत् ब्रह्मणा सृष्टे ब्रह्ममये जगति सर्वं ब्रह्ममयमेव ( ब्रह्मणः स्वरूपमेव )। तत्र केचिद् ब्रह्मकर्म याजनाध्ययनाध्यापनदानप्रतिग्रहरूपं षट्कर्म, नित्यनैमित्तिककाम्यरूपं कर्म च परित्यज्य क्षत्रियधर्ममाश्रित्य वैश्यधर्मं शूद्रधर्मं वाश्रित्य स्वस्वकर्मानुरोधेन जन्मान्तरे क्षत्रियत्वादिकं गताः। ये स्वस्वधर्ममपरित्यज्यैव स्थितास्ते ब्राह्मणा एवासन्। तथा च कार्यस्य कारणानुगुणत्वेऽपि मुखबाहूरुपादरूपोपाधिभेदेन तत्तद्धर्माश्रयणात् श्रुत्युक्तां तां तां जातिं गताः। तत्रापि वैपरीत्यमाश्रितास्तु यस्य धर्ममाश्रितास्तत्तुल्या अभूवन्। शान्तिपर्वणि १८९ अध्याये भगवता व्यासेन तदेव स्पष्टीकृतम्।

'ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम।
वैश्यः शूद्रश्च विप्रर्षे तद् ब्रूहि वदतां वर॥ १॥
भृगुरुवाच–जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः।
वेदाध्ययनसम्पन्नः षट्सु कर्मस्ववस्थितः॥ २॥
शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः।
नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते॥ ३॥
सत्यं दानमथाद्रोहः स वै क्षत्रिय उच्यते।
'स वैश्य इति संज्ञितः ॥
शूद्र चैतद्भवेल्लक्ष्म द्विजे तच्च न विद्यते।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः॥ ८॥

शूद्रो यत्कर्माचरति तत्तुल्यो भवति। एवं ब्राह्मणो ब्राह्मणो न भवेदित्यस्यापि ब्राह्मणो यत्कर्माचरति तत्तुल्यो भवतीत्यर्थः। शूद्रस्याप्युत्तमकर्माचरणादादरणीयत्वं भवति। तत्रापि शमदमादि तदनिषिद्धकर्माचरणादेवोत्तमतुल्यता भवति। तत्तु वेदाध्ययनादि निषिद्धकर्माचरणेन, तथात्वे पतनस्मरणात्।

'प्रणवोच्चारणाद्धोमात् शालग्रामशिलार्चनात्।
वेदाक्षरविचारेण शूद्रश्चाण्डालतामियात्॥'

इति वचनात्।

एवमेव 'यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः।
तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद्द्विजः।' (वन पर्व २१६ अ.)

अस्यापि वृत्तप्रशंसायामेव तात्पर्यम्।

'ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स्यान्न संशयः।
क्षत्रियायां तथैव स्यात् वैश्यायामपि चैव हि॥'
(म० भा० अनु० प० ४७।२८)

इति स्वोक्तिविरोधाच्च।

अत्र 'त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः'॥ ११॥
'स्वधर्मान्नानुतिष्ठन्ति ते द्विजाः वैश्यतां गताः'॥ १२॥
'कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः'॥ १३॥
(म० भा० शा० प० १८८)

इति प्रमाणवचनविरोधाच्च।

ननु क्षत्रियस्य ब्राह्मणत्वं, वैश्यत्वं, शूद्रत्वञ्च भवति, वैश्यस्य ब्राह्मणत्वादिकं भवति, शूद्रस्य च ब्राह्मणत्वादिकं भवतीत्यस्य तत्तद्धर्मप्रयोज्यकर्मणामधिकारी भवतीत्येवार्थः। स त्रयाणां ब्राह्मणत्वादिविशेषधर्मेषु षट्सु क्षत्रियत्वे वैश्यत्वे च यजनाध्ययनदानादिरूपकर्मविशेषेष्वेव शूद्रत्वे सेवादिविशेषधर्मेषु चाधिकारी न्याय्यतया भवतीतिति चेन्न।

'निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित्॥
(म० २।१६)

इति निषेकादिश्मशानान्तानि कर्माणि मन्त्रैर्येषामुक्तानि तेषामेवात्राधिकारात्। केषां तानि कर्माण्युक्तानि कुत्र वेति शङ्कायां द्विजन्मनां पुण्यैर्वैदिकैः कर्मभिर्निषेकादिरूपशरीरसंस्कारः इह पावनो भवति, परत्र च पावनः इत्युक्तम्।

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।
कार्य्यः शरीरसंस्कारः पावनः प्रेत्य चेह च॥
गार्भैर्होमैः जातकर्म चौडमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते।
स्वाध्यायेन व्रतैर्होमैः त्रैविद्येनेज्यया सुतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।
प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते।

मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम् ।
नामधेयं दशम्यां तु द्वादश्यां वास्य कारयेत् ।
माङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ।
शर्मवद् ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥'
( म० २।२६-३२ )

जन्मना ब्राह्मणादीनामेवेदं संभवति । शूद्रस्य वेदाध्ययनाधिकारः पूर्वोत्तर-मीमांसाभ्यां निराकृत एव । उपर्युक्तेन 'निषेकादिश्मशानान्त' इति वचनेन च तन्निषेधश्च स्पष्टः । तथा च शूद्रस्य ब्राह्मणत्वाद्यप्राप्तौ षट्कर्माधिकारो दूरतो निरस्तः ।

अतएव—'शुचिः सद्भक्तिदीप्ताग्निदग्धदुर्जातिकल्मषः ।
श्वपाकोऽपि बुधैः श्लाघ्यो न वेदज्ञोऽपि ब्राह्मणः ॥'

इति भारतेऽपि जन्मूलकजातिभेदमङ्गीकृत्यैव सद्गुणैः श्वपाकस्यापि ब्राह्मणवदादरणीयत्वमेवोक्तम्, नतु वस्तुतः श्वपाकस्य ब्राह्मणत्वम् ।

स्तेये तत्तज्जातिभेदेन दण्डदानाधिकारः, क्षत्रियस्य दुष्टनिग्रहाद्यधिकारः ततोऽन्यत्वेऽन्यधर्माधिकारं बोधयन् मनुः स्पष्टं जन्मनैव जातिभेदं ज्ञापयति ।

'न ब्राह्मणस्य त्वतिथिर्गृहे राजन्य उच्यते ।
वैश्यशूद्रौ सखा चैव ज्ञातयो गुरुरेव च ॥११०॥
यदि त्वतिथिधर्मेण क्षत्रियो गृहमाव्रजेत् ।
भुक्तवत्सु च विप्रेषु कामं तमपि भोजयेत् ॥१११॥
वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्मिणौ ।
भोजयेत्सह भृत्यैस्तावानृशंस्यं प्रयोजयन् ॥११२॥
( म० अ० ३ )

इति तारतम्यबोधनमपि स्वाभाविकजातिभेदं बोधयति । शूद्रस्यैक-जातित्वेन दुष्प्रापमेव द्विजातित्वम्, पूर्वोत्तरमीमांसयोस्तस्य वेदाध्ययनाधिकार-निषेधात् । तत एव 'वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनामेव पावनः संस्कार उक्तः ( २।२६ म० ) ।

संस्कृतस्यैव यागादिफलसम्बन्धोऽपि सिद्ध्यति। तथा च शूद्रस्योपनयना-भावेन ब्राह्मणत्वादिप्राप्तिस्तद्धर्माधिकारश्चासंगत एव।

'जीवेत् क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः॥ ८१॥
उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद् भवेत्।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्॥ ८२॥
वैश्यवृत्त्यापि जीवंस्तु ब्राह्मणः क्षत्रियोऽपि वा।
हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्जयेत्॥ ८३॥'

(म० १०) इति मनुना जन्मत एव ब्राह्मणस्य क्षत्रियस्य वैश्यस्य च वेदाध्यय-नादिकं कर्म उक्तम्। तेषामेव प्रतिपादितो जीविका भेदश्च संगच्छते। अतएव सशरीरस्वर्गगमनार्थं तपश्चरतः शम्बूकस्य त्रिशंकोश्च निग्रह उपपद्यते।

यदुक्तम्—"शूद्रादीनां ब्राह्मणत्वादि नैरपेक्ष्येणैव 'यथेमां वाचं कल्याणी मावदानि जनेभ्यः। ब्रह्मराजन्याभ्याम् शूद्राय चार्य्याय च स्वाय चारणाय च। प्रियो देवानां दक्षिणायै दातुरिह भूयासम्' (शु० य० २६।२) इति कण्ठरवे-णैव वेदरूपा कल्याणी वागुपदेष्टव्यत्वेनोक्ता।

'न मेऽभक्तश्चतुर्वेदी मद्भक्तः श्वपचः प्रियः।
तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम्॥' (म० भा०)

इति कर्म गुणादिभिरेव श्वपचादीनां पूज्यता चोक्ते"ति तन्न,

'शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः।'

इति संस्कारमयूखोद्धृतया मनूक्त्या पूर्वोत्तरमीमांसाभ्यां च विरोधात् इमां वाचमिति तु दीयतां भुज्यतामिति प्रिया वागेव सर्वान्प्रति वक्तव्य त्वेनोक्त्या नतु वेदवाग् प्रमाणाभावात्, उक्तप्रमाणविरोधाच्च न मे भक्तश्चतुर्वेद इति वचनं तु भारते नोपलभ्यते। यदुक्तम् 'निषेकादिकर्मण जननोत्तर कालातिक्रमप्रायश्चित्तानुष्ठानपूर्वकमनुष्ठाने सति शूद्र अपि वेदाधिकारिणो भवेयु"रिति, तन्न, गर्भाधानात्पूर्वं तत्पित्रादेरस स्कृतत्वेन वेदाधिकारशून्यत्वेन च वैदिकमन्त्रानधिकारात्। प्रायश्चित्त विधानाच्च। नहि ब्राह्मणाद्युद्देश्येनोक्तस्य प्रायश्चित्तस्यान्येनानुष्ठानं क शक्यम्। न च सृष्ट्यादावुत्पन्नब्राह्मणादेरपि संस्कृतपित्राद्यभावेन क संस्कारः? तस्यादिस्रष्ट्रा नारायणेनैव संस्कृतत्वात्।

'तपस्तप्त्वासृजद् ब्रह्मा ब्राह्मणान् वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च ॥'
(या० स्मृ० आ० १९८)

इति तेषां वेदाधिकार उक्त एव । न च नारायणस्याप्यसंस्कृतत्वेन कथं तस्य संस्कारकर्तृत्वं संभवतीति वाच्यम् । तस्य नित्यशुद्धबुद्ध-मुक्तत्वेन संस्कारानपेक्षत्वात् । सजातीयोढमातापितृजन्यस्यैव दत्तक-परिग्रहविधानेन परिग्रहीतृजातिमत्त्वेन दत्तकस्यापि तज्जातित्वे न क्षतिः । श्राद्धादिगतब्राह्मणेषु पितृत्ववत् ।

देवरेऽपि—'तामनेन विधानेन निजो विन्देत देवरः' (म० ९।६९) इति घृताभ्यक्तत्वादिविशिष्टवेदनरूपतन्मात्रप्रयोजकविलक्षणनवमविवाहाभ्युपगमेन देवरजेष्वपि सजातीयोढमातापितृजन्यत्वमव्याहतमेव । सजातीयायां विधिवत्परिणीतायां विधिविहितगर्भाधानादि संस्कारेणोत्पन्नस्य ब्राह्मणादेः तत्पित्रोस्तत्पितामहानाञ्चोद्दालकव्रतेन व्रात्यस्तोमेन च ब्राह्मण्यादिकं यथा साध्यते, न तथाऽभक्ष्यभक्षकस्यापेयपातुः शूद्रस्य ब्राह्मण्यादिप्राप्त्यर्थं प्रायश्चित्तं शास्त्रकारैरुक्तम् ।

'जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा ।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥' (१।९६)

इति याज्ञवल्क्येन पञ्चमे सप्तमे जन्मन्येव ब्राह्मणत्वादि जातिप्राप्त्युक्तेस्तदैव वेदाधिकार प्राप्तिर्युक्ता न तु शमदमादिप्राप्तिमात्रेण ।

'एष सर्वः समुद्दिष्टः कर्मणां वः फलोदयः ।
नैःश्रेयसकरं कर्म विप्रस्येदं निबोधत ॥' (म० १२।८२)

इत्यादिभिर्ब्राह्मणस्य प्रवृत्तिनिवृत्तिलक्षणं कर्म चोक्त्वा—

'यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ।
आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ॥' (म० १२।९२)

'एतद्धि जन्म साफल्यं ब्राह्मणस्य विशेषतः ।
प्राप्यैतत्कृतकृत्यं हि द्विजो भवति नान्यथा ॥' (म० १२।९३)

इति ब्राह्मणस्यैव विशेषतः इत्युक्तम् । अन्यथा नरस्य जनस्य इत्यादि प्रयोगः स्यात् । अतएव

'तपः श्रुतञ्च योनिश्च एतद्ब्राह्मणकारकम् ।
तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ।'

इति 'तेन तुल्य' ( पा० सू ५।१।११५ ) मित्यत्र भाष्योक्तं सगच्छते ।

'जन्मना ब्राह्मणो ज्ञेयः संस्काराद् द्विज उच्यते ।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥
ब्राह्मणा ब्रह्मयोनिस्था ये स्वे कर्मण्यवस्थिताः ।
ते सम्यगुपजीवेयुः षट कर्माणि यथाक्रमम् ॥' ( म० १०।७४ )

अतएव

'षट् कर्माणि विप्रस्य त्रीणि क्षत्रियवैश्ययोः ।'
शस्त्रास्त्रभृत्त्व क्षत्रस्य वणिक् पशुकृषिर्विशः ।
आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः॥' ( म० १०।७९ )

गोत्रव्यवस्थाबाधः ।

किञ्च शूद्रस्य द्विजत्वेऽभ्युपगम्यमाने गोत्रव्यवस्था नोपपद्यते । न च सर्वेषां मनुष्याणां कश्यपवंशोत्पन्नत्वेन कश्यपगोत्रत्वं स्यादिति वाच्यम् । प्रवरव्यवस्थायाः सर्वथा कर्तुमशक्यत्वात् । तथात्वे वा 'असमानार्ष गोत्रजा'मिति ( याज्ञ १।५३ ) रीत्या विवाह्य कन्या निर्णयासंभवाच्च । न चास्य गोत्रप्रवराभावात् सर्वा अपि असमानार्षगोत्रजा एवेति वाच्यम्, विवाहे कन्यावरयोः प्रवरगोत्रयोः सूत्रकारैर्वक्तव्यत्वोक्तेः ।

श्राद्धबाधः ।

किञ्च शूद्रस्य ब्राह्मणत्वेऽभ्युपगम्यमाने मरणे तस्यान्त्येष्टिकर्त्रभावप्रसक्तिश्च स्यात्, पितृपुत्रादीनां शूद्रत्वात् । न च सापिण्ड्येन पित्रादीनामन्यजातीयत्वात् । शूद्रीभूतस्य ब्राह्मणस्य च मरणे के संस्कर्त्तारः ? न च पुत्रादयस्तेषां ब्राह्मणत्वात् । व्यत्यस्तजातिकस्य तस्य मातापितृमृतौ श्राद्धमनेन कर्तव्यं न वा ? तथाऽशौचमपि तस्य भविष्यति न वा ? नित्याया जातेरनभ्युपगमे 'शूद्रा चामहत्पूर्वा जातिः' ( वा. ४।१।४ ) इत्यत्र जातिग्रहणन्तथा 'शूद्राणामनिरवसितानाम्' ( पासू. २।४।१० ) इति समाहारद्वन्द्वे एकवद्भावविधायके सूत्रे यैर्भुक्ते पात्रं संस्कारेण शुद्ध्यति तेऽनिरवसितास्तेषां शूद्राणामेकवद्भावार्थं तक्षायस्कारमिति सिद्ध्यर्थं, चण्डाल

मृतपा इति व्यावृत्त्यर्थम् अनिरवसितग्रहणं कृतम्, चण्डालादि जात्यभावे तदुभयं व्यर्थमेव स्यात्। तस्मान्नित्यैव जातिरभ्युपेतव्या।

तत एव शान्तिशीलादिभृत्यास्तदभिव्यञ्जिकाया वा ब्राह्मणत्वादिजातेरभ्युपगमेनैव दण्ड व्यवस्थोक्ता, अन्यथा मूर्खत्व-पराधीनत्वाभक्ष्यभक्षकत्वापेयपातृत्व विद्याग्रहणधारणासमर्थत्वकुत्सिताचरणादिमतः शूद्रस्य—

'शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति।
वैश्योऽप्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति॥' (मनु० ८।२६७)

इति वधदण्डविधानासंगतिरेव स्यात्। तथात्वे वाबालोन्मत्त-महाभीतिग्रहादिग्रस्तादीनामपि वधदण्डापत्तिः स्यात्।

'एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन्।
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः॥' (म० ८।२७०)

इत्याद्यसंगतिश्च।

'धर्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः।
तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः॥' ( मनु ८।२७२ )

इति दण्डविधानञ्चासंगतं स्यात्। जातेर्गुणमात्रमूलकत्वे धर्मोपदेशकस्य ब्राह्मणत्वमेव स्यान्न दण्डार्हत्वमिति दण्डविधानमसंगतमेव स्यात्। अत एव 'स वै न सर्वेणेव संवदेत। देवान् वा एष उपावर्त्तते—यो दीक्षते। स देवानामेको भवति। न वै देवाः सर्वेणेव संवदन्ते। ब्राह्मणेन वैव राजन्येन वा वैश्येन वा। ते हि यज्ञियास्तस्माद्यद्येनं शूद्रेण संवादो विन्देदेतेषामेवैकं ब्रूयादिममिति विचक्ष्वे' ( ३।१।१।१० ) इति शतपथब्राह्मणं शूद्रस्यायज्ञियत्वादिप्रतिपादनं संगच्छते।

न च 'विद्या कर्म वयो बन्धु वित्तैर्मान्या यथाक्रमम्।
एतैः प्रभूतैः शूद्रोऽपि वार्धके मानमर्हति॥' (या० १।११६)

इति शूद्रस्यापि विद्यासम्बन्धो ज्ञायते इति वाच्यं। तत्र विद्यापदेन शिल्पादिविद्याग्रहणेन दोषाभावात्।

अतएव 'वृत्तमेव द्विजत्वस्य कारण' मित्यत्रैवकारोऽप्यर्थः। तेन वृत्तमपि द्विजत्वे कारणं मन्तव्यम्। तथा च कुलजातियोनिप्रभृतिभिः सार्द्धं वृत्तस्यापि तद्धेतुत्वम्। तेन योनिवृत्तादिसमुच्चयस्यैव द्विजत्वप्रयोजकत्वं नैकैकस्य।

अतएव 'वृत्तं यत्नेन संरक्ष्यं ब्राह्मणेन विशेषतः ।
चतुर्वेदोऽपि दुर्वृत्तः स शूद्रादतिरिच्यते ॥ इति ।

वृत्तस्यावश्यकत्वप्रतिपादनं संगच्छते । ( म० भा० )

'तेन तुल्यं क्रिया चेद्वतिः' ( ५।१।११५ ) इति सूत्रे महाभाष्ये ब्राह्मण-क्षत्रियादिशब्दानां गुणसमुदायेषु प्रवृत्तिरुक्ता । तत एव तपःश्रुतयोनिसमुदाये ब्राह्मणशब्दस्य वृत्तिरुक्ता । तत्र समुदाये प्रवृत्तः शब्दोऽवयवेष्वपि वर्त्तत इति रीत्या जातिहीने गुणहीने च ब्राह्मणशब्दप्रवृत्तिमुक्तवान् । 'अब्राह्मणोऽयं यस्तिष्ठन् मूत्रयति' अत्र गुणहीने जातिमात्रे ब्राह्मणशब्दप्रयोगः । 'अब्राह्मणोऽयं यस्तिष्ठन् भक्षयति' । अत्र जातिहीने संदेहाद् दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते । संदेहे तावद् गौरं शुच्याचारं पिङ्गलं कपिलकेशं दृष्ट्वाऽध्यवस्यति 'ब्राह्मणोऽयम्' । ततः पश्चादुपलभते 'नायं ब्राह्मणः' । अमुष्मिन्नवकाशे ब्राह्मणोऽयमिति तत्र संदेहाद् ब्राह्मणशब्दः प्रवर्त्तते । जातिकृता चार्थस्य निवृत्तिः । दुरुपदेशाच्च, दुरुपदिष्टमस्य भवति । अमुष्मिन्नवकाशे ब्राह्मणस्तमानय । स तत्र गत्वा यं पश्यति तमध्यवस्यति ब्राह्मणोऽयमिति । न च संदेहाद् ब्राह्मणशब्दप्रवृत्तिः जातिकृता चार्थस्य निवृत्तिः । नह्ययं काल माषराशिवर्णमापणे आसीनं दृष्ट्वाध्यवस्यति ब्राह्मणोऽयमिति जातेर्मुख्यस्वरूपप्रविष्टत्वं महाभाष्यकृता स्पष्टमेवोक्तम् ।

शूद्रे तु यद् भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥'
( म० भा० व० प० १८०।२५ )

इत्यत्र नञोऽल्पार्थता ज्ञातव्या । गुणवृत्ताद्यभावादल्पो ब्राह्मणो भवति । अल्पत्वं नाम सत्कारमानदानानर्हत्वमेव । शूद्रे तु सत्कारमानार्हत्वमेव ।

## शूद्रसिद्धान्नभक्षणे दोषः

अङ्गिरः संहितायाम्—

"अन्त्यानामपि सिद्धान्नं भक्षयित्वा द्विजातयः ।
चान्द्रं कृच्छ्रं तदर्धन्तु ब्रह्मक्षत्रविशो विदुः ॥
रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्त्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृता ॥

अन्त्यजानां गृहे तोयं भाण्डे पर्य्युषितञ्च यत् ।
प्रायश्चित्तं यदा पीतं तदैव च समाचरेत् ॥
चाण्डालकूपभाण्डेषु त्वज्ञानात् पिबते यदि ॥
चरेत्सांतपनं विप्रः प्राजापत्यं तु भूमिपः ।
तदर्धं तु चरेद्वैश्यः पादं शूद्रेषु दापयेत् ॥
अज्ञानात् पिबते तोयं ब्राह्मणस्त्वन्यजातिषु ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ।।
विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कदाचन ।
आचान्त एव शुद्ध्येत अङ्गिरामुनिरब्रवीत् ॥
क्षत्रियेण यदा स्पृष्ट उच्छिष्टेन कदाचन ।
स्नानं जपं तु कुर्वीत दिनस्यार्धेन शुद्ध्यति ॥
वैश्येन तु यदा स्पृष्टः शुना शूद्रेण वा द्विजः ।
उपोष्य रजनीमेकां पञ्चगव्येन शुद्ध्यति ॥
अग्निहोत्री च यो विप्रः शूद्रान्नं चैव भोजयेत् ।
पञ्च तस्य प्रणश्यन्ति आत्मा वेदास्त्रयोऽग्नयः ॥
शूद्रान्नेन तु भुक्तेन यो द्विजो जनयेत् सुतान् ।
यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रं प्रवर्तते ॥
शूद्रेण स्पृष्टमुच्छिष्टं प्रमादादथ पाणिना ।
तद्द्विजेभ्यो न दातव्यमापस्तम्बोऽब्रवीन्मुनिः ॥"

गुणैर्वृत्तैर्वा ब्राह्मण्यं यत्रोक्तं तेषां वचनानां गुणवृत्तावश्यकत्वप्रतिपादन एव तात्पर्यं न कर्मकृतब्राह्मण्यप्रतिपादने । एवञ्च जातिब्राह्मणस्य सत एव गुणानां सम्पादनेन श्रेष्ठत्वमित्येवाशयः ।

अतएव—

"मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च ततः परम् ।
अनूचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः ॥
इत्येतेऽष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं श्रुतौ ।
तेषां परः परः श्रेष्ठो विद्यावृत्तिविशेषतः ॥

ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत्।
अतः क्रियाविहीनः स मात्र. इत्यभिधीयते।
एकोद्दिश्यमतिक्रम्य वेदस्यादानवानृजुः।
स ब्राह्मण इति प्रोक्तो निभृतं सत्रवान् घृणी।
एकां शाखां सकल्पां च षड्भिरङ्गैरधीत्य च।
षटकर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्॥
वेदवेदाङ्गतत्त्वज्ञः शुद्धात्मा पापवर्जितः।
शेषं श्रोत्रियवत्प्राप्तः सोऽनूचान इति स्मृतः॥
अनूचानगुणोपेतो यज्ञस्वाध्याययन्त्रितः।
भ्रूण इत्युच्यते प्राज्ञैः शेषभोजी जितेन्द्रियः।
लौकिकं वैदिकञ्चैव सर्वं ज्ञानमवाप्य यः।
आश्रमस्थो वशी नित्यमृषिकल्प उदाहृतः॥

न चैवं छिन्नपुच्छे शुनि श्वत्ववदेकदेशविकृतमनन्यवदिति न्यायेन संस्कारादिशून्येऽपि ब्राह्मणत्वादिकमेव स्यान्न व्रात्यत्वम्, तपःश्रुताभ्यां शून्यस्य योनिमात्रस्य सत्त्वेऽपि समुदायादर्धाधिकविकारे उक्तन्यायावतारा-भावात्।

यथा हीरकादिरत्नानि परीक्षया विज्ञायन्ते तथैव ब्राह्मणत्वादयोऽपि परीक्ष्यन्ते। सात्त्विकराजसः, राजससात्त्विकः, सात्त्विकतामसः, तामस-सात्त्विकः, इति प्रधानगुणभावेन वर्त्तमाना गुणा एव वर्णा उच्यन्ते, ते च क्रमेण ब्राह्मणक्षत्रियवैश्यशूद्राः।

ननु—

शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठतः।
वैश्यत्वं भवति ब्रह्मन् क्षत्रियत्व तथैव च॥
आर्जवे वर्त्तमानस्य ब्राह्मण्यमभिजायते।' इति।

शूद्रयोनौ जातस्यैव तत्तद्गुणादिभिर्ब्राह्मण्यं क्षत्रियत्वं वैश्यत्वञ्च जायत इति स्पष्टं ज्ञायत इति चेन्न, तत्र ब्राह्मणादिशब्दस्य तत्तुल्यार्थकत्वे दोषाभावात्। महाभाष्ये तथा प्रयोगस्य दर्शितत्वात्। यथा व्यवहारार्थं कल्पिते गुरुप्रतिनिधौ गुरुतुल्यतैव न तु गुरुत्वम्, यथा वा पत्युः श्राद्धे श्राद्धभोक्तरि

पतितुल्यत्वमेव, नतु पतित्वम्, यथा पत्न्याः श्राद्धे श्राद्धभोक्त्र्या न पत्नीत्वम्, किन्तु तत्तुल्यत्वमेव, तद्वत्प्रकृतेऽपि ज्ञेयम्।

ननु सत्यपि विवेके ज्ञानपराक्रमादयो न दृश्यन्त इति चेद् दृश्यन्ते यथाकालम्। यथा नद्यो बहुगंभीरा अपीदानीं पानोपवल्प्तिमात्र-जलास्तथा ज्ञानपराक्रमादयः कालपरतन्त्राः। यत्र भूयान् विवेकः तत्रैव कालमहिम्ना विलोपप्रसङ्गः। कथमन्यत्र तत्संभवः? आकस्मिकस्य स्थायित्वासंभवान्न ब्राह्मणत्वादिजातयो गुणमूलिकाः। गुणानां जात्युपाधीनां न जातित्वं गुणानां परिणामित्वाज्जातीनां नित्यत्वात्।

ननु स्त्रीत्वं पुंस्त्वञ्च द्वे एव जाती आकारभेदात्तथात्वे बह्व्यो जातयोऽङ्गीकृता भवेयुः, नानाकारभेददर्शनात्। किञ्च यद्युपाधिभेदेन जातिभेदस्तदा स्वभावभेदेनापि जातिभेदः स्यात्।

ननु जातिभेदाङ्गीकारेऽपि फलं न दृश्यत इति चेन्न, आम्रत्वादि-जातीनां फलकाले पूर्णत्वदर्शनेऽपि तदभावेऽपि तत्सत्त्वे बाधाभावात्। तथैव ज्ञानपराक्रमनीतिनैपुण्यसेवाकौशलादर्शनेऽपि ब्राह्मणत्वादयः सन्त्येव कालान्तरे फलसंभवात्। व्यञ्जकोपाधीनां कालतन्त्रत्वेन व्यङ्ग्य-जातिनित्यत्वमेव।

तस्य गृत्समदः पुत्रो रूपेणेन्द्र इवापरः ॥५८॥
शक्रस्त्वमिति यो दैत्यैर्निगृहीतः किलाभवत् ॥
ऋग्वेदे वर्त्तते चाग्र्या श्रुतिर्यस्य महात्मनः ॥ ५९ ॥
यत्र गृत्समदो राजन् ब्राह्मणैः स महीयते।
स ब्रह्मचारी विप्रर्षिः श्रीमान् गृत्समदोऽभवत्।
पुत्रो गृत्समदस्यापि सुचेता अभवद् द्विजः।
(म० भा० अनु ३०)

इत्यत्र वीतहव्ये तत्पुत्रे च ब्रह्मर्षित्वं प्रतिपाद्य गृत्समदपुत्रस्य सुचेतसो यद्विप्रत्वमाम्नायते, यच्च गृत्समदस्यैव द्विजोत्तमत्वमाम्नायते, यदपि च 'तथैव कथितो वंशो मया गार्त्समदस्तव।' (म० भा० अ० प० ३०।६७) इति वंशस्य गृत्समदानन्तरं प्रवृत्तिरिति तत्सर्वं ब्रह्मर्षीणां गोत्रप्रवर्त्तकत्वे मन्त्र द्रष्टृत्वे च महर्षीणां दैवानुग्रहविशेषेण सत्यपि ब्रह्मवंशकारकत्वं पुत्रद्वारैव

तत्रापि पुत्रतः सप्तमस्यैव मुख्यं ब्राह्मणत्वमिति स्पष्टमेव । अन्यथा हि 'वीतहव्यश्च नृपतिः श्रुतो मे विप्रतां गतः ।' ( म० भा० अ० प० ३०।३ ) इति वीतहव्यब्राह्मण्यप्रश्ने कथम् 'तथैव कथितो वशो मया गात्सर्मदस्तव' इति वीतहव्यवंशेऽयमित्युपसंहारमकृत्वा गात्सर्मदवंश इति गात्सर्मद-मारभ्यैव वशानुकीर्त्तनमुपपद्यते ? ( म० भा० ) शल्यपर्वणि ४०।४१ अध्याययोः आर्ष्टिषेणाख्याने ।

'यत्रार्ष्टिषेणः कौरव्यो ब्राह्मण्य संशितव्रतः ।
तपसा महता राजन् प्राप्तवानृषिसत्तमः ॥
सिन्धुद्वीपश्च राजर्षिर्देवापिश्च महातपाः ।
ब्राह्मण्यं लब्धवान् यत्र विश्वामित्रस्तथा मुनिः ॥

( म० भा० शल्यपर्व. ३९।३६-३७ )

पुरा कृतयुगे राजन्नार्ष्टिषेणो द्विजोत्तमः ।
वसन्गुरुकुले नित्यं नित्यमध्ययने रतः ॥ ३ ॥
समाप्तिं नाममद्विद्या नापि वेदा विशाम्पते ॥ ४ ॥
स निर्विण्णस्ततो राजंस्तपस्तेपे महातपाः ।
ततो वै तपसा तेन प्राप्य वेदाननुत्तमान् ॥ ५ ॥
स विद्वान् वेदयुक्तश्च सिद्धश्चाप्यृषिसत्तमः ।
तत्र तीर्थे वरान् प्रादात् त्रीनेव सु महातपाः ॥६॥
अस्मिंस्तीर्थे महानद्या अद्य प्रभृतिमानवः ।
आप्लुतो वाजिमेधस्य फलं प्राप्स्यति पुष्कलम् ॥ ७॥
अद्य प्रभृति नैवात्र भयं व्यालाद्भविष्यति ।
अपि चाल्पेन कालेन फलं प्राप्स्यति पुष्कलम् ॥ - ॥
एवमुक्त्वा महातेजा जगाम त्रिदिवं मुनिः ।
एवं सिद्धः स भगवानार्ष्टिषेणः प्रतापवान् ॥ ६ ॥
तस्मिन्नेव तदा तीर्थे सिन्धुद्वीपः प्रतापवान् ।
देवापिश्च महाराज ब्राह्मण्य प्रापतुर्महत् ॥ १०॥
तथा च कौशिकस्तात तपो नित्यो जितेन्द्रियः ।
तपसा वै सुतप्तेन ब्राह्मणत्वमवाप्तवान् ॥ ११॥

( म० भा० श० प० ४० )

अत्र सर्वविद्यानधिगमे दुःखितस्य तपसा सर्वविद्यावाप्तिरेव वर्णिता न ब्राह्मणत्वप्राप्तिः । तथा च विद्यावाप्तिरूपं ब्राह्मण्यमार्ष्टिषेणविश्वामित्रादीनामुक्तम्, नतु ब्राह्मणत्वजातिप्राप्तिः ।

यच्चानुशासनिके पर्वणि

'ब्राह्मणत्वं गतस्तात ब्रह्मर्षित्वं तथैव च ।'

(म० भा० अ० प० ४।१)

'ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः ॥

(म० भा० अनु० प० ४।४८)

'राजर्षिदुर्लभं प्राप्तो ब्राह्मण्यं लोकसत्कृतम् ।'

कथं प्राप्तं महाराज क्षत्रियेण महात्मना ॥१॥

विश्वामित्रेण धर्मात्मन् ब्राह्मणत्व नरर्षभ, (म० भा० अ० प० ३)

इत्यादावपि ब्राह्मणता शब्देन ब्राह्मणशब्द व्यवहार एवोक्तः न ब्राह्मणत्वजातिः । अन्येषां रीत्या तु विश्वामित्रादीनां देवताप्रसादजन्यस्मरणलक्षणमेव ब्राह्मण्यम् । नेदानीन्तनानां शान्त्यादिगममात्रेण ब्राह्मण्यं लब्धु शक्यम् ।

नन्विदानीं चातुर्वर्ण्यधर्मादर्शनात् कथं चातुर्वर्ण्याभ्युपगमो युक्त इति चेन्न, यतः —

'ततस्तु द्विशते काले लभते काण्डपृष्ठताम् । ११ ॥
काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्त्तते ॥
ततस्तु त्रिशते काले लभते जपतामपि ॥ १२ ॥
तां च प्राप्य चिरं काल तत्रैव परिवर्त्तते ॥
ततश्चतुःशते काले श्रोत्रियो नाम जायते ॥ १३ ॥

(म० भा० अनु० प० २८)

इत्यादौ जपतापदेन गायत्रीजपनिष्ठता प्रोक्ता । तावताऽपि चातुर्वर्ण्यस्थितिः सिद्ध्यति । इदानीं तु तत्र तत्राग्निहोत्रवैश्वदेवादिबहुविधवैदिककर्मानुष्ठानं दृश्यत एव ।

## वज्रसूचीसंवादः

वज्रसूच्यादावपि 'ब्राह्मण क्षत्रियवैश्यशूद्रा इति चत्वारो वर्णा' इति वचनेनैव चातुवर्ण्यं सिद्ध्यति । उत्कर्षस्तु ब्रह्मज्ञानेनैव भवति । यदि

चाध्ययनादिकं ब्राह्मणप्रयोजकं भवेत्तदा तर्हि शूद्रेष्वपि दृश्यमानत्वादध्ययनं न निमित्तमित्यसंगतमेव स्यात्। यद्यपि ब्राह्मणमातापितृकत्वेनैव ब्राह्मणत्व-जातिनिर्णयस्तथापि कर्माधिकारप्रयोजकं ब्राह्मण्यं नोक्तजन्ममात्रेण, किन्तु जन्मकर्माभ्यामेव। वज्रसूच्या ब्रह्मज्ञानलक्षण ब्राह्मण्यमेव विवक्षितम्। न च कर्माधिकारप्रयोजकं ब्राह्मण्यं तत्। कर्माधिकारप्रयोजकं ब्राह्मण्यन्तु जातिकृतमेव। क्षत्रियादीनां कर्मणोत्कर्षे समानेऽपि ब्राह्मणानां जात्याप्युत्कर्षः। तपोविशेषादिना मन्त्रसिद्ध्यादिलक्षणं ब्राह्मण्यम्, नतु ब्राह्मण्यलाभः। भविष्यपुराणादिगतानां जात्यादिनिषेधवचनानां पूर्वपक्षरूपतैव। अतएव तत्रतत्र जातिमात्रेणापि ब्राह्मणानामुत्कर्षप्रतिपादनम्।

यथा भविष्य पुराणे—

सर्ववेदमयं विप्र सर्वलोकमयं तथा।
मयाप्यवगतं वीर ब्राह्मणं न परीक्षयेत् ॥३७॥
तस्मात्संपूजयेदेनं न गुणांस्तस्य चिन्तयेत्।
केवलं चिन्तयेज्जातिं न गुणान् विनतात्मज ॥ ३८ ॥
तस्मादामन्त्रयेत्पूर्वमासन्नं ब्राह्मण बुधः। ३९।
यस्त्वासन्नमतिक्रम्य ब्राह्मणान् पतिताहते।
दूरस्थान् पूजयेन्मूढो गुणाढ्यो नरकं व्रजेत् ॥४०॥
'त्रयाणामेव वर्णानां जन्मतो ब्राह्मणः प्रभुः।
संसृष्टा ब्राह्मणाः पूर्वं तपस्तप्त्वा द्विजोत्तमा ॥१॥
जन्मना चोत्तमोऽयञ्च सर्वार्चां ब्राह्मणोऽर्हति ॥३॥
यस्माद्विष्णुमुखाद्विप्रः समुद्भूतः पुरा द्विजाः ॥१२॥

भ. पु. द्वि० पर्व० पञ्चमाध्याये।

प्रथम पर्वणि द्वितीयाध्याये—

'लोकस्येह विवृध्यर्थं मुखबाहूरुपादतः ॥५१॥
ब्रह्मक्षत्रं तथाचोभौ वैश्यशूद्रौ नृपोत्तम ॥५२॥
सर्वस्य राजन् सर्गस्य गुप्त्यर्थं च महाद्युते।
मुखबाहूरुपादानां पृथक्कर्माण्यकल्पयत् ॥१२०॥
अध्यापनमध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहञ्चैव ब्राह्मणानामकल्पयत् ॥१२१॥

प्रजानां पालनं राजन् दानमध्ययनं तथा।
विषयेषु प्रसक्तिश्च तथेज्यां क्षत्रियस्य तु ॥१२२॥
पशूनां रक्षणं दानमिज्याध्ययनमेव च।
वणिक्पथं कुसीदञ्च वैश्यस्य कृषिरेव च ॥१२३॥
एकमेव तु शूद्रस्य कर्म लोके प्रकीर्तितम्।
एतेषामेव वर्णानां शुश्रूषामनुपूर्वशः ॥१२४॥
पुरुषस्य सदा श्रेष्ठं नाभेरूर्ध्वं नृपोत्तम।
तस्मादपि शुचितरं मुखं तात स्वयंभुवः ॥१२६॥

(भ. पु. १।२)

तस्मान्मुखाद् द्विजो जात इतीवं वैदिकी श्रुतिः।
'त्रयाणामपि वर्णानां भावाभावाय वै द्विजः ॥ ४ ॥
भवेद्राजन्नसन्देहस्तुष्टो भावाय वै भवेत्।
अभावाय भवेत्क्रुद्धस्तस्मात्पूज्यः सदा हि सः ॥ ५ ॥
ब्रह्मत्वं कीदृशो विप्रो ब्रह्मलोकञ्च गच्छति।
नाममात्रोऽथ किं विप्रो ब्रह्मत्वं ब्रह्मणः सदा।
याति ब्रह्मन् गुणाः के स्युर्ब्रह्म प्राप्तौ ममोच्यताम्।

(भ. पु १।२।१४०)

सुमन्तुरुवाच—

ये प्रोक्ता वेदशास्त्रेषु संस्कारा ब्राह्मणस्य तु

(भ० पु० १।२।१४२)

'गर्भाधानादयो ये च संस्कारा यस्य पार्थिव।
चत्वारिंशत्तथाष्टौ च निर्वृत्ताः शास्त्रतो द्विजाः।
स याति ब्रह्मणः स्थानं ब्राह्मणत्वेन संयुतः' ॥ ६ ॥

(भ० पु० द्वि० पर्व अ० ५)

संस्कारा सर्वथा हेतुर्ब्राह्मणत्वे न संशयः।
जातकर्मादिसंस्कारान् वर्णानामनुपूर्वशः।

(भ० पु० अ० ३)

'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राजन् क्षत्रियस्य विनिर्दिशेत् ॥
द्वादशाब्दे तु वै गर्भाद् वैश्यस्य व्रतमादिशेत् ।
ब्रह्मवर्चसकामेन कार्य्यं विप्रस्य पञ्चमे ।
बलार्थिना तथा राज्ञः षष्ठेऽब्दे कार्यमेव हि ॥
अर्थकामेन वैश्यस्य अष्टमे कुलनन्दन ।
आषोडशाद् ब्राह्मणस्य सावित्री नातिवर्त्तते ॥
द्वाविंशतेः क्षत्रबन्धोराचतुर्विंशतेर्विशः ।
भवन्ति राजंश्चर्माणि व्रतिनां विविधानि च ॥
कार्ष्ण-रौरववास्तानि ब्रह्मक्षत्रविशां नृप ।
वसीरंश्चानुपूर्व्येण वस्त्राणि विविधानि च ॥
................ ... शाणक्षौमाविकानि च ।
'मौञ्जी त्रिवृत् समा श्लक्ष्णा कार्य्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वीज्या, वैश्यस्य शणतान्तवी ॥
मुञ्जालाभे तु कर्तव्याः कुशाश्मन्तकवल्वजैः ।
त्रिवृताग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥
कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥
ब्राह्मणो बैल्वपालाशौ तृतीयं सक्षजं नृप ।
वाटखादिरौ क्षत्रियस्तु तथान्यं वैतसोद्भवम् ॥
पैलवोदुम्बरैः वैश्यस्तथाश्वत्थजमेव च ।
दण्डानेतान् महाबाहो धर्मतोऽर्हन्ति धारितुम् ॥
केशान्तिको ब्राह्मणस्य दण्डः कार्य्यः प्रमाणतः ।
ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विशः ॥'

(भ० पु० १।३)

२६ अध्याये प्रतिसर्गपर्वणि चतुर्थखण्डे

'कल्किनो वदनाज्जातो ब्राह्मणो वर्ण एव च ।
बाह्वोः क्षत्रं विशो जान्वोः शूद्रो वर्णस्तथाङ्घ्रयोः ॥ ६ ॥

गौरो रक्तस्तथा पीतः श्यामस्ते ब्राह्मणादयः ।
देव्याः शक्तिं समाधाय जनिष्यन्ति सुतान्बहून् ॥ ७ ॥
एकविंशत् किष्कुमिता मनुजा धर्मरूपिणः ।
जातिधर्मं समादाय यजिष्यन्ति सुरान् मुदा ॥ ८ ॥'

नह्येतानि वचनानि गुणकर्ममूलकं ब्राह्मण्यमादाय समञ्जसानि भवन्ति, किन्तु जातिवादमाश्रित्यैव । जन्मत एव साङ्कर्यान्नापितादिजातिविशेषाम्नानम् । तथाहि ब्रह्मवैवर्त्ते ब्रह्मखण्डे दशमाध्याये

'सौतिरुवाच—

भृगोः पुत्रश्च च्यवनः शुक्रश्च ज्ञानिनां वरः ।
क्रतोरपि क्रिया भार्य्या बालखिल्यानसूयत ॥ १ ॥
त्रयः पुत्राश्चाङ्गिरसो बभूवुर्मुनिसत्तमाः ।
बृहस्पतिरुतथ्यश्च शम्बरश्चापि शौनक ॥ २ ॥
वसिष्ठस्य सुतः शक्तिः शक्तेः पुत्रः पराशरः ।
पराशरसुतः श्रीमान् कृष्णद्वैपायनो हरिः ॥ ३ ॥
व्यासपुत्रः शिवांशश्च शुकश्च ज्ञानिनां वरः ।
विश्वश्रवाः पुलस्त्यस्य यस्य पुत्रो धनेश्वरः ॥ ४ ॥
रावणः कुंभकर्णश्च धार्मिकश्च विभीषणः ॥१०॥
पुलहस्य सुतो वात्स्यः शाण्डिल्यश्च रुचेः सुतः ।
सावर्णिर्गौतमाज्जज्ञे मुनिप्रवर एव सः ॥११॥
काश्यपः कश्यपाज्जातो भरद्वाजो बृहस्पतेः ।
स्वयं वात्स्यश्च पुलहात् सावर्णिर्गौतमात्तथा ॥१२॥
बभूवुः पञ्च गोत्राश्च एतेषां प्रवराभवे ॥१३॥
बभूवुः ब्रह्मणो वक्त्रादन्या ब्राह्मणजातयः ।
ताः स्थिता देशभेदेषु गोत्रशून्याश्च शौनक ॥१४॥
चन्द्रादित्यमनूनाञ्च प्रवराः क्षत्रियाः स्मृताः ।
ब्रह्मणो बाहुदेशाच्चैवान्याः क्षत्रियजातयः ॥१५॥
ऊरुदेशाच्च वैश्याश्च पादतः शूद्रजातयः ।
तासां संकरजातेन बभूवुर्वर्णसंकराः ॥१६॥

गोपनापितभिल्लाश्च तथामोदककूबरौ ।
ताम्बूलिस्वर्णकारौ च वणिग् जातय एव च ॥१७॥
इत्येवमाद्या विप्रेन्द्र सच्छूद्राः परिकीर्त्तिताः ।
शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः ॥१८॥
विश्वकर्मा च शूद्रायां वीर्य्याधानं चकार सः ।
ततो बभूवुः पुत्राश्च नवैते शिल्पकारिणः ॥१९॥
मालाकारः कर्मकारः शङ्खकारः कुविन्दकः ।
कुम्भकारः कांस्यकारः षडेते शिल्पिनां वराः ॥२०॥
सूत्रधारश्चित्रकारः स्वर्णकारस्तथैव च ।
पतितास्ते ब्रह्मशापादयाज्या वर्णसंकराः ॥२१॥

शापवशाच्छूद्रयोनौ जातायां घृताच्यः शापवशादेव ब्राह्मणयोनौ जाताद्विश्वकर्मणः सकाशात् पूर्वोक्ताः शिल्पिनो जाताः । तत्रैव च शूद्रायां कुलटायां चित्रकारादट्टालिकाकारो जातः । तस्माच्च कुंभकारयोषिति कोटकः । कुम्भकारात् कोटकयोषिति तैलकारो जायते । क्षत्रियाद्राजपुत्रस्य योषिति तीवरो जायते । तीवरात्तैलकारस्य योषिति लेटो जायते । लेटात्तीवर कन्यायां मात्रमन्वगमात् भडकोलकलन्दरा जायन्ते । ब्राह्मण्यां शूद्रवीर्य्येण चण्डालः । तीवराच्चाण्डाल्यां चर्मकारः । चर्मकार्यां चाण्डालान्मांसच्छेदी जायते । तस्माच्च तीवरेण कोञ्चो जायते । कोञ्चस्त्रियां कैवर्तात् फर्जारः परिकीर्तितः । चण्डालकन्यायां लेटवीर्य्येण हाडिडभौ जायेते । हाडिकन्यायां गङ्गापुत्रो जायते । गङ्गापुत्रकन्यायां वेशधारिणः । वेशधराकन्यायां शुङ्गी च पुत्रो जायते । वेश्यात्तीवरकन्यायां शुण्डी जायते । शूण्डियोषिति वैश्यात् पोण्डूकः. क्षत्रात्करणकन्यायां राजपुत्रो जायते । राजपुत्र्यां करणादागरी जायते क्षत्रवीर्य्येण वैश्यायां कैवर्त्तः । कलौ तीवरसंसर्गाद् धीवरो । तीवर्य्यां धीवराद्रजको जायते । रजक्यां तीवराच्च कौपाली । नापितात्गोपकन्यायामृषिवीर्य्येण ऋतोः प्रथमवासरे कूदरो जातः ।

'तदशौचं विप्रतुल्यं पतितो ऋतुदोषतः ॥११६॥
क्षत्रवीर्येण वैश्यायां ऋतोः प्रथमवासरे ।
जातः पुत्रो महादस्युर्बलवांश्च धनुर्धरः ॥११७॥

चकार वागतीतं च क्षत्रियेणापि वारितः ।
वलवन्तो दुरन्ताश्च बभूवुर्म्लेच्छजातयः ॥११९॥
अविद्धकर्णाः क्रूराश्च निर्भया रणदुर्जयाः ।
शौचाचारविहीनाश्च दुर्धर्षा धर्मवर्जिताः ॥१२०॥
जोलात्कुविन्दकन्यायां शरांकः परिकीर्त्तितः ॥१२१॥
कश्चित्पुमान् ब्रह्मयज्ञे यज्ञकुण्डात्समुत्थितः ।
स च मृतो धर्मवक्ता मत्पूर्वपुरुषः स्मृतः ॥१३०॥
पुराणं पाठयामास तञ्च ब्रह्मा कृपानिधिः ।
पुराणवक्ता सूतश्च यज्ञकुण्डसमुद्भवः ॥१३५॥
वैश्यायां सूतवीर्य्येण पुमानेको बभूव ह ।
स भट्टो वावदूकश्च सर्वेषां स्तुतिपाठकः ॥१३६॥

## कलावपि वर्णविभागः

यद्यपि लिङ्गपुराणे ४० अध्याये कलिवर्णनप्रसङ्गे श्रुतेरप्रामाण्यमधर्माभिमुख्यं । वर्णाश्रमविलोपश्चोक्तम्,तदपि न किञ्चित् —

कलौ देवो महादेवः शंकरो नीललोहितः ॥२०॥
प्रकाशते प्रतिष्ठार्थं धर्मस्य विकृता कृतिः ।
ये तं विप्रा निषेवन्ते येन कनापि शंकरम् ॥२१॥
कलिदोषान् विनिर्जित्य प्रयान्ति परमं पदम् ॥'

इति तत्रैव वर्णाश्रमव्यवस्थासमर्थनञ्चोपलभ्यते । घोरे कलावपि स्वल्पसंख्यानां वर्णाश्रमिणामवस्थानं पुनश्च तैरेव वर्णाश्रमप्रवर्त्तनं विज्ञायते तत्रैवाध्याये —

प्रवृत्ते तु ततस्तस्मिन पुनः कृतयुगे तु वै ॥७५॥
उत्पन्नाः कलिशिष्टाश्च प्रजाः कार्तयुगास्तदा ।
तिष्ठन्ति चेह ये सिद्धा अदृष्टा विचरन्ति च ॥७६॥
सप्तसप्तर्षिभिश्चैव तत्र ते तु व्यवस्थिताः ।
ब्रह्म-क्षत्र विशः शूद्राः बीजार्थं ये स्मृता इह ॥७७॥
कलिजैः सहते सर्वे निर्विशेषास्तदाभवन् ।
तेषां सप्तर्षयो धर्मं कथयन्तीतरेऽपि च ॥ ७८ ॥

वर्णाश्रमाचारयुतं श्रौतं स्मार्त्तं द्विधा तु यम् ।
ततस्तेषु क्रियावत्सु वर्धन्ते वै प्रजाः कृते ॥ ७६ ॥
श्रौतस्मार्त्तकृतानाञ्च धर्मे सप्तर्षिदर्शिते ।
केचिद्धर्मव्यवस्थार्थं तिष्ठन्तीह युगक्षये ॥ ८० ॥
मन्वतराधिकारेषु तिष्ठन्ति मुनयस्तु वै ।'

तत्रैवाध्याये वर्णाश्रमविभागो युगे युगे वर्णितः ।

'एवं वर्णाश्रमाणान्तु प्रविभागो युगे युगे ॥ ६८ ॥
युगस्वभावस्तु तथा विधत्ते वै तदा प्रभुः ।
वर्णाश्रमविभागश्च युगानि युगसिद्धयः" ॥ ६६ ॥

एवमेवाग्निपुराणे १५१, १६२ अध्याययोः, कल्किपुराणे २ अध्याये गरुडपुराणे ५ अध्याये, मार्कण्डेयपुराणे ११ अध्याये च स एव प्रसङ्गोऽवलोकनीयः ।

पूर्वं शुक्लादिवर्णनिबन्धनत्वं ब्राह्मण्यादीनामासीत् । भारते भृगुभरद्वाजसंवादे, इदानीं तदनुसारेण व्यवस्थाभावे कारणमुपपादितम् । यथाधुना राजादिपदवीं प्राप्नुवन्ति तथैव महता तपसा विश्वामित्रेण ब्राह्मणशब्दो ब्राह्मणपदवीनिबन्धनः प्राप्तो न ब्राह्मणजातिप्रवेशः, सापिण्डव्यवस्थानुपपत्तेः ।

'प्रजातन्तुं मा व्यवच्छेत्सीः' इति सापिण्ड्योच्छेदस्तु निषिद्धोऽङ्गीकृतः स्यात् । नान्यथा जात्यन्तरप्रवेशः । यत्र जातौ प्रविष्टस्तत्राप्यभिनवस्य सापिण्ड्यं निरुद्धं केनाप्यसम्बन्धात् । गोत्रप्रवर्त्तको विश्वामित्रस्तु जातिब्राह्मण एव । यं गायत्र्या ऋषिं सस्माराभिनवो विश्वामित्रनामा (ब्राह्मणः) तस्य ब्राह्मणशब्दलाभात् पूर्वं यद्गोत्रं तदेवानुवृत्तं साविण्ड्येऽन्यथोभयभ्रष्टत्वापत्तेरिति केचित् ।

शीलादिभिरपि तत्रैव जातिनिर्णयो यत्र पितृनिर्णयो न स्यात् । वृत्तमेव ब्राह्मण्यहेतुरित्याकर्ण्य रामावतारसमये शम्बूकः तपसि प्रवृत्तः । तेनापचारेण ब्राह्मण पुत्रो मृतः अतः स शम्बूको रामेण दण्डितः ।

। किञ्च वृत्तबोधकवचनेन यदि दुर्वृत्तत्वं निषिद्ध्यते, तदा जातिसमानाधिकरणं युक्तमेव, यदि च जातिस्वाध्यायश्रुतानि व्युदस्य वृत्तमभिलक्ष्य ब्राह्मणत्वं

विधीयते, तदा जातिव्यधिकरणस्य वृत्तस्य वर्णसंकरेऽपि संभवेन तत्रापि ब्राह्मणत्वापत्तिः। वृत्तसम्पन्नोऽपि शम्बूकः जातिविरुद्धधर्माचरणेन दण्डितः, जातिसम्पन्नोऽपि दुर्वृत्तो रावणो हतः।

'न जातिर्न कुलं राजन् न स्वाध्यायः श्रुतं न च।
कारणानि द्विजत्वस्य वृत्तमेव हि कारणम्॥
चतुर्वेदोऽपि दुर्वृत्तो शूद्रादल्पतरो हि सः।'

इत्यादि वचनानि तु जात्यादिसम्पन्नानामपि वृत्तं परमावश्यकमिति वृत्तं विना जात्यादीनामकिञ्चित्करत्वं बोधयन्ति, भक्तिं विना यज्ञादीनामिव। तदुक्तम्—

'वृत्तमन्विष्यताम् तात रक्षोभिः किं न पठ्यते?
बहुना किमधीतेन नटस्येव दुरात्मनः॥'

रक्षसा दुर्वृत्तेन पठितं वधाय न परिपन्थि, शूद्रेणाधीतं तपश्चरितञ्च न नवधं प्रतिवद्धुमीष्टे।

'कपालस्थं यथा तोयं श्वदृतौ च यथा पयः।
दूष्य स्यात् स्थानदोषेण वृत्तहीनं तथा श्रुतम्॥'
'सत्यं ज्ञानं क्षमाशीलमानृशंस्यं तपो घृणा।
दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः॥२१॥

(म० भा० व० प० १८०)

इति वचनन्तु जातिब्राह्मण्यस्य लक्षणमावेदयति। न लक्षणप्राधान्ये ब्राह्मण्य विद्यते। पूर्वोक्तदृष्टान्तानुरोधात्। तत्तज्जातिनिर्णये लोक एव प्रमाणं विशेषतश्च तत्तत्कुलपुरोहित एव। जातिमूलकवैदिकधर्मानुष्ठानादिभिरेव ब्राह्मणत्वादिकम्।

वस्तुतस्तु न केवलैर्लौकिकैर्गुणैः कर्मभिश्च ब्राह्मण्यादिकं किन्तु शास्त्रैकसमधिगम्यैर्वेदाध्ययनतदर्थानुष्ठानादिभिरेव तत्संभवति। वेदाध्ययनादिकं तु जन्ममूलकब्राह्मणादिकर्तृकमेव, नान्यथा त्रिवर्णेतराणामुपनयनादिसंस्काराविधानात्। कर्मणा वर्णव्यवस्थायां तु जन्मना यवनाङ्ग्लादीनामपि कर्मणा ब्राह्मणत्वादिसम्पत्तौ जन्मना ब्राह्मणादिभिर्यौनसम्बन्धे सर्वथापि रक्तसाङ्कर्यं वर्णसाङ्कर्यादपि निकृष्टतरं प्रसज्यते। तथा च हिन्दुत्वमेव

किमिति निर्धारयितुं न पार्य्यते। सर्वसाङ्कर्य्ये मानव इत्येव वक्तव्यो हिन्दुत्वाग्रहोऽपि व्यर्थ एव स्यात्। हिन्दूशास्त्रानुसारित्वेन हिन्दुत्वे तु शास्त्रानुसारेणैव जन्ममूलकवर्णव्यवस्थाऽप्यङ्गीकार्य्या। तथा गुणकर्मादिभिर्गौणमेव ब्राह्मण्यादिकं प्रशंसार्थमेव तत्र तत्रोक्तम्। मुख्यं ब्राह्मण्यादिकन्तु अविच्छिन्नब्राह्मणमातापित्रादिपारम्पर्य्येणैव भवति।



## वर्णद्वयवादः

यदुक्तम् हत्वी दस्यून् प्रार्य्यं वर्णमावत्' ( ऋ· सं० ३।३४।९ ) 'दासं वर्णमधरं गुहाकः ( ऋ० सं० २।१२।४ ) इत्याभ्यां वचनाभ्यां द्वावेव वर्णौ सिद्ध्यतः। वेदेषु ब्राह्मणादिशब्दानामुपलभ्यत्वेऽपि न तेषां वर्णपरत्वम्। आर्य्यवर्णो गौरः शुक्लः, दासवर्णो असितः कृष्ण, कृष्णवर्णो द्विजो गौरः शूद्रश्चेत्साङ्कर्य्ये सत्येव भवतीति लोकप्रवादः। पुराणादौ जातिपरो ब्राह्मणादि शब्दो यत्र दृश्यते तत्रोपाधिमूलक एवेति मन्तव्यम्। वैयज्यौतिषि न्यायाधीश इव उपवर्णः, उपजातिः उपाधिरित्यनर्थान्तरम्। अनपायिनी यावदाश्रयभाविनी समानप्रसवात्मिका च जातिः, आगमापायिनो अयावदाश्रयभाविनी चोपजातिरिति विशेषः।

आर्य्य-दास शब्दावेव मनुष्यादिशब्दवज्जातिवाचकौ न ब्रह्मणादयः शब्दाः। पुरा खल्वार्य्यावर्त्ते ये नगर-ग्राम-वासिनः सभ्यास्तेषामार्य्यत्वं ये त्विहावीतरागा अप्यरण्याश्रिता गिरिकन्दरवासिनोऽसभ्यास्तेषामनार्य्यत्वमिति जातिद्वयं जन्मस्थानव्यवहारादिविभेदतः पार्थक्येन वर्णनीयमासीत्। तथैवानार्य्याणामपि आर्य्यानुगतत्वाननुगतत्वभेदाद् द्वैविध्यं सम्पन्नम्। ये ह्यार्य्यानुगतास्ते दासास्तद्विपरीता दस्यवः। त एव दासाः शूद्रा इति दस्यवस्तु म्लेच्छा इति चाख्याताः। इत्थमिह पञ्च वर्णाः। एताश्च पञ्च श्रेणयो मनुष्याणामेवेति मनुष्यशब्दपर्य्यायत्वमाप्तः पञ्चजन इति। एतेषु पञ्चजनेषु गुणकर्मभेदत एव ब्राह्मणः, क्षत्रियो, वैश्य इति त्रय आर्य्या, दासो दस्युश्चेति द्वावनार्य्यौ इति स्थित"मिति, तदेतद्वेदादिशास्त्रतात्पर्य्याज्ञानविजृम्भितम्। इहैव मन्त्रब्राह्मणात्मकवेदाश्रयेण चातुर्वर्ण्यस्य साधितत्वात्। 'प्रार्य्यं वर्णमित्यत्र तु आर्य्यशब्दो न जातिपरः किन्तु श्रेष्ठतामात्रपर इति त्वयाप्युक्तत्वात्। तथा च 'तद्य इह रमणीयचरणाः ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनि'मिति ( छा० उ० ५।१० ) श्रुत्यैकवाक्यतया त्रैवर्णिकानामेवार्य्यवर्णत्वमुक्तम्। एकवचनन्तु जात्यभिप्रायेण। चतुर्थस्य दासवर्णत्वमुक्तम्। तस्य सेवाप्रधानत्वात्। अतएव—

'ज्ञानी तुष्टश्च शान्तश्च सत्यवादी जितेन्द्रियः।
दाता दानी दयालुश्च स्यादार्यो ह्यष्टभिर्गुणैः॥'

इति व्यासस्मृतौ गुणमूलकत्वमेवार्य्यत्वमुक्तम्।

यदुक्तम्—वेदेषु ब्राह्मणादिपदानां सत्त्वेऽपि तत्र वर्णप्रयोगाभाव न्न वर्णत्वमिति तत्तुच्छम्, ब्राह्मणादीनां वर्णत्वाभावे वर्णशब्दस्य निर्विषयत्वापत्तेः। न चार्य्यशब्देन विषयसमर्पणम्, तस्य श्रैष्ठ्यपरत्वाभ्युपगमात्। ब्राह्मणयोनिमिति योनिशब्देन तस्य जातिपरत्वमपि निर्णीयते। श्वयोनिमित्यादौ योनिशब्दस्य जातिपरत्वनिश्चयात्। अत एव वर्णो द्विजादौ शुक्लादौ (नानार्थ० व० ४८) इत्यमरोऽपि द्विजादौ वर्णशब्दप्रवृत्तिमाह। आर्य्यशब्दश्च जातिपर्य्याय इति त्वयापि स्वीकृतम्। आर्य्यवर्णो द्विजवर्ण उत्तमवर्ण इत्यप्यङ्गीकृतम्। आर्य्यवर्णः शुक्लवर्णः इत्यादिकं तु प्रमादकृतमेव, जातिपरत्वाभ्युपगमविरुद्धत्वात्। शुक्लादिवर्णोऽपि न केवलं रङ्गमात्रपरः, किन्तु सत्त्वादि गुणपरः। 'लोहितशुक्लकृष्णाम्। (तै० आ० १०।४०।१) इत्यादौ प्रकाशकत्वात्स्वच्छत्वात्सत्त्वं शुक्लम्, रागात्मकत्वेन रञ्जनाल्लोहितं रजः, आवरणादवष्टम्भाच्च कृष्णं तमः, तथा च विष्णौ रङ्गस्य श्यामलत्वेऽपि यथा सत्त्वात्मकत्वाच्छुक्लत्वं तथैव व्यासशुकचाणक्यादिषु श्यामलत्वेऽपि सत्त्वात्मकत्वेन शुक्लत्वमेवेति मन्तव्यम। अन्यथा खल्वाङ्ग्लादीनामेव ब्राह्मणत्वं स्यान्न कृष्णेषु भारतीयेषु, तेषु कृष्णत्वेन शूद्रत्वापातात्।

एतेन ब्राह्मणादिशब्दा न जातिवाचकाः उपाधिपरत्वादित्यपि निरस्तम्। त्वद्रीत्याऽर्य्यशब्दस्याप्युपाधिपरत्वेन त्वदभ्युपगमविरोधापातात्। यथा ब्राह्मणादि शब्दानामुपाधिपरत्वं त्वयोक्तं तथैवार्य्यशब्दस्याप्यष्टगुणवत्त्वेनोपाधिपरत्वमङ्गीकृतम्। पुनश्चार्य्यशब्दस्य जातिपरत्वोक्त्या कथं न तव स्वोक्त्यैव विरोधः? 'ब्राह्मोऽजातौ' (६।४।१७१) इत्यादि व्याकरणस्मृत्यनुसारेण जातिपरत्वमेव ब्राह्मणशब्दस्य तथान्यत्र तत् विस्तरेणोक्तमेव।

किञ्च त्वद्रीत्या आर्य्यानार्य्यभेदोऽपि नगरादिनिवासित्वारण्यनिवासित्वादिभेदमूलक एवेति न तत्रापि त्वद्रीत्यापि जातिव्यवहारो युक्तः। आर्य्यानुगत्यादिकमपि उपाधिरेव। तथा च दासवर्णोऽपि न सिद्ध्यत्येव। तस्मादन्यमन्त्रब्राह्मणादिभिरेकवाक्यतया द्विज एव श्रेष्ठो वर्णः, शूद्रोऽवरवर्णस्तद्भिन्नोऽवर्णस्तेनैव पञ्चजनत्वमपि मानवे संगच्छते।

# एकवर्णवादः

एवमेवैकवर्णव्यवहारोऽपि शास्त्रतात्पर्य्याज्ञानविजृम्भित एव।

यदुक्तम् "ब्रह्म वा इदमग्र आसीदेकमेव तदेकं सन्न व्यभवत्। तच्छ्रेयो रूपमत्यसृजत क्षत्रं......स नैव व्यभवत् स विशमसृजत (बृ० उ० १।४।११-१२) इति वचनेन पूर्वं ब्राह्मण एवासीत् क्षत्रियादिकं नासीत् इति रक्षणादिकार्य्यसमर्थत्वात् बलपराक्रमादिविक्रमादिविशिष्टं क्षत्रियं सोऽसृजत्। अतएव 'क्षत्रस्य योनिर्यद् ब्रह्म" (बृ० उ० १।४।११) इत्यनेनादिब्राह्मणस्यैव क्षत्रयोनित्वं विज्ञायते। ततोऽपि कृषिवाणिज्यादिकर्मकरणाय वैश्यमसृजत्। परिचर्याद्यर्थं शौद्रं वर्णमसृजत्। अत्र सर्वत्र योग्यतानुरोधेन ब्राह्मणसमुदाय एव क्षत्रियादिकं निर्धारितवानित्येवार्थः" इति तदपि तुच्छम्, विप्रतिषिद्धत्वात्। अत्र हि ब्राह्मणस्य क्षत्रिययोनित्वेन क्षत्रियोत्पादकत्वमेव सिद्धयति, न तु ब्राह्मणेष्वेव योग्यतानुरोधेन केचित्क्षत्रियरूपेण निर्धारिता इत्यर्थः सिद्धयति। तथार्थकल्पने मानाभावात्। सृजेरुत्पादनार्थत्वात्। पूर्वमयं लेखक उक्तवान्—'ब्राह्मणादिशब्दैः सह वर्णपदप्रयोगाभावात् ब्राह्मणादीनां वर्णत्वं नास्ति। इदानीं 'ब्राह्मण एक एव वर्णः कृतयुग आसीदि'ति वक्ति। तदुद्धृतश्रुतौ तु शौद्रं वर्णमिति शूद्रस्य वर्णत्वव्यपदेशः स्पष्टमुपलभ्यते।

वस्तुतः सृष्टिक्रमे पौर्वापर्यं स्वाभाविकमेव भवति। न तावता पश्चाद्भाविनामपलापः संभवति। यथा वाय्वादि सृष्टेः पूर्वमाकाशमेवासीत्। तत एव वाय्वादीनामुत्पत्तयो जाताः। तावताऽपि न वाय्वादीनां भूतान्तरत्वप्रतिषेधः संभवति। तथैव पूर्वं ब्राह्मण एवासीत् पश्चात् क्षत्रियादय उत्पन्नाः। न तावतैकवर्णत्वं वस्तुभूतम्। तत्रैव ब्रह्मणः मुखत एव वर्णत्वोक्तेः।

न चात्र कल्पनामात्रमुत्पत्तिः, आकाशाद्वाय्वादेरिव ब्राह्मणात्क्षत्रियाद्युत्पत्तिबोधनविरोधात्। तत्रापि 'बाहू राजन्य' इति श्रुत्यनुरोधेन ब्रह्मणो ब्राह्मणत्वेन तस्यैव मुखाद्, ब्राह्मणः बाहुभ्यां राजन्यो, मध्याङ्गाद्वैश्यः, पद्भ्यां शूद्रो जात इत्येवार्थः प्रत्येतव्यः।

एतेन ब्रह्म देवानजनयत्। ब्रह्म विश्वमिदं जगत्।

ब्रह्मणः क्षत्रं निर्मितम्, ब्रह्म ब्राह्मणमात्मना' इति ( तै० ब्रा० २।८।८।९ ) इत्यपि व्याख्यातम्। अत्रापि ब्रह्मणो हिरण्यगर्भस्य विराज एव वा ब्राह्मणत्वम्। तेनैव तत एव देवानामप्युत्पत्तिरुक्ता।

यत्तु "विद्वांसो वै देवा' इत्यनेन विदुषामेव देवत्वं सिद्ध्यती'ति, तदपि तुच्छम्, 'विद्वांसो ब्रह्मराक्षसा' इति वाल्मीकिवचनेन विदुषां ब्रह्मराक्षसत्वापत्तेः। तथाचात्र न विदुषां देवत्वं ब्रह्मराक्षसत्वं वा विधित्सितम्, किन्तु देवा विद्वांसो भवन्ति ब्रह्मराक्षसाश्च विद्वांसो भवन्तीत्येव।

'छिद्रं हि मृगयन्त्येते विद्वांसो ब्रह्मराक्षसाः।' (वा०रा०बा० का० १२।१८)

तथा च ब्रह्मणो हिरण्यगर्भाद्देवतानां ब्राह्मणानामन्येषाञ्च वर्णानामुत्पत्तिरिह विवक्षिता। महाभारतीयवचनस्य तु तात्पर्यं पूर्वमुक्तमेव। तत्रापि पूर्वं विश्वमेकवर्णमेवासीत् गुणक्रियाभेदेन जन्मान्तरे तेषामेव क्षत्रियत्वादिकमपि जातम् इत्येव तात्पर्यम्।

'एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः।
देवो नारायणो नान्यः एकोऽग्निर्वर्ण एव च॥' ( शान्तिपर्व )

इत्यत्रापि क्षत्रियाद्युत्पत्तेः प्रागवस्थैव निरूपिता, न क्षत्रियादीनामपलापः। तथैव स्थूलरूपेण वेदानां सम्प्रदायप्रवृत्तेः प्राक् प्रणव एव वेद आसीद् इत्यपि संगतम्। अन्यथा 'वाचा विरूपनित्यया।' ( ऋ. सं. ८।७५।६ ) 'पूर्वे पूर्वेभ्यो वच एतदूचुः' ( तै. ब्रा० ३।१२।९।२ ), इत्यादिषु मन्त्रादिलक्षणाया वाचो नित्यत्वोक्तिर्विरुद्ध्येतैव।

'अप्रवृत्तिः कृतयुगे कर्मणोः शुभपापयोः।
वर्णाश्रमव्यवस्थाश्च न तदासन्न संकरः॥६१॥
अनिच्छाद्वेषयुक्तास्ते वर्त्तयन्ति परस्परम्।
तुल्यरूपायुषः सर्वे अधमोत्तमवर्जिताः॥६२॥

( वायुपुरा० उपोद्घातपा० अ० ८ )

इत्यत्रापि विविधविसृष्टेः प्राक् शुद्धसत्त्वमये युगे उत्तमाधमराहित्यं वर्णितम्। न चाद्यत्वे तत्कल्पनावकाशोऽपि, अनिच्छाद्वेषयुक्तत्व-तुल्यरूपायुष्ट्ववैपरीत्यदर्शनात्। किञ्चात्यल्पमिदमुच्यते। वस्तुदृष्ट्या सर्वस्यैव

ब्रह्मविवर्त्तत्वेन ब्रह्मरूपतैव तु पारमार्थिकी। 'सर्वं खल्विदं ब्रह्म, तज्जलानिति शान्त उपासीत' ( छा० ३।१४।१ ) इतिरीत्या सर्वस्यैकब्रह्मरूपत्वमेव वक्तुं शक्यते। न तावताऽपि जगतो व्यावहारिकी मर्य्यादा जात्यादिभेदो वा व्यवहारदशायां बाधितुं शक्यते। अतएव पञ्चमवेदस्वरूपे भारत एव मतङ्गोपाख्याने जन्मनैव ब्राह्मण्यादिकं निगदव्याख्यातम्।

किञ्च कृतयुगे वर्णाद्येकत्वेऽपि न त्रेतादियुगे तत्सत्त्वमपलपितुं शक्यम्। यथा प्रामाणिकस्याहवनीयाद्यग्निभेदस्य नापलापस्तथैव वर्णभेदस्यापलापो न युज्यते।

अपि च देशकालभेदेन धर्मभेदोऽपि भवति। प्रातर्विहितोऽग्निहोत्रहोमो मध्याह्ने न धर्माय भवति, तथैव कृतयुगे विहितो यो धर्मो न स त्रेतायां, कलौ वा धर्माय संभवति। ब्रह्मचर्य्याश्रमे विहितो धर्मो गृहस्थाश्रमे न धर्मो भवति, गृहियोग्यो धर्मः संन्यासदशायां न धर्मो भवति यथा, तथैव कृतयुगे प्रोक्ता व्यवस्था तदानीमेव युक्ता, नेदानींतने काले। अतएव वायुपुराणे—उपोद्घातपादे अष्टमेऽध्याये—

> सत्यं ब्रह्म यथाभूतं ब्रुवन्तो ब्राह्मणाश्च ते ॥१६२॥
> 'इतरेषां कृतत्राणाः स्थापयामास क्षात्रयान् ॥१६३॥
> 'ये चान्येऽप्यबलास्तेषां वैशसं कर्म संस्थिताः ॥१६४॥
> शोचनाश्च द्रवन्तश्च परिचर्य्यासु ये रताः ॥१६५॥
> निस्तेजसो रूपवीर्य्याश्च शूद्रांस्तानब्रवीत्तु सः ॥१६६॥

इत्यादौ पूर्वोदाहृतश्रुतिस्मृत्याद्यनुरोधेन तत्तदनुरूपैर्गुणकर्मभिर्ब्राह्मणादि-योनिषु जन्मवशादेव ब्राह्मणादित्वं मन्तव्यम्। रमणीयचरणा ब्राह्मणयोनिं वैश्ययोनिं प्रपद्यन्त इत्यादि श्रवणात्।

यदपि च—'ब्राह्मणोऽस्य मुख'मिति मन्त्रे मुखादिशब्दा लाक्षणिका मुख-संभवान् गुणान् लक्षयन्ति। तत्र दृश्यमाना प्रथमा विभक्तिः पञ्चम्यर्थां। यथाऽस्य प्रजापतेर्मुखे भवा विद्याविनयादयो मुख्या गुणाः, सत्यप्रियवदनो-पदेशादीनि कर्माणि च तेभ्यो ब्राह्मण आसीत् समुत्पन्नः। तथा बाहू बाह्वोर्भवा ये बलवीर्य्यपराक्रमादयो गुणास्तेभ्यो राजन्यः क्षतत्राणपरायणः क्षत्रिय उत्पन्नः, ऊरू मध्यभागः, तत्र भवा ये धनधान्योपार्जनवितरणौदार्य्य-

प्रावीण्यादयो गुणाः, कृषिवाणिज्यगोपालनादिकर्माणि तेभ्यो वैश्यस्तद्गुणकर्मसंयुक्त उत्पन्नः। पद्भ्यां पादयोर्ये जडबुद्धित्व-मूर्खत्व-श्रमत्वादयोऽधमा गुणाः, सेवासहायादीनि च यानि कर्माणि, तेभ्यः सेवाश्रमादिनिकृष्टगुणकर्मविशिष्टः पराधीनः शूद्रः संभूतः। यद्यपि सेवाश्रमादीनां नास्त्यधमगुणत्वं तथापि जडबुद्धित्वमूर्खत्वादिनिकृष्टगुणवैशिष्ट्यारोपात्तेषामपि तथात्वं प्रत्येतव्यम्।

अतएव भविष्ये प्रतिसर्गे –

'सोमाद्वै ब्राह्मणा जाताः सूर्य्याद्राजन्यवंशजाः।
समुद्रात्सकलावैश्याः दक्षाच्छूद्रा बभूविरे ॥"

( भ० पु० प्र० ख० ४।३ अ ५।२३ )

"इह सोमादिभ्यो गुणकर्मणा ब्राह्मणादीनामुत्पत्तय उक्ताः, तथैव श्रुत्यर्थोऽपि ज्ञातव्यः" इति, तदपि निःसारम्। शक्यार्थत्यागलक्षणाश्रयणयोर्बीजाभावात्। मन्वादिभिश्च 'मुखबाहूरुपज्जानाम्' ( म० १।८७ ) तथा म० १०।४५ ) इत्यादि रीत्या मुखादिभ्य एव ब्राह्मणादीनामुत्पत्तय उक्ता एवेति मुख्यार्थत्यागो लक्षणाश्रयणञ्च व्यर्थमेव।

किञ्च पूर्वोक्तैर्मुखादिगुणैः कर्मभिश्च ब्राह्मणाद्य उत्पन्ना इत्यर्थाभ्युपगमेऽपि जन्ममूलकवर्णवादिनां न हानिरुत्पत्तेर्जन्मार्थकत्वात्। अभ्युपगम्यते चैतत् जन्मान्तरीयैर्गुणकर्मभिरेव ब्राह्मणादियोनिषु प्राणिनामुत्पत्तयो भवन्तीति। यदि तु उत्पन्ना इत्यस्य कल्पिता इत्यर्थस्तदा तत्रापि मुख्यार्थत्यागो लक्षणाश्रयणञ्च निर्मूलम्, गौरवं च स्यात्।

किञ्च नहि विद्याविनयादयः सत्यप्रियहितवदनादयो ब्राह्मणानामेव गुणकर्माणि समेषां वर्णानां तदिष्टत्वात्। किञ्च पादयोः जडबुद्धित्व-मूर्खत्वादयो गुणा इति कथं साधितं श्लाघनीयप्रज्ञेणेति नोक्तम्, तथैव सेवाश्रमादीनामधमगुणत्वमपि चिन्त्यमेव। यद्यारोपात्तथात्वं तर्हि बलात्काराक्रमादिष्वपि कुतो न तदारोपः? भविष्यपुराणीयवचनन्तु न नः प्रतिकूलम् 'चन्द्रमा मनसो जातः' ( ऋ० सं० १०।९०।१३, वा० सं० ३१, १२ अ० सं० १९।६।७ ) इत्युक्त्या सोमस्य विराजो मुखत्वेन विराजो मुखाज्जाता एव ब्राह्मणाः सोमजा उच्यन्ते। सूर्य्यस्यापि भगवतो बाहुरूपत्वं पुराणेषूक्तम्, तेन बाहुजा एव क्षत्रियाः सूर्यजा उच्यन्ते। समुद्रस्य भगवदुदररूपत्वञ्च पुराणेषूक्तम्, तेन

भगवत उदराज्जाता वैश्याः समुद्रजा उच्यन्ते । शिल्पादिदाक्ष्यात्पादयोरेव दक्षत्वकल्पनाऽपि । शूद्राणां शिल्पादिदाक्ष्यसंपादनाधिकारत्वाच्च ।

ब्राह्मणादिवर्गभेदविषये यदपि भविष्यपुराणीयवचनाश्रयणेनोक्तं यत् वर्णभेदाकारभेदबुद्धिभेदगुणदोषभेदादीनि प्रमाणानि नोपलभ्यन्ते, परमेकस्माज्जनिमत्त्वादीनि बाधकानि प्रमाणान्युपलभ्यन्ते । ततो वर्गहीनसमाजसाधनाय ब्राह्मणत्वादि जात्युच्छेदवाद एवाद्रियते । तदुक्तमेव—

'न ब्राह्मणाश्चन्द्रमरीचिशुभ्रा
न क्षत्रियाः किंशुकपुष्पवर्णाः ।
न चेह वैश्या हरितालतुल्याः
शूद्रा न चाङ्गारसमानवर्णाः ॥" (भ० पु० १।४१।४१)

शुक्लगौरवर्णत्वेन ब्राह्मणत्वे पाश्चात्यनामाङ्ग्लानामेव ब्राह्मणत्वं स्यात् । केचिच्च वैदिका मद्रासप्रान्तीया युवतिकृष्णकेशवत्कृष्णवर्णा भवन्ति । तत्र दन्ता एव शुभ्रवर्णा प्रतीयन्ते । कश्चिच्च शूद्रोऽपि गौरवर्णो विशुद्धोच्चारणेन च ब्राह्मणवदेव प्रतीयते । त्वङ्मांसमेदोऽस्थिरसाश्च नैव भिद्यन्ते ।

'वर्णप्रमाणाकृतिगर्भवासवाग्बुद्धिकर्मेन्द्रियजीवितेषु ।
बलत्रिवर्गामयभेषजेषु न विद्यते जातिकृतो विशेषः ॥ ४३ ॥

यथैकस्य पितुः चत्वारः सुता एक जातीया एव भवन्ति । चत्वार एकस्य पितुः सुताश्च तेषां सुतानां खलु जातिरेका ।

'एवं प्रजानां हि पितैक एव पित्रैकभावान्न च जातिभेदः ।'
( भ० पु० १।४१।४५ )

'फलान्यथोदुम्बरवृक्षजातेर्यथाग्रमध्यान्तभवानि यानि ।
वर्णाकृतिस्पर्शरसैः समानि तथैकतो जातिरतिप्रचिन्त्या ॥'
( भ० पु० १।४१।४६ )

तस्माद्विप्रेषु जात्यादि सामग्री प्रभवो न सः ॥ ३४ ॥
तस्मान्न च विभेदोऽस्ति न बहिर्नान्तरात्मनि ॥
न सुखादौ न चैश्वर्य्ये नाज्ञायां नाभयेष्वपि ॥ ३५ ॥
न वीर्य्ये नाकृतौ नाक्षे न व्यापारे न चायुषि ॥
नाङ्गे पुष्टे न दौर्बल्ये न स्थैर्य्ये नापि चापले ॥ ३६ ॥

न प्रज्ञायां न वैराग्ये न धर्मे न पराक्रमे ॥
न त्रिवर्गे न नैपुण्ये न रूपादौ न भेषजे ॥ ३७ ॥
न स्त्रीगर्भे न गमने न देहमलसम्प्लवे ॥
नास्थिरन्ध्रे न च प्रेम्णि न प्रमाणे न लोमसु ॥ ३८ ॥
शूद्रब्राह्मणयोर्भेदो मृग्यमाणोऽपि यत्नतः ।
नेक्ष्यते सर्वधर्मेषु संहतैस्त्रिदशैरपि ॥' ३९ ॥ इति
(भ० पु० १।४१)

तदपि तुच्छम् । पञ्चमे वेदे महाभारत इव यस्मिन् गलप्राप्ते कण्ठदाहो भवेत् स त्वया ब्राह्मणो ज्ञातव्यो रक्षणीयश्चेति गरुडं प्रति कश्यपोक्तेः । तस्मान्निर्दोषब्राह्मणमातापितृजन्मत्वस्यैव ब्राह्मणत्वं विज्ञेयम् ।असाधारणदुःख-सहिष्णुत्वं क्षत्रियस्य लक्षणमिति भारते कर्णपरशुरामप्रसङ्गे प्रोक्तम् । परमेश्वरमुखादिशक्तिजत्वमेव ब्राह्मणादित्वमित्यप्यन्यत्रोक्तम् ।

गर्भजत्वेऽपि वर्णभेदकथनम्

ननु सर्वे ब्राह्मणादयो गर्भादेवोत्पद्यन्ते न मुखादिभ्य इति कुतस्तद्वैशिष्ट्य-मिति चेन्न सृष्ट्यादौ ब्राह्मणादीनां विराजो मुखादिभ्य उत्पत्तिश्रवणात् । न च तच्छ्रवणस्याप्रामाण्यम् । मन्त्रस्यापौरुषेयत्वेनापास्तसमस्तपुंदोषशङ्कात्वात् । तद्विरोधाद्भविष्यपुराणोक्तेरेव तदानुगुण्येन नेयत्वात् । पुराणस्य पौरुषे-यत्वेन स्वतःप्रामाण्याभावेनापौरुषेयवेदमूलकत्वेनैव प्रामाण्याभ्युपगमात् । तथाचेदानीं सर्वेषां गर्भादुत्पत्तौ दृश्यमानायामपि सर्वदैव तादृगुत्पत्तेर्नि-यन्तुमशक्यत्वात् । अन्यथाऽधुनेव सर्वदैवोत्पत्तेः सशरीरमातापितृमूलक-तया परमेश्वरकारणत्वाभ्युपगमवैयर्थ्यापातात् । पुराणादिषु मानसीसृष्टि-वर्णनदर्शनाच्च प्रथमशरीरस्याशरीरादुत्पत्तेरभ्युपगन्तव्यत्वात् । इहैव स्थलान्तरे प्रदर्शितपरमेश्वरस्य मुखादिभ्यो ब्राह्मणादीनामुत्पादनम् । अतएव गायत्र्या ब्राह्मणस्य निर्माणम् त्रिष्टुभा राजन्यस्य, जगत्या वैश्यस्य शूद्रस्य तु न केनचिच्छन्दसोत्पादनं श्रुतम् । तत एव त्रयाणामेव संस्कारो न शूद्रस्य । वसन्ते ब्राह्मणस्य, ग्रीष्मे राजन्यस्य शरदि वैश्यस्योपनयनं विहितं, न शूद्रस्यो-पनयनं विहितम् । एवमग्न्याधानादिष्वपि वैशिष्ट्यम् । आर्त्विज्यम् पुरोडाशा-दिभक्षणञ्च ब्राह्मणस्यैव ज्ञातव्यं न क्षत्रियवैश्ययोः । तत एव ब्रह्मवर्चसा-दिष्वपि वैषम्यं ज्ञातव्यम् ।

ननु तर्हि भविष्यपुराणीयवचनानां का गतिरिति चेन्न, समुच्चयविधित्सया निन्दार्थवादभूतानां वचनानां स्वार्थे तात्पर्य्याभावात्।

यथा 'अन्धं तमः प्रविशन्ति ये विद्यामुपासते। ततो भूय इव ते तमो य उ विद्यायां ँ रताः॥ (ई. वा. उ. ९)

इह विद्याऽविद्ययोः कर्मोपासनयोर्विहितत्वेन 'कर्मणा पितृलोकः, विद्यया देवलोक' इति फलहेतुत्वेन प्रशस्तयोरप्येकैकस्य निन्दनं समुच्चिचीषया क्रियते। यथा निश्चितस्यापि परलोकस्य 'को हि वेद अयुष्मिन् विद्यते वा न वेति इति परलोकसन्देहप्रतिपादनस्य दिक्ष्वतीकाशान् करोतीति विधिशेषत्वेन तत्प्रशस्तिपरत्वमेव न स्वार्थपर्य्यवसायित्वम्। तथैव जन्मकर्मसंस्कारादिसमुच्चयस्यैव धर्मानुष्ठानमूलवर्णत्वप्रयोजकत्वं न केवलाया जातेर्नवा केवलस्य कर्मणो, न वा संस्कारमात्रस्य तद्धेतुत्वमित्यर्थविशेषप्रतिपादनायैव बहून्यभूतान्यपि दूषणान्यारोप्य जन्मसंस्कारादीनामकिञ्चित्करत्वमुक्तम्। विस्तरस्त्विहैवान्यत्र द्रष्टव्यः। एकस्मादुत्पन्नत्वेनैकजातित्वस्यापि तत् समानयोगक्षेमत्वम्, परमात्मन उत्पन्नत्वेऽपि पशुपक्षिमनुष्यादिजातिभेदस्य सर्वैरप्यभ्युपेतत्वेन हेतोर्व्यभिचरितत्वात्। एवं वीर्य्ये धर्मे तपसि च ब्राह्मणवैशिष्ट्यं प्रसिद्धमेव। ब्राह्मणादीनां स्वभावजानि शम-दम-शौर्य्य-वीर्य्यादीन्यप्युक्तान्येव गीतादिषु। तस्मान्नोदुम्बरादिदृष्टान्तेन ब्राह्मणादिजात्यपलापः सम्भवति।

## जातिलक्षणार्थः

यत्तु 'समानप्रसवात्मिका जातिः'। इति येषु किल समानरूपेण तुल्यतया प्रसवः सन्तानोत्पत्तिर्भवति, तेषु स्त्रीपुरुषेषु तुल्यैव जातिर्मन्तव्येत्यर्थः कृतस्तत्तु शास्त्रानभिज्ञानविजृम्भितमूर्खजनकृतार्थान्वानुकरणमेव। तथात्वे नित्येषु परमाण्वात्मसु जात्यनभ्युपगमापातात्। घटादिषु स्त्री पुरुषभिन्नेषु तद्रीत्या जातिव्यवहारः कथं स्यात्? वस्तुतस्तु समानबुद्धिप्रसवो येषु तेषु समानजातिव्यवहारः। तथा च घटो घट इत्यादि समानबुद्धिप्रसवहेतुत्वेन जातिरङ्गीक्रियते। अश्वादिभर्त्रादिषु भिन्नजातीयत्वेऽपि प्रसवसम्बन्धः समानो दृश्यते। ततः सन्तानोत्पत्तिसमानत्वेऽपि ब्राह्मणक्षत्रियादिषु जातिभेदोऽङ्गीक्रियत एव।

यदुक्तम् विजितेन्द्रियाणां भगवद्भक्तानां शूद्रत्वेनाभिमतानां कबीर-तुकाराम-विवेकानन्दारविन्द-गोविन्दसिंह प्रभृतीनां श्रेष्ठत्व गुरुत्वं पूज्यत्वादिकं स्वीकृतमेवे'ति, तदपि निःसारम्, तदनुयायिषु तन्महत्त्वसत्त्वेऽपि वेदादिशास्त्रप्रामाण्यवादिनां तद्गुरुत्वपूज्यत्वानभिमतेः । यथाकथञ्चिन्मान्यत्वे तु बुद्धस्य सर्वापेक्षया मान्यत्वमिति तस्यैव ग्राह्यत्वापत्तिः स्यात् । शिष्टापरिग्रहाद्वेदविरुद्धत्वाच्च भारतीयैरनादृत एव बौद्धो धर्मः ।

## जात्युच्छेदवादः

यत्त जापानदेशदृष्टान्तेन सङ्घटनसंपादनार्थं जातिकुलाद्यभिमानमपहाय समानजातित्वसमानशिक्षणत्वादिकं समर्थितम् तदपि तुच्छम् । स्वधर्मशास्त्रपारम्पर्यविरुद्धपरानुकरणस्यायोग्यत्वात् । लोकेऽनेके देशा जातयश्च सन्ति । तेषां मान्यभूता ग्रन्थाः पारम्पर्यं धर्माश्च पृथक्-पृथक् सन्ति । तेषां कृते तदौचित्येऽपि अन्येषां तदयोग्यत्वात् । लौकिकोन्नतयस्तु लौकिकप्रयत्नैरेव भवन्ति । ते च प्रयत्ना नात्रापि निषिद्धाः । जातिधर्मभेदनिरासस्य तदहेतुत्वात्तन्निराकरणायासो मौढ्यमेव । शुनां जातिधर्मभेदशून्यानामपि तादृगुन्नत्यप्राप्तेः ।

## बदरीनाथवृत्तान्तः

यदुक्तम् 'भारतराष्ट्रसमीक्षणप्रसङ्गेन वयमुत्तमा, अधमा इमे न गण्याः, अस्माकमेवेदृशोऽधिकारो नान्येषामिति स्वीयाध्येहिन्दुबन्धुविषयिण्यस्तदिच्छासंकुचितभावना जाग्रतितराम् । सवर्णा न केवलं हरिजनानेवास्पृश्यान् मन्वते किन्तु सर्वेभ्यो घृणा उत्पादयन्ति । द्राविडा दाक्षिणात्या ब्राह्मणा गौडसारस्वतादीन् काशीशूद्रा इति व्यपदिशन्ति । बदरिकाश्रममूर्तेरर्चनं नम्बूद्रिब्राह्मणा एव कुर्वन्ति ।

हिमालयीयब्राह्मणा वैदिकाः सदाचारा अपि तन्मूर्तिं स्प्रष्टुमपि न शक्नुवन्ति । दण्डिनो भिक्षुका ब्राह्मणत्वस्य मिथ्याभिमानवशम्वदा दण्डरहितान् परमहंसभिक्षून् दृष्ट्वा श्वानवत् घुरघुरायमाणा शूद्रा इमे भ्रष्टाः शापिताः, एभ्यो न भिक्षा देया, न पण्डितैः शिक्षा देया इति जल्पन्ति । हिन्दूनां परस्परतिरस्कारभावनैव दशकोट्यधिकक्रिश्चियन समाजस्य जननी । यत्र समाजे मनुष्यत्वस्य समादरः प्रतिष्ठा-

न स्यात्, प्रेमसद्भावविरोधिघृणा जात्यपमानजनकव्यवहारोऽवलोक्येत तत्र को मतिमानवस्थातुमिच्छेत्। केरलादौ अन्त्यजा यावत्पर्यन्तं स्वान् हिन्दुत्वेन पद्मनाभदास जनार्दनदासादिनामत्वेन तुलसी-देव-देवोपर्वादि पूजकत्वेन मन्यमाना भवन्ति तावत्पर्य्यन्तमस्पृश्या गर्हणीयाः सन्तः स्वकीयवीथीष्वपि प्रवेशयोग्यरहिता भवन्ति। त एव क्रिश्चियना यदा विदेशतद्भाषा-तद्वेष-संस्कृत्यादिप्रियाः, स्वदेशभाषा-स्ववेशसंस्कृत्यादिविमुखा, हिन्दुधर्मसमाज-द्वेषिणो भवन्ति, तदा ते सपद्येवोत्तमहिन्दुभिः समादरणीयाः, साहबेति गौरव-शालिनाम्ना सम्बोध्याः, स्ववीथीप्रवेशस्य किं, स्वगृहप्रवेशस्यापि योग्यता-शालिनो भवन्ति। त एव सम्प्रदायप्रान्तीयादिशासने सत्तारूढाः सन्तः हिन्दुसमाजस्य महतीमवहेलनां कुर्वन्ति।

यत्समाजशरीरस्य पादः शूद्रः पृथक्कृतः।
तन्मूर्ध्नि न कथं कुर्युः पादाघातं विधर्मिणः॥"

इति, तदपि, सर्वं प्रतिक्रियामूलकमेव। यतो केषाञ्चिन्मूर्खप्रायाणामभिमानित्वेऽपि शिष्टानां वैदिकधर्मकर्मसभ्यतानिष्ठानां ब्रह्मकार्य्यत्वेन सर्वस्यैव परमार्थतो ब्रह्मात्मतामभिमन्यमानामपि व्यवहारदशायां तत्तत्कर्म-धर्माद्युपेतजातिभेदधर्मभेदश्च तन्मूलक एवोत्कर्षापकर्षादिश्च शास्त्रदृष्ट्यैवा-भ्युपगतः, व्यवहारदशायां व्यावहारिकभेदस्य निराकर्त्तुमशक्यत्वात्। यथा ब्राह्मणस्यैवार्त्विज्ज्यमाचार्यत्वञ्च, नान्येषां। राजसूयाधिकारश्च क्षत्रियाणामेव। तथैव ब्रह्मक्षत्रविशां पूर्वपूर्वोत्कर्षत्वमपि शास्त्रसम्मतमेव। त्रयाणां दण्ड-मौञ्ज्यादिभेदो भिक्षाचर्य्यादिशब्दभेदश्च धर्मशास्त्रेषु सिद्ध इतीहैवान्यत्र प्रपञ्चितम्।

नहि चिकित्सका यथायोग्यमौषधोपचारादिभेदव्यवहारं कुर्वन्तो वच-नीया भवन्ति। नहि पितृवत्पुत्रोऽपि पित्रा प्रणम्यते। व्यवहारे नरा रोगिणं विषं च स्पृष्ट्वा सविशेषं हस्तादिक्षालयन्तोऽपि न द्वेषिणो भवन्ति। न केवलं हिन्दुष्वेव किन्तूदारचरितानान्तु वसुधैव कुटुम्बकमिति रीत्या सम्पूर्णप्राणि-ष्वेवात्मभावनैव भवति सत्पुरुषाणाम्। अनन्तकोटिब्रह्माण्डात्मके महाविराज्येव पूर्वमात्मभावना भवति। ततो हिरण्यगर्भे समष्टिसूक्ष्मशरीरमयेऽभेद-भावना। ततोऽव्याकृते महाकारणे स्वात्मभावना। तदनन्तरमेव

प्रत्यक्चैतन्याभिन्नपरस्मिन्नात्मभावना, तदनुगुणोऽपरोक्षसाक्षात्कारश्च भवति। तत्र महाविराड्यहङ्ग्रहबुद्धेः प्राङ् ममत्वमुत्पद्यते। देहादौ ममतास्पदे एवाहङ्कारस्पदत्वदर्शनात्। ममत्वास्पदे देहे यथाहितबुद्धिर्भवति तथैव समष्टिविराड्यपि युक्ता। व्यष्ट्यभिमानमेव मृत्युः समष्ट्यभिमानमेवामृतम्। तथापि तत्क्रमेण विकासमुपयाति। प्रथमं कुटुम्बे, ततः कुले, ततो जातौ, ततो देशे, ततो भूमण्डले, ततो ब्रह्माण्डे, ततो ब्रह्माण्डावलौ भावना जायते। तथापि लौकिकपारलौकिककर्मानुष्ठानं वेदादिशास्त्रानुसारेणैव कर्तव्यं भवति। तादृग्व्यवहारेऽज्ञानां संकीर्णता प्रतिभाति। श्वशृगालादीनामात्मत्वेऽपि न तैः सार्द्धं भोजनपानादि व्यवहारः संभवति।

उत्तरभारते ब्राह्मणा अपि प्रायः संस्कारशून्या, वेदाध्ययनशून्याश्च सन्ति। तत एव ते काशीशूद्रनाम्ना व्यपदिश्यन्ते। तस्मात्परिभवादेव वेदाध्ययनादौ प्रवृत्तिर्भवति। यदि जारजानामपि कुलजानामिव सर्वत्र सम्मान स्यात्तदा कथं तत्परिहारे प्रवृत्तिरेव भविष्यति। तत एव निषिद्धानुष्ठायिनो निन्द्यन्ते। विहितानुष्ठायिनः प्रशस्यन्ते। तत्र निन्दास्तुत्योस्तात्पर्य्यं नास्ति, किन्तु निषिद्धपरिवर्जनविहितानुष्ठानप्रवृत्तावेव तात्पर्य्यं मन्तव्यम्। बदरीनारायणमूर्तिस्पर्शविशेषाधिकारोऽपि समूल एव। यजमानस्यर्त्विक्पुरोहितादिभिः स्वशाखीयैर्भाव्यमिति कृत्वा बदरीनारायणमूर्तिप्रतिष्ठापकैः भगवत्पादैः स्वशाखीयेभ्यस्तज्जातीयेभ्यश्च तत्पूजनाधिकारो नियत इति।

क्षत्रियवैश्ययोः संस्कारलोपादेव 'कलावाद्यन्तयोः स्थितिः' उच्यते। ब्राह्मणानामेव पारिव्राज्येऽधिकारः।

'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्।
बाहुजातोरुजातानां नायं धर्मः प्रशस्यते॥

केषाञ्चिद्रीत्या तयोरप्यलिङ्गसंन्यासेऽधिकारः। परन्तु सर्वथानुपनीतानामपि संन्यासधारणं तु सर्वमतेन गर्हितम्। तुलसीदासेनापीयं स्थितिर्निन्दिता

ये वर्णाधम तेलि कुम्हारा॥
'श्वपच किरात कोल कलवारा।
नारि मुयी गृहसम्पति नाशी।
मूड़ मुंडाय होहिं संन्यासी॥

ते विप्रन सन पाँव पुजावहिं।
उभयलोक निज हाथ नसावहिं॥

केचिद् ब्राह्मणा अपि तेषु प्रविशन्त्यज्ञानेन, ततश्च शूद्रशिष्यत्वेन तेषामपि पातित्यमेव भवतीति शास्त्रीयमेव तत्त्वं केचित्कथयन्ति हितबुद्ध्यैव, नतु द्वेषादिना। यवनक्रिश्चियनसम्प्रदायप्रवेशस्तु स्वधर्ममाहात्म्याज्ञानेन पदप्रलोभनादिभिश्च भवति। जीविकादानस्त्रीदानादिभिश्च ते वञ्चयन्ति। ब्राह्मणादयः सवर्णा विद्वांसोऽपि तत्र व्यासज्यन्ते, किमुतान्ये संस्कारशून्याः। 'गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः' इति रीत्या गुणदोषवर्णनं यद्यपि दूषणमेव, तथापि संग्रहो वर्जनञ्च ज्ञानमन्तरा न सम्भवतीति गुणदोषवर्णनं श्रुतिस्मृतिपुराणेषु सर्वत्रोपलभ्यते। शिष्टैश्च दोषतित्याजयिषया गुणपरिजिग्राहयिषया च दोषगुणवर्णनं क्रियते। अपशूद्राधिकरणरीतिमनुसृत्यैव विद्वांसश्चतुर्थवर्णान् तच्छिष्यत्वेन तत्तुल्यानेवान्यानपि वेदादिशास्त्रानधिकारिणो मन्यन्ते।

'न हीनतः परमभ्याददीत।' ( म० भा० म० प० १०४.३१ )

शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे।' (म० भा० उ० प० ४१।५

इति महाभारतादि रीत्याऽपकृष्टवर्णेभ्य उत्कृष्टानां धर्मब्रह्मग्रहणनिषेधात्। विकर्मस्थानां ब्राह्मणानामपि वाङ्मात्रेणापि सत्कारो मनुना निषिद्ध एव।

वाङ्मात्रेणापि नार्चयेत्' ( ४।३० ) इति तदुक्तेः।

यत्र कचिन्म्लेच्छानां पतितादीनामपि शासनपदे नियुक्तानां सम्मानं तच्छासनपदस्य सम्मानम्, न व्यक्तिविशेषाणां जातिविशेषाणां वा।

शासकत्वेनैवाङ्गलानां मुगलानाञ्च सम्मानादिकं प्रवृत्तमासीत्। कस्यचिद्विदुषो धर्मनिष्ठस्य तपस्विनो दरिद्रब्राह्मणस्य यत्संमानं तन्न शासकत्वेन, किन्तु धार्मिकत्वेन। गृहे स्वबालायाः कुमार्गनिवृत्तये सत्पथप्रवृत्त्यै शिक्ष्यन्ते, दण्ड्यन्ते, तिरस्क्रियन्ते च। न च तावताऽपि तेषु द्वेषः। स्वैरिण्यः कन्यका अपि तिरस्क्रियन्ते। तेनैव सत्पथारूढैः संघटितैः सर्वैर्देशस्वातन्त्र्यार्थं प्रयत्यते।

यदुक्तम्—"भेदभावमिथ्याभिमानद्वेषपूर्णा हिन्दूनां विषाक्तघृणितवातावरणात् समुद्विग्ना जना इस्लामाद्याश्रयं लब्ध्वा स्वजीवनं धन्यं मन्यमाना बोहरा खोजा इत्यादिनामभिः लक्षाधिका यवनाः प्रसिद्धा बभूवुः। ब्राह्मणा बभूवुः

बोहरा, लुहाणा, भाटिया इति । क्षत्रिया बभूवुः खोजा" इति, तदपि विप्रतिषिद्धम् । यतस्त्वदुक्त्यैवेदं सिद्ध्यति यन्मौर्ख्येण लोभादिना च ब्राह्मण क्षत्रियादयोऽपि धर्मान्तरं स्वीकुर्वन्ति । ननु हीनजातीया एव स्वापकृष्टत्वादिहेतोः । धर्मान्तरस्वीकरणभीत्या नियन्त्रणनिवृत्यभ्युपगमे सर्वोऽपि यथेष्टचेष्टो भविष्यति । नियमननिषेधे धर्मान्तरप्रवेशातङ्को विस्तरिष्यति । तदा सर्वेऽपि नियमा धर्माश्च प्रलयं गमिष्यन्ति । लोकेऽपि काश्चनापि संस्थाः सदस्यानां कामचारपोषणेन स्वात्मनावस्थातुं न पारयन्ति किन्तु कामचारिणो नियमोल्लङ्घिनो महतोऽपि निष्काशयन्त्यनुशासति च तेषां शेषाणां संस्थायाश्च हितकाम्यया ।

हिन्दूनां धर्मान्तरप्रवेशस्य म्लेच्छत्वापादनस्य तत्कर्तृकस्य हिन्दूविध्वंसस्य सतीत्वविध्वंसस्य चोत्तरदायित्वं भवादृशेषु सुधारकेष्वेवापतति । यैः शास्त्रविश्वास उच्छिद्यते । शास्त्रविश्वासे दृढतरेऽकिञ्चना अपि, दरिद्रा अपि, शूद्रान्त्यजादयोऽपि हिन्दुधर्मं पालयन्ति, हिन्दुत्वञ्च रक्षन्ति । विस्रस्तशास्त्रधर्मविश्वासास्तु ब्राह्मणा अपि विद्वांसोऽपि धनाढ्या अपि हिन्दूधर्मं कामचारितया नाशयन्ति । म्लेच्छाश्च भवन्ति । विधर्मिणः साम्प्रतिकदेशकालविपरीतं संकीर्णमनुपयोगिनं हानिकरञ्च हिन्दुधर्मं वदन्ति, म्लेच्छादिधर्मांश्च प्रशंसन्ति ।

भवादृशा सुधारका अपि हिन्दूशास्त्राणि हिन्दूधर्मास्तदाचार्यांस्तदनुयायिनश्च निन्दन्ति । यदेव शत्रवो वदन्ति तदेव मित्राभासाश्छद्मशत्रवो भवादृशा सुधारका अपि वदन्ति । तदज्ञा जना उभयेषां संवादमवाप्य हिन्दूधर्मं परित्यजन्ति, धर्मान्तरञ्च प्रविशन्ति । तस्माद्यदेवारोप्यतेऽस्मासु तत्सर्वं युष्मास्वेवापतति ।

## सिद्धपुरवृत्तान्तः

यदुक्तम्--'सिद्धपुरवृत्तान्तेन ब्राह्मणसमाजस्यैकविभागेन रागद्वेषादिवशादपरविभागस्य तिरस्कारार्थं गोमांसनिक्षेपादशुद्धकूपजलपानेन पातित्यम्लेच्छत्वोद्घोषणम् । यवनोच्छिष्टजलपानकर्त्तारस्ते ब्राह्मणत्वेन किं हिन्दुत्वेनापि नैव मन्तव्या । एवं हिन्दुषु विश्वासो जातस्तेनैव तिरस्कृता अवमानाश्च निराशा हिन्दुत्वं ब्राह्मणत्वञ्च परित्यज्य यवनगुरुमुपाश्रित्य बोहरा संज्ञका मुसलमाना बभूवुः । अद्यापि ते तस्मिन्नेव क्षेत्रे यवनवेषभूषाधारिणो

निवसन्ति । केचन दवे ( द्विवेदी ) नाम्ना स्वात्मानं जानन्ति । केचित्तु त्रिवेदी ( तिवाड़ी ) ति नाम्ना जानन्ति तदेतत्सर्वं प्रमाणशून्यम् । हिन्दूनामयोग्यता-प्रदर्शनार्थं धूर्तैस्तद्दङ्मिथ्येतिवृत्तसहस्रकल्पनात् ।

यदि च सत्यमेवाज्ञानात् गोमांससंसक्तकूपजलपानं यवनोच्छिष्ट-जलपानं वा कृतं भवेत्तदाऽपि धर्मशास्त्रेषु प्रायश्चित्तं विद्यत एव । नहि तादृशे प्रधानतोर्थस्थले विद्वत्सभा निर्णयमन्तरा ब्राह्मणाः क्षत्रिया वा सहसा हिन्दुत्वं ब्राह्मण्यं वा त्यक्तुं शक्नुवन्ति । तस्मान्नूनं सनातनधर्मविरोधिनामेवायं प्रवादः । मुसलमानैश्च हिन्दूनां यवनधर्मप्रवेशप्रोत्साहनायैव स्वेषां द्विवेदित्व-त्रिवेदित्वादि प्रख्यापनम् । प्रमादाद्वाऽकृतप्रायश्चित्तवतां तेषां तथात्वमिति मन्तव्यम् ।

यदुक्तम्-'शूद्रातिशूद्रादयो नीचत्वेनास्पृश्यत्वेनोच्चवर्णेभ्यः सर्वथा विच्छिन्ना यवनसाम्राज्यकाले लोभाद् बलाद्वा यवनाः संवृत्ताः । तेषामुद्धारायापि प्रयत्नो न भवति । विच्छिन्नत्वादेव निम्नवर्णस्य कस्यचित्कन्यां यवना हरन्ति तदा हिन्दव उपेक्षन्ते तथैव तेषामपि कन्यादिहरणे तेषामप्युपेक्षायां सर्वेषामपि संकटदशाऽनिवार्या भविष्यति ।' इति, तदपि न सम्यक् । तादृङ्मौर्ख्यस्या-ज्ञानमूलकत्वात् । नहि कश्चिदपि शिष्टस्तत्समर्थयते । हिन्दूनां परस्परपितृ-पुत्राग्रजानुजादिवदुत्कर्षापकर्षभावसत्त्वेऽपि परैर्विरोधे सर्वेषामैकमत्य-संभवात् । 'परैःपरिभवे प्राप्ते वय पञ्चोत्तरं शतम्' इत्युक्त्यनुसरणं युक्तम् । शास्त्रविश्वासाभावादुत्तमवर्णा एव प्रायेण विधर्मिणो भवन्ति, नतु धर्मभीरवः शूद्रादयः । विरुद्धप्रचारस्य दुरभिसन्धिमूलकत्वात् शास्त्रानुसारिप्रायश्चित्तेन पृथक्श्रेणास्थापनेन हिन्दूधर्मप्रवेशमनुमोदन्त एव शिष्टाः । सामाजिकास्तु न केवल तानेव किन्तु सर्वानपि यवनानाङ्गलांश्च शोधयित्वा सर्वथाऽपि स्वकन्या-दिकं दत्त्वाऽपि तानात्मसात्कुर्वन्ति । तेषु प्रायेण कन्यां गृहीत्वा ते पुनरपि यवनादयो भवन्ति ।

## एकत्वभावना:

यदप्युक्तम् -सिक्खेषु मुसलमानेषु च सर्वोऽप्यहं सिक्खोऽस्मि मुसल-मानो वा स्मीत्येवं वदति, तेन तेषु बन्धुत्वबुद्धिर्जागर्ति । हिन्दुषु तु अहम-मुकवर्णोऽस्मीत्येव विविधवर्णोपवर्णभेदबुद्ध्युदयेन बन्धुत्वभावना न

जागर्त्ति। तेन हीनवर्णा उत्तमवर्णान् वीक्ष्य स्वनिष्ठहीनत्वप्रयुक्तां लज्जामनुभवन्ति। उत्तमवर्णाश्च तान्वीक्ष्य स्वनिष्ठोत्तमत्वप्रयुक्ताहङ्कारञ्चानुभवन्ति। एवं विच्छेदभावदार्ढ्येन मम संकटसमये उत्तमवर्णाः साहाय्य न करिष्यन्ति, यथा सिक्खादयो बन्धुभावनया परस्परं रक्षार्थं प्रवर्त्तन्त इति दौर्बल्यमनुसन्धाय परैर्युद्धादिसमये हीनवर्णाः पलायन्ते। पराजयं वाङ्गीकृत्य तदधीनतामूरीकुर्वन्ती'ति, तदपि तुच्छम्, निष्प्रमाणत्वात्।

ईसायी-मुसलमानादिष्ववान्तरभेदेषु सत्स्वपि यथा ईसायित्वेन मुसल्मानत्वेन तेषु बन्धुत्वभावना संभवति तथैव ब्राह्मणत्वादिभेदभिन्नेष्वपि हिन्दुत्वे न बन्धुत्वभावना संभवात्। सर्वेष्वपि केनचिद्धर्मेण साधर्म्यं केनचिच्च वैधर्म्यं दृश्यत एव, पार्थिवजलीयादिपदार्थेषु पार्थिवत्वादिना परस्परं वैधर्म्येऽपि द्रव्यत्वादिना साधर्म्याभ्युपगमात्। नारङ्गफलेषु बहिरैक्येऽपि यथान्तर्भेदो भवति, तथैवान्यत्र बहिरैक्येऽपि भेद एवान्तः। यथा च कलिन्दादिफले बहिर्विविधरेखादिभिर्भेदे भासमानेऽप्यन्तरैक्यं तथैव हिन्दुषु वर्णादिभेदभिन्नेष्वपि समानशास्त्रधर्मनिष्ठत्वेन समानविराडङ्गत्वेन च समेषामैक्यमेव। ब्राह्मणस्य सतोऽपि कस्यचिद् ब्राह्मणत्वेन ब्राह्मणैः सह बन्धुत्वम् हिन्दुत्वेन रूपेण हिन्दुभिः सम्बन्धो भवति। भारतीयत्वेन रूपेण सर्वैर्भारतीयैश्च सम्बन्धो भवति। मानवत्वेन रूपेण प्राणिमात्रेण समं बन्धुत्वं तद्धितभावना च संभवत्येव।

यदप्युक्तम्—

"देशकालवयोऽवस्थाबुद्धिशक्त्यनुसारतः।
धर्मोपदेशः कर्तव्यो भैषज्यमिव पारगैः॥"
'आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥'
(मनुः १२।१०६)

'मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन्, को न ऋषिर्भविष्यतीतितेभ्य एतं तर्कमृषिं प्रायच्छन् मन्त्रार्थचिन्ताभ्यूहमभ्यूढं तस्माद्यदेव किञ्चानूचानोऽभ्यूहत्यार्षं तद्भवति।' (नि० १३।१२)

'केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः।
युक्तिहीने विचारे तु धर्महानिः प्रजायते॥'

इत्यादि विशिष्टवचांसि ब्राह्मणाद्या हिन्दवो न विचारयन्ति। मनागपि पूर्वापरं नानुसन्दधते। ईर्ष्या-द्वेष-घृणा-विच्छेद-मौढ्याद्यनौदार्य्यप्रभृतिभि कीदृशं पातित्यमिति न विचारयन्ति। तेनैव विदेशीया म्लेच्छाः पावने भारतवर्षे नग्नताण्डवं कुर्वन्ति।" इति,

तदपि निरर्गलप्रलापमात्रम्। व्यास-जैमिनि-भट्टपाद-शंकरमण्डन-वाचस्पतिप्रभृतिग्रन्थापरिज्ञानात्। वेदाः, स्मृतयः, पुराणेतिहासादयः, आर्षग्रन्थाः, भाष्यवार्त्तिकादिव्याख्यानानि, मिताक्षरा-व्यवहारमयूख-हेमाद्रि-वीरमित्रोदय-पराशरमाधवादि निबन्धग्रन्थाश्च धर्मा-धर्म निर्णय हेतव प्रसिद्धाः। तेषु तर्काणां बाहुल्यं तद्विदां न तिरोहितम्। वेदशास्त्रावि ोधिनामेव तर्काणामुक्तवचनेष्वादर उक्तो न वेदविरोधिनामपि, वेदशास्त्राविरोधिनेति वचनात्। निरुक्तेऽप्यनूचानानां तर्कः समादृतो भवति। अनूचानाश्च वेद-शास्त्रनिष्णाता एव भवन्ति।

निरुक्तस्थतर्कशब्दस्य मन्त्रार्थाभ्यूह एवार्थः। अतएव तत्रैवोक्तम्—'मन्त्रार्थचिन्ताभ्यूहम् (१३।१२) इति। सोऽपि न स्वातन्त्र्येणत्यपि तत्रैवोक्तम्। मन्त्रार्थचिन्ताभ्यूहोऽपि, श्रुतितोऽपि, तर्कतोऽपि, न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः। 'नह्येषु प्रत्यक्षमस्ति अनृषेरतपसो वा' (नि० १३।१२) 'तदिदमायुरिच्छत न निर्वक्तव्यम्' (नि० १३।१३)

इति वेदशास्त्रज्ञैर्बहुशोऽपि तदाश्रयेणैव निर्वचनं कर्त्तव्यं न केवलेन तर्क वलेन तादृक् प्रयत्नस्यायुर्विच्छेदहेतुत्वात्।

## कश्मीरवृत्तान्तः

काश्मीरनिवासिनो ब्राह्मणा दिल्लीश्वरेण यवनसम्राजा म्लेच्छाः संपादिताः। तेषां शोधनार्थं क्षत्रियेण काश्मीरराजेन 'एते म्लेच्छा आर्य्या आसन्। तान् संशोध्यार्य्येषु प्रवेशय'न्त्विति प्रार्थिता अपि पण्डिता 'म्लेच्छ-शुद्धौ नास्ति किमपि शास्त्र प्रमाणम्। अतः शास्त्रविरुद्धं किमपि न वय कर्त्तुं प्रभवामः' इत्युक्तवन्तः। तस्य फलं समग्रेण भारतेनाद्य भुज्यते' इति यत् प्रलपितम्, तदपि भ्रान्तिविजृम्भितमुक्तोत्तरत्वात्। पृथक्श्रेणी स्थापनेन तेषां हिन्दुत्वसम्पादनसंभव उक्त एव। हिन्दुवेदादिशास्त्रानुसारेणैतद्धर्म-विश्वासस्यैव हिन्दुत्वप्रयोजकत्वात्। हिन्दुशास्त्रेषु मानवमात्रसुलभस्य

सामान्यधर्मस्य भक्तिज्ञानादित्रिंशल्लक्षणस्य भागवतादिषु वर्णनात् । धूर्तै-र्मिथ्यैव तादृगितिहासाभासः प्रख्यापितः ।

यत्तु "कृण्वन्तो विश्वमार्यम्' इत्यादिभिरनार्याणामार्य्यत्वसम्पादनमुक्तम्, तन्मूढजनजल्पितम् । तत्रार्य्यशब्दस्य श्रेष्ठार्थमात्रपरत्वात् । नात्र आर्य्य-जातिरभिहिता, किन्तु श्रेष्ठत्वमभिगम्यत्वमेवार्य्यत्वमिष्टम् । तथा च विश्वं श्रेष्ठं श्रेष्ठगुणभावयुक्तं कुरुध्वमित्येवार्थः ।

यत्तु 'इन्द्रं वर्धन्तो अप्तुरः कृण्वन्तो विश्वमार्य्यम् । अपघ्नन्तोऽराव्णः ॥' (ऋ. स. ९।६३।५) इत्यस्य इन्द्रः परमेश्वरं तदुपदिष्टं समुदारं वैदिकसनातनधर्मं वा स्तुतिभिः सर्वत्र प्रचारं वा वर्धन्तः वर्धयन्तु भवन्त इति कर्तृपदाध्या-हारः । अप्तुरः अद्भिरुपलक्षितानि तद्वत् स्वच्छानि प्रशंसनीयानि शुभकर्माणि कुर्वन्तः, विद्याबलधनादिशक्तिसमुपार्जने प्रयत्नशीलाश्च भवन्तः, विश्वं समस्तं जगत् आर्य्यम् आर्य्यभावादियुक्तं कृण्वन्तः कुर्वन्तु । अराव्णो विधर्मणो दुष्टान् अनार्य्यान् अपघ्नन्तः अपघ्नन्तु विमर्दयन्तु इति व्याख्यानं कृतम् । तत्तु न सम्यक्, शाब्दन्यायविरुद्धत्वात् । यद्यपि इन्द्रशब्दस्य पारमैश्वर्य्य-योगात् परमेश्वरपरत्वं संभवति, तथापि रुढिर्योगमपहरतीति न्यायात् शतक्रतु-रिन्द्र एवात्र ग्राह्यः । 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यत्र तु इन्द्र-शब्दस्य वेदान्तप्रसङ्गात्परमेश्वरपरत्वं भवति । कथञ्चित् तत्परत्वेऽपि तदुपदिष्ट-वैदिकधर्मस्य लाक्षणिकस्यार्थस्येन्द्रपदेन ग्रहणे न किमपि बीजम् । धर्मप्रचा-रस्येन्द्रपदार्थत्वं तु दूरतो निरस्तम् । एवमेव अप्तुर इत्यस्य शुभानि कर्मा-णीत्यर्थः कथं गृहीतः । एवमेव अराव्ण इतिपदस्य अरातिः शत्रुरर्थो नाना-र्य्योऽर्थो निष्प्रमाणत्वात् ।

'आप वस्वेति त्रिंशद्च तृतीयं सूक्तं काश्यपस्य निध्रुवेरार्षं गायत्रं पवमान-सोमदेवताकं तथाचानुक्रान्त आपवस्वनिध्रुवि काश्यप, इति सायणभाष्यरीत्या अस्य तृतीयसूक्तस्य पवमानसोमदेवता भवति । यस्य मन्त्रस्य या देवता भवति सैव तत्प्रतिपाद्योऽर्थो भवति । तथा च पवमानसोमदेवतैवात्र स्तूयते ।

अतएव सायणः इन्द्रं वर्धन्तः वर्धयन्तः अप्तुरः उदकस्य प्रेरकाः विश्वं-सोममस्मदीयकर्मार्थं आर्य्यं भद्रं कृण्वन्तः कुर्वन्तु । अदातॄन् अपघ्नन्तः अभ्यर्षन्ति अभिगच्छन्तु इत्युत्तरया सम्बन्धः । अत्र न कर्तृपदाध्याहारः,

किन्तु 'सुता अनुस्वमारजोऽभ्यर्षन्ति बभ्रवः। इन्द्रं गच्छन्त इन्दवः।'

( ऋ. सं० ९।६३।६ )

इति मन्त्रात् इन्दव इतिपदमुत्कृष्यते। अत्रेन्दव इति सोमाधिष्ठातारो देवा उच्यन्ते। विश्वमितिपदेन सोमात्मकं द्रव्यमुच्यते। अतएव न कर्मकर्तृविरोधः।

कर्मप्रकारेण तथा जात्यां जात्यां प्रजायते।
तिष्ठेत् कर्मफलं यावत् व्रजेत् कर्मक्षये पुनः।

( म० भा० अनु० पर्वणि )

इति रीत्या कर्मणां जन्महेतुत्वं, जन्मना च जातिव्यवस्था स्पष्टमुक्ता। कर्मणाञ्च प्राक्तनानां फलोन्मुखानां प्रारब्धपदवाच्यनामेव जन्महेतुत्वम्। तेन न वर्तमानशरीरनिर्वर्त्यकर्मणां वर्तमानदेहपातमन्तरा जातिहेतुत्व संभवति।

किञ्च कर्मणा वर्णत्वे केषाञ्चित् कर्मणां स्वीयपरकीयत्वासंभवात्, स्वधर्म-परधर्मव्यवस्थापि नोपपद्येत। किञ्च 'स्वे स्वे कर्मण्यभिरतः' ( १८।४५ ) 'सहजं कर्म कौन्तेय सदोषमपि' इत्यादीनां गीतावचनानां संगतिर्न भवत्येव। अनापत्काले स्वधर्मत्याग-परधर्मानुष्ठानयोः पतनहेतुत्वमुक्तम्।

'वरं स्वधर्मो विगुणः न पारक्यः स्वनुष्ठितः।
परधर्मेण जीवन् हि सद्यः पतति जातितः॥ इति।

( मनुः १०।९७ )

तेन न जीविकादिभिर्वर्णव्यवस्थाप्यते किन्तु जन्मनैव।



## आजीविकावर्णवादः

किञ्च वर्णव्यवस्था जीविकाभिः पुरुषाणामेव स्त्रीणामपि वा ? तासामपि किं शास्त्रजीविका, शस्त्रजीविका, वार्त्ताजीविका, सर्ववर्णसेवाजीविका च वर्णव्यवस्थार्थं विधास्यन्ते ? न च स्त्रियस्तथा व्याप्रियमाणा दृश्यन्ते । न च तत्संभवति । तदभावे कथं तासां कर्मानुसारिणी वर्णव्यवस्था उपपद्येत ? तासामवर्णत्वे वा 'सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि ।' ( मनुः ३।१२ ) इत्याद्यसंगतं स्यात् । तत्रापि—

'शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया ।
वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने ॥' ( मनुः ३।४४ )

इत्यादिषु जन्मनैव क्षत्रियत्ववैश्यत्वाद्यङ्गीकृत्यैव व्यवस्था युज्यते न कर्मणा । एवमेव प्रतिलोमानुलोमविधायकवचनानामपि व्यवस्था जन्मना वर्णाङ्गीकार एवोपपद्यते । संकरबोधकवचनानि तु संकराणां स्वातन्त्र्येण जीविकावरणं नानुमन्यन्ते, किन्तु नियतैव जीविका तेषां तेषां सा सा । कर्मणा वर्णत्वे जन्मना समेषां बालानां शूद्रत्वं मन्तव्यम् । तथा च श्रमजीवित्वापत्तिः । न च तद् दृश्यते । न च जन्मनैव श्रमः संभवति बालानाम् ।

किञ्च 'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ ( म० २।१६८ )

इति रीत्या यः शस्त्रोपजीवी, वार्त्तोपजीवी वेदं नाधीते तस्य पुत्रादिसहितस्य शूद्रत्वेन श्रमोपजीवित्वं सम्पद्यते । एवमेव नामकरणोपनयनकालेषु अजिनमेखलोपवीतदण्डपरिमाणभिक्षाचरणाचमनादिविधयः वर्णभेदानुसारेण कथमुपपद्यन्ते ? तदानीं गुणकर्मादिभिर्वर्णनिर्णयासम्भवेन कथं शर्मवर्मादिनामव्यवस्था ? समावर्तनसंस्कारकाले गुणकर्मानुमानेन वर्णविधाने शूद्राणां तदभावात्कथं वर्णविधानम् ?

यदुक्तम् 'शस्त्रशास्त्रादिशिक्षणायोग्यस्यैव शूद्रत्वव्यवस्थे'ति, तदपि न । उपनयनाधिकाराभावेन तस्याध्ययनाप्रवृत्तौ तदयोग्यतानिर्णयस्यैवासंभवापा-

वात्। यदि 'जन्मना जायते शूद्रः' इति वचनेनैव जन्मनैव शूद्रस्य शूद्रत्व-निर्धारणं स्यात्तदा कर्मणा वर्णव्यवस्थेति मतभङ्गापत्तिः। किञ्च यदि शूद्रत्व-निर्णयो जन्मनाभ्युपेतस्तदाऽन्यवर्णनिर्णयः कुतो न जन्मना स्यात्? शास्त्र-शस्त्रवार्तासेवादि जीविकावरणाद्वर्णत्वे तद्भिन्नानां भिक्षाचौर्यव्यभिचारा-दिवृत्तीनामनुद्योगिनाञ्च प्रमादिनामवर्णत्वापत्तिश्च स्यात्।

किञ्च यदि वर्णशब्दस्य जातिमर्थमगृहीत्वा जीविकैवार्थो गृह्येत तदा कर्मणा वर्ण इत्यस्य कर्मणा कर्मेत्यर्थः स्यात्। जीविकया कर्मणा वर्णनिर्णयः जीविकानिर्णय इत्यर्थः स्यात्। स च निरर्थकोऽसंगतश्च। कोशेषु तु 'वर्णो द्विजादौ' (अमर० नाना० वर्ग ४८) 'वर्णाः स्युर्ब्राह्मणादयः॥' (१)

'विप्रक्षत्रियविट्शूद्राश्चात्तुर्वर्ण्यमिति स्मृतम्।' (२) अम० ब्रह्मवर्गः)

'वर्णो द्विजादिः शुक्लादिः' मेदिनी, 'वर्णो रूपे द्विजादौ' हैमः इत्यादिभिः ब्राह्मणादिजातिरपि वर्णशब्दस्यार्थो विज्ञायते।

'ब्राह्मोऽजातौ' (पा० ६।४।१७१ इत्यनेन अजातौ ब्राह्मः, अपत्यार्थे जातौ तु ब्राह्मण इत्येव सिद्ध्यति। जन्मनैव वर्णव्यवस्थाभ्युपगमे ब्राह्मणीगर्भगतशिशुहत्यया ब्राह्मणवधप्रायश्चित्तमुक्तम्।

'हत्वा गर्भमविज्ञातं एतदेव व्रतं चरेत्।'

(मनुः ११।८७)

'गर्भहा च यथावर्णं' याज्ञवल्क्यस्मृतौ (प्रा० अ० २५१) ब्राह्मणमात्रञ्च गर्भञ्च तस्याविज्ञात० (२४।७८ आपस्तम्बः) इत्यादौ।

न च गर्भस्थस्य शिशोः कर्मणा वर्णनिर्णयः संभवति। ऋतुस्नातया ब्राह्मण्यागर्भधारणसंभावनयैव अत्र ब्राह्मणगर्भः संभवतीति तस्या आत्रेयी संज्ञा। तस्या वधे ब्रह्महत्या प्रायश्चित्तमुक्तम्।

'निर्गुणं ब्राह्मणं हत्वा कामतो गगवान् गह॥
यष्ट्वा वा अश्वमेधेन क्षत्रियो यो महीपतिः।
जातिमात्रं यदा विप्रं हन्यादमतिपूर्वकम्॥

इति भविष्यपुराणे ब्रह्महत्याप्रायश्चित्तमुक्तम्। सर्वमेतद् जन्मना वर्णव्यवस्थायामेव संगच्छते॥

न च विश्वामित्रादिदृष्टान्तैरपि वर्णपरिवर्त्तनं सिद्ध्यति, दृष्टान्तमात्रस्यासाधकत्वात्। अन्यथाकस्यचिद् राचारस्य व्यवहार्य्यत्वे समेषां दुराचाराणां व्यवहार्य्यत्वापत्तिः स्यात्। समर्थानामृषीणां वरशापादिभिर्वर्णपरिवर्तनन्त्विष्यत एव, तस्यापवादत्वेनोत्सर्गत्वाभावात्। कर्मणा जीविकया वर्णपरिवर्तनस्यैकमप्युदाहरण पुराणतिहासादिषु नोपलभ्यते। अतएव श्रीकृष्णार्जुनयुधिष्ठिरादीनामध्यात्मोपदेष्टृत्वेऽपि न ब्राह्मणत्व किन्तु क्षत्रियत्वमेव। परशुरामादीनां योद्धृत्वेऽपि ब्राह्मणत्वमेव। भारतेऽपि आनुशासनिके पर्वणि जन्मना वर्णव्यवस्थोक्ता।

'अथ पुण्यक्षयात्तस्मात् स्थाप्यते भुवि भारत।
जायते च द्विजकुले वेदवेदाङ्गपारगे॥'

एवमेव

'स्वभावादेव विद्यन्ते चत्वारो ब्राह्मणादयः।
एक जात्या सुदुष्प्रापमन्यं वर्णत्वमागतम्॥
तच्च कर्मविशेषेण पुनर्जन्मनि जायते।
तस्मात्तेषां च वक्ष्यामि तत्सर्वं कर्मपाकजम्॥
ब्राह्मणस्तु नरो भूत्वा स्वजातिमनुपालयेत्।
दृढं ब्राह्मणकर्माणि वेदोक्तानि समाचरेत्॥
सत्यार्जवपरो भूत्वा दानयज्ञपरस्तथा।
सत्यां जात्यां समुदितो जातिधर्मान्न हापयेत्॥
एवं संवर्तमानस्तु कालधर्मगतः पुनः।
स्वर्गलोके हि जायेत स्वर्गभोगाय भामिनि॥
तत्क्षये ब्राह्मणो भूत्वा तथैव नृषु जायते॥
एवं स्वकर्मणा मर्त्यः स्वजातिं लभते पुनः॥'

एभिर्वचनैः कर्मानुसारेण जन्मप्राप्तिर्जन्मना च वर्णव्यवस्था सिद्ध्यति। जातिधर्मत्यागेन यः शूद्रकर्माभिलाषवान् भवति स यमलोके दण्डितः सन् जन्मान्तरे शूद्रो भवति।

'इतरस्तु तथा कश्चिद् ब्रह्मयोनिसमुद्भवः।
अवमत्यैव तां जातिमज्ञानतमसावृतः॥

अन्यथा वर्तमानस्तु जातिकर्माणि वर्जयेत् ।
शूद्रवद् विचरेल्लोके शूद्रकर्माभिलाषवान् ॥
शूद्रैः सह चरन्नित्यं शौचमङ्गलवर्जितः ।
स चापि कालधर्मस्थो यमलोके सुदण्डितः ॥
यदि जायेत मर्त्येषु शूद्र एवाभिजायते ।'

यदि कश्चिच्छूद्रोऽपि सत्यार्जवपरो भूत्वा दाननिष्ठो ब्राह्मण्यः श्रद्धालुः स्यात्तदा सोऽपि मरणानन्तरं स्वर्गादिसुखं भुक्त्वा ब्राह्मणानां कुले जायेत ।

'तथैव शूद्रस्त्वपरः शूद्रकर्माणि वर्जयेत् ।
सत्यार्जवपरो भूत्वा दानधर्मपरस्तथा ॥
मन्त्रब्राह्मणसत्कर्त्ता मनसा ब्राह्मणप्रियः ।
एवं युक्तसदाचारः शूद्रोऽपि मरणं गतः ॥
स्वर्गलोके हि जायेत तत्क्षये नृषु जायते ।
ब्राह्मणानां कुले मुख्ये वेदस्वाध्यायसयुते ॥
एवमेव सदा लोके शूद्रो ब्राह्मण्यमाप्नुयात् ।'

एवमेव क्षत्रिया वैश्याश्चापि स्वस्वकर्मानुसारेण उत्तमाधमयोनिषु जायन्ते । तस्माद्विशिष्टां जातिं प्राप्य सर्वथा प्रयत्नेन तां रक्षेत् ।

'एवं क्षत्रियवैश्याश्च जातिधर्मेण संयुताः ।
स्वकर्मणैव जायन्ते विशिष्टेष्ववरेषु च ॥
एवं जातिविपर्यासः प्रेत्यभावे भवेन्नृणाम् ।
अन्यथा तु न शक्यं तल्लोकसंस्थितिकारणात् ॥
तस्माज्जातिं विशिष्टां तु कथञ्चित्प्राप्यपण्डितः ।
सर्वथा तां सदा रक्षेन्न पुनर्भ्रश्यते यथा ॥'

एतदेवापस्तम्बोऽप्याह-'धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते, जातिपरिवृत्तौ । अधर्मचर्यया पूर्वो वर्णो जघन्यं-जघन्यं वर्णमापद्यते. जातिपरिवृत्तौ । ( आपस्तम्बसूत्र० १०।१०।११ ) ।

मार्कण्डेयपुराणे जातिस्मरेण सुमतिना पूर्वजन्मवृत्तमुक्तम् ।

'ब्राह्मणक्षत्रियविशां शूद्राणाञ्चापि योनिषु ।
पुनश्च पशुकीटानां मृगाणामथपक्षिणाम् ॥
समुत्पन्नोऽस्मि गेहेषु' ( १०।२१ )

इति मृगकीटादियोनिवद् ब्राह्मणादियोनयोऽप्यत्र स्पष्टमुक्ताः। यथा मृगयोनिषु मृगो भवति तथैव ब्राह्मणादियोनिषु ब्राह्मणादयो भवन्ति। तत्रैव च पुण्यैः पापैश्चारोहणावरोहणादिक्रमेणोच्चावचासु योनिषु जायते नर इत्युक्तम्।

'अन्यासु चैव पापासु दुःखदास्वपि योनिषु।
चण्डालपुक्कसाद्यासु नरो योनिषु जायते॥
अवशिष्टेन पापेन पुण्येन च समन्वितः।
ततश्चारोहणीं जातिं शूद्रवैश्यनृपादिकाम्॥
विप्रदेवेन्द्रताञ्चापि कदाचिदवरोहणीम्।
एवन्तु पापकर्माणो नरकेषु पतन्त्यधः॥" १०।८७।९०

स एव सुमतिरितः सप्तमे जन्मनि वैश्यकुलेऽहमासमित्याह—

'अहं वैश्यकुले जातो जन्मन्यस्मात्त सप्तमे।' (१३।१)

एतेन पशुपक्ष्यादिवद् ब्राह्मणादयोऽपि जातिविशेषा एव। ते च जन्मनैव भवन्ति। भीष्मेण च हीनजातेरुपदेशे दोष उक्तः॥

'उपदेशो न कर्तव्यो जातिहीनस्य कस्यचित्।
उपदेशे महान् दोषः उपाध्यायस्य भाष्यते॥'

(म० भा० अनु० १०।४)

तत्रैव दृष्टान्तरूपेणोक्तम्—'कश्चिच्छूद्रः कुलपतिमुद्दिश्य पृच्छति।

'वर्णावरोऽहं भवगन् शूद्रो जात्यास्मि सत्तम।
शुश्रूषां कर्तुमिच्छामि प्रपन्नाय प्रसीद मे॥'

(म० भा० अनु० १०।१५)

इत्यादि वचनैर्जात्यैव शूद्रत्वमुक्तम्। 'न चैतद्विद्मो ब्राह्मणास्मो वयमब्राह्मणा वा'। कर्मणा ब्राह्मण्ये नायं संशय उपपद्यते, कर्मानुसारेण निर्णेतुं शक्यत्वात्। जन्मना तत्त्वे तु मातुर्दोषात्संभवति संशयः। अध्यापनमात्रेण ब्राह्मण्यं न निर्णेतुं शक्यम्। आपत्काले अब्राह्मणादप्यध्ययनविधानात्।

'अब्राह्मणादध्ययनमापत्काले विधीयते॥'

(मनुः २।२४१)

'पतिर्भार्य्यां सम्प्रविश्य गर्भो भूत्वेह जायते।
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः॥' (म० ९।८)

'अङ्गादङ्गात् संभवति हृदयादधि जायते ।
तथा च पितुरात्मैव पुत्ररूपेण जायते ॥

तस्मात्स पितृजातीय एव । लोकेऽपि बीजजातीयत्वमेव पुत्रस्य दृष्टम् ॥ नह्याम्रबीजादनाम्रो निम्बादिर्जायते । संतानोत्पादने योषितः क्षेत्ररूपत्व-मेवोक्तम् ॥

उत्तमेऽनुकूले संस्कृते क्षेत्रे यथायोग्यं निःक्षिप्तं बीजं योग्यं स्वजातीयमेव-फल जनयति । अतएव साङ्कर्यनिवारणार्थं स्त्रीरक्षा विहिता । ऋतुगमनादि-व्यवस्था च समाद्रियते । येषु देशेषु कुलेषु च जन्मना वर्णव्यवस्था विपरिलोप मुपगता, तत्र रक्षा पातिव्रत्यादि धर्मेषु न तादृगादरश्च दृश्यते । यथा भारते ब्राह्मणादि कुलेषु, किन्तु व्यभिचाराधिक्यमेव । मनुस्तु--

'तस्मात्प्रजा विशुद्ध्यर्थं स्त्रियं रक्षेत्प्रयत्नतः ।' ( ९।९ )
तथा—स्वां प्रसूतिं चरित्रञ्च कुलमात्मानमेव च ।
स्वञ्च धर्मं प्रयत्नेन जायां रक्षन् हि रक्षति ॥' ( ९।७ )

इत्यादिना स्त्रीरक्षां बहुमानयाञ्चकार ।

अद्यत्वे तु भारतेऽपि विधवाविवाह-विवाहविच्छेद-पुनर्विवाह-विजातीय विवाहादयो विधीयन्ते समाजोत्थानादिमिषेण । भारते-

'ब्राह्मणाः क्षत्रियो वैश्यस्त्रयो वर्णाद्विजातयः ।' इति ( भा० अनु० ४७।७ )

ब्राह्मणादय एव वर्णा उक्ता न जीविका । यदि कर्मणैव वर्णनिर्णय इष्येत तदा शूद्रपुत्रोऽपि कर्मणा ब्राह्मणो भवितुं शक्नोत्येव । तथात्वे

'अब्राह्मण तु मन्यन्ते शूद्रापुत्रमनैपुणात् ।' ( मा० म० अनु० ४७।१७ )

इत्यस्यासङ्गतिरेव । अपि च

'ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स्यान्न संशयः ।'
( म० भा० अनु० प० ४७।२८ )

इति नोक्तं स्यात् । तस्माज्जन्मनैव वर्णव्यवस्था न कर्मणेति स्पष्टमेव । यथाऽन्ययोनीनां जन्मनैव जातिनिर्णयस्तथैव ब्राह्मणादियोनीनामपि ।

जीवः कोशसमायुक्तः शीघ्रं रेतस्त्वकामतः ।
स्त्रीणां पुष्पं समासाद्य सूतिकाले लभेत तत् ॥
महद् दुःखं समासाद्य वियग्योनौ प्रजायते ।

कर्मणा येन येनेह यस्यां योनौ प्रजायते।
जीवो मोहसमायुक्तस्तन्मे निगदतः शृणु।
खरयोनौ प्रजायते जायते ब्रह्मराक्षसः।
ततो जायेत ब्राह्मणः। कृमियोनौ प्रजायते।
ततो जायेत गर्दभः। पश्चाज्जायेत ब्राह्मणः।
ततस्तु निधनं प्राप्तो ब्रह्मयोनौ प्रजायते। मृतो भवति वानरः॥
विश्वासहर्त्ता तु नरो मीनो जायति दुर्मतिः।
मृगो जायति भारत। ततश्छागः प्रजायते।
स जायते महाराज मूषिको निरपत्रपः।
मृतो भवति शूकरः।
मृतो जायति वायसः। ततो जायति कुक्कुटः।
ततो निधनमापन्नो मानुषत्वमुपाश्नुते।
ततः कूर्मः प्रजायते।
कपोतः सम्प्रजायते।शुक्रो जायति मानवः।
मृतो हंसः प्रजायते। शशो जन्तुः प्रजायते।

इत्यादौ हंसादियोनिवत् ब्राह्मणादियोनिरपि तत्रोक्ताः। देशवंशादिजन्म-मूलकं दलं वर्गो वा कैश्चिज्जातिपदेनोच्यते। यथा कुरवः, यादवाः, राघवाः, सारस्वताः, बाङ्गाः, गोजराः, जर्मनाः, चीनी प्रभृतयः। तथापि जातिशब्दस्य वर्णो नार्थ इति न सिद्धयति।

जातिशब्दस्यान्येऽप्यर्था भवन्ति। यथा जन्मवर्णः इति। एकजात्य-पेक्षया द्विजातेरुत्कर्षोऽपि वर्णितः।

यथा 'मातुरग्रेऽधिजननम् द्वितीय मौञ्जिबन्धने।'
(मनु० २।१६९)
'तत्र यद् ब्रह्म जन्मास्य मौञ्जीबन्धनचिह्नितम्।
तत्रास्य माता सावित्री पितात्वाचार्य्य उच्यते।'
(मनु० २।१७०)

जातिशब्दार्थः

'आचार्यस्त्वस्य यां जातिं विधिवद्वेदपारगः।
उत्पादयति सावित्र्या सा सत्या साजरामरा।' (मनु० २।१४८)

अत्र द्विजातिशब्दान्तर्गतस्य जातिशब्दस्य जन्मैवार्थः।
'ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः, ( याज्ञ्यः आचार, ३९ )
शूद्रस्योपनयनाभावादेकजातित्वम्।
'चतुर्थ एक जातिस्तु शूद्रः' ( १०।४ मनुः )।

'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः।' (या० आ० ९० )
'हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत्।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम्॥"

( याज्ञ्य०-व्यवहार० ४३ )

'सजातावुत्तमो दण्डः आनुलोम्ये तु मध्यमः।
प्रतिलोम्ये वधः पुंसो' ( या० व्य० २८६ )
'सजातिजानन्तरजाः षट्सुता द्विजधर्मिणः।' ( मनु १०।४१ )
'अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमाद्युगात्।' ( म० १०।६४ )
इत्यादौ जातिशब्दो वर्ण पर एव।

'जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा।'( या० आ० ९६ )
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः।' ( या० व्य० ६९ )
इत्यादिषु जातिशब्दस्य मूर्धाभिषिक्तादयो वर्णसंकरा एवार्थः।

'पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः।
पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः॥
मुखबाहूरुपज्जानां या लोके जातयो बहिः।
म्लेच्छवाचश्चार्य्यवाचः सर्वे ते दस्यवः स्मृताः॥

( म० १०।४४-४५ )

इत्यादि देशविशेष-कुलविशेष-जातेषु जातिशब्दप्रयोगेऽपि न क्षतिः।

परन्तु न सर्वत्र तदर्थक एव जातिशब्दः। तथात्वे कुलधर्म-जानपद-धर्म-श्रेणीधर्मेभ्यः पृथग्जातिधर्मनिर्देशो न स्यात्।

'जातिजानपदान् धर्मान् श्रेणीधर्मांश्च धर्मवित्।
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत्॥'

( मनुः ८।४१ )

'सद्भिराचरितं यत् स्यात् धार्मिकैश्च द्विजातिभिः ।
तद्देशकुलजातीनामविरुद्धं प्रकल्पयेत् ।'

( मनुः ८।४६ )

इत्यत्र देशकुलधर्मभिन्नतया जातिधर्मनिर्देशो दृश्यते । वीतहव्य-प्रसङ्गे 'स्वजातिं त्याजितो मया' ( म० भा० अ० प० ३०।५५ ) इत्यादि वचनैः ब्राह्मणक्षत्रियादिवर्णेषु जातिपदप्रयोगो दृश्यते ।

कर्मणा वर्णत्वे त्वर्जुनस्य शमदमवैराग्यादियुक्तत्वेन न केवलं ब्राह्मणत्व-मपि तु संन्यासोऽपि स्वधर्म एव स्यात् । तथाच शौर्यादिगुणवत्त्वेन द्रोण-कृपादीनां क्षत्रियत्वमेव युक्तं स्यात् । परम् 'स्वधर्मे निधनं श्रेयः' 'स्वे स्वे-कर्मण्यभिरतः' इत्यादि रीत्या जन्मना वर्णसिद्धान्तमाश्रित्यैवार्जुनस्य क्षत्रियत्वं, भिक्षाधर्मानर्हत्वमुक्तम् । द्रोणादीनां स्वधर्मविरुद्धक्षात्रधर्माचरणेन निन्दार्हता चोक्ता ।

यदुक्तम् 'पृथिव्यां सर्वमानवाः' इति रीत्या जीविकालक्षणकर्मणैव वर्णव्यवस्था युक्ता, अन्यथा मानवमात्रग्राह्यता मानवधर्मस्य न भविष्यती-ति, तदपि न, विकल्पानुपपत्तेः । यदि मानवधर्मपदेन अहिंसा सत्यादिलक्षणाः साधारणा धर्मा एव गृह्येरन् तदा तु मानवमात्रग्राह्यता तत्र संभवत्येव । यदा तु वर्णाश्रमधर्मस्तदा तु न तस्य 'पृथिव्यां सर्वमानवा' इत्यस्य विषयता ।

वस्तुतस्तु 'स्वं स्वं चरित्रं शिक्षेरन्' इत्युक्तरीत्या प्रातिस्विकचरित्रशिक्षण एव मनूक्तेस्तात्पर्य्यम् । नच सर्वेषां वर्णाश्रमधर्मो विहितः । अतएव मनुना दशमेऽध्याये पौण्ड्रक-चौड्र-द्रविड-काम्बोज-यवन-शक-पारद-पह्लव-किरात-दर-द-खशादीनां कृते प्रतिलोमसंकरादीनाञ्च कृते, मत्स्यघातचर्मवादित्रशिल्पा-दिभिर्जीविका विहिता । ब्राह्मणादीनां कृते विशेषत उक्तम्—

'सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा ।
श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै ।'

( मनुः २।८ )

मिथ्याप्रलोभनेनाबोधजनान् प्रतार्य्य स्वधर्मे दीक्षयित्वा स्वकलेवरवृद्धि-र्नेष्यते । एतदर्थमेव स्वधर्मनिष्ठा पोषिता मन्वादिभिः ।

'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।' ( श्री० भ० गी० १८।४५ )

जन्मना वर्णः इति रीत्या पूर्वं जन्मना वर्णरूपाधिकारप्राप्तिः। तदनुसारेण कर्मप्रवृत्तिः। कर्मणा वर्ण इति रीत्या तु कर्मणः प्राथम्यम्। अधिकाररूपवर्णप्राप्तिः पश्चात्। शास्त्रेषु तु जन्मसिद्धान् ब्राह्मणादीनुद्दिश्यैव तानि तानि कर्माणि विहितानि। ब्राह्मणादीनां यानि प्रातिस्विकानि कर्माणि तेषु तेषामेवाधिकारो नान्येषाम्। न च तत्तत्कर्म करणादेव ब्राह्मणत्वादिकं किन्तु 'एष वर्णाश्रमो धर्मः।' इति (शान्ति पर्व २०८।१९)

धर्मस्य वर्णाश्रमत्वमुक्तम्। तेन कर्मणः पूर्वमेव जन्मनैव तदाश्रयसिद्ध्या भाव्यम्। दुहित्रादीनां कृते तदाश्रयाणि कर्माणि विधीयन्ते न कर्मभिर्दुहित्रादयः साध्यन्ते। अन्यथा यव पत्नी कर्म कुर्यात्सैव पत्नी स्यादित्यव्यवस्थैव स्यात्। पित्रोः शुश्रूषा पुत्रस्य धर्मस्तथापि न सेवाधर्मेण कश्चिद्वस्तुतः पुत्रो भवति, व्यवहारे तस्य दायानधिकारात्।

'अधीयीरंस्त्रयो वर्णाः स्वकर्मस्था द्विजातयः।
प्रब्रूयाद् ब्राह्मणस्त्वेषां नेतराविति निश्चयः।' (मनुः १०।१)

इत्यनेनापि जन्मनैव वर्णव्यवस्था सिद्ध्यति।

स्वधर्मविरुद्धाचरणस्य प्रत्यवायहेतुत्वं प्रसिद्धमेव। जन्मना ब्राह्मणस्य तदनुगुणनिजगुणकर्माण्यावश्यकानीति तदर्थं प्रयत्नातिशयो युक्त एव। तथापि क्वचित्तदभावेऽपि जन्मना ब्राह्मण्यमस्त्येव। तस्यैव जातिब्राह्मण्यमुक्तम्। अतएव 'चत्वारो वर्णाः ब्राह्मण क्षत्रिय-वैश्य-शूद्राः, तेषां पूर्वः पूर्वो जन्मतः श्रेयान्' इत्यापस्तम्बसूत्रे जन्मनैव वर्णव्यवस्थोक्ता। जन्मनैव ब्राह्मणादीनां श्रेष्ठत्वमपि। तथा च शूद्रोचितगुणकर्मशून्यशूद्रापेक्षया तत्सम्पन्नस्य श्रेष्ठत्वम्, तदपेक्षयाऽपि जातिवैश्यस्य श्रेष्ठत्वम्, तदपेक्षयाऽपि जातिक्षत्रियस्योत्कर्षः। एवमेव मुख्यक्षत्रियापेक्षया जातिब्राह्मणस्य तदपेक्षयापि मुख्यब्राह्मणस्योत्कर्षः। अतएव मात्रब्राह्मणश्रोत्रियानूचानादिभेदेन ब्राह्मण वैविध्यमप्युक्तम्। व्यास स्मृतौ ब्राह्मणसमब्राह्मणब्रुवादि भेदोऽप्युक्तः (४।४१-४५)।

'ब्रह्मबीजसमुद्भूतो मन्त्रसंस्कारवर्जितः।
जातिमात्रोपजीवी च स भवेद् ब्राह्मणः समः॥
गर्भाधानादिभिर्मन्त्रैर्वेदोपनयनेन च।
नाध्यापयति नाधीते स भवेद् ब्राह्मणब्रुवः॥'

अत्रिणापि देव-मुनि-राज-वैश्य-शूद्र-निषाद-पशु-म्लेच्छ-चण्डालेति-दश भेदा ब्राह्मणानामुक्ताः। अत्रि संहिता ३७१) म० भा० शा० ७६ अध्याये ब्रह्मसम-देवसम-क्षत्रसम-वैश्यसम-शूद्रसम-ब्राह्मणचाण्डालभेदेन षड्भेदा ब्राह्मणानामुक्ताः। यदि कर्मणैव ब्राह्मणः स्यात्तदैते भेदा असंगता एव स्युः। जन्मना ब्राह्मण्यपक्ष एव गुणकर्मानुसारेण चैते भेदाः संगच्छन्ते। जन्मोचितकर्महीनो ब्राह्मणः शूद्रसमब्राह्मणो भवति इति स्पष्टमुक्तम्;

'ब्रह्मबीजसमुद्भूतो मन्त्रसंस्कारवर्जितः।
जातिमात्रोपजीवी च स भवेद् ब्राह्मणसमः॥'

(व्याससमृतिः)

'नरेषु ब्राह्मणाः स्मृताः। ब्राह्मणेषु च विद्वांसः'

(म० १।९६-९७)

'उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती।'

(म० १।९८)

'ब्राह्मणो जायमानो हि पृथिव्यामधिजायते।'

(म० १।९९)

'यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः।
यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति॥'

(म० २।१५७)

'जन्मना ब्राह्मणो ज्ञेयः' (अत्रिस्मृतिः) इति रीत्या ब्राह्मणादयो जन्मनैव भवन्ति। गुणकृता भेदास्तु गौणा एव। जन्ममूलकमुख्यब्राह्मणादीनुद्दिश्य यानि कर्माणि विहितानि न तेषु गौणब्राह्मणादीनामधिकारः श्रुतौ साक्षि-प्रकरणे मनुना च ब्राह्मणयोनि-क्षत्रिययोनि-विड्योनि शूद्रयोनिरिति योनिशब्द-प्रयोगेण जन्ममूलकत्वमेव ब्राह्मणादीनां स्पष्टमवगम्यते। 'ब्राह्मणयोनिम्' (छान्दोग्ये ५।१०।८)।

'गृहिणः पौत्रिणः मौलाः क्षत्रविट्शूद्रयोनयः।' (८।६२ मनु)

श्राद्धप्रकरणे वर्ज्यब्राह्मणेषु अब्राह्मणवृत्तीनां ब्राह्मणानां श्राद्धा-नर्हतोक्ता। यदि कर्मभिर्गुणैश्च वर्णव्यवस्था स्यात्तदा तेषां ब्राह्मणत्वाभावा-देव तदनर्हतेति पृथक् तदनर्हतोक्तिरपार्थैव स्यात्। तत्रानधीयानः मांसविक्रय-

वाणिज्यवृत्ति - प्रेष्य-वार्धुषिक - पशुपाल-कुशीलव - शूद्रशिष्य-भृतकाध्यापक-बन्दि-तैलिक-रसविक्रयि-धनुर्बाणनिर्मातृ-हस्त्यादिशिक्षक-पक्षिपोषकयुद्धाचार्य-वृक्षारोपक - श्येनजीवि - हिंस्र-वृषलवृत्ति - कृषिजीवि -अजाविपाल-माहिषिक विगर्हिताचारा एवंविधा अपाङ्क्तेया ब्राह्मणाः श्राद्धे निषिद्धाः। जन्मना वर्णत्वे तेषां प्राप्तिर्निषेधश्च संगच्छते, न कर्मवर्णपक्षे।

'गोरक्षकान् वाणिजिकांस्तथा कारुकुशीलवान्।

प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्॥ ( मनुः ८।१०२ )

इत्यादिषु भिन्नवृत्तिष्वपि विप्रपदप्रयोगो जन्ममूलकवर्णव्यवहार-मङ्गीकृत्यैव संगच्छते। यथा तात्कालिकैः कर्मभिर्वर्णव्यवस्थाऽशास्त्रीया अव्यवहार्या च तथैव सत्त्वादिगुणतारतम्येनापि मनुष्यैर्वर्णव्यवस्था दुःसम्पादा। भोजनपानसंगतिशिक्षणादिभिर्गुणेषु स्थैर्यासंभवात्। तदधीनाया वर्ण-व्यवस्थाया अपि स्थैर्यं न संभवति। दुर्वासा-भृगु-परशुरामादिषु क्रोधित्वादि-भिरपि न क्षत्रियत्वव्यवहारः। हरिश्चन्द्रयुधिष्ठिराम्बरीषादीनां परम-सात्त्विकानामपि क्षत्रियत्वमेव प्रसिद्धम्। विदुरस्य परमसात्त्विकत्वेऽपि शूद्र-त्वमेव। तथाविधस्यैव तुलाधारस्य वैश्यत्वमेव ( म० भा० ) अनुशासनपर्वणि सिंह-व्याघ्र-वराह-मृग-जल - सर्प-मकरस्वभावानामुग्रमन्दानेकनिन्द्यगुणाना-मपि ब्राह्मणानां वर्णनं भीष्मेण कृतम्।

'दुरासदाश्च चण्डाश्च रभसाः क्षिप्रकारिणः॥ १३॥

सन्त्येषां सिंहसत्त्वाश्च व्याघ्रसत्त्वास्तथापरे।

वराहमृगसत्त्वाश्च जलसत्त्वास्तथापरे॥ १४॥

सर्पस्पर्शसमाः केचित्तथान्ये मकरस्पृशः।

विभाष्यघातिनः केचित्तथा चक्षुर्हणोऽपरे॥ १५॥

सन्ति चाशीविषसमाः सन्ति मन्दास्तथापरे।

विविधानीह वृत्तानि ब्राह्मणानां युधिष्ठिर॥ ( ३५।१३-१६)

शास्त्रेषु गुणकर्मानुसारिणी वर्णव्यवस्था नास्त्येवेति सिद्धम्। भारतीयानां जीवनं न केवलमर्थनिष्ठमपितु धर्मार्थकाममोक्षेति चतुर्वर्गपरमेव। अत-एव न जीविकामात्रपर्य्यवसायिनी वर्णव्यवस्था किन्तु वर्णव्यवस्थायाः लौकिकाः पारलौकिकाश्चाभ्युदया मोक्षश्च यथायोग्यमिष्यन्ते।

'तेषु सम्यग्वर्तमानो गच्छत्यमरलोकताम् ।
यथा संकल्पितांश्चेह सर्वान्कामान्समश्नुते ॥' ( मनुः २।५ )
'श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्यचानुत्तमं सुखम् ॥' ( म० २।९ )
'ब्राह्मणस्य तु देहोऽयं क्षुद्रकामाय नेष्यते ।
कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च ॥'
( भागवत० ११।१७।४२ )
'दानातिथ्यं क्रिया धर्मैर्यान्ति वैश्याश्च सद्गतिम् ।'
( म० भा० वनपर्व १५०।५१ )

शूद्रस्यापि कृते मनुनोक्तम्
'यथा तथाहि सद्वृत्तमातिष्ठत्यनसूयकः ।
तथा तथेमं चामुञ्च लोकं प्राप्नोत्यनिंदितः ॥'
( म० १०।१२८ )
'अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ।'
( याज्ञवल्क्य० २१ )

इति रीत्या—जीविका विभागेनार्थिकसंघर्षनिराकरणमेव, न वर्णधर्मप्रयोजनम् । किन्तु तद्द्वारा सौविध्येन धर्मानुष्ठानामुष्मिकफलनिष्पत्तिरेव मन्वादिधर्मशास्त्राणामुद्देश्यम् ।

यद्यपीदानीं स्वातन्त्र्येण सर्वैरेव सर्वाणि कर्माणि क्रियन्ते तथापि वंशानुक्रमेण प्राप्तजीविकाश्रयणेन सुव्यवस्थासंघर्षाभावश्चाद्यापि दृश्यते संभाव्यते च ।

पक्षिणामुड्डयने मत्स्यानां प्लवने यथा पित्रादि संस्कारानुसारेणैव साफल्यं भवति जन्मान्तरीयसंस्कारैरपि तादृशे कुले जन्म भवति यत्र तत्साफल्यं भवेत् । तदुक्त भगवताऽपि गीतायाम्—

'प्राप्य पुण्यकृतांल्लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥
अथवा योगिनामेव कुले भवति धीमताम् ।'
'तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम् ॥
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥'

कर्मणा वर्णव्यवस्थायां तु कस्यचिदपि कस्मिंश्चिदपि कर्मण्युत्तरदायित्वं न भवति। लाभलोभमन्तरा न क्वापि प्रवृत्तिर्भविष्यति। जन्मना तु संज्ञानत्वे कुलपरम्परा प्राप्ते कर्मणि स्वाभाविकी प्रवृत्तिर्जायते, तदकरणान्निन्द्यते च। तेन जन्मनियतेषु कर्मस्वनायासेनैव नैपुण्यं जायते। यथारुचि प्रवृत्तौ तु रुचीनामानन्त्याद्व्यवस्थैव स्यात्। सौविध्यञ्च कुलप्राप्तकर्मनैपुण्य-सम्पत्तौ जायते। यद्यपि जन्मनाधिकारमाश्रित्यापि कर्त्तव्यवैमुख्यं केषाञ्चिद् दृश्यते तथापि तत्रावधानमेवोपायः। अन्यथा कर्मणा वर्णव्यवस्थायामपि तन्नासम्भवि। वर्णनिर्णयसमितिनिर्माणे सदस्यानां निर्वाचने निर्वाचन-दोषा आयास्यन्ति।

तत्रापि पक्षपातोऽन्यायश्च न भविष्यतीति को वक्तुमीष्टे? लाभप्रदवृत्ति-प्राप्त्यर्थं प्रभावशालिनां प्रभावोऽपि निष्पक्षवर्णनिर्णये बाधको भविष्यति। नहि कर्मणा वर्णव्यवस्थायां सत्यामेव रजस्तमसोः सर्वथा विलोपो भविष्यति। न वा तावतैव महाशनानां महापाप्मनां तमोद्वाराणां कामक्रोधलोभानामपगमः नलयुधिष्ठिरपरीक्षिदादीनामपि बुद्धिषु रजस्तमसोः प्रभावः प्रतिफलति। तदा कथं नान्यत्र तत्प्रभावः स्यात्? ततोऽनादिपरम्पराप्राप्तजन्मना वर्णव्य-वस्थायामेव स्थैर्येण गुणाः सम्पादनीया परिहार्याश्चागन्तुका दोषाः।

यत्तु-सर्पयुधिष्ठिरसंवादेन कर्मणा वर्णसमर्थनप्रयासस्तदपि तुच्छम्, तत्र संवादे जीविकालक्षणस्य कर्मणोऽनुक्तत्वात्। तत्र तु केवलं ब्राह्मणस्यैव चर्चा दृश्यते, न क्षत्रियादीनाम्। तत्र तु ब्राह्मणत्वसाधकानां येषां कर्मणा-मुल्लेखस्तानि न जीविका साधनानि। तत्र तु 'ब्राह्मणः को भवेद्राजन्' इति सर्पप्रश्ने—

सत्यं दानं क्षमाशीलमानृशंस्यं तपो घृणा।
दृश्यते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः॥'

(म० भा० वन पर्व १८०।२१)

नैतेषु किञ्चिदपि कर्म जीविका साधनम्। एते च सत्यादिगुणा न केवलं शिक्षोपजीविकावतां शास्त्राजीविकावतां ब्राह्मणानामुपयुज्यन्ते, भवन्ति च। किन्तु शस्त्रजीविनां क्षत्रियाणां, वार्त्ताजीविनां वैश्यानामपि भवन्त्येव। तथा च किं ते सर्वेऽपि ब्राह्मणा एव भविष्यन्ति? तथा च चातुर्वर्ण्यभङ्ग एव स्यात्।

अथवा

'यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः ।
यत्रैतन्न भवेत् सर्प तं शूद्रमिति निर्दिशेत् ॥'
( म० भा० व० प० १८०।२६ )

इति रीत्या ब्राह्मणशूद्रेति वर्णद्वयमेव स्यात् । अत एवेह संवादे चातुर्वर्ण्य-विचारप्रसङ्गाभावात् ब्रह्मज्ञानोपयोगिसात्त्विकगुणैर्ब्रह्मज्ञत्वलक्षणस्य पारमार्थिक-ब्राह्मण्यस्यैव निरूपणम् । तथा च तत्रैव शान्तिपर्वणि—

"कषाये कर्मभिः पक्वे रसज्ञाने च तिष्ठति ॥३८॥
आनृशंस्यं क्षमा शान्तिरहिंसा सत्यमार्जवम् ।
अद्रोहोऽनभिमानश्च ह्रीस्तितिक्षा शमस्तथा ॥३९॥
पन्थानो ब्रह्मणस्त्वेते एतैः प्राप्नोति यत्परम् । ( २७०।३८-४० )

यक्षयुधिष्ठिरसंवादेऽपि कुलवृत्तस्वाध्यायश्रुतेषु ब्राह्मण्यं केन सिद्ध्यतीति प्रश्नस्योत्तरप्रसङ्गे कुलस्वाध्यायश्रुतानि न द्विजत्वकारणम् किन्तु वृत्तमेव तत्कारणम् । अतो ब्राह्मणेन वृत्तोपार्जनार्थमेव प्रयतनीयम् इत्युक्तम् । तत् संवादेनापि कर्मणा वर्णव्यवस्था न सिद्ध्यति, वर्णव्यवस्थाप्रसङ्गाभावात् , क्षत्रियवैश्या-दिविचाराभावाच्च ।

अत्र

'वृत्तं यत्नेन संरक्ष्यम् ब्राह्मणेन विशेषतः ।'
( वन० प० ३१३।१०९ )

'चतुर्वेदोऽपि दुर्वृत्तः स, शूद्रादतिरिच्यते ।'
( म० भा० व० प० ३१३।१११ )

अत्र ब्राह्मण्यं पूर्वसिद्धमेव । तस्य तु वृत्तरक्षणे यत्नातिशयकर्तव्यतोक्ता । मनुष्यमात्रेण वृत्तं रक्षणीयम् । ब्राह्मणस्य सर्वश्रेष्ठत्वादेव प्रयत्नातिशयस्तत्रा-वश्यकः । तत्रोपसंहारे—

'योऽग्निहोत्रपरो दान्तः स ब्राह्मण इति स्मृतः ।'

इत्युक्तं तत्राग्निहोत्रं न जीविका, न वा दान्तता जीविका ।

जन्मना वर्णव्यवस्थेति सिद्धान्तबोधकश्रुतिस्मृत्यादिवचनाविरोधेनैव क्वचित् कर्मणा वर्णबोधकवचनानां समन्वयो युक्तः । तथा च भृगु-भरद्वाजसंवादीयानां 'न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ।'

'कर्मभिर्वर्णतां गतम्'। 'ते द्विजाः क्षत्रतां गताः। शूद्रतां गताः'
(शान्तिपर्व १८८।१०)

इत्यादि वचनानां तैस्तैः कर्मभिर्जन्मान्तरे क्षत्रतां वैश्यतां गता इत्येवार्थो मन्तव्यः। तस्मिन्नेव जन्मनि द्विजाः क्षत्रतां गता इति वचनाभावाच्चैव-मेवार्थो युक्तः। अत एव जन्मान्तर इत्यवश्यमध्याहर्त्तव्यम्। अत एव—

'केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः।

कथञ्चिदप्यतिक्रामन् पापः सूकरतां व्रजेत्।' (मनुः ३।१९०)

इदानीमपि जन्मान्तरे सूकरत्वप्राप्तिरुक्ता, न तस्मिन्नेव जन्मनि, प्रत्यक्षविरोधात्। तथैव प्रकृतेऽपि विज्ञातव्यम्। अत एव—

शूद्रे चैतद्भवेल्लक्ष्म द्विजे तच्च न विद्यते।

न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः॥' (शा०प०१८९।८)

इति वचनं तु गौणवर्णत्वबोधनद्वारा, कर्महीननिन्दनद्वारा च स्वकर्म-निष्ठा माहात्म्यं बोधयति। नात्र जन्मना वर्णनिषेधः। अत एव शूद्रो न शूद्रः, ब्राह्मणो न ब्राह्मण इत्युक्तम्। यो जन्मना शूद्रः प्रसिद्धः स तदुचितकर्माभा-वादशूद्र एव मन्तव्यः। एवं जन्मना ब्राह्मणोऽपि तदुचितगुणकर्माभावाद-ब्राह्मण एवेति मन्तव्यम्। शौर्यादिगुणाभावात् सिंहोऽसिंह इव, शौर्यादि-गुणयोगादसिंहोऽपि देवदत्तः सिंहवत्, अब्राह्मणोऽपि शूद्रः शमादिब्राह्मण-गुणयोगाद् ब्राह्मण इति व्यपदिश्यते। एतेन भृगुभरद्वाजसंवादेन कर्मणा वर्णव्यवस्था प्रतिपादनं भ्रममूलकमेव।

'ब्रह्मवीर्य्यं तथा क्षेत्रं संस्कारा ब्रह्मसम्भवाः।

ब्राह्मणाचरणाद् ब्रह्म विद्याभिर्ब्राह्मणो भवेत्॥"

इत्यादि वचनैः मेरुतन्त्रेऽपि ब्रह्मवीर्यक्षेत्रजानामेव संस्काराचरणब्रह्म-विद्याभिर्ब्राह्मणस्योत्तमत्वम् तदभावे त्वपकृष्टत्वमुक्तम्। ब्राह्मणोचितेषु संस्कारेष्वाचारेषु तु ब्रह्मवीर्यक्षेत्रजानामेवाधिकारः। किञ्च कर्मणा वर्णत्वपक्षे कस्यचिद् भूमिस्वामिनश्चत्वारो पुत्रास्तेषु कश्चन चिकित्सावृत्तिं, कश्चि-च्छिल्पं, कश्चिन्न्यायवादं करोति, पौरोहित्यञ्चापरः, कृषिञ्च न कश्चित्करोति। तदानीं भूमिरन्यस्मै दीयेत? राज्ञा वा गृह्येत? भूमौ तेषां स्वामित्वं कथं

स्थास्यति ? तथापि कर्मवर्णवादिनोऽपि परम्पराप्राप्तां भूमिं त्यक्तुं नेच्छन्ति ।

यदप्युक्तम् 'नानाविधैर्वाष्पयान-धूमयान-वायुयान-तडित्संदेश-दूरश्राव-कादियन्त्रैश्च सर्वस्यैव जगता घनिष्ठः सम्बन्धः सम्पन्नः । तथा च कर्मणा वर्णव्यवस्थायां प्रसृतायामेकत्रैव कथं जन्मना वर्णव्यवस्था सम्भवतीति, तदपि तुच्छम् । जन्मना वर्णव्यवस्थापक्षे व्यवहारे बाधाभावात् ।

'राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः ।
राजानमनुवर्तन्ते यथा राजा तथा प्रजाः ॥' ( चा॰ नी॰ द॰ )

'दुष्येयुः सर्ववर्णाश्च भिद्येरन् सर्वसेतवः
सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ।'
( मनुः ७.२४ )

'राजा हि युगमुच्यते'

शासकस्य धर्मिष्ठत्वे जनताया धर्मिष्ठत्वोपपत्तिः ।

कैश्चिदुच्यते 'विक्रमस्याष्टम्यां शत्यामत्र सर्वत्र कर्मणैव वर्णव्यवस्थाऽऽसीत् । तत्प्रभावादेव सर्वाङ्गीणा समुन्नतिरासीदिति । तत्तुच्छम् , तथात्वे कथं तद्विनाशः, कथञ्च तद्विपरीतवर्णव्यवस्थाप्रचारः सञ्जातः ।

'यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः ।
तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ॥" ( मनुः १०।९६ )

इति रीत्या क्षत्रियवैश्यादीनां ब्राह्मणजीविका निषिद्धा । अद्यत्वे प्रायेणाध्यापनादिकार्य्ये सर्वेषामेव प्रवृत्तिर्दृश्यते । याजनेऽपि बहूनां प्रवृत्तिः । प्रतिग्रहे तु विवेक एव नास्ति । वृत्त्यपहारादेव ब्राह्मणानामपि ब्राह्मणोचितानि कर्माणि न भवन्ति ।

'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्य्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत् ॥

इति पराशरमाधवीय उद्धृतमनुवचनरीत्या कुटुम्बपोषणार्थं वर्णविपरीतेष्वपि कर्मसु प्रवृत्तिर्जाता । कर्मणा वर्णपक्षे तु यस्य यत्र कर्मणि प्रवृत्तिस्तदनुसारेण तदेव तस्य कर्म भवति । तेन वृत्तिसाङ्कर्य्यनिषेधकवचनानां निर्विषयत्वमेव स्यात् ।

अप्रामाण्यञ्च वेदानां शास्त्राणाञ्चाभिलङ्घनम् ।
अव्यवस्था च सर्वत्र तद्वै नाशनमात्मनः ॥

( शान्ति प० ७९।१९ )

इतिरीत्या वेदादिशास्त्रमर्यादातिक्रमणस्यानर्थहेतुत्वमेव ।

यदुक्तम् 'यद्यपि शास्त्रेषु जन्मना वर्णबोधकवचनानां बाहुल्येनोपलब्धिः, कर्मणा वर्णबोधकवचनानां न्यूनतैव, तथापि यथा मणिरत्नाद्यपेक्षया लोष्ठपाषाणादीनां बाहुल्येऽपि न तस्य महत्त्वं, मणिरत्नादीनामेव तु महत्त्वं, तथैव कर्मणा वर्णबोधकवाक्यानामेव महत्त्वमनुसन्धेयमिति, तत्तुच्छम् , तन्महत्त्वबोधकप्रमाणाभावेन तादृक्सिद्धान्तस्य निःसारत्वात् । पूर्वोक्तयुक्त्या गुणकर्मादिबोधपरत्वेनातत्परत्वेन तत्परजन्मना वर्णबोधकवाक्यानामेव प्राबल्यात् ।

## वेदे चातुर्वर्ण्यसाधनम्

ननु वेदे चातुवर्ण्योल्लेखो नास्त्येव । तत्र 'हत्वी दस्यून् प्रार्य्यं वर्णमावत् ।'

( ऋ० सं० ३।३४।९ )

'यो दासं वर्णमधरं गुहाकः ।' ( ऋ० २।१२।४ )

'उभौ वर्णौ ऋषिरुग्रः पुपोष ।' ( ऋ० सं० १।१७९।६ )

इत्यादौ वर्णद्वयस्यैवोल्लेखात् । यद्यपि ब्रह्मराजन्यादिशब्दैरनेकजात्युल्लेखो लभ्यते । परन्तु तासां वर्णत्वं न सिद्धयति,

पुराणेषु च- 'एकवर्णमिदं पूर्वं विश्वमासीद्युधिष्ठिर ।
कर्मक्रियादिभेदेन चातुर्वर्ण्यं प्रतिष्ठितम् ।'

इत्यादि महाभारतवचनैश्च चातुवर्ण्यं न प्राचीनं, किन्त्वर्वाचीनमेव सिद्धयतीति चेन्न, भावानवबोधात् । चत्वारो वै वर्णाः । ब्राह्मणो राजन्यो वैश्यः शूद्रः' ( ५।५।४।९ ) इति शतपथश्रुतौ वर्णचतुष्टयस्य कण्ठत उक्तत्वात् । चत्वारो वै पुरुषाः ।

'ब्राह्मणो राजन्यो वैश्यः शूद्र' इति ( ४।४।६ मै० सं० )

मैत्रायणीयसंहितायामपि चातुवर्ण्यमुक्तमेव । ब्राह्मण-क्षत्रिय-वैश्य-शूद्रा इति चत्वारो वर्णास्तेषां वर्णानां ब्राह्मण एव प्रधान' इति वज्रसूच्युपनिषद्यपि चातुर्वर्ण्यमुक्तमेव । वेदे आर्य्यशब्देन ब्राह्मणादि त्रयो वर्णा गृह्यन्ते, दासशब्देन शूद्रा गृह्यन्ते । तदप्युक्तम्— 'तिस्रः प्रजा आर्य्या ज्योतिरग्राः' ( ऋ० सं०

७।३१।७ ) इति मन्त्रे । अत एव प्रार्य्यं वर्णमावत् ( ऋ० सं० ३।३४।९ ) इत्यत्र सायणेन आर्य्यं उत्तमवर्णं त्रैवर्णिकमित्युक्तम्। दासवर्णं शूद्रादिकमित्यपि तेनैवोक्तम्। उभौ वर्णौ इत्यत्र तु वर्णशब्देन नार्य्य-शूद्रौ विवक्षितौ, किन्तु कामः तपश्च । अत एव उभौ वर्णौ वर्णनीयावाकारौ कामश्च तपश्च पुपोष इति सायणेनोक्तम्। तथा च ब्राह्मणादयो वर्णा एवेति सर्वथा सिद्ध्यत्येव ।

एकवर्णमित्यादिवचनं भारते नोपलभ्यते । यदि स्यात्तर्हि त्वयमर्थः । इदं विश्व पूर्वं सृष्टेः प्राक् एकवर्णमद्वितीयब्रह्माकारमासीत् । पूर्वकल्पीयजीवानां कर्मक्रियाविभेदेन प्राक्कालिककर्मसंस्कारानुसारेण भावि सृष्टौ चाध्ययनादि-क्रियाविभागेन चातुर्वर्ण्यं जातम् । अयञ्चार्थः श्रुत्याद्यनुसारी ।

'चातुर्वर्ण्यं भगवता पूर्वं सृष्टं स्वयं भुवा ।'

( अनु० प०म० भा० १४३।२ )

इति वचनेन भगवन्निर्मितं चातुर्वर्ण्यं प्रतीयते ।

यच्च भविष्यपुराणीयवचनेन 'एकस्य पितुश्चत्वारः पुत्रा यथा समानवर्णा भवन्ति तथैवैकस्य परमात्मनः सर्वेऽपि पुत्राः समानजातीया एवेति कुतो वर्णभेद' इति, यथा वैकस्योदुम्बरवृक्षस्य मध्याग्रमूलादिप्रदेशेष्वपि जायमानानि फलान्येकजातीयान्येव तथैव परमात्ममुखबाहूरूपादेभ्योऽपि जायमाना एकजातीया एवेति, तदपि तुच्छम् , समानजनकाज्जायमानानामपि स्त्रीपुरुषादिजातिभेददर्शनात् । ब्राह्मणादिषु मनुष्यत्वेन समानजातीयताप्यस्त्येव । न तावताऽपि तदवान्तरजात्यपलापः सम्भवति ।

प्रकृते तु एकस्मादेव पितुः परमेश्वराज्जायमानेषु देवर्षि-पितृ-मनुष्य-पशु-पक्षि-कीट-पतङ्ग-वृक्ष-पाषाणादि जातिभेदोऽस्त्येव । यथैकस्यापि देहस्य मुखबाहूरुपादेषु स्वरूपव्यवहारशुद्ध्यशुद्ध्यादि भेदस्तद्वत्। भविष्यपुराणीयवचनाभिप्रायस्तु जन्मकर्मसमुच्चयवर्णनमित्युक्तमेव ।

## मैक्समूलरमतम्

यदुक्तम् 'मनूक्ता वर्णव्यवस्था वेदे न विद्यते । चिप्स फ्राम ए जर्मन वर्कशाप भाग (२।१८६७) इति मैक्समूलरीये पुस्तके लिखितम् । तदपि तुच्छम् । 'दासं वर्णमधरं गुहाकः' ( ऋ० सं० २।१२।४ ) 'विश्वः प्रजा आर्य्या ज्योतिरग्रा' ( ऋ० सं० ३।३४।६ ) 'दैव्यो वै वर्णो ब्राह्मणः असुर्यः शूद्रः' तैत्तिरीय ब्रा० १।२।६।७ )

'क्षत्रं वा अश्वश्वो वश्यश्च शूद्रश्चानु रासभो ब्राह्मणमजः।' न 'कदाचन ब्राह्मणश्च क्षत्रियश्च वैश्यश्च शूद्रश्च पश्चादन्वितः'—श० ब्रा० ६।४।४।१२-१३

'शूद्रार्यौ चर्मणि व्यायच्छेते। तयोरार्यं वर्णमुज्जापयन्ति। यदार्यं वर्णमुज्जापयन्ति आत्मानमेव तदुज्जापयन्ति' (ताण्ड्य ५।६।१४।१६)

'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' (तै० सं० ७।१।१।६) इत्यादिप्रमाणैर्वर्णभेदस्तदुत्कर्षापकर्षश्च सर्वथा सिद्ध्यति।

तेन मैक्समूलरोक्तिरनादरणीयैव। 'न शूद्रो दुह्यादसतो वा एष संभूतोऽसन् स्यात्' (मैत्रायणी सं० ४।१।३।२२)

इत्यत्र शूद्रकर्तृकं गोदोहनं यज्ञे निषिद्धम्। तेन शूद्रैः सार्धं भोजनविवाहादिसम्बन्धो दूरापास्तो वेदितव्यः।

'मनुर्वै यत्किञ्चावदत्तद् भेषजं भेषजतायाः' (ताण्ड्य २३।१६) इति वेद एव मनूक्तौ परमादरणीयतां वक्ति। तदा मनूक्ता वर्णव्यवस्था वेदसंमता नास्तीत्युक्तिरुन्मत्तप्रलपितैव वेदितव्या।

एवमेव वेदकाल—स्मृतिकाल-पुराणकालभेदेनाधुनिकानां व्यवस्थापि निर्मूलैव, वेदे स्मृतिपुराणादीनामप्युल्लेखदर्शनात्।

तथाहि—'तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति।' (मुण्डक उ० १।५)

ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदम्' (छा० उ० ७।१।२)।

'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निःश्वसितानि' (बृहदा. उ० २।४।१०) इत्यादीनि बहुशो दर्शयितुं शक्यानि।

'नीचैर्दासा उपसर्पन्तु भूमिम्' (अथर्व० ५।११।६)

'दास्यार्द्रहस्ता समनक्तम उलूखलं मुसलं शुम्भतापः' (अथर्व० १२।३।१३)

'शूद्र एव न दुह्यात् असतो वा एष संभूतः यच्छूद्रः। अहविरेव तदित्याहुः यच्छूद्रो दोग्धीति'। (तै. ब्रा ३।२।३।९।८) 'अग्नि होत्रमेव न दुह्याच्छूद्रः' (तै० ब्रा० ३।२।३।१०)

## वर्णव्यस्थादोषखण्डनम्

यदुक्तम् "प्रेमसद्भाव-संघटनयोरभावादेव पूर्वं साम्प्रतञ्च हिन्दुत्वजातेस्तद्धर्मस्य च पारतन्त्र्यादिप्रयुक्तां महतीं दुर्दशामवलोक्यन्तोऽपि ब्राह्मणाद्याः प्रेमसद्भावाय संघटनाय च न प्रयतन्ते। केरलदेशे शूद्रातिशूद्रा अस्पृश्या ब्राह्मणादिभिरुपेक्षिताः समुद्विग्नाः सन्तो मोपलेति नामधेया दशलक्षाधिका-मुसलमानाः सञ्जाताः। तैर्हिन्दूनामुपरि महानत्याचारो विहितः" इति तन्न, वैदिकानां ब्राह्मणादीनां प्रेमसद्भावसंघटनादिदृष्टिसत्त्वेऽपि लोभरागद्वेषादि-वशात् धर्मान्तरप्रवेशेन मुसलमानसंख्यावृद्धिर्जाता। श्रीरामस्य प्रेमसद्भाव-सत्त्वेऽपि रावणादिराक्षसानां, युधिष्ठिरादीनां प्रेमसद्भावसत्त्वेऽपि दुर्योधना-दीनाञ्च विपरीतप्रवृत्तिदर्शनात्। शास्त्रधर्मदेशस्वातन्त्र्याय बहवोऽपि ब्राह्मणादयो हिन्दवः पूर्वमद्यापि प्रयतन्त एव। तिलकमालवीयप्रभृतयोऽपि ब्राह्मणा एवासन्।

यत्तु—"ते अज्येष्ठा अकनिष्ठास उद्भिदोऽमध्यमासो महसा विवावृधुः। सुजातासो जनुषा पृश्निमातरो दिवो मर्य्या आनो अच्छाजिगातन' (ऋ० ५।५९।६)।

इति मन्त्रस्य वर्णानामुत्कर्षापकर्षनिषेधे तात्पर्य्यम्" इति तदपि-तुच्छम्, उक्तमन्त्रस्य एकोनपञ्चाशत्संख्याकानां मरुतां सहजत्वेन ज्येष्ठकनि-ष्ठत्वनिषेधे तात्पर्यात्।

यत्तु 'सुजातासो जनुषा पृश्निमातरो दिवो मर्य्या आनो अच्छाजिगातन' इत्यस्य विवरणे 'ये जनुषा जन्मना उत्पत्त्या पृश्निमातरः माताभूमिः पुत्रोऽहं पृथिव्याः' (अथर्व १२।१।१२) कीदृशास्ते दिवः स्वर्गलोकात् सुजातासः सुष्ठु संभृताः 'गायन्ति देवाः किलगीतकानि धन्यास्तु ये भारतभूमिभागे' इत्यादि स्मृतेः, पुनः कीदृशास्ते उद्भिदः शत्रूणां बाह्याभ्यन्तराणामाततायिना-मुद्भेदयितारः विनाशयितारः शूरवीराः अज्येष्ठासः अकनिष्ठासः उत्तमाधम-भावरहिता समाः समानप्रेमसद्भावा वा मर्य्याः मनुष्याः सन्ति। ते महसा तेजसा केनाप्यनभिभूता विद्यापराक्रमेण विवावृधुः शोभनामभिवृद्धिं आप्नुवन्तु। ते सर्वे यूयम् अस्मान् भगवत्स्वरूपदेवान् उपासितुमिति शेषः। अच्छ साधु यथास्यात्तथाऽस्मदभिमुखं आजिगातन आगच्छत। परस्परं भ्रातृभूताः

सौभगाय सुभगत्वाय सौभाग्याय वावृधुः विवर्धन्ताम्। एषां भवतामार्य्याणां पिता पालकः परमेश्वरः युवा नित्यतरुणः अविनाशी स्वपाः शोभनकर्मा भक्तरक्षणदुष्टदलनादिरूपाणि यस्य स्तुत्यानि कर्माणि सन्ति। एवंभूतो रुद्रो विविधदुःखद्रावकः समुपास्याऽस्ति। सुदुघा सुष्ठु दोग्ध्री विविधोपयोगिधनधान्यादिविमलदुग्धदोग्ध्री पृश्निः मातृभूता सेव्यास्ति। ये वा भवतामार्य्याणामिति शेषः। अतएव मरुद्भ्यो भगवद्रूपेभ्यो देवेभ्यः सुदिना शोभनानि दिनानि कुर्वन्तु भवन्तः" इत्यादि बहुजल्पितम्। तत्सर्वमयथार्थकं मन्त्रार्थवैपरीत्यात्। प्रेमसद्भावसंघटनादीनि यद्यपि शोभनानि कार्य्याणि तथापि मन्त्रस्यापि अयमेवार्थ इति न युक्तम्। ऋषिदैवतप्रकृतिप्रत्ययपूर्वापरसंदर्भानुसारेणैव मन्त्रार्थस्य निर्धारयितव्यत्वात्।

किञ्च सर्वस्य यथा परमात्मपुत्रत्वेऽपि पशुपक्ष्यादिभेदापलापो न संभवति। तथैव सर्वस्य पृश्निपुत्रत्वेऽपि न ब्राह्मणादिजातिभेदापलापः सुशकः। पृथवीपदेन मातृभूमेर्ग्रहणे भारतीयस्यैव पृश्निमातृत्वे वा किं बीजमिति नोक्तम्।

सायणरीत्या प्रथममन्त्रस्यायमर्थः। प्रवःस्पट् इत्यष्टर्चं तृतीयं सूक्तं श्यावाश्वस्यार्षं मारुतम्। अष्टमी त्रिष्टुप्। शिष्टाः सप्तजगत्यः। तेन सर्वमिदं सूक्तं मरुद्देवताकम्। तेन नात्र सर्वे मनुष्याः सम्बोध्यन्ते, किन्तु मरुतः स्तूयन्ते। ते अज्येष्ठा अकनिष्ठा उद्भिद उद्भेदयितारः शत्रूणां अमध्यमासः अमध्यमाः सर्वप्रकारैः समाः महसा तेजसा विवृधुः विवर्धन्ते। सुजातासः सुष्ठु संभूताः जनुषा जन्मना पृश्निमातरः पृश्नेः पुत्रा मर्य्या मनुष्येभ्यो हिता यूयं दिवः सकाशात् नः अस्मान् अच्छ अभिमुखं आजिगातन सर्वतः प्रशंसत। साध्वनुष्ठितमिति। उत्तरार्धार्थः प्रत्यक्षकृतः।

यद्वा हे सुजाता जनुषा पृश्निमातरश्च तान् दिव आगतान्, हे ऋत्विजो मर्य्या यूयमाजिगातन आगच्छत। तेनो अच्छ आगच्छतास्मदभिमुखम्। अपरस्यापि तत्सदृशमन्त्रस्यायमर्थः। अज्येष्ठासः अकनिष्ठासः। परस्परं ज्येष्ठकनिष्ठभावरहिताः। एते मरुतः। भ्रातरः। सौभगाय सुभगत्वाय। सम्। ववृधुः वर्धन्ते। युवा। स्वपाः शोभनकर्मा। एषां मरुताम्। पिता रुद्रः। सुदुघा सुष्ठु दोग्ध्री। पृश्निः गोदेवता। मरुद्भ्यः। सुदिना शोभनदिनानि। अकुरुतामिति शेषः।

एवं प्रकरणानुसारेण ऋषिदैवतानुसारेण परम्पराप्राप्तमर्थमपहाय स्वाभ्यूहितानि अनेकानि सूपयोगीनि व्याख्यानानि कर्त्तुं शक्यन्ते। परं तानि वेदमन्त्रव्याख्यानानीति न वक्तुं शक्यन्ते।

एवमेव 'संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्' (ऋ० १०।१९१।२) इति मन्त्रस्यापि व्याख्याने यदुक्तम्—'हे आर्य्यमानवाः पावनभारतभूवास्तव्याः यूयं संगच्छध्वं मिथः स्नेहसद्भावसहानुभूतिविनयादिसद्गुणैः संयुक्ताः सन्तः कौटिल्यञ्चापहाय मिथः संघटिताः स्वाभ्युदयाय राष्ट्रगौरवाभिवृद्धये प्रगतिशीला भवत। संवदध्वं राष्ट्रहितसम्पादकं सत्यं प्रियं वाक्यं ब्रूत।' इत्यत्रापि आर्य्यमानवा भारतभूवास्तव्या एव वा कथ ग्राह्याः? तथार्थ-ग्रहणेऽपि वर्णाश्रमव्यवस्थापलापः कथं सिद्ध्यति? अस्य मन्त्रस्य वर्णा-श्रमिणामपि संगमन-संवदनादि संमतौ बाधाभावात्।

यदपि 'अन्योऽन्यस्मै वल्गु वदन्त एत, मा' 'वियौष्ट' (अथर्व ३।३०।५) इमानि मन्त्रवाक्यान्यपि न विरुद्धानि। अन्योऽन्यवल्गुभाषणं कुर्वतां देशाद्यभ्युदयाय गमनम् परस्परविरोधेन वियोजनस्याभावश्च न वर्णाश्रमिणां प्रतिकूलम्। तावताऽपि दुष्टनिग्रहादिकं हितायैव गुणदोषवर्णनं नैतैर्मन्त्रैर्नि-षिद्धम्। 'अन्धं तमः प्रविशन्ति ये ऽविद्यामुपासते' इत्यादि मन्त्रेषु निन्दार्थवा-देषु तद्दर्शनात्।

एवमेव 'सं वो मनांसि जानताम्। यद्यदस्मदनुकूलं प्रतिकूलं वा तदन्ये-षामपि तथैव भवतीति स्वात्मदृष्टान्तेन प्राणिजाते सुखदुःखादिकं मानापमा-नादिक सममेकरूपमेव विजानन्तु। समानी व आकूतिः समाना हृदयानि वः'। (ऋ० सं० १०।१९१।४)

युष्माकं संकल्पः प्रयत्नो व्यवहारः समानी सरला अवक्रा प्रेमसद्भा-वादिसद्गुणभूषिता एकविधा अस्तु भवतु। वः हृदयानि अन्तःकरणानि समानानि भवन्तु। विषमाणि राष्ट्रगौरवस्वातन्त्र्याभ्युदयविच्छेदकानि न भवन्तु इत्यपि न विरुद्धम्।

'आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन।
सुखं वा यदि वा दुखं स योगी परमो मतः॥' (श्री० भ० गी० ६।३२)
'आत्मनः प्रतिकूलानि परेषां न समाचरेत्'

इत्यादि वचनानि च तत्पोषकाणि। तथापि न सर्वैः सर्वाणि कर्माण्यनुष्ठेयानि। 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः (३।३५) इति गीतावचनविरोधात्।

वस्तुतस्तु शुभोद्देश्येन समेषां गमनवदनादिभेदेऽपि संगमनसंवदनादिकं न विरुद्धम्। यथा शत्रुपराजयराष्ट्रविजयोद्देश्येन हस्त्युष्ट्राश्वरथ-वाष्पयान-वायुयान-वाहनभेदे यष्ट्यसिभुशुण्डीशतघ्न्यादिशस्त्रास्त्रभेदे विविधगमनव्यापारादिभेदे च सत्यपि समानोद्देश्यप्रवृत्तिकत्वेन संगमनादिकम्, तद्वत्।

यच्च—'समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्' (ऋ० सं० १०।१९१।३) इत्यस्य व्याख्याने गुप्तभाषण-गुप्तयोजना च समान एकविधः समानरूपेण समाजराष्ट्रहितसंपादकः, नत्वनेकविधो भवतु। यद्वा इष्टलाभायानिष्टनिवारणाय जपनीयः स्मरणीयः परमेश्वरस्य गायत्र्यादिरूपो मन्त्रोऽपि समेषामार्य्याणां भारतभूवास्तव्यानां समान एव भवतु, न तु विभिन्नः। समितिः सभा परिषत् विचारगोष्ठा समानी एकरूपाऽस्तु। एकस्यामेव समितौ समभावेनैवोत्तमाधमभावरहिताः सम्मिलिताः सन्तो भवन्तो राष्ट्रहितविचारायावतिष्ठन्ताम्। मनोऽपि विचारसाधनं भवतां समानमेव भूयात्। तथा चित्तं मननादिजं ज्ञानमपि सह सहित समानार्थलाभसंपादकत्वेन एकीभूतमेव स्यात्। एषां भवतां एकस्मिन्नेव राष्ट्रहितकार्ये सह प्रवृत्तानामिति तदेतत्प्रमादविलसितम्। गुप्तभाषणानां गुप्तयोजनानाञ्च कार्य्यभेदेन भेदसंभवात्। नहि समेषां समान्येव कार्य्याणि, जगद्वैचित्र्यलोपापत्तेः। समाजराष्ट्रहितसम्पादकयोजनानामप्यधिकारभेदेन भेदसंभवात्। गायत्र्यादिमन्त्रोऽपि न समेषां जपनीयः, नृसिंहतापनीयोपनिषद्विरोधात्।

तत्र हि सावित्री प्रणवादिजपः स्त्रीशूद्राणां निषिद्ध एव।

'सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ति।'<br>
'यदि जानीयात् स्त्रीशूद्रः स मृतोऽधो गच्छति॥''

(नृ० पू० ता० १।३)

द्वादशार्णो महामन्त्रो सर्वसिद्धिप्रदायकः।<br>
स्त्रीशूद्राणां वितारोऽयं सतारस्तु द्विजन्मनाम्॥'' इति

(बृहन्नारदीये)

समितावपि समभावेनोत्तमाधमभावरहिता न संभवन्ति। विशिष्टानां विशिष्टासनादिदर्शनात् । भवतापि स्वशिष्यैः समान एव आसने किमिति नोपविश्यते ? कथमुच्चासने संस्थीयते । स्वातन्त्र्यपारतन्त्र्ययोरिष्टानिष्टत्वन्तु युक्तमेव ।

सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ॥' इत्युक्तेः

( मनुः ४।१६० )

वस्तुतस्तु सायणादिप्रोक्त एवार्थोऽत्र संगतः। एतत्सूक्तस्य संवनन ऋषिः संसमिद्युवस इति प्रथमाया ऋचोऽग्निर्देवता शिष्टानां संज्ञानं देवता। अत्र प्रासङ्गिकत्वात् द्रव्यदेवतास्मारकत्वान्मन्त्राणां यज्ञादिसम्बन्धित्वेन स्तोतार एव संबोध्यन्ते ।

तदुक्तम् सायणेन 'हे स्तोतारः यूयं संगच्छध्वं संगता संभूता भवत। संवदध्वं परस्परं विरोधं परित्यज्यैकविधमेव वाक्यं ब्रूत। वः युष्माकं मनांसि संजानताम्। समानमेकरूपमेवार्थमवगच्छन्तु। पूर्वे पुरातना यथा देवाः संजानाना ऐकमत्यं प्राप्ताः हविर्भागमुपासते। यथास्व स्वीकुर्वन्ति। तथायूयमपि वैमत्यं परित्यज्य धनं ( दक्षिणादिरूपं ) स्वीकुरुतेति शेषः।' अथर्वसंहितायामपीदं सूक्तं किञ्चिद् भेदेन पठितम्। तत्र संजानीध्वम् इति तृचेन सामनस्य कर्मणि उदकुम्भं सुराकुम्भं वा संपात्य अभिमन्त्र्य सूत्रोक्त-क्रमेण ग्रामे निनयेत्। तेनैव तत्र सायणेन हे सांमनस्यकामा जना इत्युक्तम्। यथा पुरा देवा इन्द्रादयः संजानानाः समानकार्यज्ञानाः पूर्वे सन्तः पूर्वे असुरेभ्यः पूर्वभाविनः सन्तः यजमानैः कल्पितं भागं उपासते प्राप्नुवन्ति। अतो यूयमपि तद्वत्परस्परविरोधपरिहारेण संजानाना इष्टफलं भजतेति भावः।

समानो मन्त्र इत्यस्य ऋग्भाष्यानुसार्य्ययमर्थः एषामेकस्मिन् कर्मणि सह प्रवृत्तानामृत्विजां स्तोतॄणां वा मन्त्रः स्तुतिः शस्त्राद्यात्मिका ब्राह्मणानामत्रा-त्विज्यं भवतीति समानमन्त्रत्वेऽपि न दोषः। गुप्तभाषणं वा समान एकविधो-ऽस्तु। तथा समितिः प्राप्तिरपि समानी एकरूपास्तु। अत्रापि शास्त्रोक्त-दक्षिणावैषम्यादिकं न निषिद्ध्यते। ऋत्विजां गणभेदेन दक्षिणाभेदस्य विहितत्वात्। एवमेव 'समा समाभ्यां विषमसमे पूजातः ( गौ. ध. सू. १७।२ ) इत्यादि शास्त्रवचनैः समेषु विषमपूजावद्विषमेषु समपूजापि निषिद्धा ज्ञायते ।

मनः मननसाधनमन्तःकरणमपि समानमस्तु। चित्तं विचारजं ज्ञानं सह सहितं परस्परस्यैकार्थेनैकीभूतमस्तु। अहं च वः युष्माकं समानमेकविधमन्त्रं अभिमन्त्रये ऐकविध्याय संस्करोमि। तथा वः युष्माकं स्वभूतेन समानेन साधारणेन हविषा चरुपुरोडाशादिना अहं जुहोमि वषट्कारेण हविः प्रक्षेपयामीत्यर्थः।

'समानीव आकूतिः समाना हृदयानि वः समानमस्तु वो मनो यथा वः सु सहा सति।' अयमर्थः-हे ऋत्विग्यजमानाः वः युष्माकं आकूति संकल्पोऽध्यवसायः समानो एकविधोऽस्तु। तथा वः युष्माकं हृदयानि समाना समान्येकविधानि सन्तु। तथा वः मनः अन्तःकरणम्। प्रत्येकापेक्षयैकवचनम्। तदपि समानमस्तु। यथा वः सु सह शोभनं साहित्यं असति भवति। समानमस्त्वित्यर्थः। अस्तेर्लेटि बहुलं छन्दसि असतीति रूपम्।

अथर्वमन्त्रीयसायणभाष्येऽपि समितिरित्यस्य संगतिः कार्य्येषु प्रवृत्तिरिति व्याख्यानम्। समानेन हविषा इत्यस्य ऐक्यजनकेन वः युष्माकं सम्बन्धिना हविषा आज्यादिना जुहोमि आज्यमग्नौ प्रक्षिपामीत्यर्थः

समानी व आकूतिरित्यस्यापि मन्त्रस्य पूर्वोक्तव्याख्यानतुल्यमेव व्याख्यानम्। अथर्वसंहितायाः तृतीये काण्डे षष्ठेऽनुवाकेऽपि सामनस्यार्थकर्मणि विनियुक्ता मन्त्रा उक्ताः। उपाकर्मण्यपि आज्यहोमेऽस्य सूक्तस्य विनियोगः। सूत्रे प्रोक्तम्—अभिजिति शिष्यानुपनीय श्वो भूते सम्भारान् सम्भरति इति प्रक्रम्य गुणकर्मभिर्विश्वकर्मभिरायुष्यैः स्वस्त्ययनैराज्य जुहुयात् इति (कौशिक सू० १४।३) सहृदयं सांमनस्यमविद्वेषं कृणोमि वः। अन्योऽन्यमभिहर्य्यत वत्सं जातमिवाघ्न्या। हे विवदमाना जना वः युष्माकं विद्वेषाभावोपलक्षितं सांमनस्यं कर्म कृणोमि करोमि। कीदृशं तत् सहृदयं समानैर्हृदयैरुपेतम्। समानचित्तवृत्तियुक्तम् सांमनुष्यञ्च तदेव। संप्रीतियुक्तैर्मनुष्यैर्निर्वर्तितं सांमनुष्यम्। समानज्ञानहेतुभूतं सख्यं करोमित्यर्थः। ततो यूयमपि जातं वत्सं अघ्न्या अहन्तव्या गौरिव अन्योऽन्यं अभिहर्य्यत अभिमुख्येन कामयध्वम्।

'अनुव्रतः पितुः पुत्रः मात्रा भवतु संमनाः।
जायापत्ये मधुमती वाचं वदतु शान्तिवां।'

पुत्रः पितुरनुव्रतः अनुकूलकर्मा भवतु। मातापुत्रादिभिः समानमस्का भवतु। पत्ये जाया मधुमती मधुरां शान्तिवां सुखयुक्तां वाचं वदतु।

'मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा ।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ।'

स्पष्टार्थो मन्त्रः ।

'येन देवान् वियन्ति नो च विद्विषते मिथः ।
तत्कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः ।

येन ब्रह्मणा देवा इन्द्रादयः न वियन्ति विमतिं न प्राप्नुवन्ति मिथो न विद्विषते विद्वेषं न कुर्वते । तत् समानज्ञाननिमित्तं ऐकमत्यापादकं ब्रह्म मन्त्रात्मकं सामनस्यं वः युष्माकं गृहे पुरुषेभ्यः कृण्महे कुर्मः ।

'ज्यायस्वन्तश्चित्ति नो भावियौष्ट संराधयन्तः सधुराश्चरन्तः ।
अन्योऽन्यस्मै वल्गु वदन्त । एत । चित्तिनः समानचित्तयुक्ताः संराधयन्तः समानसंसिद्धिका समानकार्याः । सधुराः समानकार्य्योद्वहनाः इत्थं चरन्तः । यूयं मा वियौष्ट मा पृथग्भूत वियुक्ता मा भवतेत्यर्थः । अन्योऽन्यस्मै वल्गु शोभनं वाक्यं वदन्तः यूयं एत आगच्छत । हे जना अहमपि वः सध्रोचीनान् सहाञ्चतः कार्येषु सह प्रवृत्तान् समानमनस्कान् करोमि ।

'समानी प्रपा सह वोऽन्नभागः समाने योक्त्रे सह वो युनज्मि ।
सम्यञ्चोऽग्निं सपर्य्यतारानाभिमिवाभितः ।'

हे सांमनस्यकामाः वः प्रपा पानीयशाला एका भवतु । अन्नभागश्च सहैव भवतु । परस्परानुरागवशेन एकत्रावस्थितमन्नपानादिकं युष्माभिरुपभुज्यताम् । तदर्थमहं वः युष्मान् समाने योक्त्रे एकस्मिन् स्नेहपाशे सह युनज्मि सह बध्नामि । अपि च सम्यञ्च एकफलार्थिनो भूताः समानज्ञाना अग्निं पूजयत । कमिव नाभिं रथचक्रस्य मध्यच्छिद्रम् अरा इव चक्रावयवाः कीलकाः नियत स्थाना यथा परिवेष्ट्य वर्त्तन्ते, तद्वत् ।

'सध्रीचीनान् वः संमनस्कृणोम्येकश्नुष्टीन्तसंवननेन सर्वान् ।
देवा इवामृतं रक्षमाणाः सायं प्रातः सौमनसो वो अस्तु ।'

सध्रीचीनान् एककार्य्यकरणे सहोद्युक्तान् संमनसः समानमनस्कान् युष्मान् कृणोमि । तथा युष्माकं एकश्नुष्टिं एकविधं व्यापनं एकविधस्यान्नस्य भुक्तिं वा करोमि । संवननेन वशीकरणेन अनेन सांमनस्य कर्मणा युष्मान् सर्वान् वशीकरोमीत्यर्थः ।

अमृतं द्युलोकस्थं अजरामरत्वप्रापकं पीयूषं रक्षमाणाः ऐकमत्येन पालयन्तः देवा इन्द्रादयो यथा सौमनस्ययुक्ता भवन्ति। एवं वो युष्माकं सायं प्रातस्तदुपलक्षिते सर्वस्मिन्काले सौमनस्यमस्तु। अत्र स्मृतिशास्त्राविरोधेनैव भोजनपानैक्यं विहितम्। अत्र सांमनस्यकामा गणाः गृहाणि कुलानि वेदाधिकृतान्येव ग्राह्याणि, त्रैवर्णिकाणामेव वैदिककर्मस्वधिकृतत्वात्।

यदुक्तम् "म्लेच्छशासकाना-( बादशाह ) मादेशेन भारतीयाः क्षत्रियराजानः स्वीयाः कन्यका भगिनीश्चैतेभ्यो दत्तवन्तः। दौर्बल्यादेव तैः सर्वं सोढम्। तैरेव हिन्दूनां मन्दिराणि च ध्वस्तानि सोमनाथ-काशीविश्वनाथमन्दिरादिविध्वंसश्च तत्रत्यानां प्रचुराभिमानभरितानामुपहासमिव कुर्वन् विश्वनाथमन्दिरस्थाने मस्जिदो विद्यमानोऽद्यापि दृश्यते।" इति तद्यद्यपि सत्यमेव। तच्च धर्मत्यागजन्यदुरदृष्टमूलकम्, न धर्मनिष्ठधर्माभिमानादिमूलकम्।

वस्तुतस्तु शास्त्रसदाचारधर्मादिविश्वासविधुराणां नास्तिकानामर्धनास्तिकानां नीतिशास्त्राभ्यासवैधुर्यात् प्रमादाच्च विघटनसेनासैनिकतदुपकरणसंग्रहनिर्माणराहित्येन नैर्बल्यम्. तेन च पराभवः, वर्णाश्रमानुसारिणां स्वस्वधर्मनिष्ठानां ब्राह्मणानां विवेकविज्ञानधैर्यादिषु, क्षत्रियाणां शौर्यवीर्यौजस्तेजःसु, वैश्यानां कृषिगोरक्ष्यवाणिज्यादिषु, शूद्राणां शिल्पश्रमसेवादिषु यथायोग्यं समाद्रियमाणेषु स्वप्नेऽपि पराभवाशङ्का न भवति। महाभारते मात्स्यन्यायप्रवृत्तेर्मूलम् कालक्रमेण रजस्तमः प्रसारेण ज्ञानविज्ञानवैराग्यशैथिल्यं मालिन्यकामक्रोधोद्भवादिकञ्चोक्तम्। सत्त्वविकासकाले ज्ञानविज्ञानप्रभावेण राज्यराजदण्डदाण्डिकादिनैरपेक्ष्येणैव सर्वासु व्यवस्थोक्ता।

> 'न वै राज्यं न राजासीन्न च दण्डो न दाण्डिकः।
> धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम्॥'
>
> ( शा०प० ५९।१४ )

इति महाभारतवचनात्।

यदुक्तम्—

> "यत्समाजशरीरस्य पादः शूद्रः पृथक्कृतः।
> तन्मूर्ध्नि न कथं कुर्युः पदाघातं विधर्मिणः॥
> स्वाङ्गशूद्रतिरस्कारादेव नूनं द्विजातिभिः।
> प्रापितं भारतं वर्षं शोचनीयामिमां दशाम्॥"

इति तन्न, तादृगारोपस्य मोहमूलकत्वात्। व्यवस्थायास्तिरस्कारहेतुत्वाभावात्।

यथा हस्तपादमुखादीन्यङ्गानि योग्यतानुसारेण पृथक्कार्ये विनियुज्यन्ते। न तावता तत्र कस्याप्यवमानम्, भोजनाय मुखं प्रवर्त्तते, रक्षणाय बाहू, संग्रहाय वितरणाय चोदरम्, तथैव श्रमशिल्पसेवाद्यर्थं शूद्रो विनियुज्यते, न चात्रापमानं कस्यापि, सहजकर्मत्यागेनैव दोषापत्तिसंभवात्। धर्मतद्बोधकशास्त्राचार्यविरोधप्रसारादेव धर्मभावना शैथिल्यम्। विधर्मिणां प्रलोभनादिभिश्च जना धर्मान्तरमङ्गीकुर्वन्ति।

केचित्त सामाजिकधार्मिकनियमोल्लङ्घनेन दृप्ता भर्त्सिता जातिच्युताश्च धर्मान्तरं प्रविश्य पूर्वधर्मं धर्मानुयायिनश्च विरुन्धन्ति, पराजिता न्यायालयमुपालभन्ते, जातिच्युता जातिं धर्मभ्रष्टा धर्ममुपालभन्ते, 'अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते' इति न्यायात्। कालक्रमेण ज्ञानविज्ञानशैथिल्यात् नीतिशास्त्रभ्यासवैधुर्य्यात् बलार्जनशक्तिसैन्यादिसंकलनप्रमादाच्च दौर्बल्यं जायते। ततो राज्यनाशो, मन्दिरादिध्वंसनम् जातम्। तत्र धर्मनिष्ठा शास्त्रनिष्ठा वा न पतनकारणमिति मन्तव्यम्। विवेकहीनतया शक्तिशैथिल्येन चात्याचारान् पश्यन्तोऽपि जनास्तत्प्रतीकारं कर्त्तुं न क्षमन्ते। तदा वृत्तिसंस्कार-बाहुल्ये सति शौर्य्यवीर्य्यरक्तौष्ण्यञ्च क्वापि प्रविलीयते। अनेका दुर्घटनाः प्रवादाश्च प्रवर्त्तन्ते।

"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥' (म० २।२०)

इति मानववचनमतिगर्वेण कथयन्तो विद्वांसो न लज्जन्त इति महदाश्चर्य्य"मिति तत्तुच्छम्। विपत्काले परिस्थितौ विपरीतायामपि स्थायिचारित्रस्य गौरवशीलत्वे तदुक्तेरादरणीयत्वात्। सूर्य्योऽपि कदाचिदस्ताचलं गच्छन् निस्तेजा इव भवति, न तावताऽपि तस्य प्रचण्डप्रकाशापलापः कर्त्तुं शक्यः।

## विधवाविवाहचर्चा

यदुक्तम् "पण्डिता विधवाविवाहं शास्त्रविरुद्धं मन्यन्ते। म्लेच्छाश्च बहिष्कृतास्ताः स्ववधूः अकुर्वन्। ताभ्यश्च क्षेत्रभूताभ्योऽपत्यानि भूयांसि हिन्दूधर्म-

संस्कृतिगौरवविघातकानि म्लेच्छरूपाण्युत्पादयामासुः । तेनैव वंगदेशे म्लेच्छबाहुल्यं जातम् । शास्त्रदृष्ट्या विधवाविवाहे एककलासदृशलघुपापमस्ति, परन्तु व्यभिचारम्लेच्छकर्तृकहरणादिकं तु षोडशकलासदृश महत्पापमस्ति । महतः पापस्य निस्तरणाय लघुपापकरणेऽपि न हानिः । 'सर्वनाशे समुत्पन्नेऽर्धं त्यजति पण्डितः, इति न्यायेन महापापं परिहृत्य लघुपापं समाश्रयेत्'' इति, तत्तुच्छम् भिन्नाश्रयत्वात् । दौर्बल्ये सति विधवानां कुमारीणां सधवानामपि हरणादिकं संभवत्येव । ततो दौर्बल्यपरिहारायैव प्रयत्नो युक्तः, न तु विधवाविवाहेन तद्दौर्बल्यनिवृत्तिः । तस्य तद्धेतुत्वात् । संयमे स्वबलाधायकत्वमेव ।

वस्तुतस्तु वातावरणशोधनमन्तरा कुमार्य्योऽपि उच्छृङ्खला भवन्ति, सदाचारवातावरणनिर्माणेन तु विधवा अपि सदाचारिण्यो भवन्ति ।

यदुक्तम् "यदा लब्धसंन्याससवैराग्य-धर्मपालन-दीक्षा अपि संन्यासिनो विरागिणो मठादिसम्पत्तिमासाद्य स्वयमात्पतिता भूत्वा लक्षाधिकाः पुत्र-कलत्रादिमन्तः गोस्वामिनः संयोगिनो गृहस्था बभूवुः । तदा वराकीणां विधवानान्तु कैव कथा ? पतिहीनां युवतिं विधवां सर्वेऽपि विषयलोलुपा जनाः वाञ्छन्ति ।

'समुत्सृष्टामिषं भूमौ प्रार्थयन्ति यथा खगाः ।
प्रार्थयन्ति जनाः सर्वे पतिहीनां तथा स्त्रियम् ॥'

( म० भा० आ० प० १५८।१२ )

अत एव बहिर्मुखा युवतयो विधवाः विषयवासना पूर्त्यै एव स्वेच्छयैव स्वकुलमर्य्यादाविरुद्धमपि यत्रतत्र स्वसम्बन्धं गुप्तरूपेण योजयामासुः, योजयन्ति च । क्वचित् कस्यचित्प्रतिष्ठितब्राह्मणस्य पत्नी रजकस्य पत्नी संवृत्ता । गुर्जरेऽपि काचिद् ब्राह्मणी विधवा श्वसुरगृहेतीव पीडिता मुसलमानस्य पत्नी संवृत्ता । अनेकाश्च विधवा विद्रोहं कृत्वा यवनपतिं धृतवत्यः । तस्माद् विषयासक्तानां युवतीनां विधवानां स्वजातीययोग्यविधुरैः सहयोजनं तदनर्थापेक्षया वरतरमिति' तदप्यविचारितरमणीयम् । यतो संसारेऽनादिकालमारभ्य धर्मनीतिव्यवस्थायां सत्यामपि जनाः मिथ्याभाषणं

व्यभिचार चौर्य हत्याश्च कुर्वन्ति। न च तावता धर्मनीतिव्यवस्थैव समापनीया भवति। तथैव लोकपरलोककल्याणकामनया विधवाविवाहावरोधो विहितः। मनुष्येतरेषु पशुषु विवाहव्यवस्थैव नास्ति। अत एव तत्र विधिनिषेधाभावात् पूर्णस्वातन्त्र्यमेवास्ति। पशुत्वापेक्षया मनुष्यत्वे धार्मिकनियमस्यैव वैशेष्यं भवति।

'धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः' इत्युक्तेः।

अत एव शास्त्रप्रामाण्याभ्युपगन्तृत्वमेव मनुष्यत्वं भवति। शास्त्रैकसमधिगम्यौ धर्माधर्मौ भवतः। नतु बाह्यहानिलाभमात्रानुमेयौ। विधवाविवाहश्च शास्त्रे सर्वथा निषिद्ध एव।

ननु विधवाव्यभिचारदर्शनात् तत्र संकोचो युक्त इति चेन्न, तथात्वे यतीनां विरागिणाञ्च व्यभिचारं दृष्ट्वा यतिधर्मेऽपि संकोचापत्तिप्रसङ्गात्। न च तत्र संकोचो दृष्टः, आरूढपतितानां निन्दाश्रवणात्। तथा भूतानां पृथक संस्था निर्माणम्, तेष्वेव तेषां भोजनविवाहादिव्यवस्था यथा भवेत्तथैव प्रयतितव्यम्। यासां येषां वा शास्त्रोल्लघनेन पातित्यं जातं तेषामपि पृथक् संस्थानिर्माणे दोषाभावात्। तावताऽपि यथा यतिधर्मे पुनर्विवाहाद्यनुमतिर्न संभवति तथैव विधवाविवाहप्रतिषेधेऽपि न संकोचः संभवति।

किञ्चैतदसकृदुक्तम्—सदाचारवातावरणनिर्माणेन सधवाविधवासु सर्वत्रैव सदाचारसद्भावना प्रसरिष्यति। तदभावे तु सधवानामपि कुमारीणामपि च दुराचारप्रवृत्तिर्भविष्यत्येव। प्राप्तमेवैतत्पूर्वम् यन्मेवाडवासिनां क्षत्रियाणां वीरगतिप्राप्तावपि तेषां विधवाः पत्न्योऽग्निज्वालामेव प्रविष्टवत्यो, नतु व्यभिचारिण्यो जाताः। 'स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः' इत्यस्यापि तदेवाभिप्रेत्य समाधानान्तरं न कृतम्।

'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः'

इतिरीत्या श्रेष्ठजनसदाचारपालनादर्शस्थापनमेव सर्वत्र दुराचारनिवृत्त्युपायो न तूच्छृङ्खलता समर्थनं, न वा धर्मोल्लङ्घन प्रोत्साहनम्। अन्यथाऽर्जुनप्रस्तावानुसारेण युद्धाकरणसमर्थनमेव कृतं स्याद्भगवता। परिणामेऽपि कौरवपाण्डववीराणां, मेवाडवीराणां वीरगतिप्राप्तावपि तत्पत्नीषु

व्यभिचारगन्धलेशोऽपि न प्रवृत्तः। तस्मान्निरोधेनैवोच्छृङ्खलता निवृत्ति-र्भवति न तत्प्रोत्साहनेन। उत्सृष्टामिषमिति दृष्टान्तस्तु स्वाभाविकस्थिति-वर्णनेन तदुपायकरणमेव प्रोत्साहयति, स्वाभाविककामकर्मनिवारणायैव वैदिककामकर्मविधानात्।

'अविद्यया मृत्युं तीर्त्वा, विद्ययाऽमृतमश्नुते' इति श्रुतेः।

यदुक्तम् "मृतपत्नीकाः पुरुषाः कथं न ब्रह्मचर्य्यव्रतं परिपालयन्ति ? युवतिभिर्विधवाभिः किमपराद्धम् ? पित्रादिगृहेषु भ्रातृपत्नीनां देवरादि-पत्नीनां ननान्दृणाञ्च विविधवस्त्राभूषणपरिधानकेशविन्यासादिधारण-पूर्वकं विलासमयहावभावपरिहासादिकं विधवाया दुर्भाग्यस्य सूचकान् विलक्षणकटाक्षपातांश्च विलोक्य मानसमतीव दूयते। विधवानामपि हृदये काचिद् व्यक्ता पिपासा देहस्य कापि बुभुक्षा, तासामप्यन्तः काश्चनोर्मय उच्छलन्ति। तत एवाद्यत्वे स्वेच्छयापि हिन्दूविधवा म्लेच्छैः सार्द्धमपि संगता भवन्ति। प्राचीनकालेऽपि हिन्दूविधवा म्लेच्छानाभीरान् स्वेच्छया संगतवत्यः!

कलत्रस्य बहुत्वाद्धि रूपं तत्सुततस्ततः।
प्रयत्नमकरोत् पार्थो जनस्य परिरक्षणे।
मिषतां सर्वयोधानां ततस्ताः प्रमदोत्तमाः।
समन्ततोऽवकृष्यन्ते कामाच्चान्याः प्रवव्रजुः।
जग्मुरादाय ते म्लेच्छाः समन्ताज्जनमेजय।' इति
(महाभारत० मौशलपर्व अ० ७।१४८।५९६)"

तदपि न, भावानवबोधात्। तथाहि—व्यक्तिगतदोषैः शास्त्रीय-सिद्धान्तपरिहारस्यायोग्यत्वात्। विषयवासनानां प्राबल्यं सत्य तथापि तन्नि-रासायैव शास्त्रधर्मतन्नियमादिमहत्त्वविधानात्। पाशविककामकर्मज्ञान-लक्षणमृत्युनिरसाय वैदिककामकर्मज्ञानविधानमित्युक्तमेव। भारतीययादव-पत्नीनां तु कासाञ्चित् शापग्रस्तानामेव स्वच्छया म्लेच्छादिवरणं संवृत्तम्। देवीभागवते स्पष्टमिदं यत्—इन्द्रप्रेरिताश्चाप्सरसः तपश्चरतो नरनारा-यणयोस्तपो भञ्जनाय प्रयत्नशीला आसन्। नारायणेन वरवरणाय प्रेरिता नारायणमेव पतित्वे वृतवत्यः। अन्यप्रसङ्गेनापि ताः श्रीकृष्णेनैव शप्ताः। 'अन्ते बर्बरैर्गृहीता भविष्यथ' इति।

अर्वाचीनानां प्राचीनानां वा घटनानामनुरोधेन न धर्माधर्मनिर्णयः। धर्मविरुद्धानामपि घटनानां संभवात्। अत एव 'यानि मेऽनवद्यानि तानि त्वयोपास्यानि, नो इतराणि' इति श्रूयते ( तै० उप० )

तथा च कामक्रोधादिमूलिकाभिः प्रवृत्तिभिर्न धर्मस्याधर्मत्वं नवाऽधर्मस्य धर्मत्वं सम्भवति।

## वृद्धविवाहक्रमः

यदुक्तम् 'वृद्धयुवतिविवाहोऽपि तादृशानर्थस्य हेतुस्तदनुगुणान्येव बहून्युदाहरणानि प्रदर्शितानि। किं केनचिद्युवकेन जर्जरितया वृद्धया विवाहः कृतः? किं कुत्रापि श्रुतं दृष्टं वा? वृद्धेन स्वामिना युवत्याः कीदृशः स्नेहः? स्नेहं विना वैयक्तिकमपि सुखं न संभवति। पण्डिताश्च निन्दनीयस्य स्वार्थस्य सिद्धये इत्थमुपदिशन्ति। वृद्धो वा, रुग्णो वा, कुष्ठी वा, हीनाङ्गोऽपि वा, विरूपो वा, मूर्खो वा, पतिर्न हातव्यो युवत्या कदाचन, एष धर्मः सनातनः। वृद्धा वा, हीनाङ्गापि वा, कुष्ठा वा विरूपाऽपि पत्नी न हातव्या यूना पत्या कदाचनेति नोपदिशन्ति। 'सदृशीं भार्य्यामुपेयात्' इतिवत् 'सदृशं पतिमुपेयात्' इति नोपदिशन्ति।

नव्यास्तु—वृद्धः षष्ठिवर्षीयः सदृशीं षष्ठिवर्षीयामुपेयादित्येवार्थं वर्णयन्ति। बलात् प्रतिरुद्धा मानसक्षुधालक्षणा विषयवासना येन केनापि साकमुत्तमेनाधमेन वा, म्लेच्छेन वा गन्तुं तां प्रेरयत्येव। तदुक्तं द्रौपद्या—

'पञ्च मे पतयः सन्ति मह्यं षष्ठोऽपि रोचते।
पुरुषाणामभावे हि सर्वा नार्य्यः पतिव्रताः'। इति।

तदपि न विचारचारु, यतो वृद्धयुवतिविवाहोऽपवाद एव। यत्र क्वचित् पत्न्यां मृतायामग्निहोत्रहोमलोपप्रसङ्गस्तत्रैव पुरुषस्य पुनर्विवाहोऽनिवार्यो वंशच्छेदप्रसक्तौ वा, अग्निहोत्रहोमलोपस्य वंशविच्छेदस्य चानर्थहेतुत्वात्। न च पत्यौ मृते पत्न्या अपि पुनर्विवाहः किन्न स्यादिति वाच्यम्, तस्यास्तदविधानात्। पत्नीनां तु पातिव्रत्यपालनेनैव सर्वोत्तमा सद्गतिर्भवति। अत एव नाग्निहोत्रकरणाय वंशप्रवर्त्तमानाय चोढानां पत्नीनां पुनर्विवाहविधानम्।

एतेन पुरुषवत् स्त्रीभिरपि कुतो न पुनर्विवाहः कार्य्य इति प्रत्याख्यातम्। 'वृद्धाभिः कुतो न युवकैः सार्द्धं विवाहः क्रियत' इत्यपि कुशकाशावलम्बनम्, प्रकृतिवैचित्र्येण धर्मवैचित्र्यात्। पुरुषा एकस्मिन् वर्षे बह्वीषु बहून् गर्भानाधातुं शक्नुवन्ति, स्त्रियश्चैकमेव गर्भमाधातुं प्रभवन्ति। स्वभावशरीरादिवैचित्र्यात् पुरुषाणां स्त्रीणाञ्च नियमा धर्मा अपि विलक्षणा एव भवन्ति। नात्रसाम्यसम्पादनाय यतनीयम्। अन्यथा 'स्त्रीणामष्टगुणः काम' इति रीत्या तासु दयां विधायैकपुरुषेण सन्तोषाभावे बहुपुरुषसम्बन्धोऽपि दयालुभिः समर्थनीयः स्यात्। यथा त्वयैवोक्तम्।

"पञ्च मे पतयः सन्ति मह्यं षष्ठोऽपि रोचते' इति।"

परं न च तत्संगतम्, नियन्त्रणमूलिकायाः संस्कृतेस्तदननुमतत्वात्।

यदुक्तम् "यथा संन्यासधर्मो विरागिणः कृते उचितोऽस्ति, सरागस्य कृतेऽनुचितस्तथैव युवतिविधवायाः सकामायाः विषयासक्तायाः कृते प्रभूतानिष्टनिवारणाय पुनर्विवाहो युक्तः। विगतपतिप्रेमाढ्याया, विषयोपरताया, निष्कामायाः सत्सङ्गभक्तिज्ञाननिष्ठाया पुत्रादिसन्तानवत्याः पुनर्विवाहोऽनुचित एव" इति तत्तुच्छम्, वैषम्यात्। दृष्टान्ते

'विरक्तः प्रव्रजेद्धीमान् सरक्तस्तु गृहे वसेत्'

इति शास्त्रोक्ता व्यवस्था विद्यते। परमत्र सरागायाः पुनर्विवाहो विरागायास्तु नेति शास्त्रीया व्यवस्था नास्त्येव। प्रत्युत

'न विवाहविधावुक्त विधवावेदनं पुनः।'

'नामापि नैव गृह्णीयात् पत्यौ प्रेते परस्य तु'॥

इत्यविशेषेणैव सर्वासां कृते पत्यौ प्रेते पत्यन्तरसम्बन्धनिषेधो दृश्यते। अन्यथा स्त्रीणामष्टगुणितकामवत्त्वेन सबलपतिकायाः सन्तुष्टाया एकपतिसम्बन्धनियमो निर्बलपतिकायाः अतृप्तायास्त्वनेकपुरुषसम्बन्धोऽपि विधेयः स्यादेव। यदि तु शास्त्रनिषिद्धत्वात्तदनुचितमिति तदात्रापि निषेधः समान एव।

केचन मन्त्राः

यदुक्तम्—

"इयं नारी पतिलोकं वृणाना निपद्यत उप त्वा मर्त्य प्रेतम्।
विश्वं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणं चेह धेहि॥"

(अथर्ववेद १८।३।१)

इत्यस्य हे मर्त्य मरणधर्मन् मनुष्य इयं पुरोवर्त्तिनी नारी युवतिः सकामा स्त्रीः पतिलोकं पतिस्थानं वृणाना सहधर्मचारिणीत्वे संभजमाना पुराण पुरातनं धर्मं प्रत्यक्षपतिसहचारलक्षणं पालयन्ती प्रकर्षेण इतं अस्माद् भूलोकाद् विनिर्गतं अनु पश्चात् त्वा त्वां उपनिपद्यते समीपं नितरां गच्छति। अत एव त्वं तस्यै सकामायै तव साहचर्य्यं प्राप्त्यै प्रजां पुत्रादिरूपां सन्ततिं द्रविणञ्च धेहि प्रयच्छ। मर्त्यपदेन मृतः कथं संबोध्यः स्यात्? इह इति मनुष्यलोकबोधकवचनेन च प्रेतं पतिं अनु पश्चात् त्वामन्यं योग्यं पतिं वृणाना इति योजनेन सकामाया विधवायाः कृते स्पष्टतः विधवाया पुनर्विवाहः प्रतीयते। एवमेव 'उदीर्ष्व नार्य्यभिजीव लोकमितासुमेतमुशेष एहि हस्तग्राभस्य दिधिषोस्त्वमेतत् पत्युर्जनित्वमभि-संबभूथ' ( ऋ० १०।१८।८ )( अथर्व १८।३।२ ) ( तै० आ० ६।१।१४ )

हे नारि इतासुं गतप्राणं मृतमेतं पतिमुपशेषे उपेत्य शयनं करोषि। अर्थात् मृतपतिं प्रागनुभूतं विषयोपभोगप्रदं तत्सामीप्यञ्चानुस्मृत्यासहायभूता शोकेनाभिभूता च सती शय्यायां पतितासि। अतस्त्वमस्मात् मृतपतिस्मरण-लक्षणात् समीपात् उत्तिष्ठ तं विहाय जीवलोकमभि जीवन्तं योग्यं युवकमा-नवसमूहमभिलक्ष्य एहि आगच्छ त्वं हस्तग्राभस्य पाणिग्राहवतो दिधिषोः पुनर्विवाहेच्छोर्द्वितीयस्य पत्युः एतत् जनित्वं जायात्वं भार्य्यात्वं अभि संबभूथ आभिमुख्येन सम्यक् प्राप्नुहि। द्विरूढाया द्वितीयवारं विवाहितायाः स्त्रियाः स्वामी पतिः दिधिषुः।

> 'भ्रातुर्मृतस्य भार्य्यायां योऽनुरज्येत कामतः।
> धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः॥'

सकामाया विधवायाः कृतेऽयं मन्त्रः पत्यन्तरविधायकोऽस्तीति निश्चप्रचमिति तत्तुच्छम्, सूत्रविरुद्धत्वात्। तथाहि-अन्त्येष्टौ विनियोगः। उत्तरतः पत्नीं धनुः क्षत्रियाया तामुत्थापयेद् देवरः पतिस्थानीयोऽन्तेवासी वा जरद्दासो वा उदीर्ष्व नारि अभि जीवलोकमिति वर्त्ता वृषले जपेत् १८ इति सूत्रे मन्त्रयोरनयोरन्त्येष्टौ विनियोगः प्रतीयते। १६, १७ सूत्राभ्यामित्यपि ज्ञायते यत् अन्त्येष्ट्यवसरे सहगमनोद्यतां पत्नीं देवरोऽन्तेवासी जरद्दासो वा तत उत्थापयति। पुत्रपौत्रादिलक्षणं जीवलोकमभिवीक्ष्य त्वमात्मानं रक्ष पतिसहगमनं मा कुरु इति सान्त्वयति। मृतस्य पत्युरन्त्येष्टिसमय एव अयं पतिर्मृतः हित्वैनं त्वमुत्तिष्ठ जीवलोकमभिवीक्ष्य कञ्चिदन्यं युवानं

पतित्वेन स्वीकुर्वित्ति पुनर्विवाहप्रस्तावं कश्चिद्राक्षसाधम एव समुत्थापयितुं शक्नोति, न भारतीयो मनुष्यो भारतीयाया नार्य्याः समक्षं तथा कर्त्तुं शक्नोति।

यदुक्तम् "मर्त्य इति मृतः कथं स बोधयितुं शक्यः" इति तत्तुच्छम्, स्वधिते मैनं हिंसीरित्यचेतनस्यापि स्वधितेः संबोधनदर्शनात्। किञ्च मर्त्य-शब्देन च येन देहस्त्यक्तः स चेतन एव जिघृक्षितः। स कथं न सम्बोधनार्हः? पत्युरन्त्येष्टिकाले प्रायेण न काचिदपि नारी पत्यन्तरं कामयते। ततश्च पतिगृहं वृणानेत्यर्थोऽप्यसंगत एव। बहुषु मनुष्येषु सत्सु मर्त्यपदेन को मनुष्योऽत्र संबोधनाय इत्यपि न संगच्छते। पतिलोक इत्यनेन पूर्वसिद्धस्य पत्युरेव लोको गृह्यते, न भाविनः पत्युः। उपस्थितं परित्यज्यानुपस्थितकल्पने मानाभावात्। अन्त्येष्टिप्रसङ्गे मृतस्यैव मनुष्यस्य ग्रहणम्, प्रसङ्गोपात्तमपि। नारिपदेन युवतिः सकामा इति कथं गृहीतम्, तत्र बीजाभावात्। पुरातनं धर्मं प्रत्यक्षपतिसहचारलक्षणमित्यप्यसंगतम्, पुरातने धर्मे मन्वादिभिः पत्यन्तरनामग्रहणस्यापि निषिद्धत्वात्।

यदुक्तम् 'इहेति मनुष्यलोकबोधकवचनेन प्रेतं पतिम् अनु पश्चात् त्वामन्यं योग्यं पतिं वृणाना इति योजनेन इति तदपि न क्षोदक्षमम्, एतादृशी योजना कथं संगता। अनुपालयन्तीत्यत्र तस्यानुशब्दस्य निराकाङ्क्षस्यात्र योजयितुमशक्यत्वात्। त्वामन्यं पतिं वृणानेत्यर्थस्य ग्रहणे बीजाभावात्। सिद्धान्ते तु इहेति निर्देशेन तु धर्मपत्न्यै त्वामिह लोके निवासार्थमनुज्ञां दत्त्वा प्रजां पूर्वविद्यमानां पुत्रादिकां धनञ्च धेहि सम्पादय वैधव्यपालनाय पुत्रादिस्वसन्तानरक्षणाय योगक्षेमनिर्वाहकधनसंपादनाय त्वमनुजानीहि इत्यर्थः संगत एव।

यदुक्तम् 'एकस्यैव मन्त्रस्य सकामनिष्कामविधवाभेदेन परस्परविरुद्धार्थबोधकत्वम्' इति तत्तुच्छम्, तथात्वे वाक्यभेदापत्तेः। मीमांसकरीत्या वाक्यभेदो महान् दोषः। तथाचोक्तमन्त्रस्यायमर्थः—हे मर्त्य व्यक्तदेह जीवात्मन येयं नारी मृतस्य तव भार्य्यास्ति सा पतिलोकं वृणाना कामयाना प्रेतं त्वां उपनिपद्यते त्वत् समीपे नितरां प्राप्नोति। अर्थात् सा त्वां पतिं सहगमनेन वैधव्यधर्मपालनेन वा शरीरत्यागानन्तरं पुनरपि तव साहचार्य्यं कामयते। कीदृशी पुराणं विश्वमनादिकालप्रवृत्तं कृत्स्नं स्त्रीधर्ममनुक्रमेण

पालयन्ती। पतिव्रतानां स्त्रीणां पत्या सहैव परमो धर्मः। तदुक्तं रघुवंशे श्री सीतया —

साहं तपः सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये।

भूयो यथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः॥

तस्यै पत्न्यै त्वमिह लोके निवासार्थमनुज्ञां दत्त्वा प्रजां पूर्वविद्यमानां पुत्रादिकां द्रविणं धनञ्च धेहि सम्पादय वैधव्यधर्मपालनाय पुत्रादिसन्ततेर्धनस्य च पालनाय अनुजानीहि।

उदीर्ष्वेति-हे नारि इतासुं गतप्राणं मृतमेतं पतिमुपशेषे उपेत्य शयनं करोषि। अतस्त्वमस्मात् स्थानादुत्तिष्ठ हस्तग्राभस्य पाणिग्राहवतः पत्युः जीवलोकं पुत्रादिलक्षणमभिपश्य। जीवानां पुत्रपुत्रादीनां लोकं स्थानं गृहमभिलक्ष्य उदीर्ष्व अस्मात् स्थानादुत्तिष्ठ। ईरगतौ इतासुं गतासुं अपक्रान्तप्राणं एवं पतिमुपशेषे तस्य समीपे स्वपिषि। तस्मात्त्वमेहि आगच्छ यस्मात्त्वं हस्तग्राभस्य पाणिग्राहं कुर्वतः दिधिषोः गर्भस्य निधातुः तव अस्य पत्युः सम्बन्धादागतं इदं जनित्वं जायात्वमभिलक्ष्य संबभूव संभूतासि अनुमरणनिश्चयमकार्षीः। तस्मात्तन्निश्चयं विहाय पुत्रादिसंतोषायागच्छ। अयमेवार्थोऽन्त्येष्टिविनियुक्तस्य मन्त्रस्य युक्तः। मृतं पतिं विहाय त्वं जीवन्तं कञ्चिद् युवकमभिलक्ष्य एहि पुनर्विवाहेच्छोर्जायात्वं भार्याभावमाभिमुख्ये सम्यक् प्राप्नुहि इत्यर्थको मन्त्रः कथमन्त्येष्टिकाले वक्तव्यः, श्रोतव्यो वा भवेत्? संपूर्वस्यापि भवतेः सकर्मकत्वाभावेन तादृशार्थस्यायुक्तत्वात्।

यदुक्तम् "द्वितीयवारं विवाहितायाः स्त्रियाः स्वामी पतिर्दिधिषुर्भवतीति, तत्तुच्छम्, अन्त्येष्टिकाले त्वद्रीत्यापि द्वितीयविवाहप्रस्ताव एवोपस्थितः, नत्विदानीमपि सा द्वितीयवारं विवाहिता, तथा च कथं दिधिषुत्वं संभवति? नहि पुनर्विवाहोच्छोरेव दिधिषुत्वं सम्भवति पुनर्विवाहेच्छोरनूढया विवाहेऽपि दिधुषुत्वापत्तेः। किञ्च पाणिग्राभस्येति पदेनैव पत्युर्ग्रहणसिद्धौ तदर्थकस्यैव दिधिषुपदस्योपादानानुपपत्तेः। अतो गर्भनिधातैवात्र दिधिषुशब्दार्थः। पुनर्विवाहितायाः पतिर्दिधिषू दीर्घोकारान्तः शब्दः। इह मन्त्रे तु दिधिषुरिति ह्रस्वोकारान्तः। स च धातुमिच्छुर्दिधिषुरिति यौगिक एव, न रूढः।

अयमेवार्थः सायणादिभाष्यानुमतः। तथाहि तृतीयेऽनुवाके सप्तसूक्तानि। तत्रप्रथम सूक्तस्य आद्ययाचि तौ भार्यां प्रेतेन सह संवेशयेत्—

'इयं नारी पतिलोकं वृणाना निपद्यत उप त्वा मर्त्य प्रेतम्।
धर्मं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणं चेह धेहि ॥१॥

(अ० सं० का० १८ अ० ३ सू० ३)

इयं पुरोवर्तिनी नारी पतिलोकं पत्या अनुष्ठितानां यागदानहोमादीनां फलभूतं स्वर्गादिस्थानम् वृणाना सहधर्मचारिणीत्वेन संभजमाना। मर्त्य हे मरणधर्मन् प्रेतं प्रकर्षेण गतम् अस्माद्भूलोकाद्विनिर्गतं त्वा त्वां उपनिपद्यते समीपे नितरां गच्छति। अनुमरणार्थं प्राप्नोतीत्यर्थः। पुराणं पुरातनं धर्मं सुकृतम् अनुपालयन्ती आनुपूर्वेण सम्प्रदायाविच्छेदेन परिपालनमनुपालनम्। स्मृतिपुराणादिप्रसिद्धधर्मस्य अनुमरणजन्यस्य अनुपालनाद्धेतोरित्यर्थः। स्मर्य्यते हि—

'भर्त्तारमुद्धरेन् नारी प्रविष्टा सह पावकम्।
व्यालग्राही यथा सर्पं बलादुद्धरते बिलात्॥' इति।

तस्यै तथाविधायै अनुमरणं कृतवत्यै इह अस्मिन् भूलोके जन्मान्तरे लोकान्तरेऽपि प्रजां पुत्रपौत्रादिरूपाम्। द्रविणं धनञ्च। धेहि प्रयच्छ। एव मन्वादिसम्मतोऽयमर्थः।

उपनिपद्यमाना सा यदि इह लोके पुनर्जीवितुमिच्छेत् तदा द्वितीययर्चा प्रेतेन सह संविष्टां तामभिमन्त्र्योत्थापयेत्—

'उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुपशेष एहि।
हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि संबभूथ ॥ २ ॥

(अथर्वसंहिता १८।३।२)

हे नारि जीवलोकं लोक्यते अनुभूतये जन्मान्तरकृतधर्माधर्मफलमस्मिन्निति लोकः भूलोकः जीवानां जीवतां लोको जीवलोकस्तमभिलक्ष्य। उदीर्ष्व। उद्गच्छ। पत्युः सकाशादुत्तिष्ठेत्यर्थः। गतासुम्। एतं पतिं। उपशेषे। पूर्वमदृष्टार्थमनुगमनमुक्तम्। इदानीं शास्त्राविरोधिदृष्टफलानुरोधेन तत उत्थानं प्रतिपाद्यते। उपशयने दृष्टप्रयोजनं नास्तीत्यतः एहि पत्युः सकाशादागच्छ। हस्तग्राभस्य पाणिग्रहीतुः। दिधिषोः धारयितुः तव। पत्युः। इदं। जनित्वम् अपत्यादिरूपेण जन्मत्वम। अभिसंबभूव अभि-

संप्राप्तासि इति सायणभाष्यविरोधात्। अतः परं तृतीयचतुर्थीभ्यां ऋग्भ्यां चितौ पार्श्वतः परिणीयमानां गाम् अनुमन्त्रयते—

अपश्यं युवतिं नीयमानां जीवां मृतेभ्यः परिणीयमानाम्।
अन्धेन यत्तमसा प्रावृतासीत् प्राक्तो अपाचीमनयं तदेनाम्॥३॥
(अ॰ सं॰ १८।३।३)

युवतिम्। नीयमानां शवसमीपं प्राप्यमाणाम्। जीवां जीवन्तीम्। मृतेभ्यः मृतपुरुषार्थं। परिणीयमानां दारुचित्यग्न्यादिसहितं शवं परितः प्रसव्यं नीयमानाम् गाम् अनुस्तरण्याख्याम्। अपश्यम् पश्यामि। जीवद्-वस्थापन्नाया युवतेर्गोः शवपरिणयनम् अयुक्तमिति जनामीत्यभिप्रायः। अनुस्तरणी सा गौः यत् यस्मात्। अन्धेन दृष्ट्यपघातकेन गाढेन। तमसा अज्ञानलक्षणेन। प्रावृता प्रकर्षेण वेष्टिता आसीत्। हिताहितविभागं स्वयं न जानातीत्यर्थः। तत् तस्माद्धेतोः। एनाम् गाम्। प्राक्तः पूर्वदेशात्। अपा-चीम् शवात् पराङ्मुखीम् अस्मदभिमुखीम्। अनयम् प्रापयामि।

'प्रजानत्यघ्न्ये जीवलोकं देवानां पन्थामनु सञ्चरन्ती।
अयं ते गोपतिस्तं जुषस्व स्वर्गंलोकमधिरोहयैनम्' ॥४॥
(अ॰ सं॰ १८।३।४)

हे अघ्न्ये अहन्तव्ये गौः। जीवलोकम् भूलोकम्। प्रजानती प्रकर्षेण जानाना। देवानामिन्द्रादीनाम्। पन्थाम् पन्थानम् मार्गं यज्ञलक्षणम् अनुसञ्चरन्ती अनुलक्ष्य गच्छन्ती क्षीरदध्यादिहविर्निष्पादयन्ती त्वमागच्छेति शेषः। ते तव अयम्। गोपतिः गोस्वामी। तम्। जुषस्व सेवस्व। एवं मृतं पुरुषम्। स्वर्गम् लोकम्। अधिरोह्य प्रापय। अत्र स्पष्टं सूत्रानुसारेण चितौ पार्श्वतः परिणीयमानाया गोरनुमन्त्रणम्। तस्या एव चतुर्थे मन्त्रे अघ्न्ये इति सम्बोधनम्। अघ्न्येति गोनामप्रसिद्धम्। गोपतिशब्देन स्पष्टमेव वृषभग्रहणम्। एवं प्रकरणविरुद्धं शब्दार्थविरुद्धप्रलपनं न जिहेतीति चित्रमेतत्।

यदुक्तम्—"अपश्यं युवतिं नीयमानां जीवां मृतेभ्यो परिणीयमानाम्।
अन्धेन यत् तमसा प्रवतासीत प्राक्तो अपाचीमनयं तदेनम्।

प्रजानन्त्यघ्ने जीवलोकं देवानां पन्थामनुसञ्चरन्ती।
अयं ते गोपतिस्त जुषस्व स्वर्गं लोकमधिरोहयैनम्॥'
(अथर्व सं० १८।२।३-४)

युवतिं यौवनमदोन्मत्तां जीवां जीवन्तीं ग्राम्यसुखे जीवितुमभिलषन्तीं मृतेभ्यो नीयमानां त्यक्तप्राणेभ्यः पतिसकाशादतिदूरे प्राप्यमाणां तत् प्रबलेच्छामनुरुद्ध्यान्येन तरुणेन तया स्वीकृतेन पत्या सह परिणयेन विवाहेन संयुज्यमानाम् अहं मन्त्रद्रष्टा। अवश्यं पश्यामि। यत् यस्मात् या विधवा नारी प्राक् अन्धेन तमसा अज्ञानशोकादिलक्षणेन प्रावृतां प्रकर्षेण वेष्टिता समाक्रान्ता आसीत्। तस्मात् तामेनां अपाचीं मृतपतिसकाशात् अपाङ्मुखीं पराङ्मुखीं कृत्वा अर्थात् अस्मदभिमुखीं प्राक्तः पूर्वदेशात् प्रगतिशीलां वा अनयम् प्रापयामि। हे अघ्ने अहन्तव्ये जीवलोकं जीवानां युवकयुवतीनां लोकं मिथः स्नेहसुखार्पणादिपूर्वकं दर्शनम् 'लोक दर्शने' इति स्मरणात्। प्रजानती प्रकर्षेण तल्लाभेच्छाजनकज्ञानयुक्ता सती देवानां मिथुनेन सञ्चरतां पन्थां मार्गमनुसञ्चरन्ती सदानुसरणं कुर्वती। अयं वर्त्तमानः गोपतिः गवामिन्द्रियाणामधिपतिः। समर्थस्तरुणस्तव पाणिग्रहीता द्वितीयः स्वामी वर्त्तते। तं जुषस्व प्रीत्या सेवस्व। एवं ग्राम्यसुखादिप्रदानेन स्वर्गं लोकं तत्र त्वमधिरूढा सती त पतिमपि अधिरोहयेत्यर्थः। कामिनोर्ग्राम्यसुखतल्लीनतैवात्र स्वर्गाधिरोहः प्रत्येतव्यः।'' इति

तन्मदम्, यतिर्भूत्वाऽयं लेखकः ग्राम्यसुखस्यैव स्वर्गत्वं मन्यते। तद्दृष्ट्या वेदेऽपि तथैव स्वर्गशब्दस्य ग्राम्यसुखमेवार्थः। तदपि मन्दमेव।

'अनेकानि सहस्राणि कौमारब्रह्मचारिणाम्।
दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम्॥'

इत्यादि वचनैः ग्राम्यसुखविमुखकौमारब्रह्मचारिप्राप्य स्वर्गस्य वर्णनदर्शनात्।

द्वितीयो वर देवरः' (३७७) इति निरुक्ताश्रयणे तु भिन्नैव व्यवस्था। तथाहि--काक्षीवत्या घोषाया आर्षं जागतमाश्विनम्। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः॥

'कुहस्विद्दोषा कुहवस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः ।
को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ ॥१॥
(ऋ० सं० १०।४०।२)

आश्विना हे अश्विनौ । कुहस्वित् क्वचित् । दोषा रात्रौ । भवथ इति शेषः । कुह क वा । वस्तोः दिवा भवथः । कुह क वा । अभिपित्वं अभिप्राप्तिं करतः कुरुथः । कुह क्वा वा ऊषथुः वसथः । ( किञ्च ) वां युवां । कः यजमानः । सधस्थे सहस्थाने वेद्याख्ये । आकृणुते आकुरुते । परिचारणार्थमात्माभिमुखीकरोति । तत्र दृष्टान्तौ दर्शयति शयुत्रा शयने । विधवेव यथामृतभर्तृका नारी देवरं भर्तृभ्रातरम् अभिमुखीकरोति । मर्यं न यथा च सर्वं मनुष्यम् । योषा सर्वा नारी । संभोगकालेऽभिमुखीकरोति तद्वदित्यर्थः ।

यद्यपि 'नारी तु पत्यभावे वै देवरं कुरुते पतिम्' इति (म०भा० १३।१२।१६) रीत्या पत्यौ मृते पतिसहगमनमेव मुख्यम् , तथापि 'बालसंवर्धनं मुक्त्वा बालापत्या न गच्छति' इत्यादि स्मृत्यनुरोधेन बाला पत्या मृतपतिं नानुगच्छति ।

'देवरो दीव्यति कर्मा' ( नि० ३१।४) देवरो मनुष्यो भर्तुर्भ्राता भवति । देवरः क्रीडामात्रासक्तो बालो भवति । स स्वोदरपूर्त्युपायज्ञानविकलस्तत्पालनार्थं नानुगच्छति ।

दुर्गाचार्य्येणोक्तम् 'येन पत्याऽस्मिन् लोके क्रीडिता, तेनैव सह क्रीडार्थं भर्त्तारमनुगच्छति ।

'व्यालग्राही यथा सर्पं बलादुद्धरते बिलात् ।
तद्वदुद्धृत्य सा नारी तेनैव सह मोदते ।
तत्र सा भर्तृपरमा स्तूयमानाऽप्सरोगणैः ।
क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश ॥'

इत्यादिष्वन्वारोहणमेवोक्तम् ।

'दिविरैश्वर्य्यवचने' इति 'पंक्तिविंशति' इति सूत्रस्थभाष्यप्रामाण्येन देवरशब्द ईश्वरार्थकः । तथा च तद्भरणसमर्थः पिता भ्राता पुत्रो वा तमाश्रयेत् । तदुक्तम्

'पितृमातृसुतभ्रातृश्वश्रूश्वसुरमातुलैः ।
हीना न स्याद्विना भर्त्रा गर्हणीयाऽन्यथा भवेत् ॥'इति ।

यद्वा देवरशब्दस्य परमात्मार्थकत्वेन परमेश्वरभक्तिपरायणा ब्रह्मचर्येण कालं क्षपयेत् । तदप्युक्तम् ।

'आसीतामरणात् क्षान्ता नियता ब्रह्मचारिणी ।
यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥

( म० स्मृ० ५।१५८ )

तद्वियोगात् इत्यत्रत्यस्य विशब्दस्यापि व्याख्या । यथा 'अश्रवं हि' ( ऋ० सं० १।१०६ (२) इति मन्त्रे विजामातृशब्दस्य असुसमाप्तजामातृभावोऽर्थो गृह्यते निरुक्तकारैस्तथैवात्रापि 'असुसमाप्त इव वरोऽभिप्रेतः' इति ( ६।६।१ ) निरुक्तदर्शितैव ग्राह्या—

'अश्रवं हि भूरिदावत्तरा वाँ विजामातुरुत वधास्यालात् ।
अथासोमस्य प्रयती युवाभ्यामिन्द्राग्नस्तोमं जनयामिनव्यम् ॥'

( ऋ० सं० १।१०९।२ )

कुत्सस्यार्षम् । त्रिष्टुम् । अश्रौषम अहम् । युवां हे इन्द्राग्नी । भूरिदावत्तरा भूरिदातारौ । कुतः । विजामातुः असुसमाप्ताज्जामातुः । यो हि असमाप्तजामातृभावो भवति स जामातृगुणहीनत्वाद् बहुदानेन कन्या पितॄनाराध्य तेभ्य आत्मानं रोचयति । ततोऽपि बहुतरस्य धनस्य दातारौ अधयश्रौषं भवन्तौ उत वा घा स्यालात् । 'घा' इत्यनर्थकः । स्यालादपि बहुदातारौ युवामहमश्रौषं भवन्तौ । स्यालोऽपि हि भगिनीप्रियचिकीर्षया बह्वेव ददाति । यत एवमहमश्रौषं भवन्तावेतस्मात् कारणात् सोमस्य प्रयतो प्रदानेन अहं युवाभ्यां स्तोमं जनयामि । उच्चारयामि नव्यं नवतरमन्येभ्यः स्तोमेभ्यः । एवमत्र विजामातृशब्देन 'असुसमाप्तजामातृभावः' उच्यते तस्य बहुदातृत्वादित्युपपत्तिः ।

विजामातेति शश्वद् । प्रसिद्धमेतत् । 'दक्षिणाजाः क्रीता पतिमा वक्षते । स हि विगुणत्वादात्मनः क्रीणाति कन्यामात्मनो भार्यार्थे । तस्मात् 'असुसमाप्त एव' असौ 'वरोऽभिप्रेतः' । 'जा अपत्यं तन्निर्माता' जामाता । स्त्रीत्वं हि मैथुनेनव्यवहारेणासौ निर्मिणोति । तेनासौ दुहितुः पतिर्जामाता भवति । 'स्याल आसन्नः संयोगेनेति' निदानविदो मन्यन्ते । अथवा 'स्यम्' इति 'शूर्पम्' उच्यते । तस्मादसौ गृहीत्वा विवाहे 'लाजानावपति' तस्मात्स्याल उच्यते । 'शूर्पमशनपवनम्' तेन ह्यशनं पूयते । तस्य पत्युरसुसमाप्तयोगाद्विधवा कथ्यते ।

योगश्च वधूवरयोश्चतुर्थीकर्मण्येव भवति, नतु ततः प्राक्। तथाचोक्तम् गृह्यसूत्रेषु 'तावुभौ तत्प्रभृति त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौ सहशयीताम्। ऊर्ध्वं त्रिरात्रात् सम्भवः' इति।

एवञ्च चतुर्थी कर्मणि क्षतात्व, न ततः प्राक्॥ तथा च चतुर्थी कर्मणः प्राक् तस्याः पतिगोत्राद्यप्राप्त्याऽनन्यपूर्वात्वमेव निर्णीयते। तस्या विवा 'अनन्यपूर्विकाम्, इत्यनेनापि न विरोधः। तथा च स्मृतयः—

'विवाहे चैव निर्वृत्ते चतुर्थेऽहनि रात्रिषु।
एकत्वमागता भर्त्तुः पिण्डे गोत्रे च सूतके॥
चतुर्थीहोममन्त्रेण त्वङ्मांसहृदयेन्द्रियैः।
भर्त्रा सयुज्यते पत्नी तद्गोत्रा तेन सा भवेत्॥
अद्भिर्वाचा च दत्तायां म्रियेतोर्ध्वं वरो यदि।
नच मन्त्रोपनीता स्यात् कुमारी पितुरेव सा॥'
पाणिग्राहे मृते बाला केवल मन्त्रसंस्कृता।
सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हति॥'

तथा च पराशरः—

'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः।
तामनेन विधानेन निजो विन्देत देवरः॥'

विवाहोत्तर चतुर्थरात्रौ वधूवरयोः संयोगसंभवो विहितः। तदन्यथाऽनुपपत्त्या।

'त्रिंशद्वर्षोद्वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्॥ (९।९४)

इति मनूक्तविवाहकालाङ्गीकार एव सर्वस्मृति-गृह्यसूत्रसंवादी न त्वष्टवर्षादि विवाहे। अष्टवर्षा शब्दे एकशेषाङ्गीकारस्तु राममिश्राणां प्रौढिवादेनैव, एकशेषसूत्रस्थभाष्यविरोधात्। 'त्र्यष्टवर्षः' इत्यत्र त्रिशब्दोच्चारणवैयर्थ्याच्च। निजदेवरासंभवे तु निरुक्तोपदर्शितयोगार्थोऽङ्गीकार्य्यः—तथाचोक्त पराशरेण—

'नष्टे मृते प्रव्रजिते क्लीबे च पतितेऽपतौ।
पञ्च स्वापत्सु नारीणां पतिरन्यो विधीयते॥' इति।

अत्र चासुसमाप्तपदोत्तरपदभूतसुसमाप्तपदलोपेन 'अपतौ' इत्यत्र निरुक्तसंवादाङ्गीकाराय समासाङ्गीकारे विपदमपि निर्बाधमेवेति तत्त्वम्॥

अथवा पतिमाचष्टे पतयति पतयतीति पतिस्तस्मिन् पतौ सप्तपदीप्राक्काले वाग्दत्ता पतिस्तस्मिन् मृते प्रव्रजिते पतिरन्यो विधीयते। विधवानाञ्च चतस्रो गतयः। तत्र पत्यौ मृते ब्रह्मचारिणी उत्तमा, ब्रह्मचर्येस्थातुमसमर्था पतिमनुगच्छन्ती मध्यमा, ब्रह्मचर्य्यानुगमनयोरसमर्था पुनर्भूत्वमङ्गीकुर्वती अधमा, पुनर्भूत्वमङ्गीकुर्वन्ती व्यभिचारजातगर्भादिनिःसारयन्ती भ्रूण-हत्यादि दोषाधिक्यादधमाधमा। तत्र तिस्रो गतयो मन्त्रेणोच्यन्ते।

यदुक्तम्—"महाभारतस्य भीष्मपर्वणि ९० अध्याये वर्णितम्।

'अर्जुनस्य सुतः श्रीमान् इरावान् नाम वीर्य्यवान्।
सुतायां नागराजस्य जातः पार्थेन धीमता॥
ऐरावतेन सा दत्ता अनपत्या महात्मना।
पत्यौ हते सुपर्णेन कृपणादीनचेतना॥
भार्य्यार्थं ताञ्च जग्राह पार्थः कामवशानुगाम्।
एवमेष समुत्पन्नः परपक्षेऽर्जुनात्मजः॥'

परपक्षे समुत्पन्न इत्यनेनासवर्णविवाहोऽपि द्योत्यते। अर्जुनस्यार्य्य-वर्णत्वात् नागराजसुतायास्तद्भिन्ननागवर्णत्वात् तयोरवर्णत्वम्।

'स नागलोके संवृद्धो मात्रा च परिरक्षितः।
रूपवान् बलसम्पन्नो गुणवान् सत्यविक्रमः॥
इन्द्रलोकं जगामाशु श्रुत्वा तत्रार्जुनं गतम्।
सोऽभिगम्य महाबाहुः पितरं सत्यविक्रमः॥
अभ्यवादयदव्यग्रो विनयेन कृताञ्जलिः।
न्यवेदयत चात्मानमर्जुनस्य महात्मनः॥
इरावानस्मि भद्रं ते पुत्रश्चाहं तव प्रभो।
मातुः समागमो यश्च तत्सर्वं प्रत्यवेदयत्॥
तच्च सर्वं यथावृत्तमनुसस्मार पाण्डवः।
परिष्वज्य सुतञ्चापि आत्मनः सदृशं गुणैः॥
प्रीतिमानभवत् पार्थो देवराजनिवेशने।
प्रीतिपूर्वं महाबाहुः स्वकार्यं प्रति भारत॥
युद्धकाले त्वयास्माकं साह्यं देयमिति प्रभो।'

इरावता कुरुक्षेत्रे शकुनेः भ्रातरो युद्धदुर्मदा गान्धारा सद्यो विनिहताः। स चालम्बुषनाम्ना केनचिद्राक्षसेन निहतः। अनेन विधवाविवाहो ज्ञायते।" इति, तत्तुच्छम्।

पूर्वोक्तप्रमाणैर्विधवाविवाहस्याधमत्वावगमेन विशिष्टपुरुषकर्तृकत्वेऽपि तस्याधमत्वानयात्। श्रीभागवते-रुक्मिणीपुत्रस्य मातुलकन्योद्वाहमधर्मं जानन्नपि कृष्णोऽनुमेने।

'जानन्नधर्मं तद् यौनं रुक्मिणीप्रियकाम्यया।' इत्युक्तेः।

अत एवेतिहासस्य धर्मेऽप्रामाण्यमिति स्पष्टमेव। एतेनैव केरलाग्रजन्मचरितमपि व्याख्यातम्। केरलीयनम्बूद्रिब्राह्मणा अन्येऽपि वा यद्धर्मविरुद्धमाचरन्ति, न तस्य धर्मे प्रामाण्यम्। ब्राह्मणस्यान्ययुगे ब्राह्मणेतरकन्यापरिणयस्य भोगाङ्गत्वेनाङ्गीकारेऽपि कलौ तन्निषेधात्। अन्ययुगेषु भोगाङ्गत्वेनाङ्गीकारेऽपि धर्मकार्ये तद्ग्रहणं निषिद्धमेव। किञ्च नागानां देवयोनित्वेन मनुष्यनियमानधिकारित्वेनापि देवाङ्गनानामिवार्जुनपरिणयः शक्यसमाधानः।

श्रीमन्महाभारते आदिपर्वणि अर्जुनवनवासपर्वणि २१४ अध्याये-गङ्गाद्वारं प्रकृत्य—

'तत्राभिषेकं कृत्वा स तर्पयित्वा पितामहान्।
उत्तितीर्षुर्जलाद्राजन् अग्निकार्यचिकीर्षया ॥१२॥
अपकृष्टो महाबाहुर्नागराजस्य कन्यया।......

उलूप्युवाच—

ऐरावतकुले जातः कौरव्यो नाम पन्नगः।
तस्यास्मि दुहिता राजन्नुलूपी नाम पन्नगी ॥ १८ ॥
तां मामनङ्ग ग्लपितां त्वत्कृते कुरुनन्दन।
अनन्यां नन्दयस्वाद्य— .................॥२०॥
एवमुक्तस्तु कौन्तेयः पन्नगेश्वरकन्यया।
कृतवांस्तत्तथा सर्वं धर्ममुद्दिश्य कारणम् ॥३३॥

अत्रोपयुपन्यस्तैरुद्धृतेषु श्लोकेषु 'कन्या' 'अनन्या' आदिशब्दैर्विज्ञायते यत् सा अनूढैवासीदिति अक्षतयोनिर्विधवा वा पूर्वोक्तरीत्या विवाहस्याधर्मत्वोक्तेः।

यदपि "त्रावनकोर ( अनन्तशयनपत्तन ) कोचानादिराजानां कुलेष्वपि राजकन्यानां ब्राह्मणैः सह सम्बन्धो भवति। तेभ्यस्तासूत्पन्नाः कुमाराः एव राजसिंहासनाधिकारिणो भवन्ति। न तु राजभिः क्षत्रियैः स्वधर्मपत्नीषु राजमहिषीषु समुत्पन्ना राजकुमाराः" इति, तदपि पारम्पर्यानुरोधेन न दूषणम्। कलौ ब्राह्मणानां कृते तदनुचितोऽपि राजकुलस्य पारम्पर्यानुरोधेन कल्याणकरमेव योनिप्राधान्येन क्षत्रियत्वमेव तेषां ब्राह्मणोत्पन्नानामपि। यथा व्यासोत्पन्नानामपि पाण्डवादीनां क्षत्रियत्वमिति तद्वत्।

यदुक्तम् "बीजप्राधान्याभिप्रायेण व्यासपुत्रेण विदुरेण किमपराद्धम्? स्वपितृव्यासादिवत् तुल्यन्यायेन तस्य कथं न ब्राह्मण्यव्यपदेशः। यदि योनिप्राधान्यं तत्राभ्युपगम्य मातुः दास्याश्च शूद्रत्वमभिलक्ष्य तस्य शूद्रत्वमभ्युपगम्येत तदा व्यासादिष्वपि तथा कुतो न स्यात्। यतो व्यासस्यापि माता नाविक (मल्लाह) पुत्री मत्स्योदरी शूद्रैवासीत्। सा हि पराशरात् महर्षेर्व्यासस्य पुत्रस्य प्रादुर्भावानन्तरं शंतनोः क्षत्रियस्य सम्राजो महाराज्ञी क्षत्रियाणी सत्यवतीत्यपर पर्यायासीत्। विचित्रवीर्यादीन् क्षत्रियान् पुत्रान् राजकुमारान् जनयामास। केरलदेशे न वीर्यप्राधान्यमपि तु योनिप्राधान्यमेवाभ्युपगम्यते। अत एव पुत्राः पुत्र्यश्च स्वपरिचयाय नाम निर्देशं कुर्वन्ति। अत एव पुत्रास्तदीया वदन्ति। मम पितापन्निकरोऽस्ति परन्त्वहन्तु मेननोऽस्मि। मातुर्मेननरूपापसंज्ञाविशिष्टत्वात्। अत एव ब्राह्मणजन्याः पुत्राः न स्वजनकं पितृसम्पत्तिमाप्तुं समर्था भवन्ति। किन्तु मातुलगृहे वर्धिता रक्षितास्ते भागनेयाः मातुलसम्पत्तिमेवोपभोक्तुं प्रभवन्ति। महाभारते—कर्णपर्वण्यपि—

'तस्मात्तेषां भागहराः भागिनेया न सूनवः।" इति ( अ० ४५।१३ )

तत्तुच्छम्। यतो यत्र नियोगादिना वंशाविच्छेदाय ऋषिभिर्ब्राह्मणैर्वा क्षत्रियादिषु पुत्रा उत्पाद्यन्ते तत्र क्षेत्रजातीया भवन्ति। तथा पाण्डुधृतराष्ट्रयोः क्षत्रियक्षेत्रजत्वेन क्षत्रियत्वं विदुरस्य शूद्रक्षेत्रजत्वेन शूद्रत्वमेव। व्यासस्य तु न शूद्रक्षेत्रजत्वम्। महाभारतरीत्या सत्यवत्या मत्स्योदर्याः उपरिचरवसुवीर्यात् मत्स्यां जातत्वेन क्षत्रियजातित्वेन क्षत्रियत्वमेव। महर्षेः पराशरस्य सत्यसंकल्पत्वेन तत्संकल्पविशेषाद् व्यासस्य ब्राह्मणत्व-

मेव। व्यासस्यापि सत्यसंकल्पत्वेन तत्सङ्कल्पानुरोधेनापि नियोगोत्पन्नानां सन्तानानां क्षेत्रजातीयत्वेन विदुरस्य शूद्रत्वमेव। प्रायेण संततीनां क्षेत्रप्राधान्यं स्वाभाविकम्, बीजप्राधान्यन्तु महर्षीणां सिद्धानां संकल्पवशादपवादत्वमेव। भागिनेयानां भागहरत्वं तु केरलेषु सदाचारप्राप्तत्वेन युक्तमेव।

यत्तु—अग्रजन्मशब्दस्य विविधार्थनिरूपणप्रसङ्गे—

'अग्रे प्राग् यस्य जन्मासौ अग्रजन्मा निरुच्यते।
परत्वञ्चाग्रजन्मत्वे स्यातां सप्रतियोगिके॥
अग्रत्वमिह सर्वेषां परत्वापेक्षिकं मतम्।
सर्व एवाग्रजो लोके स्वापेक्षोत्तरजन्मनः॥
तस्मादत्राग्रजन्मेति वृद्धवर्गोऽभिधीयते।
भवन्त्येवं समाजेषु सर्वदैवाग्रजा नराः॥
सदैवाग्रजवृद्धानां परजेषूपदेष्टृता।
प्रकृत्यैवेष्यते लोके चेयमस्ति परम्परा॥

विद्यासामस्त्यसिद्ध्यै वृद्धसेवा चादिष्टैव। वृद्धाश्च ज्ञानवृद्धा एव मुख्या' इति तन्न, यतो योगजत्वेन भ्रातृष्वग्रजत्वानुजत्वशब्दस्य प्रसिद्ध्या अग्रजन्मशब्दस्य तत्र प्रसिद्धत्वेऽपि ब्राह्मणेषु तस्य योगरूढत्वमेव, रूढिर्योगमपहरतीति न्यायात्। 'मातुरग्रेऽधिजननात्, इत्यादि स्मृतेश्च। त्रिगुणेषु सत्त्वस्य ज्येष्ठत्वेन तत्प्रधानस्य ब्राह्मणस्याग्रजत्वमित्यपि न विरुद्धम्। सत्त्वमात्रप्राधान्येन जन्मना शूद्राणामप्यग्रजन्मत्वं तु योगरूढिविरुद्धत्वादनादेयमेव।



# वर्णसम्बन्धिविचाराः

दीर्घतमसवृत्तान्तः

यत्तु महर्षेर्दीर्घतमसोऽन्धस्य वृद्धस्य चरित्रप्रसङ्गे —

'शूद्रयोनौ मया हीमे जाता काक्षीवदादयः।
अन्धं वृद्धं च मां दृष्ट्वा सुदेष्णा महिषी तव॥
अवमन्य ददौ मूढां शूद्रां धात्रेयिकां मम।'

(म० भा० आ० प०)

इत्यादिपर्वस्थवचनैः नियोगसाधनाय शूद्रायामपि ब्राह्मणोत्पत्तिसाधनाय च प्रयत्नः, सोऽपि निरर्थक एव। सिद्धेन दीर्घतमसा तपोबलेन शूद्रायामपि ब्राह्मण्यं सम्पाद्यैव तत्र ब्राह्मणा एवोत्पादिताः। इदमप्यपवादस्थलमेव, तादृक्सामर्थ्यस्यान्यत्रेदानीमदर्शनात्।

यदुक्तं 'तादृश्यां सिद्धयां सत्यां स्वकलेवरस्य वृद्धत्वान्धत्वनिवारणे युवत्व-सुन्दरत्व-चक्षुष्मत्त्वसम्पादने च सा सिद्धिः कथं नोपयुक्ते'ति तत्तुच्छम्, आप्तकामस्य महर्षेस्तादृश्या इच्छाया एव नियामकत्वात्। पुत्राद्युत्पादने तु बलिप्रार्थनया तदनुग्रहायैव तत्प्रवृत्तिः। एवमेव भगवान् व्यासोऽपि धृतराष्ट्राद्युत्पादनप्रसङ्गे प्रोक्तवान्। यदि मे दुःसहं रूपं गन्धञ्च सोढुं शक्ष्यति तदा योग्यपुत्रलाभो भविष्यति। तत्रापि सामर्थ्ये सत्यपि तादृगपधारणं तदिच्छैव मूलम्।

कक्षीवतो वृत्तान्तः—

यदप्युक्तम्—

"कक्षीवांस्तु ततो गत्वा सह पित्रा गिरिव्रजम्।
दृष्ट्वा पृष्ट्वा पितुर्वै स ह्युपविष्टश्चिरं तपः॥
ततः कालेन महता तपसा भावितस्तु सः।

विधूय मातृजं कायं ब्राह्मण्यं प्राप्तवान् विभुः ।
ब्राह्मण्यं प्राप्य कक्षीवान् सहस्रमसृजत् सुतान् ।"
[ मत्स्य अ० ४८ ]

उक्तरीत्या तपसा कक्षीवतो ब्राह्मण्यप्राप्तिस्मरणात् कर्मणैव वर्णव्यवस्थेति, तदपि तुच्छम् ।

तत्र तपःप्रभावेण मातृजकायविधूननपूर्वकं ब्राह्मण्यप्राप्तेरुक्तत्वात्, तस्य च सिद्धान्तेऽपीष्टत्वात् । विशेषतोऽन्यत्रैतत् सम्बन्धे पर्याप्तविचारः कृतः ।

यदप्युक्तं "परशुरामः क्षत्रियान् त्रिःसप्तकृत्वो हत्वा स्वब्राह्मणसंघवर्धनाय अन्यान् कैवर्त्तनिषादादीन् महाशूद्रानपि ब्राह्मणांश्चकार । तत्पुराणे स्पष्टं प्राक् प्रदर्शितम्" तदपि तुच्छम्, धर्मसंरक्षणाय कृतावतारे भगवति तादृग्रागद्वेषकल्पनायोगात् । कैवर्त्तप्राया ब्राह्मणा एव तु तेन संशोध्य तेषु ब्राह्मण्यमाविर्भावितमिति तु तत्प्रसङ्गे समाहितमेव ।

## क्षत्रियोत्पत्तिप्रसङ्गः

यदपि च परशुरामेण क्षत्रियेषु विनाशितेषु ब्राह्मणैरेव विधवासु क्षत्रियासु बहवः क्षत्रिया उत्पादिताः ।

'एवं निःक्षत्रिये लोके कृते तेन महर्षिणा ।
ततः प्रभृति सर्वाभिः क्षत्रियाभिः समन्ततः ।
उत्पादितान्यपत्यानि ब्राह्मणैर्वेदपारगैः ।
पाणिग्राहस्य तनया इति वेदेषु निश्चितम् ।"
( वराहपुराणे अ० ३७ ३६।४० )

एतेन केचित्पामराः विधवाविवाहं, कर्मणा वर्णव्यवस्थाञ्च साधयितुमीहन्ते, तत्तुच्छम्; नियोगविध्यनुसारेण स्वोच्चवर्णेन स्वगोत्रजेन वा पुत्रोत्पादनस्यान्ययुगेष्वनुमतत्वात् । सत्यसंकल्पानां महर्षीणां संकल्पबलेन पाणिग्राहजातीयानां सन्ततीनामुत्पादनेऽपि नात्र विधवाविवाहः साधयितुं शक्यः; इतिहासस्य धर्मेऽप्रमाणत्वात् ।

"न विवाहविधावुक्तं विधवावेदनं पुनः ।" ( म० ९।६५ )

इति मनुस्मृतिविरोधाच्च । मनुना नियोगस्यापि निन्दितत्वात् ।

अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः।
मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥"

( म० ९।६६ )

कलिवर्ज्यत्वाच्च तत्साधनप्रयासो वेदादिशास्त्रतात्पर्य्याज्ञान-विजृम्भित एव।

यदुक्तम्—वर्णानां मिथः सांकर्य्यं पुरातनकालादेव सम्प्रवृत्तमासीत्। तत एवार्जुनेन युद्धस्यैक प्रबलमनिष्टं फल दर्शितम्।

संकरो नरकायैव'—'स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः। इति।

विधवासु युवतिषु प्रबलकामदोषसमुन्मत्तासु विभिन्नवर्णनियोगात् जायमानाः वर्णसंकरजाः प्रजाः कुलस्य नरकं दातुं प्रभवन्तीति। भगवांस्तु तत्समाधानमकृत्वैव क्षत्रियधर्माय युद्धाय तं प्रवर्त्तयामास। तत्रोपहासमुखेनैव भगवतोक्तं वर्णशंकरतायाः शङ्का शास्त्ररहस्य-समाजपरिपाटीज्ञानशून्येन जनेनोद्भाव्यते, त्वया कथं क्रियते ? किं भवतां पाण्डवानां वर्णसाङ्कर्य्यं नास्ति ? भवत्पितरि पाण्डौ तदुत्पादके भवत्पितामहे व्यासेऽपि किं तन्नास्ति ? तच्च भवदादिषु समभीष्टभूषणरूपमेव जातम्। तत एव भवन्तः सत्यप्रतिज्ञाः, धर्मनिष्ठाः, शूरवीराः, समुदारचरिताश्च, विशालबुद्धित्वेन व्यासोऽपि संस्तुत एव। अष्टादशपुराणाभारतनिर्माता वेदव्यसनकर्त्ता निखिलार्य्यप्रदेशललामभूतस्तस्य च पुत्रो महावीतरागः शुकः।

तदुक्तमेव केनचित्

'कानीनस्य मुनेः स्वबान्धववधूवैधव्यविध्वंसिनो
नप्तारः किल गोलकस्य तनयाः कुण्डाः स्वयं पाण्डवाः।
ते वै पञ्च समानदारनिरतास्तेषां कथाकीर्तनात्
पापं नश्यति वर्धते च सुकृतं धर्मस्य सूक्ष्मा गतिः ॥"

इति शङ्कातत्समाधानयोरुभयोरपि अपसिद्धान्तत्वेन तुच्छत्वात्। सत्यसंकल्पस्य भगवतो व्यासस्य सङ्कल्पवशात् विचित्रवीर्यादिक्षेत्रेपूत्पन्नानां सन्ततीनां पाणिग्राहजातीयत्वेन धृतराष्ट्रादिषु क्षत्रियत्वानपायात्। युधिष्ठिरादयस्तु महामहिमवैभवानामचिन्त्याद्भुतशक्तिशालिनां धर्म-पवनेन्द्राश्विदेवानां सङ्कल्पवशात् सुतरां मातृजातीयत्वेन क्षत्रिया एव। एतेषु च

कर्मादिसाङ्कर्याभावात् सांकर्यशङ्कालेशोऽपि नास्ति, जन्मना सह क्षत्रियगुण-कर्मणाञ्च तेषु प्रतिष्ठितत्वात् । कर्मप्रयुक्तमपि साङ्कर्यं शास्त्रोक्तमेव ।

'अर्थाश्रयाद्वा कामाद्वा परकर्मनिषेवणात् ।
स्वकर्मणाञ्च त्यागेन जायन्ते वर्णसङ्कराः ॥'
( बा० स्मृ० )

धर्मशास्त्रेषु ब्राह्मणादिमातापित्रादिजन्यानामेव ब्राह्मणत्वादिकमुक्त-मित्यप्युक्तमेव । तस्माद् वर्णसांकर्यं न दूषणं किंतु भूषणमेवेति गीतातात्पर्य-कल्पनं व्यामोहमूलकमेव । श्रुति स्मृति-पुराणादिशास्त्रेषु विधवावेदन-कुण्ड-गोलकादीनां निन्दितत्वात् । शास्त्रीयनियोगविधानेन महर्षिव्यासवर्मेन्द्रादि-जनितानां धृतराष्ट्रादीनां कुण्डगोलकत्वाद्यभावात् । विधिमन्तरास्वैरितया-जनितानामेव तथात्वादित्याद्यप्युक्तमेव ।

## कर्मणा क्षत्रियत्वप्राप्तिविधिः

यदुक्तम्—

'यस्तु विप्रत्वमुत्सृज्य क्षात्रं धर्मं निषेवते ।
ब्राह्मण्यात् स परिभ्रष्टः क्षत्रयोनौ प्रजायते ॥'

क्षत्रयोनौ इत्यस्य क्षत्रियवर्णे इत्येवार्थः । वर्तमानकालप्रयोगात् तस्मिन्नेव जन्मनि न जन्मान्तरे । एतेन कर्मणा वर्णव्यवस्था सिद्ध्यति ।

'क्षत्रियो वा महाभागे वैश्यो वा धर्मचारिणि ।
स्वानि कर्माण्यपहाय शूद्रकर्म निषेवते ॥
स स्वस्थानात् परिभ्रष्टः वर्णसंकरतां गतः ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रत्वं याति तादृशः ॥'

इत्यादिष्वपि बोध्यम्

तस्मात्तद्गुणधर्माणां जीवननिर्वाहसाधनानाञ्च मिथोऽसंकीर्ण-व्यवस्थैव समुचिता वर्णव्यवस्था । पादत्राणस्थापनस्थाने वस्त्रादिस्थापनं तत्स्थाने च पादत्राणादि स्थापनमव्यवस्थैव । तेन कर्मसांकर्यनिवारणं नितान्तमपेक्षितम् । समानशीलव्यसनेषु विवाहः सख्यञ्च युक्तम् ।

'विवादश्च विवाहश्च समयोरेव शोभते ।'

इत्याद्युक्तेरिति तत्सत्यम् , तथाहि—

'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।'

'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः'

इत्यादि रीत्या जन्ममूलकवर्णव्यवस्थायामेव कर्मसाङ्कर्यस्य सामञ्जस्येन कर्मणा वर्णव्यवस्थाया असिद्धेः ।

'हिंस्रा भवन्ति क्रव्यादाः कृमयोऽभक्ष्यभक्षिणः ।
परस्परादिनः स्तेनाः प्रेतान्त्यस्त्रीनिषेविणः ॥
धान्यं हृत्वा भवत्याखुः कांस्यं हंसो जलं प्लवः ।
मधु दंशः, पयः काकः, रसं श्वा, नकुलो घृतम् ॥
मांसं गृध्रो, वपां मद्गुस्तैलं तैलपकाः ! खगाः ।
चीरी वाकस्तु, लवणं वलाका, शकुनिर्दधि ॥

(मनुः अ० १२।५९, ६२, ६३)

इत्यादि वचनेषु जन्मान्तरीयफलत्वेऽपि वर्तमानप्रयोगदर्शनात् । न तु तस्मिन्नेव जन्मनि कर्मणा वर्णपरिवर्त्तनम् । नहि धान्यं हृत्वा तस्मिन्नेव जन्मन्याखुर्भवन् दृश्यते ।

न वा मांसं हरन् तत्क्षणमेव गृध्रो जायमानो दृश्यते । तथैव क्षत्रयोनौ प्रजायत 'इत्यादिष्वपि बोध्यम ।

'मणिमुक्ताप्रबालानि हृत्वा लोभेन मानवः ।
विविधानि च रत्नानि जायते हेमकर्त्तृषु ॥'

(मनु० १२।६१)

अत्र च हेमकर्तृशब्देन हेमकारजातीय उक्तः । नहि हेमकार्य्यकरणाद्धेमकारो भवति । तस्माद्रथकारजातिवदेव हेमकारजातिरपि बोद्धव्या । कृमिक्रव्यादादिजातिप्रसङ्गेन वर्णितस्य हेमकर्तृशब्दस्य रथकारशब्दवज्जातिपरत्वस्यैव निश्चयात् । एतेन 'स द्विजो वैश्यतामेति' इत्यादीनि सर्वाण्यपि वचनानि तत्तद्वर्णोचितकर्मकरणेन जन्मान्तरे तत्तद्वर्णप्राप्तिबोधकान्येव ज्ञातव्यानि । अनापद्येव स्वकर्मणां त्यागेन परकर्मनिषेवणाद् वर्णसांकर्य्यं ज्ञातव्यम् । आपदि तु तथानुमतत्वेनादोषात् । योनिशब्दस्य वर्णपरत्वे मानाभावाच्च पूर्वोक्तव्याख्यानमपव्याख्यानमेव मन्तव्यम् ।

शास्त्रविधानविपरीतरीत्या जनितानामेव सांकर्य्यम । अतएव व्यास-

पाण्डुपाण्डवादीनां शास्त्रविधानानुसारेण दिव्य-पराशर-व्यासादिधर्मादि-जनितानां महामहिमप्रभावशालित्वं न वर्णसाङ्कर्यस्य भूषणत्वेन तादृक्कल्पनाया नास्तिस्यमूलकत्वात्। पादत्राणादिस्थापनं यत्र विहितं तत्र वस्त्रादिस्थापनवदेव येषां वर्णानां लौकिकं जीविकादिकं पारलौकिकञ्चाग्निहोत्रादिकं विहितं तैस्तान्येवानुष्ठेयानीति तु युक्तमेव। परं येषां कर्मणा वर्णव्यवस्था तेषां तु कर्मणैव वर्णो भविष्यति। कर्मसु प्रवृत्तेर्नियामकाभावात् स्वातन्त्र्यमेव स्यात्। ततस्तेषां स्वधर्म-परधर्म-व्यवस्थैव न भविष्यति। निश्चिते स्थाने सत्येव व्यवस्था भवति। यथेष्टपरिवर्त्तनशक्यत्वे तु तत्रैव कदाचित् पादत्राणं विन्यस्यते। कदाचिच्च भोजनं विन्यसितव्यमेव। तस्माज्जन्मना नियता वर्णव्यवस्थाऽभ्युपेतव्या। तदुचितो धर्मः स्वधर्मस्तद्भिन्नस्तु परधर्म इति व्यवस्थापि तदैव संपत्स्यते। तत्रापि सम्पदापद्भेदेन जीविकारूपेषु कर्मसु कदाचित् परिवर्त्तने सत्यपि तदापदपगमे स्वधर्मनिष्ठतैव सम्पाद्यते। वर्णमूलकेषु वेदाध्ययनतदर्थानुष्ठानादिषु तु न कदाचिदपि परिवर्त्तनम्। नहि जातुचिद् ब्राह्मणक्षत्रियौ वैश्यस्तोमे, विप्रवैश्यो वा राजसूये प्रवर्त्तेते। राज्यकरणनिमित्तकं राजत्वं तु न राजसूयाधिकारप्रयोजकमितीहैवान्यत्र स्पष्टम्।

यत्तु ब्रह्मकर्मानुसारेण चातुर्वर्ण्यमकल्पयत्' इति साधनाय—

> 'ब्रह्मा स्वयम्भूर्भगवान् दृष्ट्वा सिद्धिं तु कर्मजाम्।
> मर्य्यादां स्थापयामास यथारब्धाः परस्परम् ॥' इति
>
> ( वायु० पु० ८।३४ )

वचनमुद्धृतं, तदपि मन्दम्। जन्मान्तरीयकर्मभिरेव ब्राह्मणादियोनिप्राप्त्या जन्ममूलकवर्णव्यवस्थायामपि कर्मजत्वस्यानपायात्।

आम्रबीजदृष्टान्तः।

यदप्युक्तं 'यथा मधुराम्रबीजाज्जातस्तरुर्मधुराण्येव जनयेच्चेत्तदाऽयमाम्रवृक्ष इति शिष्टैः प्रोच्यते। यदि कटूनि चाम्लानि च फलान्युत्पादयेत्तदा कथं विचारकैरप्याम्रवृक्षोऽभिधीयेत? तथैव जन्मजातिकृते ब्रह्मक्षत्रवर्गाणां परस्परं भेदेऽभ्युपगतेऽपि कश्चन स्वभावकृतो विशेष उपलभ्येत, शतशो व्यभिचरितत्वात् नतु तथोपलभ्यते। ब्राह्मणब्रुवा अपि नितान्तं बुद्धिहीना अनृतमायादिपराः पयोमिश्रितपयोविक्रयिणः

भोजननिर्माणादिश्ववृत्तिपराः, भूयांसश्च क्षत्रियाः कर्षकाः किङ्करा गवाश्वादिपालका शौर्य्यपराक्रमादिभावशून्या वणिग्वृत्तिमाश्रिताः, अक्षत्रिया अपि वलपराक्रमशालिनः प्रबलशत्रुजेतारः, अनेके शूद्रा अपि ब्राह्मणोचितशीलबुद्धिवैभवशालिनः। तथाचानेन शमशौर्य्य-व्यापारचातुर्य्य-सेवाभावादिगुणमूलको यद्वो युद्धवाणिज्य-श्रमादिकर्ममूलक एवायं वर्णविभागो युक्तः। तेनैव समाजसंघटनं राष्ट्रोन्नतिसाधकं भविष्यति। नात्र शास्त्रविरोधगन्धोऽप्यस्ति।" इति, तदपि शास्त्रतात्पर्य्याज्ञानविजृम्भितम्, विषमोपन्यासात्। तथाहि किं मधुराम्रबीजोत्पादितस्तरुः कटून्याम्लानि फलानि जनयन् दृश्यते। न जनयेच्चेत्कथं स दृष्टान्तमर्हति, जनयेच्चेत्कथं न जन्मना वर्णव्यवस्था सिद्ध्येत्?

वयं तु पश्यामः। समुचितोपचारैर्मधुरजलदुग्धादिसेकैर्भूमिविशेषगुणैश्चाम्लादप्याम्रबीजाज्जातात्तरोरपि मधुराणि फलानि जायन्ते। एवमेव विपरीतभूम्यादि संसर्गेण च मधुरादपि फलाज्जातात्तरोराम्लानि फलानि जायन्त एव। तावताऽपि न तस्यानाम्रत्वममूढःकश्चिद्विवक्षति। तथैव शास्त्रविधानानुसारेण ब्राह्मणाज्जातस्य यथावत्संस्कृतस्य शिक्षितस्य शुद्धवातावरणपोषितस्य मुख्यमेव ब्राह्मण्यम्, शमदमादिमत्त्वञ्च भवत्येव। ब्राह्मणाद्यथा कथञ्चित् ब्राह्मण्यां जातस्यासंस्कृतस्याशिक्षितस्यायोग्यवातावरणपोषितस्य च भिन्नकर्मत्वे मौर्ख्ये च सति विद्यातपसोरभावेन मुख्यब्राह्मण्याभावेऽपि योनिजत्वेन जातिब्राह्मण्यं तु भवत्येव। यथोक्तमेव सङ्गादिविशेषात् सिंहस्यापि शौर्य्यक्रौर्य्यादिहीनत्वेन जातिसिंहत्वम्, शौर्य्यादिसाहित्येन मुख्यं सिंहत्वं, शौर्य्यादिगुणयोगात्त्वसिंहे देवदत्तादिमनुष्येऽपि गौणं सिंहत्वं भवत्येव। श्रुतिस्मृतिपुराणेषु यथा जन्ममूलिकैव वर्णव्यवस्था तथा प्रदर्शितमेव। स्वाभाविक्या व्यवस्थैव समाजराष्ट्रसंघटनोत्थानादिकं संभवति न कृत्रिमया।

### क्षितिमोहनसेनमतनिरासः

यत्तु—'भारतवर्ष में जातिभेद' इति क्षितिमोहनसेनलिखितपुस्तकाश्रयेणाब्राह्मणानां बहूनां ब्राह्मणत्वापादनमुक्तम्, तच्च सर्वथा निर्मूलमेव, ब्राह्मणादिविद्वेषमूलकञ्च। एवमेव क्षत्रियादिसम्बन्धिन्योऽपि दुष्कल्पना द्वेषमूलिका एव। इदानीं आङ्गलविद्याप्रभाविताः भारतीयाः पाश्चात्यानां

भारतीयजातिद्वेषिणामन्धानुकरणपरायणा ईर्ष्याद्वेषादिभिः केचिद् ब्राह्मणादयोऽपि जातिबहिष्कृता निम्नजातीया वर्णसंकरा वा 'अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते' इति न्यायेन स्वसमानानेव स्वतोऽप्यपकृष्टानेवा सर्वान् पश्यन्ति।

यत्त, यज्ञादिकार्य्यसिद्धये कांश्चिदब्राह्मणान् कश्चिद्राजा ब्राह्मणान् सम्पादयामासे'ति तत्त व्याहतमेव। यज्ञादिकार्य्येषु ब्राह्मणानामेवार्त्विज्य-विधानात्। तच्च ब्राह्मण्यं न कस्यचिदिच्छातन्त्रम्, तथात्वे वेदाध्ययन-तदर्थानुष्ठानाधिकारानधिकारविवेकस्य निरवकाशत्वापत्तेः।

**शाकद्वीपिवृत्तान्तः**

शाकद्वीपिब्राह्मणसम्बन्धिनी कल्पनाऽपि निर्मूलैव। भविष्यपुराणे १३९ तमेऽध्याये सूर्योपदेशेन कृष्णपुत्रसाम्बसमानीतानां सूर्य्यपूजानियुक्तानां तेषां माहात्म्यातिशयवर्णनात्। सूर्य्येणैवोक्तम्।

'जम्बूद्वीपात् परो यस्माच्छाकद्वीप इति स्मृतः।
तत्र पुण्या जनपदाश्चतुर्वर्णसमन्विताः ॥७२॥
मगाश्च मगगाश्चैव मानसो मन्दगास्तथा।
तत्राद्यवर्णोऽह्यव्यङ्गो वेदवेदाङ्गपारगः ॥७३॥
न तेषां सङ्करः कश्चित् धर्माश्रयकृते भवेत्।
अष्टादशकुलैर्युक्तो मगो नाम द्विजोत्तमः ॥'

तानेव समानाय्य साम्बश्चन्द्रभागातीरे स्थापयामास।

**मध्वाचार्यवृत्तान्तः**

यदप्युक्तम् 'मध्वाचार्य्या श्रीरामानुजाचार्य्याश्च सूत्रेभ्यः पटानिव सुवर्णेभ्यः आभरणानीवोपादानकारणेभ्योऽब्राह्मणेभ्यो ब्राह्मणान्निर्ममु'रिति तन्न, अप्रामाणिकत्वेन तदस्वीकृतत्वात्।

यदुक्तम् 'यदीयं स्वभाविकी जन्मकृता वर्णव्यवस्था स्यात्तदाऽवश्यं भारतनिर्विशेषं सर्वेष्वपि यूरोपादिदेशेष्वपि स्यात्। न खलु परमेश्वरेण भारतीया एवोत्पादिता नत्वन्यदेशीया इति केनचिद्वक्तुं शक्यते। नत्वन्यत्र वर्णव्यवस्था दृश्यते' इति, तदपि तुच्छम्। श्रीभागवतादौ भारतस्यैव तद्वैशेष्यवर्णनात्। पञ्चमस्कन्धे भारतवर्णनप्रसङ्गे तत्र वर्णाश्रमवतोऽभिभार-

तीयाभिः प्रजाभिर्वर्णाश्रमलक्षणेन भगवानुपास्यते। वस्तूनां नियतकालदेशत्वञ्च दृश्यते। नहि कोकिलकूजनं सर्वदा भवति, न वा काश्मीरकुङ्कुमादयः सर्वत्रोत्पद्यन्ते। किन्तु देशकालविशेषेष्वेव, तथा दर्शनान्नियतदेशकालोत्पत्तय एवेति मन्तव्यम्। नहि भारत इवान्यत्रापि भगवतः रामकृष्णादिवत्पूर्णावतारवत्तापि। तथैव वर्णव्यवस्थापि भारतस्यैव वैशेष्यम्। कर्मणापि वर्णव्यवस्था नहि सर्वत्र दृश्यते तर्हि कर्ममूलकवर्णप्रतिपादनायासोऽपि व्यर्थ एव। आधुनिकाः परमसुधारकास्तु कथञ्चिदपि वर्णव्यवस्था सर्वथा हानिकरीत्येव प्रतिपादयन्ति।

चातुर्वर्ण्यभारतसमीक्षा पुस्तकस्य २४ तमे पृष्ठेऽनिच्छन्नप्यङ्गीकरोति तल्लेखको यद् 'अस्माकं धर्मशास्त्राण्यपि ह्यस्माकमार्य्यदेश एव तत्तद्वर्णधर्मान् जन्मत एव तत्तद्वर्णविभागांश्च बोधयन्ति, न तु सर्वेषु देशेषु' इदमेव सत्यं शिरस्यधिरुह्य कदाचित्सत्यं वाचयतीत्यस्योदाहरणम्।

यदुक्तम् 'गुणकर्मानुरोधिनी तु वर्णव्यवस्था सर्वत्रैव विद्यते' इति तदसत्यमेव। यतो न वैज्ञानिकानां शिक्षकाणां लेखकानान्तत्र ब्राह्मण्यव्यवहारा, नवा तेषां भोजनविवाहादिनियमाः सन्ति। एवमेव शूरवीराणां सैनिकानाञ्च न क्षत्रियजातित्वेन संघटनव्यवहारो, नवोद्योगपतीनां प्रामाणिकानां व्यापारिकाणां श्रमोपेतानाञ्च वैश्यशूद्रत्वव्यवहारः। 'गुणकर्मविहीनेन जन्मना नास्ति वर्णता' इत्यादिकन्तु प्रमत्तगीतमेव। श्रुतिस्मृत्यादिविरुद्धत्वात्।

उत्कृष्टवर्णप्राप्तिकारणानि

यदप्युक्तम् 'निकृष्टवर्णस्योत्कृष्टवर्णत्वप्राप्तौ न केवलं तप एव प्रयोजकम्, किन्तु विविधानि कारणानि। यथा ब्रह्मणः पुत्रा जन्मत एव सात्त्विकाः। ब्रह्मभावोपेता ब्राह्मणाः संस्कारेण भरद्वाज-जाबालाद्या अनृतादिदोषनिवृत्तिपूर्वकसत्यब्रह्मचर्य्यादिगुणाधानलक्षणेन संस्कारेण ब्राह्मणाः सम्पन्नाः। विश्वामित्रादयस्तपसा ब्राह्मण्यं गताः। विद्यया चेतरापत्यकवषकक्षीवदादयः, वृत्तौ ऋषभपुत्राद्याः कर्मविशुद्धा ब्राह्मणा बभूवुः। भृग्वादिवरदानेन वीतहव्यादयो लोकसंस्थानुमत्या शाकद्वीपादिवासिनः 'सवालक्खी' विश्रुता चित्पावनादयश्च राजाज्ञादि व्यवस्थया आन्ध्रद्राविडादयो—ब्राह्मणत्वतां याताः।

व्रात्यस्तोमादिभिः शुद्धया बौद्धीभूताः शङ्कराचार्य्यादिभिर्ब्राह्मण्यं नीताः । रामानन्दादिभिश्च म्लेच्छाः संस्कृत्य हिन्दवः कृताः । शौनकाद्याश्च भिन्नवृत्तिसमाश्रयात् ब्राह्मणक्षत्रियादयो जाताः । विधर्मिणः शकाद्याः प्रतिज्ञया जन्मजातिपरिवृत्तौ चातुर्वर्ण्यमुपागताः । विश्वामित्रस्य शापाच्च तत्पुत्रा म्लेच्छतां गताः । वैश्वामित्राश्च वेदमन्त्रद्रष्टृमधुच्छन्दः प्रभृतयो ब्रह्मवंशकर्त्तारो ब्राह्मणा जाताः । यदोस्तु यादवाः-तुर्वसोर्यवनाः स्मृताः शनकैस्तु क्रियालोपात् क्षत्रियादयो वृषलत्वं गताः । एवं यवनाङ्गलादिशासनसमये भयाद्वा लोभाद्वलात्काराद्वा उत्तमवर्णप्रयुक्तोपेक्षणावमानादितः सम्यगार्य्यभावशिक्षणाभावाद्वा-भारतेऽनार्य्यतां गता' इति ।

तदेतच्छास्त्रलोकवृत्तान्तानवबोधविजृम्भितम् । ब्राह्मणमातापित्रादिजन्यत्वस्यानुगतब्राह्मण्यप्रयोजकत्वसंभवेऽननुगतानेकप्रयोजकाङ्गीकारे मानाभावात् । अनुगतकारणञ्चेहैवान्यत्र द्रष्टव्यम् । तपसा वरशापादिभिश्च पूर्ववर्णीयदेहारम्भकपरमाणुविघटनपूर्वं ब्राह्मणादिवर्णीयनूतनपरमाणुसंघटनक्रमेण ब्राह्मण्यादिनिर्माणानि प्रामाणिकान्यपवादस्थलीयान्येव । भरद्वाज-जाबालादयस्तु जन्मब्राह्मणा एवेत्युपपादितमेव । कर्मविशुद्धा ब्राह्मणा अपि तपोलक्षणेन कर्मणा पूर्वदेहारम्भकपरमाण्वादिविघटनेन मुख्यं ब्राह्मण्यं सदाचारेण गौणं वा ब्राह्मण्यं गता इत्येव मन्तव्यम् । वीतहव्यादयस्तु सिद्धभृगुवचनप्रभावात्, चित्तपावनादयस्तु भगवदवतारभूतस्य सिद्धतमस्य परशुरामस्य तपःप्रभावाद् ब्राह्मणाः सन्त एव भ्रष्टाः पुनः संस्कारेण ब्राह्मण्यमुपनीताः । शाकद्वीपिनस्तु जन्मब्राह्मणा एव । बौद्धाद्या ब्राह्मणादय एव सन्तः संस्कारेण संशोध्य ब्राह्मण्यादिकमुपनीता इत्यादि पूर्वमुक्तमेव शकादयस्तु ब्राह्मण्यं गता इति मिथ्यैव । सिद्धानां तपोवरशापेष्वेव नहुषस्याजगरत्वमिव वर्णस्य वर्णान्तरत्वसम्पादनक्षमता, नान्यत्र । वैधब्राह्मणादिमातापित्रादिजन्यता तु स्वाभाविकी ब्राह्मण्यादिप्रयोजिका । म्लेच्छानां हिन्दुत्वं तु भागवतप्रोक्तस्य त्रिंशल्लक्षणस्य धर्मस्य मानवमात्रकल्याणकारित्वेन वेदादिहिन्दुशास्त्रोक्तधर्मस्य स्वाधिकारानुसारेणानुष्ठातुः हिन्दुत्वसम्भवेन न विरुद्धम्। तावताऽपि न तेषां ब्राह्मण्यम्, वेदतदर्थानुष्ठानाधिकारित्वप्रयोजकजन्ममूलकब्राह्मण्यस्याभावात् । मानवमात्रसुलभसामान्यधर्मस्य भक्त्यादि लक्षणस्य हिन्दुधर्मस्य ग्रहणे मानवमात्रस्याधिकाराभ्युपगमात् ।

'तपः श्रुतञ्च योनिश्चेत्येतद् ब्राह्मणकारकम् ।'

इति महाभाष्ये —

'जन्मशारीरविद्याभिराचारेण श्रुतेन च ।
धर्मेण च यथोक्तेन ब्राह्मणत्वं विधीयते ॥
चित्रं कर्म यथानेकैरङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यमपि तद्वत्स्यात् संस्कारैर्विधिपूर्वकैः ॥'

इति पराशरमाधवीयेऽङ्गिरस उक्तिः ।

'सुक्षेत्राच्च सुबीजाच्च श्रेष्ठो भवति संभवः ।
अतोऽन्यतरतो हीनादवरो नाम जायते ॥'

इत्यादिभिः शौर्य्यक्रौर्य्यविशिष्टस्य सिंहयोनिजातस्य मुख्यसिंहत्वमिव तपःश्रुतादिविशिष्टस्य ब्राह्मणयोनिजातस्य मुख्यं ब्राह्मण्यम् । तद्धीनस्य योनिमात्रस्य तु जातिब्राह्मणत्वमुक्तमेव ।

यदुक्तम् "त्रीणि यस्यावदातानि योनिर्विद्या च कर्म वै' इत्यत्र अवदातत्वं शरीरसौष्ठव-गौरादिवर्ण-बल-स्वास्थ्य-सदाचार-बुद्धिमत्वादिकम् । यथा गोर्गवेन्द्रस्य चोभयोरपि सौष्ठवात्तज्जन्यवत्सस्यापि सौष्ठवं जायते" इति, तन्मन्दम्, शरीरसौष्ठवादीनां ब्रह्मणक्षत्रियादिसर्वसाधारणसौष्ठवहेतुत्वेन ब्राह्मण्यं प्रत्यसाधारणकारणत्वासंभवात् । तस्माद्योनेरवदातत्वं साङ्कर्य्यप्रयोजकावैधसंसर्गशून्यत्वे सति वैधसम्बन्धवत्त्वमेव ।

## योनेर्जातिपरत्वसाधनम्

यदप्युक्तम् "योनिरत्र न जातिः, किन्तु विशुद्धसन्तानजननविशिष्टभूमिः सती माता यत्रेदमुक्तं

'मातुरग्रेऽधिजननमिति (म० २।१६९)

तदपि मन्दम्; ब्राह्मणयोनिं क्षत्रिययोनिं वेत्यादौ श्वयोनिं सूकरयोनिं'मित्यादिष्विव योनिशब्दस्य जातिपरत्वनिश्चयात् ।

जात्या व्यवहारस्तुल्यत्वेऽपि गुणकर्मवैषम्याद् वादिभेदप्रतिपादनमत्रिस्मृत्यादिषु तु युक्तमेव । देवदत्तस्य मनुष्यस्यापि शौर्यादिगुणैः सिंहत्वव्यपदेशवद् देवादिगुणैर्देवत्वादिव्यपदेशस्य युक्तत्वात् ।

'सन्ध्या स्नानं जपो होमो देवतानित्यपूजनम् ।
आतिथ्यं वैश्वदेवञ्च देवब्राह्मण उच्यते ॥,

एवमेव च--

'शाके पत्रे च मूले च वनवासे सदा रतः।
निरतोऽहरहो भक्तौ स विप्रो मुनिरुच्यते ॥'
अत्रापि मुनिगुणत्वेन गुणकृतमेव मुनित्वमुक्तम।
'वेदान्तं पठते नित्यं सर्वसंगं परित्यजेत्।
सांख्ययोगविचारस्थः स विप्रो द्विज उच्यते ॥'

अत्र विप्रस्य विप्रगुणयुक्तत्वेन मुख्यं विप्रत्वमुक्तम्, सिंहगुणयुक्तत्वेन सिंहस्य मुख्यसिंहत्ववत्।

'धैर्य्य-शौर्य-बलोपेतो राष्ट्ररक्षासमुद्यतः।
संग्रामे विजयी यः स्यात् स विप्रः क्षत्र उच्यते ॥
कृषिकर्मरतो यश्च गवां च प्रतिपालकः।
वाणिज्यव्यवसायश्च स विप्रो वैश्य उच्यते ॥
कैङ्कर्य्यवृत्तिमान् यश्च विक्रेता क्षीरसर्पिषाम्।
दम्भपाखण्डसंयुक्तः स विप्रः शूद्र उच्यते ॥
चोरश्च तस्करश्चैव पिशुनो दुःखदस्तथा।
मत्स्यमांसे सदा लुब्धो विप्रो निषाद उच्यते ॥
ब्रह्मतत्त्वं न जानाति ब्रह्मसूत्रेण गर्वितः।
तेनैव च स पापेन विप्रः पशुरुदाहृतः ॥
दुराचाररतो नित्यं विरुद्धं बहुभाषते।
धूर्त्तः क्रूरः शठश्चैव स विप्रो म्लेच्छ उच्यते ॥
क्रियाहीनश्च मूर्खश्च सर्वधर्मविवर्जितः।
निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उच्यते ॥'
(अत्रिस्मृतिः २७३...३८३)

कर्मणा वर्णव्यवस्थायां सत्यां कथं क्षत्र-वैश्य-शूद्र-निषादादि गुणवतां विप्रत्वसंभवः? तस्माज्जन्मनैव वर्णव्यवस्था प्रतिपत्तव्या। गुणैश्च तत्र गौणानि क्षत्रवैश्यत्वादीन्यपि संगच्छन्ते। अतएव जात्यैव ब्राह्मणत्वादिव्यवहार उत्तमगुणैरुत्कर्षोऽधमगुणैश्चापकर्षश्च संगच्छते।

ब्राह्मणेन ब्राह्मण्यामुत्पन्नः प्रागुपनयनात् जात इत्यभिधीयते। उपनीत

मात्रो व्रतानुचारी वेदानां किञ्चिदधीत्य ब्राह्मणः। एकां शाखामधीत्य श्रोत्रियः। अङ्गाध्यायी अनूचानः। कल्पाध्यायी ऋषिकल्पः। सूत्रप्रवचनाध्यायी भ्रूणः। चतुर्वेदाध्ययनाद् ऋषिः। अत ऊर्ध्वं भूदेवः। (बौधायनगृह्यसूत्रे प्रथमप्रश्ने अ० १ सू० १८) इत्यत्रापि ब्राह्मणमातापितृजन्मस्यैवोक्ताः संज्ञा भवन्ति, नतु यस्य कस्यापि। संस्कारादिमात्रैः शुभगुणकर्मणामुत्कर्षाधायकत्वेऽपि न त्रैवर्ण्यव्यवस्था, अन्यथा विपरीतगुणवतां ब्राह्मणत्ववाचोयुक्तेरसम्भवापातात्।

शूद्रोऽपि शीलसम्पन्नो ब्राह्मणादधिको भवेत्।
ब्राह्मणो विगताचारः शूद्राद्धीनतरो भवेत्॥' (भविष्ये १।४४।३१)

धर्महीनो ब्राह्मणः शूद्रादपि हीनः, शीलसम्पन्नः शूद्रो ब्राह्मणादप्युत्तम इत्युक्तिरपि शीलाचारप्रशंसापरैव, नतु जन्मजातिप्रत्याख्यानपरा। व्यावहारिकी जातिस्तु जन्ममूलिकैव प्रचलति। अतएव निकृष्टगुणकर्मयुतोऽपि स्वपुत्रो न केनचित्त्यज्यते, न वा दायानर्हो भवति। एवमेवोत्तमगुणकर्मविशिष्टोऽपि नान्यपुत्रः स्वपुत्रत्वेन दायभागित्वेन वाङ्गीक्रियते। विवाहादिसम्बन्धोऽपि जन्ममूलकजातिमालम्ब्यैव प्रवर्त्तते।

विवाहादिसम्बन्धे सुधारकाः स्वातन्त्र्येण कथञ्चिद् व्यवहरन्तोऽपि दायाभागसम्बन्धे तु जन्ममूलिकामेव जातिं व्यवहरन्ति।

यदुक्तम् अस्मिन् समये शिक्षायास्तद्व्यवसायादिकर्मणश्च समानत्वेन जातिकृतवर्णविभागस्थितिरतिदुर्लभा, वर्णविभागप्रयोजकशिक्षाकर्मभेदविलोपात्। साम्प्रत विश्वविद्यालयेषु च ब्राह्मणत्वादिजातिभिः पृथग्व्यवह्रियमाणानामपि छात्राणां पाश्चात्यभाषाग्रन्थादिकमधीयानानां समानवेषभूषादिमतां भोजनालयेष्वविशेषं भुञ्जानानां चलचित्रमन्दिरेषु तत्तदश्लीलदर्शनश्रवणतत्पराणामुच्छृङ्खलवैदेशिकोपन्यासादिकं पठतां पाश्चात्यभाषारीतिनीतिभोजनादिव्यवहारेऽच्छबुद्धिं धारयमाणानां परस्परं मैत्रीभावनया विवाहादिग्रन्थ्या च युज्यमानानां मध्ये वर्णविभागो नैव दृश्यते।

'अयञ्च युगधर्मो हि वर्त्तते कस्य दूषणम्।'

इति रीत्या भगवदुपवनसदृशेऽस्मिन् भारते वर्षे भगवत्प्रेरणया यद्भवति तत्प्रतिरोद्धुं कः शक्नुयादिति विचार्य शिष्टा मौना एव भवन्ती'ति तदपि मन्दम्, विप्रतिषिद्धत्वात्।

परमेश्वरे तदीये शास्त्रे युगादिव्यवस्थासु ये न श्रद्दधते त एव जन्ममूलिकां वर्णव्यवस्थामपलपन्ति । ते च नहि प्रारब्धदैवादिवादाश्रयेण भगवत्कृतं सर्वमिति मत्वोदासते । आस्तिका अपि धर्मग्लान्यधर्माभ्युत्थाननिवृत्तये श्रौतस्मार्त्तलक्षणस्य धर्मस्य संस्थापनाय च सर्वदा प्रयतन्त एव । लौकिकदृष्ट्या तद्वैफल्येऽपि अदृष्टपुण्यफलप्राप्त्यनपायात् ।

धर्मकार्य्ये यतन् शक्त्या यदि नाप्नोति तत्फलम् ।
प्राप्तो भवति तत्पुण्यमत्र मे नास्ति संशयः ॥'

इति महाभारते भगवदुक्तेः ।

तमिस्रायां प्रकाशसम्पादनवत् शीतबाहुल्ये चौष्ण्यसम्पादनवच्चास्मिन्नेवाधर्मबहुले काले वा धर्मसंस्थापनमुचितम् ।

'स्थापयध्वमिमं मार्गं प्रयत्नेनापि भो द्विजाः ।
स्थापिते वैदिके मार्गे सकलं सुस्थिरं भवेत् ॥
यश्च स्थापयितुं शक्तो नैव कुर्य्याद्विमोहितः ।
तस्य हन्ता न पापीयानिति वेदान्तनिर्णयः ॥
यः स्थापयितुमुद्युक्तः श्रद्धयैवाक्षमोऽपि सन् ।
सर्वपापविनिर्मुक्तः सम्यग्ज्ञानमवाप्नुयात् ॥"

इति व्यासतात्पर्य्यनिर्णयोद्धृतस्कान्दवचनेभ्यश्च प्रतीतेः ।

किञ्च नहि शिक्षा कर्म च वर्णभेदप्रयोजकम्, जन्मभेदस्यैव तत्प्रयोजकत्वात् । अध्ययनाध्यपनादिपराणामपि क्षत्रियादीनां ब्राह्मणत्वाभावात्, युद्धादिपराणामपि द्रोणादीनां क्षत्रियत्वाभावाच्च ।

यदुक्तम् —"स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः' इत्यंशस्य साङ्कर्य्यं न दोषाय किन्तु गुणायैवेति मत्वैव समाधानमकृत्वा भगवता मौनमास्थित इति"। तत्तुच्छम् तथाकल्पने बीजाभावात्, 'तस्माच्छास्त्रं प्रमाणान्ते कार्य्याकार्य्यव्यवस्थितौ' इति गीताविरोधाच्च, 'अशोच्यानन्वशोचस्त्वम्' इति तेन कृतसमाधानत्वाच्च ।

तथाहि-यदि त्वं स्वाधिकारानुरूपं युद्धरूपं क्षात्रधर्मं त्यक्त्वा बन्धुबान्धवपुत्रमित्रादिविनाशवियोगादिभिया स्वधर्मविरोधिभैक्ष्यभोजनादौ प्रवर्त्स्यसे तदा तव श्रेष्ठस्य तथाचरणात् कुलस्त्रियोऽपि स्वधर्मं त्यक्त्वा

वैधव्यमन्तराप्यन्यसंसर्गेण संकरानुत्पादयिष्यन्ति । 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन' इति लोकव्यवहारदर्शनात् । यदि तु त्वं प्राणपणेन रागादिराहित्येन स्वधर्मपालने दृढो भविष्यसि तदा कुलस्त्रियो विधवा भूत्वा सहगामिन्यो भविष्यन्ति । ब्रह्मचर्य्यव्रतपालनेन तपस्विन्यो वा भविष्यन्ति, न दुराचारिण्यः । तस्माद्धर्मग्लान्यधर्माभ्युत्थाननिवृत्तिपूर्वकधर्मसंस्थापनकामेन धर्मानुष्ठानतत्परेण भाव्यम्, न स्वधर्मत्यागोन्मुखेन भाव्यम्, महाभारतपर्य्यालोचनयेदमेव सिद्ध्यति । युद्धान्ते बह्व्यश्च व्यासप्रसादेन स्वपतिसमागमेन कृतार्थास्तद्गतिं गताः । न काश्चिदपि विधवा भूता दुराचारिण्यो वर्णसंकरमुत्पादितवत्यः ।

मेवाड़प्रान्तेऽपि यासां पतयो देवरा भ्रातरः पितरः श्वसुराश्च रणप्राङ्गणे वीरगतिं गतास्ता अपि पाटलपुष्पसदृशानि स्वशरीराण्यग्निज्वालाजटिलासु चितासु दाहयित्वा पूर्वमेव स्वर्गं गत्वा तानुपतस्थिरे । न तासु काचिदपि स्वैरिणी, न वा साङ्कर्य्यस्रष्ट्री जाता । तत्कस्य हेतोः सम्बन्धिपुरुषाणां दृढधर्मनिष्ठत्वात् । यासां तु पतयो भ्रातरः पितरः श्वसुराश्चोच्छृङ्खला दुराचारास्तासु सधवाश्च कुमार्य्योऽपि दुराचारिण्यो दृश्यन्ते । 'यद्यदाचरति श्रेष्ठः' इति न्यायादेव तथात्वमिति मन्तव्यम् ।

यदुक्तम् विधवाविवाहः साङ्कर्य्यञ्च युगधर्म इति तत्तुच्छम्, धर्मस्य वेदचोदनालक्षणत्वेन तद्विरुद्धस्य धर्मत्वासंभवात् ।

यदुक्तम्—"साम्यवादानुसारेण विराटपुरुषस्य मुखादिरूपेण ब्राह्मणाद्यवस्थानकथनेन यद्ब्राह्मण्डे तत्पिण्डे इति न्यायेन समष्टिविराडुदर इव व्यष्टिदेहेऽपि विद्यावलसंग्रहश्रमशक्तयः सम्पादनीयाः । यथामुखबाहूरुपादाख्यान्यङ्गान्यविच्छिन्नान्येव भवन्ति तथा तदाश्रिता विद्यावलादिशक्तयोऽव्यविच्छिन्ना एव फलाय कल्पन्ते । ज्ञानेन्द्रियाश्रये मुखे शिरसि सवले सत्येव वलपराक्रमाद्याश्रया बाहूदरपादाः साफल्यमधिगच्छन्ति । ब्रह्मचर्य्यशिक्षणचित्तैकाग्र्यादिभिः शिरसः प्रावल्यम्, व्यायामपुष्टान्नभक्षणादिभिर्वक्षसो बाह्वोश्च प्राबल्यम्, उदरस्य बाह्यान्नादिसंग्राहकत्वं, रसनिर्मातृत्वं, यथायोग्यं तत्तदवयवेषु रसप्रापकत्वञ्च, पादयोश्चाभीष्टदेशप्रापकत्वं, श्रमसाध्यकार्य्यनिर्वाहकत्वञ्च सुव्यक्तमेव । स्वाङ्गेषु स्थितानां विज्ञानादिशक्तीनां विकासाय सर्वैरपि यतनीयमेव ।

यस्य शिरसि मुखे च ब्राह्मणत्वप्रयोजकप्रकृष्टविद्याशान्तिसंयमादिशक्तिः, बाह्वोर्वक्षसि च क्षत्रियत्वसम्पादकप्रभूतबलपराक्रमादिशक्तिः, उदरे ऊर्वोश्च वैश्यत्वप्रयोजकवित्तार्जनसंग्रहणवितरणशक्तिः, पादयोश्च शूद्रत्वप्रयोजकसेवाश्रमादिशक्तिश्च विकसिता भवेत्तस्यैव पूर्णमानवत्वम्। स एव पुरुषार्थचतुष्टयाधिकारी। अतस्तासां शक्तीनां समुच्चय एवाभीप्सितार्थसाधकस्तास्वन्यतमहीनो नाशेषमभ्युदयमवाप्तुं शक्नोति मानवः। यथा बलधनादिमन्तरा केवलया विद्यया स्वपररक्षणदेशस्वातन्त्र्यस्वधर्मरक्षणशत्रुपराजयादिकं कर्त्तुं न पारयति। ततो विद्यया सार्द्धं बलधनादीनामपि भवत्यपेक्षा। विद्याविहीने बलधनादिभिरपि केवलैः कार्य्यं न चलति। परिश्रमहीना यन्त्रादिकलाप्रावीण्यरहिताश्च विद्याबलधनवन्तोऽपि नितरां सीदन्ति। निरायतयो धनधान्यादिकमपि प्राप्तुं न शक्नुवन्ति। तस्माच्चातुर्वर्ण्यस्य मानवस्वभावेषु निहितत्वात् सर्वोऽपि मानवश्चतुर्वर्ण एव। विद्या-बल-धन-श्रमादिलक्षणाश्चतस्रः शक्तीरवाप्यैव सर्वाभ्युदयवान् पूर्णो भवति। अतः सर्वोऽपि ब्राह्मणादिगुणान् स्वस्मिन् सम्पाद्य ब्राह्मणः क्षत्रियो वैश्यो शूद्रश्च भवेत्।

यतो विराटपुरुषस्य मुखादयोऽवयवास्तच्छक्तयश्चाविच्छिन्ना एव। व्यष्टिपुरुषेऽपि मुखादयो विच्छिन्ना एव। ततस्तेष्वविच्छिन्नाङ्गेषु वर्तमानानां विद्यादिशक्तीनां समुच्चय एव युज्यते।

श्रीकृष्णस्य चरित्रे सर्वेऽपि गुणाः लभ्यन्ते। तत्र सर्वोपनिषत्सारभूतगीतोपदेष्टृत्वेन ब्राह्मण्यम्, बलशौर्य्यादिमत्त्वेन क्षत्रियत्वम्, गोरक्षणगोवधनक्षेत्रसमृद्धिकरत्वेन गोपालसंज्ञाधारकत्वेन च वैश्यत्वम्, विजयहयतनुमार्जनरथसञ्चालनादिश्रमकर्तृत्वेन, युधिष्ठिरराजसूये समागतमहापुरुषपादप्रक्षालनादिकर्तृत्वेन च शूद्रत्वं प्रकटीकृतम्। सति चैवमंशिभूते पितरि रूपाकृतिस्वभावकर्मधनादिकं यद्यद् दृष्टं तत्तदंशभूतेषु पुत्रेष्वपि समानतयावगम्यतेऽनुभूयते च। तेन ब्राह्मणोऽस्य मुखमासीत् युक्तित एवायमर्थः। अन्यथा परमात्मनो मनुष्याणामिव मुखाद्यवयवाभावात् कथं मुखादिभ्यो विज्ञानविरुद्धा ब्राह्मणाद्युत्पत्तयो भवेयुः?

'अपाणि पादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः'।

इति श्रुतिभिस्तस्य निराकारत्वप्रतिपादनात्। परमेश्वरमनभ्युपगच्छद्भिः सांख्यमीमांसकादिभिः कथं परमेश्वरमुखादिभ्यो ब्राह्मणाद्युत्पत्तिरूपोऽर्थः स्वीकार्य्यः स्यात् ?" इति, तदपि न, सृष्टिवर्णनपरस्य मन्त्रस्य ब्राह्मणादिगुणसंग्रहविधानपरत्वासंभवात्। 'पद्भ्यां शूद्रोऽजायत' 'चन्द्रमा मनसो जातः' इति पौर्वापर्य्यानुरोधेन सृष्टिप्रतिपादनपरत्वमस्य मन्त्रस्य स्पष्टमवगम्यते।

नचैवत्र ब्राह्मणादिगुणविधानं संभवति, परस्परविरुद्धत्वात्। ब्राह्मणस्य त्यागो मुख्यो धर्मः, वैश्यस्य च संग्रहो धर्मः, ब्राह्मणस्य सर्वराहित्यम्, क्षत्रियस्य सर्वसाहित्यम्, ब्राह्मणस्य तपो धर्मः, शूद्रस्य सेवैव धर्मो न तपः, तस्य तपोनिषेधात्, क्षत्रियस्य राजसूयाधिकारो, न ब्राह्मणादीनाम्, वैश्यस्तोमे नान्येषाम्, वाजपेये ब्राह्मणक्षत्रिययोर्नान्ययोः। एवमेव रथकारनिषादस्थपत्यादिकर्तृकेषु यागेषु तयोरेवाधिकारो नान्येषाम्। 'ब्राह्मणो यजेत्' 'राजा राजसूयेन' 'वैश्यो वैश्यस्तोमेन यजेत, निषादस्थपतिं याजयेत्' 'वर्षासु रथकारोऽग्नीनादधीत'।

'शमेन सिद्धिं मुनयो न भूभृतः'

जपस्तपस्तीर्थयात्रा प्रव्रज्यामन्त्रसाधनम्।
देवताराधनञ्चैव स्त्रीशूद्रपतनानि षट्।

इत्यादि वचनेभ्यः। यथाकथञ्चिदुत्तमगुणग्रहणे तु सर्वेभ्य एव संभवति। अतएव दत्तात्रेयेणावधूतेन पिङ्गलाजगरादिभ्योपि गुणाः संगृहीता एव। नैतावता पिङ्गलाजगरादिबुभूषा युज्यते। काकचेष्टा बकध्यानं श्वानं निद्रा तथैव च इति काकादिगुणा अनुकरणीया भवन्ति। न तावताऽपि सर्वः। श्वादिः काकादिर्वा बुभूषति। किञ्च न काकादिगुणा एव काकादयः, धर्मधर्मिभेदेन भेदात्। तथैव न ब्राह्मणादिगुणा एव ब्राह्मणादयः। तथा च संग्राह्यब्राह्मणादिगुणसंग्रहेणापि न सवश्चातुर्वर्ण्यैः संभवति। यथा मुखं न बाहू, बाहू वा न मुखम् पादौ नोदरम् तच्च न पादौ, तेषां स्वरूपकार्य्यगुणादिभेदात्। प्राण्यङ्गत्वेन तुल्यत्वेऽपि कार्य्यादिभेदाद्यथा भेदस्तथैव समाजस्याङ्गत्वेन ब्राह्मणादीनां तुल्यत्वेऽपि स्वरूपकार्य्यादिभेदाद् भेद एव युक्तः। किञ्च सर्वस्य सर्ववर्णत्वे वर्णव्यवस्था स्वधर्म परधर्म व्यवस्था च न स्यात्। न चेष्टापत्तिः, स्वधर्मेत्या-

गपरधर्मसेवयोरनिष्टहेतुत्वस्मरणात्। 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इति गीतोक्तेः।

किञ्च सर्वो मननध्यानपाठादिभिः शमं विद्याञ्चाभ्यस्यति। न च तावतापि सर्वो ब्राह्मणत्वेन व्यपदिश्यन्ते। सर्वोऽपि शत्रुविघाताय, श्वकाकादिविद्रावणाय वा दण्डलोष्टादिभिः प्रयतमानोऽपि न क्षत्रियो भवति। जीवनोपयोगिवस्त्रान्नादिसंग्रहणे जीरकलवणहरिद्रादिक्रयणायापणे गच्छति। सर्वोऽपि स्वार्थे श्राम्यति, स्वगृहमार्जनादौ प्रवर्त्तते। सर्वोऽपि स्वगुह्यक्षालनादौ मलमूत्राद्यपाकरणे प्रवर्त्तते। तावताऽपि न सर्वो वैश्यः शूद्रोऽन्त्यजो वा भवति, तथात्वेऽव्यवस्थाऽऽपातात्। श्रीकृष्णोऽपि न ब्राह्मणो, नवा वैश्यादिः, किन्तु क्षत्रिय एवासीत्। भीष्मोऽपि शमादिसम्पन्नोऽपि सर्वधर्मब्रह्मादिमर्मज्ञोऽपि न ब्राह्मणः, किन्तु क्षत्रिय एवासीत्। परशुरामद्रोणादयः क्षत्रियधर्माणोऽपि ब्राह्मणा व्यपदिश्यन्ते स्मेत्यन्यत्र प्रपञ्चितमेव।

किञ्च यथा नैकाङ्गस्य पूर्णत्वमन्यनिरपेक्षत्वञ्च संभवत्यङ्गत्वव्याकोपात्तथैव विराडङ्गभूतानां ब्राह्मणादीनां पूर्णत्वमन्यनिरपेक्षत्वं न सम्भवति, तथात्वेऽङ्गत्वानुपपत्तेः। यथाङ्गानि परस्परसापेक्षाण्येव प्रभवन्ति तथैव ब्राह्मणादयोऽपि परस्परसापेक्षा एव प्रभवन्ति। तदर्थमेव वर्णव्यवस्था अन्यथाऽव्यवस्थैव स्यात्। अत एव नहि गीतावक्तृत्वेन कृष्णस्य ब्राह्मण्यम्, न वा गोपालकत्वेन वैश्यत्वम्, न वा ब्राह्मणपादप्रक्षालनकर्त्तृत्वेन शूद्रत्वम् किन्तु जन्मना क्षत्रियत्वम् तदनुरोधेन युद्धप्रजापालनादिधर्मनिष्ठत्वेन मुख्यं क्षत्रियत्वमेव।

यत्तु "मुखादिभ्यो ब्राह्मणाद्युत्पत्तिर्विज्ञानविरुद्धे"ति, तत्तुच्छम्, विकल्पासहत्वात्। तथाहि-किं निराकारत्वेन परेशस्य मुखाद्यवयवाभावात्तदनुपपत्तिः किं वा मीमांसकादिनये परेशाभावात्तदनुपपत्तिरिति। नाद्यः, साकारत्वस्यापि श्रुतत्वाविशेषात्। 'इदं विष्णुर्विचक्रमे त्रेधास्य निदधे पदम्।' (ऋ० सं०) 'बाहुभ्यामुतते नमः' रुद्राध्याये 'शितिकण्ठाः रुद्रा' 'उमासहायं परमेश्वरम्' कैवल्योपनिषदि इत्यादिश्रुतिषु परमेशस्य साकारत्वस्य स्पष्टमुक्तत्वात्। निराकारत्वपक्षेऽपि-अश्रोत्रस्य श्रोतृत्वेना-

चक्षुषो दृष्टत्वेनापाणेर्ग्रहीतृत्वेनापादस्य गन्तृत्वेन श्रोत्रादिशक्त्योऽकामेनाप्यभ्युपेयाः। कार्य्यानुगुणशक्तिमन्तरा कार्य्यानुपपत्तेः। नहि मृदि घटशक्तेरभावे ततो घटनिष्पत्तिः संभवति, जलादपि तदुत्पत्तिप्रसङ्गात्। शक्तीनामुपगमे तु मुखशक्तेर्ब्राह्मणस्य बाहूशक्तः क्षत्रियस्योर्वादिशक्तेः वैश्यादेरुत्पत्त्यभ्युपगमे दोषाभावात्।

यत्तु 'ब्राह्मणस्य मुखादुत्पत्तौ मुखाद्याकारता प्रसङ्ग' इति, तत्तुच्छम्, योन्युत्पन्नानां तदाकारापत्तेरपि समानत्वात्। नान्त्यः, सांख्यादिरीत्या ब्रह्मणोऽप्यसत्त्वेन वेदान्तवेद्यतत्त्वापलापप्रसङ्गापातात्। किञ्च जीवानां कर्मसंस्काराद्यायत्तत्वान्न सर्वशक्तित्वसंभवः। यथासंभवं जीवनोपयोगि गुणसम्पादनन्तु जन्मना वर्णव्यवस्थायामपि संभवत्येव। यथासंभवबुद्धिबलसंग्रहश्रमसम्पादने सर्वप्रवृत्तिदर्शनात्।

यदुक्तम् "मानवोचितसर्वाभिलषिततत्तच्छक्तिसम्पादनेऽमुकव्यक्तिविशेषस्यैवाधिकार इत्येवं प्रतिरोधो न युक्तः,

'नायोग्यः पुरुषः कश्चित् प्रयोक्तैव सुदुर्लभः' इत्युक्तेः।

मानवता विकासे क्रियमाणः प्रतिबन्धः पापायैव प्रभवति, न पुण्याय, अर्थित्वस्य सर्वत्र तुल्यत्वात्" इति, तदपि तुच्छम्, भावानवबोधात्। 'अयोग्यः पुरुषो नास्ति' इत्यनेन न सर्वस्य सर्वशक्तिमत्त्वं बोध्यते, पुरुषे गर्भधारणस्तन्यदत्वादीनां प्रयत्नशतैरपि सम्पादयितुमशक्यत्वात्। तिले विद्यमानमेव तैलं कारकव्यापारेण व्यज्यते। न सिकतासु व्यापारशतैरपि तैलं व्यज्यते, तदसत्त्वादेव। परमेश्वरस्यैव सर्वशक्तिमत्त्वं न जीवस्य, तद्भेदविलोपापत्तेः। न च परमार्थतस्तदिष्यत एवेति वाच्यम्, व्यवहारे तदनिष्टापत्तेः। अतएव न सर्वः सर्वत्रायोग्यः, कस्यचित् क्वचिद्योग्यताया अवश्यंभावात्। कः कुत्र योग्यः इति ज्ञात्वा यो यथायोग्यं युनक्ति, स, प्रयोक्तैव दुर्लभः। यथा सर्वाणि मूलानि (तृणवीरुदादीनि) कस्यचिद्रोगस्य निवारकाण्यौषधानि भवन्ति, परन्तु नहि सर्वं मूलं सर्वस्य रोगस्यौषधं संभवति। तत एवात्रापि किं कथं कस्यौषधमिति ज्ञात्वा यः प्रयुनक्ति स दुर्लभः। सर्वाणि चाक्षराणि मन्त्रत्वं गच्छन्ति। किन्तु किमक्षरं कथं केन कैर्वा संश्लिष्टं केनविश्लिष्टं कस्य साध्यस्य साधकं भवतीति ज्ञाता प्रयोक्ता च दुर्लभो भवति।

नात्र सर्वेषां पुरुषाणां सर्वेषां मूलानां सर्वेषामप्यक्षराणां सर्वशक्तत्वमुक्तम्, किन्तु किञ्चित् क्वचिच्छक्तमित्येव। अत्र सुप्रयोक्तर्यपि नहि सर्वाणि मूलानि अक्षराणि पुरुषा वा सर्वत्र प्रयुज्यन्ते। तदुक्तम्—

अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम्।
अयोग्यः पुरुषो नास्ति प्रयोक्ता तत्र दुर्लभः॥'
इति शुक्रनीतिः।
अतएवायोग्ययोजने वचनीयतोक्ता।
'कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रतिबध्यते।
न स विरौति न चापि स शोभते भवति योजयितुर्वचनीयता॥'
(पञ्चतन्त्रे)

यदप्युक्तम्—'अर्थित्वाविशेषात् सर्वः सर्वत्राधिक्रियते' इति।' तदपि तुच्छम्, अर्थिनोऽपि समर्थस्यैवाधिकारात्। अत एवार्थी विद्वान् समर्थोऽधिक्रियते' इत्युक्तम्। अर्थिनोऽपि शूद्रस्य यागे ब्राह्मणस्य च राजसूयेऽनधिकारः। तत्रैव 'सामर्थ्यं द्वेधा। लौकिकं शास्त्रीयञ्च। शूद्रे यज्ञनिर्वर्त्तकलौकिकसामर्थ्यस्य सत्त्वेऽपि निषेधबलाच्छास्त्रीयसामर्थ्याभावेन तदसिद्धेः।

यदपि 'वर्णविभाग एव विषमताया उत्तमाधममध्यमभेदकल्पनाया बीजम्। पूर्वमपि वसिष्ठविश्वामित्रपरशुरामसहस्रार्जुनादिषु तन्मूलकः कलहो दृष्टः। इदानीमपि द्रविडकङ्गण-मराठा-पेशवादिषु जातिभेदमूलकः कलहो बद्धमूलो दृश्यते। जातिसम्प्रदायादिभेदादेव पूर्वमपि साम्प्रतमपि दुर्दशाग्रस्ता हिन्दुजातिः। अन्येभ्यो विच्छिन्ना ब्राह्मणा वयं तु भिक्षवः शास्त्रयजमानैकजीवनाः, शौर्य्यबलपराक्रमादिहीना-राष्ट्रस्वातन्त्र्यरक्षणादिकर्त्तुमक्षमाः। तत्र नास्त्यस्माकमधिकारः। भवतु यः कोऽपि महाराजः स्वदेशीयो विदेशीयो वा, वयन्तु राष्ट्राध्यक्षं जगदीश्वरतुल्यं मत्वा तत्स्तुतिभिर्मनोरथान् पूरयामः। तात्कालिका राजानः क्षत्रियाः बलपराक्रमशालिनोऽपि विद्याविचारहीनाः, स्वसंघटनशून्याः, भोगविलासप्रियाः, सुन्दरीकुमार्य्यादि कृते मिथः कलहायमानाः, युद्धेन शक्तिक्षयं कुर्वाणाः स्वजातिमप्यधःपातयामासुः। तथैव वैश्याः कृषिवाणिज्यादिपराः, वयं वराकाः निर्बला राष्ट्ररक्षणानधिकारिणः। शूद्रा द्विजेभ्यो विच्छिन्ना दूरतोऽपसार्य्यमाणाः किंकराः किं कर्त्तुं शक्नुमः इति स्वराष्ट्ररक्षापराङ्मुखा जाताः, त्रिविधाः

साधवः, संन्यासिनो, लेखकाश्च व्यक्तभगवद्रूपराष्ट्रस्वातन्त्र्यगौरवगीतलेखनविमुखा अव्यक्तपरमेश्वरस्यैव चरित्रगीतं वर्ण्यमानाः तस्मिन्नेकस्मिन्नपि विविधनामविग्रहादिप्रयुक्तभेदान् कुर्वाणाः परस्परकलहैकबीजं खण्डनमण्डनलक्षणं सम्प्रदायभेदं भक्तसमुदायभेदञ्च विदधुः । तेषु केचित् सामर्थ्यशालिनोऽपि विविधचमत्कारप्रदर्शनतत्परा अपि प्रियराष्ट्रस्य संघटना स्वातन्त्र्यादिस्थापने सामर्थ्यशून्या बभूवुः ।

समर्थरामदासस्वामी तु तेष्वपवादभूत एव, येन क्षत्रपतिशिवाजी संघटनाय प्रबोधितः । क्षत्रियसमाजे च महाराणा प्रतापः राष्ट्रभक्त आसीत् । संघटनसहायाभावात् सोऽपि विशिष्टं कार्य्यं कर्त्तुं न प्राभवत् । तत एव पवित्रेऽस्मिन्देशे दशकोट्यधिका म्लेच्छाः प्रादुरभवन् । हिन्दुजातौ नीचत्वेन विभाव्यमाना विशिष्टाधिकारेभ्यो बहिष्क्रियमाणाः सर्वथोपेक्ष्यमाणा मुहम्मदेश्वरादि शरणत्वासादनमन्तराऽन्यत् किं कुर्य्युः । ते च साम्प्रतमपि वैरायमाणा हिन्दुजातेः सुखमयीं निद्रामपि प्रणाशयन्ति । तैरेव पूर्वं सधर्मिभिः साम्प्रतं विधर्मिभिः हिन्दूस्थानं पावनमखण्डं भारतपाकिस्तानादिरूपेण खण्डितमेव । यत्रान्यधर्मावलम्बिभिरपि बन्धुभावमाविष्कृत्य परमोदार्य्यपुरस्सरं अच्छाधिकारादिप्रदानेन परकीया अपि स्वकीया विधीयन्ते, तत्र परमसंकोचधृणाशीलैः कूपमण्डूकायमानैः कतिभिश्च स्वार्थदुरभिमानमौढ्यादिदोषेण स्वकीया अपि परकीया विधीयन्ते, किमतः परं सखेदमाश्चर्यम्, इति, तदपि निःसारम् ।

यतो जन्मना वर्णाश्रमव्यवस्थायामपि–'शस्त्रं द्विजातिभिर्ग्राह्यं यत्र धर्मोऽवरुद्ध्यते' इत्येवमादि रीत्या राष्ट्ररक्षणाद्यर्थं ब्राह्मणादीनामपि शस्त्रग्रहणमुक्तमेव । परशुरामद्रोणकृपाश्वत्थामादिब्राह्मणानामपारबलवीर्य्यादिकं स्मर्य्यते च ।

येषां किल—

'अग्रतश्चतुरो वेदान् पृष्ठतः सशरं धनुः ।
इदं ब्राह्ममिदं क्षात्रं शापादपि शरादपि ॥'

इति प्रसिद्धमेव ।

किञ्च सर्वदैव ब्राह्मणा एव शस्त्रादिविद्योपदेशका आचार्य्या आसन् ।

किं बहुना; शूद्राणामप्येकलव्यादीनां शस्त्रास्त्रदक्षता स्मर्यते। महाराणाप्रतापस्य सहकारिणो भिल्लकिरातादयोऽपि युद्धविद्या कुशला आसन्।

एतेन वैश्यानामपि शस्त्रास्त्रादिनैपुण्यमनुमातुं शक्यम्।

किञ्च राष्ट्रस्य कार्यं न केवलेन युद्धनैपुण्येनैव चलति। विद्याविवेककृषिवाणिज्यगोपालनादिहेतुकैर्धनसंग्रहैः शिल्पश्रमादिहेतुकैर्शस्त्राजनादिमन्तरा विजयलाभासंभवात्। सर्वत्र हि बलाधिकारिणामिव विद्याबलशिल्पाधिकारिणामप्यपेक्षाया अनिवार्यत्वात्। कर्मणा वर्णव्यवस्थापक्षे कृत्रिमो विभागः। जन्मना वर्णव्यवस्थायान्तु स्वाभाविकः सः। अपि च यथासामान्येनानेकविद्याकुशलैरपि कुत्रचिद्विद्यायां वैशिष्ट्यं प्रतिपादयिष्यते तथैव जन्महेतुकवर्णव्यवस्थायां तु तत्तद्विद्यासु कौशलं सम्पाद्यापि जन्मना नियतासु विद्यासु कौशलातिशयः संपाद्यते, स्वभावनियतकर्मत्यागे दोषस्मरणात्। पारम्पर्येणकौशलमनायासेन सम्पद्यते, मत्स्यानां प्लवनकौशलमिव, पक्षिणामुड्डयनकौशलमिव च। दृश्यन्ते च नाविकानां बाला नौपरिवहणकुशलाः, शिल्पिनां तक्ष्णां शिल्पतक्षणादिक्रियाकौशलसम्पन्नाः। कलहस्तु सर्वथाऽपि मौर्ख्यमूलको, न वर्णव्यवस्थामूलकः। रागद्वेषमौर्ख्यादिभिः कृत्रिमव्यवस्थायामपि कलहो न दण्डवारितः। वयं दीनाः न किमपि कर्तुं प्रभवाम इति दैन्यन्तु वैदिकसभ्यतायां दूरोत्सारितमेव। प्रतिदिनं 'शतमदीनाः स्याम शरदः' इति त्रिसन्ध्यमदैन्यमेव प्रार्थ्यते। क्षत्रियस्यार्जुनस्य सुदृढं धर्मनिविष्टं चेत इन्द्रलोकललामभूतयोर्वश्या अपि नापहर्त्तुं प्रभूयते स्म। नरेश्वरस्यादरणीयत्वं तु 'नराणां च नराधिपम्।' 'महती देवता ह्येषा नररूपेण तिष्ठती'त्यादिभिरार्षैर्वचनैरनुमोदितमेव। तावताऽपि न धर्मराष्ट्रघातकानां नृपाणामादरणीयता सिद्ध्यति, महाभारतादौ तादृशस्य नृपस्य निग्रहार्हत्वोक्तेः। रामायणमहाभारतादिलेखकैर्महर्षिभिरपि धर्मब्रह्मनिरूपणप्रसङ्गेनैव शौर्य्य-वीर्य्यवर्धनानि नीतिशिक्षणप्रचुराणि चरित्राण्यपि बहूनि वर्णितान्येव। पद्मादिपुराणेषु, ज्ञानार्णवादितन्त्रागमेषु, मन्वादिधर्मशास्त्रेषु, शुक्रादिनीतिशास्त्रेषु रघुवंशमाघकिरातादिकाव्येषु, बृहत्कथा-पञ्चतन्त्रादिग्रन्थेषु, नानाविधानि धर्मार्थकामकौशलानि वर्णितान्येव। सत्स्वपि व्यासादिमहर्षिषु, सत्स्वपि श्रीकृष्णभीमादियोद्धृषु, सत्स्वपि धनकुबेरेषु शिल्पिवरेषु, यथा सर्वसंहारकं

महाभारतीयं युद्ध प्रवृत्तमेव, समष्टिकर्म संस्कारादेव, तथैव सत्स्वपि शास्त्रज्ञेषु ब्राह्मणादयः प्रमाद्यन्ति, प्रच्यवन्ते च स्वीयेभ्यः परम्पराप्राप्तेभ्यो गौरवेभ्यः। तुलाधारप्रभृतिवैश्यानां, विदुरधर्मव्याधादि-शूद्रान्त्यजानामपि बहुमानं समाजे सर्वदैवासीत्' तथापि ते मर्य्यादां नातिक्रामन्ति स्म। ज्ञानयोगादिसम्पन्नेनापि विदुरेण शूद्रयोनिजत्वेन स्वस्य ब्रह्मविद्योपदेशानर्हत्वं स्पष्टमुक्तम्—

'शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे।'

( इति सनत्सुजाते )

न मर्यादापालनं नीचत्वप्रयोजकम्। म्लेच्छत्वमपि न शूद्रान्त्यजादयो नीचत्वेनाभ्युपगता उपजग्मुः। किन्तु ब्राह्मणोत्तमा विद्वांसश्च लोभमोहाभिभूता म्लेच्छा बभूवुः।

'पण्डिता बहवो राजन् बहुज्ञाः संशयच्छिदः।
सदसस्पतयोऽप्येके ह्यसंतोषात् पतन्त्यधः।'

इति भागवतोक्तेः।

इदानीमपि बहवः पण्डितम्मन्याः साधवः स्वसमाजपारम्पर्य्यधर्मद्रुहो विधर्मशासनगुणगानपरायणा दृश्यन्ते। तदत्र मौर्ख्यमेव हेतुर्न साधुत्वं, न सम्प्रदायो, न वा ब्राह्मणादित्वम्, कैश्चिदपि वैमनस्यदौर्मनस्य विघटनाद्यप्रशंसनात्।

येषां स्वशास्त्रे धर्मे वा श्रद्धा न भवति त एव ब्राह्मणा वा शूद्रा वा धर्मान्तरमाश्रयन्ते। इदानीं तु शूद्रा अपि न तथा धर्मान्तरे प्रविशन्ति यथा-ब्राह्मणादयः। तत्कस्य हेतोः? शूद्राणां शास्त्रे धर्मे च बद्धश्रद्धत्वात्तदभावाच्चेतरेषाम्। तेनैव च स्वकीया अपि परकीया भवन्ति। शास्त्रे धर्मे च बद्धश्रद्धत्वादाङ्ग्ला अपि स्वकीयमाना दृश्यन्ते।

यदुक्तम् ''कलावाद्यन्तयोः स्थितिरितिवत्
कलौ न ब्राह्मणाः सन्ति कलौ न क्षत्रजातयः।
वणिजश्चैव शूद्राश्च कलौ वर्णद्वयं स्मृतम्।

इत्यपि वक्तुं शक्य" मिति, तदपि तुच्छम्, यथेष्टचेष्टोक्तौ सत्यामप्याप्तोक्तेरमावत्वेनाकिञ्चित्करत्वात्। अत एव महाभाष्ये—

'यदुदुम्बरवर्णानां घटीनां मण्डलं महत्।
पीतं न गमयेत् स्वर्गं तत्किं क्रतुगतं नयेत्।

इत्यादि भाजश्लोकानामप्रामाण्यमेवोक्तम्। तादृगिवायमपि श्लोकः।

वस्तुतस्तु क्षत्रियवैश्ययोः उपनयनवेदाध्ययनादिसंस्काराभावादेव 'कलावाद्यन्तयोः स्थिति' रित्युक्तिः, ब्राह्मणेषु कथं कथञ्चित् संस्कारशेषत्वाच्चतुर्थस्य संस्कारानपेक्षत्वाच्च वस्तुस्थितेर्नेत्रनिमीलनमनर्थायैव, न कल्याणाय। ब्राह्मणानामपि न पतनमिति न वक्तुं शक्यते। तथापि यथा कथञ्चिदुपनयनम् गायत्र्युपदेशमात्रम् सर्वेषु विशिष्टेषु समेऽपि संस्कारा वेदाध्ययनतदनुष्ठानानि च प्रचलन्त्येव। काशीकाञ्च्यादिषु बाहुल्येनान्यत्र विरलविरलतया द्रष्टुं शक्यन्ते।

यदुक्तम्—"सर्वाभिर्विद्याबलधनादिशक्तिभिः समलंकृतपरमसुखपूर्णः सत्ययुगस्तदैवायास्यति यदार्य्यहिन्दुजातिः एकवर्णत्वेनैकधर्मत्वेनैकेश्वरत्वेन सम्प्रदायभेदशून्यत्वेनोत्तमाधमभेदभावनाशून्यत्वेन विभूषिता संघटिता निःस्वार्थप्रेमसूत्रसंबद्धा विशालराष्ट्रहितसंरक्षणतत्परा च भविष्यति।" तदेतदत्यल्पमुच्यते। यतो हिन्दुजातिकल्पनाऽपि किमर्थमुन्मेषमासादयतु? सर्वा मानवजातिरेव वर्णधर्मादिनैरपेक्ष्येण विश्वसंघटनपरायणैव किं न स्यात्! अन्यजातिसत्त्वे तु धर्मेश्वरादिकल्पनाभेदोऽपि प्रसज्येतैव। यदि तु पशुत्वव्यावृत्ता मानवत्वसंपत्तिस्तद्रक्षणार्थं धर्मादिकमपेक्षितं तदा तु धर्ममूलशास्त्रमप्यपेक्षणीयतामर्हत्येव। वेदादिशास्त्रमन्तरा धर्मस्य खपुष्पायमाणत्वात्। वेदादिशास्त्रप्रामाण्याभ्युपगमे तु नैकवर्णत्वैकधर्मत्वादिकं सिद्ध्यति। वेदेषु वर्णभेद-धर्मभेद-दैवतादिभेदानां जागरूकत्वात्।

यदुक्तम् "ऋगादिचतुर्वेदसंहितासु कुत्रापि जातिभेदादेः प्रतिपादनं नोपलभ्यते। 'ब्राह्मणोऽस्य मुखमासी'दित्येक एव मन्त्र आगतस्तो जातिभेदप्रतिपादकत्वेनावगम्यमानो जातिभेदाभावपरत्वेन योजित एवे'ति, तदपि तुच्छम्, मन्त्रब्राह्मणात्मकेषु वेदेषु धर्मशास्त्रेषु तद्व्याख्यानभूतेष्वितिहासपुराणेषु च चातुर्वर्ण्यस्य निगदव्याख्यातत्वेनोक्तमन्त्रस्य जातिभेदाभावपरत्वेन व्याख्यातुमशक्यत्वात्। नह्येकेनैव नेत्रप्रमाणेनावगम्यमानं रूपमरूपमिति कश्चिदमूढो विवक्षति, प्रमाणान्तरागम्यत्वादेव। ज्योतिष्टोमराजसूयादिविधायकानि

वाक्यान्यप्येकैकान्येव। शाखाभेदेन त्वत्रापि बहून्येव वाक्यानि सन्ति। न च मन्त्राणामेव वेदत्वम् मन्त्रब्राह्मणयोर्वेदनामधेयमिति कात्यायनापस्तम्बादिभिः सूत्रितत्वात्। एतेन गुणकर्मकृतचातुर्वर्ण्यं न जातिकृतमित्यप्यपास्तम्, तस्य समूलमुन्मूलितत्वात्। वाजसनेयिसंहितायास्त्रिंशेऽध्याये बहूनां जातीनां वर्णितत्वाच्च।

यदप्युक्तम्—"भारते राष्ट्रे बलात् यवनक्रिश्चियनादिरूपेण परिणता ये केऽपि स्युः ते सर्वेऽप्यार्य्या हिन्दव एव। हिन्दुस्थानस्य पावनमृत्तिकाभिः येषां शरीराणि निर्मितानि सन्ति ते कथं न हिन्दवो भवेयुः? वयं तु तत्र हिन्दुत्वमेवोद्घोषयामः' इति, तदेतत्प्रलापमात्रम्। हिन्दुस्थानमृत्तिका-निर्मितशरीरकत्वस्य हिन्दुत्वाप्रयोजकत्वात्। तथात्वे वा गृध्रकाकश्वशूक-रादीनामपि हिन्दुत्वापत्तिः स्यात्। हिन्दुत्वमपि वेदादिशास्त्रानुसारेण तदुक्त-धर्मनिष्ठावत्त्वेनैव सिद्धयति, नान्यथा। वेदादिशास्त्रेषु तु चातुर्वर्ण्यानुसारे-णैव धर्मविधानम्। जन्ममूलकब्राह्मण्यादीनामेव वेदाध्ययनतदुक्तधर्माधिकार-निर्णयात्। 'अर्य्यः स्वामिवैश्ययो'रिति पाणिनिव्याकरणानुसारेण स्वामि-वैश्ययोर्नार्य्यत्वं किन्त्वर्य्यत्वमेव। अनार्य्य-दस्यु-प्रभृतीनामपि नार्य्यत्वं संभवति वेदमन्त्रेणैव निषिद्धत्वात्।

अपि च आर्य्यशब्दः श्रेष्ठपरोऽपि सन् जातिपरः परिकल्पितः परैः। 'कृणुध्व विश्वमार्य्य'मिति व्याख्यानप्रसङ्गे तदप्युक्तमेव।

यदुक्तम्—गुणवत्त्वादिभिरुपाधिभिरेव द्रव्यादिप्रतीतिव्यवहारोपपत्तौ सत्यां नैयायिकैः कल्प्यमानद्रव्यत्वादिजात्यभ्युपगमो व्यर्थ एव तथा तत्तद्-गुणकर्मभिरेवोपाधिभिर्ब्राह्मणादिप्रतीतिव्यवहारोपपत्तौ जातिवादिभिः कल्प्यमानब्राह्मणत्वादिजात्यभ्युपगमोऽपि व्यर्थ एवे'ति तदपि तुच्छम्, वेदान्तरीत्या गुणद्रव्यादिनिर्वचनासिद्धया गुणवत्त्वाद्युपाधीनामप्यसिद्धेः। व्यावहारिकगुणादिसिद्धयभ्युपगमे तु लाघवाभावात् समानानुगतप्रतीतिसिद्ध्य-र्थं द्रव्यत्वगुणत्वादि जातिकल्पनाया एवं ज्यायसीत्वम्।

ब्राह्मणाद्यनुगतव्यवहारप्रतीतिव्यवहारौ तु सर्वथा ब्राह्मणत्वादिजाति-मूलकावेव। न तत्तद्गुणकर्मोपाधिभिस्तदुपपत्तिः। गुणकर्मशून्येऽपि जाति-मात्रनिबन्धनब्राह्मणादिशब्दव्यवहारदर्शनात्। 'विद्या तपोभ्यां यो हीनो

जातिब्राह्मण एव सः' इतिमहाभाष्यवचनाच्च । अतएव गुणकर्मयुक्त उत्तमस्तद्धीनोऽधमो ब्राह्मण उच्यते, तथात्वेऽन्यत्रापि गुणसत्त्वे मनुष्ये सिंहशब्दप्रयोगवत् । क्वचिद् गौण्या वृत्त्याऽपि ब्राह्मणपदप्रयोगः । जात्यभावे तु गौणमुख्यब्राह्मण्यभेद एव लुप्येत । महाभारतादौ जाति-दुष्परीक्ष्यता कथनेऽपि न तदपलापः संभवति । रत्नविशेषस्य दुष्परीक्ष्यत्वेऽपि तत्सत्त्वाभ्युपगमस्यानिवार्यत्वात् ।

'अनादाविह संसारे दुर्वारे मकरध्वजे ।
कुले च कामिनीमूले का जातिपरिकल्पना ॥'

इत्येषोक्तिस्तु शास्त्राचार्य्योपदेशानुगुणज्ञानानुष्ठानशून्यानामेव कृते, न शास्त्रैकदृष्टीनाम् । अन्यथा मकरध्वजस्य सर्वत्र दुर्वारत्वे भवतोऽपि पारिव्राज्यब्रह्मचर्य्यादिपालनायासो व्यर्थ एव स्यात् ।

यदुक्तम्—"विद्याबलादिशक्तीनां तारतम्याभावेन समन्वयेऽपि वैशेष्यात्तु तद्वादन्यायेन यत्र विद्यादीनां वैशेष्यं तत्र ब्राह्मणत्वादिव्यवहारः सेत्स्यति । यथा—पाश्चात्त्येषु अध्यापकाः, सैनिकाः, व्यापारिणः, श्रमजीविन इति विभागस्तथैव भारतेऽपि भवन्तु व्यवहाराः" इति, तदपि न, यतो येषां जन्ममूलकवर्णव्यवस्थालोपः सञ्जातः । तत्र तथा तदुपपत्तावपि भारते स्वाभाविक्यां व्यवस्थायां सत्यां कृत्रिमायास्तस्या अभ्युपगमे कारणाभावात् ।

यदप्युक्तम्—'मनुस्मृतिनाम्ना भृगुणा ब्राह्मणेनैव मनुस्मृतौ ब्राह्मण्यमाहात्म्यं स्वार्थपरायणतावशात् संयोजितम् तस्मान् मनुस्मृतेरप्रमाण्यमेव' इति तदपि तुच्छम् । त्वदुद्धरणानुसारेणैव मनुना तत्प्रमाणीकरणात् । तदप्रामाण्ये भृगुणा प्रोक्तमित्यत्रैव मानाभावात् । मनुनैव च भृगुप्रोक्तस्य मानवशास्त्रस्य प्रामाण्यं साफल्यञ्चोक्तम्—'एतद् वोऽयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः ।
एतद्धि मत्तोऽधिजगे सर्वमेषोऽखिलं मुनिः ॥
(१।५९ म० स्मृ० )

'इत्येतन्मानवं शास्त्रं भृगुप्रोक्तं पठन्, द्विजः ।
भवत्याचारवान्नित्यं यथेष्टां प्राप्नुयाद् गतिम् ॥' इति ।
(म० स्मृ० ११।१२६)

तस्मादुन्मत्तवद्यदाश्रित्य भृगुप्रोक्तत्वं साधयति तस्यैवाप्रमाणीकरणम्

स्वपादयोरेव कुठाराघातः। उत्थानपतनलेखकस्य रजनीकान्तस्य दृष्ट्या जन्म-कर्मभ्यामुभाभ्यामेव वर्णव्यवस्था न सिद्धयति। कर्ममूलकवर्णव्यवस्थाया व्यावहारिकरूपप्रदानमपि दुष्करम् ( हिन्दु उ० प० २६९ )

यतस्तदनुसारेणैकस्मिन्नेव कुटुम्बे ब्राह्मणश्चाण्डालश्च संभवतः। तथात्वे पारिवारिकं संघटनमुच्छिद्यत एव। एकस्यैव जनस्य कर्मपरिवर्त्तना-नुसारेण वर्णपरिवर्त्तने नैकवारं वर्णपरिवर्त्तनमापद्येत, येन महान् व्यतिक्रमः। तेन सर्वथा वर्णव्यवस्था विलोप एव श्रेयस्करः। सुधारकेष्वपि ब्राह्मणादि-शब्दव्यामोहो दुस्त्यजः। ब्राह्मणशब्देनैव पूज्यत्वं शूद्रशब्देनैवापूज्यत्वं शूद्रे व्यज्यते। लेखकानां गणकानां न्यायवादिनां ( वकील मुख्तार ) आदीनां कस्मिन् वर्णे संन्निवेशः ?

'यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः।
तं राजा निधनं कृत्वा क्षिप्रमेव प्रवासयेत्॥'

( म० १०।९६ )

'नाब्रह्मक्षत्रमृध्नोति नाक्षत्रं ब्रह्मवर्धते'
ब्रह्मक्षत्रं च संपृक्तमिह चामुत्र वर्धते॥

( म० ९।३२२ )

अनेनैव शासनस्य ब्राह्मणीकरणं संवृत्तम्। अनेनैव गौतमबुद्धादिप्रहारो विफलीकृतः।

'वैश्यशूद्रौ प्रयत्नेन स्वानि कर्माणि कारयेत्।
तौ हि च्युतौ स्वकर्मभ्यः क्षोभयेतामिदम् जगत्।' (म० ८।४१८)

एतेन मनोः कौटिल्यं स्पष्टं व्यज्यते। जातीनां जन्मसिद्धाधिकार-बाधाय निर्ममः प्रहारः। ब्राह्मणानां गुरुत्वात् क्षत्रियाणां सशस्त्रत्वेन दुर्दम्यत्वात् न दमनार्हता, किन्तु विट्शूद्रयोरेव। महानत्याचारो राजभिः संपादितः।

'मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्।
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा।'

इत्युक्तावपि स्पष्टः पक्षपातः।

'जघन्यकर्मा वैश्यः स्यात् सेवा कर्मा तु पादजः'। विष्णु रहस्ये।

वस्तुतस्तु को ब्राह्मणः, कश्च क्षत्रियः मुखबाहुभ्यामुत्पन्नः? तत्रान्यरक्तमिश्रणं न वृत्तमिति कथं ज्ञातुं शक्यम्? यदि वेदानामयमेवाभिप्रायस्तदा तादृशस्यान्यायात्याचारवतो वेदस्य गङ्गासागरे निमज्जनमेव युक्तम्।

क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान् प्रति सर्वशः।
ब्रह्मैव सन्नियन्तृस्यात् क्षत्रं हि ब्रह्म संभवम्॥ (९।३२०)

विट्शूद्रायां जन्मनाऽपकृष्टत्वापादनम् पश्चात्तेषामुन्नतिद्वारनिरोधनम्, पश्चात्तेषां धनापहरणमप्युपदिष्टम्।

'यो वैश्यः स्याद् बहुपशुर्हीनक्रतुरसोमपः।
कुटुम्बात्तस्य तद्द्रव्यमाहरेद्यज्ञसिद्धये॥'
(म० स्मृ० ११।१२)

यज्ञेन विविधानि धनानि रत्नानि दिव्यानि भोजनानि ब्राह्मणेभ्य उपनीयन्ते। यैः वैश्यैरेतन्न क्रियते तेषामेवापहरणम्।

आहरेत् त्रीणि वा द्वे वा कामं शूद्रस्य वेश्मनः।
नहि शूद्रस्य यज्ञेषु कश्चिदस्ति परिग्रहः॥
(म० स्मृ० ११।१३)

यज्ञस्य द्वे त्रीणि वाङ्गानि चेदपूर्णानि तदा तेषां पूर्तिः शूद्रगृहात् कर्त्तव्या। शूद्राणामुपरि ततोऽप्यधिकात्याचारः।

'शक्तेनापि हि शूद्रेण न कार्य्यो धनसञ्चयः।
शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते॥'
(म० स्मृ० १०।१२९)

विस्रब्धं ब्राह्मणः शूद्राद् द्रव्योपादानमाचरेत्।
नहि तस्यास्ति किञ्चित्स्वं भर्तृहार्य्यधनो हि सः॥'
(म० स्मृ० ८।४१७)

दासताबाश्चक्रिकायां पेषणायैवात्याचारपूर्णा इमे नियमाः।

'भार्य्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम्॥'
(म० स्मृ० ८।४१६)

'शूद्रं तु कारयेद्दास्यं क्रीतमक्रीतमेव वा।
दास्यायैव हि सृष्टोऽसौ ब्राह्मणस्य स्वम्भुवा॥'
(म० ८।४१०)

'न स्वामिना निसृष्टोऽपि शूद्रो दास्याद्विमुच्यते।
निसर्गजं हि तत्तस्य कस्तस्मात्तदपोहति॥' (८।४१४)

शूद्राणां मासिकं कार्य्यं वपनं न्यायवर्तिनाम्।
वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टञ्च भोजनम्॥
(म० स्मृ० ५।१४०)

'न शूद्राय मतिं दद्यान्नोच्छिष्टञ्च हविष्कृतम्।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्॥'
(म० स्मृ० ४।८०)

यो ह्यस्य धर्ममाचष्टे यश्चैवादिशति व्रतम्।
सोऽसंवृत्तं नाम तमः सह तेनैव मज्जति॥'
(म० स्मृ० ४।८१)

ततोऽप्यधिकाः पैशाचिका अत्याचाराः, यानधीत्य हृदयानि प्रकम्पन्ते

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति।
वैश्योऽप्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति।'
(म० ८।२६७)

आश्चर्यमिदं यस्यापराधस्य कृते शतं पणाः (अशीतिभिर्वराटकैः पण इत्यभिधीयते) १२५ ताम्रखण्डानि, वैश्यः सार्धचतुर्दपणकोत्तरं रुप्यकत्रयम् तस्यैवापराधस्य कृते शूद्रस्य प्राणवधः।

'एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन्।
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः॥'
(म० स्मृ० ८।२७०)

'नामजातिग्रहन्त्वेषामभिद्रोहेण कुर्वतः।
निःक्षेप्योऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः॥'
(म० स्मृ० ८।२७१)

'धर्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः '
तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः ।।'

(म०८।२७२)

'येन केनचिदङ्गेन हिंस्याच्छ्रेष्ठमन्त्यजः ।
छेत्तव्य तत्तदेवास्य तन्मनोरनुशासनम् ।।'

(म०८।२७९)

'पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति ।
पादेन प्रहरेत् कोपात् पादच्छेदनमर्हति ।।'

(म०८।२८०)

सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः ।
कट्यां कृताङ्को निर्वास्यः स्फिचं वास्यावकर्त्तयेत् ।।

(म०८।२८१)

अवनिष्ठीवतो दर्पात् द्वावोष्ठौ छेदयेन्नृपः ।
अवमूत्रयतो मेढ्रमवशर्धयतो गुदम् ।।

(म०८।२८२)

केशेषु गृह्णतो हस्तौ छेदयेदविचारयन् ।
पादयोर्दाढिकायाञ्च ग्रीवायां वृषणेषु च ।।

(म०८।२८३)

मार्जारनकुलौ हत्वा चाषं मण्डूकमेव च ।
श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत् ।।

( म० ११।१३१ )

'वध्यो राज्ञा स वै शूद्रो जपहोमपरश्च यः ।
यतो राष्ट्रस्य हन्तासौ यथा वह्नेश्च वै जलम् ।।

( अत्रि. १६ )

प्राणानर्थान् तथा दारान् ब्राह्मणाय निवेदयेत्
स शूद्रजातिः भोज्यः स्यादभोज्यः शेष उच्यते'

( विष्णु. ५।११ )

'धारणं जीर्णवस्त्रस्य विप्रस्योच्छिष्टभोजनम् ।
स्वदारेषु रतिश्चैव परदारविवर्जनम् ॥

(हारीत २।१३)

'इत्थं कुर्यात् सदा शूद्रो मनोवाक्कायकर्मभिः ।
स्थानमैन्द्रमवाप्नोति नष्टपापः सुपुण्यकृत् ॥'

(हा० २।१४)

यस्यैन्द्रपदस्य प्राप्तयेऽश्वमेधशतमनुष्ठीयते तस्य प्राप्तिरत्र मूर्खाणां प्रलोभनार्थं शास्त्रकाराणामियं महती धूर्तता। रोम-ग्रीस-कार्थेज-मिश्र-असीरिया-वैबिलोन-अरब-फारस आदिदेशेष्वपि दासप्रथा आसीत्। परमेतादृशी धूर्तता क्वापि नासीत्।

आर्य्यत्वयभिगमने लिङ्गोद्धारः। अथाऽस्य वेदमुपशृण्वतस्त्रपु-जतुभ्यां श्रोत्रपरिपूरणम्, उच्चारणे जिह्वाच्छेदः, धारणे शरीरभेदः, आसने शयने वा सहासनमभिप्रेप्सुः दण्डयः शतम्।

ब्राह्मणशासनेन राजकीयनियमैः विट्शूद्रयोः परमं पारतन्त्र्यं विधाय-पश्चात् मानासिकपरतन्त्र्यसंपादनाय—

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ।

एवंविधैर्धूर्ततापूर्णैरुपदेशैः तदुन्नतिमार्गाः सर्वथाऽवरुद्धाः। यदि कश्चिच्चर्मकारपुत्रो दैवयोगाच्छिक्षितोभूत्वाऽध्यापनकार्यं कर्त्तुं समर्थो भवेत्तदापि तेन तदकृत्वा पादत्राणसीवनादिकार्यमेव कर्त्तव्यम्। ततः शम्बूकस्य तपश्चर्यया शिरच्छेदः रामचन्द्रेण कृतः, ततोऽपि शूद्राः रामनामपरायणा भवन्तीत्याश्चर्य्यम्।

ये व्यपेताः स्वधर्माच्च परधर्मेष्ववस्थिताः ।
तेषां शास्तिकरो राजा स्वर्गलोके महीयते ॥
आत्मीये संस्थितो धर्मे शूद्रोऽपि स्वर्गमश्नुते ।
परधर्मो भवेत्त्याज्यः सुरूपपरदारवत् ॥

( अत्रिस्मृति १३।१८ )

मौर्ख्यादेतैरेतन्न ज्ञायते यत् नास्ति कश्चिदीश्वरो चातुर्वर्ण्यव्यवस्था·

पको, न वा पूर्वजन्मार्जितानि कर्माणि, ब्राह्मणक्षत्रियाणां कूटनीतिरेव विट्शूद्राणां पतनकारणम्। यदि शूद्रस्य तपश्चरणं न प्राणदण्डः समुचितस्तदा वेश्यापुत्रस्य वसिष्ठस्य तपश्चरणे कथं न दण्डो दत्तः ?

दारिद्र्यवशादेव क्षुत्पिपासादिभिरर्दितैर्वैश्यशूद्रादिभिर्ब्राह्मणीयशासन-विरुद्धमान्दोलनं नोद्भावितम्। अन्त्याः शासकाः कूटनीतिज्ञाः आसन्। तत एव जन्मान्तरविश्वासोत्पादनादिभिः वैश्यशूद्राणां मनांस्यपि स्वायत्ती-कृतानि। असंख्यैर्जातिभेदैरपि तत्पारतन्त्र्यं दृढीकृतम्। तेनैवार्य्यधर्मस्य सार्वभौमसम्पादने बाधोत्पद्यते। यदि कश्चिदार्यो भवेदपि तदाप्यत्र विवा-हादिसम्बन्धालाभात् तेषां पुनः स्वजातिषु परावर्त्तनं भवति। समुद्रबन्धन-पुष्पकयाननिर्माणलाक्षागृहनिर्माणादिकमपि नार्य्यकर्त्तृकं किन्तु वानर-दानवादिकृत तत्सर्वम्।

जीविकानिर्धारणार्थं वर्णव्यवस्था सुप्रजननव्यवस्था वा ? नियम-पालनदृढतार्थं जातिबहिष्कारश्च। अत्र जातिभेदो धर्मसम्बद्धो नान्यत्रैवम्। अन्येषां धर्मदृष्ट्या विभिन्नजातीयाः समाना एव। हिन्दुजातिरद्यापि जीवतीति कथनं निरर्थकम्। यतः सम्मानपूर्णं जीवनमेव जीवनम्। दासभावेन जीवनम् मरणमेव। जैनबौद्धकाल एव धनकुबेराः श्रेष्ठिनः सम्पन्ना आसन्। तदानीमेव नन्दमौर्य्यादयः शूद्रवंशीयाः, गुप्तवर्धनादिवैश्यवंशीयाः सम्राजोऽपि सम्पन्नाः। ( ई० पू० ५०० आरभ्य ई० उ० ५०० यावत् ) भूदेवास्तदानीमपि विरुद्धा आसन्। बौद्धशासनेन प्रजानां मुक्तिरेव जाता। परन्तु ब्राह्मणैर्वि-देशीयानां देशगतानामनार्य्याणां च साहाय्येन अनार्य्यान् राजपुत्रादिक्षत्रिय-पदवीमारोप्य बौद्धराजभिर्युद्धं प्रवर्त्तितम्। तैश्च बौद्धराजानः समूलमुत्पा-टिताः। बौद्धान् वीक्ष्य ब्राह्मणैरपि स्वीयधार्मिकनियमाः शिथिलीकृताः। हिन्दुभिरेतज्ज्ञेयम् यत् तद्दासत्वसम्पादको नान्यः किंतु तथाकथितप्रभुवाणी-रूपो वेदभगवानेव। येन ब्राह्मणोऽस्य मुखमासीदिति राष्ट्रियताध्वंसको मन्त्रः प्रचारितः। येन च वर्णव्यवस्थारूपभेदबीजमुप्तम्। यावद्वेदादिधर्म-ग्रन्था आवेष्टय आबध्य संग्रहालये समुद्रे वा न निःक्षेप्यन्ते, ब्राह्मणक्षत्रियादि नामभिः परिचयदानं राजकीयनियमैर्न वारितं भविष्यति, तावन्नास्याः समुद्धारः संभवति।

वर्णव्यवस्थया तु राजकीयैर्नियमैरन्यजातीयकार्य्याणि नान्यैः शिक्षणीयानि कर्त्तव्यानि वा। तेन क्षत्रिया एवयुद्धविद्याकुशलाः सम्पन्नाः। ब्राह्मणास्तु भोगरागरक्ताः, वैश्यशूद्रास्तु युद्धविद्याबहिर्भूता आसन्। तेन-ब्राह्मणवैश्यशूद्राणां युद्धेऽवरुहकारात् क्षत्रियाणां पराजयेन देश-स्वातन्त्र्यं नष्टम्।

बौद्धानामहिंसया न भारतपतनम्, किंतु बौद्धकाल एव भारतस्य स्वर्णिमकालः। तदानीमेव चन्द्रगुप्तमौर्य्यः, अशोकः, पुष्पमित्र, समुद्रगुप्तः विक्रमादित्यः, स्कन्धगुप्तः हर्षवर्धनकनिष्कादिसम्राज्यप्रादुर्भावः। वैशाली-राज्यसेनापतिना सिंहेन पृष्टः सन् गौतमबुद्ध उक्तवान्—दण्डपात्रं दण्डनीयः। पुरस्कारपात्रं पुरस्करणीयः। अपराधकारणादेवापराधी दण्ड्यः। सत्यस्य न्यायस्य रक्षणार्थं युद्ध्यमानो न प्रत्यवैति। अतएव मुस्लिमशासकैः न बौद्धेभ्यो राज्यं प्राप्तम् किन्तु हिन्दुभ्य पृथ्वीराजादिभ्य एव। हरिजना हिन्दवोऽवमन्यन्ते। धर्मान्तरिता अब्दुलगनी, जोसेफ आदिनामधरिणः सम्मान्यन्ते। जातिभेदनिवारणाय बौद्धैर्जैनैरन्यैश्च कृता यत्ना निष्फला एव। कैश्चिदुपजातिविनाशम् आवश्यकम् इति मन्यते। परं तन्नाशे मूलजातीनां बलवृद्धिः संभाव्यते।

कैश्चित् सार्ववर्णिक-सहभोज-सहविवाह-प्रसारेण तन्नाशः संभाव्यते। परन्तु व्यवहारे तद्दुःशकमेव। यत्र विजातीयानामन्नजलग्रहणमधर्मो मन्यते, तत्र शुद्धान्तःकरणेनान्तर्जातीयविवाहोऽसंभव एव। यस्य जातिरेव धर्मः, जातिरेव स्वर्गः, जातिरेवेश्वरः, जातिरक्षणार्थं यत्र सर्वस्वत्यागः शक्यते कर्तुम्। तत्र सहविवाहादिकं दुःशकमेव। अतः जातिध्वंसकान्दोलनवैफल्यम्। हिन्दूनां धर्मः सर्वाधिकप्रियः। तेन धर्मग्रन्थानामुन्मूलनमेव जातिभेदनाशकारणम्। बुद्धादिवत्सर्वथाशास्त्रप्रामाण्यानङ्गीकार एवावश्यकः। ब्राह्मणादिषु तथा शूद्रान्त्यजेष्वपि जात्युपजातिमूलक उच्चनीचभावो विद्यते। डोम्ब-रजकादीनामपि क्रमविन्यासो विद्यते। काश्चिदधमा अपि जातयः काश्चिदुत्तमा इति तासामप्युच्चत्वाभिमानः। मुस्लिमब्रिटिशशासनैरपि वैश्य-शूद्राणां कल्याणं सम्पन्नम् इति।

तदेतत्सर्वमुन्मादविलसितम्, शास्त्रार्थस्यान्यथाग्रहणात्। धर्मकामेष्व-सक्तानां धर्मजिज्ञासमानानां श्रुत्यादिप्रामाण्यमवश्यमङ्गीकरणीयम्। चार्वाक-प्रायाणां नास्तिकानां शास्त्रप्रामाण्यानभ्युपगमस्तेषामेवाकल्याणाय। यदि कश्चित् चक्षुषि सूर्ये वा न विश्वसेत्तदापि तयोर्माहात्म्यं नापकृष्यते। अयन्तु सुधारकाणां खण्डनायास्तिकप्रयुक्ततर्कोनाश्रयते। तथैवास्तिकानां खण्डनाय सुधारकस्तर्कानाश्रयते। शास्त्राणि शास्त्रव्यवस्थाश्चोन्मूल्य स्वच्छन्दतां कामयते। यद्यपि बहूनां कर्मणामनुष्ठाने स्वातन्त्र्यमेव समेषां, फलभाक्त्वञ्च यथा-कालमेव भवति, तथापि हिंसाचौर्यव्यभिचारादीनि कर्माण्यामुष्मिक-फलप्रदान्यपि लोकव्यवस्थापकैरवरोध्यन्ते। तत्प्रसारावरोधाय शोधनाय दण्ड्यन्ते च तत्कर्त्तारः। तद्दृष्ट्यैव च—

'यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः।
तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत्'॥

एवमादीनि वचनानि।

ब्राह्मणस्य सर्वमित्रत्वादेव शासनस्य ब्राह्मणीकरणं गुण एव न दोषः। स्वधर्मविमुखानां रावणादिब्राह्मणानामपि दण्डविधानं शासनस्य पक्षपात-नैरपेक्ष्यमेव सूचयति।

जातीनां जन्मसिद्धाधिकारः कः कथञ्च ज्ञायते, ज्ञानमन्तरा कथमन्याय-निर्णयः ? समाजेन शास्त्रेण च अधिकारो निर्णीयते, भारतीयवेदादि-शास्त्रैस्तदनुगामिना समाजेन च वर्णाश्रमानुसारिण एवाधिकारा निर्धारिताः। सर्वत्रैव गुरुत्वेन राजत्वेनाद्यापि सम्मानं भवति ब्राह्मणादीनां, परन्तु दुर्मार्ग-वर्त्तिनां राजन्यानां ब्राह्मणानाञ्चापि शासनं भवत्येव। यदि रक्तसांकर्यं न जातमिति प्रमाणशून्यं तदा सर्वत्र रक्तमिश्रणं जातमित्यपि प्रमाणशून्यमेव। सर्वज्ञमन्तरा सर्वैः तद्रक्ततन्मिश्रणादेर्ज्ञातुमशक्यत्वात्। भारतीयेशास्त्रे समाजे च रक्तसांकर्यवारणप्रयत्नातिशयाज्जाते च सांकर्ये पृथक् संस्थाविभाग-दर्शनाच्च रक्तसांकर्याभाव इति तु प्रामाणिकम्। वेदस्य गङ्गासागरे निमज्जन-तद्दाहादिप्रयत्नास्तु बुद्धिदौर्बल्यमूलका एव।

कर्मणा वर्णव्यवस्थायामेकस्मिन् गृहे ब्राह्मणचाण्डालयोः सत्त्वेन पारि-वारिकसंघटनमुच्छिद्यते। प्रतिदिनं वर्णपरिवर्त्तने महान् व्यतिक्रमः। सुधारकेष्वपि ब्राह्मणादि शब्दव्यामोहो दुस्त्यज इति सत्यमेवाह।

यच्चायं मन्वादिवचनविहितव्यवस्थाया अन्यायमूलकत्वं मनुते, तत् कर्मसिद्धान्ताज्ञानमूलकमेव। लोके कर्मभेदेन फलभेदो न दोषाय भवति, तथैवादृष्टकर्मभेदेनापि फलभेदे न दोषः। अन्यथा कश्चित् कथं मनुष्यः, कश्चिच्च पशुः, पक्षी वा जायते, श्वा कश्चित्, सूकरश्च कश्चित् कथं भवति। काको, हंसः, शुकः, पिकः, विविधाः प्राणिनो जायन्ते। यथा निर्हेतुकानि कार्य्याणि लोके नावलोक्यन्ते तथैव तेषां तेषां प्राणिनां विलक्षणानि शरीराणि तत्सुखदुःखतदुपकरणानि च न निर्निमित्तानि भवितुमर्हन्ति। तान्येव तु निमित्तानि पुण्यापुण्यपदभाञ्जि भवन्ति। यथा नानाविधा रोगाः विपत्तयश्चैहिकैरामुष्मिकैश्च पातकैर्जायन्ते, तथैव बलवीर्य्यकान्तिलावण्यादयो गुणाः सम्पत्तयश्च शुभैः पुण्यैर्जायन्ते। पक्षिषु काकादयः, पशुषु श्वसूकरादयोऽशुभैरेव कर्मभिर्जन्यन्ते। सर्वमेव ब्रह्मात्मतयाऽमृतपुत्रतया वा पश्यन्तः परावरदृशस्तदनुसारेणैव व्यवस्था विदधति। सर्वेषां पुण्यानि पातकानि तन्निबन्धनानि जन्मानि तत्कल्याणौपयिककर्माणि च ज्ञात्वा विदधानानि महर्षयः शास्त्राणि च नात्र मनागपि पक्षपातीनि। वैश्यस्य बहुधनस्यासोमपस्य यज्ञादिरहितस्यैव धनहीनब्राह्मणस्य यज्ञादिनिर्वृत्तये धनाहरणे को वा दोषो भातीति तु न विद्मः।

इदानींतनास्तु साम्यवादिनः हत्वापि सर्वाहरणमनुमन्यन्ते।

योऽसाधुभ्योऽर्थमादाय साधुभ्यः सम्प्रयच्छति।

स कृत्वा प्लवमात्मानं तारयेत्तावुभावपि॥

इति मनुवचनस्य कम्यूनिस्टैरप्याद्रियमाणत्वात्। यैर्ब्राह्मणादिभिरपि ब्रह्महत्या स्वर्णस्तेयसुरापानादिकं क्रियते, तेषां कृतेऽपि कृच्छ्राणि प्रायश्चित्तानि विहितानि। सुरापानस्य मरणान्तमेव प्रायश्चित्तं भवति। येषां पातकानां प्रायश्चित्तं चोद्यते तेभ्यो विमुच्यन्ते। अचीर्णप्रायश्चित्तव्रतास्तु तद्विपाकरूपेण श्वसूकरचाण्डालादियोनिं दारिद्र्यं व्याध्यादि दुःखजालञ्च प्राप्नुवन्ति। कपूयचरणाः श्वयोनिं सूकरयोनिं चाण्डालयोनिं वा प्रतिपद्यन्ते। सर्वज्ञकल्पा ऋषयो वेदादिशास्त्राणि च समेषां प्राणिनां हिताय दण्डविधानमपि कुर्वन्ति। रागद्वेषविहीनैः शास्त्रैकदृष्टिभिरत्यन्तनिरपेक्षैरेव दण्डो विधीयते। "न शूद्राय मतिं दद्यात्" इत्यस्य वेदपूर्विकां ब्रह्मविषयिणीं मतिं, वैदिककर्मादि

विषयिणीं मतिं वा न दद्यात् इत्येवार्थः। द्विजशुश्रूषा भगवद्भक्त्यादि तत्कल्याणोपयोगि धर्मज्ञानमपगम्य तदर्थविधानात्।

दण्डतारतम्यविधानन्तु वस्तुस्थित्यनुरोधेन, न पक्षपातधिया। क्वचिद्-ब्राह्मणादीनामेव दण्डाधिक्यविधानात्। यथानुपदमेवोक्तं सुरापानस्य मरणान्तं प्रायश्चित्तम्।

धर्मोपदेशः पञ्चाध्ययनं प्रणवोच्चारणं शालग्रामार्चनं शूद्राणां निषिद्धत्वादेव दण्डविधानम्। 'यद् वै मनुरवदत्तद् भेषजम्' इति वेदेऽपि मनोरादरो बोध्यते। तस्मादनतिशंकनीयानि मनुवचनानि।

यत्तु 'नास्तीश्वरो न सन्ति पूर्वजन्मार्जितानि कर्माणि' इति तदपि तुच्छम्; त्वदुक्तेरप्रमाणत्वात्। तत्र प्रमाणं तु वेदादिकमुक्तमेव। विश्वं स्वोपादानापरोक्षज्ञानजन्यं कार्यत्वे सति विलक्षणत्वात्, शय्याप्रासादादिवत्, जगद्-वैलक्षण्यहेतुवैलक्षण्यपूर्वकं, विलक्षणत्वात्, चित्रपटवत्, इत्यादिभिरनुमानैश्च परमेश्वरः पूर्वजन्मार्जितानि कर्माणि च सिद्ध्यन्त्येव। प्रमाणैर्व्यवहरन्नपि यः प्रमाणानां प्रामाण्यं नाभ्युपैति, स तून्मत्तवदुपेक्ष्य एव, तस्य शिष्टसमाजबहिष्कृतत्वात्। इह तु शिष्टा ब्राह्मणाः शूद्राः अन्त्यजाश्च शास्त्रप्रामाण्यवादिन एव। वसिष्ठस्य गणिकापुत्रत्वकल्पनाऽन्यत्रैव निराकृता, तत एव तस्य शूद्रत्वं तपश्चरणाद्ब्राह्मणत्वमित्येतत् सर्वं मूढजन्तुजल्पितमेव।

यदुक्तं 'जातिभेदादार्य्यधर्मस्य सार्वभौमसंपादने बाधा संपन्ना' तदपि प्रतारणामात्रम्, नास्तिकस्य तवेश्वरधर्मविमुखस्य कोऽप्यार्य्यधर्मोऽपि, यस्य सार्वभौमभावे बाधा समागता?

यदुक्तं समुद्रबन्धनादिकं वानरादिकृतं नार्य्यकृतम् इति नार्य्यगौरवावहं तदिति; तदपि तुच्छम्। ते वानरा अपि येषामार्य्याणां दास्यं कुर्वन्ति स्म किं तेषां माहात्म्यं नास्त्येव?

यदुक्तं बौद्धकाल एव धनकुबेराः श्रेष्ठिन आसन्। स एव कालः समृद्धिकालः तदपि तुच्छम् यतः बौद्धप्रभावादेव जातिव्यवस्था यत्र शैथिल्यमुपगता तत्रैव धर्मपरिवर्त्तनेन इस्लामधर्मविस्तारः। यत्र तु जातिव्यवस्था दृढासीत् तत्र हिन्दवो न धर्मान्तरमुपगताः। तत एव पश्चिमपञ्चनददेशे सीमान्ते वंगदेशे च इस्लामधर्मविस्तारः। यत्र उत्तरप्रदेशादौ जाति-

व्यवस्था दृढासीत्तत्र न तत्प्रसर इतीतिवृत्तवेतृभिरङ्गीकृतत्वात्। तस्मात् बौद्ध-प्रचारैर्वर्णाश्रमव्यवस्थाशैथिल्यमेव भारतपराभवकारणमिति निष्प्रपञ्चम्।

यत्तु सहभोज-सहविवाहादिजातिनाशकोपायानां दुष्करत्वं निष्फलत्वञ्च उक्तम्, तत्तु सम्यगेव परधर्मग्रन्थोन्मूलनमपि धर्मान्धमुगलान्धानुकरणमेव, न तावताऽपि न त्वदिष्टसिद्धिः, तस्यापि निष्फलत्वावगमात्। डोम रजकादिषु त्वदुक्तरीत्या जातिभेदमूलकभोजनविवाहादिभेदस्य बद्धमूलत्वात्।

सत्यार्थप्रकाशे एकादशे समुल्लासे तल्लेखकेनाप्युक्तम् 'मनुष्य-पशु-पक्षि-वृक्ष-जलजन्त्वादिजातय ईश्वरकृताः। पशुषु गवाश्वहस्त्यादयः, वृक्षेषु वटपिप्पलाम्रादयः, पक्षिषु हंस-काक-वकादयः, जलजन्तुषु मत्स्य-मकरादयो जातिभेदाः, मनुष्येषु ब्राह्मणक्षत्रियवैश्यशूद्रान्त्यजा जातिभेदा ईश्वरकृताः।

( संस्कारविधौ उपनयनप्रकरणे ७८।७९ पृ० )

'यज्ञार्थमग्नि-ब्राह्मणक्षत्रिय-वैश्यगृहेभ्य आनयेदित्याह न शूद्रगृहात्'

ये ब्राह्मणेतराः किञ्चित्पठित्वाध्ययनाध्यापनलेखनोपदेशादिकार्येष संलग्नाः सन्तोऽपि स्वस्यापठितब्राह्मणतुल्यमपि सम्मानमनुपलभ्य खिद्यन्ते त एवेर्ष्या-विशेषवशात् कर्मणा वर्णव्यवस्थां समर्थयन्ते। अन्ये ब्राह्मणाः सन्तोऽपि वर्तमानशिक्षादीक्षाप्रभावाज्जातिनियमोल्लङ्घिनो धार्मिकैः स्वजातीयैश्च बहि-ष्कृतास्तेऽपि तथैव कर्मणा वर्णव्यवस्थामालपन्ति। अन्ये स्वशास्त्रीयसिद्धान्त-ज्ञानविधुरा विरुद्धमतसंसर्गिणः, अपरे जन्मना वर्णविरोधिषु संमानप्रति-ष्ठार्थिकलाभप्रेप्सया जन्मना वर्णव्यवस्थां खण्डयन्ति, कर्मणा च तां समर्थ-यन्ते। तथा च रागद्वेषादिदूषितसमर्थितत्वान्न कर्मणा वर्णव्यवस्था धार्मिक-सिद्धान्तः। अद्वेषरागिभिः सद्भिः सेवितस्यैव मनुना धर्मत्वोक्तेः।

'विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ॥
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥'

( मनुः २:१ )

## चातुर्वर्ण्यसिद्धिः

कैश्चित्तु—"हत्वी दस्यून् प्रार्य्यं वर्णमावत्"

( ऋ० सं० ३।३४।९ )

'यो दासं वर्णमधरं गुहाकः' ( ऋ० सं० २।१२।४ )

इत्यादिषु आर्य्य इति, दास इति वर्णद्वयस्यैव चर्चितत्वात् वेदेषु चातुर्वर्ण्यं नास्त्येव। 'उभौ वर्णावृषिरुग्रः पुपोष (ऋ० सं० १।१७९।६) इति स्पष्टं वर्ण-द्वयमुक्तम्। ब्रह्म राजन्य-वैश्य-शूद्राद्यनेकानि नामानि वेदेष्वायान्ति, परं तेषां वर्णपदेन व्यपदेशो वेदे क्वापि न दृश्यते" इत्युच्यते, तन्न, 'चत्वारो वै वर्णा ब्राह्मणो राजन्यो वैश्यः शूद्रः' (शतपथ० ५।५।४।९)

'चत्वारो वै पुरुषाः ब्राह्मणो राजन्यो वैश्यः शूद्रः'
(मैत्रायणी सं० ४।४।६)

ब्रह्म-क्षत्रिय-वैश्य-शूद्रा इति चत्वारो वर्णास्तेषां ब्राह्मणः प्रधान इति वज्रसूचिकोपनिषदि, इत्थं चातुर्वर्ण्यस्य स्पष्टं वर्णनात्। वेदेषु आर्य्यशब्देन ब्राह्मणादिवर्णत्रय विवक्षितम्। दासशब्देन शूद्र उक्तः।

'तिस्रः प्रजा आर्य्या ज्योतिरग्रा' (ऋ० सं० ७।३३।७)

इति मन्त्रवर्णात्। अत एव 'आर्य्यं वर्णमावत'
(ऋ० सं० ३।३४।९)

इत्यादिना आर्य्यं उत्तमवर्णं त्रैवर्णिकम् इति दासं वर्णं इत्यत्र च दासं वर्णं शूद्रादिक इत्यर्थमाहुः सायणाचार्य्याः।

'उभौ वर्णौ ऋषिरुग्रः पुपोष' इत्यत्र तु नार्य्यदासवर्णौ विवक्षितौ, प्रकरणविरुद्धत्वात्। किन्तु कामः तपश्चेत्युभौ वर्णौ विवक्षितौ। अत एवाहुः सायणाचार्य्याः 'उभौ वर्णौ वर्णनीयावाकारौ कामश्च तपश्च पुपोष' तेन वेदे ब्राह्मणक्षत्रियादिनामानि वर्णपराण्येव। 'वर्णो द्विजादौ शुक्लादौ' इत्यमर-कोशाच्च।

यदुक्तम् 'एकवर्णमिदं पूर्वं विश्वमासीद् युधिष्ठिर।
कर्मक्रियाविभेदेन चातुर्वर्ण्यं प्रतिष्ठितम्॥

इति महाभारतीयवचनेन एकवर्णस्यैव कर्मादिभेदेन चातुर्वर्ण्यव्यवस्था प्रवृत्ते'ति तदपि न, श्लोकार्थानवबोधात्। तथाहि—इदं विश्वं पूर्वं सृष्टेः प्राक् एकवर्णम् एकमेवाद्वितीयं ब्रह्माकारमेवासीत्। कर्मक्रियाविभेदेन पूर्वसृष्टि-कालिककर्मक्रियासंस्कारानुसारेण 'चातुर्वर्ण्यं भगवता पूर्वं सृष्टं स्वयंभुवा।'
(म० भा० अनु० १४३।२)

इति महाभारतानुरोधात्तथैवार्थो युक्तः । पूर्वश्लोके गुणशब्दाभावाद् गुण-कर्मानुरोधिनी वर्णव्यवस्थेति वाचोयुक्तिरसङ्गतैव । एवमेव "भविष्य-पुराणीयब्राह्मपर्वणि ४२ अध्यायानुसारेण यथैकस्मात् पितुरुत्पन्नाश्चत्वारः पुत्रा एक जातीया एव भवन्ति तथैव परमेश्वरादुद्भूता मनुष्या अप्येकजातीया एव । तत्र जातिभेदो नास्त्येव । यथोदुम्बरवृक्षस्य मूलमध्याग्रेपूत्पन्नानि फलान्येक-वर्णान्येव तथैव विराजो मुखबाहूरुपज्जाः सर्वेऽप्येकजातीया न तत्र जातिभेदः" तदप्यविचारितरमणीयमेव । एक पितुरुत्पन्नेष्वपि स्त्रीपुरुषनपुंसकेष जाति-भेददर्शनात् । सर्ववर्णेषु सर्वत्रैव मनुष्यत्वजातेरेकस्या अपि दर्शनात् । परन्तु नैतावता तत्रावान्तरजात्यपलापः कर्त्तुं शक्यः ।

किञ्च देव-ऋषि - पितृमनुष्य - पशु-पक्षि-कीट - पतङ्ग-वृक्ष-पाषाणादी-नामपि एकः परमेश्वर एव पितेति किं तेष्वपि जाति-भेदो नास्ति ? एकस्मिन्नपि देहे मुखबाहूरुपादादीनां स्वरूपव्यवहारादिभेदोनापाकर्त्तुं शक्यते । परमेश्वरसृष्टौ भेद एव नास्तीति भाषणं प्रत्यक्षापलाप एव । भविष्य-पुराणीयवचनस्य तात्पर्य्यन्तु मृद्विकारेषु घटशरावोदञ्चनादिवत् मृन्मात्रत्वस्यैव परमेश्वरविकारेषु तदनन्यत्वविवक्षैव । 'तदनन्यत्वमारम्भणशब्दादिभ्य' इति ब्रह्मसूत्रन्यायात् ।

केचित्तु 'चिप्स फार्म दि जर्मन वर्क शाप' भाग २।१ ६७ मैक्समूलरस्यो-द्धरणेन कथयन्ति यत् 'मनूक्ता वर्णव्यवस्था वेदेषु नास्त्येव । वेदेषु ब्राह्मणस्य श्रैष्ठ्यं शूद्रस्यापकर्षश्च नोल्लिखितौ । समेषां भोजनपानविवाहादिप्रतिषे-धोऽपि तत्र नास्ति । मैक्समूलरस्य वाक्यमृषिवाक्यवत् प्रमाणमुपगम्य ते कथयन्ति यत् वैदिककालस्य बहोः कालादनन्तरं स्मार्तकाले वर्णव्यवस्था प्रचालिता तदपि तुच्छम्, 'दासं वर्णमधरं गुहाकः' ( ऋ० सं० ) तिस्रः प्रजा आध्याः ज्योतिरग्रा' ( ऋ. सं. ) दैव्यो वर्णो ब्राह्मणः असुर्यः शूद्रः ( तैत्तरीय ब्रा० प्रपा० १ ) 'क्षत्र वा अन्वशो वैश्यश्च शूद्रश्चानुगासमो ब्राह्मणात्मजं कदाचन ब्राह्मणश्च क्षत्रियश्च वैश्यश्च शूद्रश्च पश्चादन्वितः' ( शतपथे ६।४।४।११-१३ ) 'शूद्रार्य्यौ चर्मणी व्यायच्छेते तयोरार्य्यं वर्णमुज्जाययन्ति यदार्य्यं वर्णमुज्जाययन्ति आत्मानमेव तदुज्जाययन्ति ( ताण्ड्यब्रा० ५।६।१४-१६ ) 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' ( तै. सं.

७।१।१।६ ) इत्यादि वैदिकैः प्रमाणैर्ब्राह्मण-क्षत्रिय वैश्य-शूद्राणां वर्णत्वं तत्रोत्कर्षापकर्षश्च स्पष्टं सिद्धयति। न शूद्रो दुह्यादसतो वा एष सम्भूतोऽसन् स्यात् (मैत्रायणी सं० ४ १।३।२२) इतिमन्त्रे यज्ञोपयोगि दुग्धदोहनस्य शूद्रकर्तृकता निषिद्धा। ततो भोजनपानविवाहादिव्यवहारस्तु सुतरां निषिद्धः सिद्धयति।

'मनुर्वै यत् किञ्चावदत्तद्भेषज भेषजतायाः' ताण्डयब्राह्मणः ( २३।१६ ) वेद एव मनोरुपदेशस्य भेषजरूपतां वक्ति। तदा मनूक्ताया जन्ममूलिकाया वर्णव्यवस्थायाः सुतरामादरणीयता सिद्धयति।

एवं वेदकालपुराणकालादिकल्पना तु पाश्चात्यानां तच्छिक्षितानां भारतीयानाञ्च कपोलकल्पनैव। यतो वेद एव शिक्षाकल्पव्याकरणनिरुक्तछन्दोज्यौतिषपुराणेतिहाससत्रादिनामुल्लेखो दृश्यते। तथाहि-तत्रापरा ऋग्वेदः यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तः छन्दो ज्योतिषमिति ( मुण्डक १।५ ) ऋग्वेदं भगवोऽध्येमि इति यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदम् (छा· ७ ११२) 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणविद्या उपनिषदः श्लोकाः सत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निःश्वसितानि' ( बृहदारण्यक २।४।१० )

यद्यपि शंकरभगवत्पादीयभाष्यानुसारेण ब्राह्मणेष्वपीतिहासपुराणादीन्यन्तर्भवन्ति। तथापि देवताधिकरणीयतद्भाष्यानुसारेणैव तन्मूलकान्यार्षाण्यपि पुराणेतिहासादीनि प्रमाणान्येव। वेदवदेव तान्यप्यनादीन्येव। न्यायभाष्यकारवात्स्यायनमहर्षिदृष्ट्याऽपि वेदवर्णितरूपाण्येव ब्राह्मणादीनि पुराणानि रामायणभारतादीनि चेतिहासास्तथा भूतान्येव।

द्विजमात्रस्य शस्त्रग्रहणानुमतिः।

यदुक्तं जन्मना वर्णव्यवस्थायां जन्मना क्षत्रियाणामेव युद्धधर्मस्तेषां पराजयेऽनायासेन देशपराजयो भवति' तदप्यसत् राष्ट्ररक्षार्थं समेषां वर्णानां युद्धं स्वधर्म इति मनुना स्पष्टमुक्तत्वात्। "

शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुद्ध्यते।
द्विजातीनां च वर्णानां विप्लवे कालकारिते॥
आत्मनश्च परित्राणे दक्षिणानाञ्च सङ्गरे।
स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्मेण न दुष्यति॥"

(मनु ८।३४८-३४९)

साधारण्यां स्थितौ तु 'इष्टापूर्तं ब्राह्मणस्य, युद्धं वै राजन्यस्य' (तैत्तरीय-ब्रा. १।)

किञ्च देशस्य चतुर्थो भागः सदा युद्धोद्यतः स्यादिति न भारतापकर्षहेतुः। तथा भूताया व्यवस्थाया अद्याप्यन्यत्र दर्शनात्। अपिच प्राचीनकाले परशुराम द्रोणाचार्य कृपाचार्य अश्वत्थामादीनाम्, आधुनिकेऽपि काले पेशवाजातीयानां ब्राह्मणानां झाँसी राज्या लक्ष्मीदेव्याश्च पराक्रमाः प्रसिद्धा एव। वाल्मीकिप्रभृतयो महर्षयो युद्धे प्रत्यक्षमसंलग्ना अपि कुशलवादीनां युद्धविद्याशिक्षका आसन्नेव। असाधारण्येन विद्यावैशारद्यं (स्पेशलिस्ट) तु विषयविशेष एवोपपद्यत इत्यद्यापि महानुभावानां सत्ता प्रमाणयति।

वर्णक्रमेण दण्डव्यवस्था—

यदप्युक्तम् वर्णमूलकमेव शास्त्रीयवर्णविधानव्यवस्थायां वैषम्यम्। एकस्मिन्नेवापराधे ब्राह्मणस्याल्पतमो दण्ड, शूद्रस्य सर्वाधिको दण्डः, कस्मिंश्चिन्महत्यपराधे ब्राह्मणस्य प्राणदण्डनिषेधः।' (संवर्त्त संहिता १५२-१५४ १६६।१६८) (आपस्तम्ब प्रश्न पटले १७ खण्डे २७।२९) इति।

तन्न, धर्मशास्त्रीयदण्डव्यवस्थायाः शास्त्रैकगम्यमदृष्टं मनोविज्ञानञ्चाश्रित्य प्रवृत्तत्वात्। यथा अग्निहोत्रादियज्ञ-गायत्र्यादि जपजन्यं फलं शास्त्रैकगम्यं तथैव ब्रह्महत्या सुरापान-गुर्वङ्गनागमनादीनामपि फलं शास्त्रैकगम्यमेव। तत्तत्प्रायश्चित्तान्यपि शास्त्रगम्यान्येव। तथैव वर्णभेदमाश्रित्य विहितदण्डव्यवस्थाया अपि शास्त्रैकगम्यतैव।

मनोविज्ञानदृष्ट्यापि एकस्मिन्नेव कर्मणि प्रवृत्तेषु योग्यतानुरोधेन दण्डविधानानि उपयोगीनि भवन्ति। कश्चित्तत्रोपानत्ताडितोऽपि पुनस्तत्रैव सज्जते। अन्यः कश्चित्संभावितः स्वल्पभर्त्सनयैव ग्लान्या म्रियते।

'संभावितस्य चाकीर्तिर्मरणादतिरिच्यते' इत्युक्तेः।

अस्मच्छरीरेऽपि पृष्ठे लगुडप्रहारोऽपि नगण्यो भवति अक्षिपात्रे सूक्ष्मतन्तुकणोऽपि तीव्रवेदनावहो भवति। निरपेक्षा निष्कामा महर्षयः पक्षपातराहित्येनैव दण्डव्यवस्थामकार्षुः। अतः क्षत्रियादीनां कृते साम्राज्यादि-सुखम्, वैश्यानां कृते धनाधिपत्यम्, शूद्राणां कृते विविधशिल्पाधिपत्यम्, ब्राह्मणानाञ्च कृते सर्वत्यागपूर्वकं तपोमयजीवनयापनं संन्यासञ्च व्यदधुः। सुरापानादिषु क्षत्रियादीनां कृते सामान्यमेव प्रायश्चित्तम्। ब्राह्मणानां कृते तु प्राणत्यागमेव दण्डं विहितवन्तः। अभक्ष्यभक्षणेऽपि शूद्र-वैश्य-क्षत्रिय ब्राह्मणा-नामुत्तरोत्तरमधिकाधिकदण्डविधानम् कृतवन्तः।

'अभक्ष्यभक्षणे दण्ड्यः शूद्रो भवति कृष्णलम्।
ब्राह्मण-क्षत्रियविशां चतुस्त्रिद्विगुणं स्मृतम्॥'
(मत्स्ये पुरा० -२२६।१८६-१९)

एवमेव सवर्णागमने शूद्रापेक्षया वैश्यादीनां दण्डाधिक्यम्।

'शूद्रः सवर्णागमने शते दण्ड्यो महीक्षिता।
वैश्यस्तु द्विगुणं राजन् क्षत्रन्तु त्रिगुणं तथा।
ब्राह्मणश्च भवेद्दण्ड्यस्तथा राजंश्चतुर्गुणम्॥'
(मात्स्ये २२६।१७+१८)

वस्तुतस्तु धर्मशास्त्राणि वेदमूलकान्येवेति तत्र पक्षपातकल्पनं व्यर्थमेव। वेदे च ब्राह्मणावगूरणताडनरक्तस्रावादिकं निषिद्धम्।

'ब्राह्मणाय नावगुरेत् न निहन्यात् न लोहितं कुर्यात् एतावता हैनसा भवति। (तै० सं० २।६।१०)

'न ब्राह्मणो हिंसितव्यः' (अथर्व स० ५।१८।६)

'यो ब्राह्मणं देवबन्धुं हिनस्ति, न स पितृयाणमप्येति लोकम्।'
(अथर्व सं० ५।१८।१३

'इष्मा राजा मन्यमानो ब्राह्मणं यो जिघत्सति।
परा तत्सिच्यते राष्ट्रं ब्राह्मणो यत्र जीयते॥'
(अथर्व सं० ५।१६।६)

'तद्वै राष्ट्रमास्रवति नावभिन्नमिवोदकम्।
ब्रह्माण यत्र हिंसन्ति तद्राष्ट्रं हन्ति दुच्छुना॥'
(अ० सं० ५।१९।८)

'तं वृक्षा अपसेधन्ति छायां नो मोपगा इति ।
यो ब्राह्मणस्य सद्धनमभिनारद मन्यते ।'

( अ० सं० ५।१९।६ )

परमपुरुषस्य समष्टिसमाजरूपस्य विराजो मुखस्थानीयस्य ब्राह्मणस्य ताडनं यथा निषिद्धं तथैव व्यष्टिशरीरस्यापि ब्राह्मणरूपे मस्तके ताडनं निषिद्धम् । अपराधिनस्ताडनप्रसङ्गे पृष्ठादिभागे ताडनीयमुत्तमांगे मुखादौ न ताडनीयमिति मनुनोक्तम्—

'भार्यापुत्रश्च दासश्च प्रेष्यो भ्राता च सोदरः ।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वावेणुदलेन वा ॥
पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन ।
अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्विषम् ॥'

( मनुः।८।२९९।३०० )

अत्रापि पक्षपाताऽपरचेत्ताहशस्य हिताबहस्य तस्येष्टत्वात् । राज्ञा ब्राह्मणस्यावध्यत्वेऽपि शास्त्रेण सुरापाने ब्राह्मणस्य मरणान्तं प्रायश्चित्तं विहितमेव । शूद्रस्तु तस्मात्प्रायश्चित्तान्मुक्त एव । गुरुतल्पगामित्वेऽपि मरणान्तमेव ब्राह्मणस्य प्रायश्चित्तम् ।

कैश्चित्तु 'वर्णव्यवस्थया भारते ताहङ्मानवा उत्पादिता ये अस्पृश्या भवन्ति, येषां दर्शनेनापि हिन्दूनामपावित्र्यं जायते । एतया भारते भ्रातरो भ्रातॄणां हन्तारः संवृत्ताः ।' ( कण्टम्परेरी इण्डियन फिलास्फी ३६८ ) तदपि वर्णव्यवस्थाविद्वेषमूलकत्वेनोपेक्षणीयम्, अस्पृश्यताया व्यभिचारमूलकत्वात् । व्यभिचारश्च सर्वत्र सभ्यसमाजे निन्द्य एव ।

सदाचारश्चापि सर्वत्रादरणीयः । अतो व्यभिचारनिवृत्तये सदाचाराभिवृद्धये शास्त्रीया व्यावहारिकाश्च नियमा अपेक्षणीया एव । तदभावे भ्रातृदुहितृभगिन्यादिष्वपि व्यभिचारप्रसक्त्या मानवता मूलभूताया विवाहव्यवस्थाया एव लोपेन पशुत्वापत्तेः । तेन रक्तसाङ्कर्यवर्णसाङ्कर्याद्यनर्थनिवर्हणायैव जातिभेदादिनियमा व्यवस्थापिताः । वेदेऽपि 'तद्य इह कपूयाचरणास्ते श्वयोनिं शूकरयोनिं चण्डालयोनिं वा प्रपद्यन्ते' इति निषिद्धाचरणहेतुकचण्डालयोनिप्राप्तिरुक्ता । तथापि नान्त्यजादिजातिमूलको द्वेषो

भारतीयशास्त्रे क्वचिदप्युपलभ्यते। तेषाम् जातिविभागेऽपि जीवननिर्वाह व्यवस्था सुरक्षिता। पञ्चमहायज्ञेषु प्रतिदिनं भोजनात् प्रागेव चाण्डालस्यापि बलि ( आहार ) दानं नियतम्। धर्मव्याधप्रभृतयोऽन्त्यजा अपि परमादरणीया आसन्नेव। महर्षयोऽपि धर्मव्याधस्य सम्मानं कुर्वते स्म। इदानीमपि ब्राह्मणादयो धर्मव्याधस्योपदेशमङ्गीकुर्वन्त्येव। धर्मव्याधेनापि जातिद्वेषमूलका उपदेशा न जातु कृताः।

'स तस्या आद्यैर्द्वादशभिरक्षरैर्ब्राह्मणमजनयत्।

दशभिर्दशभिर्विट्क्षत्रे।

तस्माद् ब्राह्मणो मुख्यो भवति।

तूष्णीं शूद्रमजनयत् तस्माच्छूद्रो निर्विद्योऽभवत्।'

( अव्यक्तोपनिषद् ५ )

पद्यहवा एतत् श्मशानं यच्छूद्रस्तस्माच्छूद्रसंनिधौ नाध्येतव्यम्।'

मत्तो हि शूद्रः सृष्टः' इति च ब्रह्मसूत्रशाङ्करभाष्ये ( १।३।३८ )

उद्धृतश्रुतिवचनबलादेव ब्राह्मणक्षत्रियवैश्यशूद्राणामुत्पत्तिभेदः कर्मभेदश्चाङ्गीकृतो नात्र रागद्वेषादिमूलको भेदः। निषिद्धकर्मानुष्ठानेन पापोत्पत्त्या नरकादिदुःखोपभोगो भवति। अतएव तेषां तेषां कल्याणार्थमेव निषिद्धकर्मप्रवृत्तिरोधायैव दण्डविधानमपि। तदपि प्रायश्चित्तरूपमेव। व्रतादिरूपप्रायश्चित्तमन्तरापि दण्डविधानेन निष्किल्विषत्वं सम्पद्यते। ब्राह्मणैः सुरापानादिनिमित्तकमरणान्तप्रायश्चित्तं स्वेनैव कर्तव्यम् राज्ञा ब्राह्मणवधस्य निषिद्धत्वात्। शूद्रस्य शम्बूकस्य स्वधर्मविरुद्धतपश्चरणात् ब्राह्मणपुत्रमरणं जातम्। महर्षिभ्यस्तादृङ्मर्यादोल्लङ्घनरूपकर्महेतुकं तदिति ज्ञात्वा भगवता रामेण शम्बूको दण्डितः। समुचितदण्डविधानाद् ब्राह्मणपुत्रस्य पुनर्जीवनं संवृत्तम्। यैस्तु शम्बूकस्य तपसा ब्राह्मणपुत्रस्य मरणं तद्वधेन तदुज्जीवनं न मन्यते तेषां मते श्रीरामकर्तृकशम्बूकवधोऽपि निराधार एव सिद्धयति। यदि तत्र रामायणं प्रमाणं तदा तत्रापि तदेव प्रमाणमस्त्येवेति कुतोऽर्धजरतीयाश्रयणम्।

अपि च कर्मणा वर्णव्यवस्थावादेऽप्युक्तकथा असमता स्यात्। कर्मणा तत्त्वे तु शम्बूकस्य ब्राह्मणत्वमेव स्यान्न शूद्रत्वमिति कुतस्तस्य वधः स्यादित्यपि विभावनीयम्।

वेदाध्ययननिषेधोऽपि शास्त्रमूलको न द्वेषमूलकः। श्रोत्रियब्राह्मणस्यापि मातृदुहितृभगिन्यादीनामपि तन्निषेधात्। न तत्र द्वेषः कल्पयितुं शक्यः, तासां प्रेमास्पदत्वात्। तास्वपि पुरुषाणां द्वेष एव जात इति कम्युनिस्टकल्पनं तु सर्वथा निराधारमेव। वेदार्थरहस्यस्य पुराणेतिहासादिद्वारा शूद्रादीनामप्युपदेशव्यवस्था तु विद्यत एव। तैश्च तद्द्वारा समुन्नतयो मोक्षश्चाधिगन्तुं शक्यन्ते। शम्बूकेन च स्वस्य शूद्रत्वं तपसा सदेहस्य स्वर्गप्राप्त्युद्देश्येन तपश्चरणं स्वीकृतम्।

'शूद्रयोन्यां प्रजातोऽस्मि तप उग्रं समास्थितः।
देवत्वं प्रार्थये राम सशरीरो महायशाः ॥२॥
न मिथ्याऽहं वदे राम देवलोकजिगीषया।
शूद्रं मां विद्धि काकुत्स्थ शम्बूको नाम नामतः ॥३॥

( वा० रा० उ० का ७६ )

अत्रिस्मृतौ च - वध्यो राज्ञा स वै शूद्रो जपहोमपरश्च यः।
यतो राष्ट्रस्य हन्तासौ यथा वह्नेश्च वै जलम् ॥'

स्वधर्मानुष्ठानमेव भगवदाराधनम्। तदुपेक्ष्य निषिद्धाचरणेनैव तस्य दण्डो दत्तः।

यदप्युक्तम् वर्णव्यवस्थाऽत्याचारेणैवोद्विग्नाः कोटिकोटिसंख्याका हिन्दवो यवनाः क्रैस्तवाश्च सञ्जाताः। परं 'कृण्वन्तो विश्वमार्यमित्युपदेशशीलो हिन्दूधर्मो नैकमपि यवनं वा क्रैस्तवं वा हिन्दूधर्मे दीक्षितवान्' तदपि न, मिथ्याप्रलोभनादिभिरेव धर्मान्तरस्वीकारस्यैतिहासिकत्वात्। तेनैव नान्त्यजादीनां किन्तु ब्राह्मणक्षत्रियादीनामपि धर्मान्तरस्वीकरणं दृश्यते। उच्चपदप्रेप्सया धनकाम्यया स्त्रीरागैश्च ब्राह्मणा अनेके विद्वांसो महामहोपाध्यायाश्च क्रैस्तवधर्मे दीक्षिताः। न तेषां वर्णव्यवस्थाकृतं कष्टमासीद्येन तत्कल्पयितुं शक्यम्।

'कृण्वन्तो विश्वमार्यम्' इति मन्त्रांशस्य सर्वस्यार्यत्वसम्पादनं नार्थः। सर्वेषु पशुपक्षिवृक्षादीनामपि सत्त्वात्। न च विश्वशब्दस्य सर्वमनुष्यपरत्वमपि संभवति। वेदे आर्यदासभेदेन मनुष्यद्वैविध्यस्याङ्गीकृतत्वात्। नहि निसर्गतोऽनार्यस्यार्यत्वसंपादनम्, तस्य कृत्रिमत्वेनातात्त्विकत्वात्।

वस्तुतस्तु प्रकरणविरुद्धोऽयमर्थः । यतो यस्य सूक्तस्यायमंशः तस्य सूक्तस्य पवमानसोमो देवता निध्रुविकाश्यपऋषिः । येन मन्त्रेण यस्याः स्तुतिः सा वा सम्बोध्यते सैव तद्देवता ऋषिश्च स्तोता भवतीत्यर्थस्य (७।१।१) निरुक्ते प्रतिपादनात् तेन स्तोत्रा पवमानसोमोऽत्र स्तूयते । तेन विश्वं समस्तं सोममस्मत् कर्मार्थं आर्य्यं भद्रं कृण्वन्तः अराव्णो अदानशीलानपघ्नत अभ्यर्षन्ति अभिगच्छन्ति ।

अनार्याणां नार्य्यत्वं संभवतीति वेद एवोक्तम्—

'अहमत्कं कवये शिश्नथं हथैरहं कुत्समावमाभिरूतिभिः ।
अहं शुष्णस्य श्नथिता वधर्यमं न यो रर आर्यं नाम दस्यवे ॥'
(ऋ. सं १०।४९।३

अहम् इन्द्रः । अत्कम् आच्छादक शत्रुपुत्रम् । कवये उशानसे ऋषये, तस्य सुखवासाय हथैः बहुप्रकारैः प्रहारैः । शिश्नथम् ताडितवानस्मि । अहम् । कुत्सम् एतन्नामकमृषिम् अभिरूतिभिः बधादिरूपैः । आवम् अरक्षम् । शुष्णस्य एतन्नामकस्यासुरस्य श्नथिता हिंसिता । वधः वज्रम् । यमम् प्रहरणाय नियमितवानस्मि । अहम् । आर्यम् आर्याणां देयम् । नाम । दस्यवे । न । ररे दत्तवानस्मि । इत्यर्थकेन मन्त्रेण सिद्ध्यति यदिन्द्रो दस्यवे आर्यनामापि न ददातीति ।

यत्तु वर्णव्यवस्थायां सवर्णासवर्णयोर्भेदेन तयोरुत्कर्षापकर्षाभ्यां राष्ट्रस्य पूर्णस्वातन्त्र्यमेव व्याहतम्भविष्यति । तत इदानीं तु वर्णभेदमपोह्य क्रैस्तवमौहम्मदैःसाकमप्यभेदः संपादनमावश्यकमिति तदेतद्व्याहतम् । यतो वर्णव्यवस्थापनोदनेन हिन्दूनां यवनादिषु संनिवेशे हिन्दूधर्मलोप एव स्यात् । ततः कुतो विश्वस्यार्यत्वसम्पत्तिस्वप्नपूर्तिः ?

यदप्युक्तम् 'वर्णव्यवस्थायां सत्यां हिन्दुत्वलोपोऽवश्यंभावी, हिन्दुत्ववर्णव्यवस्थयोः सहावस्थानासंभवात् । हिन्दुत्वरक्षणमिष्टं चेत् वर्णव्यवस्थासमापनीयैवेति, तन्न, कोटिकोटिवर्षेभ्यः उभयोः सहभावित्वदर्शनेन तद्विरोधकल्पनस्य मौर्ख्यमूलकत्वात् । यत्र वर्णव्यवस्थाया विलोपस्तत्र हिन्दुत्वाभावात् । वर्णव्यवस्थालोपे हिन्दुत्वलोपप्रसङ्गस्यैव प्रामाणिकत्वात् ।

केचित्तु-'वर्णव्यवस्थापनं दण्डविधानायत्तं न स्वाभाविकम्। नहि केचित्सद्गुणास्तत्र तिष्ठन्ति। येषां बलेन तत्स्वत्वमनिवार्यं स्यात। मनुष्यप्रकृतिर्विपरीतत्वात्। सा न स्वपद्धत्यां स्थातं शक्नोतीति, तदपि निःसारम्। तथात्वे तन्निवारण-प्रयत्नस्य वैयर्थ्यात्। दृश्यन्ते चानेके तदर्थं प्रयतमानाः। तदनाशं विलोक्य चिन्ताविष्टाश्चानेके रजनीकान्त-सन्तराम प्रभृतयः।

वस्तुतस्तु काचिदपि तादृशी व्यवस्था नासीन्नास्ति, न भविष्यति या नियममन्तरा तदुल्लङ्घनावरोधकदण्डविधानमन्तरा च स्वसद्गुणेनैव प्रचलेत्। संसारे सर्वा अपि शासनव्यवस्था निग्रहानुग्रहसापेक्षा एव प्रचलन्ति। तदर्थमेव सर्वत्र कार्यपालिका न्यायपालिका आरक्षिदलानि सेना-कारावासादिव्यवस्था दृश्यन्ते। तथाभूता व्यवस्था तु चार्वाकस्यैव शोभते या स्वयमेव प्रचारमन्तरा सर्वत्र संसारे प्रवर्धते।

वस्तुतो यथा जलस्याधोगामिनी प्रवृत्तिः स्वभाविकी प्रयत्नानपेक्षा च, तदुन्नयनायैव प्रयत्नापेक्षा भवति, तथैवाधोगामिनी प्रवृत्तिर्मानवानामपि स्वभाविकी। ऊर्ध्वाभिमुखी कल्याणमयी प्रवृत्तिस्त्ववश्यं नियन्त्रणमपेक्षते। तदर्थमेव सर्वत्र सच्छिक्षासदाचारप्रसारव्यवस्था भवति। नानाविधेषु प्रतिबन्धेषु सत्स्वपि जनानामधोगामिनी प्रवृत्तिर्जायते। वर्णव्यवस्था प्रकृति-सिद्धाऽनादिप्रवृत्ता विपरीतेऽपि काले फलदा सती प्रचलत्येव। तदनुगुणायां शासनव्यवस्थायां सम्यक् प्रवर्ततेऽन्यदा क्षीणशक्तिः कथञ्चिदेव जीवति। विविधदोषसंसृष्टा विनाशाभिमुखीव तिष्ठति।

केचित्तु "जीविकासाधककर्मवरणमेव वर्णशब्दार्थः। स च न वंश-विशेषजन्ममूलकजातिनिबन्धनः। तेन कर्मणैव वर्णव्यवस्था युक्ता, न जन्मना, तस्या अव्यावहारिकत्वात् सङ्घर्षहेतुत्वादध्यात्मशास्त्रविरुद्धत्वाद-हितकरत्वाच्च। जन्मना वर्णव्यवस्थायामैक्यबुद्ध्यभावात् संघशक्तिह्रास-परस्परस्नेहाद्यभावादीर्ष्यामात्सर्यं द्वेषादिविततिः। कर्मणा तत्त्वे तु तद्वैप-रीत्येन संघटन-संवदन-संगमनादि विस्तृतिः। यदि कर्मणा सा न भवेत्तदा 'पृथिव्यां सर्वमानवाः' इति मनूक्तदिशा मानवधर्मस्य सर्वोपकारकत्वं कथं भवेत्" इति, तदप्यविचारितरमणीयम्, विपरीतस्यैव सुवचत्वात्। जीविका-

वरणे यथेष्टाचाराभ्युपगमे सर्वत्र सङ्करावश्यम्भावित्वेन संघशक्तेरुच्छेद एव स्यात्। तस्माज्जन्ममूलकजात्यैव जीविकावरणनियमनमप्यावश्यकमेव। कर्मणा व्यवस्थाऽपि शास्त्रे जन्मनिबन्धनैवोक्ता। अतएव ब्राह्मणादिवर्णभेदेन कर्मभेदः। क्षत्रियस्यैव राजसूयाधिकारो नान्येषाम्। ब्रह्मक्षत्रियविशां वैदिकेषु कर्मस्वधिकारो न शूद्राणाम्। वैदिकेषु कर्मविशेषेषु च रथकारनिषादस्थपतीनामेवाधिकारो नान्येषाम्। तावताऽपि न कर्मणां महिमापचीयते। न केवलं वर्णानामपि तु संसारसृष्टिस्थितिप्रलयानामपि कर्ममूलकत्वाङ्गीकारात्। यदि प्राक्कालिकैः कर्मभिरेव ब्राह्मणादियोनिषु जन्म प्राप्त्या ब्राह्मणादिवर्णप्राप्तिस्तदापि कर्म्म वर्णव्यवस्था वर्णयितुमशक्या।

परन्तु नैषा पद्धतिः कर्मवर्णवादिसंमता। तद्रीत्या तु जन्मानन्तरम् जीविकावरणाद्वर्णलाभः। जन्ममूलकमिति प्रश्नस्तु तेषामसमाधेय एव। अतएव कर्मणा जन्म, जन्मना वर्णः, वर्णानुरोधीनि च कर्माणीत्येव शास्त्रसंमत पन्थाः। तदुक्तम्—

'कर्मप्रकारेण तथा जात्या जात्यां प्रजायते।
तिष्ठेत् कर्मफलं यावत् व्रजेत्कमक्षये पुनः॥"
(म० भा० शा० प०)

'सति मूले तद्विपाको जात्यायुर्भोगाः" अत्र जन्मायुर्भोगानां प्राक्तनानि कर्माण्येव मूलम्। तेन प्राक्तनकर्मानुसारि जन्ममूलिकैव वर्णव्यवस्था। स्ववर्णानुसारेण जीविकार्थं लौकिककर्मकरणमैहिकामुष्मिकफलाय च शास्त्रैकगम्यश्रौतस्मार्तधर्माचरणमनिवार्य्यमेव। आपत्काले तत्त्यागे परधर्मानुष्ठाने च पातित्यम्। तत एव

'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।" (गीता १८।२५)
'सहजं (जन्मना सहजातं) कर्म कौन्तेय सदोषमपि न त्यजेत्'॥ (१८।४८)
'श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्॥' (३।३५)
'स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा।"
(स्वस्य भावो जन्मलाभः, तेन सहजातेन, (शास्त्राचारादिभिर्निबद्धः।
'कर्त्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत्।'
'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥' गी० ३।३५

वरं स्वधर्मो विगुणः न पारक्यः स्वनुष्ठितः।
परधर्मेण जीवन् हि सद्यः पतति जातितः॥
(मनु. १०।९०)।

इत्यादीनि वचनानि सङ्गच्छन्ते। तेन जन्मानन्तरं क्रियमाणैर्जीविका-साधकैः कर्मभिर्न वर्णनियमनम्, किंतु जन्म-वर्ण निबन्धनानि प्राक्तनानि कर्माण्येव। तात्कालिककर्मानुरोधेन वर्णव्यवस्थाङ्गीकारे तु स्वधर्म परधर्मभेद एव विपरिलुप्येत। जन्मना वर्णव्यवस्थायां तु यस्य यस्मिन् वर्णे जन्म जात-तद्वर्णानुसारी धर्मस्तस्य स्वधर्मो भवति, तद्भिन्नस्तु तस्य परधर्मो भवति।

## विविधभेदभिन्ना सृष्टिः

पूर्वं जडचैतन्यभेदेन सृष्टिद्वैविध्यम्। जडसृष्टावपि महत्तत्त्व-महंतत्त्वं, पञ्चतन्मात्रा इन्द्रियाणि मनश्च। पृथिव्यामपि सुवर्णरजतलौहताम्रादिभेदेन नैकविधा धातवः।

चैतन्यसृष्टौ उद्भिज्ज-स्वेदजाण्डजजरायुजभेदेन चातुर्विध्यम्। वृक्षेषु निम्बाम्रपनसादिभेदा अन्नेषु यवगोधूमादिभेदाश्च दृश्यन्ते। पक्षिष्वपि शुकपिकमयूरादिभेदः, पशुषु गोमहिषहस्त्यादिभेदा देवेष्वपि विद्याधराप्सरोगन्धर्वकिन्नरपिशाचगुह्यकभेदास्तथैव मनुष्येष्वपि ब्राह्मणक्षत्रियवैश्य-शूद्रभेदाः सन्त्येव, 'ब्राह्मणोऽस्य मुखमासीत् बाहूराजन्य' इत्यादि मन्त्र-वर्णात् अत्र परमेशस्य मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिरुक्ता।

ननु ब्राह्मणादीनां मुखादिरूपतैव प्रोक्ता न मुखादिभ्य उत्पत्तिरुक्तमन्त्रेण सिद्ध्यतीति चेन्न,-पद्भ्यां शूद्रो अजायत' इत्यनुरोधेन—

'लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत्॥' (म. १।३१)

इति मनुना मुखादिभ्य उत्पत्तिवर्णनात्।

यज्ञसिद्ध्यर्थमनघान् ब्राह्मणान् मुखतोऽसृजत्।
असृजत्क्षत्रियान् बाह्वोर्वैश्यानप्यूरुदेशतः॥
शूद्रांश्च पादयोः सृष्ट्वा तेषाञ्चैवानुपूर्वशः।
यथा प्रोवाच भगवान् ब्रह्मयोनिः पितामहः॥ इति हारीतश्च-अ. १

यदुक्तम्-मुखादिभ्यो ब्राह्मणादिमुत्पत्तावभ्युपगम्यमानायां ब्राह्मणानां मुखा-

कारापत्त्या वर्त्तुलत्वापत्तिः, क्षत्रियाणां भुजाकारापत्त्या प्रलम्बमानत्वादिकं स्यात्, कार्य्यस्य कारणसारूप्यदर्शनादिति चेन्न। तथात्वे समेषां योनेरुत्पत्त्या योन्याकारत्वापत्तेः। नहि बटबीजसमानाकृतिरेव वटवृक्षो भवति। तथा गोधूमयवाद्याकारास्तद्वृक्षा दृश्यन्ते।

पुराणेषु 'ब्रह्माननं' (श्री० भा० २ स्क १।३७) इति वचनेन-विराट्पुरुषस्याननं ब्रह्मा प्रोक्तः। तस्मादेव ब्राह्मणानामुत्पत्तिरुक्ता। एवमेव मनुनाप्यङ्गीकृतम्। तथाहि—

> मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्।
> प्रचेतसं वसिष्ठञ्च भृगुं नारदमेव च॥ (मनुः १।३५)
> एवमेव 'इन्द्रादयो बाहव आहुरुस्राः।' श्री० भा० २।१।२६)

इति भागवते परमेश्वरस्य बाहव उक्ताः इन्द्रादयः तेभ्य एवेन्द्रचन्द्रसूर्य्यादिभ्यः सूर्य्यचन्द्रवंशीयानां क्षत्रियाणामुत्पत्तिः प्रसिद्धैव।

यदुक्तम् अस्य मुखं किमासीत् किं बाहू इत्यादि रूपेण प्रश्नाः सन्ति तदनुरूपेणोत्तरेण भाव्यम्। तथा ब्राह्मणोऽस्य मुखं बाहूराजन्य इत्येवोत्तरं युक्तम्। उत्पत्तिवर्णनन्तु प्रश्नादनुरूपमेव' इति. तन्न, भावानवबोधात्। तथाहि पुरुषमेधयज्ञप्रसङ्गेनेदं पुरुषसूक्तमायातम्। तत्र-

> 'तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः।
> तेन देवा अयजन्त साध्या ऋषयश्च ये॥ (शु. यजु. ३१।९)

इति मन्त्रे इतिहासवर्णनम् पुरुषयज्ञवर्णनम्, सृष्टिवर्णनञ्च। तथा च ब्राह्मणोऽस्य मुखमिति प्रथमान्तवर्णनेन ब्राह्मणादीनां मुखरूपता। पद्भ्यामित्यनुरोधेन मुखादीनां पञ्चम्यन्तरूपमपि स्वीकार्य्यम्। तेन मुखादिजत्वाद् ब्राह्मणादीनां मुखादिरूपता ज्ञायते। तेनेश्वरमुखपूजादिप्रसङ्गे ब्राह्मणादिपूजा सिद्ध्यति। 'चन्द्रमा मनसो जात' इत्यादि रूपेण सृष्टिवर्णनं स्पष्टमेव।

यदुक्तम्—पश्वादिभेदवन्मनुष्येषु भेदोनोपलभ्यते तत्सत्यम्। पश्वादिवद्बाह्यभेदाभावेऽपि तदभ्यन्तरभेदसत्वेन जातिभेदे बाधाभावात्। हीरकादिरत्नभेदस्य साधारणजनागम्यत्वेपि रात्निकगम्यत्वत् ब्राह्मणादिभेदस्यापि विशिष्टमहर्ष्यादिगम्यत्वम्, वेदादिशास्त्रोपदेशगम्यत्वञ्च। जातिभेदसत्त्वादेवैकं हीरकरत्नं बृहदाकारमपि स्वल्पमूल्यलभ्यम्।

अपरं लघ्वपि बहुमूल्यं भवति। यथा वा लोहधातौ सामान्यतयैक-रूपेऽपि कार्ष्णायस-कान्तिसारादिभेदेन महान् भेदः। तथापि सर्वे भेदाः नहि सर्वगम्या भवन्ति। यथा तत्तद्विशेषज्ञा एव तत्तद्भेदान् जानन्ति तथैव तपःश्रुतयोनिविशिष्टा एव ब्राह्मणादिभेदान् जानन्ति। अतएव परशुरामः कर्णस्य धैर्य्यमालोक्य क्षत्रियत्वं ज्ञातवान्। गौतमश्च सत्यवादित्वेन जाबालस्य ब्राह्मणत्वं बुबुधे। तदुक्तम् —

पित्र्यं वा भजते शीलं मातुर्वोभयमेव वा।
न कथञ्चन दुर्योनिः प्रकृतिं स्वां नियच्छति॥ ( मनुः ३।१० )

गुणाधिक्येनोत्कर्षः तन्न्यूनत्वेन चापकर्षो भवति। घृतदुग्धाक्तत्वेन चणकबीजान्मधुरचणकोत्पत्तौ सत्यामपि नहि गोधूमत्वं भवति न वा गुण-रहितस्यापकृष्टस्यापि गोधूमस्य चणकत्वं जायते। नह्याम्रस्य लघुत्वेन जम्बीरत्वं सम्पद्यते, न वा निम्बस्य दीर्घकाण्डवत्त्वेऽपि तालवृक्षत्वं भवति, तथैव साद्गुण्यवतोऽपि शूद्रस्य ब्राह्मणत्वं न संभवति, न वा दुर्गुणस्यापि ब्राह्मणस्य शूद्रत्वं संपद्यते। हंसस्य लघुत्वेऽपि न बकत्वं न वा बकस्य शुकत्वं काकस्य कोकिलत्वं कोकिलस्य वा काकत्वम्। बहुक्षीराया अपि महिष्या न गोत्वमल्पक्षीराया अपि गोरजात्वं न संभवति। जातेः कर्ममूलकत्वेन कर्मक्षयमन्तरा न जातिपरिवर्त्तनं संभवति।

तदुक्तम् 'सति मूले तद्विपाको जात्यायुर्भोगाः' ( यो. सू. पा. २१३ )

यः प्रारब्धकर्म परिवर्त्तने समर्थः स एव शूद्रत्वं ब्राह्मणत्वं वा निराकृत्य शूद्रत्वं ब्राह्मणत्वं वा संपादयितुं शक्नोति। सतु गर्दभमपि मनुष्यं निर्मातुं शक्नोत्येव। ईश्वरोऽपि नियमानुसारेणैव कार्यं करोति, न यथेच्छम्। अत एव नान्यकृतैः कर्मभिरन्यः संसृज्यते। कर्मफलयोः समानाकरण्यनियमात्। यथा-केनचिन्न्यायशास्त्रिपरीक्षोत्तीर्णो, केनचिच्च बी. ए. परीक्षोत्तीर्णो तयोः परस्परं संमत्याऽपि प्रमाणपत्रपरिवर्त्तनं न संभवति, तथैवयाभ्यां स्वस्वकर्मभिः ब्राह्मण्यं शूद्रत्वं वा प्राप्तम् तयोरिच्छायामपि जातिपरिवर्त्तनं न संभवत्येव। कश्चित् एम. ए. परीक्षोत्तीर्णः स्वच्छवासा धूमशकटस्थतृती-यश्रेणीभाटकप्रमाणपत्रं गृहीत्वा प्रथमश्रेण्या आसन्द्यामास्थितः विवेचकेन (चेकर) तृतीयश्रेणीभाटकपत्रं दृष्ट्वा ततो निष्कासितः। तत्रत्यान्यापेक्षया

वावदूकोऽपि विद्वानपि प्रमाणपत्राभावान्निष्कासितः। तत्सत्वादन्येषां तदवस्थानम्। तथैव कर्मवशाद्येषां ब्राह्मणादियोनौ जन्म तेषामेव तत्कोटौ प्रवेशो, नान्येषाम् साद्गुण्यवतामपि तत्कोटिप्रवेशः।

ननु यवनादिधर्माङ्गीकारे जातिपरिवर्त्तनं दृश्यत एवेति चेन्न जातिशब्दस्य जन्मार्थकत्वेन पूर्वदेहत्यागदेहान्तरग्रहणेनैव जन्मप्राप्तिसंभवेन तदन्तरा तदसंभवात्। यवनधर्माङ्गीकारेण व्यवहारदृष्ट्या तस्याब्राह्मणत्वेऽपि यावद्देहपातं तस्यापि ब्राह्मणत्वानपायात्। हरिणव्याघ्रादिमरणेऽपि मृत-शरीरमपि हरिणादिकमेव प्रत्येति जनः। मृतोपि व्याघ्रोऽव्याघ्रो गर्दभो वा भवति। तथा च यावद् ब्राह्मणदेहारम्भकपरमाणुविघटनपूर्वकजात्यन्त-रारम्भकपरमाणुसंघटनेन जात्यन्तरं नारप्स्यते तावदधमब्राह्मण्यमेव स्थास्यति, तेनैव तदन्नादिकमग्राह्यं भवति। मधुरमोदकादिर्मूत्रादिनालिकास्पर्शेन यथाऽग्राह्यो भवति तथैव प्रकृतेऽपि ज्ञेयम्। मूत्रबिन्दुस्पर्शेन पानीयकलशस्या-शुद्धिःसर्वैरप्यभ्युपेयत एव।

यदुक्तम् 'यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् मुखं किमस्यासी' दित्या-दिमन्त्रस्यायमर्थः -- सर्वशक्तिमान् पुरुषः परमेश्वरः यस्य सामर्थ्यं कतिधा अनेकधा विविधमकल्पयन्। अस्य मुखं किमासीत्। अस्य-मुख्यगुणैः संसारे किमुत्पन्नम् किं बाहू बलवीर्य्यशौर्य्यादिभिः किमु-त्पन्नम्, किमूरू व्यापारादिभिर्मध्यमगुणैः किमुत्पन्नम् किं, पादौ मौर्ख्यादिभि-रपकृष्टगुणैः किमुत्पन्नमेतत्प्रश्नचतुष्टयस्योत्तरम् ब्राह्मणोऽस्य मुखमासी दित्यादिना अस्य पुरुषस्याज्ञानुसारं विद्यासत्यभाषणादिभिः श्रेष्ठगुणैः, कर्मभिश्च ब्राह्मणो ब्राह्मणवर्ण उत्पन्नः। मुख्यैर्गुणकर्मभिः सहितो मनुष्यो ब्राह्मण उच्यते। तस्येश्वरस्य बलपराक्रमादिभिर्गुणैर्युक्तो मनुष्यः राजन्यः क्षत्रियो भवति। कृषिव्यापारविविधभाषाज्ञानपशुपालनादिभिर्वैश्यो भवति। मौर्ख्यादिभिः गुणैः शूद्रो वर्णो जायते' इति तदेतदापातरमणीयम्, व्याकरण-काव्यकोषादिविरुद्धत्वात्। यथा लवणार्थकस्य क्षारस्य क्षारमित्यर्थः, ऊँट इत्यस्य उष्ट्र इत्यर्थः तथैव मुखमित्यस्य मुख्यमित्यर्थः प्रमाणविरुद्ध एव। बाहू इत्यस्य बलपराक्रमादिरपि नार्थः, यथा स्थाली शब्दस्य कोविदारो नार्थः, मषकस्य गजो नार्थस्तद्वत्। ऊरू इत्यस्य कृषिव्यापारादिरपि नार्थः, पद्भ्याम्

इत्यस्यापि ईश्वरस्यापकृष्टा गुणा इति नार्थः, निष्प्रमाणत्वात् । यथा करपादिकाया न्यायाधीशो नार्थः यथा स्थालीशब्दस्य माषमासीयवृष्टयन्तरीयमौर्ख्यं नार्थस्तद्वत् ईश्वरे मौर्ख्यादयो निकृष्टा अपि गुणा भवन्ति सर्वधर्मविरुद्धम् । मौर्ख्यादिगुणावत्त्वे परमेश्वरस्यापि मौर्ख्यमापत्स्यते । ईश्वरे निकृष्टा गुणाः सन्तीति न कैश्चिदपीश्वरवादिभिरभ्युपेयते । मन्त्रार्थस्तु मनुः (१।३१) (हरीत १।१२-१३) सायणमहीधरादिभिश्च लिखित एव युक्तः ।

यदुक्तम्---

स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।

महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः । ( मनुः २।२८ )

इति स्वाध्यायव्रतादिभिर्ब्रह्मसम्बन्धो देहो भवति' इति, तदपि तुच्छम्, भावानवबोधात् । स्वाध्यायादिभिर्ब्रह्मप्राप्तियोग्या तनुर्भवतीत्येवार्थः । ब्राह्मी इत्यस्य ब्राह्मणदेह इति नार्थः प्रमाणविरुद्धत्वात् । गुणस्वभावावपहाय केवलैः कर्मभिः ब्राह्मण्यप्राप्तिरिति गुणकर्मस्वभाववादिसिद्धान्तविरोधश्च । यदुक्तम्-

शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।

क्षत्रियाज्जातमेवन्तु विद्याद्वैश्यात्तथैव च ॥ ( मनु १०।६५ )

इति रीत्या गुणकर्मानुसारेण जातिपरिवर्त्तनं मनुसंमतं' तदतीव मन्दम्, तत्र गुणकर्मप्रसङ्गाभावात् ।

शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते ।

अश्रेयान्श्रेयसीं 'जातिं' गच्छत्यासप्तमाद्युगात् ।' इति ।

तदव्यवहित (श्लोके ६४) ब्राह्मणात् शूद्रकन्यायां जाता पारसव जातीया कन्या भवति । सापि चेद् ब्राह्मणेनोढास्यात्ततोऽपि ब्राह्मणादेव कन्यैव जायेत, सापि ब्राह्मणात् कन्यामेव जननेदेवं सप्तमी कन्या मातृदोषमपहाय शुद्धा ब्राह्मण कन्या भवति । शूद्रो ब्राह्मणतामेति इत्यस्यायमेवार्थः । यदि च शूद्राया ब्राह्मणात् पुत्रः स्यात् । स चापि शूद्रया संसृष्टः पुत्रं जनयेत् । सोऽप्येवं शूद्रायां पुत्रं जनयेत्तदा सप्तमः शुद्धः शूद्रो भवति अयमेव ब्राह्मणश्चैति शूद्रतामित्यस्यार्थः । एवमेव क्षत्रियवैश्ययोरपि ज्ञातव्यम् ।

जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा ।

व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥'याज्ञ आ.अ.९६

इतिरीत्या ब्राह्मणस्य सप्तमे क्षत्रियस्य षष्ठे वैश्यस्य पञ्चमे पर्य्याये वर्ण-परिवर्त्तनं भवति। मूर्धावसिक्तादीनां पूर्वोक्त रीत्यापञ्चमे षष्ठे पञ्चमे पर्य्याये शुद्धपितृजातिप्राप्तिर्भवति। यदि तदुत्पन्नकन्यानां ब्राह्मणादिभिरुत्कृष्टवर्णैः सम्बन्धो भवेत् वैपरीत्येनोत्कृष्टजातिनाशो निकृष्टजातिप्राप्तिश्च भवति। रजोवीर्य्यपरिवर्त्तनेन प्राकृतिकजातिपरिवर्त्तनमन्यत्रापि प्रमीयते। यथा छाग्यां मृगस्य वीर्येण जातायां मृगेणैव गर्भाधानं स्यादेवं पुनः मृगणैव संबन्धे सप्तमे पर्य्याये शुद्धः मृगो भवति। एवमेव मृग्यां छागेन गर्भाधाने कृते कन्योत्पद्येत पुनश्च छागेन संबद्धा स्यात्तत्रापि सप्तमे शुद्धा छागजातिरुत्पद्यते।

यथाकाष्ठमयो हस्ती यथा काष्ठमयो मृगः।
यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति॥(मनु॰अ॰ १५७)

इति वचनेनापि नाध्ययनादिगुणयुक्तब्राह्मण्यं तद्रहितस्याब्राह्मण्यं सिद्ध्यति। तदर्थस्तु यथा काष्ठमयो हस्ती काष्ठमयो मृगो नाम मात्रेण हस्त्यादयो भवन्ति न कार्यक्षमाः, तथाऽध्यायनादिशून्यो ब्राह्मणो नाममात्रेण ब्राह्मणो भवति न ब्राह्मणोचितकार्य्यकरणक्षमः। मनूक्तरीत्या तु जन्मनैव ब्राह्मणस्य श्रैष्ठ्यमुक्तम्।

'भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः॥ (मनुः १।९६।)

अत्र जन्मनैव ब्राह्मणस्य श्रैष्ठ्यमुक्तम्।

ब्राह्मणेषु च विद्वांसः विद्वत्सु कृतबुद्धयः।
कृतबुद्धिषु कर्त्तारः कर्त्तृषु ब्रह्मवेदिनः॥ (१।९७ मनुः)

ब्राह्मणेषु विद्वांसः श्रेष्ठाः इत्यनेन विद्वांसोऽपि ब्राह्मणा भवन्तीति सिद्ध्यति।

'ब्राह्मणो जायमानो हि पृथिव्यामधिजायते।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये॥ (म॰ १।९९)

जायमान एव ब्राह्मणः पृथिव्यां श्रेष्ठ उक्तः।

अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतंमहत्॥
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतंमहत्॥ (म॰ ९।३१७)

अत्र गुणकर्मरहितोऽपि ब्राह्मणो जन्मना भवतीति स्पष्टमुक्तम्।

यत्तु-'जन्मना जायते शूद्रः संस्कारैः द्विज उच्यते ।
वेदपाठी भवेद्विप्रः ब्रह्म जानाति ब्राह्मणः ।'

इत्यनेन गुणकर्मादिमूलक ब्राह्मण्यमुच्यते तदपि न क्वापि स्मृतिष्वस्य श्लोकस्यानुपलम्भात् ।

'जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव च ।। ( अत्रि-१३८ )

अत्र तद्वैपरीत्येन जन्मनैव ब्राह्मण्यमुक्तम् ।

'धर्मचर्य्यया जघन्यो वर्णः पूर्वंपूर्वंवर्णमापद्यते जातिपरिवृत्तौ ।' 'अधर्मचर्य्यया पूर्वो वर्णो जघन्यं वर्णमापद्यते जातिपरिवृत्तौ' इति आपस्तम्बसूत्राभ्यामपि धर्मचर्य्ययोत्कृष्टवर्णप्राप्तिरधर्मचर्य्यया निकृष्टजाति-प्राप्तिश्च जातिपरिवृत्तौ जन्मपरिवर्त्तन एवोक्ता । अत्र जातिशब्देन जन्मैव प्रोक्तं न तु जातिः'स्तस्यानित्यत्वात्तदाश्रयव्यक्तिसत्त्वे परिवर्त्तनानर्हत्वात् ।

यच्चाप्युक्तम् 'ब्राह्मणस्त्रयाणां वर्णानामुपनयनं कर्त्तुमर्हति, राजन्यो द्वयस्य, वैश्यो वैश्यस्यैवेति शूद्रमपि कुलगुणसम्पन्नं मन्त्रवर्जमित्येके' इति सुश्रुत-सूत्रस्थानीयवचनेन ब्राह्मणस्त्रयाणां क्षत्रियो द्वयोर्वैश्योवैश्यस्योपनयनं कृत्वा-ऽध्यापयितुमर्हति । कुलगुणसम्पन्नस्य शूद्रस्यापि वेदमन्त्रवर्जमध्यापनमित्येके इति शूद्राणां वेदाध्ययनं सिद्ध्यतीति तन्न; मनुस्मृतिविरोधात् । चिकित्साग्रन्थ सुश्रुतस्य मन्वादिविरुद्धशूद्रोपनयनब्राह्मणेतराचार्य्यत्वबोधने सामर्थ्या-भावात् ।

धर्मेप्सवस्तु धर्मज्ञाः सतां वृत्तमनुष्ठिताः ।
मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च, ( १०।१२७ मनुः )

इत्यनुरोधेन मन्त्रब्राह्मणात्मकवेदरहितस्ववर्णोचितकर्माचरणेनैव तेषां प्राशस्त्योक्तेः ।

किञ्च गुणकर्मस्वभावानुरोधेन ये वर्णव्यवस्थां कलयन्ति तैरपि गुणपदेन किं सत्त्वरजस्तमांसि गृह्यन्ते, नैयायिकोक्ता वा चतुर्विंशतिगुणाः, इन्द्रियाणि, तद्विषया वा, रज्जुर्वा । किमत्र विवक्षितमिति नोक्तम् । एवं कर्मशब्देनापि नैयायिकानामुत्क्षेपणापक्षेपणादयः, सञ्चितप्रारब्धक्रियमाणादयो, दर्शपूर्णमास-चातुर्मास्यादयो वा लौकिकानि वा कर्माणि गृह्यन्त इति विशिष्य नोक्तम् ।

यदि षडङ्गवेदाध्ययनं तदनुगुणानामग्निहोत्रदर्शपूर्णमासचातुर्मास्यज्योतिष्टोमादीनामनुष्ठानं शमदमादयश्च स्वभावा ब्राह्मण्यप्रयोजकाः स्वीक्रियेरन् तदा नाद्यत्वे कोपि ब्राह्मण्यमासादयितुं शक्नुयात्। एवमेव क्षत्रियवैश्यशूद्रादीनामपि दौर्लभ्यमेव। यथा कथञ्चित्सामान्यकर्मणां वर्णव्यवस्थाप्रयोजकत्वे अव्यवस्थैव स्यात्, कर्मणां क्षणिकत्वात्। कश्चिदपि मलक्षालनादिसमयेऽन्त्यजो गृहमार्जनादिसमये शूद्रः, सन्ध्याभजनादिसमये ब्राह्मणः, श्वादिनिवारणार्थं दण्डग्रहणे क्षत्रियः, शाकादिक्रयणसमये वैश्यः स्यात्।

किञ्च राजसभया विद्वत्सभया प्रदत्तब्राह्मण्यादिप्रमाणपत्रोपलम्भात् प्रागेव अष्टवर्षं बालमेव ब्राह्मणमुक्त्वोपनयनं विदधाति श्रुतिः। तेन स्पष्टं ज्ञायते यज्जन्मनैव ब्राह्मण्यादिकं भवति, न तु गुणकर्मादिसापेक्षं प्रमाणपत्रसापेक्षं वा तत्। दशदिवसीयस्य बालकस्य गुणकर्मादिमूलकं ब्राह्मण्यादिकं सर्वथा दुर्ज्ञेयमेव। तथापि जन्मसिद्धब्राह्मण्यादिसापेक्षं नामकरणं विधीयते। शर्मान्तं ब्राह्मणस्य, वर्मान्तं क्षत्रियस्य, गुप्तान्तं वैश्यस्य नामकरणं विधीयते। सुधारकैर्दयानन्दादिभिश्च ब्रह्मक्षत्रविशामेवोपनयनादिकमङ्गीक्रियते तेषामेव च वेदारम्भसमावर्त्तनादिमुक्तम्, न शूद्राणाम्। तथा शूद्राः उपनयनवेदाध्ययनादिकं विना कथं ब्राह्मणाः क्षत्रिया विशो वा भविष्यन्ति? यदि च द्वित्राणि प्राकृतानि पुस्तकानि पठित्वैव सर्वजातीयेभ्यो ब्राह्मण्यादिकं सम्पादयिष्यते तदा तन्माहात्म्यमतीव न्यक्कृतं भविष्यति।

यच्च गुणकर्मानुरोधेन ब्राह्मण्यादिकं निर्माय बालकबालिकादिपरिवर्त्तनेन वंशोच्छेदसेवादिविच्छेदादिशंकानिवारणं कृत तत्तुच्छम्। ब्राह्मणपुत्रस्य चर्मकारपुत्रत्वसंपादने चर्मकारपुत्रस्य ब्राह्मणत्वसम्पादने ममत्वाभावापत्त्या लोकव्यवहारविच्छेदध्रौव्यात्, वेदादिप्रमाणशून्यत्वाच्च। समेषां समानाधिकारप्रदानं निष्प्रमाणमेव।

मन्वादिभिस्तु—अध्यापनमध्ययनं यजनं याजनं तथा।<br>
दानं प्रतिग्रहश्चैव षट् कर्माण्यग्रजन्मनः, ( म. १,८८ )

इत्यादिभिरग्रजन्मनो ब्राह्मणस्य षट्कर्माण्युक्तानि। आधुनिकैस्तु य एतानि करोति तस्य ब्राह्मण्यमुच्यते। एवमेव क्षत्रियादीनां यानि कर्माणि मन्वादिभिरुक्तानि तेषामेव करणात्कस्यचित्क्षत्रियत्वमुच्यते। लोकविरुद्ध-

मपि तत्। लोके शासनाधिकारिभिर्येषु कार्येषु ये नियुक्तास्त एव तानि कर्तुं प्रभवन्ति। नहि तत्कार्यकरणक्षमत्वेऽपि स्वेच्छया कश्चित्तत्र प्रवर्तितुं प्रभवति। नहि शक्तत्वादेव कश्चिन्न्यायधीशो राज्यपालो वा भवति। स्वेच्छया कस्यचित्तद्व्यवहारे दण्डयत्वमेव भवति।

'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥' (म. २.१६८)
'न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद्बहिष्कार्यः………' (म. २. १०३)॥

इत्यादिवचनैरपि न कर्मणा शूद्रवर्णत्वं भवति। त्वतल्वतुप्रत्ययविरोधात्। तथा 'साहित्यसंगीतकलाविहीनः। साक्षात्पशुः पुच्छविषाणहीनः।' इति वस्तुतस्तुल्यतैव विवक्षिता। नहि साहित्यसंगीतहीनानां नैयायिकवैयाकरणमीमांसकानां साक्षात्पशुत्वं घासादिभोक्तृत्वं च संभवति।

किञ्च गुणकर्मभिर्वर्णव्यवस्थायां ब्राह्मणादिजातिचतुष्टय एव स्याद्वेदे तु अतिकुष्टासमागवम्(मु० पृ० ३०।५) क्षत्रियायां वैश्याज्जातस्यापि जात्यन्तरत्वे व्यवहारो दृश्यते। एवमेव 'नृत्ताय सूतम्।' 'मेधायै रथकारं' क्षत्रिया ब्राह्मण्यां जातस्य सूदस्य, माहिष्येण करिण्यां जातस्य रथकारस्य वर्णनं दृश्यते। तपसे कौलालं, मायायै कर्मारम् ३०७ (कुम्भकारलौहाकरौ) नदीभ्यः पौञ्जिष्ठम्, क्षीकाभ्यो नैषादं (३०८) पुष्ट्यै गोपालम्, वीर्यायाविपालम् ३०।११ मेधायवासः पल्पूली प्रकामाय रजमित्रो ३०।१२ साध्येभ्यश्चर्मम्नम् ३०।१५ इत्यादिषु अन्त्यज-पुल्कस-निषाद-रजक-चमकार-भिल्ल-किरातादि-जातिवर्णनं दृश्यते। एवं वेदोक्तवर्णसंकरजातिविचारेण गुणकर्ममूलकवर्णव्यवस्था स्वत एवापैति।

यदुक्तं—जीविकाभेदाज्जातिभेद इति तदपि तुच्छम्। जातिभेदस्य धर्मशास्त्रेषु शुक्रशोणितभेदमूलकत्वोक्तेः। जात्यनुरोधेन च जीविका प्रोक्ताः।

वैश्यायां शूद्रसंसर्गाज्जातो वैदेहिकः स्मृतः।
अजानां पालनं कुर्यान्महिषीणां गवामपि।
दधिक्षीराज्यतक्राणां विक्रयाज्जीवनं भवेत्॥(औशनसत २१)
वश्यायां शूद्रतश्चौर्य्याज्जातश्चक्री च उच्यते।

तैलपिष्टकजीवी तु लवणं भावयन् पुनः ॥ (औशनसत ६)
ब्राह्मण्यां वैश्यसंसर्गाज्जातो मागध उच्यते ।
वन्दित्वं ब्राह्मणानाञ्च क्षत्रियाणां विशेषतः ॥इति॥

कक्षीवतः सम्बन्धे सायणेन उसिक् संज्ञायामङ्गराजस्य महिष्या दास्यां दीर्घतमसा उत्पादितः कक्षीवानस्य सूक्तस्य ऋषिः इत्युक्तम् । तत्र केचित् कृताभिषेका महिषीभोगिन्योऽन्याः नृपस्त्रियः । (अमर २, श्लोक ५ मनुष्यवर्गः) इति कोषप्रामाण्येनोशिजो महीषोभिन्नत्वेऽपि अकृताभिषेकत्वात् संज्ञात्वमेव न दासीत्वम् ।

इतिहासे तु—

सन्तु राजा वलिर्नाम सर्वधर्मविदांवरः ।
अपश्यन्मज्जनगतः स्रोतसाभ्यासमागतम् ॥ ४२ ॥
जग्राह चैनं धर्मात्मा वलिः सत्यपराक्रमः ।
ज्ञात्वा चैवं स वव्रेऽथ पुत्रार्थे भरतर्षभ ॥ ४३ ॥
सन्तानार्थं महाभाग भार्यासु मम मानद ।
पुत्रान्धर्मार्थकुशलानुत्पादयितुमर्हसि ॥ ४४ ॥
एवमुक्तः स तेजस्वी तं तथेत्युक्तवानृषिः ।
तस्मै स राजा स्वां भार्यां सुदेष्णां प्राहिणोत्तदा ॥ ४५ ॥
अन्धं वृद्धं च तं मत्वा न सा देवी जगाम ह ।
स्वान्तु धात्रेयिकां तस्मै वृद्धाय प्राहिणोत्तदा ॥ ४६ ॥
तस्यां काक्षीवदादीन् स शूद्रयोनावृषिस्तदा ।
जनयामास धर्मात्मा पुत्रानेकादशैव तु ॥ ४७ ॥

( म० भा० आदि पर्व अ० १०४ )

इह दीर्घतमसः बलिदास्यां शूद्रयोनौ काक्षीवदादीनामुत्पत्तिरुक्ता । तत्रैव तस्मात्सुदेष्णायामङ्गवङ्गकलिङ्गपुण्ड्रसुह्मानां पञ्च पुत्राणामुत्पत्तिरुक्ताः । अन्यच्च कक्षीवान् दीर्घतपसः पत्न्यां ब्राह्मण्यामेवोत्पन्नः । सायणरीत्या तु-सुदेष्णाप्रहिता उसिक्नाम्नी दासी ऋषिणा मन्त्रपूतजलेनाभ्युक्ष्य ब्राह्मणकन्यैव सम्पादिता, तदुत्पन्नत्वात् तस्य ब्राह्मण्यमेव ।

तरुणीं रूपसम्पन्नां प्रद्वेषीं नाम ब्राह्मणीम्।
स पुत्रान् जनयामास गौतमादीन् महायशाः ॥
(म० भ० आदिपर्व अ० १०४।२४)

या भार्य्या दीर्घतमसः प्रद्वेषी परिकीर्तिता।
तस्याः पुत्रास्त्रयश्चासन् गौतमः कक्षिवान्कलिः ॥
सर्वे वेदस्य द्रष्टारो बभूवुर्वेदपारगाः।
पुत्रान् तपस्विनो दृष्ट्वा प्रद्वेषी मुमुदे भृशम् ॥
(स्कान्दे सह्याद्रिखण्डे ३५ अध्याये)

अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः।

इत्यादि मन्त्रेष्वपि विप्रः कक्षीवानुक्तः।

तेन प्रद्वेषी पुत्रः कक्षीवानेव वेदमन्त्रद्रष्टा न दासी पुत्रो मन्त्रद्रष्टा। कक्षीवतो विप्रत्वे तत्पुत्री घोषाऽपि मन्त्रद्रष्ट्री ब्राह्मणी निश्चितैवेति तच्छूद्रत्वं दूरतोऽपास्तम्।

एवं महर्षेर्वाल्मीकेः शूद्रत्वमपास्तम् वेदितव्यम्।

'अहं पुरा किरातेषु किरातैः सह वर्धितः।
जन्ममात्रद्विजत्वं मे शूद्राचाररतः सदा ॥'

अध्यात्मरामायणे अयोध्याकाण्डे ६ सर्गे स स्वयमात्मनो जन्मना द्विजत्वमुक्तवान्।

'एतदाख्यानमायुष्यं सभविष्यं सहोत्तरम्।
कृतवान् प्रचेतसः पुत्रस्तद्ब्रह्माप्यन्वमोदत ॥'

इत्युत्तरकाण्डे वाल्मीकीये तस्य प्रचेतसः पुत्रत्वमुक्तम्। प्रचेतास्तु ब्रह्मणो मानसः पुत्र इति—

मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्।
प्रचेतसं वसिष्ठञ्च भृगुं नारदमेव च ॥ (मनुः १।३५)

इति वचनसिद्धम्।

विश्वामित्रस्य क्षत्रियस्य ब्राह्मणत्वमित्यपि भ्रान्तिमूलकम्। महाभारतेऽनुशासनपर्वणि भीष्मेणोक्तब्राह्मण्यमन्यजातिजातेन प्राप्तुं न शक्यमित्याकर्ण्य युधिष्ठिरेणोक्तम्—

ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्वर्णैर्नराधिप ।
कथं प्राप्तं महाराज क्षत्रियेण महात्मना ॥ १ ॥
विश्वामित्रेण धर्मात्मन् ब्राह्मणत्वं नरर्षभ ।
श्रोतुमिच्छामि तत्त्वेन तन्मे ब्रूहि पितामह ॥ २ ॥
(म० भा० अनु० अ० ३)

तदुत्तरेत्वेनोक्तम्—गाधिनृपस्य सत्यवती पुत्री ऋचीकेन महर्षिणोढा मातुः प्रेरणया सा च मातुः स्वस्य च सन्तानार्थं महर्षिं प्रार्थितवती। महर्षिश्चोक्तवान् ऋतुस्नातया त्वन्मात्राऽश्वत्थस्त्वया च तथा भूतयोदुम्बरः परिरब्धव्यः। तथैव कृतवतीभ्यां ताभ्यां पृथक्पृथक् चरुं निर्माय त्वया त्वन्मात्रा पृथक् पृथक् चरुविशेषौ भक्षणीयौ इति प्रबोध्य दत्तवान्। मात्रा च पुत्र्याश्चरुरत्युत्तमैर्मन्त्रैरभिमन्त्रित इति मत्वा तमेव जग्राह, स्वीयञ्च पुत्र्यै दत्तवती। महर्षिः सत्यवतीं दृष्ट्वा चरुपरिवर्त्तनं वृक्षपरिरम्भणव्यत्ययश्च ज्ञात्वोक्तवान्।

तस्मात्सा ब्राह्मणं श्रेष्ठं माता ते जनयिष्यति ॥ ४० ॥
क्षत्रियं तूग्रकर्माणं त्वं भद्रे जनयिष्यसि ॥ ४१ ॥
(म० भा० अनु० प० ४, ४०।४१)

सत्यवत्याः प्रार्थनया सन्तुष्टः 'पुत्रो ब्राह्मणः, पौत्रस्तु क्षत्रियकर्मा भविष्यति' इति महर्षिः प्रोवाच।

विश्वामित्रं चाजनयद् गाधिभार्य्या यशस्विनी।
ऋषेः प्रसादाद्राजेन्द्र ब्रह्मर्षेर्ब्रह्मवादिनम् ॥
(म० भा० अ० प० ४।४७)

नह्यत्र क्षत्रियस्य गाधेर्वीर्य्याद्विश्वामित्रस्य जन्म किन्तु महर्षेश्चरुप्रभावादेवेति स्पष्टं विज्ञायते। अतएव भारते—जन्मनैव विश्वामित्रस्य ब्राह्मण्यमुक्तम् 'ब्रह्मर्षिः ब्रह्मवादिनम्' इति क्षत्रियकन्यायां ब्राह्मणा यद्यपि मूर्धावषिक्तः पुत्रो भवति तथापि जमदग्निमहर्षेरनुग्रहाद् ब्राह्मण एव जातः। विश्वामित्रश्च महता तपसा क्षेत्रदोषमपोह्य शुद्धं ब्राह्मण्यं प्राप्तवान्।

इदमार्षं प्रमाणञ्च ये यजामह इत्यपि।
तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः ॥ ३३ ॥

शीलेन स्वभावेन तत्त्वदर्शिनो जातिं परिचिन्वन्ति।

'चण्डालं पतितं दृष्ट्वा शवमन्त्यजमेव च ।
उदक्यां सूतिकां नारीं सवासाः स्नानमाचरेत् ।।'
( संवर्त० १८४ )

'असंस्पृष्टेन संस्पृष्टः स्नानं तेन विधीयते' । ७१ अत्रिस्मृतिः ।
चण्डालस्पृष्टैः स्पृष्टेऽपि निशि स्नानं विधीयते ।
न वसेत्तत्र रात्रौ तु सद्यः स्नानेन शुद्ध्यति ।।
'दिवाकीर्तिमुदक्याञ्च पतितं सूतिकां तथा ।
शवं तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुद्ध्यति ।।' मनु अ० ६ ।
चण्डालश्वपचानां तु बहिर्ग्रामात्प्रतिश्रयः ।
अपपात्राश्च कर्तव्या धनमेषां श्वगर्दभम् । ५१ मनु० अ० १० )
'नीचैर्दासा उपसर्पन्तु भूमिम्' ( अथर्व ५।११।६ )
वेदेऽपि भिन्नस्थानोपसर्पणमुक्तम् ।
यद्वा दासी आर्द्रहस्ता समङ्क्त उलूखलं मुसलं शुम्भतापः'
( अथर्व ) ( १२,३१३ )

शूद्रस्पृष्टदुग्धमाहिताग्नेर्निषिद्धम् । तैत्तिरीये ।
'एकशय्याशनं पङ्क्तिर्भाण्डपङ्क्त्यन्नामिश्रणम् ।
याजनाध्याने योनिस्तथा च सहभोजनम् ।।
नवधा संकरः प्रोक्तो न कर्तव्योऽधमैः सह ।'

मिताक्षरोद्धृतबृहस्पतिवचनम्—

'देवयात्राविवाहेषु यज्ञप्रकरणेषु च ।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टं न विद्यते ।।
फले काष्ठे रथे मञ्चे नौकायां पशुवृक्षयोः ।
तृणौघजनसंघाते स्पर्शदोषो न विद्यते ।।'
( अत्रिस्मृतिः २४७ )

संसारे प्रकृतिवैचित्र्यं दृश्यते । हिंगुसंसर्गेणाहिफेनस्य मादकत्वं नश्यति । जीरकयोगेन च हिङ्गुगन्धो नश्यति । पुरुषस्पर्शे लज्जावती म्लायते । दृष्टिदोषे वृक्षा नश्यन्ति । तथैवास्पृश्यस्पर्शनेन धर्मः शुद्धिश्च नश्यति ।

'चौर चाण्डालपतितैश्चोदक्यास्पर्शने तथा ।
शवाद्युपहते चैव प्रतिष्ठां पुनराचरेत् ॥'

सिद्धान्तशेखरे—

'प्रसादे देवहर्म्याणां चण्डाल पतितादिषु ।
अन्तः प्रविष्टेषु तथा शुद्धिः स्यात्केन कर्मणा ॥

गोभिः संक्रमणं कृत्वा गोमूत्रेण च लेपयेत्' वृद्ध हारीत

'रुद्रस्यवाथ विष्णोर्वा प्राकाराभ्यन्तरे यदि ।
रजस्वला वधूश्चैव चाण्डालश्च समागतः ॥
ततो ग्रामोत्सवे हस्तशतान्तरितो यदि ।
तद्देशस्य कलाहानी राज्ञो मरणमेव च ॥
तद्ग्रामस्य क्षयः प्रोक्तः सस्यानां नाशनं ध्रुवम्'
(कारिकावृत्तिप्रायश्चित्तकाण्डे)

चण्डालमद्यसंस्पर्शदूषिता वह्निनाथवा ।
अपुण्यजनसंपृष्टा विप्रक्षतजदूषिता ॥
सा पुनः संस्कर्तव्या...(हयशीर्षपञ्चरात्रे चर्यापादे १८)
चण्डालः श्वपचो वापि तादृशाः पुल्कसादयः ।
प्रतिलोमास्त्यजादीनां स्तूपिं दृष्ट्वा समाचरेत् ॥
(पाञ्चरात्रपाद्मतन्त्रे चर्यापादे अ० १८)

व्यवस्था च दृश्यते

गर्भागारे तु सेवार्थे वैखानसकुलोद्भवः ।
वेदाध्ययनविप्रेण अर्धमण्डपसेवितम् ॥
यतीनां विष्णुभक्तानां महामण्डपसेवितम् ।
वैश्यशूद्रानुलोमानां ब्रह्ममण्डपसेवितम् ॥
शेषाणां हरिभक्तानां गोपुरं तु विधीयते ।
प्रतिलोमान्त्यजातानां स्तूपिं दृष्ट्वा समाचरेत् ॥
(अर्चनानवनीते)

दर्शनं गेहचूडाया दर्शनं गोपुरस्य च ।
अन्त्यजानां तथान्त्यानां विज्ञेयं देवदर्शनम् ।
(शैवसिद्धान्तरहस्ये)

अन्येषामपि सर्वेषां नराणां मुनिपुङ्गवाः ॥
पूजा देवालयं दृष्ट्वा प्रणामस्तस्य कीर्तितः ॥
( सूतसंहिता अ० ५ )

अन्त्यजैः स्वीकृते तीर्थे तडागेषु नदीषु च ।
शुद्ध्यते पञ्चगव्येन पीत्वा तोयमकामतः ॥ संवर्तः १८१ ।
चाण्डालखातवापीषु पीत्वा सलिलमग्रजः ।
अज्ञानाच्चैकनक्तेन त्वहोरात्रेण शुद्ध्यति ॥ २४ ।
चाण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् ।
गोमूत्रयावकाहारस्त्रिरात्राच्छुद्धिमाप्नुयात् ॥ परा० अ० ६ ।
कूपैकपानैर्दुष्टानां स्पर्शसंसर्गदूषणात् ।
तेषामेकोपवासेन पञ्चगव्येन शोधनम् ॥ आपस्तंब अ. ३
ननु 'सहृदयं सौमनस्यमविद्वेषं कृणोमि वः ।
अन्योऽन्यमभिहर्यत वत्सं जातमिवाघ्न्या ॥ अथर्व६।३०।१
अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः ।
जायापत्ये मधुमतीं वाचं वदतु शान्तिवां ॥ (६।३०।२)
मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा ।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ( ६।३०।३ )
समानी प्रपा सह वोऽन्नभागः समाने योक्त्रे सहवो युनज्मि ।
सम्यञ्चोऽग्निं सपर्यतारा नाभिमिवाभितः ॥ (अथर्व का-३। सू० ३०।६

इत्यादिभिर्वचनैरविशेषेण सर्वेषामेव स्नानपानादिव्यवहारोऽनुमत एवेति चेन्न, तत्र कुटुम्बेषु जातिषु च साम्मनस्य सम्पत्तये जपहोमाभिमन्त्रणाभ्युक्षणानां विधाने तात्पर्यात् । नैतैः सहभोजनादिकं विधीयते पूर्वोक्तशास्त्रविरोधात् ।

ननु 'अक्षमालावसिष्ठेन संयुक्ताधमयोनिजा ।
सारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम् ॥ ( मनु: ९।२३)

अनेन वसिष्ठपत्न्या अक्षमालाया अधमयोनिजत्वमुक्तमेवेति चेन्न, यतः मनुपुत्र्या देवहूत्या पुत्रीषु काचिदरुन्धती समासीत् सैवाक्षमालेति । राम·

चन्द्रस्तट्टीकाकारः। अक्षमाला अरुन्धतीत्याह। अक्षमाला अरुन्धती इति वाचस्पत्यभिधाने। तथापि सा स्त्रीत्वात्पापयोनिः।

'येऽपि स्युः पापयोनयः। स्त्रियो वैश्यास्तथा शूद्राः' इत्युक्तेरथवा क्षेत्रदोषादधमयोनिजात्वम्, तथापि सा वसिष्ठसंगेण तपोब्रह्मचर्यादिभिर्दुष्प्रापं-सप्तर्षिमण्डलं प्राप्ता।

वसिष्ठारुन्धत्योर्दिव्यत्वमपि ज्ञाप्यते। तथाहि—

अथाभिध्यायतः सर्गं दशपुत्राः प्रजज्ञिरे।
भगवच्छक्तियुक्तस्य लोकसन्तानहेतवः॥२१॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः।
भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः॥२२॥
उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयम्भुवः।
प्राणाद्वशिष्ठः सञ्जातो भृगुस्त्वचि करात्क्रतुः॥२३॥
पुलहो नाभितो जज्ञे पुलस्त्यः कर्णयोरृषिः।
अङ्गिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत्॥२४॥
(श्रीमद्भागवतमहापुराणे ३ स्कन्ध १२ अध्याये।)

गते शतधृतौ क्षत्तः कर्दमस्तेन चोदितः।
यथोदितं स्वदुहितॄः प्रादाद्विश्वसृजां ततः॥२१॥
मरीचये कलां प्रादादनसूयामथात्रये।
श्रद्धामङ्गिरसेऽयच्छत् पुलस्त्याय हविर्भुवम्॥२२॥
पुलहाय गतिं युक्तां क्रतवे च क्रियासतीम्।
ख्यातिश्च भृगवेऽयच्छत् वशिष्ठायाप्यरुन्धतीम्॥२३॥
(श्रीमद्भागवतमहापुराणे ३ स्कन्धे २४ अध्याये।)

तस्यामाधत्त रेतस्तां भावयन्नात्मनात्मवित्।
नोधाविधाय रूपं स्वं सर्वसङ्कल्पविद्विभुः॥४७॥
अतः सा सुषुवे सद्यो देवहूतिः स्त्रियः प्रजाः।
सर्वास्ताश्चारुसर्वाङ्ग्यो लोहितोत्पलगन्धयः॥४८॥
(श्रीमद्भागवतमहापुराणे ३ स्कन्धे २३ अध्याये।)

अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम्।
पतीन् प्रजानामसृजं महर्षीनादितो दश ॥ ३४ ॥
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्।
प्रचेतसं वसिष्ठञ्च भृगुं नारदमेव च ॥३५॥ मनु अ०-१
असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥५॥ मनु अ०-३

सारङ्गी तु पक्षिणी नान्त्यजकन्या। सा च पक्षियोनिगतापि मन्दपाल-संसर्गेणाभ्यर्हणीयतां गता। सत्यवती तु राजकन्येति भारते प्रसिद्धमेव। न परस्त्रियभियात् यथाकालं परिणयाभावेऽपि दोषः। तै० (११।१०।१।८।) साङ्कर्येण निन्द्यजातिसमुत्पत्तिः। साङ्कर्यमूलपरयोषासंसर्गस्य निषिद्धत्वात्। तथाहि 'प्रदानं प्रागृतोरप्रयच्छन् दोषी'। (गौ० अ० १८)

अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ। याज्ञवल्क्यः अ० ६४।
'त्रीणि वर्षाण्युदीक्षेत् कुमार्यृतुमती सती।
ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥'
'ब्रह्मचर्य्येण कन्या युवानं विन्दते पतिम्। (म० १।६०)
अनड्वान् ब्रह्मचर्येण अश्वा घासं निगीर्षति ॥
(अथर्व सं० ११।५।१८)

तत्र शुक्राभावात्तद्धारणलक्षणं ब्रह्मचर्यं कन्याया न संभवति। दशवर्षीया विवाहविधानादध्ययनतदङ्गोपनयनाद्यविधानाच्च न ब्रह्मचर्यं तस्याः संभवति। अनुडुदश्वयोस्तु वीर्य्यरक्षणलक्षणमेव ब्रह्मचर्य्यम्। अतः ब्रह्मचर्य्येण युवानं पतिं कन्या विन्दते इत्येवार्थः। शुक्रधारणेन वेदाध्ययनादिना युवावस्था प्राप्तर्भवति। ऊनषोडशवर्षीया गर्भधारणनिषेधः सुश्रुतादिभिरुक्तो, न विवाहः, नहि विवाहगर्भधारणयोरैक्यम्।

यदुक्तम्–देवयान्या विप्रकन्याया ययातिना क्षत्रियेण सार्धमुद्वाहो जात इति, इतिहाससिद्धम् तदपि तुच्छम्, इतिहासस्य धर्मेऽप्रामाण्यात्। किञ्च सञ्जीवनीविद्या प्राप्त्यर्थं शुक्राचार्यतत्पुत्र्याराधनतत्परस्य तदनुग्रहेण प्राप्तविद्यस्य कचस्य पाणिग्रहणार्थं देवयान्या प्रार्थितस्य गुरुपुत्रीत्वात् त्वयि मम गुरुवत् पूज्यबुद्धित्वात् गुरूदरनिवासाच्च पाणिग्रहणातिरिक्तकार्य्यकरणक्षमत्वेन तेन प्रत्याख्यातेति।

स समावृतविद्यो मां भक्तां भजितुमोहसे।
गृहाण पाणिं विधिवन्मम मन्त्रपुरस्कृतम्॥
(म० भा० आदिपर्व अध्याय० ७७।५)

देवयान्या च तस्मै शापो दत्तः—

यदि मां धर्मकामार्थे प्रत्याख्यास्यसि याचितः।
ततः कच न ते विद्या सिद्धिमेषा गमिष्यति।
(म० भा० आ० प, अ० ७७।१६)

कचेन सापि शप्ता—

'तस्माद्भवत्या यः कामो न तथा स भविष्यति।
ऋषिपुत्रो न ते कश्चिज्जातु पाणिं ग्रहीष्यति॥'

शापग्रस्तत्वाद् ब्राह्मणपतिलाभासम्भवात्। शर्मिष्ठया कूपे पातिताया समुद्धरणाय ययातिना हस्तो गृहीतः। विवाहाय तया प्रार्थितो राजा तदयोग्यं मत्वाह—

'विद्ध्यौशनसि भद्रं तं न त्वामर्होऽस्मि भाविनि।
अविवाह्या हि राजानो देवयानि पितुस्तव॥'
(म० भा० आदि पर्व ८१।१८।

अत्र ब्राह्मणकन्यायाः क्षत्रियेण विवाहोऽनुचित इत्युक्तमेव। कचशापादेव तदनौचित्यमपि जातम्। तपो विशेषात् प्रभावविशेषाच्च तयोर्दोषानावहत्वेऽपि तदन्यत्र तद्दूषणमेव।

'हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम् (मनुः ३।१५)
'असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने।' (मनु० ३।५)

'मम व्रते ते हृदयं दधामि। मम चित्तमनुचित्तं तेऽस्तु। मम वाचमेकमना जुषस्व' विवाहपद्धतौ।

द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत्।
अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः॥ (मनु० अ० १)

लक्ष्मी रूपां कन्यां विष्णुरूपाय वाराय तुभ्यमहं सम्प्रददे इति सङ्कल्पः।

'अर्यमणं नु देवं कन्या अग्निमपश्यत्।
स नो अर्यमा देवः प्रेतो मुञ्चतु मा पतेः ॥'
पितृकुलान्मुञ्चतु पत्युः कुलान् मा मुञ्चतु।
( पारस्करगृह्यसूत्रकां. १ इति )

'अश्मेवत्वं स्थिरा भव'। ऋग्वेदे ध्रुवाहं पतिकुले भूयासम्, चूलिकावत्। पातिव्रत्यं सुकोमलं रक्षणीयञ्च।

पतिं या नाभिचरति मनोवाग्देहसंयुता।
सा भर्तृलोकमाप्नोति सद्भिः साध्वीति चोच्यते ॥'
( म. ५।१६५ )

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥ ५२ ॥
( याज्ञवल्क्यः १ अ० )

'अनन्यपूर्विकां लघ्वीं शुभलक्षणसंयुताम्।' ( व्य-स्मृति अ० )

अनन्यपूर्वां यवीयसीम्। ( गौ स्मृ० अ० ४ )

'गृहस्थो विनीतक्रोधहर्षो गुरुणानुज्ञातः स्नात्वाऽसमानार्षीम स्पृष्ट-मैथुनाम् यवीयसीं सदृशीं भार्य्याम् विन्देत।' वसिष्ठ अ० ८ )

अनन्यपूर्विकां दानेनोपभोगेन वा पुरुषान्तरागृहीताम्। अनेन पुनर्भू-र्व्यावर्त्तते इति पराशरमाधवः।

दुःशीलो दुर्भगो वृद्धो जडोऽरोग्यधनोऽपि वा।
पतिः स्त्रीभिर्न हातव्यो लोकेप्सुरभिपातिकी ॥
( भागवते १० स्कन्धे २९ अ० २५ श्लो० )

'पाणिग्रहणिकामन्त्राः कन्यास्वेव प्रतिष्ठिताः।
नाकन्यासु क्वचिन्नृणां लुप्तकर्मक्रिया हि ताः'
सकृदंशो निपतति सकृत्कन्या प्रदीयते। ( म० ८।२६ )
सकृदाह ददानीति त्रीण्येतानि सतां सकृत् ॥ ( मनुः ७९।४७ )

धर्मे वेदादीनामेव प्रामाण्यम्—

'वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्' ( म० २।१२ )

तद्धर्मविरुद्धस्य महदाचारस्यापि न प्रामाण्यम् । पारम्पर्यक्रमागतस्य शास्त्राविरुद्धस्यैव सदाचारस्य प्रामाण्यम् ।

'तस्मिन्देशे य आचारः पारम्पर्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥" (मनुः अ० २।१८)

**दायभागव्यवस्था च**

जन्मना वर्णत्वेनैव चतुर्षु दायभागप्रकारभेदः ।

ब्राह्मणस्यानुपूर्व्येण चतस्रस्तु यदि स्त्रियः ।
तासां पूर्वेषु जातेषु विभागेऽयं विधिः स्मृतः ॥ १४९
कीनाशो वृषभो मानमलङ्कारश्च वेश्म च ।
विप्रस्योद्धारिकं देयमेकांशश्च प्रधानतः ॥१५० ॥
त्र्यंशं दायाद्धरेद्विप्रो द्वावंशौ क्षत्रियासुतः ।
वैश्याजः सार्द्धमेवांशमंशं शूद्रासुतो हरेत् ॥ १५१ ॥
सर्वं वा रिक्थजातं तद्दशधा परिकल्प्य च ।
धर्म्यं विभागं कुर्वीत विधिनानेन धर्मवित् ॥ १५२ ॥
चतुरोंऽशान् हरेद्विप्रस्त्रीनंशान् क्षत्रियासुतः ।
वैश्यापुत्रो हरेद्व्यंशमंशं शूद्रासुतो हरेत् ॥ १५३ ॥
यद्यपि स्यात्तु सत्पुत्रोऽप्यसत्पुत्रोऽपि वा भवेत् ।
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मतः ॥ १५४ अ० ९

वेदे शुक्लयजुषि माध्यन्दिनीयसंहितायां त्रिंशदध्याये धर्मशास्त्रेषु च चत्वारो वर्णा अनुलोमजाः प्रतिलोमजाश्च बह्वयो जातयो वर्णिताः ।

**अवगुण्ठनव्यवस्था**

अदृष्टपूर्वा या नार्यो पुरा देवगणैरपि ।
पृथग्जनेन दृश्यन्ते तास्तदा निहतेश्वराः ॥
( म० भा० स्त्रीपर्व अ० १०।८ )

'या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि ।
तामद्य सीतां पश्यन्ति राजमार्गगता जनाः ॥
( श्री० वा० रा० अ० फ० ३३।८ )

दृष्ट्वा न खल्वभिक्रुद्धो मामिहानवगुण्ठिताम् ॥ ६१ ॥

निर्गतां नगरद्वारात् पद्भ्यामेवागतां प्रभो ।
पश्येष्टदारदारांस्ते भ्रष्टलज्जावगुण्ठनाम् ॥ ६२ ॥
वहिर्निष्पतितान्सर्वान् कथं दृष्ट्वा न कुप्यसि ।'(वा०भ०सर्ग११)
व्यसनेषु न कृच्छ्रेषु न युद्धेषु स्वयम्वरे ।
न क्रतौ नो विवाहे वा दर्शनं दूष्यते स्त्रियः ॥ २८ ॥
सैषा विपद्गता चैव कृच्छ्रेण च समन्विता ।
दर्शने नास्ति दोषोऽस्याः मत्समीपे विशेषतः ॥ २९ ॥
( वाल्मीकिरामायणे युद्धकाण्डे ११ सर्गे । )

'यो वां यज्ञेभिरावृतोऽधिवस्त्रा वधूरिव ( ऋ० सं० ८।२६।१३ )' एभि-र्वचनैर्ज्ञायते यत् स्त्रीणामनावरण दूषणमेव, अवगुण्ठनादिविधानात् तदभावे-नाक्रोशश्रवणाच्च ।

'अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् ।
विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे ॥ २ ॥
पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
रक्षन्ति स्थाविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति ॥ ३ ॥
स्वां प्रसूतिं चरित्रञ्च कुलमात्मानमेव च ।
स्वञ्च धर्मं प्रयत्नेन जायां रक्षन् हि रक्षति ॥ ७ ॥
( मनुः अ-९ )

'पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा ।
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥ ५५ ॥
यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥ ५६ ॥
( म० ३।५५-५६ )

केचित्तु "ऋग्वेदमन्त्राणां शूद्रोऽपि ( कक्षीवान् ) ऋषिः । ऋग्वेदस्य प्रथम मण्डलीय ११६ सूक्तस्य कक्षीवान् ऋषिः । सच अङ्गराजस्य पट्टमहिष्या दास्यां दीर्घतमसोत्पादितः । ऋ ९।७ सूक्तस्यापि स एव ऋषिः । तस्य पुत्रः शबरः ऋ. १०।१।६९ सूक्तस्य ऋषिः । कक्षीवतः पुत्री घोषा दशम मण्डलीयानेकसूक्तानां द्रष्ट्री ऋषिका । 'सामानो मन्त्रः समितिः समानी'

( ऋ० १०।९१।२ ) मन्त्रेणापि समेषां ब्राह्मणक्षत्रियवैश्यशूद्राणां समान-मन्त्रत्वोपपादनमपि वेदानां सर्वाधिकारत्वं समर्थयते ।

'तस्यां कक्षीवदादीन् स शूद्रयोनौ ऋषिस्तदा ।
जनयामास धर्मात्मा पुत्रानेकादशैव तु ॥' इति ।

तदपि न क्षोदक्षमम् । 'वेदमाता पावमानी द्विजानां' ( १९।७१।१ ) 'अयं स होता यो द्विजन्मा' ( ऋ. सं. १ १४९।५ ) इत्यादि मन्त्रैर्वेदे द्विजानाम-धिकारश्रवणात् त्रैवर्णिकानामेव यज्ञियत्वं, चतुर्थस्यायज्ञियत्वमित्यपि चोक्तमेव । कक्षीवतः पिता दीर्घतमा न शूद्रः, किन्तु ब्राह्मणः, ऋषिः । 'बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते' ( मनुः ६।३५ ) इति रीत्या अमोघवीर्य्याणामृषीणां ब्रह्मवर्चसस्य क्षेत्रदोषेण लोपयितुमशक्यत्वेन दीर्घतमसोत्पादितस्य कक्षीवतो ब्राह्मणत्वमेव न क्षेत्रदोषाच्छूद्रत्वम् । अतएव क्षत्रिया क्षेत्रोत्पन्नत्वेऽपि विश्वामित्रस्य ऋचीकब्राह्मणनिर्मितब्राह्मचरु-प्रभावाद् ब्राह्मणत्वं सम्पन्नम् । उपरिचरवीर्य्यजातायां सत्यवत्यां ऋषिणा पराशरेण ब्राह्मणेनोत्पादितस्य व्यासस्य ब्राह्मणत्वम् ।

कक्षीवतो माता दासी यद्यप्यासीत् तथापि सा मन्त्रपूतेन जलेन ऋषि-पुत्री कृता । यथा अधमयोनिजापि अक्षमाला वशिष्ठेन संगता परां शुद्धिमुप-गता । मनुः

'अक्षमाला वशिष्ठेन संयुक्ताधमयोनिजा ।
साङ्गी मन्दपालेन जगामाभ्यर्हणीयताम् ॥' ९।२३

ऋषयो मन्त्रपूतेन जलेन शक्त्या पुरुषं पाषाणं पाषाणञ्च स्त्रियं पुरुषं वा कर्तुं प्रभवन्ति । तेन न कक्षीवतः शूद्रत्वं संभवति । सायणेनापि कक्षीवतो ब्राह्मणत्वमेवोक्तम् । तथाहि ऋ. १।१२५।१ मन्त्रे ।

ननु कक्ष्यो नाम अश्वबन्धनी रज्जुः । तद्वान् कक्षीवान् । अश्वबन्धनञ्च राज्ञ एवोचितम् । अतोऽयं राजन्यत्वात् प्रतिग्रहो नोपपद्यते । 'याज-नाध्यापने चैव विशुद्धाश्च प्रतिग्रहः ।' ( मनु १०।७६ ) इति स्मरणात् ब्राह्म-णस्यैवाधिकारो न क्षत्रियस्येति पूर्वपक्षेऽपि कक्षीवतः क्षत्रियत्वमेव शङ्कितम्, न शूद्रत्वम् । उत्तरपक्षे च सायणेनोक्तम् यद्यप्यसौ कलिङ्गाख्यस्य राज्ञः पुत्रः तथापि तेन कलिङ्गेन स्वयं वृद्धत्वात् अपत्योत्पादनाय सामर्थ्यमलभमानेन

तदुत्पादनाय याचितो दीर्घतमा ऋषिः अपत्योत्पादनाय प्रेषितया राजमहिष्या अतिजरठेन महर्षिणा सह रन्तुं लज्जमानया स्ववस्त्राभरणैरलङ्कृताम् स्वप्रतिनिधित्वेन प्रेषितामुशिग्नामिकां योषितं दासीमित्यवगत्य मन्त्रपूतेन जलेनाभिषिच्य ऋषिपुत्रीं कृत्वा तया सह रेमे । तदुत्पन्नः कक्षीवान् नाम ऋषिः । एतत्सर्वमस्माभिः पूर्वाध्याये विस्तरेण प्रतिपादितम् । अतोऽस्य क्षत्रियसम्बन्धात् कक्षीवानिति नाम उपपन्नम् । दीर्घतमसः परमर्षेरुत्पन्नत्वे ब्राह्मणत्वात्प्रतिग्रहोऽपि उपपन्नः ।

'दासी' शूद्रैव भवतीत्यपि नेति शर्मिष्ठादि दृष्टान्तेनोक्तमेव । (ऋ. सं. १।५१।१३)। भाष्येऽपि सायणेनोक्तम् 'स च अङ्गराजः सर्वज्ञं तं दीर्घतमसमृषिमवगत्य एवमवोचत्-भगवन मम पुत्रो नास्ति, एषा महिषी अस्यां, कश्चित्पुत्रमुत्पादय इति । स च तथा इत्यब्रवीत् । सा च महिषी राजानं प्रति तथा इत्युक्त्वा अयं वृद्धतरो जुगुप्सितो मम योग्यो नास्तीति बुध्या स्वकीयामुशिक्संज्ञां दासीं प्राहैषीत् । तेन च सर्वज्ञेन ऋषिणा मन्त्रपूतेन वारिणाभ्युक्षिता सती सैव ऋषिपत्नी बभूव । तस्यामुत्पन्नः कक्षीवान् ऋषिः । महाभारतेऽपि —

> 'औशिजश्चैव कक्षीवान् बलश्चाङ्गिरसः स्मृतः ।
> ऋषिर्मेधातिथेः पुत्रः कण्वो बर्हिषदस्तथा ॥
> मित्रावरुणयोः पुत्रस्तथागस्त्यः प्रतापवान् ।
> एते ब्रह्मर्षयो नित्यमाश्रिता दक्षिणां दिशम् ॥'(शा. प. २०८।२७)

औशिजः कक्षीवानयं ब्रह्मर्षिरुक्तः ।

'अहं मनुरभवम् सूर्यश्चाहं कक्षीवान् ऋषिरस्मि विप्रः (ऋ. सं. ४।२६।१)

अत्र वेदेनैव कक्षीवान् ऋषिः विप्र उक्तः । अतएव तत्पुत्रः शबरः पुत्री च घोषा सुतरां ब्राह्मणावेवेति मन्तव्यौ । शबरस्तस्य नामासीन्न जातिः ।

ननु विप्र शब्दोऽत्र मेधाविपरो न जातिपरः इति चेन्न, विप्रादिशब्दानां विशेषणत्वेऽन्यबोधकत्वेऽपि विशेष्यत्वेन ब्राह्मणजातिवाचकत्वावगमात् ।

> विप्रं न जातवेदसम् । [ ऋ० सं० १।१२७।१ ]

अत्र जातप्रज्ञं ब्राह्मणमित्येवार्थः, वेङ्कटमाधवसायणादिभिस्तथैव व्याख्यातत्वात् ।

'तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने। [मनु० २।११५ ]

अत्रापि विशेष्यत्वाद् ब्राह्मणजातिपर एव विप्रशब्दः।

'विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम्'

( अमरकोषः २।७।४ )

विप्रशब्दो ब्राह्मणपर्यायवाचकः।

'जन्मना ब्रह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते।

विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय एव च।'

( अत्रिस्मृतिः १४१ )

जन्मना ब्राह्मणो विद्यया विप्रत्वं यातीत्युक्तम्।

'यश्च विप्रोऽनधीयानः' ( मनुः २।१५७ )

विप्राणां ज्ञानतो ज्यैष्ठ्यम्' ( म० २।१५५ )

'अर्हत्तमाय विप्राय' ( मनु० ३।१२८ )

'भस्मीभूतेषु विप्रेषु' ( मनु० ३।९७ )

'विप्रसेवैव शूद्रस्य' ( म० १०।१२३ )

'विप्रस्य त्रिषु वर्णेषु' ( म० १०।१० )

'विप्रस्य विदुषो गेहे' ( म० ४।१११ )

'विप्रः शुद्ध्यत्यपः स्पृष्ट्वा' ( म० ५।९९ )

उक्तपद्येषु विप्रशब्दो ब्राह्मणजातिपर एव, अन्यथा

'अनधीयानो विप्रः' ( मनु० २।१५७ )

'विप्रोऽनूचः' ( मनु० २।१५८ )

'व्रात्यो विप्रः' इत्यादिषु विरोधादिदोषा अनिवार्य्या एव।

'ऋषिर्विप्रो विचक्षणस्त्व कविः ( ऋ. सं. ६।१०७।७ )

'त्वं विप्रः त्वं कविः' ( ऋ०सं० १८।२ )

'विप्रः कविः' ऋ० सं० ६।८४।५ )

'विद्वान् कविः' ( ऋ० सं० ७।८७ )

मन्त्रेषु विप्रस्य मेधाविपरत्वे पुनरुक्तिध्रौव्यमेव स्यात्।

यदुक्तम् 'समानो मन्त्र इति सर्वेषां समानो मन्त्राधिकार उक्तः' इति तन्न; अत्र मन्त्रपदस्य परामर्शवाचकत्वेनादोषात्।

अनुपनीतानामद्विजानामन्त्रोच्चारणे दोषोक्तेः। तथाहि—

अथ हास्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रपरिपूरणम्।'

'उच्चारणे जिह्वाच्छेदः' 'धारणे शरीरभेदः' (गो० धर्मसूत्र २।३।४ इति

यत्तु—'इमानि वचनानि अन्यायमूलकानी' ति, तन्न, आर्षवचनस्यानतिशङ्कनीयत्वात्।

'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।

स वाग्वज्रो यजमानं हिनास्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥'

(पा० शि०)

इतिरीत्या अशुद्धशब्दोच्चारणसम्भवेन अनिष्टापत्तेः। अशुद्धोच्चारयितॄणां विप्राणामपि दोषित्वसम्भवात् न समेषां समानमन्त्राधिकारो युक्तः किमुतानुपनीतानामद्विजानाम्? न च वेदोच्चरणादिभिर्जिह्वाच्छेदादिदण्डविधानमन्यायमिति वाच्यम्, अनुशासनार्थस्य दण्डविधानस्यापेक्षितत्वात्। केषाञ्चिद्रीत्या तु—

'यावद्भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम्।

'अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति॥

(श्री० भाग० म० पुरा०)इति

शूद्राध्ययननिषेधार्थं वादरूपमिदम्। तेनाध्ययननिषेध एव तात्पर्यम्, तादृग्दण्डविधानस्यानैतिहासिकत्वात्।

किञ्च 'समानो मन्त्र' इति मन्त्रेण न सर्ववर्णानां वेदमन्त्रे समानाधिकारोऽभिधीयते, तस्य कुटिम्बिनां सोमनस्यविधिशेषत्वात्। (मीमांसाशाबरभाष्ये। ३।५।४३) इति रीत्या तु ऋत्विजां सांमनस्यसंपत्तिपरोऽयं मन्त्रः, वेदानां यज्ञप्रधानविषयत्वात्। यज्ञे च त्रैवर्णिकानामेवाधिकृतत्वात्तेषामेव कृते समानमन्त्रत्वाभिधानम्। 'ब्राह्मणो वैवराजन्यो वैश्यो वा। तेहि यज्ञियाः। न व देवाः सर्वेणेव संवदन्ते, ब्राह्मणेन वैव राजन्येन वा वैश्येन वा।' (शत० ब्रा० ३।१।१।९-१०) अयं स होता यो द्विजन्मा' इति श्रुतिभ्यः। यज्ञसमाप्तौ ऋत्विजो यजमानश्च एतैर्मन्त्रैः प्रार्थयन्ते। 'एषामेकस्मिन्कर्मणि सह प्रवृत्तानां ऋत्विजां स्तोतॄणां वा मन्त्र एकविधोऽस्तु' इति तत्र सायणभाष्यम् 'समानी प्रपा' इत्यपि कुटुम्बिष्वेव चरितार्थम्। 'अरानाभिमित्र अभितः अग्निं अप-

यत (अ० सं० ३।३०।६) 'वत्सं जातमिवाध्न्या' (ऋ० सं० ३।३०।१) रथस्य अरा यथा एकरथसम्बद्धास्तथैवैककुटुम्बसम्बद्धा एकप्रपादिमन्तो भवेयुः। भिन्नभिन्नरथेषु न अराणां सम्बन्धो भवति, तद्वदिहापि बोध्यम्। यथा वा गौः स्वयमेव वत्सं स्नेहेन पयः पाययति तथैवात्रापि सम्बद्धानामेव समानी प्रपा नासम्बद्धानाम्। आर्त्विज्यमपि ब्राह्मणानामेव भवति इति मीमांसायां १२।४३८।३६-४२ तथा ६।६।१८ स्पष्टम् तेषामेव समानमन्त्रता।

केषाञ्चिद्रीत्या तु—

'जात्यन्धो वेदवित् प्राज्ञः पत्नीं लेभे स विद्यया।
तरुणीं रूपसम्पन्नां प्रद्वेषीं नाम ब्राह्मणीम्।
स पुत्रान् जनयामास गौतमादीन् महायशाः।'
म० भा० १।१७४।२३-२४

गौतमादिष्वेव कक्षीवानपि। तदपि सह्याद्रिखण्डे स्पष्टम्।

या भार्या दीर्घतमसः प्रद्वेषी परिकीर्तिता।
तस्याः पुत्रास्त्रय आसन् गौतमः कक्षिवान् कलिः॥
सर्वे वेदस्य द्रष्टारो बभूवुर्वेदपारगाः।
पुत्रान् तपस्विनो दृष्ट्वा प्रद्वेषो मुमुदे भृशम्। '३५।२६।३०'

प्रद्वेष्या एव नामान्तरमुशिक् इत्यपि। बलेर्दास्यामुशिजि काक्षीवदाद्याः पुत्रा उत्पन्नाः (म० भा० १७४।४८) इति काक्षीवानुत्पन्नः। एवं रीत्या कक्षिवत् काक्षीवतोर्भेदोऽपि प्रतीयते।

क्वचिदार्षेषु शूद्रादिशब्दनिर्देशो भक्त्या वृत्त्या, न मुख्यया वृत्त्या तत्सं-भवति, यथा ज्योतिषशास्त्ररीत्या ब्राह्मणानामपि तुलसीराम, दयानन्दादीनां शूद्रो वर्णो भवति। भक्षपशुपक्षीदेवादीनामपि ब्राह्मणादि वर्णा भवन्ति। ब्राह्मणेष्वपि—

'देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः।
पशुर्म्लेच्छोऽपि चण्डालः विप्रा दशविधाः स्मृताः॥
( अत्रि स्मृति ३७१ )

ब्राह्मणानामौपचारिक्यो नानासंज्ञाः भवन्ति। न तावता स वस्तुतः पशुर्भवति तद्वदिहापि बोध्यम्।

## सूतस्य ब्राह्मणत्वसाधनम्

एवमेव "केश्चित्पौराणिकसूतस्य रोमहर्षणस्य सूतजातित्वेन प्रतिलोमसंकरत्वमुच्यते। 'क्षत्रियात्सूत एव तु' इति ( मनुः १०।१७ ) क्षत्रियात् ब्राह्मण्यां जातस्य सूतत्वमुक्तम्। बलदेवेन स प्रतिलोभज उक्तः। (भागवते १०।७८।२४) पुरुषोत्तममाहात्म्ये ( २।५ ) स एवं विलोभजमाह। 'सुत्यायामभवत्सूतः' इति अग्निपुराणे तस्य वेदादिवक्तृत्वमुक्तम्। तेन कर्मणैव वर्णव्यवस्था तथा च समेषां वेदाधिकारः" इति।

तन्न, सूतस्य यज्ञकुण्डसमुद्भूतत्वेन जातिसूतत्वाभावात्। हरिवंशस्य ( १।४ ) सौतिशब्दव्याख्यानप्रसङ्गे नीलकण्ठेनोक्तम्। सूतः 'अग्निकुण्ड-समुद्भूत सूत निर्मलमानस।' इति पौराणिकप्रसिद्धेरग्निजो लोमहर्षणः सूतः। तस्य पुत्रः सौतिः, उग्रश्रवाः। ननु ब्राह्मण्यां क्षत्रियात्सूत इति स्मृत्युक्तः तद्धितानर्थक्यापत्तेः। यथा ब्राह्मणपुत्रो ब्राह्मणो भवति तथा जातिसूतपुत्रः सूत एव भवति इति।

सौतिरिति तद्धितप्रयोगो व्यर्थः स्यात्। 'नाहं वरयामि सूतम्' ( म०भा० १।१८९।२३ ) इत्यत्र सूतपुत्रत्वेन प्रसिद्धः कर्णः सूत इत्येवोक्तो न सौतिः। लोमहर्षणस्तु कश्चित्पुमान् ब्रह्मयज्ञे यज्ञकुण्डात्समुत्थितः।

'स सूतो धर्मवक्ता च मत्पूर्वपूरुषः स्मृतः।'
( ब्रह्मवैवर्त्तब्रह्मखण्डे १०।१३४ )

'पुराणं पाठयामास तं च ब्रह्मा कृपानिधिः।
पुराणवक्ता सूतश्च यज्ञकुण्डसमुद्भवः।' ( ब्र० वै० १३५ )

एवमेव शिवपुराणे वायवीयसंहिताया उत्तरभागे ( १।६ ) उक्तम् अत्र सौतिना स्वपिता यज्ञकुण्डसमुद्भूत उक्तः। तादृक्सूतपुत्रत्वादेव क्वचित्सौतिरपि सूतपदेनोक्तः। यथा जनकशब्द उपाधिपरः सीरध्वजादिषु प्रयुक्तः। आद्य शङ्कराचार्य्याणामुत्तराधिकारिणोऽपि शङ्कराचार्य्यनाम्ना ख्याप्यन्ते। तथैव प्रकृतेऽपि बोध्यम्। सूतजातित्वे तद्वधेन बलदेवेन ब्रह्महत्या प्रायश्चित्तं न क्रियेत। प्रतिलोमजशब्दप्रयोगस्तु तिरस्कारार्थः। एव अथवा लोम्नां प्रतिलोमोऽग्निः। तस्माज्जातः प्रतिलोमजः अग्निजः सूतः। वायुपुराणे

'वैन्यस्य तु पृथोर्यज्ञे वर्तमाने महात्मनः।
सुत्यायामभवत्सूतः प्रथमं वर्णवैकृतम्।
ऐन्द्रेण हविषा तत्र हविः पृक्तं बृहस्पतेः॥
जुहावेन्द्राय दैवेन ततः सूतो व्यजायत।
शिष्यहव्येन संपृक्तमभिभूतं गुरोर्हविः॥
अधरोत्तरचारेण जज्ञे तद्वर्णवैकृतम्।
( वायु० १।३३।३६ )

इति रीत्या सुत्यायामभिषवभूमौ यज्ञकुण्डात्समुत्पन्नः पृथोर्यज्ञे ऐन्द्रं हविर्निक्षिप्तं बार्हस्पत्यञ्च हविर्निःक्षिप्तम्। देवेष्विन्द्रस्य क्षत्रियत्वात् बृहस्पतेः ब्राह्मणत्वात् 'स वा एष ब्राह्मणस्यैव यज्ञः यद् एतेन बृहस्पतिरयजत्। ब्रह्म हि बृहस्पतिः' 'ब्रह्म हि ब्राह्मणः' 'अथ राजन्यः यद् एतेन इन्द्रोऽयजत् क्षत्रं हीन्द्रः क्षत्रं राजन्यः' ( शतपथ ५।१।१।११ ) तस्मादैन्द्रेण चरुणा बार्हस्पत्यचरोरभिभूतत्वात् तत्साङ्कर्य्यगोद्भूतत्वात् लोमहर्षणस्य सूतत्वम्, सङ्करसूतसाम्यात् अग्निकुण्डस्य साक्षात् क्षत्रियत्वाभावात् ब्राह्मणजातिस्त्रीत्वाभावाच्च न मुख्यं सूतत्वम्, तदुद्भूतस्य लोमहर्षणस्य। सूतशब्दस्य सप्तमी विभक्तौ सूत्यामिति रूपं भवति न सूत्यायाम् इति।

इह च सूत्यायामिति पाठे तेनाभिषवभूमिरेव तदर्थो न सूतस्त्रीति।

शूद्रश्चेन्न व्यासासनमारोहेत्।
अस्य ब्रह्मासनं दत्तम्।
( भा० १०।७८।३० )

इति तस्मै व्यासासनं दत्तम्। तच्च तस्य शूद्रत्वे विरुध्येत।

'व्यासासनोपवेशाच्च शूद्रश्चाण्डालतां व्रजेत्।
विप्रस्यैवाधिकारोऽस्ति व्यासासनसमाक्रमे।
धर्माणां श्रुतिगीतानामुपदेशे तथा द्विजः' ( १।१।५ )

वंशीधरी टीकायामुद्धृतं सूतसंहितावचनम्। 'सूतानामश्वसारथ्यम्' ( १०।४७ मनुः ) सञ्जयस्य धृतराष्ट्रसारथ्यं प्रसिद्धम्। कर्णस्यापि सूतत्वं प्रसिद्धम्। न चैतेषामुपस्पृश्यत्वादिकम्-हरिवंशे-'एतस्मिन्नेव काले तु यज्ञे पैतामहे शुभे।

सूतः सुत्यां समुत्पन्नः सौत्येऽहनि महामतिः।
यस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः। (१।५३३-३४)

नीलकण्ठेन च सुत्यां सोमाभिषव-काले अभिषवः सोमवल्ल्याः कण्डनम् रसनिष्कासनार्थम्। अत्र वायुपुराणवाक्ये-सूत्यामिति पाठो नास्ति किन्तु सुत्यायामिति। जातिवाचकात्सूतशब्दात् ङाषि सूतो इति भवति। तस्य च सप्तम्यां सूत्यामिति भवति सूत्याशब्दस्तु संज्ञायां 'समजनिषद्-निपतमनविद् षुञ्' (पा० ३।३।९९) इति सूत्रात् षुञ् धातो। संज्ञायां क्यपि, तुकि यपि सुत्या शब्दनिष्पत्तिः। अभिषवस्तदर्थः सुत्याभिषवः सवनं च स इत्यमरकोषश्च तेन यथोक्त एवार्थः।

ब्रह्मणः पौष्करे यज्ञे सुत्याहे वितते सति।
पृषदाज्यात्समुत्पन्नः सूतः पौराणिको द्विजः॥

वक्तावेदादिशास्त्राणां त्रिकालामलधर्मवित्

इति अग्निपुराणस्कन्धपुराण ब्रह्मोत्तरखण्डे

कौटलीये च—वैश्यान्मागधवैदेहकौ (क्षत्रियाब्राह्मण्योः) इति संकरसूतं निरूप्य पौराणिकस्त्वन्यः सूतो मागधश्च ब्रह्मक्षत्राद्विशेषः (३।७।३१) पौराणिकः सूतो ब्राह्मणाद्विशेषः मागधो क्षत्रियाद्विशेषः इति तत्रैव गणपतिशास्त्रि टीकायाम्।

सूतः सुत्यां समुत्पन्नः सौत्येऽहनि महामतिः
इति तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः

इति च विष्णुपुराणप्रथमांशे तृतीयाध्याये। अग्निपुराणकूर्मपुराण-वचनै-र्व्यासशिष्य स्यपौराणिकसूतस्य अयोनित एवोत्पत्तिः प्रतिलोमसूतविलक्षणः कथ्यते। तस्य द्विजत्वं विष्णवंशसंभूतत्वञ्च तथैव मागधस्यापि तत्सहपठितस्या-योनिजत्वम्। भविष्यपुराणे प्रतिसर्गपर्वणि शौनकादिभिः सूताय—

सत्यं ब्रह्मन् वदोपायं नराणां कीर्तिकारकम्। (२४।३)

इति ब्राह्मणत्वं लोमहर्षणस्योक्तम्। अनुशासनपर्वणि

देवतानन्तरं विप्रान् तपः सिद्धान् तपोधिकान्।
कीर्तितान् कीर्तयेष्यामि सर्वपापविमोचनान् (१६५।३६)

लोमशो नचिकेतश्च लोमहर्षण एव ।
ऋषिरुग्रश्रवाश्चैव भार्गवश्च्यवनस्तथा । (४६।३७)

इति विप्रत्वेन लोमहर्षण उक्तः ।

कूर्मपुराणे च
'त्वया सूत महाबुद्धे भगवान् ब्रह्मवित्तमः ।
इतिहासपुराणार्थं व्यासः सम्यगुपासितः ॥
त्वं हि स्वायम्भुवे यज्ञ सुत्याहे वितते सति ।
संभूतः संहितां वक्तुं स्वांशेन पुरुषोत्तमः ॥' इति

पुरुषोत्तमांशत्वं सूतस्योक्तम् । तेन लोमहर्षणस्य प्रतिलोमजसंकरत्वं सर्वथापास्तम् ।

यदुक्तम् 'सूतस्य ब्राह्मणत्वे शौनकादिभिस्तस्मै प्रणामः कृतः स्यान्न चैवं दृश्यते तस्माच्छूद्र एव सूतः' इति तन्न-'नैमिषे सूतमासीनमभिवाद्य महामतिम् । कथामृतरसास्वादकुशलः शौनकोऽब्रवीत्' ( भागवतमहात्म्ये १।३ ) इति शौनककर्तृकाभिवादनस्य स्पष्टमुपवर्णितत्वात् । शिवपुराणे विश्वेश्वरसंहितायाञ्च —

'सूत सूत महाभाग व्यासशिष्य नमोऽस्तु ते ।
तदेव व्यासतो ब्रूहि भस्म महात्म्यमुत्तमम्'(१।२३।१)इति ऋषिकर्तृकः सूतस्य नमस्कारः । न च श्रीमद्भागवते ऋषीणां सङ्कल्पादेव सूतस्यापि व्यासनार्हत्वं ब्राह्मणत्वञ्चोक्तमिति वाच्यम्, द्रौपदी धृष्टद्युम्नादीनांमग्निकुण्डसमुद्भूतत्वेऽपि क्षत्रियत्वसंकल्पेनोत्पादितत्वात् क्षत्रियत्वमिव सूतस्यापि अग्निकुण्डसमुद्भूतस्य ऋषीणां ब्राह्मणत्वसङ्कल्पेन ब्राह्मणोत्तमत्वं युज्यत एव । अग्नेर्भगवन्मुखत्वेन मुखोत्पन्नस्य ब्राह्मणत्ववदग्निसमुद्भूतस्यापि ब्राह्मणत्वमेव ।

'वैश्वानरः प्रविशति-अतिथिर्ब्राह्मणो गृहे' ( कठोपनिषदि १।१।७ )
'ब्राह्मणो वैश्वानरः' ( तै० ब्रा० ३।७।३।२ )

इति ब्राह्मणस्याग्नेश्चाभेद उक्तः । वीरमित्रोदये पृ० ४०६

'मृषा ब्राह्मण कन्याया विवाहेषु समन्वयात् ।
जातः सूतोऽत्र निर्दिष्टः प्रतिलोमविधिर्द्विजः ॥'

इति उशनो वाक्य व्याख्याने उक्तम । ब्राह्मणकन्यायां विधिहीनेषु विवाहेषु ऊढायां समन्वयात् सजातीयात् जातः । अत्र शास्त्रे प्रतिलोमविधिः-प्रतिलोमधर्मा द्विजो

निर्दिष्टः। सच वेदानर्हः तथाप्येषां स्मार्त्तानां धर्माणां अनुपश्चात्ब्राह्मणं पुरस्कृत्य ब्राह्मणभावेन बोधकः उपदेष्टा भवति। ततश्च विविविकल-विवाहोढब्राह्मणीजातस्य ब्राह्मणस्यैव सुतरांतस्य प्रतिलोमधर्मस्येदमुपनयनम्, न सूतजातेरिति न विरोधः। न च 'मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात्।' इति सूतस्य छन्दोविषयेऽस्नातत्वोक्त्या तदनधिकारेण शूद्रत्वं ज्ञायते इति वाच्यम्। अस्नातशब्देनापारङ्गतत्वस्यैवोक्तः। तथा वेदज्ञान सत्त्वेऽपि तत्र पारङ्गतत्वं नास्तीत्येव विज्ञायते। शूद्रत्वेन ततो ब्राह्मणानां विद्याग्रहणमनुपपन्नमेव स्यात्,। 'न हीनतः परमभ्याददीत' इति महाभारत वचनविरोधात्। 'एतद्धस्मवैतद्विद्वान् आह महिदास ऐतरेयः' (ऐतरेयोपनिषदि १।८।२) (छान्दोग्ये ३।१६।७) च महिदासोनामत इतराया अपत्यमैतरेण तेन इतरानाम्न्याः पुत्र आसीत् न तु इतरस्याः शूद्रायाः। इतरशब्दः सर्वनामत्वेनान्यस्य हीनस्य वा वाचको भवति। तथात्वे पञ्चम्यामितरस्या इति रूपं भवति न इतराया इति। श्रीशङ्कराचार्येण सायणाचार्य्येण इतराया इत्येव लिखितम् नेतरस्या इति। तेन महिदासस्य माता इतरा नाम्नी ब्राह्मणी न शूद्रा। 'संज्ञोपसर्जने च विशेषेऽवतिष्ठते' (१।१।२६) इत्यत्र कैय्यटेनोक्तं 'सर्वनामकार्य्यं अन्तर्गणकार्य्यञ्च सर्वनामत्वयुक्तानामेव भवति न तु संज्ञोपसर्जनानाम्।' यत्र सर्वशब्दः कस्यचित्संज्ञा भवति तत्र चतुर्थ्यां सर्वाय इति रूपं भवति, न सर्वस्मै इति, नामविशेषत्वादेव इतराया इति सर्वनामकार्याभावः। किञ्च इतरशब्दस्य किञ्चिद्धीनवाचकत्वे सत्यपि न शूद्रवाचकत्वम्। अत्र तु प्राचीनैराचार्य्यैः इतराया अपत्यमिति समुल्लेखात् संज्ञापरत्वमेव न हीनवाचकत्वमपि। यदीतरा नाममात्रेण तस्याः शूद्रात्वं तदा शबरस्वामिनां मीमांसा भाष्यकाराणामपि शबरजातित्वं सिद्ध्येत्। रामायणे वर्णितो ऋषिर्मातङ्गश्चाण्डालः स्यान्नच तद्युक्तम्, नामपरत्वादुक्तशब्दानाम् तथैव प्रकृतेऽपि बोध्यम्। मृच्छकटिकप्रणेता शूद्रकोऽपि द्विज एव। 'द्विजमुख्यतया कविर्बभूव प्रथितः शूद्रक इत्यगाधसत्त्वः।' (१।३) मृच्छकटिक) सुबुद्धिशर्मा मुद्राराक्षसवर्णितः राक्षसो राक्षस एव स्यात्।

सायणाचार्येण तु ऐतरेयब्राह्मणभाष्यभूमिकायां स्पष्टमुक्तम् 'कस्यचिन्महर्ष-

बह्व्यः पत्न्यो विद्यन्ते स्म । तासां मध्ये कस्याश्चित् इतरा इति नामधेयम् । तस्या इतरायाः पुत्रो महिदासाख्यः कुमारः । तदीयस्य पितुर्भार्यान्तर-पुत्रेष्वेव स्नेहातिशयो न तु महिदासे । ततः कस्याञ्चिद् यज्ञसभायां तं महिदासमवज्ञाय अन्यान् पुत्रान् स्वोत्सङ्गे स्थापयामास । तदानीं खिन्नवदनं महिदासमवगत्य इतराख्या तन्माता स्वकीयकुलदेवतां भूमिमनुसस्मार । सा च भूमिदेवता दिव्यमूर्तिधरा सती यज्ञसभायां समागत्य महिदासाय दिव्यं सिंहासनं दत्त्वा तत्र एनमुपवेश्य सर्वेषु कुमारेषु पाण्डित्याधिक्यमवगमय्य एतद्ब्राह्मणप्रतिभानरूपं वरं ददौ । तदनुग्रहात् तस्य मनसा… …चत्वारिंशदध्यायोपेतं ब्राह्मणं प्रादुरभूत् । ( ऐ० ब्रा० भाष्ये ) । तेन ऐतरेयो महिदासो ब्राह्मण एव ।

शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम । ३ १७ मनुः ।

जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते । मनुः ।

इति निषेधाद् ब्राह्मणस्य शूद्राविवाहो न संभवत्येव ।

न च 'अक्षमाला वसिष्ठेन संयुक्ताधमयोनिजा (मनुः ९।२३) इति वचने-नाधमयोन्युत्पन्नस्त्रीविवाहोऽनुमत एवेति वाच्यम्, वसिष्ठपत्न्या अरुन्धत्या एवाक्षमालात्वेन तस्याश्च देवहूत्यां कर्दमादुत्पन्नत्वेनाधमयोनिजत्वाभावेऽपि महर्षियोन्यपेक्षया क्षत्रियासमुद्भूतत्वेन स्त्रीत्वेन चाधमयोनिजत्वोपपत्तेः । भागवते—

'अदुष्टापतितां भार्यां यौवने यः परित्यजेत् ।

सप्तजन्म भवेत् स्त्रीत्वम् ॥' ( पराशरस्मृतिः ४।१६ )

इति पापकृत्त्वेन पापयोनित्वमुक्तम् । 'येऽपि स्युः पापयोनयः । स्त्रियो…' (९।३२) गीतायाञ्च तदेवोक्तम् । 'किं पुनर्ब्राह्मणाः पुण्या' इति ब्राह्मणानां तदपेक्षया पुण्ययोनित्वमुक्तम् ।

एतेन ( भारत में जातिभेद पुस्तके ) क्षितिमोहनसेनेन यत् 'ऋषिणा स्वीयायां ब्राह्मणपत्न्यामुत्पन्नान् पुत्रानुत्सङ्ग समुपवेश्य तत्त्वान्युपदिष्टानि । शूद्रायामुत्पन्न ऐतरेयश्चोपेक्षितः इत्युक्तम्, तन्निर्मूलम् । ऋषिपत्न्या इतरानाम्न्याः शूद्रात्वे प्रमाणाभावात् ।

कश्चिदृषिः कण्ववंशप्रसूतात् पर्वतमहर्षेरुत्पन्नः । तस्य रात्रिः इतरा

चेति द्वे पत्न्यौ इति वंशब्राह्मणे (९।५।३) उक्तम्। तत्र यथा रात्रिशब्देन रात्रिनाम्नी स्त्री विवक्षिता तथैव इतरा शब्देनापि इतरानाम्नी स्त्री विवक्षितेति स्पष्टम्। सायणेनापि इतरा नाम्ना ऋषिपत्नी निर्गीतेत्युक्तमेव। लिङ्गपुराणे उत्तरभागे २५८ अध्याये स्पष्टमेतत्।

काश्चद् द्विजो महाप्राज्ञस्तपस्तप्त्वा कथञ्चन ७।१६।
पुत्रमेकं तथोत्पाद्य संस्कारैश्च यथाक्रमम्।
योजयित्वा यथाकालं कृतोपनयनं पुनः ।'१७

नहि शूद्रापुत्रस्य संस्कारः संभवति।

अध्या यामास तदा सच नोवाच किञ्चन।
न जिह्वा स्पन्दते तस्य दुःखितोऽभूद् द्विजोत्तमः। १२
वासुदेवेति नियतमैतरेयो वदत्यसौ।
पिता तस्य तथा चान्यां परिणीय यथाविधि १९।
पुत्रानुत्पादयामास तथैव विधिपूर्वकम्।
वेदानधीत्य सम्पन्ना बभूवुः सर्वसम्मताः २।
ऐतरेयस्य सा माता दुःखिता शोकमूर्च्छिता।
उवाच (मम सपत्न्याः) पुत्राः सम्पन्ना वेदवेदाङ्गपारगाः॥
ब्राह्मणैः पूज्यमानास्ते मोदयन्ति च मातरम्।
मम त्वं भाग्यहीनायाः पुत्रो जातो निराकृतिः॥ २१।२२
ममात्र निधनं श्रेयः न कथञ्चन जीवितम्।
इत्युक्तः सच निर्गम्य यज्ञवाटं जगाम वै॥ ३२
तस्मिञ्जाते द्विजानां तु मन्त्रा न प्रतिपेदिरे।
ऐतरेये स्थिते तत्र ब्राह्मणा मोहितास्तदा॥ २४
ततो वाणी समुद्भूता वासुदेवेति कीर्तनात्।
ऐतरेयस्य ते विप्राः प्रणिपत्य यथातथम्॥ २५
पूजां चक्रुस्ततो यज्ञं स्वयमेव जगाम वै।
ततः समाप्य तं यज्ञमैतरेयं धनादिभिः॥ २६
ऋग्वेदान् सदस्याह स षडङ्गान् समाहितः।
तुष्टुवुश्च तथा विप्रा ब्रह्माद्याश्च तथा द्विजाः॥ २७

ससृजुः पुष्पवर्षाणि खेचराः सिद्धचारणाः।
एवं समाप्य तं यज्ञमैतरेयो द्विजोत्तमः॥
मातरं पूजयित्वा च विष्णोः स्थानं जगाम वै। २८-२९

अत्र स्पष्टमैतरेयस्य द्विजोत्तमत्वमुक्तम्। इतरायास्तन्नाम्न्याः ब्राह्मण्याः प्रथमपत्न्याः पुत्रस्य जिह्वाऽस्पन्दनं दृष्ट्वा तत्पित्राऽन्यो विवाहः कृतः। प्रथम-विवाहश्च सवर्णाया एव भवति। 'सवर्णाग्रे द्विजातीनां' मनुः (३।१२) ब्राह्मण-क्षत्रियवैश्यानां प्रथमविवाहे कर्तव्ये सवर्णा श्रेष्ठा भवति। तेन महर्षेस्तस्य प्रथमपत्नी इतरा नाम्नी तत्सवर्णैव। तस्याश्च पुत्रो महिदासो ब्राह्मण एव न शूद्रः। स्कन्दपुराणे माहेश्वरखण्डस्य कुमारिका खण्डेऽपि—

'अत्र तीर्थवरं पूर्वमैतरेय इति द्विजः।
सिद्धिं प्राप्तो महाभाग वासुदेव प्रसादतः।' (४२।२७)

इत्यर्जुनप्रश्ने नारदेनोक्तम्-

'अस्मिन्नेव मम स्थाने हारीतस्यान्वयेऽभवत्। २८
माण्डूकिरिति विप्राग्र्यो वेदवेदाङ्गपारगः।' अत्र तत्पिता विप्राग्र्य इति स्पष्टमुक्तम्।

तस्यासीदितरा नाम भार्या साध्वी गुणैर्युता।
तस्यामुत्पद्यत सुतस्त्वैतरेय इति स्मृतः॥ ४२।३०

अत्र इतरा नाम्नी साध्वी भार्या तस्य महर्षेरासीदित्यपि स्पष्टम्। एतेन सर्वथाप्यैतरेयस्य ब्राह्मणत्वं सिध्यति।

यदुक्तम् 'जुगुप्सितत्वेन इतरेति शूद्रा नामे'ति तन्न, तथात्वे मतङ्गशूद्रका-दीनां शूद्रत्वापत्तेः।

'स च बाल्यात्प्रभृत्येव प्राग्जन्मन्यनुशिक्षितम्।
जजाप मन्त्रं त्वनिशं द्वादशाक्षरसंज्ञितम्।
एवं प्रभावः सोऽभूच्च बाल्ये विप्रसुतस्तदा।' ४२।३१

विप्रसुतत्वमत्रापि स्पष्टम्।

'न शृणोति न वक्त्येव न चाध्येति कथञ्चन।
ततो मूकोऽयमित्येव नानोपायैः प्रबोधितः।

ततो निश्चित्य माण्डूकिर्जडोऽयमिति भारत।
अन्यान् विवाहयामास दारान् पुत्रांस्तथादधे।
पिङ्गा नाम च या भार्या तस्याः पुत्रांश्च जज्ञिरे।
चत्वारः कर्मकुशलाः वेदवेदाङ्गवादिनः।

द्विजैः सर्वत्र पूजितः ब्राह्मणपुत्रत्वादेव भगवद्विष्णुना ऐतरेयः श्रौतेषु कर्मसु प्रवर्त्तितः।

त्वञ्च वत्स श्रौतधर्मान् सम्यगाचर श्रद्धया।
यज यज्ञैरवाप्यैव दारान् नन्दय मातरम्। ४२।२२८-२९
साम्प्रतं प्रतिभाष्यन्ति वेदाश्चापठिता अपि।
ततस्त्व कोटितीर्थे च यज्ञे वै हरिमेधसः॥
याहि तत्र भविष्यं ते सर्वं मातुरभीप्सितम्। २३७

पूर्वजन्मनि ऐतरेयः शूद्र आसीदिति तेनैवोक्तम्॥

ऐतरेयः स्वजननीं मुदितो वाक्यमब्रवीत्।
पुराहमभवं शूद्रो भीतः संसारदोषतः॥
परिनिष्ठागतं धर्मं ब्राह्मणं शरणं गतः २४०
स कृपालुर्मम प्राह मन्त्रं वै द्वादशाक्षरम्।
सदेमं जप चेत्युक्त्वा तमहं जप्तवान् सदा॥
तेन जाप्यप्रभावेण ममोत्पत्तिस्तवोदरात्।
जातस्मृतिर्विष्णुभक्तिः स्थितिस्तत्र च सर्वदा॥ २४२
इदानीञ्च प्रयाम्येव यज्ञे ते हरिमेधसः।
गेहाय मातरं प्रोच्य स यज्ञे प्रोक्तवान् द्विजः॥
ततो वेदार्थनैपुण्यैस्तेन ते तोषिता द्विजाः।
आवर्ण्यासनपूजाद्यैः पूजयामासुरङ्ग तम्॥
प्रददुर्दक्षिणां सर्वां हरिमेधाः सुतामपि।
वन्दयित्वा स्वजननीं पुत्रानुत्पाद्य चामलान्॥
इष्ट्वा यज्ञैरैतरेयो द्वादशीव्रततत्परः।
वासुदेवानुध्यानेन मोक्षं पश्चादुपागतः॥ ४२।२५०

विष्णुमन्त्रजपप्रभावेण ब्राह्मणगृहे तत्सवर्णायामितरानाम्न्यां पत्न्यां

तज्जन्म जातम्, तेन तस्य ब्राह्मण्यं निश्चप्रचम्। यद्यपि पौराणिके तच्चरित्रे मह्हीपूजनमहिदास इति नाम च नोल्लिखितम् तथापि अन्यस्यैतरेयस्याप्रसिद्धत्वात् स एव सः। दुष्यन्तशकुन्तलादिचरितेषु रामादिचरितेषु च वर्णपितृभेदाद्वर्णनभेदः संभवत्येव। एतेन 'इतरस्त्वन्यनीचयोः' अमरकोषानुसारेण नीचजातीया स्त्री इतरा इत्यपास्तम्, पूर्वोक्तवर्णनैस्तन्नाम्न्या ब्राह्मण्या एव पुत्र ऐतरेय इति सिद्धत्वात्। तेनैव महिदासेति दासान्तनाम्ना तस्य शूद्रत्वमित्यपि खण्डितम्। 'हरिदासस्य राजर्षे' रिति युधिष्ठिरस्यापि भागवते दासशब्दप्रयोगवन्महीदेव्या भक्तस्यैतरेयस्य महिदासशब्दप्रसिद्धेः। शूद्रगणानां महीसन्तानत्वेन तस्य महिदासत्वमित्यपि निरस्तम्। तत्र प्रमाणाभावात्। ब्राह्मणत्वे प्रमाणस्योक्तत्वाच्च। महीति पृथिव्या अधिष्ठात्री देवता तया शिक्षितत्वादैतरेयस्य कथं शूद्रत्वं सिध्यति। 'नमो मात्रे पृथिव्यै' ( यजु० सं० ९।२ ) अत्र मही देवताया उपासकः स न पुत्रः। आख्यायिकायां सायणेन दिव्यमूर्तिधरा इत्युक्तम्। 'पत्युर्नो यज्ञसंयोगे' इति सूत्रात् यज्ञसंयोग एव पत्नीशब्दनिष्पत्तिः। शूद्राया यज्ञसंयोगाभावात् पत्नीत्वमेव न संभवति। ततश्च शूद्रापत्न्यामुत्पन्न ऐतरेय इति व्यपदेशो नोपपद्यते। 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति श्रुत्या शूद्रस्य यज्ञानधिकारबोधनात्। भूमिदेवताया दिव्यमूर्तिधरत्वन्तु 'भावं तु बादरायणोऽस्ति हि' (१।३।३३) 'अभिमानि व्यपदेशस्तु' सूत्रे तदीयशाङ्करभाष्ये च देवतानां विग्रहवत्त्वं साधितमेव। 'मृदब्रवीत्' 'आपो अब्रुवन्' इति चेतनास्तु अधिष्ठातारो देवतात्मानो मन्त्रार्थवादादिव्यवहारात् व्यपदिश्यन्ते। धातोः कर्मणः समानकर्तृकादिच्छायां वा इति पा० सूत्रादिच्छायां सन् भवति। अश्मा लुलुठिषते, कूलं पिपतिषति, इत्यत्राश्मादीनामचेतनत्वेनेच्छाया असंभवात्। 'आशङ्कायामचेतने षूपसंख्यानम्' इति 'तत्पतनशङ्कायामत्र सन् प्रत्ययो बोध्यः। अन्तेऽथवा सर्वं चेतनावत्। एवं त्वाह-कंसकाः सर्पन्ति। शिरीषोऽयं स्वपिति। सुवर्चला आदित्यमनुपर्य्येति। ऋषिः पठति। शृणोत ग्रावाणः ( तै० सं० १।३।१३।१ ) ( महाभाष्यम् ३।१।१।७ ) 'ऋषिर्वेदः सर्वभावानां चैतन्यं प्रतिपादयति। 'आत्मादृ तद्दर्शनेनेति भावः' ( प्रदीपः )

'सर्वत्र परिणामदर्शनेन चेतनाधिष्ठानं विना च तदसंभवात् सर्वस्य

तदधिष्ठितत्वं ज्ञायते' (उद्योतः)। एतेन पृथिव्याधिष्ठात्र्या देवताया एव महीत्वम्। तस्याश्च दिव्यमूर्तिधारणसामर्थ्यम्। यथा कुमारीशब्दस्याविवाहितापरत्वेऽपि राजकुमारी इति नामान्तर्गतत्वेन नाविवाहिता परत्वम्, यथा वा गुप्तान्तशब्दस्य वैश्यपरत्वेऽपि अभिनवगुप्ताचार्येति नामान्तर्गतत्वेन न वैश्य परत्वम्, यथा वा सत्यात् शर्म यस्य स सत्यशर्मा क्षत्रियोऽपि भवति, धर्मो वर्म यस्य स धर्मवर्मा ब्राह्मणोऽपि भवति, अभिनवाद्गुप्त इत्यभिनवगुप्तो ब्राह्मणोऽपि भवति, तथैव मह्या उपासको महीदासोपि ब्राह्मणो भवति। चाणक्येन 'ब्राह्मणोऽहं विष्णुगुप्तः' इत्युक्तम्। स ब्राह्मणत्वा देवाशाङ्कः श्राद्धे निमन्त्रितः। चन्द्रगुप्तस्तु गुप्तान्तनामापि मौर्य्यः शूद्र एव। केषाञ्चिद्रीत्या क्षत्रियः। यमस्य लेखकः चित्रगुप्तो न वैश्यः, तस्मात्सम्पूर्णनाम्नः पृथगेव शर्म-वर्म-गुप्त-दासादि नामप्रयोगेणैव ब्राह्मणत्वादिकं व्यज्यते न नामान्तर्गतैः शब्दैः। चतुरक्षरो महिदासस्तु नामैव। यथा दासान्तोऽपि कालिदासशब्दो ब्राह्मणपरो न शूद्रापरस्तथैव प्रकृतेऽपि बोध्यम्। दिवोदासस्य सुदासादीनां क्षत्रियत्वमेव। सुश्रुते दिवोदासस्य नाम। दिवोदासः काश्चिद्राजर्षिरिति बालमनोरमा। प्राचीनेषु वसिष्ठमन्वादिषु शर्मवर्मादिप्रयोगाभावेऽपि यथा तेषां ब्राह्मणादित्वं तथैव महिदासस्य शर्मान्तत्वाभावे ब्राह्मणत्वमेव।

यदुक्तम् 'मातृनाम्ना प्रसिद्धत्वादैतरेयस्य शूद्रत्वम्' तदपि न, बृहदारण्यके वंशब्राह्मणे गौतमीपुत्रः, भारद्वाजपुत्रः, आत्रेयीपुत्रः, शाण्डिलीपुत्र इति मातृनामप्राधान्येऽपि यथा तेषां न शूद्रत्वं तथैव प्रकृतेऽपि ज्ञेयम्। स्त्रीप्राधान्या वंशा इति मातृनाम्ना निर्देशः 'स्त्रीप्राधान्या'दिति शाङ्करभाष्यम्।

महाभाष्ये पाणिनिर्दाक्षीपुत्रत्वेन, पतञ्जलिश्च गोणिकापुत्रत्वेन प्रख्यातौ। एवं सौमित्र-गाङ्गेय-कौन्तेय-सौभद्रादयो मातृनाम्ना प्रसिद्धाः। ते तु क्षत्रियाः नतु शूद्राः।

वस्तुतस्तु यत्र पुरुषस्यानेका भार्य्या भवन्ति तत्र भेदज्ञानार्थं मातृनाम्ना संततयः प्रसिध्यन्ति। तेनैव यथा काश्यपस्य पत्न्यामदित्यां जाता आदित्याः आदितेया वा, दित्यामन्यस्यामुत्पन्ना दैत्याः, विनताया वैनतेयाः, कद्र्वाः काद्र-

वेयाः, दनुपुत्रा दानवाः, प्रसिद्धास्तथैव पर्वतमहर्षेः प्रथमायां पत्न्यामितराया-मैतरेयः प्रसिद्धः।

यदुक्तं पितृनामाप्रसिध्या तस्य शूद्रात्वमिति तदपि न दासी पुत्रादेस्तथा त्वापत्तेः पुराणानुसारेण माण्डूक्यपरनामकस्य पर्वतस्य तत्पितुः प्रसिद्धेश्च।

यैस्तु गुणकर्मानुसारेण वर्णव्यवस्थाऽङ्गीक्रियते तैस्त्वैतरेयस्य शूद्रत्वं न वक्तुं शक्यते, तस्य ऐतरेयब्राह्मणाविष्कारकत्वेन ब्राह्मणोत्तमत्वस्यैव सिद्धेः। कैश्चापकृष्टैर्गुणैः कर्मभिश्च तस्य शूद्रत्वमिति साधयितुं शक्यते।

जन्मना वर्णसिद्धान्ते-कस्माच्छूद्रात् कस्याञ्च शूद्रकन्यायां तज्जन्म इत्यपि तैर्न साधयितुं शक्यते। तस्मात्-भाष्यपुराणाद्युक्त्यनुरोधेन तस्य सुतरां ब्राह्मणत्वमेव। इतराया नीचत्वमपि प्रमाणशून्यम्। इतराया नीचत्वे सर्वनामत्वे इतरस्या अपत्यमिति व्युत्पत्तिः स्यात्। भाष्यकारैश्च इतराया'अपत्यमित्युक्तम्। नीचत्वमपि किं तस्या इति न प्रमाणसिद्धम्। इतराया नीचवाचकत्वे 'एतद्धस्म आह महिदास ऐतरेयः' इति गौरवबोधकवाक्ये तत्प्रयोगोऽसंगत एव स्यात्। यदस्माभिरुक्तं तदेकेन नीचस्त्रीपुत्रेणोक्तमिति विपरीतमेवापद्येत। तस्मान्नेतराशब्दो नीचार्थकः किन्तु संज्ञापरस्तत एव सर्वनामकार्य्याभावः पुराणभाष्याद्यनुरोधश्च सुरक्षितः स्यात्।

किञ्च 'अश्रोत्रियः पिता यस्य पुत्रः स्याद्वेदपारगः।
अश्रोत्रियो वा पुत्रः स्यात्पिता स्याद्वेदपारगः' (मनु० ३।१३६)
ज्यायांसमनयोर्विद्याद् यस्य स्यात् श्रोत्रियः पिता'।
(मनु०३।१३७)

अत्र पितुरुत्तमत्वेऽपि नोत्तमत्वमुक्तम्। पितुर्नीचत्वे पुत्रस्योत्तमत्वेऽपि नोत्तमत्वम्। वेदेऽपि 'ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यम्' (यजुर्वेद वा.सं. ७।४६) आग्नीध्रं प्रति यजमान आह-अहमद्य पितृमन्तं पैतृमत्यं प्रशस्तपितृपितामहादिमन्तं भवन्तं ब्राह्मणं लभेयेति। 'मातृमान् पितृमानाचार्यवान् पुरुषो वेद' (वृ.अ. उ.) नहि कश्चिदपि पितृमातृविहीनो भवति। तस्मादत्र प्राशस्त्यार्थे मतुपप्रत्ययो बोध्यः। प्रशस्तः पिता अस्य इति पितृमान्, प्रशस्ता माता अस्य इति मातृमान्, पितृमन्तमिति मन्त्रे तु माता च पिता च पितरौ, इत्येकशेषत्वेन पितृमच्छब्देन प्रशस्तमातृत्वं प्रशस्तपितृत्वं च विवक्षितम्। पैतृमत्यमित्यनेन

प्रशस्ताः पितरः पितामहादयो यस्य तमिति व्युत्पत्त्या प्रशस्तपितृपितामहादित्वेन ब्राह्मणस्योत्तमत्वं बोध्यते। नीचमातृत्वेन तु निन्दैव भवति न प्रशंसा। तथात्वे तन्मतस्योपेक्षणीयत्वापत्तेः। नामग्रहणमेव पूजार्थं भवति। यथोक्तम्-'वासुप्यापिशलेः' ( पा० ६।१।९२ ) आपिशलिग्रहणं पूजार्थम्, तथैवारण्यकेऽपि महिदास ऐतरेय इति नामग्रहणं पूजार्थमेव मन्तव्यम्। तच्च नीचपुत्रत्वे व्यर्थमेव स्यात्।

'सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते। ( मनु० २।१४५)

सम्मानार्थमेव मातृनामग्रहणमपि भवति। न चस्त्रीपुत्रत्वोक्त्या न मातृसंमानं भवति।

यदुक्तम् 'एतद्धस्म तद्विद्वान् आह महिदासः' ( ३।१६।७ ) अत्र ऋषित्वाचार्यत्वानुक्त्या ब्राह्मणत्वाभावो बोध्यत' इति तन्न, तत्र यज्ञतत्त्वबोद्धृत्वबोधनाय शत्रन्तविद्वत्प्रयोगस्यैव युक्तत्वेनाब्राह्मणत्वासिद्धेः। गुणकर्मानुसारि-वर्णत्वे विद्वच्छब्देन-ब्राह्मणत्वमेव सिद्ध्यति न शूद्रत्वम्।

'न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः।

कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्य्योपदिश्यते। (मनु० ३।१४)

इति शूद्राभार्याया निषिद्धत्वेनापीतराया न शूद्रात्वम्।



## वेदाध्ययनाधिकारः

कैश्चिन्नवीनैः शूद्राणां वेदेऽधिकारः साध्यते। तत्तु निराधारमेव। न च तेषामधिकाराऽदानेन पक्षपातित्वमेवेति वाच्यम्, चतुर्णामृषीणामेव परमात्मना चत्वारो वेदाः प्रत्ता इति वादिनामपि परमात्मनः पक्षपातित्वाविशेषात्। येषां पुण्यमासीत्तेषामेव तत्प्रदानेन वैषम्यमिति चेत्प्रकृतेऽपि पूर्वपुण्यानुसारेणैव त्रैवर्णिकेषु जन्म जायते। ततः पुण्येनैवात्रापि वेदाधिकारित्वे पक्षपातासिद्धेः। आधुनिकैरपि स्पष्टमुक्तम् 'दासानामनुपयुक्तमतीनां मन्वादिकर्तृकं वेदानाधिकारित्वविधानम् अनुग्रहार्थमेव।' (ऐतरेयालोचने पृ० १७)

बाल्मीकेर्ब्राह्मणत्वसाधनम्।

वाल्मीकिसम्बन्धेऽपीदानीन्तनरन्त्यजविशेषाणां स पूर्वज इत्युच्यते, तदपि न, 'कृतवान् प्रचेतसः पुत्रस्तद् ब्रह्माप्यन्वमन्यत (वाल्मकिरामायणे ७।१११।११) इति बाल्मीकेः प्रचेतसः पुत्रत्वमुक्तम्। प्राचेतसोऽपि तस्यैव संज्ञा। 'मुनिः प्राचेतसस्तदा (वा० रा० ७।९३।१६) इति। प्रचेतसो ब्रह्मपुत्रत्वञ्चोक्तम्। अश्वमेधसमये बाल्मीकिना स्वयमेव स्वपरिचयो दत्तः। 'प्रचेतसोऽहं दशमः पुत्रो राघवनन्दन। न स्मराम्यनृतं वाक्यम्।" (७।९६।१८) अध्यात्मरामायणेऽयं श्लोकः। अध्यात्मरामायणे तस्य संगतिपरिणामो वर्णितः –

"अहं पुरा किरातेषु किरातैः सह वर्धितः।
जन्ममात्रं द्विजत्वं मे शूद्राचाररतः सदा॥
(आध्यात्मरा० ६।६५)

'शूद्रायां बहवः पुत्रा उत्पन्ना मेऽजितात्मनः।
ततश्चौरैश्च संगम्य चौरोऽहमभवं पुरा॥

दुर्वृत्तोऽयं द्विजाधमः' इत्युक्त्यापि तस्य द्विजत्वमेव बोधितम्। 'वाल्मीकिर्यस्य चरितं चक्रे भार्गवसत्तम।" मत्स्यपुराणे (१२।५१) तस्य भार्गवत्वमुक्तम्। ऋक्षोऽभूद्भार्गवस्तस्माद् बाल्मीकिर्योऽभिधीयते। 'भार्गवपदस्य प्राचेतसत्वेनास्यापि भार्गवत्वम्। भृगोर्वरुणपुत्रत्वात् इति नागेशः। भृगोर्भ्राता

इत्यन्ये। स्कन्दपुराणे ( ५।१।२४ ) ( ७।१।२७८ ) सुमतिब्राह्मणपुत्रो वाल्मीकिरित्युक्तम्। भागवतेऽपि—

चर्षणी वरुणास्यासीद्यस्यां जातो भृगुः पुनः।
वाल्मीकिश्च महायोगी वल्मीकादभवत् किल॥ ( ६।१८।४ )

भृगोर्ब्रह्मपुत्रत्वेऽपि वरुणात् पुनर्जन्म। वाल्मीकिश्च तस्मात्पुनर्जातः। एतौ वरुणस्यासाधारणौ पुत्रौ इति श्रीधरीव्याख्या। वल्मीकस्यापत्यमिति व्युत्पत्त्या गोणीपुत्रादिवदस्य गौणं नाम। यथा शेषावतारः पतञ्जलिः गोणी नामकस्त्रीहस्तसम्बन्धात् गौण्या वृत्त्या गोणीपुत्र आख्यायते, तथैव वल्मीकप्रभवत्वेनास्य वाल्मीकित्वमुक्तम्, 'वल्मीक इति ऋषिविशेषस्य संज्ञा वा, इति रामाभिरामी टीका ( १।१।१ ) दुर्वृत्तत्वेनैव क्वचिच्चाण्डालत्वमुक्तम्, नतु जन्मना, पूर्वोक्तरामायणादिवचनविरोधात्।

'देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः।
पशुर्म्लेच्छोऽपि चाण्डालो विप्रा दशविधाः स्मृताः॥
( अत्रिस्मृतिः ३८१ )

इति रीत्या चाण्डालाचाररतस्य वाल्मीकेश्चाण्डालत्वं ब्राह्मणस्यैव सतो निन्दार्थं गौण्या वृत्त्योक्तम्। मत्स्यपुराणरीत्या वरुणवीर्यस्य वल्मीकनिपतितत्वेन वरुणपुत्रत्वमेव तस्य।

भक्तनाभादासविरचितभक्तमालीयप्रियादासीयटीकायां एकषष्टितमस्य भक्तस्य वाल्मीकेः ब्राह्मणस्यैव सतः भिल्लपालितत्वे भिल्लपुत्रीसंसर्गेण च दुर्वृत्तता सप्तर्षिसंसर्गेण चोद्धारो वर्णितः। अन्यश्च द्विषष्ठितमो वल्मीकिस्तथैवोक्तः, तस्य च श्वपचत्वमुक्तम्। सर्वथापि रामायणकर्त्ता वाल्मीकिर्ब्राह्मण एवासीत् पूर्वजन्मनि तस्य व्याधत्वं तु स्कन्दपुराणे वैष्णवखण्डे वैशाखमाहात्म्ये २१ अध्याये उक्तम्। वाल्मीकिर्भूत्वाऽन्यजन्मनि स रामायणमकरोत्। वस्तुतस्तत्र ब्रह्मपौत्र एव वाल्मीकिस्तत एव ब्राह्मणः। नारदेन सार्द्धं तस्यविशेषसम्बन्धो रामायणे दृश्यते।

## जानश्रुतिवृत्तान्तः

एवमेव ब्रह्मसूत्रेऽपशूद्राधिकारणे 'अहहारे त्वा शूद्र' ( छान्दोग्य० २।२।३ ) इति रैकसम्बन्धेन जानश्रुतेः शूद्रत्वमाशङ्क्यते, तदपि न, साहित्यसंगीतकला-

विहीनः साक्षात्पशुः पुच्छविषाणहीनः" इत्यादौ यथा साहित्यादिज्ञानशून्यस्य पशुत्वमौपचारिकमुक्तम् तथैव संवर्गविद्याहीनस्य जानश्रुतेः शूद्रत्वमौपचारिकमुक्तम् । यथा तत्र पशुसदृश एव पशुशब्दार्थः तथैवात्र शूद्रशब्दस्य शूद्रसदृश एवार्थः। अतोऽत्र शूद्रशब्दो निन्दार्थो गौण एव। अत एव यौगिकोऽयं शूद्रशब्दो न रूढः, शुचा अभिदुद्राव इति शूद्रः हंसवचनात् संवर्गविद्याहीनत्वात्तस्य शुक् शोक उत्पन्नः। तेनैव संवर्गविद्याप्राप्त्यर्थं सोऽभिदुद्राव। अत एव वच्छब्दप्रयोगाभावेऽपि वच्छब्दो ज्ञातव्यः। अत एव 'नहि वतिमति देशो गम्यते' इत्याशङ्क्य महाभाष्यकारेणोत्तरितम् अन्तरेणापि वतिमतिदेशो गम्यते तद् यथा एष ब्रह्मदत्तः। अब्रह्मदत्तं ब्रह्मदत्त इत्याह तेन मन्यामहे ब्रह्मदत्तवदयं भवतीति।' १।१।५।२२ एवमेव ४।१।४ सूत्रे महाभाष्येऽपि। अतस्मिन् स इत्यस्यानेकान्युदाहरणानि उक्तानि। उपनिषद्वाक्यव्याख्यानावसरे शङ्करभागवत्पादैरुक्तम् 'हंसवचनश्रवणात् शुक् शोक एनमाविवेश। तेनासौ शुचा आद्रवति श्रुत्वा रैक्वस्य महिमानं आद्रवति इति ऋषिरात्मनः परोक्षज्ञतां दर्शयन् शूद्र इत्याह—'

हंसवाक्यादात्मनोऽनादरं श्रुतवतो जानश्रुतेः शुक् उत्पेदे।
तां ऋषी रैक्वः शूद्रशब्देनानेन सूचयाम्बभूव आत्मनः परोक्षज्ञताख्यापनाय इति गम्यते, जातिशूद्रस्यानधिकारात्। हंसवचनेन शुचमभिदुद्राव, शुचावाऽभिदुद्रुवे, शुचा वा रैक्वमभिदुद्राव, इत्यवयवार्थः संभवति, रूढ्यर्थस्य चासंभवात्। दृश्यते चायमर्थोऽस्यामाख्यायिकायाम्। अपरस्मिन्सूत्रे च भाष्यम्। इतश्च न जातिशूद्रो जानश्रुतिः, यत्कारणं प्रकरणनिरूपणेन क्षत्रियत्वमस्य। उत्तरत्र चैत्ररथेन अभिप्रतारिणा क्षत्रियेण समभिव्याहारात् 'लिङ्गाद् गम्यते। 'तस्माच्चैत्ररथिर्नाम एकः क्षत्रपतिरजायत' इति क्षत्रपतित्वावगमात् क्षत्रियत्वमस्यावगम्यते। तेन क्षत्रियेण अभिप्रतारिणा सह समानायां विद्यायां संकीर्त्तनं जानश्रुतेरपि क्षत्रियत्वं सूचयति। प्रेषणाद्यैश्वर्ययोगाच्च जानश्रुतेः क्षत्रियत्वावगतिः।' अतो न शूद्रस्याधिकारः। उपनीतस्यैव वेदाधिकारं ब्रुवत् शास्त्रमनुपनीतयोः स्त्रीशूद्रयोर्वेदाध्ययनमनिष्टप्रापकं सूचयति। कथं तर्हि तदुपायावगमः पुराणादिभिरिति ब्रूमः। अतएवोक्तम्

'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।

इति भारतमाख्यानं कृपया मुनिना कृतम्।'

अतएव यदुच्यते "ब्रह्मचर्य्येण कन्या युवानं विन्दते पति'मिति वेदाध्ययनरूपं ब्रह्मचर्यं कन्याया उक्त' मिति तत्तुच्छम्, उत्तरार्धविरोधात्। 'अनड्वान् ब्रह्मचर्य्येणाश्वो घासं जिगीर्षति।' (अ० सं० ११।५।१८) नह्यनुडुहोऽश्वस्य वा वेदाध्ययनं संभवतिः तस्मादुपस्थसंयमरूपमेव ब्रह्मचर्यमितीह विवक्षितम् तस्यैव सर्वत्र संभवात्।

केचित्तु वात्स्यायनरीत्या वृषाश्वसंज्ञकौ पुरुषाविह गृह्येते। तौ ब्रह्मचर्येणैव घासं भोग्यपदार्थं प्राप्तुमिच्छतः।

'तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः।

१।२।१३ (याज्ञवल्क्यस्मृतिः)

'नवैताः कर्णवेधान्ता मन्त्रवर्जक्रिया स्त्रियाः।

विवाहोमन्त्रतस्तस्याः।' (या. स्मृति १।१५-१६)

'स्त्रीणाममन्त्रतस्तानि विवाहस्तु समन्त्रकः' (१५३ १ अग्निपुराणे)

'वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः।' (मनु० २।६७)

'एताः क्रियाः स्त्रीणाममन्त्रकाः तासां समन्त्रको विवाहः।' (बृहद्विष्णुस्मृतिः २५।१३।१४) सायणोऽपि 'किं बहुना पशुजातिरपि ब्रह्मचर्य्येण स्वाभिलषितं फलं लभते, इत्याह। अनड्वान् अनोवहन् पुङ्गवः ब्रह्मचर्य्येण ऊर्ध्वरेतस्त्वादिना धर्मेण अनोवहनादिकं स्वकीयं कार्यं निर्वर्तयन् उत्कृष्टं पतिं लभते। तथा अश्वो ब्रह्मचर्येण घास भक्षणीयं तृणादिकं जिगीर्षति भक्षितुमिच्छति। अन्यत्र च स एव धर्मब्रह्मज्ञानार्थी वेदाधिकारी यश्च त्रैवर्णिकः पुरुषः। स्त्रीशूद्रयोस्तु सत्यामपि ज्ञानापेक्षायामुपनयनाभावे नाध्ययनराहित्यात् वेदेऽधिकारः प्रतिबद्धः। धर्मब्रह्मज्ञानं तु पुराणादिमुखेन उत्पद्यते। तस्मात्त्रैवर्णिकपुरुषाणामेव वेदमुखेनार्थज्ञानाधिकारः।

दारसंग्रहकर्मणि अधीतसाङ्गोपाङ्गवेदां कन्यां प्रयच्छेत् गृह्णीयाद्वेति नैवं विधानं दृश्यते। 'अस्पृष्टमैथुनां भार्यां विन्देत्' (वशिष्ठस्मृतिः ८।१) इति तु लभ्यते। तस्मादुपस्थनिग्रहलक्षणम् ब्रह्मचर्य्यमिह विवक्ष्यते, न वेदाध्ययनलक्षणं ब्रह्मचर्य्यं विवक्षितम्।

यदुक्तम् 'वृषभाश्वसंज्ञकौ पुरुषावेवेह विवक्षितौ।' इति तद् न, निष्प्रयोजनत्वात्। तादृग्विवक्षणेऽपि नेष्टसिद्धिः। वृषोऽश्वो वा पुरुषो वेदाध्ययनलक्षणेन ब्रह्मचर्य्येण भोग्यं पाचयितुं समर्थौ उपस्थसंयमलक्षणेन वा? नाद्यः, निरुपपत्तिकत्वात्। वेदाध्ययनमन्तराऽपि शूद्रादयो भोग्यं पाचयन्त्येव। शूद्रादिकन्या अपि वेदाध्ययनमन्तरा युवानं पतिं विन्दन्त्येव। उपस्थसंयमलक्षणेन ब्रह्मचर्येण च सर्वविधपुरुषा भोग्यं पाचयन्ति। कन्याश्च तेनैव स्वास्थ्यसौन्दर्य्यलावण्यादिलाभात् युवानं पतिं विन्दन्ति सोढुं च शक्नुवन्ति। अन्यथा रोगादिग्रस्तत्वात् पुरुषाः कन्याश्च न स्वस्वाभीष्टं साधयितुं शक्नुवन्ति।

कैश्चित्तु 'बृहद्देवता (२।८४-८६) रीत्या गोधा, विश्ववारा, घोषा, अपाला रोमशा, सूर्य्या, ब्रह्मजाया जुहू अदितिः, इन्द्राणी-सामा-उर्वशी-लोपामुद्रा, यमी, रात्रिप्रभृतयोऽनेकाः ऋषिकाः मन्त्रद्रष्ट्र्यो ब्रह्मवादिन्यश्चासन्। तेन स्त्रीणामपि वेदाध्ययनाध्यापनाद्यधिकारः सिध्यत्येवे'ति तदपि न, ऋषीणां मनुष्यभिन्नत्वेन तच्चरिते मनुष्यानधिकारात्। 'मनुष्यदेवऋषिपितृगणाः प्रजापतेर्मानसा आख्याता' इति प्रशस्तपादीयभाष्यानुसारेण मनुष्यभिन्नत्वेन देवर्ष्यादिगणनादर्शनात् 'देवा मनुष्या असुरा पितरः ऋषयः' (अथर्व सं० १०।१०।२६) 'अथातर्पय चतुरश्चतुर्धा देवान् मनुष्यान् असुरान् उत ऋषीन्' (अ० सं० ८।९।२४) 'मनुष्या वा ऋषिषूत्क्रामत्सु' (निरु १३।१२)

ऋषीणां देवतानाञ्च मानुषाणाञ्च सर्वशः।
पृथिव्यां सहवासोऽभूद् रामे राज्ञि प्रशासति॥'
(म० भा० द्रोणपर्व ५९।१२)

इत्यादिनानाविधानि प्रमाणानि मनुष्यभिन्नानृषीन् बोधयन्ति। अतएव मानुषायुरपेक्षया तेषामृषीणामायुरैश्वर्य्यादिवैशिष्ट्यं विज्ञैरनुमन्यत एव। तेनैव ऋषिकाणां दृष्टान्तेन मानुषीणां न वेदाध्ययनाधिकारसिद्धिः। ऋषिकाभिरपि वेदा अधीता इति न सिद्ध्यति। अध्ययनमन्तरैव जन्मान्तरीयसंस्काराद् देवानुग्रहाद्वा तासां सूक्तमन्त्रादिप्रतिभानात्तासामृषित्वम्। तदेवोक्तं दुर्गाचार्यैः 'अनधीतमेव तत्त्वतो ददृशुः' (निरुक्त० २।११।१) नैतावताऽपि सर्वासां वेदाध्ययनाधिकार-

सिद्धिः । न च ताभिर्गुरुकुलाद्वेदाध्ययनं कृतम्, न वा ताभिर्वेदमन्त्रा निर्मिता किंतु केचिन्मन्त्रा मन्त्रांशा वा तासां प्रतिभाताः । यथा वाल्मीकेरबुद्धिपूर्वकमेव 'मा निषाद प्रतिष्ठां त्वमित्यादि प्रथमं काव्यं ब्रह्मणोऽनुग्रहात् स्फुरितम् । गुह्यानामिव विज्ञानमनवस्था सहिष्णुता । यथा वा श्रीज्ञानेश्वरस्य हस्तन्यासादेव महिषोऽपि वेदमन्त्रमुच्चारितवान् तथैव सुप्रतिबुद्धन्यायेन कासाञ्चिदेव वेदप्रतिभानं जायते । ऋग्वेदीय ( ८।६७।५ ) सूक्तं जालगतानां मत्स्यानां मुखेभ्यः प्रादुर्भूतम् । जीवान्तो अभिधेतन मत्स्यानां जालमापन्नामेतदार्षं वेदयन्ते—( नि० ६।२७।१)

'जालेन बद्धा बहवो हि मत्स्याः' ( ८।२६ ) अथानुक्रमणी बृहद्देवतायाञ्च ( ६।२९।६ ) तदेवोक्तम् । यथा न तावता मत्स्यानां वेदाध्ययनाधिकारसिद्धिस्तस्तथैव कासाञ्चित् कयाचिद्रीत्या सूक्तमन्त्रादिप्रतिभानेऽपि न सर्वासां वेदाध्ययनाधिकारसिद्धिः ।

एवमेव सरमायाः शुन्याः ऋषित्वेनापि नह्यन्यासां शुनीनां वेदाधिकारः सिद्ध्यति । सरमा सुशिक्षिता कुक्कुरी इति सामश्रमिमहाशयेनापि स्वीकृतम् । ( ऐतरेयालोचने पृ–३१ )

केचित्तु–अत्र ब्रह्मवादिनीनामुपनयनं अग्नीन्धनं स्वगृहे भिक्षा चेष्यते हारीतस्मृतिश्चैतत्समर्थयते ।

पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनञ्च वेदानां सावित्रीवाचनं तथा ॥'

पराशरमाधवीय आचारकाण्डे ( १।२ ) पृ० ८२ ) उद्धृतैर्वचनैः स्त्रीणां वेदाध्ययनाधिकाविकारः साध्यते । तथाहि–भीमाजाया ब्राह्मणस्योपनीता' ( ऋ. सं. १०।१९।४ ) इत्यत्र उपनीतेति जायाया विशेषणम् । सद्यो वधूनामपि उपस्थिते विवाहः विवाहकाले कथञ्चिदुपनयनमात्रं कृत्वा कार्यो इति हारीतसंहितायाम् । नहि शूद्रसमाः स्त्रियः । नहि शूद्रयोनौ ब्राह्मणक्षत्रिय-वैश्याः जायन्ते । "तस्मात् छन्दसा स्त्रियः संस्कार्य्याः ।" २१०।२० पराशरमाधवः ) । गोभिलसूत्रे च 'यज्ञोपवीतनीम्' ( २।१।१९ ) इति विशेषणेनापि तदेव गम्यते । म.म. शिवदत्तेनापि सिद्धान्तकौमुद्यां जैमिनीयन्यायमालाटिप्पण्यामपि तदेवोक्तम् यज्ञोपवीतवत् कृतोत्तरीयामिति नार्थस्तस्य

णार्थत्वात्। पारस्करगृह्यसूत्रकाले वैदिकमर्यादायाः किञ्चिल्लोपादुपनीतां अनुपनीताश्चे' त्युक्तम्, तन्न, सूक्तमन्त्रादिद्रष्ट्रीणामेव ब्रह्मवादिनीत्वेन तासां दृष्टान्तेनान्यासां तदधिकाराभावस्योक्तत्वात्। हारीतस्मृतेः पद्यमयत्वात्तत्र गद्याभावेनोक्तवाक्यस्य तत्रासंभवात्। तथापि हारीतधर्मसूत्रेऽन्यत्र वा तथाभूतम् वचनमासीदिति पराशरमाधवीयपूर्वपक्षेण ज्ञायते।

ननु असंस्कृताया कन्यायाः कुतो लोकास्तवानघ' इति भ० भा० शल्यपर्वस्थ-(५२।१०) वचने विवाहरहिताया उत्तमलोकाभाव उक्तः। सोऽनुपपन्नः, विवाहरहितानामपि ब्रह्मवादिनीनामुपनयनाध्ययनादिभिरुत्तमलोकसंभवात्। अत एव हारीतेनोक्ताः द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्यो वध्वश्चेति चेन्नैवम् तस्य कल्पान्तरविषयत्वात्। तथा च यमः 'पुराकल्पे कुमारीणामित्यादि' रीत्याऽपि ब्रह्मवादिनीनां यावज्जीवं ब्रह्मचर्यमभिमतम्। तच्च न सर्वसाधारणीनां कृते संभवति।

वस्तुतस्तु नियताः सूक्तद्रष्ट्र्य एव ब्रह्मवादिन्यः। ताश्चादित्याः सिद्धा एव। अतएवोक्तं सायणेन-'तस्य कल्पान्तरविषयत्वात् नेदानींतनी सा कथा। यथा वेदमन्त्रास्तथा ऋषयोऽपि नियताः नह्येदानीं कश्चिदृषिर्भवति।' विदुषामिदमपि मतं यत् सद्योवधूव्यतिरिक्तानां ब्रह्मवादिनीनां यावज्जीवं ब्रह्मचर्यं विवाहाभावश्च। तासां पूर्णतासिद्ध्यर्थम् कल्पारम्भे एव ब्रह्मवादिनीनामाविर्भावः। तदानीमिन्द्रब्रह्महत्यांशरूपदोषेण रजस्वलात्वं नारब्धं स्त्रीणाम्। अपवादरूपेणान्यदापि क्वचित्कासाञ्चिदाविर्भावः। किञ्चिदपूर्णानां स्त्रीणां पूर्णप्रकृतिकेन पुरुषेणोद्वाहः। रजोहीनाः पूर्णाश्च ब्रह्मवादिन्यो भवन्ति। ताश्च न मनुष्ययोनयः, किन्तु ऋषियोनय इत्यप्युक्तमेव। तासां पतिने भवति क्वचित्तदुक्तिस्तु रक्षकाभिप्रायेणैव।

'प्रावृतां यज्ञोपवीतिनी' मित्यस्यार्थस्तु ताः पूर्वसूत्रैरेव स्पष्टं भवति। 'या अकृन्तन अवयन्' इत्येतया ऋचा (२।१।१८ गो० सू०) इति या अकृन्तन इति मन्त्रमुक्त्वा वरो वध्वै अहतं वस्त्रं उपवस्त्रं) ददाति। सा च दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्ये अंशे प्रतिष्ठापयति। दक्षिणकक्षमन्ववलम्बं भवति। एवं यज्ञोपवीती भवति (१।२।२) एतदेव तस्या यज्ञोपवीतिनीत्वम्। न केवलं वामस्कन्धावलम्बिदक्षकक्षमनवलम्बिसूत्रधारणेनैव यज्ञोपवीती

भवति। वस्त्र कुश-रज्ज्वोरपि तथाकरणे । यज्ञोपवीतित्वस्य यज्ञोपवीतं कुरुते वस्त्रं वा कुशरज्जुमेव (१।२।१ गो० सू०) इत्यादिनोक्तत्वात्।

वैखानसगृह्यसूत्रेऽपि 'या अकृन्तन' इति 'वस्त्र' इति वस्त्रमेवोक्तं न यज्ञोपवीतम्। गोभिलगृह्यकारिकायामपि 'पतिः कन्यां परिदध्यात् अधौत-नव्यवाससा अकृन्तन इति पठन् द्वितीयेनापि वाससा प्रावारयेत्। परि-धत्तेति मन्त्रेण वोपवीतवत्। सोमो ददत् पठेन्मन्त्रम् वासो विन्यासविशेषे यज्ञोपवीतमित्यापस्तम्बे हरदत्तः। 'दक्षिणं बाहुमुद्धरते अवधत्ते सव्यम् इति यज्ञोपवीतम् (तै० आरण्य०) आपस्तम्बधर्मसूत्र० (१।१५।१) दक्षिणं बाहुमूर्ध्वं धृत्वा सव्ये बाहौ लम्बमाने सति यत्वेष्टनं तद् यज्ञोपवीतम् (२।१।१) 'कस्तु इव वासो विन्यासविशेषमात्रं गुणो भवति उपवीत नाम मीमांसा' इति (३।१।२१ शाबरे। गोभिलसूत्रे भाष्यकृत्र 'प्रावृतां कृतोत्तरीयाम्' कथं प्रावृतां यज्ञोपवीतवत् कृतोत्तरीयाम् स्नातामहतेन आच्छादयेत् अकृन्तन्निति (१।३।६) खादिरगृह्यसूत्रम्। यज्ञोपवीतवत् वाधूयं वस्त्रं बध्नाति' (२।६८) कौशिकसूत्र इत्यादि प्रमाणान्यपि पूर्वोक्तव्याख्यानुसारीण्येव।

एवमेव 'भीमा जाया ब्राह्मणस्योपनीता' इत्यपि न ब्राह्मणजायाया उप-नयनविधानपरम्, जायते पुत्ररूपेणास्यामिति जाया इति व्युत्पत्त्या पुत्रवत्या एव जायात्वोक्त्या तस्यामवस्थायां कन्योपनयनवादिनां मतरीत्या नोपनयनं संभवति। भीमेति विशेषणस्य चासंगतेः। नहि जायाया उप-नयनेन भीषणतोपपद्यते। तस्मादत्र सायणानुसारिणी व्याख्यैव युज्यते।

ततः भीमा शत्रुरूपाणां पापानां भयङ्करी पतिव्रत्नी एषा जाया ब्राह्मणस्य बृहस्पतेः उपनीता देवैः स्थापिता। तपः प्रभावो दुधानामपि परमे व्योमन् उत्तमे स्थाने निदधाति खलु। तस्मादेनामपि देवपरिग्रहरूपः तपो महिमा बृहस्पतेरन्तिके उपस्थापयति।

'ब्रह्म वै बृहस्पतिः' (ऐ० ब्रा० ५।३८)ब्रह्मब्राह्मणौ च समानार्थकौ पूर्वमुक्तौ तेन ब्राह्मणस्येति बृहस्पतेरित्येवार्थः। 'सोमो राजा प्रथमो ब्रह्म जायां पुनः प्रायच्छत् अहृणीयमानः।' (ऋ० सं० १०।१०९।२) इति मन्त्रेण स एवार्थो व्यज्यते। सोमो राजा चन्द्रः अहृणीयमान (हृणीङ् लज्जायाम्) अलज्जमानः ब्रह्मजायां बृहस्पतिपत्नीं पुनः प्रायच्छत् प्रत्यर्पितवान्। तेन जायामन्वविन्दत्

बृहस्पतिः सोमेन नीतां ( ऋ० सं० १०।१०९।२ ) इत्यनेनापि स एवार्थः समर्थ्यते। सोमेन नीतां जायां बृहस्पतिरन्वविन्दत। किञ्च ब्राह्मणस्य जाया उपनीता इत्युक्त्या क्षत्रियादिजायानामनुपनीतत्वापत्त्यापि विरोधिनां नेष्ट-सिद्धिः। अथर्ववेदे च 'भीमा जाया ब्राह्मणस्यापनीता' ( ५।१७।३ ) इत्थं अपनीता इत्येव पाठः।

केश्चित्तु पारस्करसूत्रानुसारेण कन्यासंस्कारः समर्थ्यते। तच्च तद्विरुद्धमेव। तत्र तु जातस्य कुमारस्य ( १।१६।३ ) इति कुमारस्येत्यनुवृत्त्या बालकानामेवोप-नयनं न बालिकायाः। जातस्येत्यनेनैव कार्यसिद्धौ कुमारग्रहणेन जातिपक्ष-बाधोऽभिप्रेतः। अत एव कर्काचार्येणोक्तम्-'कुमारग्रहणाच्च' अतः प्रभृति स्त्रिया न भवति।

चूडाकरणप्रसङ्गे कुमारमादाय ( २।१।२४ ) उपनयनप्रसङ्गे तं च पर्युप्त-शिरसं ( ३।२।५ ) तत्रेति कुमारोऽभिधीयते इति कर्कभाष्यम्।

'वस्तुतस्तु उपेता नयन्ति' ( ३।२।१२ पार० गृ० सूत्र० )

अथ स्योना पृथिवि इत्यनया ऋचा स्वामिप्रभृतय उपनीताः अनुपनीताश्च सर्वे यथोक्तक्रमेण दक्षिणपार्श्वैः प्रावृतशिरसः संविशन्ति स्वपन्ति (३।२।१-१२) अथ यथासंख्यमनुदेशः समानामिति रीत्या स्वामिप्रभृतय उपनीताः स्त्रियश्चानुपनीता सर्वेऽपि संविशन्ति इत्येव सिद्ध्यति। न चात्र स्त्रीणामुपनीत-त्वानुपनीतत्वभेदेन द्वैविध्यं विवक्षितं, प्रयोजनाभावात्।

केश्चित्तु-"य इच्छेत् दुहिता मे पण्डिता जायेत" इति (१४।९।४।१६) बृहदारण्यकवचनेन स्त्रीणां वेदाध्ययनं साध्यते।

'आत्मज्ञानं समारम्भः तितिक्षा धर्मनित्यता।
यमर्था नापकर्षन्ति स वै पण्डित उच्यते'। (विदुरनीतिः १।२० )
'प्रवृत्तवाक् चित्रकथः ऊहवान् प्रतिभानवान्।
आशुग्रन्थस्य वक्ता च यः स पण्डित उच्यते। (१।२३)
'श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा।
असंभिन्नार्थमर्यादः पण्डिताख्यां लभेत सः'। २४

'नावेदविन्मनुते तं बृहन्तं' 'धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः।' वेदज्ञानं विना न धर्मब्रह्मज्ञानं संभवति। तदन्तरा च न पाण्डित्यं संभ-

षति। तेन पण्डितशब्देनैव वेदाध्ययनमर्थाल्लभ्यते।" इति तन्न, बृहदारण्यक-विरोधादेव। तथाहि पुत्राणां सम्बन्धे वेदसम्बन्धो दृश्यते। 'य इच्छेत् पुत्रो मे वेदमनुब्रुवीत' (१४।६।४।१३) पुत्रो मे द्वौ वेदौ अनुब्रुवीत' १४ 'पुत्रो मे पण्डितो विजिगीथः समितिंगमः भाषिता जायेत। त्रीन् वेदान् अनुब्रुवीत' १५ 'सर्वान् वेदान् अनुब्रुवीत' १७ इति पुत्राणां सम्बन्धे वेदसम्बन्धः श्रुतः। दुहितृसम्बन्धे पण्डिता इत्येवोक्तम्। पुत्रस्य सम्बन्धे पण्डित इत्युक्त्यनन्तरमपि वेदसम्बन्ध उक्तः। दुहितुस्तु पण्डितेत्युक्त्यैव समाप्तिः। तथाचोक्तं शङ्करभगवत्पादैः—'दुहितुः पाण्डित्यं गृहतन्त्रविषयमेव, न तु वेदविषयम्, तस्या वेदेऽनधिकारात्।' यद्येवं न स्यात्तर्हि जातिपक्षमाश्रित्य पुत्रशब्देनैव पुत्रीणामपि ग्रहणं स्यात्। ततः पृथक् दुहितृशब्दप्रयोगात्तत्र च वेदसंबन्धानिर्देशात् केवल-पण्डितशब्दनिर्देशाच्च तद्वादः सर्वथैव खण्डितः। बुद्धिमत्त्वमेव पाण्डित्यम् 'शास्त्राण्यधीत्यापि भवन्ति मूर्खाः, इति शिष्टोक्तेः। पञ्चतन्त्रे-'वरं बुद्धिर्न सा विद्या विद्याया बुद्धिरुत्तमा' इत्युक्तेः। प्रजागरप्रकरणस्थविदुरवाक्यैस्तु पण्डितस्य लक्षणमुक्तं न पण्डितायाः। तस्मात् पाण्डित्यम् गृहतन्त्रविषयमेव सेवाधर्मपराणां तासां सेवौपयिक ज्ञानस्यैवापेक्षितत्वात्।

'नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं नाप्युपोषणम्।
पतिं शुश्रूषते येन तेन स्वर्गे महीयते।' इति।

मनुरीत्या पत्युः पृथग् यज्ञादिनिषेधो ज्ञायते। स्त्रीशूद्रयोः सत्यपि धर्म-ब्रह्मोपायबोधार्थित्वे हेत्वन्तरेण वेदाधिकारस्य प्रतिषिद्धत्वात्। उपनीतस्यैव अध्ययनाधिकारं ब्रुवत् शास्त्रमनुपनीतयोः स्त्रीशूद्रयोर्वेदाध्ययनमनिष्ट-प्राप्तिहेतुरिति बोधयति। अतएवोक्तम्

'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।' इति,

सायणरीत्या च तदेव समर्थ्यते। 'तस्या यावदुक्तमाशीर्ब्रह्मचर्य-मतुल्यत्वादिति जैमिनिसूत्रभाष्ये शबरस्वामिना चोक्तम्—'अतुल्या हि स्त्री पुंसा। अतुल्यता च द्वेधा अविद्यात्वात् स्त्रीत्वाच्च।' एतेन वेदाध्ययनं तासां निषिद्धमेव ज्ञायते।

कैश्चित्तु "पुमांसं पुत्रमाधेहि" ( अ० सं० ६।१७।१० ) अत्र पुमांसमिति विशेषणात् पुत्रशब्दो जातिपरो ज्ञायते। अत्र पुत्रमिति पुलिङ्गनिर्देशेनैव

पुंस्त्वसिद्धौ तद्व्यर्थमेव स्यात्' इति, तन्न, तत्र पुमांसमित्यस्य शरबोधन-परत्वात्। यथा 'पुरुषो भव' 'सुरूपं वा कुरूपं पुमानित्येवमुच्यते' (म०९।१४) अन्यथा पूर्वोक्तशतपथोद्धरणेषु पुत्रशब्दस्य जातिपरत्वे 'य इच्छेत् दुहिता मे पण्डिता स्या' दिति पृथक् दुहितृनिर्देशो व्यर्थ एव स्यात्।

यदुक्तम् "यथा स्वर्गकामो यजेत्' इत्यत्र मीमांसायां (६।१।६) जातिसूत्र-प्रवृत्तिस्तथैव 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यत्रापि तत्प्रवृत्त्या कुमारीणामपि यज्ञोपवीतादिकं कथं न स्यात् ?" इति, तन्न, यागादिसम्बन्धे जातिसूत्रस्यो-पयोगेन स्त्रीणामपि पत्या सार्धमधिकारसिद्धावपि उपनयनसम्बन्धे तद्-प्रवृत्त्या तत्र स्त्रिया अधिकारासिद्धेः। तत्सूत्रस्य यागाधिकरणस्थत्वात्। अत एवोपनयनवेदाध्ययनादिसम्बन्धे 'संस्कारस्य तदर्थत्वात् विद्यायां (वेदे) पुरुषश्रुतिः' (मी० द० ६।१।५)। 'तस्मात् जातिं तु बादरायणोऽविशेषात्' 'तस्या स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्' (६।१।८-२० मी० द० जै० सू०) इत्यादिना यागाद्यनुष्ठाने स्त्रीणामधिकारः साधितः। 'स्त्री चाविशेषात्' (कात्यायन श्रौ० सू० १।१।७) 'दर्शनाच्च' २। 'तुल्यफलत्वाच्च' ९। इतिसूत्रैः स्वर्गकामादिशब्दस्य जातिपरत्वेन स्त्रीणापि पुंस इव वैदिककर्मणि अधिकार उक्तः। नतु तावता तासां वेदाध्ययनाधिकारःसिद्ध्यति, संस्कारवेदाध्ययनसम्बन्धे पुरुषशब्दश्रवणात्। 'तत् कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः' (अथर्व सं० ३।३०।४) इतिपुरुषेभ्यो ब्रह्मसंज्ञानं वेदज्ञानाधिकारसमर्पणात्। शूद्रस्य पुरुषत्वेऽपि अपशूद्राधिकरणविरुद्धत्वात्तन्निषिद्धम्। नच यज्ञसम्बन्धादेव वेदाध्ययनाधिकारसिद्धिरिति वाच्यम्, यथा उत्सर्गरूपेणनिषादस्थपतेर्यज्ञा-नधिकारित्वेऽपि 'निषादस्थपतिं याजये' दिति श्रुतिबलात् तस्यापवादभूताधि-कारित्वाभ्युपगमेन तस्य संस्कारवेदाध्ययनमन्त्रोच्चारणाद्यभावेऽपि ऋत्वि-ग्भिस्तदर्थं सर्वं संपाद्यते तथैव प्रकृते स्त्रीणां वेदाध्ययनाभावेऽपि पत्या तत्तत्कार्यसंपादने दोषाभावात्।

'यश्च परार्थं यजति स ऋत्विक्' (जै० सू० ६।३।२६)

'स्वरितञितः कर्त्रभिप्राये क्रियाफले' (पा० १।३।७२) इत्यनुसारेण यथा ऋत्विक्कर्तृककर्मणां यजमानः फलं भुङ्क्ते। तथैव पतिकर्तृकाणां कर्मणां पत्नी फलं भुङ्क्ते। अतएव 'पत्युर्नो यज्ञसंयोगे' (पा० ४।१।३३) इत्युदाहरणे

दीक्षितः वशिष्ठस्य पत्नी वशिष्ठवत् क्रयज्ञस्य फलभोक्त्री इत्यर्थः, दम्पत्योः सहाधिकारात् इति लिलेख। अत एव 'तस्या यावदुक्तमाशीर्ब्रह्मचर्य्यमतुल्यत्वात्' (जै० सू० ६।१।२४) सूत्रस्थशाबरभाष्ये स्पष्टमुक्तम्। अतुल्या हि स्त्री पुंसा। यजमानः पुमान् विद्वांश्च। पत्नी स्त्री च अविद्या च। यदि एवं हि एतद् अतुल्यत्वमेतद् अतो भवति क्रत्वर्थेषु यानि याजमानानि श्रवणानि तेषु उपादेयत्वे श्रवणादिविवक्षितम्। यच्च वेदाध्ययनसाध्यं तत्राविद्यात्वात्सा नाधिकृता। (पुं) लिङ्गत्वेन तेषु पत्नी न स्यात्। तत्पत्न्या अध्ययनस्य प्रयोजकं (स्त्रीत्वात्) स्यादिति यद्युच्येत, तन्न असत्यपि प्रयोजकत्वे तस्य निर्वृत्तिर्भविष्यति। अस्ति हि तस्य निर्वर्त्तकं···तस्मात्प्रतिषिद्धस्य पत्न्या अध्ययनस्य पुनः प्रसवे न किञ्चिदपि प्रमाणम्। अतस्तदपि पत्नी न कुर्य्यात्।

एतेन यदुक्तम् 'सूत्रेऽतुल्यत्वं न विद्याभावेन, किन्तु राजसंनिधानेऽमात्यस्येव, गुरुसंनिधाने शिष्यस्येव, पतिसन्निधानेऽस्वतन्त्ररूपाप्राधान्येनैवे' त्यप्यपास्तम्, भाष्यविरोधात्, याज्ञिकपद्धतिविरोधाच्च। न ह्यप्राधान्येन मन्त्रोच्चारणं वार्य्यते। ऋत्विग्गणेषु अप्रधानानामपि तदुच्चारणदर्शनात्। यज्ञे तु पत्नी पतिवन्मन्त्रान्नोच्चारयति इति हि पद्धतिः। कुमारिलभट्टपादाश्च तत्रैव टुप्टीकायाम्—यजमानकाण्डे ये मन्त्रास्ते यजमानेनैवोच्चारणीयाः। स हि विद्वान्। इतरा पत्नी तु अविद्या। अन्यथाऽनुपपत्त्या अध्येष्यते इति चेत् सापि अन्यथानुपपत्तिर्यजमानविद्वत्तयैव क्षीणा। तदीयेनैवाध्ययनेन निराकाङ्क्षत्वान्न प्रतिषिद्धमध्ययनं करिष्यति। एवञ्चेत् याजमानमिति अन्यतरस्मात् तद्धितोपपत्तौ कृतायां येऽपि अमन्त्रवन्तः पदार्थास्तानपि यजमान एव करिष्यति। यद्यपि तेषु स्त्रियः अविद्वत्त्वं नास्ति दोषः। तथापि शाबरमेव व्याख्यानं युक्तम्। अन्यच्च भट्टपादेनैवोक्तम्—ब्राह्मणमुपनयीत इत्याचार्यकरणे आत्मनेपदं भवति। माणवकस्य तु उपादीयमानत्वात् लिङ्गसंख्ये विवक्षिते। तस्मात्पुंसोऽध्ययनं विहितमितरस्या विधानाभावात् अवैधता। न चान्यथानुपपत्त्या अध्ययनं तस्या अन्यथापि (पुंविद्वत्तया) उपपद्यमानत्वात्। अतः प्राप्तोऽध्ययनप्रतिषेधः।

शास्त्रदीपिकाकारादिभिरपि तदेवोक्तम् ४।१।३३ महाभाष्यस्योद्योतेऽपि स्वर्गादिभोक्तृत्वाच्च यज्ञस्वामित्वं भाष्यीया बोध्यम्।

'कथं हि स्त्री सभायां साध्वी स्यात्' (४।१।१५) इति महाभाष्यवचनमभिलक्ष्य कैय्यटेनोक्तम् 'यज्ञसभायां विदुषां पुरुषाणां साधुत्वाधिकारात्।' इति।

यदप्युक्तम्-'प्रज्ञानात्मकेन तपसा तात्कालिकेनैव ब्राह्मण्यप्राप्ति' रिति तन्न, तथात्वेऽपि तस्या असाधारणाया घटनाया सर्वत्रासंभवात्। तथा च साधारणानां गुणकर्मादिप्रयुक्तवर्णव्यवस्थासिद्ध्यसंभवात्।

केचित्तु कवषस्येतिहासेन शूद्रत्वं प्रसाध्य शूद्राणां वेदाध्ययनाधिकारञ्च साधयित्वा तत्र 'यथेमां वाचं कल्याणीमावदानि, इति मन्त्रेण शूद्रान्त्यजादीनां वेदाध्ययनाधिकारं वर्णयन्ति, तदपि तुच्छम्, समुद्धृतब्राह्मणप्रघट्टकेन तदसिद्धेः। 'यथेमां वाच'मिति मन्त्रस्तु न तत्समीहितसाधकः, तस्यान्यपरत्वात्।

'यथेमां वाचं कल्याणीमावदानि जनेभ्यः। ब्रह्मराजन्याभ्याँ शूद्राय चार्याय च स्वाय चारणाय च प्रियो देवानां दक्षिणायै दातुरिह भूयासम्। अयं मे कामः समृद्ध्यताम्। उपमादो नमतु।' (यजुर्वेद सं० २६।२)।

स्वामिदयानन्दनरीत्या परमेश्वरो वक्ति-हे मनुष्याः! यथाहमीश्वरः मनुष्याणां भुक्तिमुक्तिप्रदायिनीं कल्याणीं ऋगादिवेदचतुष्टयात्मिकां वाचं वाणीमावदानि उपदिशामि तथैव युष्माभिरपि समुपदेष्टव्यम्। यथाहं दक्षिणाया दातुस्तत्संसर्गिणां देवानां विदुषां प्रियो भूयासं मम कामः समृद्ध्यताम् तथा अदः परोक्षं सुखं प्राप्यताम् तथा भवन्तोऽपि भवेयुः। कामाः सुखञ्च भवद्भ्योऽपि प्राप्यन्ताम्। ननु जनेभ्य इत्यत्र जनिशब्देन त्रैवर्णिकानामेव-ग्रहणम्, सर्वत्र वेदेषु तेषामेवाधिकारावगमात् इति चेन्न, ब्रह्मराजन्याभ्यामित्यादिना परमेश्वरेण ब्राह्मणादिसर्वेषामधिकारबोधनात्। शूद्रस्य स्वाय स्वकीयभृत्यस्त्र्यादिभ्यः, अरणायेति शूद्राय यथाहमावदानि तथैव भवन्तोऽपि सर्वेभ्यो वेदमुपदिशन्तु।

सर्वोऽप्ययमर्थोऽविचारितरमणीय एव। तथाहि-अत्र मनुष्या इति सम्बोधनं मन्त्रे नास्ति। किं मनुष्याः ब्राह्मणादिभ्यो भिन्नाः परमेश्वरेणोपादिश्यमानेभ्यो जनेभ्योऽपि किं भिन्नाः? संबोध्यमानेभ्योऽपि किं वेदा उपदिष्टा नवा? तदुपदेशदानात्पूर्वमयं मन्त्रो वेदे आसीन्नवा?

यदि संबोध्यमानाः संमुखस्थाः पुरुषा एव ब्राह्मणादयस्तर्हि युष्मभ्यमहं वेद-वाणीमुपदिष्टवानस्मि तथैव भवन्तोऽप्यन्येभ्य उपदिशन्तु इत्येवमन्तिमस्य वेदस्यान्तिमे मन्त्रे वक्तव्यमासीत्, नादौ नवा मध्ये तत्कथनसंभवः, अथवेयम-धिकारिचिन्ता प्रथमवेदस्य प्रथमे मन्त्रे कर्तव्या न मध्ये, तत्र तस्या अप्रसक्तेः किञ्चैवमस्य मन्त्रस्य मनुष्या एव देवता भवेयुः, प्रतिपाद्यस्यैव देवतात्वात् । अहमीश्वर इत्यपि मन्त्रान्न सिद्ध्यति, तद्वाचकपदस्य मन्त्रेऽभावात् । मन्त्र-प्रतिपादकस्यर्षित्वं प्रसिद्ध्यति । नचास्येश्वर ऋषिः प्रसिद्धः । स्त्रीसेवकादिश्च कस्य शब्दस्यार्थः ? शूद्रादिभिन्नस्य तस्यासिद्धत्वात् । यदि तन्मतरीत्या वर्ण-चतुष्टयातिरिक्तोऽन्त्यजो वर्णः पञ्चमो वा वर्णो नास्त्येव तदा कथमरण-शब्देन तद्ग्रहणसंभवः ? किञ्चानेन मन्त्रेण वेदाध्ययनाधिकारसाधने वेदान्त-दर्शनस्यापशूद्राधिकरणं विरुद्ध्यते । (१९) यागे शूद्रस्यानधिकारनिरूपणपरक (अ० ६ अधिकरण ७) जैमिनिदर्शनविरोधाच्च । 'अपि वा वेदनिर्देशात् । अपशूद्राणां प्रतीयेत' (६।१।३३ जै.सू.) अत्र वेदनिर्देशाच्छूद्राणामनुपनयनमु-क्तम् । 'तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात्' (जै० सू० ६।१।२४)अतुल्या हि स्त्रीपुंसा अतुल्यता च द्वेधा, स्त्रीत्वादविद्यात्वाच्चे' ति शाबरभाष्यरीत्या स्त्रीणामपि वेदाध्ययनानधिकारः ।

'वेदमाता प्रचोदयन्तां पावमानी द्विजानाम् ।' (अथर्व शौ०सं० १९।७१।१) वेदे द्विजानामेवाधिकारः । अस्मिन्मन्त्रे स्पष्टं वेदशब्दः । 'यथेमा'मिति मन्त्रे तु वाचमित्येव विद्यते, न वेदवाचमिति । एतेन वेदवाचामध्ययने द्विजानामेवा-धिकारः 'यथेमा'मिति मन्त्रोक्तवाचि तु समेषामधिकारः । 'अयं स होता यो द्विजन्मा' (ऋ० सं० १।१४९।५) इत्यत्र च द्विजस्यैवाधिकारित्वश्रवणम् । गृह्यसूत्रेषु सर्वासु च स्मृतिषु त्रैवर्णिकानामेवोपनयनसंस्कारो विहितो न शूद्राणाम् । उपनयनञ्च वेदाध्ययनाङ्गमिति कथं तदन्तरा तदधिकारः । न च 'आवदानी'त्युत्तमपुरुषप्रयोगादीश्वरोऽत्र वक्तेति वाच्यम् । 'अग्निमीडे पुरोहित' (ऋ० सं० १।१।१) मित्यत्रापि तथात्वापत्त्या परमेश्वरस्याग्निपूजकत्वापत्तेः । अग्निशब्दस्यापि परमात्मपरत्वे स्तुत्यस्तोत्रोरैक्यापत्तेश्च । 'यथेमा'मिति मन्त्रस्य त्वीश्वरो देवता न तु ऋषिः प्रतिपाद्यस्यैव देवतात्वेन नात्र प्रतिपादक ईश्वरो भवितुं शक्नोति ।

किञ्चास्मिन् मन्त्रे परमेश्वरस्य वक्तृत्वेऽस्यैव मन्त्रस्य 'अहं देवानां प्रियो भूयासम्'। 'दक्षिणाया दातुः प्रियो भूयासम्' 'अयं मे कामः समृद्ध्यताम्' 'अदो मामुपनयतु' इत्यंशा विरुद्धयेरन्। नहि पूर्णकामस्येश्वरस्य कामपूर्तिप्रार्थना युज्यते। ततः पूर्वस्मिन्नपि 'सकामान् अध्वनः कुरु संज्ञानमस्तु मेऽमुना' (२६।१ यजु० सं०) संज्ञानमध्वनां सकामत्वञ्च प्रार्थितम्। नचैतन्नित्यज्ञाने पूर्णकामे परमेश्वरे संभवति। नहीमामिति शब्देन वेदलक्षणाया वाचो ग्रहणं संभवति।

किञ्च निराकारस्य वागादिरहितस्येश्वरस्य कथं ब्राह्मणादिभ्यो वेदोपदेशः संभवति। किं सर्वेभ्यः परमेश्वरेण वेदा उपदिष्टाः केभ्यश्चिदेव वा? अन्त्ये के ते? प्रथमे कुतो वेदानभिज्ञा अनेके? किञ्चास्य मन्त्रस्येतिहासरूपत्वे ततः प्राक् तदभावादनित्यत्वमपि वेदानां स्यात्? किञ्चार्य्यानेव पाठयति सर्वान् वा? प्रथमे तस्य सङ्कीर्णता। यदि तथात्वेऽपि न सङ्कीर्णाशयता तर्हि द्विजानामेव पाठनेऽपि कुतः सङ्कीर्णाशयता? सर्वेषामेव यदि पाठनं स्यात् तदा ब्रह्मराजन्यादीनामिव ख्रिष्ट्रीयमोहम्मदादीनामपि कुतो न नामनिर्देशः? अन्यथा जनेभ्य इत्येवोक्तं स्यात्। यदि च परमात्मा सर्वानेव वेदं पाठयति। पाठनसमये च आर्य्या एवासन् नान्ये तर्हि कथमिदानीमन्ये समागताः? किमीश्वरस्य स्वशिष्यानुकूल्यसंपादने सामर्थ्यं नासीत्?

किञ्च स्त्रीसेवकयोरपि ग्रहणमुक्तं पूर्वव्याख्यात्रा। परमत्र तद्बोधकपदं नोपलभ्यते। स्वाय इति पदस्य कया युक्त्या स्त्रीसेवकावर्थं इति चिन्त्यम्? किमीश्वरस्य निराकारस्य स्त्रीसेवकावपि विद्येते?

एवमरणशब्दस्यातिशूद्रोऽर्थ इत्यपि निष्प्रमाणमेव। वस्तुतः स्वाय स्वकुलजाताय अरणाय अन्यकुलजाय इत्येवार्थो निरुक्तादिसंमतः।

किञ्च गुणकर्मानुरोधेन वर्णव्यवस्थामभ्युपगच्छतां प्रतिकूलोऽप्ययमर्थः। तथाहि—जन्मना ब्राह्मण्याद्यभ्युपगमे सिद्धान्तहानिः, गुणकर्मादिभिस्तत्त्वे वेदाध्ययनात्प्राक् तदनुरूपवेदाध्ययनगुणाभावे कथं ब्राह्मण्यादिनिर्णयः? एवं क्षत्रियवैश्यादीनामपि जन्मना क्षत्रियादित्वाभ्युपगमे ब्राह्मणादीन् वेदानध्यापयति परमेश्वर इति कथं ज्ञायते?

किञ्च वैषम्येण पाठनं साम्येन वा? प्रथमे पक्षपातित्वापत्तिः। पक्षपातोऽपि जन्ममूलकः, कर्ममूलको वा? प्रथमे जन्मना वर्णव्यवस्थासिद्धिः, द्वितीये वेदाध्ययनात्पूर्वं कथं गुणकर्मभेदः? यदि प्राक्तनकर्ममूलको भेदस्तर्हि पूर्वजन्मकर्मसिद्धत्वात् पूर्णव्यवस्थाया जन्मनैव सिद्ध्यापत्तिः। साम्येन पाठने कथं न समेषामेकवर्णत्वम्?

किञ्च शब्दतोऽध्यापिता वेदा अर्थतो वा? प्रथमे कथमर्थज्ञानम्? द्वितीये तदर्थात्मकस्य ब्राह्मणभागस्यापि परमात्मोपदिष्टत्वाद्वेदत्वापत्तिः। अध्येतृषु अग्निवायुसूर्याङ्गिरसामप्यन्तर्भावे कथं न स्वायेतिमन्त्रे तन्नामनिर्देशः? कथं वा तद्रीत्या तेष्वेकैकस्यैकवेदोपदेष्टृत्वम्। परमोपदिष्टवेदविस्मरणानन्तरं तदुपदेशे वेदेषु क्रमिकेतिहाससत्वे वेदानित्यत्वापत्तिः।

किञ्च श्रीदयानन्दानुयायिमते पूर्णविद्वत्वं ब्राह्मण्यम्। मौर्ख्यं शूद्रत्वम्। तथा सति विद्वद्भ्यो वेदपाठनं व्यर्थमेव, तत्फलस्य पूर्वमेव सिद्धत्वात्। पूर्णविद्वत्त्वाभावे ब्राह्मण्याभावः, तदभावे कथं ब्राह्मणेभ्यस्तत्पाठनम्? एवमत्यन्तमूर्खेभ्योपि वेदपाठनं व्यर्थमुपदेष्टुरल्पज्ञत्वञ्च। यदि योग्येभ्यः पाठनमयोग्येभ्योऽपाठनं तर्हि मनुष्यमात्राय वेदोपदेश इति रिक्तं वचः। अरणपदेनातिशूद्रो गृहीतस्तेन ततोऽतिमूर्खेभ्योऽयोग्येभ्यस्तत्पाठनं सिद्ध्यति तेन सुतरां तन्मते परमेश्वरस्याल्पज्ञत्वम्।

किञ्च ब्रह्मराजन्याभ्यामित्यादौ ब्राह्मणादिशब्दस्तत्तद्वर्णेषु रूढो यौगिको वा? प्रथमे सर्वत्र वेदे यौगिकार्थग्रहणसिद्धान्तोऽपास्तः। द्वितीये पञ्चानामपि वेदाधिकाराभ्युपगमे कथं वर्णभेदः? सृष्ट्यादौ युद्धवाणिज्याद्यभावेन कथं क्षत्रियादिभेदः?

किञ्च श्रीदयानन्देन 'तेषामेव (चतुर्णामृषीणामेव) पूर्वपुण्यमासीत्। अतः खल्वेतेषामेव हृदये वेदानां प्रकाशः कर्तुं योग्योस्ति' इति ऋग्वेद-भाष्यभूमिकायामुक्तम्। इह पुनः मनुष्यमात्राय वेदोपदेश उच्यत इति विप्रतिषिद्धमेतत्। किञ्च सत्यार्थप्रकाशे २५ पृष्ठे अशुभलक्षणानामकुलीनानां शूद्राणामतिशूद्राणाञ्च मन्त्रसंहिताधिकारस्तु दूरे अन्यशास्त्राधिकारोऽपि निषिद्धः। पुनश्च ४४ पृष्ठे वेदाध्ययने मनुष्यमात्राधिकारसमर्थनम्। एतद्विप्र-

निषिद्धम्। ब्राह्मणादीनामिव शूद्रादीनामुपनयनविधानञ्च वेदेषु न दृश्यते इति तदनुयायिनोऽपि मन्यन्ते।

किञ्च वेदपठनपाठनाद्यधिकार आर्याणामुक्तः शूद्रश्चानार्य्य उक्त इति कथं तस्य तदधिकारः। अरणशब्देनोत्तमलक्षणसम्पन्नायातिशूद्राय वेदोपदेश उक्तस्तेनाधमलक्षणायातिशूद्राय वेदोपदेशो न सिद्ध्यति। ततश्च 'मनुष्यमात्रस्य वेदाधिकार' इति विरुद्ध्यते। एवं स्वाय शब्देनापि तदितरस्त्रीसेवकेभ्यो वेदोपदेशो वारितः स्यात्।

संवादेष्वाह वाक्यं यः स तु तस्मिन्भवेदृषिः।

यस्तेनोच्येत वाक्येन देवता तत्र सा भवेत्' (बृहद्देवता २।८८)

'यस्य वाक्यं स ऋषिः' (२।४ सर्वानुक्रमणी) 'मन्त्रस्य वाच्यं देवता' (उव्वटः) आदिरीत्या प्रतिपाद्यो देवता भवति, प्रतिपादकस्तु ऋषिः। तथा च यथेमां वाचं कल्याणीमिति मन्त्रे ईश्वरः परमात्मा वा देवता स्तुत्यः प्रतिपाद्यो वा स्तोता प्रतिपादको वा न ऋषिस्तु लौगाक्षिः स्तोता प्रतिपादकः। तथाचावदानीति क्रियायाः कर्त्ता नेश्वरः, किन्तु ऋषिः परमात्मा तु स्तुत्यः।

अत उव्वटाद्यनुसार्य्येवात्रार्थः। अनुद्वेजिनीं दीयताम् भुज्यताम् इत्येवमादिकां ब्रवीमि। तथा च नात्र वेदवाचो ग्रहणम्, न वा तेन सर्वेषां वेदाध्ययनाधिकारः सिद्ध्यति। अपि च (प्र० व० सं० २६।१) प्रथममन्त्रे अष्टमीभूतसाधनी इत्युक्तम्। तत्रोव्वटः 'अष्टमी च वाक् भूतसाधनी भूतप्रज्ञप्तिकरी। महीधरस्तु 'भूतानि साधयति वशीकरोति भूतसाधनी' इत्याह। यथेमामिति मन्त्रेऽपि इमामिति सर्वनाम्नासन्निकृष्टत्वात् सैव गृह्यते,न वेदवाणी, सर्वस्या वेदवाचोऽसन्निकृष्टत्वात्। 'इदमस्तु सन्निकृष्टे समीपतरवर्त्तिनि चैतदोरूपम्।' इत्युक्तेः। वेदवाण्या जिघृक्षितत्वेऽस्य मन्त्रस्य प्रारम्भे अन्ते वा निवेशनीयत्वापत्तेः। अतः पूर्वोक्ता अनुद्वेजिता वागेव इदं शब्दग्राह्या। तथा च सा भूतसाधनी वागृषेरेव नेश्वरस्य। तथाच नेश्वर आवदानि इति क्रियायाः प्रयोक्ता, किन्तु ऋषिरेव परमेश्वरस्त्वस्य मन्त्रस्य देवता न ऋषिरित्युक्तमेव। तथाचानेन मन्त्रेण ऋषिः परमेश्वरं प्रार्थयति--हे ऋतप्रजात! यज्ञार्थं प्रजात इति वेङ्कटमाधवः। यज्ञपूर्त्तये व्यक्तबृहस्पते बृहत्या भूतसाधन्या दीयतां

भुज्यताम् इतिवाण्या स्वामिन्नीश्वर यथाहं यजमान ऋषिः यज्ञे दीयतां भुज्यता-मिमां सुखकरीं वाणीं विप्रक्षत्रविट्शूद्रेभ्यः स्वीयाय परकीयाय सर्वान्प्रति आवदानि वक्तुं शक्तः स्याम ईदृक् चित्रं धनं मह्यं देहि। 'तदस्मासु द्रविणं धेहि चित्रमिति अग्रिममन्त्रेण सम्बन्धात् ।

इह यज्ञे दक्षिणायै दातुः प्रियो भूयासम्। दक्षिणाया दातुश्च प्रियः स्याम्, सर्वेभ्यो यथेष्टं भोजनं धनञ्च पुष्कलं दीयते ।

'जाम्बूनदं कोटिसंख्यं ब्राह्मणेभ्यो ददौ तदा।
दरिद्राय द्विजायाथ हस्ताभरणमुत्तमम्।
कस्मैचिद्याचमानाय ददौ राघवनन्दनः।' (वा. रा. १।१४३)
'दीयतां दीयतामन्नं वासांसि विविधानि च।' (१।१४।१४)

तस्माद् यज्ञार्थमृषिभिरीश्वरो राजानश्च धनानि प्रार्थ्यन्ते। एवमेव नूनं सति प्रतिवरं जरित्रे दुहियादिन्द्र दक्षिणा मघोनी शिक्षास्तोतृभ्योमीति-धग्भगो न बृहद् वदेम विदथे सुवीरा (ऋ० सं० २।११।२१) अत्र मन्त्रे धनार्थ-मिन्द्रः प्रार्थितः। हे इन्द्र मह्यमेतावद्धनं देहि येन विदथे यज्ञे बृहद्वदेम दीयतां भुज्यताम् इयं वागेव बृहती वाक्। दुर्गाचार्य्येण तदेवोक्तम्: सा दक्षिणा यजमानायाप्रतिदुग्धाम्। धनं नोस्तु येन बृहद्वदेम महदूर्जितं वदेम दीयताम् भुज्यताम्। अस्मभ्यं तद् वसो दानाय राधः धन समर्पयस्व बहु वसव्यम् इन्द्र यच्चित्रं श्रवसा अनुधन प्रतिदिनं बृहद् वदेम विदथे सुवीराः एवमेव यज्ञे दीयताम् भुज्यतामिति कल्याणीं वाचमावदानि ब्राह्मणादिभ्यः स्वपरेभ्यः सर्वेभ्यः एषैव वाक् भूतसाधनी भूतवशकरणी भवति ।

'दीयतां दीयतामेषां भुज्यतां भुज्यतामिति।
एवं प्रकाराः संजल्पाः श्रूयन्ते स्म च नित्यशः।

इत्येवं रामायणभारतादिषु सैव वाक् प्रसिद्धा ।

किञ्च यज्ञप्रतिपादकोऽयमध्यायो न वेदाध्ययनाधिकारविधायकः । तदुक्तमुव्वटेन 'अग्निष्टोमाग्निसौत्रामण्यश्वमेधपुरुषमेधसर्वमेधपितृमेध-प्रवर्ग्योपनिवत्संबद्धा मन्त्रा व्याख्येयाः। ते इह उच्यन्ते। षड्वशोऽध्यायः । अश्वमेधाग्निष्टोमशेषपरिशेषस्तत्रान्नदानदक्षिणादानादिकं क्रियते। किञ्च आवदानि इति लोट् लकारः, 'आशिषि लिङ्लोटौ'

इत्यादि सूत्रानुसारेण आवदानीति प्रार्थना। अहं वदामीति न तदर्थः किन्तु अहमेव कल्याणीं वाचं वदामीति प्रार्थनैव। सा च यजमाने उपपद्यते न पूर्णकामे परमेश्वरे, तदनुसारिण्य एव सर्वा अपि क्रियाः 'आवदानि' 'भूयासम्' 'समृद्धताम्' 'उपनमतु' इत्यादयः। लिङ्लोटौ समानार्थकौ दीयतां भुज्यतामितीमां वाचमावदानि। इह प्रियो देवानां भूयासम् यज्ञे दक्षिणाया दातुः प्रियो भूयासम्। अयं मे कामः समृद्ध्यताम्। मामदः फलं धनं वा उपनमतु। अस्य मन्त्रस्येश्वरो देवता। तेनेयं प्रार्थना यजमानस्य युज्यते। सिद्धान्तरीत्या प्रथम-द्वितीय-तृतीयमन्त्राणाञ्चेश्वरो देवता। दयानन्दीय-वैदिकयन्त्रालयप्रकाशितयजुर्वेदसंहितायामपीश्वरो देवता। तत्रैव तृतीयो मन्त्रः 'बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवस ऋत प्रजात तदस्मासु द्रविणं धेहि चित्रम्।' (शु० यजु० सं० २६।३) अस्यापि देवता ईश्वर एव। यदि तृतीये देवतात्वादीश्वरः प्रतिपाद्यस्तदा ततः पूर्वतनस्य द्वितीयमन्त्रस्यापि देवतात्वादीश्वरः प्रतिपाद्य एव। यदि तृतीयमन्त्र ईश्वर-प्रतिपादकस्तदा द्वितीयेऽपि स प्रतिपादक एव। न चेश्वरो धनार्थं बृहस्पतिं प्रार्थयत इति श्लिष्यते। 'देवानां प्रियो भूयासम्' 'अयं मे कामः समृद्ध्यताम्' इत्यादिरपि नेश्वरस्य प्रार्थना संभवति, तस्याप्तसमस्तकामत्वेन पूर्णकामत्वात्। एवं यदि परमेश्वरः प्रतिपाद्यो न प्रतिपादकस्तदा अहमीश्वरो यथा वेदचतुष्टयात्मिकां कल्याणीं वाचं ब्राह्मणादिभ्यो वदामि इत्याद्यर्थोऽपास्त एव; प्रातिपदिकस्य लौगाक्षिनामकस्यर्षेरेव प्रतिपादकत्वेनाहं पदार्थत्वात्। ऋष्यादिर्जीवो चित्रं द्रविणं धेहीति प्रार्थयत इत्यर्थः श्लिष्यते। दीयतां भुज्यतामिति बृहती वाक्। वाग् वै बृहती तस्याः पतिः बृहस्पतिः अस्या वाचः पूर्त्तिरीश्वराधीना नेश्वरो बृहस्पतिस्तस्मात्परमेश्वरः प्रार्थयते।

यदुक्तम् परेशनिर्मितेषु यथाग्निसूर्यचन्द्रादिपदार्थेषु सर्वेषामधिकारस्तथैव वेदा अपि सर्वेषां हितार्थं प्रकाशिताः परमात्मनेति तेष्वपि सर्वेषामधिकारः स्यात् इति, तन्न कारागारेषु कालकुटीरादिनिवेशितानामपराधिनां जन्मान्धानामुलूकादीनाञ्च सूर्यप्रकाशोपयोगाभावात्। तथैव कर्मविशेषेण शूद्रत्वं गतानामपि वेदाधिकाराभावे दोषासंभवात्।

वस्तुतस्तु सूर्य्यादिप्रकाशप्राप्त्यर्थमुपनयनादिकं नापेक्षितम् । तच्च त्रैवर्णिकानामेव विहितम् न शूद्राणाम् । अतएव 'वेदमाता' द्विजानाम् (अथर्व सं० शौनक १९।७१।१) इति द्विजानामेवाधिकारः सिध्यति । तस्माद्विषमो दृष्टान्तः । यथा कन्या परेशनिर्मिताऽपि विशिष्टानामेवोपयोगार्हा तथैव वेदा अपि निर्दिष्टविशिष्टाधिकारिणामेवोपयोगार्हाः ।

यदुक्तम् "न केवलं मन्त्रवाच्यत्वादेव देवतात्वम् । किन्तु देवो दानाद्वा द्योतनाद्वा दीपनाद्वा' इति निरुक्तानुसारेणोपदेशदातृत्वात् वेदप्रकाशनाच्चात्र मन्त्रे परमेश्वरस्य देवतात्व"मिति तत्तुच्छम्, तथात्वे सर्वेषां मन्त्राणां परमेश्वरदेवताकत्वापत्तेः । तथात्वे चेश्वरः-'अग्निमीडे पुरोहित' (ऋ० सं० १।१।१) मित्यत्रेश्वर एवाग्निस्तोता स्यात् । प्रकृतमन्त्रे चेश्वरस्यैव समृद्धिकामत्वापत्तिश्च स्यात् । विशेषतश्चैतयोरेव मन्त्रयोः परमेश्वरो देवता इत्युक्तेरपार्थत्वात् ।

वस्तुतः अनुक्रमणीरीत्या मन्त्रवाच्यस्यैव देवतात्वम् । यथा सांख्यीयगुणानां सांख्यदृष्ट्या व्याख्या युक्ता न 'अदेङ् गुणः' इति व्याकरणानुसारेण । एवमेव यस्य वाक्यं स ऋषिः, या तेनोच्यते सा देवता इति परिभाषाया एव तत्रादरणीयता । 'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति' (७।१) इति निरुक्तेनापि तदर्थस्य समर्थनात् । द्वयोर्मन्त्रयोरीश्वरप्रकाशितत्वादीश्वरदैवतत्वेऽन्येषां मन्त्राणामनीश्वरप्रकाशितत्वापत्तिश्च स्यात् । तस्मात् द्योतनात् दीपनात् इत्यादिभिरपि स्तुत्यर्थस्य दीप्यतेः प्रकाशनार्थस्य च दीप्यतेः स्तूयमानत्वात् प्रकाश्यमानत्वात् वाच्या स्तुत्य एव देवता स्वीकर्तव्या । प्रकृतमन्त्रयोश्च स्तुत्यत्वात्प्रकाश्यत्वात् परमेश्वरो देवता संभवति ।

यदुक्तम् 'कल्याणीवाक्पदेन सर्वत्र वेदवाचो ग्रहणम्, तन्न प्रमाणाभावात् । न च यजमानस्यैव दक्षिणादातृत्वेन तस्यैव दक्षिणाया दातुः प्रियो भूयासमिति प्रार्थना न युज्यत इति वाच्यम् । अत्र मन्त्रे लौगाक्षिऋषेर्यजमानत्वेन तस्य च निर्धनत्वात्तेन राजा परमेश्वरो वा धनार्थं प्रार्थ्यते । अतो राजा ईश्वरो वात्र दक्षिणा दाताऽभिप्रेतः । तेन यजमानस्य दक्षिणाया दातुरीश्वरस्य राज्ञो वा प्रियो भूयासमिति कामनोपपद्यते ।

केश्चित्तु 'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः ।।' (म० भ० शांति० ३२७।४६) इति वचनेन सर्ववर्णेभ्यो वेदश्रावणमभ्युपेयते तदपि तुच्छम्, 'मन्त्रः शूद्रे न विद्यते' (म० भा० शा० ६०।३७) 'न च तां प्राप्तवान् मूढः शूद्रो वेदश्रुतीमिव (सभा पर्व ४५।१५) 'भावं न चास्याहमनुप्रदातुमलं द्विजो-मन्त्रमिवाद्विजाय ।' (वा० रा० सु० २८।५) इत्यादिविरोधात् । तस्मादिति-हासपुराणश्रवणे चातुर्वर्ण्याधिकारबोधकमेव तद्वाक्यम् । साक्षाद्वेदस्य तु 'ब्राह्मणाय सदा देयं ब्रह्मशुश्रूषवे तथा ।' (म० भा० शा० ३२७।४९) इति ब्राह्मणायैव दातव्यमुक्तम्, इति पुराणमपि वेदार्थत्वात्पञ्चमं वेदरूपेण तत्र-तत्र संस्तुतम् ।

यन्मते परमेश्वरस्य निराकारत्वेन भाषणासम्भवः तन्मते परमेश्वर-वाणी वेद इति न सम्भवत्येव परन्तु स्वामीदयानन्दः प्रतिपदं स्ववेद-व्याख्याने परमेश्वरः कथयतीत्येव वक्ति । तथा च तस्य स्वसिद्धान्तविरोधः । निराकारत्वात्परमेश्वरस्यावक्तृत्वेन प्रतिपाद्यत्वमेव युक्तम् । किञ्च तन्मते परमेश्वरो भक्तान् ब्रवीति यथाहं देवानां दक्षिणाया दातुश्च प्रियो भूया-सम्, अयं मे कामः समृद्ध्यतामिति तथा युष्माभिः प्रयतनीयम । किमेव-माप्तकामस्य परमुखापेक्षा युज्यत इति विद्वांसः विदांकुर्वन्तु ।

नागेशेन वैदुष्यञ्चोपनयनादिमतां पुंसामेवेति तात्पर्य्यमित्युक्तम् ।

'सभेयो युवास्य यजमानस्य वीरो जायताम्' ( यजुः सं० २३।२२ ) इति मन्त्रे सभार्थं पुरुष एव प्रार्थितो न दुहिता । हारीतरीत्या ब्रह्मवादिनीनां यावज्जीवं ब्रह्मचर्य्यं सद्योवधूनां तु गोभिलोक्तं यज्ञोपवीतवद्वस्त्रधारणमेव यज्ञोपवीतम्, 'ओं या अकृन्तन आयुष्मति परिधत्स्व परिधत्त वाससा' इति वस्त्रस्यैव परिधानविधानात् ।

यदप्युक्तम्-''पश्चादग्नेः संवेष्ठितं कटं पदा प्रवर्त्तयन्तीं वाचयेत्-'प्रमेति प्रतियातः पन्थाः कल्पताम्' अत्र मन्त्रवाचनमुक्तम् तच्च वेदाध्ययनं साधयतीति, तदपि न, संहिता चतुष्टयस्यैव वेदत्ववादिनां सामाजिकानां रीत्या उक्तमन्त्रस्य वेदत्वाभावात् । सिद्धान्तरीत्या तु अपवादरूपं तत् । अतएव तस्या यावदुक्तमिति पूर्वोद्धतसूत्रे यावदुक्तं

पत्न्या कर्तव्यमित्युक्तमेव । यज्ञे विवाहे वा येषां मन्त्राणामुच्चारणं स्त्रीणां कृते विहितं तेषामुच्चारणं ताभिः कर्त्तव्यमन्यथानुज्ञानं नोत्सर्गः। यथा-यद्यपि यज्ञोपवीतात्पूर्वं वेदमन्त्रोच्चारणे कस्यचिदप्यधिकारो नास्ति तथापि मृतकश्राद्धेऽपवादभूतमनुपनीतमाणवककर्तृकमन्त्रवाचनमनुमतं मनुना। 'नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते।' (मं. स्म. २।१७२) तथैव स्त्रीणां विवाहे मन्त्रोच्चारणं वचनबलादपवाद एव। अतएव याज्ञवल्क्येनोक्तम् ।

'तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः' (१।२।१३ या. स्मृ.)

'न वैताः कर्णवेधान्ता मन्त्रवर्जं क्रियास्त्रियाः ।
विवाहो मन्त्रतस्तस्याः' ( व्या. स्मृ. १।१५-१६ )

तत्रापि—

विवाहे यो विधि प्रोक्तो मन्त्रा दाम्पत्यवाचकाः।
वरस्तु तान् जपेत् सर्वान् ऋत्विग्राजन्यवैश्ययोः॥'

इति गोभिलगृह्यसंग्रहानुसारेण पत्नीपठनीयान् मन्त्रान् वरः स्वयं पठेत्, राजन्यवैश्ययोस्तु ऋत्विक् पठेत् । स्वयं वरो जपेत् अजानन्त्याम् (वध्वां) प्रास्याः पतिपात''पतिलोकं मनसागम्या (गो० गृ० सू० २।१।२१)

यदप्युक्तम्-"भर्तुरतिचारे त्रिरात्रं यावकं क्षीरौदनं वा भुञ्जाना अधःशयीत् ऊर्ध्वं त्रिरात्राद् अप्सु निमग्नाया सावित्र्यष्टशतेन शिरोभिर्जुहुयात् पूता भवति।' (वसिष्ठ स्मृति २।१५) इति स्त्रीणां सावित्र्या होम उक्तः" इति, तदपि न, अर्थानवबोधात्। तथाहि अस्वातन्त्र्या स्त्री पुरुषप्रधाना अनग्निः अनुदक्या चानृतमिति (५।१ वा० स्मृ०) इत्यनुसारेण तस्याः स्वातन्त्र्याभावोक्त्या जुहुयादित्यस्य स्वभर्त्रितिरिक्तानग्नित्वेन ऋत्विक् पुरोहितादिद्वारा हावयेत् इत्येवार्थः कर्त्तव्यः। तत एव रघुनन्दनभट्टाचार्यस्य स्मृतितत्त्वे ६३४ पृष्ठे ततश्च तत् (स्त्री) कर्मसम्बन्धिमन्त्रेण विप्र-तदीयकर्मकारयितृब्राह्मणो गृह्यते । तेन ब्राह्मणेन तत्र मन्त्रः पठनीयः। वशिष्ठस्मृतौ च सावित्र्याः शिरोभिरित्युक्तम् । शिरोमन्त्रश्च 'आपो ज्योतिरसोऽमृतम्' इति। तस्य च संहिताचतुष्टये पाठाभावान्न तन्मतवादिनां वेदत्वम् ।

'अनग्निषु अमन्त्रत्वम् ( मीमांसा द. २।१।३४ ) इति सिद्धान्तरीत्याऽपि

मन्त्रांशस्य न मन्त्रत्वम्, 'वाक्यनियमात्' (मी. द. १।२।३२) इति रीत्याऽपि नियतक्रमाभावान्न तत्र वेदत्वम्। तस्मात्तदुच्चारणविधानेऽपि न तासां वेदाधिकारः सिद्ध्यति। वशिष्ठेन तस्या अनग्नित्वमुक्तम्। तेन ब्राह्मणद्वारैव होमो मन्तव्यः।

यदप्युक्तम् 'गोत्रञ्च चरणैः सह' इति वार्तिके शाखाध्येतृवाची शब्दो जातिकार्य्यं लभते इत्यर्थकेन 'कठी' 'बह्वृचा' इत्यादिषु कठशाखाध्येतृत्वेन कठी बह्वृचा इत्यादि प्रयोगसिद्धिः। तेन स्त्रीणां कठादिशाखाध्ययनं सिद्ध्यत्येवे"ति तदपि न, तत्त्वबोधिनीरीत्या तत्प्रयोगस्य ब्रह्मवादिनीविषयत्वेन गतार्थत्वात्। ताश्च कल्पारम्भ एव भवन्ति। न तेन तद्भिन्नानां वेदाध्ययनसिद्धिः। अत एव वाचयेत् इति ऋत्विगादिद्वारैव तद्वाचनमुक्तम्; अन्यथा वदेत् इत्येव स्यात्। बह्वृची न स्यात् इति निषेधार्थं प्रयोगसिद्धेः सार्थक्यात्।

यदुक्तम् "पत्न्या अध्ययनाभावे संस्कृतया वाण्या ऋत्विगुक्तेरप्रबोधात् कथं कर्मानुष्ठान" मिति, तदपि न, मातृभाषया सरलया संस्कृतया च तद्बोधे बाधाभावात्। प्रायेण पुंसामेव विधानबाहुल्यं स्त्रीणां त्वल्पमेव। तच्च वाचनादिना निर्वाह्यमेव। यथा जातकर्मादिसंस्कारेषु 'अश्मा भव' 'परशुर्भव' इत्यादि मन्त्रोच्चारणादिभिस्तस्य हृदि कर्तव्यसंस्कारं पितैव स्थापयति तत्र शिशुर्मन्त्रान् भावान् वा न वेत्त्येव। याज्ञे कर्मणि प्रयोगनियम' इति भाष्येण प्रयोगनियमो ज्ञायते न ज्ञानम् प्रयोगश्च ऋत्विगादिभिः संपाद्यत एव। संस्कारविधौ श्रीदयानन्देनापि ऋत्विजा पुरोहितेन वा मन्त्रोच्चारणं कर्म च यजमानेन कारयितव्यम्' इत्युक्तम्। (संस्कार विधि सामान्य प्रकरण २९ पृ०) यथा यज्ञोपवीतात्पूर्वं माणवकोऽशिक्षितो भवति तथापि गुरुसमाश्रयेण मन्त्रोच्चारणे न विधिभ्रंशस्तथैव स्वरादिज्ञानाभावेऽपि। तच्च नाधर्मः तथैव वरस्य पुरोहितस्य वाश्रयेण मन्त्रोच्चारणे कन्याया अपि न दोषः। कन्योच्चारणीया मन्त्राश्च सौत्रा अल्पीयांसश्च। वैदिकास्तु वरेणैवोच्चारणीयाः। यश्च गोभिलो 'नायज्ञियां वाचं वदेत्' (१।६।१६) इति सूत्रयति स एव 'यदि अयज्ञियां वाचं वदेत् नमो विष्णवे इति ब्रूयात्'

( १।३।२ ) इति तन्निरासञ्चब्रवीति । विवाहे स्त्री जनस्तु अग्निमभिमुखो वाग्यतः प्राञ्जलिरास्ते आकर्मणः पर्य्यवसानात्' ( १।६।३६ ) तूष्णीमेव तिष्ठति वरः पुरोहितो वा तत्कार्यं करोति ।

यदुक्तम्—महाश्वेता सीतादिभिः सन्ध्यानुष्ठानात्स्त्रीणां वेदाधिकारः सिद्ध्यति' इति तदपि कुशकाशावलम्बनम् ।

'सन्ध्याकालमनाः श्यामा सन्ध्यार्थेवरवर्णिनी ।'

वा० रा० ( ५।१४।४९ ) इत्यादि, तत्र सम्यग्ध्यानस्यैव सन्ध्यात्वेन वेद-मन्त्रोच्चारणानावश्यकत्वात् ।

'नामानि ते शतक्रतो विश्वाभिर्गीर्भिरीमहे'

( अथर्व २०।१९।३ ) इति परमेश नामस्मरणमेव स्त्रीणां सन्ध्या मन्तव्या । सामाजिकानां सन्ध्यायामपि 'ओं वाक् वाक्' 'ओं भूःपुनातु शिरसि' 'ओं भूः' इत्यादि मन्त्रा अवैदिकाः संहिताचतुष्टये तदलाभात् रामायणानुसारेण षड्वर्षीयाः सीतायाः उद्वाहः उपनयनन्तस्या यावन्न सिध्येत्तावद्वैदिक-सन्ध्याधिकारः कुतस्तस्याः ? 'तस्मादहोरात्रस्य संयोगे ब्राह्मणः सन्ध्यामु-पासीत । उद्यन्तमस्तयान्तमादित्यमभिध्यायन्' ( ४।५ ) षड्विंश ब्राह्मणानु-सारेण सूर्यध्यानमेव सन्ध्या । सा च सूर्याय नमः इति लौकिकैर्मन्त्रैरपि सम्भवत्येव । सन्ध्याकालिकस्नानादि कृत्यमेव सन्ध्येति रामायण-टीकाका-रैश्चोक्तम् । किञ्च यदि महाश्वेतायाः यज्ञोपवीतधारणपूर्वकं सन्ध्यानुष्ठानमनु-करणीयं तदा तस्याः शिवमूर्त्यर्चनमपि स्वीकार्य्यम् । तच्च तवादिभिर्नाङ्गी-क्रियते । 'शङ्करार्चनाय स्वयमुद्यतां कादम्बरीम्' इति कादम्बरीग्रन्थतो ज्ञायते ।

वस्तुतस्तु महाश्वेतायाः गन्धर्वकन्यायाः दिव्यात्वद् ब्रह्मवादिनीवत्तन्न दोषाय तदपि सा पत्युर्जन्मत्रयं यावन्न वृद्धा जाता । 'न देव चरितञ्चरेदिति' रीत्या देवचरितस्यानुकरणं निषिद्धमेव । सद्योवधूनां तु विवाहकाले उपनयनमात्रं कृत्वा विवाहः कार्य्यः इति हारीत प्रोक्तसद्योवध्वा उपनयनन्तु नोपनयन संस्कारः, आचार्यकरणाभावात् । किन्तु विधिना पतिसमीपानयनमेव । यथा पुंसामाचार्यसमीपानयनं तद्वत् । यज्ञोपवीतञ्च यज्ञोपवीतवद्वस्त्रधार-णमेवेत्युक्तमेव ।

किञ्च 'वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥' ( २।६७ )
इत्यादिना मनुरपि वैवाहिकविधिमेव स्त्रीणामुपनयनं, पतिसेवामेव च गुरुशुश्रूषां ब्रूते ।

तथा–'यो मे भर्ता स मे गुरुः' ( वा. रा. ५।२४।९ )
'गुरुपितृश्रेष्ठदेवेषु सर्वेभ्यश्च पतिर्गुरुः ।
विद्यादाता यथा पुंसां कुलजानां तथा प्रियः ॥' ( ब्र. वै. पु. ख. ४२।११ )
इत्यादावपि एतस्यैव प्रतिपादनम् ।

यच्च–"पिता पितृव्यो भ्राता वा नैनामध्यापयेत्परः' इति वचनात् उपनयनान्तरं वेदाध्ययनार्थं पित्रादिसमीपे निवासः" इति तच्च सर्वमसङ्गतमेव, उक्तमन्वादिवचनविरोधात् ।

'जातिं तु बादरायणस्तस्मात् स्त्र्यपि प्रतीयेत' इदं तु मीमांसासूत्रं 'स्वर्गकामो यजेत' इत्यत्र लिङ्गविशेषनिर्देशात् । 'पुंयुक्तमैति शायमः' ( ६।१।६ ) इत्येकदेशिपक्षाश्रयेण पुमानेव स्वर्गकामो यागेऽधिक्रियते इति पूर्वपक्षे 'जातिं तु' इति सूत्रेण जात्याश्रयेण स्वर्गकामायाः पत्न्या अपि तत्राधिकारः साधितः । नोपनयनादिषु जातिपक्षाश्रयणम्, बहुप्रमाणविरोधादित्युक्तमेव । अन्यथा 'पशुमालभेत' इत्यत्रापि जात्याश्रयणेन पशुस्त्रिया अप्यालम्भः स्यात् । न च तदिष्टम् । अत एव ( ६।१।८ ) सूत्रे शबरस्वामिना 'स्वर्गकामशब्देनोभावपि स्त्रीपुंसावधिक्रियेते । अतो न विवक्षितं पुंलिङ्गम्, कुतः, अविशेषात्, नहि शक्नोति एषा विभक्तिः स्वर्गकामं विशेष्टुम् । 'स्त्रीचाविशेषात्' इति कातीयसूत्रस्यापि स एवार्थः । तत्र कर्कभाष्यम् 'स्त्रीचाधिक्रियते । कुत एतत्, अविशेषात् । यस्मात् श्रूयमाणमपि-एतल्लिङ्गं न विशेषकं भवति । उद्दिश्यमानविशेषणं ह्येतत्स्वर्गकामो यजेतेति विधिसंस्पर्शाभावात् । अविवक्षितं लिङ्गं संख्या च । तस्मात्तु स्त्रिया अप्यधिकारः । दर्शनाच्चे' (८) ति 'योक्त्रविधिपरे वाक्ये पत्न्या अधिकारं दर्शयति सा च पुंसा सहाधिक्रियते, न पृथक् । येन एकस्मिन् कर्मणि पत्नी साध्याः पदार्था दृश्यन्ते । 'पत्नी आज्यमवेक्षते' इति । यजमानसाध्याश्च 'यजमानो वेदं बध्नाति' इति ।' 'तुल्यफलत्वाच्च ।' 'स्वर्गकामो यजेत

इत्यनेन यजमानोऽभिधीयते । एवं पत्नी अपि । यथा यागेन यजमानः फलं साधयति तथा पत्नी अपि, विधेयगतं लिङ्गं संख्या च विवक्ष्यते । तत एव पशुना यजेत इत्यत्र पुंस्त्वम् एकत्वञ्च विवक्षितं भवति । तथैवाचार्यकरण-वाक्ये उपादीयमानत्वात् कुमारस्य पुंस्त्वं विवक्षितं भवतीत्युक्तम् ।

किञ्च "न सीतायाः परां भार्यां वव्रे स रघुनन्दनः ।
यज्ञे यज्ञे च पत्न्यर्थं जानकी काञ्चनी भवत् ॥' ( वा० रा० ७।९९।१ )
'रामोऽपि कृत्वा सौवर्णी सीतां पत्नीं यशस्विनीम् ।
ईजे यज्ञैः ।' ( कात्यायनस्मृति २०।४ ) ।

इति काञ्चन्या जानक्या सार्द्धं रामेण यज्ञः कृतः । न सा मन्त्रं वक्तिस्म । न वा कर्माणि, करोतिस्म । किन्तु ऋषिभिरेव तत्सर्वं क्रियतेस्म । तथैवान्यत्रापि बोद्धुं शक्यम् ।

न च "पुरा कल्प" शब्दस्य क्षात्रेण कल्पेनेतिवत् प्राचीनशास्त्रविधि-रित्येवार्थ इति वाच्यम्, सृष्ट्यादिप्रणीतमन्वपेक्षयाऽन्यस्य शास्त्रविधेर-भावेन तदर्थत्वात् । तत्र यथा क्षात्रविशेषणेन क्षात्रविधानमर्थस्तथैवात्र पुरेति विशेषणात् समयविशेष एव तदर्थो युक्तः । बहुभिश्चाचार्यैः कल्प-शब्दो युगान्तरविषय उक्त इत्युक्तमेव ।

'युगान्तेऽन्तर्हितान् वेदान् सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वम्' ··· ··· ··· ··· ··· ॥

इत्ययं श्लोकः ऋग्वेदभाष्यारम्भे सायणेनोद्धृतः । तत्र युगान्तशब्दस्य कल्पान्त इत्येवार्थः । तेन सर्गादिसमये महर्षयः पूर्वं सेतिहासान् वेदादीन् लेभिरे इति सिद्ध्यति ।

"नहि शूद्रासु ब्राह्मणक्षत्रियवैश्या जायन्ते' इति सामाजिकसम्मतं हारीतवचनम् कर्मणा वर्णव्यवस्थां खण्डयति । कर्मणा तत्त्वे तु कुत्रापि जातस्य कर्मणा ब्राह्मणत्वादिकं स्यादेव । वस्तुतस्तु 'शूद्रासु' इत्यस्य शूद्रसदृशीष्वसंस्कृतासु ब्राह्मणादिकन्यास्वित्येव तदर्थः कर्तव्यः तस्मात्–'स्त्रियः छन्दसा संस्कार्या' इत्यस्यापि छन्दसा विवाहसंस्कारः कार्यः इत्येवार्थः, विवाहस्तु समन्त्रक' इत्युक्तेः । वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः । ( २।६७ ) इति मनूक्तेश्च । चतुर्विंशतिमतसंग्रहे—भट्टोजिदीक्षितश्च स्त्रीणां

विवाह उपनयनस्थानापन्नः। नहि शूद्रसमाः स्त्रियः, 'स्त्रियश्छन्दसा संस्कार्याः' इति हारीतवचनस्य प्रामाण्यवादिनां शूद्राणां वेदमन्त्राधिकारो बाध्येत। तथा च 'यथेमां वाचमित्यादि रीत्या स्वकपोलकल्पनया वेदेषु सर्वाधिकारप्रतिपादनं व्यर्थमेव स्यात्। सिद्धान्तरीत्या तु 'संस्कारोत्तरं ब्राह्मणा व्याकरणं स्माधीयते' इति महाभाष्यस्य पस्पशाह्निके पुरुषसम्बन्धे संस्कारशब्दस्य उपनयनसंस्कारोऽर्थो गृह्यते। स्त्रीणां सम्बन्धे तु 'रजः पश्यत्यसंस्कृता' (वृ. य. स्मृतौ ३।१८) इत्यादौ विवाहसंस्कारो ग्राह्यः। 'वैवाहिको विधिः स्त्रीणाम्' इति मनूक्तेः।

यथा 'निषादस्थपतिं याजयेत्' इति वेदानधिकारिणोऽपि वचनबलान्निषादस्थपतेः सर्वं मन्त्रोच्चारणादिकमृत्विक्करोति तथैव स्त्रिया यजनादिकमपि वरो ऋत्विग्वा सम्यक् सम्पादयति। तदुक्तं स्मृतितत्त्वे ६३४ पृष्ठे—

'अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते।

इति वराहपुराणवचनादयं विधिः शूद्रकर्तृकमन्त्रपाठरहितः।' ततश्च तत्कर्मसम्बन्धिमन्त्रेण विप्रः तदीयकर्मकारयितृब्राह्मणो गृह्यते। तेन ब्राह्मणेन मन्त्रः पठनीयः। तथैव स्त्रीणां कृते वरः सर्वं मन्त्रादिसाध्यं कर्म कुर्यात्। यथा वा अन्नप्राशने 'ओं अन्नपते अन्नस्य नो देहि' (यजुः सं॰ ११।८३) कर्णवेधे 'भद्रं कर्णेभिः शृणुयाम देवाः' (ऋ. सं. १।८९।८)। मन्त्रौ बालेन पठनीयौ, तथापि तदानीं बालस्य तदसामर्थ्यात् यज्ञोपवीताभावेनानधिकाराच्च तत्पित्रादिभिः पठ्यते तथैव स्त्रीसाध्यं कर्म पतिः करोति।

यदुक्तम् "कुमारशब्दस्य जातिपरत्वादेव कुमारा विशिखा इव' इत्यनेन कुमाराणामिव कुमारीणामपि चौलकर्म सूच्यते" इति तदपि न, तथात्वे 'त्वं कुमार उत वा कुमारी' (ऋ. सं. १०।८।२७) इत्यत्र कुमारशब्दात्पृथक् कुमारीपदवैयर्थ्यापत्तेः, प्रकृते तु कुमार्यश्च कुमाराश्चेत्येकशेषत्वात् 'कुमारा विशिखा इवे'इति कुमारीणामपि सूचनं संभवति जातिपक्षानाश्रयणेनापि।

यत्तु "यो वाऽऽगमिष्यति स व्यापादयिष्यति ते' इत्यादौ यः सः इति पुल्लिङ्गश्रवणेऽपि जातिपक्षाश्रयणेन स्त्रीपुंसावुभावपि विवक्ष्येते 'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य चे' त्यादावपि पुल्लिङ्गदर्शनेऽपि जातिपक्षाश्रयणेन स्त्रीपुंसोरुभयोरपि ग्रहणम्। तथैवाष्टवर्षं ब्राह्मणमुपनयीत" इत्य-

मूल मुद्रणे लुप्तः

त्रापि जातिपक्षाश्रयणेनोभय. . तन्न, संस्कार-
सम्बन्धे मीमांसाविरोधस्य च यणेऽन्यस्मृतिविरोधश्च
स्यात्। तथाहि तथा त्वेऽष्टवर्षाया गुरुकुलवासश्च स्वीकार्य्यम्।
तथात्वे पतिसेवा गुरौ वास इत्यादि विरोधः। पिता पितृव्यो भ्राता वा
नैनामध्यापयेत् परः।' इति यमस्मृतिविरोधश्च स्यात्।

पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता॥
(यमस्मृतिः ३।२२)

इति स्मृतेर्निर्विषयत्वापत्तिश्च, आचार्यकुलस्थितायास्तस्या रजोदर्शनेऽपि तद्वचनाविषयत्वात्। उपनयनवत्या विवाहसंस्काराभावेऽपि नासंस्कृतात्वं न वा वृषलीत्वं संभवति, तथात्वे तद्बोधकं वचनं व्यर्थमेव स्यात्।

तस्माद्यत्र जातिपक्षबाधको न भवेत्तत्रैव जातिपक्षाश्रयणं युक्तम्। 'अमन्त्रिका तु कार्येयं स्त्रीणामावृतशेषतः (१२।२६) पद्ये पुंसः इत्यादौ तु जातिपक्षो बाध्यत एव तथैव 'वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः।' (मनु० २।६७) 'एताः क्रियाः स्त्रीणाम् मन्त्रिकाः' (बृहद् विष्णुस्मृतिः २६।१३) 'तासां समन्त्रको विवाहः' (२।१४) 'आवृतैव स्त्रियाः कुर्यात्'-अमन्त्रकं' (जै गृ. सू. १।११) 'आवृतैव कुमार्य्यै'। (आश्वला० गृ० १।१५।१२)। आश्वलायनसू० १।१९।५ 'इत्यत्र 'समन्त्रकेऽनुष्ठानप्रकारेऽन्यत्र विहिते तस्यैव मन्त्रवर्जितस्य वचनमावृत्' इति हरदत्तः। आपस्तम्बगृ० आवृतश्च आस्त्रीभ्यः। (१।२-१५) इत्यत्र मन्त्ररहिता क्रिया आवृत उच्यते इति हरदत्तवृत्तिः। एवं स्त्रियाविमन्त्र तु कार्य्यं (बृ. पाराशरस्मृतिः ४।१४७) इत्यादि बाधकवचनैः अष्टवर्षं ब्राह्मणमित्यत्र जातिपक्षो बाध्यते। यदोक्तवचनैः कन्यानां कर्मसु मन्त्रपाठोऽपि निषिद्धस्तदा वेदाध्यनाधिकार प्रदमुपनयनं कथं तासां सिध्यति। यदि जातिपक्षः सर्वत्राबाधितः स्यात्तदा

'केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः॥" (मनुः २।६५)

इति रीत्या कन्यानां षोडशादिषु वर्षेषु केशान्तः कारयितव्यः। स च नेष्यते वादिभिः। ततोऽत्र जातिपक्षो बाधित एव मन्तव्यः।

जातिप ...नामप्युनयनविवाहादिप्रसज्येत । दशरथस्य चत्वारो पुत्रा ज ...स्य पुत्रश्च जाताः इत्यप्यर्थं स्यात् ।

'कुमारं जातं' ( आश्वलायनः १।१२।१५ ) इत्यत्र हरदत्तः 'कुमारस्येत्यनुच्यमाने जातिमितिलिङ्गस्याविवक्षितत्वात् कुमार्य्या अपि प्राप्नोति । तन्निवृत्त्यर्थं कुमारग्रहणम् । तस्माद् 'ब्राह्मणो न हन्तव्यः' इत्यादिषु जातिविवक्षणेऽपि यत्र संस्कारसम्बन्धे स्त्रीणां निषेधस्तत्र न तदाश्रयणं युक्तम् । अतएव वेदेऽपि 'मम पुत्राः शत्रुहणो अथोमे दुहिता विराट् ।' ( ऋ. सं. १०-१५६।३ ) इत्यत्र पुत्रशब्दात् पृथक् दुहितृग्रहणम् । 'यदि स्त्री यदि पुमान्' ( अथर्व ५।१४।६ ) 'शन्नः करोति नृभ्यः नारिभ्यः' 'सम्राज्ञो एधि श्वसुरेषु सम्राज्ञी उत श्वश्र्वाः' ( अथर्व १४ १।४४ ) 'पुत्रो मे पण्डितः' अथ य इच्छेद्दुहिता मे पण्डिता स्यात्' इत्यादिषु च स्त्री पुंसयोः पृथङ्निर्देशः । स्त्रीणामुपनयने पूर्णब्रह्मचर्य्येऽभ्युपगते अष्टचत्वारिंशद्वर्षपर्यन्तं ब्रह्मचर्यं पालयित्वा पश्चाद्विवाहः प्रसज्येत ।

ब्रह्मचर्य्यकृत्योपदेशे स्तनाच्छादनरजोधर्मकर्तव्यादिकञ्चोपदेष्टव्यम् स्यात् । 'प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।' ( मनु २।२९ ) अत्र 'पुंस' इति नरः 'पुमांसो वै नरः । स्त्रियो नार्य्यः ।' ( ऐ० ब्रा० ३।३४ ) पुंस इत्यत्र मेधातिथिः 'पुंस इति स्त्रीनपुंसकनिवृत्त्यर्थम् ।

'पुमान् पुंसोऽधिके शुक्रे स्त्रीभवत्यधिके स्त्रियाः ।
समेऽपुमान् पुंस्त्रियौ वा' । ( ३।४९ मनुः )

अत एव स्त्रीणाममन्त्रिकाः क्रिया उक्ताः । मेखलाबन्धनकौपीनधारणहृदयालम्भनादिकं 'मुखेन मुखं सन्निधाय जपति' ( अग्निवेश्म गृह्य १।१।३ ) इति मुखे मुखसन्निधापनञ्च कन्यासु न सम्भवति न वा वादिभिरपि क्रियते ।

यदुक्तम् 'स्त्रीप्रत्यये 'आचार्य्या' 'उपाध्यायी' इत्यादि प्रयोगैरपि स्त्रीणां वेदाध्ययनसिद्धिः ।

'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥' ( २।१४० )

इति मनुवचनेन वेदाध्यापनमन्तराऽचार्यत्वासंभवात्' इति, तन्न निषेधार्थमपि प्रयोगसिद्धिसंभवात् । नहि विधानार्थमेव शब्दसिद्धिर्निषेधार्थमपि तदपेक्षितत्वात् । तथाचाचार्या न स्यात्, बहवृची न स्यात् इति

निषेधार्थमपि तत्प्रयोगसाधुत्वापेक्षणात् । मनुवचनेत्वाचार्यस्य लक्षणमुक्तम्, नत्वाचार्यायाः पुल्लिङ्गनिर्देशात् । मनुना तासां विवाहातिरिक्ताः सर्वाः क्रिया अमन्त्रका उक्तास्तदा कथं तेन आचार्यालक्षणम् तथाभूतमुच्येत ।

किञ्च आचार्यलक्षणे 'वेदमध्यापयेद् द्विज' इत्युक्तम्, न चाचार्याया अध्यापनमिष्टम् । तथात्वे या तु स्वयमेवाध्यापिका तत्र ङीष् वाच्यः इत्यनेन उपाध्यायीवदाचार्यी इति स्यात् । तेन आचार्या अत्र व्याख्यात्री मन्तव्या । वेदाध्यापकाद्भिन्नोऽप्याचार्यो भवति ।, 'आचार्याणां शत पिता' ( मनुः २।१४५ ) वचनात् । अनेन व्याख्यातृशतादेव पितुरुत्कर्ष उक्तः । नहि वेदप्रदातुः पिता अधिको भवति । उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ( २।१४६ मनु ) इति वचनविरोधात् । तस्मादाचारं ग्राहयति आचिनोति बुद्धिमिति यौगिक एवाचार्य शब्दः स्त्रियाम् न तु परिभाषिकः । उपाध्यायी इत्यत्रोपाध्यायोऽपि न मनूक्तलक्षणः । या तु स्वयमेवाध्यापिका इति तत्त्वाधिके वार्तिके वेदस्य वेदैकदेशस्येति वचनाभावात् सीवनवयनादिकलाकौशलविषयमेवाध्यापनं तत्र विवक्षितम् । 'या अकृन्तन् ( अ. सं. १४।१।४५ ) इत्यादौ स्त्रीणां कृते तद्वर्णनात् ।

> 'स्त्रीणामुपनयनस्थानं विवाहं मनुरब्रवीत् ।
> विवाहश्चोपनयनं स्त्रीणामाह पितामहः ॥'

इति माधवीयादिवचनान्यपि तदेव बोधयन्ति ।

'नासां द्विजातिसंस्कारो न निवासो गुरावपि ।' (श्री भागवते १०।२३।४२)

यदुक्तम्—'वेदं पत्न्यै प्रदाय वाचयेत होता अध्वर्युर्वा । वेदोसि वित्तिरसि' ( आश्वलायन श्रौ० १।११।१ ) अत्र पत्न्या हस्ते वेदपुस्तकं दत्त्वा मन्त्रविशेषं वाचयेत । 'वेदं पत्नी विस्रंसयति । वेदोऽसि येन त्वं देव वेद' (शत ब्रा० १।९।२२-२३) अत्र वेदमुद्घाट्य वेदोऽसीति यजुः ( २।२१ ) मन्त्रं पठेत् । 'पत्नी वेदं प्रमुञ्चति' (कात्यायन श्रौ ६।८।२) तस्यै सावित्र्यै सीतायै सह त्रीन् वेदान् प्रददौ प्रजापतिः' ( तै० ब्रा० २।६।१० ) इत्यत्र वेदशब्दस्य वेदमन्त्रलाञ्छितं किञ्चिद् गुटिकाद्रव्यं दत्तवान् इत्यर्थस्तवनर्थ एवे"ति तदपि न, अर्थानवबोधात् । नात्र वेदशब्दस्य ग्रन्थोऽर्थः । सामाजिकवादिसंमते वेदे, वेदोऽसि वित्तिरसि, इति मन्त्रस्यैवाभावात् ।

किञ्च यदि पत्न्या हस्ते वेदो दत्तस्तदा होत्रा अध्वर्युणा वा किमर्थं वाचनीयम्? तत्कर्तृकं वाचनं चेत्पुस्तकदानं व्यर्थमेव। तस्माद्वेदपदं कुशमुष्टिपरम्। 'वेदङ्कृत्वा वेदिं करोती'ति श्रुतेः। वेदोसि (यजु० २.२१) इति मन्त्रे महीधरभाष्यम्-'पत्नी वेदं प्रमुञ्चति' हे कुशमुष्टिनिर्मितपदार्थ त्वं वेदः ऋगाद्यात्मको ज्ञाता वा असि। हे द्योतनात्मक त्वं देवानां ज्ञापकोऽभूः। नहि यजमानपत्नी वेदग्रन्थं मुञ्चति हारवत् स्वाङ्गे धारयति किन्तु कुशमुष्टिमेव, याज्ञिकानां तथैवाचारदर्शनात्। उञ्छादि (पा० सू० ६४) सूत्रे वेदशब्दः कुशमुष्टेः योगदानम्। ग्रन्थराशिरूढो वेदशब्दो वृषादिगणपठितआद्युदात्तः। 'संमार्जनार्थं दर्भमुष्टिनिर्मितपदार्थो वेदः। तं पदार्थम् ऋग्वेदाद्यात्मना स्तौति त्वं वेदोसीति ऋगाद्यात्मको वेदिता वासीति (काण्वसंहिता १।५) इत्यत्र सायणः। 'प्रजापतेर्वाएतमश्रूणि यद्वेदः' (तै० ३।३।६।११) 'योषा वै वेदिः। वृषा वेदः' (शतः १।९।२०-२१-२४) इत्यादिवचनेभ्यः।

यदि तत्र वेदशब्दस्य वेदग्रन्थोऽर्थः स्यात्तदा 'वेदं पत्नी निरस्यत' (सत्याषाढ सू० २।५) इत्यत्र पत्नीकर्तृको वेदनिरासोऽप्यभ्युपगन्तव्यः सचानिष्ट एव। 'वेदं प्रमुञ्चति' शब्दस्य वेदपरित्यागः परिधानं वार्थः, न च तद्द्वयमपि प्रकृते घटते। तस्मात्कुशमुष्टिधारणमेवार्थः। 'यजमानो वेदं बध्नाति' (का० श्रौ० १.१।८) 'वेदे पत्नी विस्रंसयति' (शत १।६।२२-२४) इत्यादौ कुशमुष्टेरेव बन्धनं विस्रंसनं वा संभवति। तस्मात्स्त्रियाः 'क्रमेण विधिपूर्वकम्' (मनु २।१७३) इति विधिपूर्वकक्रमिकवेदाध्ययनाभावेऽपि यावदुक्तं केषाञ्चिन्मन्त्राणां पाठनमपवादभूतमिष्टमेव। एतेन 'वेदोऽसि वित्तिरसि वेदो वाजं वीरं ददातु वृषः वृषण्वती वेदः पत्नीभ्यो भव' (१।१-४।२५ कात०) इत्यत्रापि कुशमुष्टिरेवार्थः। सीताया वेदत्रयदानमपि सायणोक्तगुटिकादानमेव पतिवशीकाराय तस्यैवापेक्षितत्वात्।

यदुक्तम्-"अग्निं जुहोतिस्म तदा मन्त्रवित् कृतमङ्गला।' (वा० रा० २।२०।१५) अत्र कौशल्याया मन्त्रवित्वहोमकर्तृत्वञ्च स्पष्टं श्रूयते। 'वैदेही शोकसंतप्ता हुताशनमुपागमत्' (सुन्दर का० ५३।२५) अत्र वैदेह्या हवनम् 'तदा सुमन्त्र मन्त्रज्ञा कैकेयी प्रत्युवाच ६१७ (वा. रा. २।१४।५६) अत्र

कैकेय्या वेदमन्त्रज्ञत्वमुक्तम् 'ततः स्वस्त्ययनं कृत्वा मन्त्रविद्विजयैषिणी' ( वा. रा. ४.१६।१ ) इति ताराया मन्त्रज्ञत्वमुक्तम्।

'वाग्यतास्ते त्रयः सन्ध्यां समुपासत संहिताः।' ( वा. रा. २।७।१६ ) अत्र रामलक्ष्मणसीतानां सन्ध्यावन्दनं स्मर्य्यते।

'नदीमेतां शुभजलां सन्ध्यार्थे वरवर्णिनी।'

अत्र सीतायाः सन्ध्यावन्दनमुक्तम्।'' इति, तदपि न, पूर्वोक्तवचनविरोधादन्तर्भावितणिचमाश्रित्य जुहोति इत्यस्य ऋत्विग्द्वारा हावयति इत्यर्थकरणे दोषाभावात्। मन्त्रविदिति छलेन पाठपरिवर्त्तनं कृतम्। वस्तुतः मन्त्रवदित्येव पाठः। तत्रैव च—

'प्रविश्य तु तदा रामो मातुरन्तः पुरं शुभम्।
ददर्श मातरं तत्र हावयन्तीं हुताशनम्॥'
( वा. रा. २।२०।१६ )

इत्यव्यवहितपद्यानुरोधेन जुहोतीत्यत्राप्यन्तर्भावितणिच् अवश्यं मन्तव्यः। यद्वा ऋत्विग्द्वारा इत्यध्याहृत्य जुहोति इत्यस्यापि निर्वाहो भवत्येव। ब्राह्मणद्वारा होमं करोति हावयति इत्यनयोरैकार्थ्यसम्पत्तेः। अन्यथा तद्संगतिध्रौव्यम् निश्चप्रचम्। अत एव प्राचीनैः रामाभिरामीयटीकाकारैः 'अग्निहोत्रमन्त्रवद् जुहोति स्म, ज्येष्ठपत्नीत्वात्, ऋत्विजा इति शेषः। तदाह हावयन्तीमिति ( २।२०।१६ ) हावयन्तीं ब्राह्मणैरिति।' 'एतदनुरोधेन पूर्वत्र जुहोति इत्यस्य हावयन्ती इत्यर्थः।' इति शिरोमणिकारैः भूषणकारैरपि तदेवोक्तम्। मनूक्त्यनुसारीचायमर्थः।

पुरोहितं च कुर्वीत वृणुयादेव चर्त्विजः।
तस्य गृह्याणि कर्माणि कुर्य्युर्वैतानिकानि च।' ( ७ ७८ )

इति मनुवचनात्। तथा दशरथस्य राज्ञो राजकार्य्यव्यस्तत्वात्तज्ज्येष्ठपत्न्या ऋत्विग्द्वारा अग्निहोत्रादिसम्पादनं युक्तमेव। रामायणीयवचनान्तरैरपि रामस्य वनगमनसमये कौशल्याब्राह्मणैरेव हवनमन्त्रपाठादि मङ्गलं सम्पादितवतीति ज्ञायते।

'ज्वलनं समुपादाय ब्राह्मणेन महात्मना।
हावयामास विधिना राममङ्गलकारणात्॥' ( २।२५।२७ )

'घृतं श्वेतानि माल्यानि समिधश्चैव सर्षपान् ।
उपसम्पादयामास कौशल्या परमाङ्गना ॥' ( २।२५।२८ )
'उपाध्यायः सविधना कृत्वा शान्तिमनामयम् ।
हुतहव्यावशेषेण बाह्यं बलिमकल्पयत् ॥
मधुदध्यक्षतघृतैः स्वस्तिवाच्यं द्विजांस्ततः ।
वाचयामास रामस्य वने स्वस्त्ययनक्रियाम् ॥
ततस्तस्मै द्विजेन्द्राय राममाता यशस्विनी ।
दक्षिणा प्रददौ काम्याम्' ( २।२५।२९...३१ )
'न वै कन्या न युवतिर्नाल्पविद्यो न बालिशः ।
होता स्यादग्निहोत्रस्य नार्तो नासंस्कृतस्तथा ॥
नरके हि पतन्त्येते जुह्वन्तः स च यस्य तत् ।
तस्माद्वैतानकुशलो होता स्याद्वेदपारगः ॥'
( मनु० ११।३६-३७ )

अन्यत्रापि--

नाश्रोत्रियतते यज्ञे ग्रामयाजिकृते तथा ।
स्त्रिया क्लीबेन च हुते भुञ्जीत ब्राह्मणः क्वचित् ॥
अश्लीकमेतत्साधूनां यत्र जुह्वत्यमी हविः ॥
प्रतीपमेतद् देवानां तस्मात्तत्परिवर्जयेत् ॥'
( मनु० ४।२०५-२०६ )

इत्यादिषु स्पष्टं स्त्रीकर्तृकहवननिषेधः । यत्र च

'चकार रम्यं कौशल्या मन्त्रैरभिजजाप च ।' ( २।२५।३९ )

इत्यादिषु यत्रस्त्रीकर्तृको जपो दृश्यते, तत्र पौराणिकमन्त्राजप एव मन्तव्यः । यथा रामायणे—

'समित्कुशपवित्राणि वेद्यश्चायतनानि च ।
स्थण्डिलानि च विप्राणां शैला वृक्षाः क्षुपाह्रदाः ॥
पतंगाः पन्नगाः सिंहास्त्वां रक्षन्तु नरोत्तमम् ।'
( २।२५।७ )

'नक्षत्राणि च सर्वाणि ग्रहाश्च सह दैवतैः।
अहोरात्रे च ते सन्ध्ये पान्तु त्वां वनमाश्रितम् ॥'

इत्यारभ्य १८ द्रष्टव्यानि।

'वैदेहीशोकसंतप्ता हुताशनमुपागमत्।'

इत्यत्रापि न होमो विवक्षितः किन्तु हनूमतः शुभकामनया हुताशनप्रार्थनमेव। यथा तथैव—

'लाङ्गूलेन प्रदीप्तेन स एष परिणीयते।
श्रुत्वा तद्वचनं क्रूरमात्मापहरणोपमम्।
उपतस्थे विशालाक्षी प्रयता हव्यवाहनम्।
यद्यस्ति गुरुशुश्रूषा यदि वा चरितं तपः।
यदि वाप्येकपत्नीत्वं शीतो भव हनूमतः ॥'

(सुन्दरे ५३-२६-२७)

इत्यादि सन्दर्भस्वारस्यात्। टीकाकारैश्च उपागमत् मनसा प्राप्नोत्। ध्याने नोपासितवती इति शिरोमणिः। यद्वा ज्वलमानमग्निमुपासितवती तिलकः इति यथा—अपत्नीकस्य यज्ञो न भवति तथैवापतिकाया अपि यज्ञो न संभवति। अतएवोक्तं मनुना—

'नास्ति स्त्रीणां पृथग्यज्ञो' (५।१।५५)

मन्त्रज्ञा कैकेयी इत्यत्र मन्त्रशब्दस्य न वेदमन्त्रोऽर्थः, किन्तु षट्कर्णो भिद्यते मन्त्रः। तस्मान्नोतिचतुरा इत्येवार्थः। अतएव टीकाकारैरपि—'मन्त्रज्ञा स्वकार्यचतुरयज्ञा' इति तिलकः। राजनीत्यनुसारेण स्वकार्योचितविचारज्ञा' इति गोविन्दराजः।

नहि वेद मन्त्रज्ञत्वेन प्रधानमन्त्र्यादीनां मन्त्रित्वम्। ताराऽपि तादृशी मन्त्रज्ञा आसीत्। अद्यापि यैर्मन्त्रैर्मन्त्रिणां मन्त्रित्व तेषामेव ज्ञात्री तारासीदित्येवार्थः।

'मन्त्रश्च वैदिकादन्य' इति गोविन्दराजः। त्रयः सन्ध्यामुपासत इत्यत्र तु 'सुमन्त्रेण सहितास्त्रयः' इति तिलककारः। सीताया अपि सन्ध्यौ परमात्मध्यानरूपासन्ध्यौपपद्यत इत्याद्युक्तमेव।

यदप्युक्तम्-'यज्ञियासः पञ्चजना मम होत्रं जुषध्वम्' इत्यत्र निषादपञ्चमा-

नाम्पञ्च जनानामग्निहोत्रसेवनमुक्तम्" इति तदपि न, तत्र 'गन्धर्वाः पितरो देवा असुरा रक्षांसि' (३।८।१) इति निरुक्तरीत्या गन्धर्वादय एव पञ्चजना इह यज्ञप्रसङ्गे विवक्षिताः। (ऋ० सं० १।१००।१२) इत्यत्र पाञ्चजन्य व्याख्यायाम् 'गन्धर्वाः अप्सरसः, देवाः, असुराः, रक्षांसि पञ्चजना' इति सायणः। 'चत्वारो महर्त्विजो यजमानश्च पञ्चमः।' इति (यजु० २।२३) इत्यत्र महीधरः।

किञ्च 'ये देवा असुरेभ्यः पूर्वे पञ्चजना आसन्' जैमिन्युपनिषद्ब्राह्मण (१।४१।७) 'पञ्च वर्गा देवा उक्ताः।' 'तदद्यवाचः' (ऋ० सं० १०।५३।४) इति मन्त्रे 'शौचीकस्याग्नेरार्षम्। तस्य विश्वैर्देवैः संवादः' (नि.३।८।१) इत्यत्र दुर्गाचार्य्यः। तेन देवा एवात्र पञ्चजनाः। यद्वा निरुक्तरीत्या पञ्चजन शब्दो मनुष्यमात्रपरः। तथापि यदि सर्वेषां समो यज्ञाधिकारः स्यात्तदा यज्ञिया इति विशेषणं व्यर्थमेव स्यात्ततो 'यज्ञियाश्च मनुष्या ब्राह्मणो वैव राजन्यो वैश्यो वा ते हि यज्ञियाः।' (३।१।१।९ शत०) इति रीत्या त्रैवर्णिकः एव यज्ञियो नान्ये इति न कोऽपि दोषः। सर्वेषामपि ग्रहणे यथायोग्यमेव समेषां यज्ञजोषः। ब्राह्मणस्यार्त्विज्येन, क्षत्रियस्य रक्षया, वैश्यस्य धनेन, शूद्रनिषादयोः सेवया यज्ञियः प्रदेश इति वार्त्विज्ययाजमानभिन्नदेशादिष्वपि यज्ञियपदप्रयोगदर्शनात्।

यत्तु 'सरस्वत्याज्ञया कण्वा मिश्रदेशमुपाययौ।
म्लेच्छान् संस्कृतमाभाष्य तदा दशसहस्रकम्॥
वशीकृत्य स्वयं प्राप्तो ब्रह्मावर्त्ते महोत्तमे।
ते सर्वे तपसा देवीं तुष्टुवुस्तां सरस्वतीम्।
पञ्च वर्षान्तरे देवं प्रादुर्भूता सरस्वती।
सपत्नीकांश्च तान् म्लेच्छान् शूद्रवर्णाय चाकरोत्।
(भविष्य पुराण प्रतिसर्ग ४ खण्ड २१।१६-१७।१८)

इति पुराणवचनैर्यवनानामपि संस्कृतपाठनमार्य्यत्वनिर्माणञ्च दृश्यते" इति, तदपि न, भावानवबोधात्। तत्र हि मिश्रशब्देन यत्र चातुर्वर्ण्यं स्पष्टं नासीत्तस्य भारतीयप्रदेशविशेषस्यैव ग्रहणम्। म्लेच्छशब्देन चाव्यक्तवाचो भारतीया एव। कण्वादिभिस्तेषामेव शोधनं कृतम्। 'म्लेच्छ अव्यक्तायां वाचि' (चुरादि) अस्फुटे अपशब्दे च (भ्वादि) इति रीत्या अपशब्दभा-

षणमेव म्लेच्छत्वप्रयोजकम् । अत एव म्लेच्छा या भूमेत्यध्येयं व्याकरणमिति महाभाष्यम् । एवमेव तत्रैव —

मिश्रदेशोद्भवा म्लेच्छा कश्यपनैव शासिताः ।
संस्कृताः शूद्रवर्णेन ब्रह्मवर्णमुपागताः ॥
शिखासूत्रं समाधाय पठित्वा वेदमुत्तमम् ।
यज्ञैश्च पूजयामासुर्देवदेवं शचीपतिम् ॥ ( २०।२१।७३ )

इति रीत्याऽपि न मुहम्मदमतानुयायिनां मुसलमानपदवाच्यानामेषा कथा । तदानीं तन्मतस्याभावादेव । किन्तु कण्वशिष्या एव कण्वगमनान्तरं स्वेच्छयैव ब्राह्मणा भूत्वा यज्ञोपवीतादिकं धारितवन्तः । ब्राह्मणेषु प्रविश्य वेदांश्च पठितवन्तः । इदानीमप्यनधिकारचेष्टया केचिदेवं कुर्वन्त्येव । तावताऽपि न तेषां वैधत्वम् । तस्य दैत्यपततरेन पुराणस्यानभीष्टत्वात् । तथाहि भविष्यपुराणस्य प्रतिसर्गस्य पर्वणः ४र्थे खण्डे २० अध्याये दससहस्र-वैष्णवैः साकं यज्ञांशब्राह्मणस्य जगन्नाथपुरीगमनमुक्तम् । ब्राह्मणरूपेण जगन्नाथस्य ब्राह्मणरूपधरस्य तेन संवादः । भयानककलेर्वृत्तान्तश्रवणप्रार्थनया जगन्नाथेन तद्वर्णितम् । म्लेच्छा ब्राह्मणा भूत्वा वेदान् पठन्ति यज्ञान् कुर्वन्ति । बलिदैत्यस्य संकेतेनेन्द्रस्य तेजापहारार्थमेव तैरिन्द्रपूजनं कृतमित्यपि तत्र संकेतितम्—

'दुःखितो भगवानिन्द्रः श्वेतद्वीपमुपागतः ।
स्तुत्या मां बोधयामास देवब्राह्मणहेतवे ॥
प्रबुद्धेमां वचः प्राह शृणु देव दयानिधे ।
शूद्रसंस्कृतमन्नञ्च खादितुं न द्विजोऽर्हति ।'
तथा च शूद्रजनितैर्यज्ञैस्तृप्तिं न चाप्नुयाम् ।
काश्यपे स्वर्गते प्राप्ते मागधे राज्ञि शासति ॥
मम शत्रुर्बलिर्दैत्यः कलिपक्षमुपागतः ।
निस्तेजाश्च यथा हंस्यां तथा वै कर्तुमुद्यतः ॥' ( ७।४।७७ )

एवमेव भाषासम्बन्धेऽपि तेनोक्तम् । तदा भगवता उपायाः उक्ताः ।

इति श्रुत्वा जगन्नाथो देवराजमुवाच ह ।
भगवन्तो द्वादशादित्यागन्तुमर्हति भूतले ।

अहं लोकहितार्थाय भविष्यामि कलौ युगे ॥
प्रवीणो निपुणो मिश्रः कुशलश्च कृती सुखी ।
निष्णातः शिक्षितश्चैव सर्वज्ञः सुगतस्तथा ॥
प्रबुद्धश्च तथा बुद्ध आदित्याः क्रमशोऽभवन् ।
धाता मित्रोर्यमा शुक्रो मेघः प्रांशुर्भगस्तथा ।
विवस्वांश्च तथा पूषा सविता त्वाष्ट्र विष्णुकौ ।
कीकटे देश आगत्य ते सुरा जज्ञिरे क्रमात् ।
वेदनिन्दां पुरस्कृत्य बौद्धशास्त्रमचीकरन् ।
तेभ्यो वेदान् समादाय मुनिभ्यः प्रददुः सुराः ।
वेदनिन्दाप्रभावेण तेऽसुराः कुष्ठिनोऽभवन् ।
विष्णुदेवमुपागम्य तुष्टुवुर्विष्णुरूपिणम् ।
हरिर्योगबलेनैव तेषां कुष्ठमनाशयत् ।
तद्दोषान्नग्नभूतश्च बौद्धः स तेजसा ऽभवत् ।
बौद्धराजविनाशाय दारूपाषाणरूपवान् ।
अहं सिन्धुतटे जातो लोकमङ्गलहेतवे ।
मन्दिरं रचितं तेन (इन्द्र द्युम्नेन) तत्राहं (विष्णु) समुपागतः ।
मां विलोक्य नरः शुद्धः कलिकाले भविष्यति ।

( भविष्य पुराण ( ३।४।१०-२०-९१ ) एकविंशे अध्यायेऽपि )

तत्प्रश्नानन्तरं जगन्नाथ उवाच—

स्वर्गते काश्यपे विप्रे ते म्लेच्छा शूद्रवर्णकाः ।
यज्ञैस्तमर्चयामासुर्देवदेव शचीपतिम् ॥'

कण्वे काश्यपे वा स्वर्गते ते ऽनधिकारचेष्टां कृतवन्तः । एतेन कण्वरस्तेभ्यो यज्ञोपवीतं दत्वा वेदानध्यापयामासेत्युक्तिर्निराधारैव ।

दुःखितो भगवानिन्द्रः सबन्धुर्जगतीतले ।
वेदानाहर्तुमिच्छन्तो ब्रह्मयोनौ बभूविरे ।
जिनो नाम द्विजः कश्चित् तत्पत्नी जयिनी स्मृता ।
कश्यपाददितेरंशाज्जातौ तौ कीकटे स्थले ।

तयोः सकाशात्सञ्जाता आदित्या लोकहेतवे।
तत्रोष्य बौद्धशास्त्राढ्या चक्रुः शास्त्रार्थमुत्तमम्।
वेदान् शूद्रेभ्य आदाय विशालां प्रययुः पुरीम्॥
समाधितो मुनीन्सर्वान् समुत्थाप्य ददुः स्वयम्।
गताः सर्वे सुराः स्वर्गे ततः प्रभृतिभूतले।
म्लेच्छा बभूविरे बौद्धास्तदन्ये वेदतत्पराः।
सरस्वत्याः प्रभावेण त आर्य्या ऋषयोऽभवन्।
तैश्च देवपितृभ्यश्च हव्यकव्यं समर्पितम्।
तृप्तिमन्तः सुराश्चासंस्त आर्याणां सहस्रका।

(भ० पु० २१ अध्यायः)

स्त्रीणामधिकारो यज्ञे इत्येतदर्थं स्त्रिया अप्यधिकरणं मीमांसादर्शने। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इत्याम्नायते। तत्र पुल्लिङ्गविशेषनिर्देशात्पुंस एव यागाधिकारः। 'लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनः' (६।१।६) मीमांसादर्शने यथा 'पशुमालभेत' इति लिङ्गनिर्देशात् पुंपशुरालभ्यते न स्त्री पशुरेवमिहापि स्यादित्याशङ्क्य 'जातिं तु बादरायणोऽविशेषात्तस्मात्स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्' ८ इति श्रीबादरायण रीत्या स्वर्गकाम इति जात्यर्थमभ्युपगम्य स्त्रिया अप्यधिकार उक्तः, न पुंस एव। स्वर्गकामशब्देन स्त्रीपुंसयोरुभयोरप्यधिकारः पुल्लिङ्गस्याविवक्षितत्वात्। कुतः अविशेषात्। नहि शक्नोत्येषा विभक्तिः स्वर्गकामं लिङ्गेन विशेष्टुम्। स्वर्गे कामो यस्य तं हि लक्षयत्ययं शब्दः। तच्च लक्षणमविशिष्टं स्त्रियां पुंसि च। तस्मात्स्त्री अपि यज्ञेऽधिकृता।

यदुक्तम्-यथा पशुमालभेतेत्यत्र पुंपशुरेवालभ्यते तथात्रापि स्यादिति, तत्र जातिद्रव्ययोः लक्षणत्वेनाश्रवणात्। तत्र तु पशुत्वं यागस्य विशेषणत्वेन श्रूयते। तेन यथा पशुत्वं यागसम्बद्धं तथैव पुंस्त्वमेकत्वञ्च। सोऽयमनेकविशेषणविशिष्टो यागो विधीयते उपादेयत्वेन चोदितत्वाद्यथाश्रुत्येव कर्त्तव्यः। तत्र द्रव्यवन्तः पुमांसोऽधिक्रियन्ते न च स्त्रीणाम् द्रव्यवत्त्वं तासां क्रयविक्रयवत्वात् पित्रा विक्रीयन्ते भर्त्रा क्रीयन्ते ताः। एवं द्रव्यैः

समानयोगित्वान्न तासामधिकारः। तदर्जितमपि तत्स्वामिनामेवातो निजार्जितेनापि द्रव्येण न तासां द्रव्यवत्त्वम्।

'भार्या दासश्च पुत्रश्च निर्धनाः सर्व एव ते।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम्।'

इति स्मरणात् इति पुनरपि प्रकारान्तरेण तासामनधिकारमाशङ्क्य 'फलोत्साहाविशेषात्' १३ 'अर्थेन च समवेतत्वात् १४' इत्यादि सूत्रैस्तासामधिकारः साधितः। फलार्थित्वाद्यागाधिकारे सिद्धे यजेतेति श्रुत्या स्मृतिं संकोच्यापि तासां द्रव्यवत्तां साधयिष्यते। धर्मे चार्थे च कामे च नातिचरितव्येति दानकालिकसंवादाच्च सिद्ध्यत्येव द्रव्यवत्त्वम्। स्मृत्या तु अस्वातन्त्र्यमेवानेन प्रकारेणोच्यते। क्रयस्य धर्ममात्रत्वान्न वस्तुत्वम्। क्रयो हि उच्चनीचपण्यपणो भवति। नियतं त्विदम् दानं शतमतिरथं शोभनामशोभनां च कन्यां प्रति। तस्मादविक्रयोऽयम्। पत्नी वै परिणाय्यस्येष्टेरिति स्ववत्तामपि दर्शयति तासाम्। तत्रापि—दम्पत्योः सहाधिकाराधिकरणे 'स्वयंतोस्तु वचनादेककर्मा स्यात्' १७ इत्यादि सूत्रैः दम्पत्योः सहाधिकारः साधितः। पुनश्च 'तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात्' २४ सूत्रेण तस्या यावदुक्तमाशीर्ब्रह्मचर्यं कर्तव्यमुक्तं न सर्वं याजमानम् अतुल्यत्वात्। अतुल्या हि स्त्री पुंसा। यजमानः पुमान् विद्वांश्च। पत्नी स्त्री चाविद्या च। तेन क्रत्वर्थेषु यानि याजमानानि श्रवणानि तेषूपादेयत्वे श्रवणाद्विवक्षितं लिङ्गं तेन तेषु पत्नी न स्यात्। यानि च क्रत्वर्थानि समन्त्रकाणि तेष्वविद्यात्वात् पत्नी न स्यात्।

ननु तदेव पत्न्या अध्ययनस्य प्रयोजकं स्यादिति चेन्न पुंसास्तन्निर्वर्तकत्वेन तदप्रयोजकत्वात्। यत्क्रत्वर्थं तस्या येन केनचिन्निर्वर्तनीयत्वेनानुपपत्तेरभावात्। तस्मात्प्रतिषिद्धस्याध्ययनस्य पुनःप्रसवे प्रमाणभावान्न तत् पत्नी कुर्यात्। यास्त्वाशिषो यच्च ब्रह्मचर्यं तत्पुरुष प्रतिगुणभूतं न तदन्यतरेण कृते सिद्ध्यति न तत्रोपादेयत्वेन यजमानस्य श्रवणं तस्माल्लिङ्गमप्यविवक्षितम्। अतः आशीर्ब्रह्मचर्य्यञ्चोभयोरपि स्यात्। यच्चाहत्योच्यते 'पत्न्याज्यमवेक्षते' तदपि पत्न्या कर्तव्यम्।

पूर्वमीमांसायां (६।१।७) अपशूद्राधिकरणे 'चातुवर्ण्यमविशेषात्' २५ सूत्रेण यजेत जुहुयादित्यविशेषनिर्देशात् चातुवर्ण्याधिकारमाशङ्क्य निर्देशाद्वा

त्रयाणां स्यादग्न्याधेये ह्यसम्बन्धः। क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः' २६ सूत्रे 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः इति ब्राह्मणक्षत्रियविशांमाधानश्रुतिसद्भावाच्च द्रव्यस्य तु तदभावान्न ग्निहोत्रादिषु शूद्रोऽधिक्रियते, अग्निमत्त्वादत्र ब्राह्मणादय एव 'अग्निहोत्रं जुहुयात् स्वर्गकामः' एवमादिष्वधिक्रियन्ते। आहवनीयादयो न शूद्रस्य सन्ति अविधानात्। तेन न तत्र तदधिकार इत्यात्रेयमतेन समाधानमुक्तम्। पुनश्च सर्वमर्थिनमधिकृत्य यजेतेत्युच्यते तस्माच्छूद्रोऽप्यधिक्रियते। कामश्रुतिपरिगृहीतत्वादग्निस्त्वर्थं प्राप्त एव। वसन्ते ब्राह्मण इत्यादि श्रुतयस्तु निमित्तस्वभावा न प्रापिकाः। ब्राह्मण आदधाति वसन्ते राजन्यो ग्रीष्मे ब्राह्मणादीनां वसन्तादिभिः सम्बन्धो गम्यते। तथा चादधाति वाक्ये। शूद्रादुत्पावर्तितो भविष्यतीति बादरिमतरीत्या सर्वाधिकारः शङ्कितः।

'निमित्तार्थेन बादरिस्तस्मात्सर्वाधिकारं स्यात्' (२७) तस्यापि खण्डनम् 'अपि वाऽन्यार्थदर्शनाद्यथाश्रुति प्रतीयेत्' (२८) इति सूत्रेण कृतम्। तथाहि— वसन्ते ब्राह्मणोऽग्नीनादधीते'ति ब्राह्मणादिकर्तृकमाधानं मुक्तम्। वसन्तादिकालिकञ्च तत्। शूद्रवर्जितानामवेदमनुमगम्। एवमेवाहद्गिरं ब्राह्मणस्य ब्रह्म साम कुर्यात्, पार्थुरश्मि राजन्यस्य, रायोवाजीयं वैश्यस्य; शूद्रस्य साम नामनन्ति। यथा 'पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, अमिक्षा वैश्यस्ये'ति तथाधाने 'अष्टसु प्रक्रमेषु ब्राह्मणोऽग्निमादधीत, एकादशसु वैश्यः, एवमब्रह्मसामकमव्रतमक्रमकञ्च शूद्रस्य प्रयुक्तमपि कर्म निष्फलं स्यात्, तस्मान्न शूद्रस्य यागाधिकारः। 'निर्देशात्तु पक्षे स्यात्' २९ इति सूत्रेण य एवं विद्वानग्निमाधत्ते इति सामान्यशास्त्रेण सर्वाधिकारः आशङ्कितः। यदुक्तमव्रमसामकं शूद्रकर्मकिष्फलं तदपि 'त्रैगुण्यान्नेति चेत्' (३०) 'न काम्यत्वात्' (३१) सूत्राभ्यामनारभ्याधीतेनामीवर्त्तनताम्ना ब्रह्मसाम्ना चक्षुर्निमित्तमादध्यादित्यनियमितव्रक्रमेण मस्तु शूद्रस्येति मस्तुव्रतेन सामादिमत्त्वं तस्य संभवादस्त्येव शूद्रस्य प्यधिकारः 'संस्कारे च तत्प्रधानत्वात्' (३२) इति संस्कारस्य पुरुषप्रधानत्वात् व्रतस्याङ्गत्वात् पुरुषसामर्थ्यजननायोपयोगः। यस्य तु तेन न प्रयोजनं स तदनपेक्ष्यैव यागं निर्वर्तयिष्यति तस्मान्न शूद्रवर्जनम् इति पूर्वपक्षमुत्थाप्य 'अपि वा वेदनिर्देशादशूद्राणां

प्रतीयते ३३ सूत्रेण तदपोहनम्। नैमित्तिकेऽपि ब्राह्मणादिश्रवणे अशूद्राणां शूद्रभिन्नानां ब्रह्मक्षत्रविशामेव वैदिकेषु कर्मस्वधिकारः। वेदे त्रयाणामेव निर्देशात्। 'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यम्' इति त्रयाणामेवोपनयनेन वेदप्राप्तिः। शूद्रस्योपनयनाभावाद्वेदाभावस्ततश्चासमर्थो यष्टुं शूद्रः 'गुणार्थित्वान्नेति चेन्न' ३४ इति गुणेनाध्ययनेनार्थी शूद्रोऽनुपनीतः स्वयमेवैत्याध्येष्यते तथास्य सामर्थ्यं भविष्यतीति पूर्वपक्षं कृत्वा 'संस्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः' (३५) सूत्रेण तदपोहः।

तथाहि — विद्यायामेवैषा पुरुषश्रुतिः, उपनयनसंस्कारस्य तदर्थत्वात्। विद्यार्थमुपाध्यायस्य समीपमानयनम् नादृष्टार्थम्। नापि कटं कुड्यं वा कर्त्तुम्। दृष्टार्थेनैव सैषा पुरुषश्रुतिः आत्मनेपददर्शनात्। नयतिराचार्य्यकरणे वर्त्तते। तदर्थसम्बन्धादुपनयनमाचार्यकरणप्रयुक्तम्। वेदाध्यापनेनाचार्य्यो भवति, तस्माद्वेदाध्ययने ब्राह्मणादयः श्रुताः, शूद्रस्य न श्रुतं वेदाध्ययनम् अतोऽवेदत्वादसमर्थः शूद्रो नाधिक्रियते यज्ञे। 'विद्यानिर्देशान्नेति चेत्' (३६) इति विद्यानिर्देशात् अनुक्तामपि विद्यामध्येष्यते तस्मात्तस्याप्यधिकार इति पुनरप्याशङ्क्य 'अवैद्यत्वादभावः कर्मणि स्यात्' (३७) इति प्रतिषिद्धमस्याध्ययनम्। शूद्रेण नाध्येतव्यमिति अतोऽवैद्यः शूद्रः। अनग्नित्वादिभिरपि तदनधिकार एव सिद्ध्यति। 'ब्राह्मणो अग्नीनादधीत' इति श्रुत्या विधानं गम्यते। य ए. विद्वानिति स्तुत्या आनुमानिकं प्रत्यक्षश्रुतादुर्बलम् तस्मान्न शूद्राधिकारः।

'तथाचान्यार्थदर्शनम्' ३८ 'पद्यु वा एतत् श्मशानं यच्छूद्रः। तस्माच्छूद्रसमीपे नाध्येय'मित्यनध्ययनं शूद्रस्य दर्शयति श्रुतिः। इत्थं सूत्रभाष्यादिभि पूर्वमीमांसादर्शने पूर्वपक्षोत्तरपक्षाभ्यां शूद्रस्योपनयनवेदाध्ययननिषेधादवेदत्वादनग्नित्वादव्रतत्वादसामर्थ्यादप्रक्रमत्वाच्च भागानधिकारः स्पष्टमुक्तः।

यदुक्तमाधुनिकैर्जैमिनिकालेऽपि बादरिप्रभृतय आचार्य्याः शूद्रादीन् सर्वेषां वेदाध्ययनाग्न्याधानयज्ञानुष्ठानादिष्वधिकारं मन्यन्ते स्म" इति तत्तुच्छम्। मीमांसावृत्तान्तानवबोधात्। तथाहि —पूर्वोत्तरपक्षाभ्यां सिद्धान्तनैशद्याय मीमांसायामनेके पक्षाः परिकल्प्योच्यन्ते।

'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तम् ।
सङ्गतिश्चेति शास्त्रेऽस्मिन् पञ्चाधिकरणं स्मृतम् ॥'

इति मीमांसारीतिस्तदर्थमेव बादर्य्याद्युल्लेखः । न तदाप्तमतम्, वेदविरुद्धत्वात् । जैमिनिव्यासादिविरुद्धत्वाच्च । यथेदानीं केचित् पक्षा मासाः प्रचलन्ति तथैव तदानीमपीति कल्पनयाऽपि न दोषः ।

ब्रह्ममीमांसायामपि शूद्रस्याधिकारसम्बन्धे विचारः ।

'शूद्रस्य तदनादरश्रवणात्तदा द्रवणात्सूच्यते हि' (ब्र० सू० १।३।३४)

सूत्रे श्री शङ्करभगवत्पादैरुक्तम्—'यथा मनुष्याधिकारनियमं अपोद्य देवादीनामपि विद्यास्वधिकार उक्तस्तथैव द्विजात्यधिकारनियमापवादेन शूद्रस्याप्यधिकारः स्यात् इत्याशङ्कां निवर्तयितुमिदमधिकरणमारभ्यते । तत्रार्थित्वसामर्थ्ययोः सद्भावात् 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः ( तै० सं० ७।१।१।६ ) इतिवद् विद्यायां निषेधाश्रवणात् विद्यायां शूद्रस्याप्यधिकारः स्यात् । कर्मस्वनधिकारकारणं शूद्रस्यानग्नित्वं न तद्विद्यायामधिकारस्यापवादकलिङ्गम् । आहवनीयादीनां विद्यास्वनुपयोगात् । संवर्गविद्यायां हि जानश्रुतेः पौत्रायणस्य शुश्रूषोः 'अह हारेत्वाशूद्र तवैव सह गोभिरस्तु' ( छा० ४।२।३ ) शूद्रशब्देन निर्देशात् लिङ्गबलेनापि शूद्राधिकारः । शूद्रयोनिप्रभवाणां विदुरप्रभृतीनां विद्याविनयसम्पन्नता स्मरणाच्च तदधिकारः सिद्ध्यति, इति पूर्वपक्षं कृत्वा सिद्धान्ते विद्यायामपि शूद्रानधिकारः उक्तः । अधीतवेदस्यैव विद्यायामधिकारः संभवति । शूद्रस्य चोपनयनाभावान्न वेदाध्ययनं संभवति तस्मान्न विद्यायां तदधिकारः । यत्त्वर्थित्वं न तदसति सामर्थ्येऽधिकारकारणं भवति । सामर्थ्यञ्च न लौकिकं केवलमधिकारकारणं भवति । शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात् । शास्त्रीयस्य सामर्थ्यस्याध्ययननिराकरणेन निराकृतत्वान्नाधिकारः सिद्ध्यति ।

यच्चेदं, शूद्रो यज्ञेऽनवक्लृप्त' इति तन्न्याय पूर्वकत्वाद् विद्यायामप्यनवक्लृप्तत्वं द्योतयति न्यायस्य साधारणत्वात् ।

यदुक्तम् 'संवर्गविद्यायां शूद्रशब्दश्रवणलिङ्गात् तत्राधिकारः स्या' दिति, तदपि न न्यायोक्तेऽर्थे हि लिङ्गद्योतकं भवति न चात्र न्यायोऽस्ति । न स्वतन्त्रं लिङ्गमेवाधिकारकारणं भवति अर्थवादस्थत्वात् । अर्थित्वाच्च

वेदं लिङ्गं शूद्रं क्वचिदपि विद्यास्वधिकर्तुमुत्सहते । विधिनात्वेकवाक्यत्वादतत्परस्यार्थवादस्य विरुद्धेऽर्थे प्रामाण्यासंभवात् । ननु किं शूद्रपदं प्रमत्तगीतम् ? न च तद्युक्तम्, साम्प्रदायिकत्वस्य तुल्यत्वादिति चेन्न हंसवाक्यादनादरश्रवणात्, शुचाद्रवणात् तत्सूचकत्वेन शूद्रपदस्य सार्थकत्वात् । तदाह भाष्यकारः तथाहि-'कम्बर एनत्सन्त सयुग्वानमिव रैक्वमात्थ' इत्यस्माद्धसवाक्यादात्मनोऽनादरं श्रुतवतो जानश्रुतेः शुक् (शोकः) उत्पेदे । तामृषो रैक्वः शूद्रशब्देन सूचयाम्बभूवात्मनः परोक्षज्ञताख्यापनायेति गम्यते जातिशूद्रस्यानधिकारात्। कथं शद्रशशब्देन शुगुत्पन्नेति सूच्यते इति उच्यते । तदाद्रवणात् शुचमभिदुद्राव, शुचा अभिदुद्रुवे, शुचा वा रैक्वमभिदुद्रावेति शूद्रः इत्येवार्थस्य संभवाद्रूढ्यर्थस्य चासंभवात् ।

छान्दोग्येऽयमर्थः स्पष्टः । 'जानश्रुतिः पौत्रायणो बहुदायी श्रद्धादेयो बहुपाक्यः प्रियातिथिर्बभूव ।' अस्य दानशौण्डस्यदानादिगुणतुष्टा देवर्षयः हंसरूपमास्थाय तदनुग्रहाय तस्य निदाघसमये रात्रौ हर्म्यतलस्थस्योपरि मालामाबद्ध्य जग्मुः । तेषामग्रेसरं हंसं सम्बोध्य पृष्ठतः पतन्नन्यतमः साद्भुतमभ्युवाच 'भो 'भो भल्लाक्ष जानश्रुतेरस्य द्युलोक आततं ज्योतिस्तन्मा प्रसाङ्क्षीर्मात्वाधाक्षीदिति । तमेवमुक्तवन्तमग्रेसरः प्रत्युवाच कम्बरकम् । उ अरे वराकमेनं सयुग्वानं रैक्वमिवात्थ । रैक्वस्य हि ज्योतिरसह्यं नत्वेतस्य प्राणमात्रस्य । तस्य हि भगवतः पुण्यज्ञानसंभारभृतस्य रैक्वस्य ब्रह्मविदो धर्मस्य त्रैलोक्योदरवर्ति प्राणभृन्मात्रधर्मोऽन्तर्भवति ( तद्यथाकृताय विजिताधरेयाः संयन्ति ) अथैष हंसवचनादात्मनो निकर्षमुत्कर्षकाष्ठाञ्च रैक्वस्योपश्रुत्य जानश्रुतिः शोकसंविग्नमानसः प्रातर्यन्तारमाहूय रैक्वमन्वेष्टुमादिदेश । स च तत्र तत्रान्विष्वन् क्वचिदतिविविक्ते शकटस्याधस्तात् पामानं कण्डूयमानं तमद्राक्षीत् । तं दृष्ट्वा प्रतिभावान् सविनयमप्राक्षीत् त्वमसि भगवन् सयुग्वारैक्वेति । तस्य च भावमनुमतिं तैस्तैरिङ्गितैर्गार्हस्थ्येच्छाद्योन्नीय राज्ञे निवेदयामास । राजतं निशम्य गवां षट्शतानि निष्कं हारमश्वतरीरथं चादाय सत्वरं रैक्वं प्रतिचक्रमे । गत्वा तत्सर्वं समर्प्य भगवन् मामनुशाधीति प्राह—

तमेवं वादिनं रैक्व उवाच 'अहहारेत्वा शूद्र तवैव सह गोभिरस्तु' अह इति निपातः, साटोपमामन्त्रणे। हारेण युक्ता इत्वा गन्त्री रथो हारेत्वा गोभिः सह तवैवास्तु। किमेतावन्मात्रेण धनेन गार्हस्थ्यानुपयोगिनेति तद्भावः। राज्ञा पश्चात् कन्या सहित बहुधनमानीय दत्तम्। तदा स तस्मै संवर्गविद्यामुक्तवान्। प्रकृते च शूद्रशब्देनात्मनः परोक्षज्ञताचिख्यापयिषया शुचं सूचयामास। यद्यपि 'योगाद्रूढिर्बलीयसी' तथापि प्रकृते जातिशूद्रस्याप्रसङ्गात् अवयवार्थस्य च सम्भवाद्यौगिक एवार्थो ग्राह्यः। उत्तरत्र जानश्रुतेः क्षत्रियत्वावगतेश्च नात्र जाति शूद्र परः शूद्र शब्दः इति 'क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्' ब्र. सूत्र ३२ उत्तरत्र चैत्ररथेनाभिप्रतारिणा क्षत्रियेण समानाभिहारात् क्षत्रियत्वं ज्ञायते।

'अथ ह शौनकञ्च कापेयमभिप्रतारिणं च काक्षसेनिञ्च परिविषयमाणौ ब्रह्मचारी बिभिक्षे' (छा० ४।३५) अभिप्रतारिणश्च चैत्ररथित्वं कापेययोगादवगम्यते।

'एतेन वैचित्ररथं कापेया अयाजयन्' (ताण्ड्य ब्राह्मण २०।१२।५) इति श्रुत्वा चित्ररथस्य कापेययोगोऽपि गम्यते। समानान्वयानाञ्च प्रायेण समानान्वया याजका भवन्ति। 'तस्य चैत्ररथिर्नामैकः क्षत्रपतिरजायत' इति च क्षत्रपतित्वावगमात् क्षत्रियत्वं तस्यावगम्यते। तेनाभिप्रतारिणः क्षत्रियत्वं ज्ञायते। तेन सह समानायां विद्यायां सकीर्तनाज्जानश्रुतेरपि क्षत्रियत्वं सिद्ध्यति। ब्रह्मचारिभिक्षयाऽपि क्षत्रियत्वमस्य ज्ञायते। नहि जातु ब्रह्मचारी शूद्रात् भिक्षते।

क्षत्त्रेषणाद्यैश्वर्ययोगाच्च जानश्रुतेः क्षत्रियत्वं ज्ञायते। 'संस्कारपरामर्शात् तदभावाभिलापाच्च' इति ३६ ब्रह्मसूत्रेणापि शूद्रस्य विद्यानधिकार उक्तः। तथाहि-विद्याप्रदेशेषु उपनयनादयः संस्काराः परामृश्यन्ते। 'ते ह भगवन्तं पिप्पलादमुपसन्नाः' (प्र. उ. १।१) 'तान् हानुपनीयैव' (छा० ५।११।७) इत्येवमादिषूपनयमपूर्वक एव विद्योपदेशः श्रूयते। शूद्रस्य च संस्काराभावोऽभिलप्यते। 'शूद्रश्चतुर्थो वर्ण एक जातिः' मनु १०।१८४ इत्येकजातिस्मरणात्। 'न शूद्रे पातकं किञ्चित् न च संस्कारमर्हति' (यजु० १०।१२) इति संस्कारनिषेधस्मरणाच्च। 'तद्भावनिर्धारणे च प्रवृत्तेः' ३७

सत्यवचनेन शूद्रत्वाभावे निर्धारिते जाबालमुपनेतुमनुशासितुञ्च गौतमः प्रववृते। 'नैतदब्राह्मणो विवक्तुमर्हति। समिधं सोम्याहर। उपत्वानेष्ये न सत्यादगाः।' (छा० ४।४।५) इति श्रुतिलिङ्गात्। तस्मादपि शूद्रनधिकारः सिध्यति। 'श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च' ब्र० ८ इत्यत्रापि वेदाध्ययनप्रतिषेधात्। तदर्थज्ञानानुष्ठानयोर्निषेधाच्च शूद्रस्य विद्यायामनधिकार उक्तः अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम् 'पद्य हवा एतत् श्मशानम् यच्छूद्रः। तस्माच्छूद्रसमीपे नाध्येतव्यमित्यध्ययननिषेधः वेदोच्चारणे जिह्वाच्छेदः, धारणे शरीरभेदः इति।

एतेनार्थात् ज्ञानतुष्ठानयोर्निषेधः। 'न शूद्राय मतिं दद्यात्' द्विजातीनामध्ययनमिज्यादानेत्यादि वचनैश्च वेदाध्ययनाद्यधिकाराभावाद्विद्यानधिकारः स्पष्ट एव। यदि तु कर्मभिर्गुणैश्च ब्राह्मण्यादिकमिष्टं स्यान्न जन्मना तदा वेदाध्ययनतदर्थज्ञानानुष्ठानादिकं कथं निषिध्येत? कर्मणा तत्त्वे तन्निषेधे ज्ञानकर्मानुपपत्तिस्तदनुपपत्तौ च ब्राह्मण्याद्यनुपपत्तिस्तदनुपपत्तौ च कर्मज्ञानानुपत्तिरिति दुरुद्धरो दोषः स्यात्तस्मात् जन्मनैव ब्राह्मण्यादिकम्, तन्मूलकएवाधिकारभेदः। क्वचित्संदेहे सत्यवदनादिना ब्राह्मणादिस्वभावज्ञानेन तन्निर्धारणे। विहितकर्मरूपं सत्यवदनं तु शूद्रस्यापि वभागन्तु ब्राह्मणस्यैवेति न दोषः।

विदुरधर्मव्याधप्रभृतीनां तु पूर्वसंस्कारविशेषादेव ज्ञानोत्पत्तिः। अन्येषामपि जिज्ञासूनां 'श्रावयेच्चतुरोवर्णान्' इति रीत्या इतिहासपुराणश्रवणे चातुर्वर्ण्यस्याधिकारस्मरणात्। पुराणादिश्रवणेन यथायोग्यं धर्मब्रह्मज्ञानं संभवत्येव। वेदपूर्वकस्तु वाधिकारस्तेषां श्रुतिस्मृतिन्यायविरोधात् इत्योम्।

परमहंसपरिव्राजकाचार्यवदरिकाश्रमज्योतिष्पीठशङ्कराचार्य १०८ स्वामी श्रीब्रह्मानन्दसरस्वतीभगवत्पादशिष्यानन्तश्रीस्वामी हरिहरानन्दसरस्वती ( श्रीकरपात्रस्वामि ) महाराजकृतौ चातुर्वर्ण्यसंस्कृतिविमर्शे प्रथमो भागः

समाप्तः

— :०: —

# निवेदनम्

महतः प्रमोदस्य स्थानमिदं यत् 'चातुर्वर्ण्यसंस्कृतिविमर्शस्य' अयं द्वितीयो भागः प्रकाशतामुपगतः। अत्र भागे १ जातिभेदविमर्शः, २ जातिलक्षणविमर्शः, ३ पुराणप्रामाण्यविमर्शः ४ इतिहासविमर्शः ५ आर्याभियानम् ६ सृष्टेर्मूलस्थानम् ७ राज्योत्पत्तिविमर्शश्चेति सप्त प्रकरणानि सन्ति। एषु प्रकरणेषु भारतीयविचारकाणां पाश्चात्यानां च मतान्युपक्षिप्य विवेचितानि सन्ति।

धर्मो दर्शनं भाषा कलेतिहासश्च संस्कृतेरभिव्यक्तिस्थानानि। एभिरेव कस्यापि देशस्य संस्कृतेः परिज्ञानं भवति। भारतीया संस्कृतिः वेदमुपजीव्य वर्तते। तत्र वैदिको धर्मः, दर्शनं, भाषा, कला, इतिहासश्च सर्वाभ्यः संस्कृतिभ्यो विलक्षण एव दृष्टिपथमधिरोहति। इयं संस्कृतिः 'चातुर्वर्ण्य-संस्कृति' पदेन व्यपदिश्यते। इयमेव भारतीया संस्कृतिः।

अनेके आधुनिकाः भारतीयसंस्कृतिसम्बन्धे विभिन्नानि मतानि प्रकाशयन्ति। प्राचीनां वर्णव्यवस्थां विनाश्य नूतनसंस्कृतिनिर्माणाय यतन्ते च। ते च वर्णव्यवस्थां अवैदिकीं साधयन्ति। अनेके वेदार्थमन्यथा-कृत्य कर्मणा वर्णव्यवस्थां साधयन्ति। अपरे वर्णव्यवस्थां राष्ट्रविघातिनीं स्वीकुर्वन्ति।

यद्यपि पाश्चात्यैः स्पष्टं स्वीक्रियते यत् वर्णव्यवस्थयैव भारतीया संस्कृतिर्विलयं न गता तथापि साम्यसंघवादिनः इमां स्थितिं देशस्य दौर्भाग्यं कथयन्ति, नवीनसंस्कृतिनिर्माणे बाधिकां च स्वीकुर्वन्ति। समग्र-क्रान्त्या देशे समतास्थापनव्याजेन मूढजनान् आत्मनाशाय प्रोत्साहयन्ति। धर्मपरिवर्तननिषेधविधिं जातिवादस्य, गोवधादिनिषेधं सम्प्रदायवादस्य रक्षकं मन्यन्ते। अस्यां स्थितौ भारतीय-राजनीतेः रक्षणं कथं भवेत् इति तु अन्या कथा किन्तु वेदेन स्वमतं ये स्थापयन्ति तेषां मुखमुद्रणाय यः प्रयासोऽ-पेक्षितः स एव चातुर्वर्ण्यसंस्कृतिविमर्शरूपेण परिणतः।

अत्र यद्यपि संस्कृतेः पञ्चस्वप्यङ्गेषु पृथक् पृथक् विचारा न कृताः तथापि आक्षेपसमाधानव्याजेन वर्णव्यवस्थाया अनादित्वम्, कर्मणा वर्ण-व्यवस्थायाः निरासः, वेदविहितस्य धर्मत्वम्, वैदिकदर्शनस्यैव दर्शनत्वम्, संस्कृतायाः तत्प्रसूतभाषाणां च भाषात्वं, भारतस्यैव सृष्टेरादिस्थानत्वम्, मोहञ्जोदड़ोप्रभृतिस्थानस्थकलानां भारतीयत्वं वैदिकत्वम्, भारतीयेति-हसस्य रूपम्, राज्यस्योत्पत्तीतिहासमुखेन भारतीयराजनीतेश्च स्वरूपम् प्रकटीकृतं वर्तते ।

अयं ग्रन्थः भारतीयसंस्कृतेः जीवतुभूतः प्रामाणिकश्चेति । अत्र नामूलं किमपि जल्पितम् नचानपेक्षितम् किञ्चिदिति विद्वांसो जानन्ति ।

अस्य भागद्वयात्मकस्य ग्रन्थस्य निर्मातारः भारतीयसंस्कृतेः रहस्यज्ञाः तपःपूतधिषणैधितप्रज्ञाः सर्वतन्त्रस्वतन्त्राः श्रीकरपात्रस्वामीत्याख्यया ख्यातिमुपगताः अनन्तश्रीविभूषिताः स्वामिश्रीहरिहरानन्दसरस्वती महाराजाः सन्ति । अस्य नानापुराणनिगमागमसम्मतत्त्वेन परमं प्रामाण्यम् ।

अस्य भागस्य प्रकाशने महान्तो विघ्ना उपस्थिताः मुद्रणालयानामसह-योगः तत्र महान् हेतुः । अत्र ममैव दौर्भाग्यं यत् चिरमस्य मुद्रणं प्रतीक्षमाणाः स्वामिचरणा अपि उद्विग्ना जाताः । अन्ते गौरीशंकरमुद्रणालयेन मुद्रणं सम्पाद्य प्रकाशनकर्मणि यः सहयोगः कृतस्तेन केचिद् दुःखिता भवन्तु नाम किन्तु सुखन्तु अनेकेषां भविष्यतीति मन्ये

अस्य ग्रन्थस्य मुद्रणकर्मणि सहयोगिनः श्रीमार्कण्डेयब्रह्मचारिणः श्रीवासुदेवशास्त्रिणः सादरं स्मरणीयाः ।

अन्ते भवानीविश्वनाथयोश्चरणे पुष्परूपेणोः पायनीकृत्य नितरां सन्तोषमनुभवामि ।

अनन्तचर्तुदशी
२०३६

रामगोविन्दशुक्लस्य

श्रीहरिः

# विषय-सूची

श्रीहरिः

# चातुर्वर्ण्यसंस्कृतिविमर्शः

## जातिभेदविमर्शः

'ब्राह्मणोऽस्य मुखमासीत्' कृष्णयजुर्वेदतैत्तरीयसंहितायां 'प्रजापतिरकामयत, प्रजायेय, स मुखतस्त्रिवृतं निरमिमीत, ब्राह्मणान्मुखात् क्षत्रियान्बाहुभ्यां वैश्यान् उरसः। बाहुभ्यां पञ्चदश निरमिमीत राजन्यो मनुष्याणाम्, मध्यतः सप्तदशं निरमिमीत वैश्यो मनुष्याणम्, यत्र एकविंशं निरमिमीत शूद्रो मनुष्याणाम्'' ।

'ब्रह्म वा इदमग्र आसीत्, एकमेव। तदेकं सन्न व्यभवत्। तच्छ्रेयो रूपमत्यसृजत क्षत्रम् ··· ···· स नैव व्यभवत्'' ( बृ० १।४ ब्रा० ११।१२ )

'य इह रमणीयाचरणाः'। ( छा० ५।१०।७ )

नमस्तेऽस्तु ब्रह्मन्। ( कठोप० १।१।९ )

'सर्वस्यास्य तु सर्गस्य गुह्यर्थं स महाद्युतिः।<br>
मुखबाहूरुपज्जानां पृथक् कर्माण्यकारयत्॥<br>
अध्यापनमध्ययनं यजनं याजनन्तथा।<br>
दानं प्रतिग्रहश्चैव ब्राह्मणानामकल्पयत्॥<br>
प्रजानां रक्षणं दानमिज्याध्ययनमेव च।<br>
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समादिशत्॥<br>
पशूनां रक्षणं दानमिज्याध्ययनमेव च।<br>
वणिक् पथम् कुसीदञ्च वैश्यस्य कृषिमेव च॥<br>
एकमेव तु शूदस्य प्रभुः कर्म समादिशत्।<br>
सर्वेषामेव वर्णानां शुश्रूषामनसूयया॥'

( मनु १।८७-९१ )

'मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह।<br>
चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक्॥

( श्रीमद्भा० ११।५।२ )

इत्यादिभिर्मन्त्रब्राह्मणैर्मन्वादिधर्मशास्त्रैः पुराणैश्च जन्मनैव ब्राह्मणादयो वर्णा विज्ञायन्ते। नच तत्र रूपककल्पना युक्ता, वाच्यार्थबाधे प्रमाणाभावात्। मन्त्रेष्विव ब्राह्मणेषु 'निरमिमीत, 'मुखबाहूरुपज्जानाम्' 'जज्ञिरे', इति उत्पत्त्यर्थकजनिर्निर्मितिशब्दप्रयोगात्।

'चातुर्वर्ण्यं मया सृष्टम्'···· ···· ···· ····गीता

'मुखतो ब्राह्मणा जाता उरसः क्षत्रियास्तथा।
ऊरुभ्यां जज्ञिरे वैश्याः पद्भ्यां शूद्रा इति श्रुतिः॥'

( वा० रा० आ० का० १४।३० )

'जन्मनैव महाभागो ब्राह्मणो नाम जायते।
नमस्यः सर्वभूतानामतिथिः···· ···· ···· ···· ····॥

( महाभारते अनु० पर्व )

'ब्राह्मण्यां ब्राह्मणाज्जातः ब्राह्मणः स्यान्न संशयः।
क्षत्रियायां तथैव स्यात् वैश्यायाञ्चैवमेव हि॥

( अनु० ४७।२८ )

भारते सेनशसकमिश्नरपदे स्थितेन डा० हटनमहोदयेन १९१३ ईस्वीये प्रोक्तम् 'मुसलमाना यद्यपि जातिभेदं न मन्यन्ते तथापि व्यवहारे तत्रापि जातिभेदोऽस्त्येव। सैयद, पठान, मुगल, तुर्क, शेख, जुलाहा, गद्दी, मुरासी, सिया, सुन्नी प्रभृतयः भेदाः। विहारशासकैः छात्रवृत्तिदानार्थ-मनुन्नतवर्गीया मुसलमानजातयो निर्धारिताः "मोमिन, रायुन, मंसूरी, क्यूरेसी, हप्पू, इद्रोन, इब्राहिमी, इस्माइली, हलालमीन, भंगी, भांट, धोबी, रंगरेज, रजाकीन सेन, डफाली, नट, चूरी, धरा, नालवंद, मल्लाह, काफनी मुसलमानिया माली, तेली" इत्यादयः। यथा वृक्षे आम्रपनसादिभेदेन बहुविधा भेदास्तथैव आम्रा अपि बहुविधाः। तथैव मनुष्येष्वपि अनेके भेदाः संगता एव। क्रिश्चियनेष्वपि प्रोटेस्टेण्ट, कैथोलिक, प्रेसविटो, सूयनवैपटिस्ट, मेथोलिस्ट प्रभृतिभेदाः सन्ति। 'रीजन साइन्स एण्ड शास्त्राज पुस्तकं दृष्ट्वैव याकमहाशयेन १९२३ ईस्वीये उक्तं 'नव विज्ञानं परस्परविरुद्धयोर्द्वयोर्मन्त-व्ययोर्मध्ये स्थितम्, सर्वाण्यपि वस्तूनि परस्परात्यन्तविरुद्धयोरंशयोः स्थितानि।' मायया सृष्टिरिति बहोः कालात् पूर्वं शास्त्रैरभिहितम्। युग-पद्विपरीतत्वं मायायाः एकं लक्षणमितिरीत्या परस्परवैपरीत्यमेव माया-त्वम्। तस्मात् शास्त्रमेव मुख्यं प्रमाणम्।

'आप्तोपदेशः प्रत्यक्षम् अनुमानञ्च युक्तिकम् ॥
चतुर्विधा परीक्षा स्यात् शेषं त्रयमनिश्चितम् ॥'

जोन्स महाशयः स्वीचकारैतद् । यत् वयं सत्यान्वेषाः । नवविज्ञाने सर्वाणि वस्तूनि सम्भावनाश्रितान्यनिश्चितान्येव ।

धर्मफलभेदेनैव जातिभेदप्रथा संगच्छते। शास्त्रानुसारेण धर्मवशादेव जीवो नानाविधगुल्मलतावृक्षपशुपक्ष्यादियोनिषु भ्राम्यति। अनेके जनाः चौर्यं कृत्वा विप्रान् हत्वा च शासकान् न्यायालयञ्च वञ्चयन्ति तथापि तेषां फलभोगार्थमवश्यमेव जन्मान्तरम् अङ्गीकर्तव्यम्। १९२३ ई० हंगरीदेशे काचिद्बालिका मृता भूत्वाऽपि दैवशात् पुनर्जीवनं प्राप। परन्तु मातृभाषां विस्मृत्य स्पेनिश भाषया व्यवहारमारब्धवती। तदानीं तया स्वीयं जन्मान्तरवृत्तान्तं राजधान्यां मेड्रिडनगरे आसीदित्युक्तम्। आर्टार संज्ञकेन आंगलेन १९१९ ई० इरावत्या नद्या परस्तात् जीर्णमन्दिरमस्ति इत्युक्तम्। तच्च तेन नास्मिन् जन्मनि विलोकितम् ।

इन्द्रप्रस्थे कयाचिद्बालिकया मथुरायां स्वीयं पूर्वगृहमस्तीत्युक्तम्। जनैः सार्द्धं तत्र गत्वा गृहे वस्तूनि पत्यादयश्च स्वजनाश्च प्रत्यभिज्ञातानि। आधुनिके सभ्ये जगत्यपि साम्यवादि राष्ट्रे केचिद्विविधसाधनसम्पन्नाः केचिच्चाकिञ्चना एव। कोऽयं जीवः कुतः किमर्थमागतः? पुनर्जन्म व्यवस्थाऽस्ति न वा? संसारवैचित्र्यं किं मूलकम्? इत्यत्र विज्ञानं मौनमेवास्ते ।

यदुक्तम्—"जातिभेदेन मनुष्येषु घृणोत्पाद्यते, उच्चनीचभावना वर्धते, एकता नश्यति, गुणानामनादरो वर्धते, चरित्रापेक्षया जन्ममाहात्म्यं वर्धते", इति, तत्तुच्छमेव, यतो यद्यपि सर्वमेतन्मिथ्यैव तथापि यदि तत्सत्यं तदा निष्टमपि किं वारयितुं शक्यते? जरामृत्युप्रभृतयो भावा अनिष्टा अपि किं वारयितुं शक्यन्ते? वस्तुस्तु सत्यं न कदापि अनिष्टकरं भवति। मनुष्यबुद्ध्यैव सत्येऽहितकरत्वं विज्ञायते, सत्येनैव रविचन्द्रादयस्तिष्ठन्ति। ये स्वयं घृणा परायणाः सन्ति परिवारनियोजनगर्भपातादिभिः गर्भस्थनिःसहायशिशूनुत्पीडयन्ति, नवागन्तुकानामसत्त्वं ये कामयन्ते ते किं घृणां न कुर्वन्ति?

श्वेतकायकृष्णकायादि प्रभेदोऽद्यापि विद्यत एव। अभेदवादिप्रदेशे श्वेतकाया आङ्गलाः कृष्णाङ्गान् निग्रोप्रभृतीन् द्विषन्ति। घृणा दृष्ट्या च पश्यन्ति। यावत्पर्यन्तं देवभावादप्युत्कर्षभावं नाप्नुवन्ति तावत् घृणासमाप्तिर्न भवत्येव ।

साम्यवादवर्गवादादिषु वर्गभेद-वर्गसंघर्ष-वर्गविद्वेष-वर्गविध्वंसभावना एव पोष्यन्ते। हिरोशिमादिनगरेषु परमाणुबम्बनिक्षेपणेन यत्र निरीहाः निःसहायाश्च स्त्रीपुरुषवृद्धबालका रुग्णाश्च निरपराधा विनाश्यन्ते तत्रापि घृणापलापः कथमिव भवति ? जातिभेदेषु तु घृणारागद्वेषाद्यपनयनाय व्यवस्था क्रियते । पाटच्चरलुण्ठाकादयो विशिष्टचिह्नाङ्किताः क्रियन्ते। पापादिभ्यो घृणैव योग्या। यः पापेभ्यो घृणां न करोति स पापासक्तो भवत्येव। एवमेव-निषिद्धसुरामांसादिभ्यो घृणामकुर्वन् न कश्चित् तेभ्यो विरज्यते। लाम्पट्ये घृणामन्तरा सती धर्मे कथं व्यवस्थितिः स्यात् ? सतीत्वसमादरे लाम्पट्याद् घृणाऽनिवार्यैव भवति। भगवद्विरोधिभ्यो भगवद्भक्तानां घृणा युक्तैव। 'शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः'—योगसूत्रम् मृज्जलाभ्यां तत्तदङ्गक्षालन-स्नानैः रागद्वेषाद्यान्तरमलनिराकरणैश्च स्वाङ्गेष्वपि मलमूत्रकफादिक्षरण-शीलत्वाज्जुगुप्सा घृणा भवति। तेनान्यैरसंसर्गो जायते। तेन परस्त्री परपुरुषादिसङ्गे घृणा सुतरां भविष्यति। ततो मनसः कामादिभिरनुपघातः सेत्स्यति। तथापि देहस्थानां जीवानां भगवदंशत्वात् न तेषु घृणा भवति। तत एवोक्तम्, "प्रणमेद्दण्डवद्भूमौ आश्वचाण्डालगोखरम्"। नहि जातिभेदमात्रं घृणाकारणं सम्भवति। नहि ब्राह्मणक्षत्रियजातिभेदमात्रात् परस्परं घृणा-भवति। उत्कर्षापकर्षबुद्धिस्तु पदमर्यादा मान्यता यशोगुणक्षमता चरित्रादि-भिरपि भवति। पदेन पितृव्योऽल्पवयस्कोऽपि भ्रातुस्पुत्रेणाधिकवयस्केनापि पूज्यो भवति। गुरुरल्पवयस्कोऽपि शिष्यैः पूजनीयो भवति। न च तावता-तदपनोदनं सम्भवति। व्यवहारदशायां ज्ञानिभिरपि मिथ्या भूतमपि जगद्-भेदादिकमुररीकरणीयमेव। तस्मादन्यायेन परापकर्षभावना घृणा वाऽपराधः। उत्कर्षापकर्षभावेष्वपि घृणा न भवत्येव। अतएव राजमन्त्रि-राष्ट्रपति-राज्यपाल-मण्डलाधीश्वरादिष्वपि उत्कर्षापकर्षसत्त्वेऽपि न घृणा तत्र भवति, प्रत्युत अद्य प्रजातंत्रवादे प्रजैव राजराजेश्वरी सम्पन्ना। बाह्ये जगति प्रति-वस्तु वैलक्षण्यं भेदश्च दृश्यते तथापि आत्मदृष्ट्या सर्वत्राभेद एवास्ते।

'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥'

(भगवद्गीता)

१९१८ ईस्वीये सोवियटरूसप्रदेशे राजानो राजपुत्रांश्च तत्रत्या निजघ्नुः। तत्र जातिभेदोऽपि समापितः। तथापि घृणा नापगता, रूपान्तरेण सा विरूढिमुपगता। सर्वस्यैकाकारतापत्तावपि घृणाराज्यमेव सर्वत्र दृश्यते। चीनादिप्रदेशेष्वपि इयमेव कथा। तत एव केनापि उक्तम् 'भारतं बहिर्विभक्तमपि अन्तः संघटितमेव। विश्वञ्च बहिरेकरूपमपि विभक्तमेवान्ततः खर्बूजं त्रपुषं च तथा।

'भारतञ्च बहिर्भक्तम् अभिन्नं समदर्शनात्।
अभिन्नं मीयते, विश्वं भेददृष्ट्या तु जर्जरम्॥'

तस्मात् समाजरक्षणार्थं भगवत्सृष्टः जातिभेदः समादरणीय एव। अन्यथाऽऽहारविहारस्वातन्त्र्याय जातिभेदापलापे कामपारतन्त्र्यमेव सर्वथा-विजयिष्यते। औपस्थ्यजैह्व्यकार्पण्यात् गृहपालायते जनः। अद्य तेनैव— मातृषु, भ्रातृभगिन्यादिषु—सियासुन्नीप्रभृतिभेदभिन्नेषु मुस्लिमेषु, प्रोटेस्टेट कैथोलिकभेदभिन्नेषु ईसाईसमाजेषु, हीनयानमहायानादिभेदभिन्नेषु बौद्धसमाजेष्वपि घृणासाम्राज्यमेव दृश्यते। आहारविहारैक्यं वस्तुतो मिथ्याभूतमेव। औपस्थ्यजैह्वपरायणा जना स्वविरोधिनो विषयापहारिणो द्विषन्त्येव। सामञ्जस्यं, सौमनस्यं च तेषु स्वप्नेष्वपि न सुलभम्। अहङ्कारविमूढात्मा जनो भगवन्तं तदीयव्यवस्थाञ्च सर्वतोभावेन द्वेष्ट्येव। वस्तुतस्तु मिश्रकर्मबलादेव चाण्डालोऽपि भगवद्भक्तो भवति, ब्राह्मणोऽपि भगवद्भक्तिहीनो भवति।

'अकृतज्ञमनार्यञ्च दीर्घरोषमनार्जवम्।
चतुरो विद्धि चाण्डालान् जात्या भवति पञ्चमः॥' गारुडे।

इति अनेकधाऽनेके जनाश्चाण्डालत्वेन व्यवहार्या भवन्ति। जन्म, मृत्यु, रजोदर्शन, मलत्यागादिभिरस्पृश्यता भवति। पापाचरणादिवत् पापयोनेरप्य-स्पृश्यता भवति, पापकर्मभिरेव पापयोनिषु जन्मानि भवन्ति। कर्मणां वैषम्यादेव मनुष्येषु वैषम्यं जायते। पापकर्मभिरेव चाण्डालादियोनिषु जन्म भवति। तदुपलभ्यापि यो अहङ्कारेणैव जनः स्वोत्कर्षमन्यस्यापकर्षं मनुते स ततोऽप्यधोगतिं प्राप्नोति। भगवद्भक्त्या यद्यपि पापनिवृत्तौ श्वपचस्यापि पावनत्वं भवति।

'स कथं श्वपचो यस्तु भगवद्भक्तिमानसः।
वैष्णवो वर्णबाह्योऽपि पुनाति भुवनत्रयम् ॥'

'विप्राद् द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखात् श्वपचं वरिष्ठम्।
मन्ये तदर्पितमनोवचनेहितार्थप्राणं पुनाति सकुलं नतु भूरिमानः ॥'
अहो वत श्वपचोतो गरीयान् यज्जिह्वाग्रे वर्तते नाम तुभ्यम्। भाग० ७।९।१०
तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृणन्ति ये ते ॥' भाग० ३।३३

इत्यादिभिर्भगवद्भक्तस्य श्वपचस्यापि पावनत्वं, शुद्धत्वञ्चोक्तम्, तथापि यावज्जीवनं व्यवहारदशायां चाण्डालयोनिजन्मत्वादस्पृश्यत्वादिकं तिष्ठत्येव। भगवद्दृष्ट्या तु सर्वथा शुद्धोऽपि स्वदृष्ट्या सः मर्यादां पालयति। उत्सृष्टवाणवत् जन्मना वर्णबाह्य एव भवति।

'यः स्वाचारपरिभ्रष्टो साङ्गवेदान्तगोऽपि चेत्।
स एव पतितो ज्ञेयः सर्वकर्मबहिष्कृतः ॥
हरिभक्तिपरो वापि हरिध्यानपरोऽपि वा।
भ्रष्टो यस्तु शुभाचारात् पतितः सोऽभिधीयते ॥

अमेरिका स्पेन प्रभृतिदेशेष्वपि श्वेतजातीयाः निग्रोजातीयेभ्योऽतीव-घृणां कुर्वन्ति। तेषां वधोऽन्येषां लिनचिङ्ग क्रीडा भवति। तादृशाः हन्तारः प्रायेणादण्ड्या भवन्ति। ७-३-४९ 'टाइम्स आफ चिकागो' नामकेन पत्रेणं स्पेनीयवृत्तान्तः प्रकाशितः। अद्यत्वेऽत्र स्पेनदेशे प्रोटेस्टेण्ट सिद्धान्तमन्तारो द्वितीयश्रेणीगता नागरिका भवन्ति। तेषां कृते शासकीयपदाधिकारो नोप-लभ्यते। स्वधर्ममप्राकाश्यैव ते तत्पदमुपलभन्ते। स्वतंत्रविचारप्रकटनाय तेषां स्वातन्त्र्यं न भवति। तेषां गिर्जागृहेषु पूज्यस्थानबोधकचिन्हान्यपि न कर्तुं शक्यन्ते। सार्वजनिकपञ्जिकासु तेषां नामान्यपि न लिख्यन्ते। साम्यवादि हंगरी प्रदेशेऽपि रोमनकैथोलिकसम्प्रदायेन सार्द्धमपि तादृश एव व्यवहारो भवति। तथैव स्पेने प्रोटेस्टेण्टप्रचारकैः सार्द्धं तादृश एव व्यवहारो भवति। १९४७ ईस्वीये सेमिलसंज्ञकेन स्पेनीयसर्वप्रधानधर्मगुरुणा आर्कविशप कार्डीनलसेगुरे सक्ज महाशयेनेदं प्रकाशितम्, यत् 'नास्तिकाः साम्यवादिनः प्रोटेस्टंटाश्च समानरूपेण भयानकाः। तत्फलरूपेण तेषां धर्मस्थानेषु तत्रत्यैरा-क्रमणमारब्धम्। पाश्चात्येषु श्वेतकृष्णरङ्गविद्वेषबाहुल्यमेव दृश्यते।

३।२।५६ रायटर संवादानुसारेण आलावाश्तनामकः कश्चित् निग्रो छात्रो विश्वविद्यालये प्रवेशं प्राप्तवान्। पुलिससाहाय्येन भूगोल कक्षायां प्रथमं मञ्चं समुपविष्टवान्। तथापि तेन सार्द्धं कश्चिच्छयनभोजनादिकं कर्तुं नेच्छति।

प्रायश्चित्तेषु (८।१३७) मनुस्मृतिरीत्या साधारणशूद्रापेक्षयाविशेष-शूद्रस्याष्टगुणं वैश्यस्य षोडशगुणं क्षत्रियेभ्यः द्वाविंशद्गुणं, ब्राह्मणस्य चतुःषष्ठिगुणं प्रायश्चित्तं विहितम्। विशेषज्ञस्य ब्राह्मणस्य अष्ट विंशत्युत्तरशतगुणं प्रायश्चित्तं कर्तव्यं भवति। पूर्वजन्मानुसारं यस्य ब्राह्मणकुले जन्म भवति तस्य ब्राह्मणत्व-मेव यावज्जीवनं पालनीयं सम्माननीयञ्च। टमसमेरिसः 'इण्डियन एण्टी क्यूरिज' नामकपुस्तकस्य पञ्चमे भागे कथयति 'पाश्चात्यसभ्यताऽसंस्पृष्टो ब्राह्मणः परमात्मसृष्टोऽपूर्वो जीवः। सर जार्ज वर्डउडमहाशयेन १९१३ ईस्वीये कथितम् अनेकानेकराजनीतिविप्लवेषु सत्स्वपि हिन्दूभारतदेशः मन्वादिस्मृति-ग्रन्थप्रभावादेवाक्षुण्णो विद्यते।

रवीन्द्रनाथठाकुरमहाशयो जातिभेदविरोधी सन्नपि इदमुक्तवान् समाजे ब्राह्मणस्य सर्वोच्चस्थानमस्ति। स एव समाजस्य नेतृत्वं तपस्त्याग-प्रभावात्करोति। कोटिकोटिमनुष्याणां धर्ममार्गेषु वर्तनमपि तत्प्रभावादेव। ब्राह्मणस्य नेतृत्वप्रभावादेव राजनीतिकविप्लवेष्वपि हिन्दूसमाजे शान्ति-रासीत्। तत्प्रभावादेव मिथ्याभाषणादपरज्य जनाः सत्यादिसदाचारनिष्ठा आसन्। तथा च जन्मान्तरीयकर्मानुरोधादेव जातिभेदप्रथा। विज्ञान-मद्यापि मायावृत्तं सत्यं न किञ्चिज्जानातीति, स्वयमङ्गीकरोति, धर्मो जातिभेदाश्रितः जातिभेदनाशादेव नाशमुपयाति, बुद्धिसम्बन्धशून्या नास्तिका एव जातिभेदमवमन्यन्ते।

मैक्स प्लांक महाशयेन "फिलासफी आफ फिजिक्स" पुस्तके आप्त-वाक्यस्यैव प्रामाण्यं धर्मतत्त्ववेदने। भविष्यवाणी फलान्विता विफला वा भवतीति तद्वक्तुर्विशेषज्ञत्वायत्तम्। नवीनविज्ञानस्य मात्रया क्वचित् सत्यत्वेऽपि न निश्चितार्थावभासकत्वं सम्भवति, प्रकृतिसौक्ष्म्यस्यातीन्द्रियत्वेन तत्परस्य परमसत्यस्य मनोवचनातीतस्य ततोऽपि दुर्ज्ञेयत्वात्।

दिशे महाशयस्य रीत्या विशिष्टमनुष्या एव सत्यविज्ञातारो भवन्ति। प्लाकरीत्यापि आदर्शपुरुष एव सत्यविद्भवति। स च अस्मदादिषु कोऽपि नास्ति।

सिडनी लौ महाशयेन "विगेन आफ इण्डिया" पुस्तके लिखितं हिन्दूसमाजस्य विविधराजविपल्वमध्यवर्तित्वेऽपि जातिभेदप्रभावादेवावस्थानम्। जातिभेद एव दलीयसंहतेरीर्ष्यायाश्च सकाशात् समाजं पाति। व्यवसायसंघादिरूपेण यत्सौविध्यसाधनं साम्प्रतिकैरुपस्थाप्यते तत्सर्वं जातिभेद कृपयैव सुलभं भवति। जातिमन्तरा भारतस्य मूल्याङ्कनमेवासम्भवम्।

हिन्दूधर्मस्य घोरविरोधिनाऽपि "आवेदुवोया" महाशयेनोक्तम् मन्मतेन जातिभेद एव हिन्दुनां सर्वोच्चावस्था। जातिभेदव्यवस्थयैव भारतवर्षदेशोऽसभ्यतासमुद्रनिमज्जनात् मुक्तः। विविधास्वापत्स्वपि विज्ञाने, शिल्पे, सभ्यतायाञ्च, भारतस्योन्नतिः सञ्जाता। संसारदृक्षु भारतस्य सर्वोच्चस्थानं जातिभेदादेव। जातिभेदप्रथयैव सुशासनं, धर्मरक्षा च सम्पद्यते। यन्महत्त्वं क्वापि नोपलभ्यते तज्जातिभेदप्रथयैव हिन्दूषूपलभ्यते, भारतवर्षे महर्षिभिर्जातिभेदप्रथा विधानेनाक्षुण्णं गौरवमुपलब्धम्। तत एवानेकवारं देशस्य पारतन्त्र्ये जातेऽपि विजेतॄणामाचारव्यवहारैर्हिन्दूनामनभिभूतत्वमेवासीत्।

आयरलैण्ड देशस्य कविना डा० काजीना महाशयेन कराची भाषणे प्रोक्तम् 'भारतीय सभ्यतैवादिमसभ्यता, भारतीयसभ्यतैव निर्दुष्टा च।

सरविलियम लोरेन्स महाशयेन "इण्डियन थिंकर" ग्रन्थे लिखितम् 'यद्यपि जातिवादं निन्दन्त्याधुनिकाः, तथापि जातिभेदकारणादेव दरिद्राणां विशेषव्यवस्थाऽनपेक्षणीया। जातिभेदेषु हिन्दूनां बहोः कालात् समादरो भवति।

एनीविसेण्ट इत्यनया विदुष्योक्तं 'त्रिकालदर्शि महर्षिभिर्जातिभेदरूपं सुदृढमाधारभवनं निर्मितम्, यन्नानाविधाभिः क्रान्तिभिरपि निष्कम्पमेवास्ते।

संसारस्यान्या चाल्डिया, मिश्र, ग्रीस, रोमसम्बन्धिन्यः सभ्यताः समाप्तिमुपगताः स्वसाम्राज्येन सार्द्धमेव। हिन्दूसाम्राज्यस्य समाप्तावपि तदीयाध्यात्मिकप्रभावाः प्रखरतराः प्रदीप्यन्ते। यः कर्मफलं नाभ्युपैति स एव जातिवादं द्वेष्टि। जातिभेदेन कामचारकामवादेषु उच्छृङ्खलव्यवहारेण बाधोपतिष्ठते। जात्याश्रितधर्माचरणेन तन्नियन्त्रणं भवति।

श्वेताङ्ग ईसाई श्रीसरजान उडरफ महाशयेनोक्तं—भारतीयैः ईसाईभिः कब्रस्थानानि पृथङ्निर्मीयन्ते तथापि तैर्भारतीयजातिभेदः खण्ड्यते तदेतत् दम्भमूलकमेव विज्ञेयम्। यदि भेदः सर्वथा निन्द्यः तदा धनिकनिर्धन-भेदः किमिति न निन्द्यः।

यदुक्तम् 'जातिभेदादेव हिन्दूनां तत्र तत्र पराजयः' तदपि मिथ्यैव। अलेगजेण्डर दि ग्रडे महाशयेन राजानं पुरुं प्रति महती श्रद्धा व्यञ्जिता। हिन्दुभिः सार्द्धं युद्धयन्नुद्विग्नः सन् युद्धात् परावृत्तः। तस्य सैनिका अपि युद्धोत्साहविहीना युद्धपराङ्मुखा जाताः। छलछद्महीनत्वात् क्वचित् हिन्दवोऽपि पराजिताः। पठानानपेक्ष्यमुगला बलशालिन एवासन्। तेऽपि संग्रामसिंहसेनायाः समक्षे निरुत्साहा एव जाताः। पानीपतसङ्ग्रामे छलैरेव हिन्दूनां पराजयो जातः। हजरतमुहम्मदस्य मरणानन्तरं शतवर्षाभ्यन्तर एव मुसल्मानैः पश्चिमेशिया, अफ्रीका, स्पेन, पुर्तगाल प्रभृतयो देशाः स्वायत्ती-कृताः। परन्तु भारतविजयार्थं पञ्चशतवर्षाणि व्यतीतानि। आसाम-विजयार्थं प्रवृत्ता मुसलिमसेना तत्रत्यैः नदीधारां प्रवर्त्य विनाशिता। सेना-नायको मीरजुमला मानसिककष्टेन मृतः।

मरहटे जातीयैरल्पसंख्याकैरपि मुसलमानानामेव छलछद्मभिः मुस्लिमाः पराजिताः। आङ्गलेषु जातिभेदाभावेऽपि मुस्लिमानां समक्षे तेषां पराजयो जातः। एवं स्पेनदेशे मुरैरष्टशतवर्षाणि यावत् शासनं कृतम्। योरोपीय स्पेन, पुर्तगाल, दक्षिण इटली, वेलियारिकद्वीपपुञ्ज, वालकान-प्रायद्वीप, हंगरी, वियना, वलगेरिया, रूमानिया, साइवेरिया, क्रिमिया, दक्षिण-एशियाभागा मुस्लिमाधीनाः द्विशताब्दीपर्यन्तमासन्।

शकहूणानाञ्च यथा भारतस्य पश्चिमोत्तरप्रदेशे अधिकार आसीत् तथैव तेषामेव (काफिला) सैन्यदलानि नगराणि ध्वंसयन्तः योषित-श्चापवित्रयन्तः राईन नदीं यावदाक्रान्तवन्तः। परन्तु भारतात् तानि दलानि पलायितानि। योरुपे हंगरीराज्यमद्यापि हूणविजयस्मृतिं जनयति। तातारा अपि द्विशताब्दीं यावत् रूसदेशं स्वायत्तं स्थापितवन्तः। तत एव रूसराज्ञो मुकुटानि नार्वे तातारस्वामिनामश्वारोहणालम्बनं चुम्बन्ति स्म। भारते नैतादृशं दैन्यं कल्पनामप्यारोहति।

अत्र तु अनेकशतकं मुस्लिमाधीनत्वेऽपि जातिभेदोपेता अपि हिन्दवो बलशालिनस्तान् पराजित्य भारतस्य गौरवं ररक्षुः। इतिहासाध्ययने भारतीयानां नरेशानां समक्षे ईस्ट इण्डिया कम्पिनी पराजयो जातः। बृटिश सेनासु गुरखे सरयूपारीणा गौडब्राह्मणाः सैनिकाः सर्वोत्तमा वृत्ताः। जापानीयेषु जातिभेदस्यास्पृश्यतायाश्च सत्त्वेऽपि युद्धेऽजेयतैव भवति। पानीपतयुद्धे पठानैः स्वसेनाया हिन्दुं सेनापतिं कृत्वा युद्धं कृतम्। पलासीयुद्धे मौहनलालहिन्दुना मुस्लिमानां पक्षे युद्धम् कृतम्।

यदुक्तम् 'जातिभेदेन परस्परं वैमनस्यात् पराजयो जातः' तत्तुच्छम्, सजातीयानामेव नरेशानां वैमनस्यात् मुहम्मदगोरी समक्षे पृथ्वीराजस्य पराजयदर्शनात्। मेवाड़ीयप्रतापसिंहस्य स्वजातीयशक्तिसिंह-मानसिंहादि-विरोधेन राजस्थानस्य पराजयः संवृत्तः। वंगदेशे लक्ष्मणसेनस्य मन्त्रिणा पशुपतिना सह विरोधात् तत्कृतविश्वासघाताच्च पतनं जातम्।

किञ्च भारते बौद्धशासनस्या गतेऽपि पश्चिमीयपञ्चनदे पूर्वीये बङ्गे बौद्धमतमक्षुण्णामेवासीत्। बौद्धमतप्रभावात् जातिप्रथाविनाशादेव तत्रैव मुस्लिममजहबं स्वीकृतवन्तः। भारतस्यान्यत्र भागे न तथा मुस्लिमधर्म-ग्रहणम्। पूर्वबङ्गे ८० प्रतिशतं मुसलमाना जाताः। तेषां राजधानी यद्यपि उत्तर-प्रदेश आसीत् तथापि तत्र प्रतिशतं तु त्रयोदशसंख्याका मुसलमानाः जाताः।

एवमेव जावाप्रदेशं यावत् शैलेन्द्रस्य साम्राज्यं दृढमासीत्। यदैव तत्र बौद्धधर्मप्रभावो वृद्धिं गतः तदैव साम्राज्यनाशः मुस्लिमाधिपत्यञ्च जातम्।

वालीद्वीपे यत्र जातिभेदो न नष्टः तत्राद्यापि हिन्दूप्रथा विद्यते। अन्यजनै इण्डोनेशियाप्रदेशस्य पारतन्त्र्येऽपि वालीप्रदेशे हिन्दूराज्यमेवासीत् न मुस्लिमाधिपत्यम् इति "वार्ड उड उडरफ" प्रभृतिभिर्मुक्तकण्ठ-मुक्तम्। जातिभेदप्रथाकारणादेव हिन्दूसमाजोऽद्य यावज्जीवति। दैवदुर्विपाकादन्यदेशीयानां जातिप्रथा विलुप्ता परन्तु हिन्दूसमाजो नानाविधानुपद्रवान् सहमानोऽपि जीवत्येव। हिन्दुप्रथैव भूतले सर्वप्राचीना। या च ईसा जन्मतः १००० वर्षप्राचीनकालीना प्रचलितैवासीत्।

जापाने एटानामिका जातिरस्पृश्या, तत्रत्यसमस्तजनसंख्यादृष्ट्या दशमांशा, तथापि जापानदेशो वलशालिषु प्रदेशेषु प्रामुख्येन परिगण्यते, जातिभेदहीनोऽपि ब्रह्मदेशो बृटिशशासने नगण्य एव आसीत् ।

कलिङ्गदेशीययुद्धे जातया हत्यया प्रभावितोऽनुतप्तश्चाशोकोऽहिंसा-प्रचारेऽत्यन्तमभिनिविष्टः । तेन शल्यचिकित्सोपयोगिशस्त्राण्यपि निरुद्धानि । कस्यचिद्भगंदरचिकित्सार्थं नालन्दाविश्वविद्यालये गतस्य दुःखं दृष्ट्वाऽपि तत्रत्येन सर्जनेनोक्तं बौद्धधर्मे शल्यचिकित्सा निषिद्धैव ।

नास्तिकास्तु जातिभेदादेव शल्यचिकित्सालोपमपि मन्यन्ते जातिभेदमन-भ्युपगच्छतो बौद्धमतस्य प्रभावादेव तल्लोप इत्येव तु सप्रमाणमन्यत्तु निष्प्रमाण-मेव । सत्यनिष्ठा साहसादयो मनुष्यात्वादिभिर्गुणैः जातिभेदसत्त्वेऽपि संभवन्ति विजय उत्कर्षश्च जायते ।

जातिभेद पुस्तके पादरी उव्वाय महाशयेन स्वपुस्तके हिन्दूधर्मस्य-दौर्बल्यमेव लिखितं तथापि जातिभेदस्योपयोगित्वमेवोक्तवान् सः । अयं फ्रेञ्चो भारते ईसाई मतप्रचाराय समागतः । प्रायेण तादृशाध्येतॄणां स्वदेशी-यशासननीतिविरुद्धमन्यत् सर्वमव्यवस्थितमेवामासीत् । ते कामयन्ते संसारे सर्वेऽपि तत्सदृशाः एव भवेयुः । तदीयरीतिसदाचारविरुद्धं यदस्ति तदसभ्य-मुपहासास्पदं च मन्यन्ते । स एव महाशयोऽन्यत्र कथयति यत्—यद्यपि संसारे मनुष्याणां स्वभावो बहुष्वंशेषु समान एव तथापि भूमिजलवायुभोजनधर्म-शिक्षाभेदात् परिस्थितिभेदाच्च स भिद्यते । यदेवात्र सभ्यं तदेवान्यत्रासभ्यं पतनकारणं च भवति, योरोपीयरागद्वेषप्रभावभाविता अनेके भारतीया अपि हिन्दुजातिव्यवस्थां निन्दन्ति । तद्रीत्या जातिव्यवस्थासमाजशरीरे न केवलं निरर्थिकैव किन्तु महतीं विपत्तिमानेतुं शक्नोति । परन्तु भ्रान्तिमूलक-मेव तत् मया सान्निध्येन हिन्दूनां राष्ट्रियजीवनं स्वभावञ्चाधीत्य जाति-व्यवस्थाया महत्त्वमाधिगतम्, हिन्दूविधानं सर्वाधिकं सुखप्रदायकं जाति-व्यवस्थाप्रभावादेव बर्बरतास्थितेर्हिन्दूनां विमुक्तिः । तैः स्वविद्याः कलाश्च संरक्ष्य पूर्णत्वमापादितम् । सामान्यतया हिन्दूराष्ट्रस्य जातिव्यवस्थया अपरिमिता लाभाः ।

यदि गङ्गायाः पुरस्तात् चीनपर्यन्तं दृष्टिर्निःक्षिप्येत तदानायासेन ज्ञातुं शक्यते यत् जातिव्यवस्थाया अभावे हिन्दूनां कीदृशी दशा स्यात्, चीन-देशोऽपि समशीतोष्णः तत्रापि तादृश्या एव व्यवस्थाया आविर्भाव आसीत्। बहुविचार्यापि जातिव्यवस्थाया अतिरिक्तं नान्यत् कारणमुपलभ्यते येन ते स्वपार्श्ववर्तिन उष्णप्रदेशवर्तिन इव बर्बरताऽनाक्रान्ताः। जातिव्यवस्थया मनुष्याणां पितृपितामहादिक्रमेण व्यवसाया निश्चिता भवन्ति। पितृभिः त एव पुत्रेभ्यो दत्ताः। कस्यापि परम्पराप्राप्तस्वजीवनक्रमपरिवर्तनमसम्भवं भवति। हिन्दूनां स्वसभ्यतारक्षणार्थं जातिसंस्थातीवोपयोगिनी तेषां दूर-दर्शितां सूच-यति। ममायं दृढो विश्वासो यदि जातिव्यवस्थाया हिन्दवः स्वकर्तव्यपालने बद्धादरा न भवेयुः, तदुल्लङ्घने च कठोरदण्डव्यवस्था च तेषु न स्यात् तदा तेषां स्थितिः पारियाजनानामिव स्यात्। अथवा तेभ्योऽपि निम्नतमावस्था स्यात्,समस्ते देशे घोराऽराजकता च स्यात्, अद्य यः संसारे सभ्यराष्ट्ररूपेण प्रख्यातः स एव देशो अतीवासभ्यतयाऽद्य परिगण्येत।

भारतीयविधायका ये वा के वा भवेयुस्तेऽतीव बुद्धिमन्त आसन्। तद्वैशेष्यपरिचिता आसन्, येषां कृते नियमा निर्मिताः। तत एव व्यक्तीनां बुद्धिषु इच्छासु रुचिषु च नैतत् क्षिप्तम् यत्ते यथेच्छं जानीयुः व्यवसायान् उद्योगान् कलाः कौशलानि यथेच्छं स्वीकुर्युः। तैस्त एव सिद्धान्ता अङ्गीकृता यैः राष्ट्रस्य कोऽपि जनो निरुद्योगो निष्क्रयश्च न स्यात्। नवनवराजनीतिकधार्मिकव्यवस्था-जनितोल्वणप्रभावविज्ञानकौशलमिदं यत्तैः हिन्दूराष्ट्रस्य हितार्थं विभिन्न-जातीयानां कृतेऽनुल्लङ्घनीया जातिधर्मा मिर्धारिताः। शासनस्य साधारणतया धर्मो राजनीतिश्च निर्धारितौ भवतः। परं हिन्दूनां कोऽपि नियमस्तादृशो नास्ति यो धर्मो न भवेत्। तत्र धर्मनीत्योरैक्यमेव श्रेयस्करं संवृत्तम्। अभि-वादनशैली, वेषभूषादिप्रकारः, आभूषणधारणविधानम्, विविधाः शृङ्गार-समग्रयः चुल्लीस्थापनस्थानं, पात्रासादनस्थानं, शय्याशयनविधानम् सर्वाण्यपि कृत्यानि धर्मान्तर्गतान्येव। मया बहुकालं हिन्दूधर्मोऽधीतः किञ्चिदपि कृत्यं तत्र नोपलभ्यते यत्र धार्मिकसिद्धान्तसम्बन्धो न स्यात्। यद्धार्व्यं नीति-माश्रित्य न किञ्चित्यक्तम्। सर्ववस्तुसम्बन्धिनियमानिर्धारिताः। सर्वेषां सदाचाराणामाधाराः साधारणा धर्मा एव। तत एव हिन्दवः सर्वा रीतीः,

सर्वांश्च व्यवहारान् अनुल्लङ्घनीयान् मन्यन्ते, तास्तथैव पूतान् मन्यन्ते यथा धर्मम्। जातिव्यवस्था न केवलं भारतीयेष्वेवोपलभ्यते किन्तु हजरतमूसा-प्रभृतिभिरपि साङ्गीकृता, प्राचीनेषु मिश्रदेशवास्तव्येष्वपि साऽसीत्। तत्रापि व्यवसाया वंशानुगता अभ्युपेयन्ते स्म, कस्यापि एकाधिकव्यवसायस्वीकारे परिवर्तने वा अधिकारो नासीदेव, जातिभेदेन निवासस्थानभेदः आसीत्, यत्रान्यजातीया न निवसन्ति एव। किञ्चिद् भेदेन अरबवास्तव्येषु, तातारेषु चेयमेव व्यवस्था आसीत्।

एथेंस यूनानीयेषु च चतस्रो जातय आसन्निति प्रसिद्धमेव, प्रसिद्ध-शासकेन सोलनेन मान्यतां प्रदाय सा व्यवस्था द्रढिम्नमुपनीता, रोमशासकेन न्यूमापाम्पिलियसेनापि सेवाई जनेषु रोमनेषु च द्वेषनिरासार्थं सा जातिभेद-व्यवस्थाऽभ्युपेता। जातिभेदव्यवस्थापकैः प्रथममेवैतदनुभूतम् यत् संसृष्टस्य प्रारम्भिकस्थितौ यावन्तोऽधिकाः श्रेणीविभागाः भविष्यन्ति नियन्त्रणाय तावत्येव सुविधा भविष्यति। हिन्दुषु तस्या व्यवस्थायाः स एव सुपरिणामो दृष्टः। कस्याश्चिज्जातेः कश्चिज्जनो नियमोल्लङ्घने दण्डितो न भवति तदा तस्याः कृते लज्जास्पदं तद् भवति। तत एव सर्वाभिरपि जातिभिः न्यायस्य स्वप्रतिष्ठायाश्च रक्षणार्थं समस्ताः स्वसदस्याः कर्तव्यपरायणतायै प्रेर्यन्ते। सर्वासामपि जातीनां स्वीया नियमा उपनियमाश्च सन्ति। यैरपराधिनो दण्ड्यन्ते। कासुचित् जातिषु व्यभिचारे जाते प्राणदण्डव्यवस्थापि विद्यते। एवं बुद्धिमद्भिः पूर्णैर्नियमैर्नियताधिकारैश्च सुव्यवस्थारक्षणं दुर्व्य-वस्था निराकरणञ्चं विधीयते। शासनात्याचारेभ्यस्त्राणमपि भवति। जाति-व्यवस्थाप्रभावात् कस्यापि उपरि शासकात्याचारे तज्जातीयैः कार्यस्थगनं क्रियते, तत्सहानुभूतावन्यजातीयैरपि कार्यं त्यजन्ते, तेन शासकाः मार्गे समायान्ति।

जातिव्यवस्थया रक्तशुद्धिरपि रक्ष्यते। हिन्दूनां रक्तशुद्धिरतीवेष्टा। तत्र सर्वेऽपि वर्णा जगतश्च स्वश्रेणीष्वेव विवाहं कुर्वन्ति। भारते तथावसर एव नायाति यत्रान्यरक्तमिश्रणं भवेत्, योरोपदेशे यथा प्रायेण भवति। उच्चजातीया द्विसहस्रवर्षीयां वंशपरम्परां प्रवक्तुं समर्था भवन्ति, दरिद्रोऽपि स्ववंशावलीं जातिञ्चाधृत्य सर्वत्र प्रवेष्टुमर्हति। विवाहे कुलचिन्तनमनिवार्यं

भवति। क्वचिदपवादोऽपि दृश्यते परन्तद् गोपयितुमिष्यते। तावतैव तादृङ् नियममाहात्म्यं प्रस्फुटति, जातिभेदद्वारेण भारतीयोद्योगकला संरक्षणमपि संवृत्तम्, मिश्रदेशेऽपि तद्दृष्ट्यैव जातिविभाजनम्। तदाश्रित्यैव समाजे राजकीयनियमैः प्रतिव्यक्ति पदमपि निर्धारितम्, विधायकैरिदमपि चिन्तितं यदेभिरुपायैः सर्वाः कलाः, सर्वे चोद्योगाः पुत्रपौत्रादिपरम्परा च सुरक्षिता भविष्यन्ति, मनुष्यास्तान्येव कर्माणि सुन्दराणि कुर्वन्ति येषां सुनिष्पत्तिं ते बाल्यमारभ्यैव प्रत्यक्षेणावलोकयन्ति। हिन्दूशिल्पिनां जीवने स्पष्टमिदं दृश्यते, साधारणैरुपकरणैरपि तादृशानि कलापूर्णानि वस्तूनि निर्मीयन्ते यानि दृष्ट्वा विदेशीया शिल्पिनोऽपि चकिता भवन्ति। जातिभेदेन कुटुम्बाः ? शृङ्खला-बद्धास्तिष्ठन्ति, सामाजिकशृङ्खला दुर्भेद्या जाता जातिभेदमाधृत्यैव।

सुदृढेयं जातिव्यवस्था सहस्राधिकवर्षव्यापिनी परैः परीक्षिता परां प्रतिष्ठामुपगता संसारे। अनेकवारं विदेशीयानामाक्रामकाणां शासने स्थिता अपि जातिभेदप्रभावादेव हिन्दवः स्वरूपस्थिता आसन्।

शासकीयैर्विभिन्नैर्धर्मै राजकीयैश्च नियमैरनभिभूता जीवन्ति हिन्दवो जातिप्रभावादेव। तत्प्रभावादेव विदेशीयानां शासकानां सर्वेऽपि स्वप्रभावारोपण-प्रयत्ना वैफल्यमुपगताः। जातिव्यवस्थापेक्षया नान्या कापि संस्था प्राचीना। प्राचीनैर्यूनानीयलेखकैरेतल्लिखितं भारतेऽतिप्राचीनकालादियं जाति-व्यवस्था प्रचलिता। एतस्मादेव हिन्दुषु नवीनारीतय आचाराश्च नायान्ति, एतद्विरोधे हिन्दवोऽतीव क्षुब्धा भवन्ति। तद्विरोधको जनः उद्वेजकेषु गण्यते। अत्र पारम्पर्येण यद्यथा भवति तत्तथैवाद्रियते क्रियते च। अत्र कनीयोऽपि कार्यं महत्त्वपूर्णं भवति। सत्यमिदं यत्पृथिव्यां न कोऽपि तादृशो देशो यो दीर्घकालात् स्वसामाजिकरीतिसदाचारव्यवहारानक्षुण्णरूपेण परिपालने सगर्वः स्यात्। हिन्दूविधायकानां बुद्धिमत्त्वमिदं यद् हिन्दुरीतिसदाचाराणां बाह्यैरादरसूचकैः प्रणामादिभिः सम्बन्धः स्थापितः, तस्मादेव श्रद्धापूर्वकं तत्पालने जनप्रवृत्तिः।

तद्विध्युल्लङ्घने दण्डविधानं च दृश्यते, शुद्धता, स्वरक्षा, परदमनादि सम्बन्धिनोऽनेके हिन्दूविधयः, यहूदीधर्मे संगृहीताः। स्वजातीयेष्वेव विवाहः कर्तव्य इति नियमो मूसामहाशयेनेश्वरादेवोपलब्धः। ततोऽपि प्राक्

कालिडयनजनेषु सैव प्रथासीत्। इस्तकेन तत्पत्न्या रेविकया च अन्यजातीयया कृतविवाहाय स्वपुत्राय ईसा ३१ नामकाय न क्षान्तम्। ताभ्यामन्यः स्वपुत्रो याकूबनामा स्वजातीयैर्विवाहाय दूरदेशे प्रेषितः। तथैव हिन्दवोऽपि स्वजातीयेषु विवाहाय बहुयोजनदूरं गच्छन्ति। प्रसिद्धमिदं यदीश्वरादेशादेव मूसामहाशयेन जातिव्यवस्था यहूदीजनेषु प्रचालिता। स बहुकालं मिश्रदेशे उषित्वा तस्या व्यवस्थायाः सुपरिणाममनुभूतवान्। यहूदीषु सा व्यवस्था मिश्रदेशापेक्षयाऽपि पूर्णतामुपगतवती, हिन्दुषु सा ततोऽपि प्राक् प्रचलिता। तेषां पवित्रग्रन्थेषूक्तम् यत् सृष्टिकर्त्रा ब्रह्मणा जातिव्यवस्था चालिता। ब्रह्मणो मस्तिष्कात् ( मुखात् ) ब्राह्मणो जातः, बाहुभ्यां क्षत्रियः, उदराद्वैश्यः, पद्भ्यां शूद्रः। अनया कथया वर्णानामुच्चावचभावस्यालङ्कारिकं माहात्म्यं स्पष्टमवगम्यते। पौरोहित्यं मोक्षमार्गप्रदर्शनं च यस्य कार्यं तस्य शिरसः उत्पत्तिः। यस्य बलप्राधान्यं यश्च युद्धार्थं कष्टं सोढुमुद्यतो भवति, तस्य ब्रह्मणो बाहुभ्यां समुत्पत्तिः। यस्य सर्वेषां भोजनवस्त्राद्युपाहरणकार्यं स तदुदरादुत्पद्यते। यश्च सेवाकृष्यादि कठोरकार्यकरणक्षमस्तस्य तच्चरणादुत्पत्तिः। हिन्दूनां पवित्रवेदग्रन्थेषु स्पष्टमेतदुक्तम्।

विश्वप्रलयज्ञानं न केवलं हिन्दूनां किन्तु मूसामहाशयस्यापि आसीत्। हिन्दुग्रंथानुसारेण प्रलये पवित्रनौकायां सप्तर्षिभिः सार्द्धं मनो रक्षणं सम्पन्नम्। तेनैव मनुना पुनरपि पृथिव्यां मानवावासः विहितः। पुनश्च जातिव्यवस्था प्रतिष्ठापिता। सा चाद्यापि विद्यमाना।

गार्डीनर महाशयः "दि विलर्स आफ सोसाइटी" पुस्तके वदति भारतीयो जातिभेदः सत्ये प्रतिष्ठितः, अस्मदादीनां जातिभेदस्तु धनमाधृत्य स्थितः।

प्रोफेसर कालपियर्सन महाशयस्य रीत्या जातिभेदेष्वेव मानवजीविका निश्चिता। उपरिष्टादन्यायवदेतदाभाति किन्तु नैतत्सत्यं जातिभेदसत्त्वे स्वल्पकालेनैव स्वस्वकर्मसु कौशल्यमुत्पद्यते। जातिभेदसमाप्त्या यस्य यदेव रोचेत तेन तदेव कर्तव्यमिति व्यवस्थायां कौशलं नङ्क्ष्यत्येव, असाधारणबुद्धिसम्पन्नानां हस्तादिशारीरिककार्यप्रवृत्तौ बौद्धकार्यविशेषेषु कुफलमेव भवति। आधुनिकसमाजव्यवस्थयैवायमनर्थः।

भारते विभिन्नजातीनां विभिन्नसभ्यतानामनेकशतीभिः सामञ्जस्येन सहवासः संवृत्तः जातिभेदप्रथाहेतोरेवैतत् सम्पन्नम् इति सर जार्ज क्याम्यवेल महाशयः। जातिभेदहेतोरेव हिन्दुषु स्ववर्णविवाहो भवति, स्वगोत्रविवाहवर्जनञ्च। तादृशैर्विवाहैः साङ्कर्यं निरुद्धयते, सगोत्रविवाहैः वर्णबाह्यैर्विवाहैश्च वर्णलोपप्रसङ्गो न भवति।

सर जार्ज वर्ड वुड महाशयो ब्रिटिश यात्री भारते सैनिकासैनिकेषु बहुषु उच्चाधिकारेषु नियुक्त आसीत्। सल्फ नामके पुस्तके तल्लेखसंग्रहः प्रकाशितः। तस्यांशः—मन्वादिस्मृतिषु यज्ज्ञानं सुरक्षितम् तेनैव गतत्रिसहस्राब्देषु विविधासु क्रान्तिषु सतीष्वपि देशे साम्प्रदायिकी, राजनीतिकी, चैकता सुरक्षितासीत्। तदपसारणे तेषां अफगान, मंगोल विजेतृणां भयादपि अधिका अराजकता प्रसरिष्यति।

इङ्गलिश कास्ट शब्दस्थाने संस्कृते वर्णशब्दः प्रयुज्यते। चतुःसंख्याकास्ते तत एव चातुर्वर्ण्यव्यवस्थोच्यते। ब्राह्मणो ब्रह्मणोमुखादुत्पन्नः, क्षत्रियो राजन्यो वा तद्बाहुभ्यामुत्पन्नः वैश्योऽपि कृषिव्यापारपर उरुभ्यामुत्पन्नः, द्विजसेवकः शूद्रः पद्भ्यामुत्पन्नः। तत्परिवर्तने कथं तदवस्थानं संभवति। नहि स्वभावमपहाय भावो-भवितुमर्हति। कश्चिन्मनुष्यः स्वस्मात् कथं न भिद्यते इति प्रश्नोमौर्ख्यमेव। सम्पूर्णविश्वव्यवस्थायां प्रतिव्यक्तीनां स्थानं जन्मकर्मसम्भूतैः गुणैः स्वभावैरेव भवति, पाश्चात्त्यानां बुद्धौ नैतदारोहति यतस्तेषां समाजनिर्माणं निश्चितसिद्धान्तमन्तरैव जातम्। तद्रीत्या सर्वः सर्वकर्मकरणयोग्यो भवति, तेन यो यत्र कार्ये सर्वथाऽनुपयुक्तः सोऽपि तत्राधिकृतमात्मान्नं मन्यते। पाश्चात्त्य देशे सम्पत्तिरेवोच्चता हेतुः, परमद्य पाश्चात्त्यविद्वांसोऽपि समाजशरीरसत्तामभ्युपगच्छन्ति, परन्तु तन्मूलज्ञानाभावात् त इतस्ततो भ्राम्यन्ति।

वस्तुत ऋग्वदस्य पुरुषसूक्ते तन्मूलमुपलभ्यते, यत्र महापुरुषस्य ( महाविराजो भगवतः ) मुखादिभ्यो ब्राह्मणादीनामुत्पत्तयः श्रूयन्ते, न केवलं मनुष्येष्वेवायंविभागः किन्तु पशु पक्षिषु वृक्षेष्वपि च स विद्यते।

वस्तुतस्तु वर्णव्यवस्था विश्वव्यवस्थैव, या च न केवलं मानवसमाज एव किन्तु जडचेतनात्मके सर्वस्मिन्नेव जगति स्वाभाविकगुणानुरोधेनापि प्रकृतविभागो युज्यते, प्रथमत्रयो वर्णाद्विजातयः वैदिककर्मपरम्पराभिकारिणस्त एव।

"वपतिस्म" संस्कारेण ईसाईजना अपि द्वितीयं जन्म मन्यन्ते। ब्राह्मणाः ( प्रिस्ट ) पुरोहिता उच्यन्ते, परन्न तेषां कार्यं पौरोहित्यमेव किन्त्वध्यापनमपि तेषां कार्यं भवति। क्षत्रियोत्पत्तिचिन्तनेन राज्ञां देवप्रदत्ताधिकारो विज्ञातुं शक्यते यस्य प्रचारो योरूपे जातः। वर्णव्यवस्थायां शूद्राधिकारसम्बन्धे पाश्चात्त्येषु महान् भ्रमः। यद्यपि शूद्राः प्रत्यक्षरूपेण वैदिकतत्त्वज्ञानेषु नाधिकारिणः, तथापि द्विजातिसम्बन्धेनाप्रत्यक्षरीत्या तेषामपि तत्त्वज्ञानमुपलभ्यत एव, समाजस्य भरण-पोषणसामग्रीणां संकलनादिजातिसेवनकम ननिकृष्टं वक्तुं शक्यते।

वेनेट महाशयरीत्या यथा सत्यमाधृत्य हिन्दूसमाजः प्रतिष्ठितः तस्यतुलना संसारे नोपलभ्यते।

सरजानवुडरफ महाशयः—कालिकातायामुच्चन्यायाधीश आसीत् स "इज इण्डिया सिविलाइज्ड" ग्रन्थे वर्णव्यवस्थां समर्थितवान्। समाजशास्त्रेण स्पष्टमेतज् ज्ञायते। प्रतिदेशं योद्धृ-व्यवसायि-कर्षक-श्रमिकश्रेणयो लभ्यन्ते। एवं विभेदाः सामाजिकोपयोगाश्रयेण संघटिताः। श्रेणयो व्यावहारिकरूपेण जातयश्च पश्चिमदेशेष्वपि लभ्यन्ते।

समाजशास्त्रि प्रोफेसर गिडिंग्स महाशयरीत्या समाजविकासेन सार्द्धमेव श्रेणयो नैकतामुपयान्ति किन्तु तद्भेदेऽधिकं व्यज्यते। तद्रीत्या कश्चिदपि समाजसुधारो यः श्रेणीसाङ्कर्याय प्रयतते वैफल्यमेव याति इति निश्चप्रचम्। सर्वे मनुष्याः समाः इत्ययं भावः कार्य्य—योग्यतायामुपयोगितायाञ्च आधारहीन एव भवति। आधुनिके युरोपे याः सामाजिक्यः आर्थिक्यश्च व्यवस्थाः सन्ति तासां धर्मेण न मनागपि सम्बन्धः। प्रतिदेशं चर्चः ( पूजास्थानं ) राज्यञ्च पृथगेव दृश्यते। वस्तुतः आधुनिकयुरोपस्य किश्चित् सुस्थिरमुद्देश्यमाधारश्च नास्त्येव तत्र प्रतिविषयं विचारेषु महान् भेदः, यत्र विघटनवीजं निहितम्।

यूरूपे अमेरिकायाञ्च निर्धनधनिकप्रभेद एव सर्वत्रोपलभ्यते। तत्र सफलनिष्फलश्रेणीषु महानन्तरो दृश्यते। अद्यापि तत्र राजकीयनियमे धनिनां पक्षपातो दृश्यते। प्रलोभनप्रवृत्त्या न्यायो धर्मश्च कालुष्यमुपयाति। आदर्शभूतायाः भारतीयसामाजिकव्यवस्थाया आधारो धार्मिको दार्शनिकश्च सिद्धान्त एव। स एव दैनदिनजीवनस्याप्यादर्शः। धर्मशास्त्रानुसारेण चत्वारो वर्णाः सन्ति। अद्यत्वे ब्राह्मणाः शूद्राश्चेति प्रायेण वर्णद्वयमेव। आश्रमेष्वपि

गृहस्थो यतिश्चेति, तद्द्वयमेवावशिष्यते। व्यवसायानुसारेण शूद्रेष्वपि नानोपजातिभेदाः सन्ति। वर्णानां लौकिकव्यवसायाः वृत्तिपदेन व्यपदिश्यन्ते! यद्यपि प्रतिवर्णं स्वस्वकर्मनिष्ठैव युक्ता। द्विजातीनां किञ्चित् स्वातन्त्र्यम् तदेतत् स्वातन्त्र्याधिक्यम् आध्यात्मिकपतनकारणत्वेन विज्ञायते।

नोपारोहति पाश्चात्यविदुषां बुद्धौ अस्पृश्यता ते चास्पृश्या वर्णवाह्या एव भवन्ति। तेषामाचारादिभेदोऽप्यस्पृश्यता कारणम्, भोजनविवाहादिषु नाना-विधिनिषेधाः वर्णव्यवस्थायत्ताः। पाश्चात्त्येषु सामाजिकसम्मेलनार्थं भोजनपानैक्यमाद्रियते हिन्दुषु भोजनपानादि व्यवहारभेदेऽपि परस्परं मैत्री-भावेन व्यवस्थितिः सम्भवत्येव। प्रतिष्ठा च कस्यापि कर्त्तुं शक्यते। विवाह-भोजनसम्बन्धमन्तरेणापि विभिन्नजातीया परस्परं सहयोगेन वर्तन्ते, यूरोपीयसमाजे नैतत् सम्भवति।

हब्शी नेता दिवङ्गतो मिस्टर कुकर टी० वाशिङ्गटनोऽकथयत् यत् 'विशुद्धसामाजिकेषु कार्येषु वयं तथा पार्थक्येन वर्तामहे यथा कराङ्गुलयः याश्चै-कहस्तगता अपि परस्परसहयोगेन व्यवहरन्ति भारतीयव्यवस्थाया न कस्यचिद-वमानमिष्टम्। इङ्गलैण्डदेशेऽपि जेण्टिलमैन पदवाच्या शरीफपदव्यवहार्या वा श्रमिकैः सार्द्धमेकत्र भोजनफलके भोक्तुं नैवेच्छन्ति। यूरोपीयदेशेषु विभिन्नश्रेणीषु विवाहादिसम्बन्धो न भवति। पश्चिमदेशेषु श्रेणीभेदाः किञ्चिद् दृढा एव।

यद्यपि व्यवहारेषु उच्चश्रेणीषु तेषां गमनमत्यल्पम् तथापि भारते नियमा इमेऽतीव दृढाः। तत्र विवाहभोजनादिसम्बन्धिनो विधिनिषेधा दार्ढ्येन परिपाल्यन्ते। पश्चिमदेशे यदि काचित् निम्नश्रेणीस्था व्यक्तिर्भोजनं करोति तदा तस्य मस्तिष्कविकार एव परिगण्यते। यदि सा न तत्परित्यजति तदा तत्सजातीयास्तन्निमन्त्रणं न स्वीकुर्वन्ति। तथैव केचिन्निम्नश्रेणीषु विवाह-मपि न कुर्वन्ति परन्तत्कार्यं तत्प्रतिष्ठाविरुद्धं विज्ञायते। क्वचित्सामाजिक-वहिष्कारोऽपि तादृशानां क्रियते। अनया दृष्ट्या भारतीयप्राचीनव्यवस्थायां प्राचीननियमानामनिवार्यता।

किञ्च भारते शरीरात्मनोर्भेदोऽभ्युपगम्यते। आत्मनोऽभिव्यक्तिः शरीरे भवति। तेन तद्बाह्यपरिस्थितीनां महत्त्वं याभिरात्मशक्तिर्विकासमुपनीता सा बाह्यपरिस्थितिर्विजयते।

मनुष्यः स्वातन्त्र्येण स्वभाग्यं निर्मिमीते। भारते यात्रदत्र विषये वलं दीयते

न तावदन्यत्र देशे एतदालक्ष्य बाह्यपरिस्थितिषु यथायोग्यं परिवर्तनं कर्तुं शक्यते। पितृगुणाः यथा पुत्रेषु संक्राम्येयुस्तथा तात्पर्येण प्रयत्यते। तदर्थं व्यक्तिगतैर्भावै रुचिभिश्च संघर्षः क्रियते।

आध्यात्मिकविकासो व्यक्तीनामाधिक्येन स्वधर्मपालनायत्तं भवति। भारतीयसमाजशरीरविकासेऽपि ध्यानं दीयते, जितेन्द्रियत्वं, स्वाराज्यसिद्धिः, मोक्षश्च सामाजिकोद्देश्यम् तद्वैपरीत्येन पश्चिमे बाह्यपरिस्थितिविजय एव तदुद्देश्यम् प्रकृतिगुणा मनःसु शरीरेषु च प्रायेण व्यज्यन्ते, न केवलमेतन्मनुष्येष्वेव किन्तु प्राणिमात्रेषु न केवलं शरीरेषु, अपि यैर्मनुष्याणां व्यक्तित्वं निर्मीयते।

किन्तु संस्कारेष्वपि भवति। आत्मास्वोययुक्तमेव शरीरं धारयति। अतएव चत्वारो वर्णा गुणकर्मविभागानुसारेण परमेश्वरेण रच्यन्ते इत्यस्य सिद्धान्तस्य स्वीकृतिमन्तरा वर्णव्यवस्थामाहात्म्यं नावगन्तुं शक्यते। पश्चिमदेशेषु नैतदभ्युपगम्यते, ईसाई सिद्धान्तानुसारेणात्मनामीश्वरभिन्नत्वेऽपि शुभेऽशुभे वा शरीरे प्रवेष्टुं शक्नोति। तत एव सर्वप्रथमं कर्मारम्भः कस्यचित् प्राच्यस्यदृष्ट्या अविवेकपूर्णमेवेदं मतम्।

पाश्चात्यानां वर्णो वा जातिर्वा बुद्धौ नारोहति। तेषामतीतानागतेषु जन्मसु विश्वासो न भवति जातिशब्दस्य व्यवहारेऽनेकेऽर्था दृश्यन्ते। आङ्ग्लजातिर्जर्मनीजातिरिति तत्तद्देशनिवासित्वेन नेशन इत्यस्य पर्य्यायो भवति। जातिशब्दः हिन्दूमुसलिमजातिधर्मभिप्रायेण। ब्राह्मणक्षत्रियादिशब्दः न शुद्धजातिवाचकः। केषाञ्चिद्रीत्या प्रारंभे एकदम्पती प्रजातवंशजेषु प्रजातिशब्दप्रयोगः। रङ्गभेदेन मङ्गोलियनश्वेत-हब्शी आदिशब्दप्रयोगः।

एवं मुण्डा तेलगू द्रविडादिभाषाभेदेनापि क्वचित् कपोलास्थ्युन्नतिलघुनासिकानेत्रत्वेन, क्वचिदोष्ठस्थौल्येन, क्वचित् बालकाठिन्यमार्दवभेदेन क्वचिच्च शिरोमानभेदेनापि जातिभेदः। केषाञ्चिच्छिरोलम्बमानत्व-गुरुत्व-लघुत्व-भेदेनापि भेदः। केषाञ्चिन्महदपि ह्रस्वमितरेषां लघूभूतमपि गुरुमस्तिष्कं भवति, लम्बाऽलम्बादिस्तु पर्यावरणनिबन्धनः। कृष्णत्वगौरत्वादिकं तु देशजलवायुभेदमूलकं भवति। ए० बी० आदि रक्तभेदेनापि भेदव्यवहारः। ओ० ए० बी० ए० बी० चतुर्विधानि रक्तानि निश्चीयन्ते।

अत एवाद्यत्वे वृकनहक्सले प्रभृतिवैज्ञानिकानां रीत्या प्राणिकायभेद

एव जातिभेदस्याधारः न रङ्गादि। क्यूविअरप्रभृतिभिः तिस्रः, 'हक्सले' प्रभृतिभिरेकादश, ब्लूमेवारवेन पञ्च, पेशोलनेन सप्त, अगसिजेनट पिरिङ्गेन ११, हैकेलेन १२, मार्टनेन ३२, वर्केन ६२, ग्लिउनेन १५० उपजातयोऽङ्गीकृताः। तत्रापि आर्यसेमेटिक मङ्गोल हबशी उपजातयः प्रायेण सर्वसम्मताः। तद्रीत्या तासु न केवलं शरीरभेद एव किन्तु बुद्धिशक्तिभेदश्च। एतासां साङ्कर्येण वंशलोपो भवति, सभ्यताह्रासश्च। असाधारणा गुणा दोषाश्च तासु भवन्ति। यद्यपि क्वचिद्वैपरीत्यमपि दृश्यते। परप्रमादप्रयत्नातिशयमूलकमेव। देशकालसंसर्गभेदेनैव क्वचिन्नागरिका अपि पुनरसभ्या भवन्ति। जाङ्गलिकाश्च क्वचिन्नागरिका भवन्ति। योरोपीयाः पूर्वं जाङ्गलिका आसंस्तेऽद्य सभ्याः। ये च पूर्वं यूनानमिश्र-भारतप्रभृतिदेशीयाः सभ्या आसंस्तेषामद्य तादृशी सभ्यता न दृश्यते। तथापि आर्यमङ्गोलप्रभृतयो जातयो न सन्तीति न वक्तुं शक्यते। क्वचित्क्वचित्साङ्कर्येण मिश्रणमपि जातमेव तथापि शुद्धरक्तानामत्यन्ताभावो न वक्तुं शक्यते। यथा कलमा ( कलमी ) म्राणां बाहुल्येऽपि बैजिकाम्राभावो नास्ति, तद्वत्।

वस्तुतो येषु देशेषु कालेषु ये विकासं लभन्ते, उन्नतिं कुर्वन्ति, यावतांशेन च ते धर्मसदाचारेश्वराभिमुखा भवन्ति तावतांशेन तत्र त एव श्रेष्ठाः। मेण्डलस्यान्वेषणेन जननिकायार्थे प्रजातिशब्दप्रयोगः। पेनीमेनरीत्या प्रजातिरेकोजैविकीयवर्गः। अतो यत्र पैतृकांशानां समानता, शारीर-लक्षणसाम्यं वा भवेत्तस्मिन्समूहे प्रजातिशब्दप्रयोगो युक्तः। मानवजातेः प्रति-व्यक्ति सत्तानिषिक्ताण्डरूपेणारभ्यते। तत्र ४८ संख्याकाः पैतृकांशा भवन्ति। तत्राप्यर्धं मात्रंशा अर्धं पित्रंशाः। तत्रापि सुसूक्ष्मा बहवः कणा भवन्ति। तैरेव पैतृकनेत्ररङ्गपरिमाणनासिकावालादिलक्षणानि नियम्यन्ते। यथा भारते ब्राह्मण-क्षत्रिय-वैश्यानामन्यानपेक्ष्यांशतः प्रलम्बताधिक्यं दृश्यते तथापि तत्र स्वास्थ्यसमुन्नतजीवनस्तरादिसाहकार्य्यमपेक्षितम्।

एवमेव बौद्धे कौशले स्वभावे चारित्र्ये पर्यावरणस्याधिकः प्रभावो भवति। प्राकृतिकपर्य्यावरणापेक्षायाऽपि सामाजिकप्रर्यावरणप्रभाव-प्राबल्यम् भवति। आर्थिकसाधन-सामाजिकदृष्टिकोणशिक्षाप्रभावाः प्राधान्येन सर्वत्र प्रतिफलन्ति। प्राकृतिकपर्य्यावरणसापेक्षसामूहिक-

साङ्कर्य्येणापि नवीनजातिपरिवर्त्तनं दृश्यते। इदमेवान्यप्राण्यपेक्षया मनुष्यवैलक्षण्यम्। तथापि लम्बतामानशिरोमान-नासानिर्माण-रक्तसमुदाय-शरीरलक्षणानि प्रजातिभेदनिश्चायकानि भवन्ति। तत्र लम्बमानता ५ फी० ७ इञ्च, ५.५, ५.' रूपेण दृश्यते। शिरोनिर्माणे देशकालवातावरणप्रभावो न भवति, साङ्कर्य्यप्रभावस्तु भवति, परन्तु साङ्कर्य्यनिरोधात् स्वल्पैरेव दिनैः प्रकृतरूपतैव पुनरुद्भवति। भारते दीर्घकपाला मनुष्याः प्रायेण लभ्यन्ते। विहारे मध्यकपालाः। मङ्गोलेषु पृथुकपालाः। एवं दीर्घनासिका-पृथुनासिका-लघुनासिकादिभेदेनापि समानाभिजनत्वेन सर्वेऽपि मानवा एकजातीयाः तथापि वंशलोप-सभ्यताह्रासादिभिरवान्तरजातिभेदः स्पष्टमेव प्रतीयते।

आधुनिकैस्तु–जातिशब्दः तस्मिन्समुदाये प्रयुज्यते यत्र विवाहभोजनादि व्यवहारो भवेद्यतो बहिर्न भवेत्। यस्य च जन्मारभ्यमरणपर्य्यन्तं जातिनियमोल्लङ्घनेन जातिबहिष्कारं यावदविच्छेदः स्यात्। प्रजातिशब्दस्तु पूर्वोक्तभेदविशिष्टेषु समुदायेषु प्रयुज्यते।

मेक्समूलरेण प्रजातिशब्देन सार्धमार्य्यन् शब्दः प्रयुक्तः। काउण्ट जोसेफडे गोविनो महाशयेन 'मानवप्रजातेरसमानता' पुस्तकेऽस्य सिद्धान्तस्य साहित्यिकं रूपं दत्तम्। तत्रार्य्यजातेः श्रेष्ठता तेन प्रसाधिता। लायूज महाशयेन यूरोपीयाणामुत्कृष्टता साधिता। जर्मन् पण्डितैर्नाडिकवादः प्रचारितः। तद्रीत्या संस्कृतयोऽस्थिरा प्रजातयः स्थिरा भवन्ति।

आधुनिकानां रीत्या जातेर्गुणाः जातिप्रथाप्रभावेण प्रजातीय-सामाजिक-व्यावसायिक-धार्मिकक्षेत्रेषु स्वसत्तारक्षणेन साकमेव जनाः समष्टिसमाजस्य सहकारितामुपगच्छन्ति। भारतीय समाज-व्यवस्थायां सर्वापि समस्या प्रजातिप्रथया समाहिता, सामाजिकविषमता च धर्म्माधारेण समाहिता भवति। धार्मिकसंस्कारविचारेषु प्रौढितामुपगतेषु विषमताया जाटिल्यमेव नासीत्। कर्मसिद्धान्ताभ्युपगमेन स्वदशायामसन्तोषः कैश्चिदपि नानुभूतः। तथैव जातिप्रथयाऽपि वैषम्यमूलकस्यासन्तोषस्यावसरो न दत्तः। जातिव्यवस्थया समाजव्यवस्थायाः सौविध्यं जातम्। कार्य्याणि स्वत एव प्रविभक्तानि। जातिव्यवसाये जात्यैव कौशलं जातम्। समाजस्यावश्यकतापूर्तौ च जातिव्यवस्थया सहयोगो दत्तः। जातिव्यवस्थायां जन्मनैव जीविकाप्राप्तिस्तदर्थं साधनान्वेषण-

मनावश्यकम् । वंशानुगतव्यवसायग्रहणेन व्यवसायसमस्यासंकट एव नोदेति । जन्मनैव तद्दर्शनेन तत्रासाधारणं कौशलमप्युत्पद्यते ।

जातिप्रथया हिन्दूसमाजरक्षणं जातम् । प्रत्येकमपि जातिसंघटनं धर्मरक्षणार्थं प्रयत्नशीलं भवति । तत एव मुस्लिमाङ्गलादिशासनेऽपि जातिप्रथायामुल्लेख्यपरिवर्त्तनं न जातम् । धर्मे जातौ वा विपत्तिसंहृतैरेव प्रतिरोधाय यत्यते । व्यवसायिवर्गे संतोलनमाधीयते । जातिप्रथया जात्या ( जन्मनैव ) सामाजिकसमानतायां व्यक्तीनामाभिमुख्यं भवति । तेन योगात्वायोगात्वधनवत्त्वाधनवत्त्वादिभिर्व्यक्तीनां पृथक्करणं न भवति । जातिर्जीवनसङ्गिसङ्कलनाय स्थायिमार्गं स्थापयति । व्यक्तीनां कृते हट्टन महाशयस्य रीत्या श्रमिकसंघस्य कार्यं जातिः करोति । जातिप्रथया रक्तशुद्धिः संरक्ष्यते । विवाहनियमस्तत्र कठोरतया परिपाल्यते । निकृष्टकर्मभ्यो जनान्नियमयति । जातिवहिष्कारभयेनानुचितकार्यनिवृत्तिरनायासेन सिद्ध्यति ।

सिद्धान्ते समष्टिव्यष्टिसामञ्जस्येन सर्वाणि कार्य्याण्याद्रियन्ते । राष्ट्रियमपि कार्यं समष्टिविश्वविरुद्धं दोषावहं त्याज्यं भवति । तदविरुद्धन्तु राष्ट्रियं कार्य्यं प्रशंसनीयमेव, राष्ट्रानुन्नतौ तत्समष्टिविश्वस्याप्यनुन्नत्यापत्तेः । तथैव राष्ट्रविश्वाविरुद्धमेव जातीयहितकार्ये प्रवृत्तिरुचिता न तद्विरुद्धे । समष्टिहिताय सत्यामावश्यकतायां व्यष्टिहितवलिदानमेवादरणीयम्, तदधीनत्वाद् व्यष्टिविकासस्य । यदि कश्चन विश्वदृष्ट्या विश्वस्यैकः पूरकोंशः प्राणिवर्गदृष्ट्या प्राणी, मानवत्वदृष्ट्या मानवः, राष्ट्रदृष्ट्या राष्ट्रियः, वर्णदृष्ट्या वर्णो, ब्राह्मण दृष्ट्या ब्राह्मणो, वैदिकदृष्ट्या वैदिको भवेत्तदा नानुचितम् । तत्तदभिमानं समष्ट्यविरुद्धं न दोषावहम् । व्यष्टीनां बलैश्वर्यादिराहित्ये समष्टेरपि तदापत्तरनिवार्य्या स्यात्, व्यष्टिसमुदायरूपस्यैव समष्टित्वात् । तत्सिद्धान्ताज्ञानेनैव व्यष्टिभावनाप्राबल्येन समाजराष्ट्र-विश्व-हितबुद्धिः व्यावर्त्यते । तत एव स्वार्थप्राधान्येन विघटनं दौर्बल्येन विरोध्याक्रमणं प्रतिरोधशक्तिराहित्ये राष्ट्रपराजयो जायते, न तु संघटनमत्रापराध्यति । अन्यथा कदाचिद्राष्ट्रियसंघटनमपि संकीर्णताकारणं सद्विश्वविप्लवकारणं भवत्येव, हिटलरादिकृतसंघटनदुष्परिणामस्य सर्वानुभूतत्वात् ।

यदुक्तम् 'जाति प्रथयैव दशकोटिसंख्याका हिन्दवः मुसलिम ईसाई समाजे निविष्टा' इति तदप्यविचारितरमणीयम्, तस्य भय-धनस्त्रीजीविकापदलाभ-

सौविध्यप्राप्तिलोभमूलकत्वात्, स्वधर्मयाथात्म्यमाहात्म्याज्ञाननिबन्धनत्वाच्च। ऐतिहासिकदृष्ट्याऽनेके राजानः उच्चजातीयाधनवन्तश्च इस्लामधर्मे सन्निविष्टाः 'भारतमें अङ्ग्रेजीराज' पुस्तकेप्रस्तावनायाम्। अनेके च पण्डिता महामहोपाध्याया ईसाई धर्मे निविष्टाः। अनेके च जातिधर्मोल्लङ्घनेनेतो जातिबहिष्कृतास्तत्र निविष्टाः। तैरेव वायबिलादिसंस्कृतानुवादस्तदीयसिद्धान्तस्य दार्शनिकरूपदानञ्च कृतम्।

यदुक्तम् 'जातिप्रथयैव दशकोटिसंख्याका अस्पृश्या भोजनाच्छादनादि रहिताः पशुवज्जीवनं यापयन्तीति' तदपि तुच्छम्, तदुक्तेर्मिथ्यात्वेनारोपमूलकत्वात्। नहि भोजनाच्छादनादिसाहित्यरहित्ययोर्जातिभेदो हेतुः, सर्वत्र जातिषु तद्राहित्यसाहित्यदर्शनात्। ब्राह्मणक्षत्रियादयोऽप्यद्यत्वे भोजनाच्छादनादिशून्या ग्रामेषु नगरेषु च पशुभ्योप्यवरं जीवनं यापयन्ति। धर्मशास्त्रदृष्ट्या समेषामेव जीविकाविधानम्, क्षत्रियाणां शासनादिकम्, ब्राह्मणानां याजनप्रतिग्रहादिकम्, वैश्यानां कृष्यादिकम् शूद्राणां शिल्पादिकमस्पृश्यानामपि तेषां तेषां चर्मव्यवसादिकं निश्चितम्।

इदानीं तु परजीविकापहारपारम्पर्यमेव सर्वत्रातिशेते। अद्यत्वे कस्यचित्क्वापि जीविकाप्राप्तौ प्रतिरोधो नास्त्येव। कुतः केषाञ्चिद् भोजनाच्छादनादिराहित्यं जातिमूलकं कल्पयितुं शक्यम्? किञ्चेदानीमुत्पादनवितरणव्यवस्था सर्वापि शासनाधीना तेन शासनमेवापराध्यतीत्येव वक्तव्यमायाति। रामायणमहाभारतादिकाले, बौद्धकाले, मुगलसाम्राज्यकालेऽपि च कस्यापि व्यक्तिविशेषस्य जातिविशेषस्य वा भोजनाच्छादनादिराहित्यचिन्ता नासीदेव।

यदुक्तम् 'जातिप्रथायां शिल्पिनोऽपकृष्टत्वेन गण्यन्ते स्म। तेन शिल्पोन्नतौ तेषां प्रवृत्तिरवरुद्धा। तेनैवान्यदेशवदत्र शिल्पोन्नतिर्न जाता' तदपि न, तत्कथनस्याज्ञानविजृम्भितत्वात्।' 'भारतमें अंग्रेजीराज' पुस्तके कम्युनिस्टसाहित्येषु च विस्तरेणेदमुक्तं यदत्र कौशेयौर्णाकार्पासमयशाटकशालकम्बलवस्त्रसौवर्णराजतरत्नादिमयपात्र-भूषणादि, काष्ठमयजलयानादिनिर्माणादिकलाः चरमोन्नतिं गता आसन्। आगरास्थताजप्रासाद एलोरा-अजन्ता-साँची गुहा—दीनि निदर्शनानि सन्त्येव।

यदुक्तम् 'निम्नजातीयानां विदुषामपि जातीयदृष्ट्या ब्राह्मणादिवत्संम्मानं

न भवति । तेनैवानेके ब्राह्मणबुभूषया जातिपरिवर्तने रताः' तदपि तुच्छम्, जातिदृष्ट्या ब्राह्मणादीनां सम्माने सत्यपि गुणवदपेक्षया तेषां नगण्यता दर्शनात्। संविधान-चिकित्सादि विशेषज्ञानां मुस्लिमाङ्ग्लानामपि सम्मानबाहुल्यदर्शनाच्च धार्मिक दृष्ट्यापि धर्मव्याध विदुरप्रभृतीनां संमानाधिक्यस्मरणाच्च।

घृणा-वैमनस्य-स्वार्थपरायणता विघटनञ्च न जातिनिबन्धनं किन्तु धर्मनीति सदाचारा-ज्ञानाननुष्ठाननिबन्धनम् । जातिबन्धन-विवाहबन्धन-भोजनपानादिभेदाभावेऽपि श्वादिषु विघटन-कलहबाहुल्यस्योपलम्भाच्च । लोकसमाज हिताज्ञानाद्राजनीतिकस्वार्थबाहुल्याच्च निर्वाचने जातिवाददुरुपयोगः यदि जातीयसंघटनं हितव्यापादकं तदा राजनीतिकदलीयसंघटनं ततोऽप्यधिकं वैमनस्यविघटनमूलकं तदेव कुतो नापोद्यते ? यदि तु तद्दूषणपरिहार एव यत्नो युक्तस्ततोऽत्रापि तत्रैष प्रयत्नः कथं न युज्यते ।

जातिप्रथया कर्मनिश्चये तत्रैव योग्यताविकासः कर्तुं शक्यते, पैतृकसंस्कारसामाजिकपर्यावरणानुसारेणैव योग्यताया विकाससंभवात् । नहि योग्यता क्वचिदेवोपयुज्यते । कौशलञ्च सर्वत्रैव हितकरं भवति । नहि चिकित्सा कौशलमिव शिल्पकौशलं न पूज्यते। न वा नौनिर्माणसंचालनादिकौशलमुपेक्षणीयं भवति । तेन 'पैतृकव्यवसायस्वीकारेण योग्यताविकासावसरप्राप्तिर्न' इत्यप्यपास्तम्, पैतृकव्यवसायेऽपि योग्यताया विकाससंभवात् । 'येन यस्य पैतृकादिसम्पर्को न भवति तत्रैव तस्य योग्यताव्यक्तिमेष्यते, न पैतृकव्यवसाय' इत्युक्तिस्तु मूढजनस्यैव शोभते ।

यदुक्तम् 'जातिप्रथया धनश्रमादीनामसमानं वितरणं जातम् । वहवश्च साधवो ब्राह्मणाः पुरोहिताश्च किञ्चिदकृत्वैव बहुधनभागिनो भवन्ति' तदपि जातिद्वेषमूलकमेव, विपरीतस्यैव सुवचत्वात् । अद्य राष्ट्रसंस्कृतिधर्मदर्शनाधारभूतसंस्कृतसाहित्यवेदादिशास्त्राभ्यासपरायणा ब्राह्मणा बहुश्राम्यन्तोऽप्यत्यल्पं लभन्ते । अन्ये बाह्यविद्याभ्यासिनो लक्षकोटिधनाधिपतयः संवृताः, पुरोहिताः कथञ्चित् किञ्चिदेव लभन्ते। नेतारः सुधारकाश्च महापात्रा महाब्राह्मणाश्च भूत्वा सर्वं ग्रसन्ति ।

अत . एव—'भारत में जातिभेद' परिशिष्टे—कश्चिज्जल्पति—'आर्या अन्यदेशादागतास्ते न मूलभारतीयाः' तदेतत्सर्वथा निर्मूलम् । आधुनिकैरपि तत्खण्डितत्वात् । अत एव 'भारतप्राचीननिवासिनां सुसंस्कृतानां सकाशाद्

बहवो गुणाः विचारा वा आर्यैः संगृहीताः' इति तत्तुच्छम्, यतः शास्त्र-प्रवणबुद्धयः शास्त्रविहिताचारा एव भवन्ति। मुसलिमादिशासनकालेऽपि शास्त्राचारव्यवहारप्रवृत्तिदर्शनात्। अत एवार्यागमनानन्तरागतानां सकाशादपि विचाराचारग्रहणं निष्प्रमाणकमेव।

यदुक्तम् 'नृतत्त्वविज्ञानेन भारतीयेषु मिश्रणं ज्ञायते। सीमान्तबलूचिस्तान-वासिषु तुर्कमिश्रणम्, पारसीकमिश्रणमपि क्वचित्, पञ्चनदराजस्थानकश्मीर-वासिषु जाटेषु च आर्यमिश्रणम्, मराठाब्राह्मणेषु शकद्रविडमिश्रणम्, वङ्गी-योत्कलीयब्राह्मणकायस्थादिषु मङ्गोलमिश्रणम्, तेन वेदादिसंस्कृतसाहित्य-वर्णितेभ्योन्यैव भारतीयजनते'ति तत्तुच्छम्, भारतस्य पूर्णप्रकृतमत्वेन सर्वर्तु-विकाशशालित्वात् भारतीया एव विविधरङ्गाकृतिमन्तः, देशर्त्वादीनां रङ्गा-कृतिहेतुत्वदर्शनात्। क्वचित्पीताः, क्वचित्कृष्णाः, क्वचिद्गौराः। भारते तु सर्व-विधा भवन्ति न तेन विविधजातिभिर्मिश्रणं कल्पयितुं युक्तम्। वैदिकधर्म-निष्ठानामार्याणामाचारविचारधर्मसम्बन्धिमूलं वेदादिशास्त्रेष्ववश्यं लभ्यते।

यदुक्तम् 'वेदेषु जातिवादस्य धर्माङ्गता न दृश्यते' इति तन्मोहमूलकमेव। वेदाध्ययनतदर्थयोगाद्यनुष्ठानस्य जन्ममूलकजात्यधिकारमूलकत्वात्।

यदुक्तम् 'वेदेषु जातिप्रथा नास्ती'ति, तत्तुच्छं, परिहृतत्वात् परिहरिष्य-माणत्वाच्च।

यदुक्तम् 'मन्त्रे ब्राह्मणे उपनिषदि च स्पर्शास्पर्शव्यवस्था नास्ती'ति तन्न, छान्दोग्ये उषस्तिचाक्रायणस्य हस्तिपकजलग्रहणपरिहारदर्शनात् अन्नग्रहणं तु प्राणात्यये एवानुमतम्। तदुक्तम् 'सर्वान्नानुमतिः प्राणात्यये तद्दर्शनात्' (ब्र० सू० ३।४।२८) गौतमधर्मसूत्रे १७।१५।१६ इत्यत्र अभोज्यान्ना उक्ताः। वशिष्ठधर्मशास्त्रे १४।१।४ इत्यत्र अभोज्यन्नानां प्रलम्बमानसूची दृश्यते।

मनुस्मृतौ चतुर्थेऽध्याये—

'नाश्रोत्रियतते यज्ञे ग्रामयाजिकृते तथा।
स्त्रिया क्लीबेन वा साकं न भुञ्जीत ब्राह्मणः क्वचित्॥२०५॥
मत्तक्रुद्धातुराणाञ्च न भुञ्जीत कदाचन।
केशकीटावपन्नञ्च पदा स्पृष्टञ्च कामतः॥ २०७॥
भ्रूणघ्नावेक्षितञ्चैव संस्पृष्टञ्चाप्युदक्यया।
पतत्रिणावलीढं च शुना संस्पृष्टमेव च॥ २०८॥

गवा चान्नमुपाघ्रातं घुष्टान्नञ्च विशेषतः ।
गणान्नं गणिकाञ्च विदुषा च जुगुप्सितम् ।। २०९ ।।
स्तेनगायनयोश्चान्नं तक्षणोवार्धुषिकस्य च ।
दीक्षितस्य कदर्यस्य बद्धस्य निगडस्य च ।। ११० ।।
अभिशस्तस्य षण्ढस्य पुंश्चल्या दाम्भिकस्य च ।
शुक्तं पर्युषितं चैव शूद्रस्योच्छिष्टमेव च ।। २११ ।।
चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः ।
उग्रान्नं सूतिकान्नं च पर्याचान्तमनिर्दशम् ।। २१२ ।।
अनर्चितं वृथामांसमवीरायाश्च योषितः ।
द्विषदन्नं नगर्यन्नं पतितान्नमवक्षुतम् ।। २१३ ।।
पिशुनानृतिनोश्चान्नं क्रतुविक्रयिणस्तथा ।
शैलूषतुन्नवायान्नं कृतघ्नस्यान्नमेव च ।। २१४ ।।
कर्मारस्य निषादस्य रङ्गावतरकस्य च ।
सुवर्णकर्तुर्वेणस्य शस्त्रविक्रयिणस्तथा ।। २१५ ।।
श्ववतां शौण्डिकानाञ्च चैलनिर्णेजकस्य च ।
रञ्जकस्य नृशंसस्य यस्य चोपपतिर्गृहे ।। २१६ ।।
मृष्यन्ति ये चोपपतिं स्त्रीजितानाञ्च सर्वशः ।
अनिर्दशञ्च प्रेतान्नमतुष्टिकरमेव च ।। २१७ ।।
राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
आयुः सुवर्णकारान्नं यशश्चर्मावकर्तिनः ।। २१८ ।।
कारुकान्नं प्रजां हन्ति वलं निर्णेजकस्य च ।
गणान्नं गणिकान्नञ्च लोकेभ्यः परिकृन्तति ।। २१९ ।।
पूयं चिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम् ।
विष्ठावार्धुषिकस्यान्नं शस्त्रविक्रयिणो मलम् ।। २२० ।।
नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः ।
आददीताममेवास्मादवृत्तावेकरात्रिकम् ।। २२३ ।।
आर्धिकः कुलमित्रञ्च गोपालो दासनापितौ ।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ।। २२४ ।।

अगस्त्यादयस्तु सिद्धा विधिनिषेधातीतास्तपोविशेषाच्छुद्धयन्तीति न ते दृष्टान्तार्हाः। यत्र २।८।१२।९ स्वधर्मनिष्ठानां भोज्यान्नता शूद्रवर्जम् (२।६।१३) तस्यापि धर्मोपनतस्येति रीत्या धर्मनिष्ठस्य शूद्रस्यापि भोज्यान्नतोक्तेति तदसत् शुष्कान्नग्रहणस्योक्तवाक्यैरभ्युपगतत्वात्। मनुस्मृतौ मूलब्राह्मण्यादि-जातिभ्यो वर्णसाङ्कर्यमूलका अन्येऽपि जातिभेदाः उक्तास्ते च रक्तमिश्रणहेतुकाः। नृतत्त्वविदो रेजलीप्रभृतयोऽपि रक्तमिश्रणाज्जातिभेदान् मन्यन्ते। तद्रीत्या आर्य्यरक्ताधिक्याज्जातेरुत्कृष्टता, आर्यरक्तन्यूनत्वाज्जातिनिकर्षः। अनुलोमविवाहात् प्रतिलोमविवाहात् संस्कारभेदाच्च जाताः, वर्णबहिष्कृता-ज्जाताः, अन्तर्जातीयविवाहाच्च जाताः पञ्चविधा जातयो भवन्ति।

यदुक्तं 'शतपथे ४।१।५।७ सुकन्यायाश्च्यवनब्राह्मणेन विवाहः बृहद्देवताया ५।५० रथवत्याः पुत्र्याः श्यावाश्येन विवाहश्च जातः, परं सन्ततयो पितृ-जातीया एव भवन्ति स्म, न तृतीया इति तन्न, मन्वादिस्मृतिषु अनुलोम-प्रतिलोमजानां जातीनां स्पष्टं वर्णनात्। सिद्धानामृषीणां संकल्पवशात् क्वचित् पितृजातीया क्वचिच्च मातृजातीया भवन्तीत्यपवाद एव। वर्णसंकरता न केवलं भावनैव किन्तु वस्तुस्थितिमूलिका सामर्थ्यातिशयात् कृतादिषु युगेषु केचिदपवादभूताः पितृजातीया अपि जायन्ते स्म। अर्वाचीनेषु सामर्थ्य-ह्रासात् वर्णव्यत्यासेन विवाहे यथाश्रुताः संकरा एव भवन्ति।

एवमेव 'वैदिकसाहित्यस्यान्तिमनिर्माणकाले स्पर्शास्पर्शभावना साङ्कर्य्य-प्रतिरोधभावना चोदीयमानासी' दिति कथनमपि निर्मूलम्, मन्त्रब्राह्मणोपनिषदा-मपौरुषेयवेदरूपत्वेन नित्यत्वात्तत्र निर्माणकालकल्पनाया अलीकत्वात्। एवमेव आर्य्येतरेभ्यः पार्श्ववर्तिभ्यः, सहवासिभ्यो जातिभेदभावना आर्येषु समायातेति कल्पनाऽपि निःसारा, वेदेष्वेव ब्राह्मणादिजातिभेदस्योक्तत्वात्। सुधारकाः परस्परविरुद्धभाषिणो भवन्ति क्वचिज्जातिभेदो नास्त्येवेति वदन्ति, क्वचित्पा-र्श्ववर्त्तिभ्यो जातिभेद आयात इति, क्वचित् मूलजातिभ्यः संकरजातिभेदमपि वदन्ति। एवमेवान्यानपि जातिभेदान्प्रलपन्ति।

रिजलीरीत्या कस्यचित्समूहस्य (कबीला) परिवर्त्तितरूपाः काश्चिज्जातयः। यथा आभीरनाम्नी काचिन्मानवश्रेणिरितस्ततो भ्राम्यमाणा भारतमागत्य विशालहिन्दूजातेरङ्गमुपगता। ताश्च स्वाभ्यन्तरे स्वश्रेणीगतं विशेषसंघटनं रीतीर्नीतीश्च पालयन्ति। ब्राह्मणश्रैष्ठ्यञ्चाभ्युपगच्छन्ति। विवाहश्राद्धेषु ब्राह्म-

णान् पूजयन्ति। डोम दुसाध प्रभृतयस्तु ब्राह्मणश्रैष्ठ्यमभ्युपगच्छन्ति। तथापि तेषां ब्राह्मणसंपर्को नास्त्येव। भङ्गी चमारलुहारप्रभृतयः कार्यविशेषार्थमेव निर्मिता। काश्चिच्च जातयः स्वतन्त्रसम्प्रदायरूपाः। यथा गृहिणः संन्यासिन अतीतजातीया जाताः। लिङ्गायताश्च शैवसाधव एव। वङ्गीया वैष्णवाश्च वोष्टमजातीया जाताः। अनेकजातिमिश्रणत्काश्चिज्जातय उत्पन्ना इति सुधारका मन्यन्ते। रिजलीरीत्या मुण्डाजातेर्नव भेदा खङ्गारमुण्डा, खरियामुण्डा, कोङ्कमतमुण्डा, दारमुण्डा, सवरमुण्डा, करङ्कमुण्डा, नागवंशीमुण्डा, ओरावं-मुण्डा। नेशनलकास्ट नम्नी राष्ट्रियजातिश्च। यथा नेपाले नेवारजातिः। ताश्चानेका उत्कृष्टापकृष्टा जातयः। तत्र हिन्दूधर्मो बौद्धधर्मश्च प्रचलतः। मराठा जातिरपि राष्ट्रियजातिरीतिनीतिपालनाभावान्मूलजातितो विच्छिन्ना। मूलतो विच्छिन्ना सती काचिज्जातिर्जात्यन्तरं भवति। मन्वादिषु व्रात्यपदेन ताः व्यपदिश्यन्ते।

वस्तुतस्तु जातिलक्षणापरिज्ञानादेवैते भ्राम्यन्ति। नित्यत्वे सत्यनेकसमवेत-धर्मस्यैव सामान्यमिति जातिरिति च व्यपदेशो भवति। तद्भेदादेव जातिभेदो भवति। यथा पृथिव्यां पृथिवीत्वधर्मो नित्योऽनेकेषु पृथ्वीभेदेषु च समवेत इति स पृथिवीत्वजातिरुच्यते तथैव घटकपालादिषु घटत्वकपालत्वादयोऽपि धर्मा भवन्ति। तेनैव घटत्वादयोऽपि जातिभेदा अभ्युपगम्यन्ते। समूहविशेषा-विशेषधर्मैर्व्यवह्रियन्ते। तेऽपि जातिविशेषा उच्यन्ते। हिन्दुमुस्लिमादिजातयस्तु धर्ममूलिकाः। समानजातीया अपि तत्तधर्मदीक्षितास्तत्तन्नाम्ना व्यवह्रियन्ते। चीना आङ्गलादयो देशादिकृताकृतिरङ्गविशेषैश्चीनादिनाम्ना व्यवह्रियन्ते।

केनचिदैतिहासिकेन पौराणिकेन व्यक्तिविशेषेण विशिष्टपशुपक्ष्यादिसंकेतेन वाऽत्मान व्यपदिश्यमानाः समानभाषाभाषिणः समानाचारविचाराः प्रदेश-विशेषं स्वमूलस्थानं घोषयन्तः पाश्चात्त्यैः ट्राइबपदवाच्याः मन्यन्ते। त एव सगोत्रा उच्यन्ते। ते चान्यगोत्रीयैर्विवाहादि सम्बन्धं कर्त्तुं प्रभवन्ति। अन्ये तु (काष्ट) जातिशब्देन व्यपदिश्यन्ते। तैर्विजातीयैर्विवाहादिककर्त्तुं न शक्नुवन्ति। जात्यन्तर्गतैर्भिन्नगौत्रैस्तु विवाहः कर्त्तुं शक्यः। तेष्वन्तर्विवाहो बहिर्विवाहो-ऽनुलोमविवाहश्च प्रचलन्ति। तत्र ये स्वजातीयैरेव विवाहार्थं बाध्यास्तत्रा-न्तर्जातीयविवाहः, यत्र विजातीयैरेव विवाहाय बाध्यन्ते ते बहिर्विवाहा, यत्र स्त्रियाः स्वसमानैः स्वोच्चजातीयैरेव विवाहाय बाध्यन्ते ते अनुलोमविवाहाः।

भारतीयदृष्ट्या तु ब्राह्मणाः स्वश्रेणीष्वेव पितुरसगोत्रैर्मातुरसपिण्डैश्च विवाहं कर्त्तुं शक्नुवन्ति। स्वगोत्रबाह्यैरेव स्वजातिभिर्ब्राह्मणैरेव तत्रापि स्वश्रेणीष्वेव गौडकान्यकुब्जसारस्वतसरयूपारीणादिष्वेव विवाहं कर्त्तुं शक्नुवन्ति। निम्नजातीयाभिः कन्याभिरेव कृतो विवाहोऽनुलोमविवाह उत्कृष्ट जातीयाभिः कन्याभिः प्रतिलोमविवाहः। भारतीयशास्त्रदृष्ट्या कर्माणि न निरङ्कुशानि किन्तु शास्त्रनियन्त्रितान्येव। अतएवात्र जात्यनुसारीण्येव कर्माणि भवन्ति। अतएव संकरजातीनां विभिन्नानि जीविका कर्माण्युक्तानि। ताश्च जातयो देशभेदेन भिन्ननामभिर्व्यपदिश्यन्ते।

युवतिविवाहोऽनुचितः शास्त्रेषु निषिद्धत्वात्। पितृगृहे रजःप्रवृत्तौ पित्रोर्भर्तॄणाञ्च पातकस्मरणात्। रजः प्रवृत्तेः प्रागेव विवाहे सति विकारे स्वपतावेव चित्तप्रवृत्तिरन्यथा रजः प्रवृतिजनितविकारोदये यत्र क्वापि मनः प्रवृत्तौ क्षेत्रशुद्धिबाधावश्यम्भाविनी। वरनिर्णयोऽपि पित्रादिकर्त्तृक एव युक्तः, बालिकाया निर्णयाक्षमत्वात्। युवत्या अपि कामरागाक्रान्तमनस्कत्वेन रूपयौवनादिष्वेव प्रवृत्तिसंभवात् कुतः श्रुतविद्याक्षमतादिसद्गुणान्वेषणे प्रवृत्त्यसंभवाच्च। अत एवाद्यत्वे योग्यता निर्णयार्थमसकृत् (कोर्टशिप) संसर्गेऽपि न योग्यवरवरणं भवति प्रत्युतधर्महानिरेव जायते।

यदुक्तं 'केनचिद् ब्राह्मणेनाज्ञानात् कस्यचिच्चर्मकारगृहे भोजनं कृतम् ज्ञाने जाते तं दण्डयितुं प्रवृत्तः ब्राह्मणः केनचित्पण्डितम्मन्येन ईसायीमहाशयेनोक्तः कोऽत्र दोषो जातः? त्वयि तस्मिंश्च को भेदः? समानजन्ममरणशीलत्वे समानभोजनपानरक्तमांसादिमत्त्वेन तत्स्पृष्टभोजनकरणे को दोषः? ब्राह्मणश्च निरुत्तरः सन् जातिभेदभावं जहौ' इति तत्तुच्छम्। समानजन्मादिमत्त्वेन सर्वसमत्वेन भगिनीदुहितृमात्रादिष्वपि भार्य्यायामिव सन्तानोत्पादनप्रसङ्गात्। दुराचाररता काचिन्नारी स्वपतिना दृष्टा समानजन्ममरणरक्तमांसादिमत्त्वे त्वयि तस्मिंश्च को भेदः इत्युवाच। सोऽपि निरुत्तरः सन् पत्न्या दुराचारं चक्षमे। तथात्वे को नाम दुराचारः? किमर्थञ्च स निन्द्यते? वेश्यावृत्तिविरोधश्च किमर्थः? रत्नभेदस्य सर्वसाधारणगम्यत्वेऽपि रत्नशास्त्राभ्यासजन्यसंस्कारसंस्कृतमनःसचिवनेत्रगम्यत्वमस्त्येव तथैव धर्मशास्त्राभ्याससंस्कृतमनोभिरेवपरमेश्वरमुखादिशक्तिजत्वादिना ब्राह्मणमातापितृकत्वादिना ब्राह्मण्यादिकं ज्ञातुं शक्यमेव जानपदीषु विद्यातः पुरुषविशेषा भवन्ति। भूयोविद्यः

प्रशस्यो भवति १।१६।१० निरुक्ते विद्यादिभिः प्रशंसा भवति। जन्मना वर्णाः शुभाशुभकर्मभ्यामुत्कर्षापकर्षौ भवतः। तत एव कृष्णयुधिष्ठिरादयः शुभगुणकर्माणोऽपि क्षत्रिया एव न ब्राह्मणा जाताः। 'युद्धे चाप्यपलायन'मिति क्षत्रियधर्मविरुद्धं पलायनं कुर्वतःकर्णस्य ( कर्णप. ५३।३८।४९।५६ ) 'ब्रह्मवर्चसो पाण्डुनन्दन' ( उद्योग ५३।८ ) इति ब्राह्मणगुणवतोऽपि युधिष्ठिरस्य क्षत्रियत्वमेव।

अतएव भीष्मेणोक्तम् 'क्षत्रधर्मरतः पार्थ पितॄन् देवाश्च तर्पय' (महा १३।११) दुष्कर्मापि रावणो ब्राह्मण आसीत्तत एव तद्वधेन ब्रह्महत्यानिराकरणार्थमश्वमेधानुष्ठानं रामस्य प्रसिद्धम्। स्वधर्मनिष्ठतया साद्गुण्येन क्षत्रवैश्यौ ब्राह्मणत्वे तु ब्राह्मणसाधारण्ये जाते विशेषता नैव स्यात्। यथा आभामात्रेण मणोकृताश्मसुमणे (चिन्तामणेः) रश्मतैव प्रशंसनीया, मणित्वे तु मणि साधारण्यमेव स्यात्। अतएव 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इत्युक्तम् (गोता ३।३५)। अत्र स्वपरशब्दाभ्यां जन्मना ब्राह्मणादयः गृह्यन्ते। स्वब्राह्मणादिधर्मपालनेन ते महत्त्वं यान्ति तद्भिन्नपरक्षत्रियादिधर्मपालनेन निन्द्यन्ते। यदि कर्मणैव वर्णव्यवस्था तदा सर्वोऽपि स्वधर्म एव। यमेवधर्मं चरिष्यति तदनुरूपो वर्णो भविष्यतीति क्वपरधर्मानुष्ठानप्रसङ्गोऽपि ?

'आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम्। दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णूरथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्।' ( शु० यजु० २२।२२ ) अत्र मन्त्रे ब्राह्मणस्य ब्रह्मवर्चसम्। क्षत्रियस्य शूरत्वं च प्रार्थितम्। ब्रह्मवर्चसादि गुणवतामेव ब्राह्मणादित्वे तत्कामना व्यर्थैव स्यात्। नहि कुण्डलिनः कुण्डलप्रार्थना युज्यते। ब्राह्मोऽजातौ, ( पा० सू० ६।४।१७१ ) इति रीत्या अजातौ ब्राह्मो भवति जातौ त्वपत्यार्थके प्रत्यये ब्राह्मणो भवति।

तथा च मन्त्रार्थः—हे ब्रह्मन् ब्राह्मणो ब्राह्मणत्वजातिविशिष्टो ब्राह्मणपुत्रः ब्रह्मवर्चसी जायताम्। एवं यस्य कस्यापि शूरत्वेन क्षत्रियत्वे राजन्यः शूरो जायतामित्याशीरपि व्यर्थैव स्यात् शूरत्वगुणेन क्षत्रियत्वे शूरः शूरो जायतामिति पिष्टपेषणमेव। 'राज्ञोऽपत्ये जातिग्रहणं कर्तव्यम् राजन्यो नाम जातिः।' महाभाष्ये ( पा० सू० ४।१।१३७ ) 'क्षत्रिया जातौ प्रतिपिपादयिषितायां राजन्य-

शब्दप्रयोगः वैश्ये शूद्रे वा राजापत्ये राजनशब्द प्रयोग इति तत्र कैय्यटः। ( जै० सू० २।३।३ ) शाबरभाष्येऽपि क्षत्रियस्य राजसूयविधानात् 'राजा स्वराज्यकामः राजसूयेन यजेते'ति।

ननूक्तं यौगिको राजशब्द इति, एतदप्युक्तम् यतो जातिवचन इति, क्षत्रिये तु प्रत्यक्षं राजशब्दं प्रयुञ्जानान् उपलभामहे, तस्माज्जातिवचनो राजशब्दः। तस्मान्मन्त्रे राजन्यशब्दो क्षत्रियजातिपर एव।' अत्र मन्त्रे शतपथः, 'ब्राह्मण एव ब्रह्मवर्चसं दधाति तस्मात्पुरा ब्रह्मवर्चसीत्यर्थे ( १३।१।९।१ ) 'तद्धयेव ब्राह्मणेन एष्टव्यम् यद् ब्रह्मवर्चसी स्या'दिति ( श० १ ९।३।१६ ) अत्र ब्राह्मणस्य ब्रह्मर्चसीति राजन्यस्य शूरेति विशेषणे एतेन वेदे जन्मनैव वर्णव्यवस्था।

यत्तु 'हे परमात्मन्। देशेऽस्मिन् ब्रह्मवर्चो युक्ता ब्राह्मणाः शूराः क्षत्रिया भवन्त्विति प्रार्थने'ति तन्न जन्मना वर्णाभावे विशेषणानर्थक्यात्। 'य एव ब्रह्मवर्चसी स एव ब्राह्मणः, य एव शूरः स एव राजन्य इति व्याख्यानं त्वपव्याख्यानम्, तादृक्पदाभावात्। दुर्जनतोषन्यायेन तथाभ्युपगमेऽपि यैव दोग्ध्री सैव धेनुः य एव वोढा स एवानड्वान् इति वैपरीत्यापत्तेः। दोग्ध्र्याश्च्छाग्यामहिष्याश्चापि धेनुत्वापत्तेः। वोढुर्महिषस्य खरस्य वानुडुद्त्वापत्तेः, शीघ्रगामिनो मनुष्यस्यापि सप्तित्वापत्तेश्च। 'विद्वांसम् ब्राह्मणम्' (अथर्व शौ० सं० १३।३।१) अत्रापि विदुष एव ब्राह्मणत्वे ब्राह्मणस्य विद्वांसमिति विशेषणानर्थक्यमेव। 'गुणवतो ब्राह्मणान् भोजयेत्' ( मानवगृह्य सू० १।१६।१ ) अत्र गुणवद्विशेषणेन निर्गुणस्यापि जन्मना ब्राह्मणत्वं सिद्धमेव गुणवत एव ब्राह्मणत्वे विशेषणानर्थक्यात्। 'संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्' इत्युक्तेः। 'यदन्ये शतं याचेयुर्ब्राह्मणा गोपतिं वशाम्। अथैनां देवा अब्रुवन्नेवंह विदुषो वशा॥' ( अथर्व शौ० १२।४।२२ ) शतसंख्याका अन्ये ब्राह्मणा गोपतिं। वशां याचेयुः। परं देवानां मते विदुषो ब्राह्मणस्यैव वशा विदुष एव ब्राह्मणत्वेऽन्येषां ब्राह्मणत्वमेव न स्यात्कुतोऽन्ये ब्राह्मणा इत्यविदुषां ब्राह्मणत्वमुक्तम्? तस्मादविदुषामपि ब्राह्मणत्वं स्यादेव।

एवमेव 'यत्र ब्रह्म च क्षत्रञ्च सम्यञ्चौ चरतः सह। तत्पुण्यं लोकं प्रज्ञेषम्। यत्र देवाः सहाग्निना॥' ( शु० य० वाजसनेय सं० २०।२५ ) यत्र ब्राह्मणक्षत्रिययोः समीचीनत्वं तस्य पुण्यदेशत्वमुक्तम्। तेन तयोरसमीचीनत्वेऽपि संभवत्येव जन्मना ब्राह्मणत्वादिकम्। कर्मणा वर्णपक्षे तु ब्राह्मणस्यासमीचीनत्वं न संभवत्येव। 'चत्वारि वाक्यपरिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः'

( ऋ० सं० १।१५४।४५ ) अत्र मनीषीति ब्राह्मणविशेषणं व्यर्थमेव त्वन्मते मनीषिण एव ब्राह्मणत्वात्। 'वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत।' ( मनु ३।९६ ) इत्यनेनापि वेदतत्त्वार्थाविदुषोऽपि ब्राह्मणत्वं सिद्धयति। 'विद्यातपः समृद्धेषु हुतं विप्रमुखाग्निषु।' ( मनु० ३।९८ ) इति विद्यातपःसमृद्धिरहितेष्वपि विशेषणसार्थक्याय ब्राह्मणत्वं सिद्धयति, अन्यथा विशेषणानर्थक्यमेव। जन्मना ब्राह्मणत्वेनैव विद्यादिराहित्ये ब्राह्मणस्याधमत्वं विद्यादिसाहित्येनोत्तमत्वं सिद्धयति। महाभाष्येऽपि तपः श्रुताभ्यां हीनस्य ब्राह्मण्यां ब्राह्मणाज्जातस्य जातिब्राह्मणत्वमेवोक्तं न शूद्रत्वम्। तत्र तपःश्रुतयोः क्षत्रियेष्वपि संभवात् योनेरेव ब्राह्मण्ये मुख्यं कारणत्वम्। योनेरब्राह्मणेष्वसंभवात्। तेन तपःश्रुतयोः ब्राह्मणस्यालङ्कारत्वमेव। तयोरुत्कर्षमात्राधायकत्वं न स्वरूपाधायकत्वम्। 'विद्यातपोभ्यां भूतात्मा शुद्धयती'ति ( ५।१०९ ) मनूक्तलक्षणे च स्वरूपस्यैव निर्देशोनोत्कर्षापकर्षयोः। यथा रत्नलक्षणो कीटानुवेधादिरहितत्वमनादेयं तद्वत्। अत एव—

"त्रीणि यस्यावदातानि विद्यायोनिश्च कर्म च।
एतद् विद्वन् विजानीहि ब्राह्मणाग्र्यस्य लक्षणम्।"
( ४।१।४८ )

महाभाष्ये योन्या ब्राह्मणत्वं विद्याकर्मभ्यां ब्राह्मणाग्र्यत्वमुक्तम्। तेन वेदादिषु ब्राह्मणशब्दो जन्मना ब्राह्मणजातिपर एव। तत एव तस्य ब्रह्मवर्चं आदि प्रार्थना संगच्छते, अप्राप्तस्यैव प्रार्थनीयत्वात्। तत एव 'ब्रह्म ( ब्राह्मणः ) असृज्यत' ( सृष्टः ) ( यजु० वा० स० १४।२८ ) 'क्षत्रमसृज्यत' ( १४।२९ ) 'शूद्रार्य्यौ असृज्येयाताम्' ( १४।३० वा० सं० सं० ) अत्र शूद्रश्च अर्यो वैश्यश्चेति समासः 'अर्यःस्वामिवैश्ययोरिति पाणिनिस्मरणात्। ब्राह्मणक्षत्रियशूद्रवैश्यानामुत्पत्तय उक्ता। न तूत्पन्नानां विद्यादिभिर्ब्राह्मणत्वादिकमुक्तम्। यथा घटः सृज्यते इति जन्मनैव घटत्वं तथैव जन्मनैव ब्राह्मणत्वादिकमिति ब्रह्मासृज्यत इत्युक्तम्। एवमेव—

'गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायान्तं हन्यादेवाविचारयन्।'
( मनु० ८।३५० )

इत्यत्र बहुश्रुतविशेषणेनाल्पश्रुतोऽपि ब्राह्मणो भवतीति ज्ञायते। आततायी क्रूरकर्माऽपि ब्राह्मणो भवतीत्यपि ज्ञायते। कर्मणा तत्त्वे क्रूरकर्मणः कुतो ब्राह्मणत्वम् ?

'नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत्।
ब्राह्मणे चाननूचाने काङ्क्षन् गतिमनुत्तमाम्॥'

(मनु० स्मृ० २।२४२)

अत्र वेदज्ञो गुरुर्योग्योऽपि अब्राह्मणो भवति तत्र शिष्यस्यात्यन्तिकवासो निषिद्धः। अननूचानस्यापि वेदानभिज्ञस्यापि ब्राह्मणत्वमुक्तम् (गौ० द० १।२।१३) व्रात्यस्यापि (उपनयनवेदाध्ययनरहितस्यापि) ब्राह्मणत्वमुक्तम्।

'न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम्।
राष्ट्रादेनं बहिष्कुर्य्यात् समग्रधनमक्षतम्॥'

(मनु० ८।३८०)

अत्र सर्वपापलिप्तस्यापि ब्राह्मणत्वमुक्तम्। तेन गुणकर्मभिर्वर्णवादः सर्वथा खण्डितः। अयं श्लोको मृच्छकटिकेऽपि समुद्धृतः शब्दान्तरेण।

'अयं हि पातकी विप्रो न वध्यो मनुरब्रवीत्।
राष्ट्रादस्मात्तु निर्वास्यो विभवैरक्षतैः सह॥'

(९।३९)

'न ब्राह्मणो हिंसितव्यः' (अथर्व ५।१८।६) हिंसार्हस्याततायिन एवात्र वधनिषेधः, प्राप्तौ सत्यां निषेधस्य सार्थक्यात्। 'ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यम्' (यजु० वा० सं० ७।४६) अत्र प्रशस्तपितृमद् ब्राह्मणप्राप्तिप्रार्थना गुणकर्ममूलकत्वे तु पितृप्राशस्त्यमनपेक्षमेव स्यात्।

'अश्रोत्रियः पिता यस्य पुत्रः स्याद्वेदपारगः।
अश्रोत्रियो वा पुत्रः स्यात् पितास्याद्वेदपारगः॥'

(३।१३६ मनुस्मृ०)

ज्यायांसमनयोर्विद्याद् यस्य स्यात् श्रोत्रियः पिता।
मन्त्रसंपूजनार्थं तु संस्कारमितरोऽर्हति॥

(३।१३७)

एतैरपि जन्मनैव ब्राह्मणाद् ब्राह्मण्यादिषु जातानामेव ब्राह्मणत्वादिकम् ।

'यथेमां वाच कन्याणीमावदानि जनेभ्यः ब्रह्म राजन्याभ्यां शूद्राय चार्य्याय च' ( शुच्य० २६।२ ) इहापि जन्मना ब्राह्मणादय उक्ताः । कर्मणा वर्णपक्षे तु यः पूर्णज्ञानवान् स एव ब्राह्मणो यश्च सर्वथा मूर्खः स शूद्रः तन्मतेनात्र मन्त्रे परमात्मा ब्राह्मणादिभ्यो वेदमुपदिशति तथान्यांश्चोपदेष्टुमादिशति, तच्च नोपपद्यते, पूर्णज्ञानिने वेदोपदेशवैयर्थ्यात् । सर्वथा मूर्खाय शूद्रायापि तदुपदेशो व्यर्थस्तस्य ग्रहणसामर्थ्याभावात् । किञ्च यदि सर्वेभ्यो वेद उपदिष्टस्तर्हि सर्वैर्ब्राह्मणैर्भवितव्यम् । यद्युपदेशे समेऽपि कैश्चिदवगतं कैश्चिन्नावगतं तर्हि परमात्मोपदेशे त्रुटिः कल्प्या । न च तद्युक्तं परमात्मनः सर्वदोषगन्धशून्यत्वात् किन्तु जन्मनैव ब्राह्मणादिषु वैलक्षण्यमासीत्, तेन सर्वेषां न समं फलम् ।

वस्तुतस्त्वत्र यजमानो यागेषु पीयतां भुज्यताम् दीयतामिति सूनृता कल्याणी वाणी सर्वेभ्यो वदति तथैव वक्तुं स्वानुपदिशति । ब्राह्मणोऽस्य मुखमासीदिति परमात्मना सृष्ट्यादौ स्वमुखादिभ्यो ब्राह्मणादय उत्पादिता तेन जन्मनैव वर्णव्यवस्था ।

यदुक्तं 'मुखादिशब्दाः प्रथमान्ता न पञ्चम्यन्ता तस्मान्नात्र मुखादिभ्य ब्राह्मणाद्युत्पत्तिरुक्ता प्रश्नोपक्रमविरोधाच्च । मुखं किमस्यासीत् किं बाहू किमूरु इति प्रश्नस्योत्तरे ब्राह्मणो मुखं, राजन्यो बाहू इत्यादिकमेव युक्तम् । तस्मादस्य समष्टिविश्वरूपस्य विराजो ब्राह्मणो मुखरूपो राजन्यो बाहुरूप- इत्येवार्थः श्लिष्यते' इति तन्न, संदिग्धार्थनिरूपणाधिकरणन्यायेन पद्भ्यां शूद्रोऽजायतेत्युपसंहारवाक्यानुरोधेन मुखादिभ्यो ब्राह्मणाद्युपत्त्यङ्गीकारेणैव ब्राह्मणादीनां मुखजत्वादिभिर्मुखादिरूपताङ्गीकारे दोषाभावात् । 'चन्द्रमा मनसो जातः चक्षोः सूर्य्योऽजायत । श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ।' ( मनु० ३१।१२ )

'नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्त्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकां अकल्पयन् । ( शु० य० ३१।१३ ) इति । बहुपञ्चम्यन्तानुरोधेन मुखबाहूरुशब्दानामपि पञ्चम्यन्तविपरिणमनस्य युक्तत्वात् । नचाकल्पयत इति ब्राह्मणादिकल्पनैवोक्तेति वाच्यम् । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।' ( ऋ० सं० ) 'लोकान् अकल्पयन्नि' त्यत्रेवात्राप्युत्पत्तिरेव मन्तव्या ।

तस्मात् 'समवर्त्तत' 'अकल्पयन्' 'आसीत्' 'अजायत' इत्यादि क्रिया

पदानि समानार्थकान्येव 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्प-श्रुताद्वेदो मामयं प्रहरिष्यति ॥' ( म० भा० आ० १।२६७ ) इतिरीत्या स्मृतिपुराणेतिहासानुरोधेनैव श्रुत्यर्थो निर्णेतव्यः, मन्त्रस्यास्य पुरुष-सूक्तस्थत्वात्। पुरुषसूक्ते च सहस्रशीर्षेति पुरुषस्य परमात्मन एव प्रकृतत्वात्, तस्यैव पुरुष एवेदं सर्वम्' इत्यनेन सर्वव्यापकत्वमुक्तम्, तस्यैव च 'अत्यतिष्ठद्दशाङ्गुल' मिति सृष्टिप्रपञ्चादपि महत्तरत्वमुक्तम्। ततः 'ततो विराडजायते'ति तस्मादेव ब्रह्माण्डात्मकस्य विराज उत्पत्तिरुक्ता। एवं ब्राह्मणोऽस्येति मन्त्रात्पूर्वं सृष्टिप्रसङ्ग एव प्रकृतः, परस्तादपि 'चन्द्रमा मनसो जात' इत्यादिभिश्चन्द्रसूर्य्यवायुप्राणाग्न्यन्तरिक्षद्युभूम्याद्युत्पत्तिरुक्ता। वन्यग्राम्यापशुनरमृगादिवेदानामुत्पत्तिः, 'अश्वाद्युत्पत्तिः, 'जातः' 'अजायत' 'जज्ञिरे' इत्यादिना प्रतिपादिता।

नह्यत्र वेददेवादिसृष्टयो मानवकृताः। पुरुषशब्दोऽपि न मानवपर किन्तु परमात्मपर एव तेन यथा तस्मात्परमात्मन एव वेददेवादिसृष्टिस्तथैव तस्मादेव ब्राह्मणादिसृष्टिः। मनुष्यादयः ईश्वरकृताः। मनुष्येषु ब्राह्मण-क्षत्रियवैश्यशूद्रान्त्यजादिजातिभेदा ईश्वरकृताः। 'मनुष्येषु ब्राह्मणादयो न सामान्यजातिषु किन्तु सामान्यविशेषात्मिका जातयः' इति सत्यार्थप्रकाशे ११ समुल्लास २४१-४२ पृष्ठे।

नच मुखादिति पञ्चम्या अभावे कथं मुखस्य कारणत्वमिति वाच्यम् आयुर्घृतमित्यायुषो घृतजन्यत्वेनाभेदोपचारवत् ब्राह्मणस्य मुखजन्यत्वेनाभेदोपचारात्प्रथमोपपत्तेः।

एवमेव 'आत्मा वै पुत्र नामासि' ( शत० १४।९।४।२६ ) यथात्र पुत्रस्यात्मजन्यत्वेऽपि सामानाधिकरण्यव्यपदेशस्तद्वदेव मुखजन्यत्वेऽपि मुखं ब्राह्मण इति सामानाधिकरण्यव्यपदेशः। एवमेव मृद् घट इत्यत्रापि जन्यजनकाभेदव्यवहारः।

श्रीमाध्वकृतभाष्योद्धृतबृहत्संहितायाम्—

'यथाहि पौरुषं सूक्तं विष्णोरेवाभिधायकम्।
यस्माद्यज्जायते चाङ्गाल्लोकवेदादिकं हरेः।
तन्नामवाच्यमङ्गं तद् यथा ब्रह्मादिकं मुखम् ॥

नारदीयवचनान्नाभेदोक्तिविरोधः १।२।२६ इति विष्णुपरत्वं पुरुष सूक्तस्य तस्माज्जातत्वेन चाभेदोक्तिसमर्थनञ्चोक्तम्।

पुरुषस्य मुखं ब्रह्मक्षत्रमेतस्य बाहवः ।
ऊर्वो वैश्यो भगवतः पद्भ्यां शूद्रोभ्यजायत ॥'
( भा० २।५।३७ )

'ब्राह्मणो मुखमिति कार्य्यकारणयोरभेदविवक्षया उक्तम्' श्रीधरी । अत एव ब्राह्मणः अस्य परमात्मनो मुखं मुखात् आसीत् उत्पन्न इत्यर्थः । मुखाद् इति स्थाने मुखं तु 'सुपां सुलुक्' ( पा० ७।१।३९ ) इति ङसेः स्थाने सुः नपुंसकलिङ्गत्वात् सु इत्यस्य स्थानेऽमि मुखमिति निष्पन्नम् ।

मुखं किमस्यासीदिति प्रश्नेऽपि मुखजत्वाद् ब्राह्मणोऽयस्य मुखमासीदित्येवोत्तरम् । यतो ब्राह्मणो जातस्तन्मुखं, यतो राजन्यो जातस्तद् बाहू इति, कार्य्येण कारणपरिचय इत्यपि संभवति । अस्य विराट्पुरुषस्य बाहू बाहुभ्यां किं जातम् । अत्रापि भ्यामिति स्थाने सु इत्यादेशः 'सुपां सुलु' गित्यनेन । उत्तरेऽपि बाहूभ्यां राजन्यः ऊरूभ्यां वैश्यः कृतः । लिङ्ग, वचनादीनामविवक्षितत्वाज्जातिशब्दत्वात् ब्राह्मण्यादीनामपि मुखादुत्पत्तिर्ज्ञेया ।

अतएव पुराणेषु तत्र तत्र ब्राह्मणादियुगलानामुत्पत्तिः वर्णिता । ततस्तत्पुत्रादीनामपि सकृदाख्यातनिर्ग्राह्यत्वाद् ब्राह्मणत्वजातिर्ज्ञेया । एकस्मात्परमात्मनः समुत्पन्नत्वेऽपि स्वस्वकर्मवशात्तत्तदङ्गशक्तिजातत्वेन ब्राह्मण क्षत्रियादिजातिभेदः । तेनैव चोत्कर्षापकर्षावपि जन्मनैव । तदुक्तं मनुनाऽपि—

'ऊर्ध्वं नाभेर्मध्यतरः पुरुषः परिकीर्तितः ।
तस्मान्मेध्यतमं त्वस्य मुखमुक्तं स्वयंभुवा ॥ ( १।९२ )

मुखजत्वाज्ज्येष्ठत्वाच्च ब्राह्मणस्य मेध्यतमत्वम्, क्षत्रियस्य मेध्यतरत्वम् । 'तदस्य यद्वैश्यः' ( अथर्व १९।६।६ ) मध्योत्पन्नत्वात् वैश्यो मध्यः । शूद्रोऽवरजत्वादपकृष्टः ।

'उत्तमाङ्गोद्भवाज्ज्यैष्ठ्यात् ब्रह्मणश्चैव धारणात् ।
सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः ॥ इत्यपि मनुः ( १।९३ )

अथवा सृष्टेः प्रकरणत्वात् अस्य मुखं मुखात् किमासीत् किमुत्पन्नम् ? 'सुपां सुलुक्' इति पञ्चम्या लुक् तथा बाहू बाहुभ्यां किमुत्पन्नम् ? ऊरू ऊरूभ्यां किमुत्पन्नम् ? पादौ पादाभ्याञ्च किमुत्पन्नम् ? सृष्टिप्रकरणत्वात्तदनुरोधेन विभक्तिव्यत्यासो न दोषाय । अन्यथा 'पद्भ्यामजायत' 'मनसो जातः' 'चक्षोरजायत' श्रोत्राद्, मुखाद्, इत्यत्र पञ्चमीस्थाने प्रथमा व्यत्ययः कर्तव्यः स्यात् । अथवा अभेदोपचारेण मुखं किं मुखस्य कार्यं किं ? बाहू किं बाह्वोः कार्य्यं किमित्यादि प्रश्नाः । एवञ्च सति बाहू

राजन्यः कृतः 'अस्य' इत्यस्यानुवृत्तिः। अस्य विराट्पुरुषस्य बाहू बाहुभ्यां भ्यामिति स्थाने सुपां सुलुगति सुः। अथवा भ्यामिति स्थाने पूर्वसवर्ण-दीर्घः। ( पा० सू० ७।१।३९ ) धीती मती सुष्टुती इतिवद् बाहू। अथवा आयुर्घृतमितिवदभेदोपचारात् बाहू राजन्यः कृतः उत्पन्नः। अस्य ऊरुभ्यां वैश्यः कृतः, जनितः। कृत इत्यनुवृत्तिः। 'व्यत्ययो-बहुलम्' ( पा० ३।२।१८५ ) इति विभक्तिव्यत्ययः। उपसंहारस्य 'पद्भ्या'मित्यनुरोधात् पूर्वपदेष्वपि पञ्चमी युक्तैव उपसंहारवचनेन वक्तुरभिप्रायावगमात्।

सिद्धान्तशिरोमणेर्गोलाध्याये प्रलयवर्णनप्रसङ्ग उक्तम्। 'ब्राह्मं लयं ब्रह्मदिनान्तकाले भूतानि यद् ब्रह्मतनुं विशन्ति।' तत्र तदीयमेव भाष्यम् तत्र ( ब्राह्मे लये ) अक्षीणपुण्यपापा एव लोकाः कालवशेन ब्रह्मशरीरं प्रविशन्ति। तत्र मुखं—ब्राह्मणाः प्रविशन्ति। बाह्वन्तरं क्षत्रियाः। ऊरु-द्वयं वैश्याः, पादद्वयं शूद्राः। ततो निशावसाने पुनर्ब्रह्मणः सृष्टिं चिन्तयतो मुखादिस्थानेभ्यः कर्मपुटान्तरत्वात् ब्राह्मणादयस्तत एव निःसरन्ति। अत्र स्पष्टं ब्राह्मणादयः प्रलयकाले ब्रह्मणो मुखादीन्यङ्गानि प्रविशन्ति, सृष्टि-समये च तत एव निःसरन्तीत्युक्तम्।

प्रशस्तपादीये भाष्ये—'स च महेश्वरेण विनियुक्तो ब्रह्मा मुखबाहूरुपादतः चतुरो ( ब्राह्मणादीन् ) वर्णान् अन्यानि उच्चावचानि भूतानि सृष्ट्वा' इत्युक्तम्। शिरोमणिप्रशस्तपादभाष्ययोः प्रामाण्यं श्रीदयानन्दोऽप्यङ्गीकरोति। कृष्णयजुर्वेदेऽपि 'प्रजापतिरकामयत प्रजायेय' इति। 'स मुखतस्त्रिवृतं निरमिमीत···ब्राह्मणो मनुष्याणां····तस्मात्ते मुख्याः। मुखतो हि असृज्यन्त। अश्वश्च शूद्रश्च। तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः। नहि देवता अन्वसृज्यत। तस्मात् पादावुपजीवतः पत्तो हि असृज्येताम्' ( तै० सं० ७।१।४।१ ) मीमांसाभाष्ये १।४।२४ श्रुतिरियमुद्धृता।

एतेन पञ्चम्यर्थः सुस्फुटः। 'स मुखतस्त्रिवृतमसृजत। तं गायत्री छन्दोऽन्वसृज्यत। अग्निर्देवता ब्राह्मणो मनुष्यः तस्मान्मुखं ब्राह्मणो मनुष्याणां गायत्रीच्छन्दसाम्। अग्निर्देवतानाम् तस्माद् ब्राह्मणो मुखेन वीर्य्यं करोति मुखतो हि सृष्टः' ( ताण्ड्य ब्रा० ६।१।७६ ) 'स उरस्त एव बाहूभ्यां पञ्चदशमसृजत राजन्यो मनुष्यः इन्द्रो देवता तस्माद् बाहुवीर्य्यः बाहुभ्यां हि सृष्टः' ( ताण्ड्य ब्रा० ६।१।८ ) समध्यत एव प्रजननात् सप्तदशमसृजत्। वैश्यो

मनुष्यः। विश्वेदेवा देवताः। तस्माद्वैश्योऽद्यमानो न क्षीयते। प्रजननाद्धि-सृष्टः तस्माद् ब्राह्मणस्य राजन्यस्य च आद्योधरः सृष्टः' ( ताण्ड्य ब्रा० ६।१।९ ) यस्मात् अधरः पश्चाद्भावी निसृष्टस्तस्मात् इति सायणः।

'स पत्त एव ( पादात् ) प्रतिष्ठाया एव विशमसृजत। न काचन-देवता। शूद्रो मनुष्यः। तस्मात् शूद्रोऽयज्ञियः विदेवो हि। नहि तं काचन देवतान्वसृज्यत। तस्मात्पादावनेज्यान्नातिवर्धत। पत्तो हि सृष्टः।' ( ६।१।१० ताण्ड्य ) 'ब्राह्मणक्षत्रियवैश्यशूद्रा मुखबाहूरुपादेषु जाताश्चत्वारो वर्णाः। यस्माद् 'ब्राह्मणोऽस्य मुखमासीद्' इति श्रुतिः ( वैखानससूत्रम् १।१।२ ) एभिरनेकैर्वचनैः पक्षम्यर्थोऽतीव स्पष्टः। मनुना तु स्पष्टमुक्तम्—

'लोकानान्तु विवृद्ध्यर्थं मुखबाहूरुपादतः।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत॥' ( १।३१ )

'यद्वै मनुरवदत्तद् भेषजं भेषजतायाः' ( शतपथ )। ननु न कश्चन ब्राह्मणो मुखाज्जातः स्मृतः, नारदादीनामङ्गुष्ठादिभ्योऽन्याङ्गेभ्य एवोत्पत्ति-स्मरणात् इति चेदत्रैव श्लोके टीकाकाराः कारणात्कार्य्यं निष्कृष्यते इति अपाये ( विश्लेषे ) सति अपादानत्वम्। 'आद्यं कञ्चित् ब्राह्मणं स्वमुखा-वयवेभ्यो दैव्या शक्त्या निर्मितवान्' मेधातिथिः। 'दैव्या शक्त्या मुखादिभ्यो ब्राह्मणादिनिर्माणं ब्रह्मणो न विशङ्कनीयम्' कुल्लूकः। 'तं हि स्वयम्भूः स्वादास्याद् तपस्तप्त्वादितोऽसृजत।' ( मनु० १।९४ ) आस्यात् आदित इति ज्यैष्ठ्यं श्रैष्ठ्यञ्चोक्तम्।

'सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः।' ( मनु० १।९३ )

यथा कथमप्युत्पत्तिर्योनिशक्त्यैव भवति तथैव ब्राह्मणस्योत्पत्तिर्यतो-ऽप्यङ्गाद्भवेन्मुखशक्तेरेव तन्मन्तव्यम्। मुखबाहूरुपज्जानामिति ( १।८७ ) मनुवचनेऽपि मुखादिभ्यः स्पष्टमुत्पत्तिरुक्ता। स्वामिदयानन्देन सत्यार्थप्रकाशे ११ समुल्लासे मनुस्मृतेः सृष्ट्यादिनिर्मितत्वमुक्तम्।

'यज्ञसिद्ध्यर्थमनघान् ब्राह्मणान् मुखतोऽसृजत्।
असृजत् क्षत्रियान् बाह्वोर्वैश्यानप्यूरुदेशतः।
शूद्रांश्च पादयोः सृष्ट्वा तेषाञ्चैवानुपूर्वशः॥'
( हारीतस्मृतौ १।१२-१३ )

मुखादिभ्यो ब्राह्मणादीनामुत्पत्तयः उक्ताः। 'जानिकर्त्तुः प्रकृतिः'

( पा० १।४।३० ) इति जनिधातोर्योगे पञ्चमी प्रसिद्धा। 'सप्तम्यां जनेर्डः' इति सप्तमी च। अतएव हारीतवचने पञ्चमी सप्तमी च दृश्यते।

'सहस्रात्मामयो यो व आदिदेव उदाहृतः।
मुखबाहूरुपज्जाः स्युस्तस्य वर्णा यथाक्रमम्॥'

प्रायश्चित्ताध्याय १२६ यतिधर्मप्रकरणे याज्ञ्यवल्क्यस्मृतौ। अत्र सहस्रात्मा सहस्रशीर्षा पुरुष उक्तस्तस्य मुखादिभ्यो ब्राह्मणादयो जाता इत्युक्तम्।

पृथिवी पादतस्तस्य शिरसो द्यौरजायत।
नस्तः प्राणा दिशः श्रोत्रात्स्पर्शाद्वायुर्मुखाच्छिखी।
मनसश्चन्द्रमाजातश्चक्षुषश्च दिवाकरः॥
( प्रा० अ० १२७ )

इति पुरुषसूक्तार्थ एवोक्तः। बृहत्पाराशरस्मृतौ—

'ब्रह्मा वै ब्राह्मणानस्याः प्रभूनसृजदास्यतः।
तद्रक्षणाय बाहुभ्यामसृजत् क्षत्रियानपि॥' ( ३।१४९ )
'पशुपाल्याशनोत्पत्त्यै ऊरूभ्याञ्च तथा विशः।
द्विजदास्याय पण्याय पद्भ्यां शूद्रमकल्पयत्॥' ( १५० )

वाल्मीकिरामायणेऽपि—

'मुखतो ब्राह्मणा जाता उरसः क्षत्रियास्तथा।
ऊरुभ्यां जज्ञिरे वैश्याः पद्भ्यां शूद्रा इति श्रुतिः॥
( अरण्य १४।३० )

अत्र महर्षिणा पुरुषसूक्तमन्त्रार्थ एवोक्तः। 'उरस इत्यस्य मध्यतः इत्येवार्थः। महाभारतेऽपि—

'मुखतः सोसृजत् विप्रान् बाहूभ्यां क्षत्रियांस्तथा।
वैश्यांश्चाप्यूरुतो राजन् शूद्रान्वै पादतस्तथा॥'
( भीष्मपर्व ६७।१८-१९ )

'ब्राह्मणो मुखतः सृष्टो ब्रह्मणो राजसत्तम।
बाहूभ्यां क्षत्रियः सृष्टः ऊरुभ्यां वैश्य एव च।
वर्णश्चतुर्थः संभूतः पद्भ्यां शूद्रो विनिर्मितः॥'
( शान्ति १२।४-५

'बाहुभ्यां क्षत्रियशतम् वैश्यानामूरुतः शतम्।

पद्भ्यां शूद्रशतं चैव केशवो भरतर्षभ ॥' ( ३२ )

बृहदारण्यके 'अथ अभ्यमन्यत स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत।' इत्यत्र शाङ्करभाष्ये 'समुखं हस्ताभ्यां मथित्वा मुखाच्च योनेर्हस्ताभ्यां च योनिभ्यामपि ब्राह्मणजातेरनुग्रहकर्तारमग्निमसृजत् सृष्टवान्। तथा ब्राह्मणोऽपि मुखादेव जज्ञे प्रजापतेः। तस्मादेकयोनित्वाज्ज्येष्ठेनैवानुजोऽनुगृह्यते अग्निना ब्राह्मणः तस्माद् ब्राह्मणो अग्निदैवत्यो मुखवीर्य्यश्च' इति स्मृतिसिद्धम्। तथा बलाश्रयाभ्यां बाहुभ्यां बलभिदादिकं क्षत्रियजातिनियन्तारं क्षत्रियञ्च तस्मादैन्द्रं क्षत्रं बाहुवीर्य्यञ्च। ऊरुत ईहा चेष्टा तदाश्रयत्वात् वस्वादिलक्षणं विशो नियन्तारं विशं च तस्मात्कृष्यादिपरो वस्वादिदैवत्यश्च वैश्यः। तथा पूषणं पृथ्वीदैवतं शूद्रञ्च पद्भ्यां परिचरणमसृजत इति श्रुतिस्मृतिप्रसिद्धेः।'

वायुपुराणे—

'वक्त्राद्यस्य ब्राह्मणाः संप्रसूतास्तद्वक्षस्तः क्षत्रियाः पूर्वभागः।
वैश्याश्चोर्वोर्यस्य पद्भ्यां च शूद्राः सर्वे वर्णाः गात्रतः सम्प्रसूताः ॥'
( ६।७७ )

श्रीभागवते—

'मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह।
बाहुभ्योऽवर्त्तत क्षत्रं क्षत्रियस्तदनुव्रतः।
विशो वर्त्तन्त तस्योर्वोर्लोकवृत्तिकरीर्विभोः ॥
पद्भ्यां भगवतो जज्ञे शुश्रूषाकर्मसिद्धये।
ताभ्यां जातः पुरा शूद्रो ॥
( ३।६।३०-३३ )

'मिथुनानां सहस्रं तु सोऽसृजद्वै मुखात्तदा।
सहस्रमन्यद्वक्षस्तो मिथुनानां ससर्ज ह ॥
सृष्ट्वा सहस्रमन्यत्तु ( वैश्यानां ) द्वन्द्वमूरुतः पुनः।
पद्भ्यां सहस्रमन्यत्तु (शूद्रान्) मिथुनानां ससर्ज ह ॥
( ८।२०।४० )

'मुखबाहूरूपादेभ्यः पुरुषस्याश्रमैः सह।
चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥ ११।५।२

'विप्रक्षत्रियविट्शूद्रा मुखबाहूरुपादतः ।'
( भागवत ११।१७।१३ )

'बभूवुर्ब्रह्मणो वक्त्रादन्या ब्राह्मणजातयः ।'
ब्रह्मवैवर्त्ते ( १०।१४ )

'ब्राह्मणो बाहुदेशाच्चैवान्याः क्षत्रियजातयः' ।

'ऊरुदेशाच्च वैश्याश्च पादतः शूद्रजातयः ।

तासां संकरजातेन बभूवुर्वर्णसंकराः ॥'
( वे० ब्र० ख० १०।१६ )

भविष्येऽपि—

'लोकस्येह विवृद्ध्यर्थं मुखबाहूरुपादतः ।

ब्रह्मक्षत्रं तथा चोभौ वैश्यशूद्रौ नृपोत्तम ॥' ( २।५२ )

'तस्मान्मुखाद् द्विजो जात इतीयं वैदिकी श्रुतिः' २।१२६

अनेन ब्राह्मणोऽस्य मुखमासीदित्यत्र पञ्चमी विवक्षिता । सूतसंहिताया-मपि-'शिरोभागाद् ब्राह्मणब्राह्मण्योः, बाहुतः क्षत्रियाक्षत्रिययोः, वैश्यशूद्रावपि वैश्याशूद्राभ्यां सहैव ऊरुपद्भ्याम् ।' अत्र पूर्ववचनेषु मिथुनानामुत्पत्तय उक्ताः । विष्णुपुराणे प्रथमांशे—

'सत्याभिधायिनः पूर्वं सिसृक्षोर्ब्रह्मणो जगत् ।

अजायन्त द्विजश्रेष्ठ सत्त्वोद्रिक्ता मुखात्प्रजाः ।

ब्राह्मणाः वक्षसो रजसोद्रिक्ता (क्षत्रियाः) स्तथान्या ब्रह्मणोऽभवन् ।

रजसा तमसा चैव समुद्रिक्तास्तथोरुतः (वैश्याः) ।

पद्भ्यामन्याः प्रजाः ( शूद्रान् ) ब्रह्मा ससर्ज द्विजसत्तम ।

तमःप्रधानास्ताः सर्वाश्चातुर्वर्ण्यमिदं ततः ।'

एतदनुरोधेनैव शाङ्करभाष्ये सत्त्वादिगुणप्राधान्याप्राधान्यभेदेन चातुर्वर्ण्यसृष्टिरुक्ता । सत्त्वाद्युद्रेके जन्मान्तरीयकर्माण्यपि हेतुत्वेनोपयुज्यन्ते ।

'विप्रो मुखं ब्रह्म च यस्य गुह्यं राजन्य आसीत् भुजयोर्बलञ्च ।

ऊर्वोर्विरोजोऽङ्घ्रिरवेदशूद्रौ प्रसीदतां नः स महाविभूतिः ॥'
( भागवते ८।५।४१ )

'मनूनां सर्गमकरोन्मुखबाहूरुपादतः ।

चतुर्णां ब्राह्मणादीनां सर्गद्वारं जगत्पतिः ॥

द्विजयुग्मं क्षत्रयुग्मं वैश्ययुग्मं तथैव च ।

मिथुनञ्च चतुर्थस्य एतन्मनुचतुष्टयम् ॥'

( तत्त्वत्रयोद्धृता विष्वक्सेनसंहिता )

मिथुनानां सहस्रं तु मुखात् सोऽथासृजन्मुने।
जातास्ते ह्युपपद्यन्ते सत्त्वोद्रिक्ताः सचेतसः ॥'

( मार्कण्डेयपुराण ४९।३ )

'सहस्रमन्यद्वक्षस्तो मिथुनानां ससर्ज ह।
ते सर्वे रजसोद्रिक्ता शुष्मिणश्चाप्यमर्षिणः ॥
ससर्जान्यत्सहस्रं तु द्वन्द्वानामूरुतः पृथक्।
रजस्तमोभ्यामुद्रिक्ता ईहाशीलास्तु ते स्मृताः ॥
पद्भ्यां सहस्रमन्यत्तु मिथुनानां ससर्ज ह।
उद्रिक्तास्तमसा सर्वे निःश्रीका ह्यल्पचेतसः ॥ ( ४९।६ )

एवमेव पुराणेतिहासतन्त्रागमादिष्वेतदाशयानि बहूनि वचनानि सन्ति। एतैः स्पष्टं मुखादिभ्यो गुणकर्मानुरोधात् ब्राह्मणादीनामुत्पत्तय उक्ताः।

यदुक्तं 'मुखादिभ्यः सृष्टिरसम्मता' इति तत्तुच्छम्, सृष्ट्यारम्भकाले प्रायेण सर्वैरप्यमैथुन्याः सृष्टेरभ्युपगमात्। अङ्गेभ्यो मृत्तिकायाः सङ्कल्पाद्वा वचनाद्वा सृष्टेरुपगमात्।

एतेन जन्ममूलिकैव वर्णव्यवस्था प्रलयकाले गुणकर्मवासनाभिः सार्द्धं सर्वेऽपि प्राणिनो ब्रह्मणि लीना भवन्ति। तासामेव गुणकर्मवासनानामनुरोधात् प्रजापतिना मुखादिभ्यो ब्राह्मणादिजातय उत्पाद्यन्ते। नतूत्पत्त्यनन्तरं गुणकर्मानुसारेण जातिनिर्णयः।

वेदभाष्यकारैरप्ययमर्थो निरूपितः। ब्राह्मणजातिविशिष्टः अस्य मुखादुत्पन्न इत्यर्थः। मध्यभागाद् वैश्य इत्यर्थः। पद्भ्याम् पादाभ्यां शूद्रो अजायत उत्पन्न इत्यर्थः। (अथर्व सं०) सायणभाष्ये 'मुखतस्त्रिवृतं निरमिमीत' ( कृष्णयजुः तैत्तरीया शाखा ) ( ९९।३।३ ) 'तदस्योत्पन्नत्वा'दिति उव्वटः। 'ब्राह्मणो ब्रह्मत्वजातिविशिष्टः, पुरुषोऽस्य प्रजापतेः मुखमासीत्। मुखादुत्पन्नः इत्यर्थः' महीधरः। तैत्तरीयारण्यके सायणः—'यत्पुरुषं व्यदधुः' इति प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुमत्र ब्रह्मवादिनां प्रश्ना उच्यन्ते' (३।५२।५) "ब्राह्मणोऽस्य योऽयं ब्राह्मणत्वजातिविशिष्टः पुरुषः सोऽयमस्य प्रजापतेः मुखमासीन् मुखादुत्पन्न इत्यर्थः। योऽयं राजन्यः क्षत्रियजातिः स बाहुत्वेन निष्पादितः

बाहुभ्यामुत्पादित इत्यर्थः। ततस्तदानीं यो प्रजापतेस्तम तद्रूपो वैश्य सम्पन्नः, ऊरुभ्यां वैश्य उत्पन्न इत्यर्थः। तथा पद्भ्यां शूद्र उत्पन्नः। इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिः सप्तमकाण्डे स मुखतस्त्रिवृतं निरमिमीत इत्यादौ विस्पष्टमाम्नाता। अतः प्रश्नोत्तरे उभेऽपि तत्परत्वेनैव योजनीये। चन्द्रमा मनसो यथादध्याज्यादिद्रव्याणि गवादिपशवश्च ऋगादिवेदा ब्राह्मणादि मनुष्याश्च तस्मादुत्पन्नाः। नाभ्या आसीत् यथा देवास्तस्मादुत्पन्ना तथा लोकानपि अन्तरिक्षादीन् प्रजापतेः नाभ्याद्यवयवेभ्योऽकल्पयन् उत्पादितवन्तः।"

स्वामीदयानन्देनापि मुखमिति पञ्चमी स्वीकृता। आसीदित्यस्योत्पत्तिरर्थोऽङ्गीकृतः। यथा 'मुखं अस्य पुरुषस्य मुखं मुख्यगुणेभ्यः किमुत्पन्नमासीत्, किं बाहू बलवीर्यादिगुणैः किमुत्पन्नमासीत्—किमूरुव्यापारादिगुणैः किमुत्पन्नमासीत्। पादा उच्येते अर्थान्मूर्खत्वादि नीचगुणैः किमुत्पन्नं वर्त्तते।' ऋग्वेदादिभाष्यभूमिका पृ० २२६।

एवमुत्तरमन्त्रेऽपि ब्राह्मणोऽस्य पुरुषस्य मुखं ये विद्यादयो मुख्यगुणास्तेभ्यो ब्राह्मण उत्पन्नो भवति। बाहू क्षत्रियस्तेन कृतः उत्पन्नो भवति। ऊरु तेभ्यो वणिग्जनः उत्पन्नः। पद्भ्यां जडबुद्धित्वादिगुणेभ्यो—शूद्र अजायत जायते इति वेद्यम्' १२७। मुखादिशब्दानां मुख्यार्थतामपहाय गौणार्थता तेनाङ्गीकृतेत्यन्यदेतत्। नहि विद्यादिगुणैर्द्रव्योत्पत्तिःसंभवति। ब्राह्मणादयो द्रव्यं विद्यादयस्तु गुणा एव। गुणैर्द्रव्यं नोत्पद्यते नहि रूपैरग्नी रसैर्वा जलमुत्पद्यते। शब्दादितन्मात्राभ्य आकाशादीनामुत्पत्तयस्तु शब्दादीनां गुणत्वमनभ्युपगम्यैव।

यत्तु 'केनचित् पदभ्यामिति चतुर्थी स्वीक्रियते' तत्तुच्छम्। 'जनि कर्त्तुः प्रकृति'रिति जनियोगे पञ्चमी विधानविरोधात्। पुष्पेभ्यो यातीत्यत्र तु जनियोगाभावादेव चतुर्थी। एतेन 'चन्द्रमा मनसो जातः' इत्यत्र षष्ठी स्वीकृतिरपि निरस्ता।

मुखादिजब्राह्मणादिपुत्रा अपि सकृदाख्यातनिर्ग्राह्यत्वाद् ब्राह्मणादय एव। एकैकस्य मुखबाहूरुपादोत्पन्नत्वेन ब्राह्मणादित्वे उपदिष्टे तदपत्यसहोदरादिषु तदुपदेशं विनाऽपि ब्राह्मणत्वादिसुग्रहात्। 'आत्मा वै पुत्र नामासि'।

'सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु।

आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते ॥' (मनु० १०।५)
इति ब्राह्मणात्मजानां ब्राह्मणत्वस्योक्तेः। वैखानसधर्मप्रश्नेऽपि 'ब्रह्मणो मुखादुद्भूता ब्राह्मणा ब्राह्मण्यश्च तेषां गोत्रोत्पन्नत्वात्। ब्राह्मण्यामसगोत्रायां विधिना समन्त्रकं गृहीतायां जातो ब्राह्मणः शुद्धो भवति' (३।१।३) 'तस्मादधो बाहुभ्यामुत्पन्नत्वात् क्षत्रियाच्छत्रियायां विधिवज्जातः शुद्धः क्षत्रियः। अधस्तात् ऊरुभ्यामुत्पन्नत्वात् वैश्याद्वैश्यायां शुद्धो वैश्यः। पद्भ्यामुत्पन्नाद् शूद्रात् जातः शुद्धः शूद्रस्तेषामेव संकरेण उत्पन्नाः सर्वेऽनुलोमाद्याः।'

एतेन यदुक्तं 'ये मुखादुत्पन्ना त एव ब्राह्मणा भवन्तु। भवन्तस्तु गर्भाशयात् शुक्रादिजन्यत्वात् कथं ब्राह्मणा' इत्यप्यपास्तम्। मुखाद्युत्पन्नानां ब्राह्मणादीनां सकृदाख्यातनिर्ग्राह्यत्वेन तत्सन्तानादिषु ब्राह्मणत्वाद्यनपायात्।

प्रथमपक्षोऽपि युक्त एव। 'यस्य ब्रह्म (ब्राह्मणं) मुखमाहुः' (अथर्व १०।७।१९)। अत्र ब्राह्मणस्य ब्रह्ममुखत्वमुक्तमेव। अयमेव न्यायो राजन्यादिष्वपि योज्यः (अस्मिन्पक्षेऽपि जन्मनैवं वर्णव्यवस्था।) यथा न मुखस्य बाहुत्वं बाह्वोर्न मुखत्वं न वा तयोः पादत्वं तथैव ब्राह्मणस्य न क्षत्रियत्वं वैश्यत्वं नवेतरेषां शूद्रत्वादिकमिति। समाजस्य विराट्पुरुषत्वे ब्राह्मणस्तस्य मुखं, क्षत्रियो बाहू, वैश्यस्य मध्याङ्गत्वं, शूद्रस्य पादस्थानीयत्वमेव।

समष्टिवद्व्यष्टावपि जाताविव व्यक्तावपि दृश्यते। यद् ब्रह्माण्डे तत्पिण्डे। चक्षुःश्रोत्रादिज्ञानेन्द्रियाणामधिष्ठातृत्वं निर्लोभत्वञ्च मुखस्य प्रसिद्धम्। मुखं निर्लोभं सत् भुक्तपीतमुदरे प्रेषयति। उदरं च परिपाच्यरससारं निर्माय सर्वाङ्गेभ्यः विपाकादिजनितं रसं वीर्यं शक्तिञ्च वितरति। यदि लोभवशान्मुखं स्वयमेव संग्रहि भवेत्तदा मुखस्य सर्वाङ्गाणाञ्च विनाश एव स्यात्। तथैव समाजस्य मुखस्थानीयो ब्राह्मणो निर्लोभः सन् सर्वोपकारक एव स्यात्। इतरेषामङ्गानां भूषणवसनसापेक्षता च दृश्यते। शरीरोपयोगिभोजनप्राप्तिर्मुखेनैव भवति तथापि तेन यथायोग्यं सर्वस्यैव शरीरस्य पालनं भवति। स्वस्मिन्न किमपि रक्षति। दन्तादिलग्नमपि गण्डूषादिभिर्निस्सारयति। तथैव समाजहितार्थमेव ब्राह्मणो गृह्णाति, स्वार्थं न किमपि संगृह्णीयात्। मुखभाग एव नेत्रश्रोत्रघ्राणरसनामस्तिष्कादि ज्ञानसाधनानि भवन्ति। पठनपाठनविचारादिकं सर्वमपि मुखायत्तम्। कदाचिन्नेत्रादिनाशे-

ज्ञानविज्ञानादिह्रासेऽपि मुखं मुखमेव भवति। एवमेव कदाचिद्विज्ञानाद्य-भावेऽपि ब्राह्मणो ब्राह्मण एव भवतीति जन्मनैव वर्णव्यवस्था युक्ता।

समाजे राज्यशक्तिरिव शरीरे बाहू भवतः। राज्यशक्तेः क्षत्रियस्येव बाह्वोः सर्वाङ्गरक्षकत्वमेव। शिरोरक्षणार्थं—पादलग्नकण्टकादिनिःसारणार्थञ्च बाह्वोः प्रवृत्तिर्भवति। नहि मुखोरुपादादिभिः शत्रुनिरसनं संभवति। व्यायामादिभिर्बाहूनां प्राबल्येनैवाङ्गरक्षणं भवति, न दौर्बल्येन। एवमेव धन-संग्राहकवैश्यवर्गवदुदरं देहे भवति। भुजैरुपार्जितस्य नेत्रादिभिर्दृष्टस्य मुखा-दिभिश्चर्वितस्य भोजनादेः संग्रह उदर एव भवति। उदरस्यान्नराहित्ये—मुखादिकं सर्वं व्याकुलं भवति। बाहुशक्तिरपि शैथिल्यमुपयाति। पादावपि निश्चलौ भवतः। ततोऽनेकैरुपायैरुदरपूर्तये सर्वैर्यत्यते। उदरमपि सर्वं संस्कृत्य रसवीर्य्यादिकं सर्वाङ्गेभ्यो वितरति। तस्यापि सर्वथा संग्रहशीलत्वे बद्ध-कोष्ठतादिरोगैः सर्वाङ्गं रुग्णं भवति। तथैव वैश्यस्य धनसंग्रहोऽपि समाज-रक्षणार्थमेव भवति, न स्वार्थम्। व्यष्टिरूपत्वे वैश्यस्य यथा तद्दौर्बल्ये शरीरोत्थानमशक्यं भवति तथैव वैश्यस्य धनहीनत्वे समाजोत्थानमशक्यं भवति। मुखस्यावरणराहित्यमिव कटेरावरणसाहित्यमेव शोभते तथैव ब्राह्मणस्य धनलोभादिराहित्यमिव वैश्यस्य तत्साहित्यं शोभते।

एवमेव शूद्रस्थानीययोः पादयोः सर्वाङ्गधारकत्वमिव शूद्रस्यापि सेवासमाजधारकत्वम्। पादयोरदृढत्वे शरीरस्य पतनमेव भवति। पादयो-रपि साहाय्यं नेत्रैर्मार्गदर्शनेन भुजैः कण्टकशीतातपापसारणादिभिः क्रियते एव। पादयोः ज्ञानाभावान्न स्वेच्छया प्रवृत्तिर्भवति किन्तु मस्तिष्कादि-निर्दिष्टरीत्यैव भवति मुखबाहूरूपादानां गुणवत्त्वे महांल्लाभः प्रशंसा च भवति। गुणहीनत्वे दूषणवत्त्वे च निन्दितत्वं भवति। तथापि जन्मनैव मुखादित्वं परस्परसापेक्षत्वञ्च भवति। तद्वदेव ब्राह्मणादीनां जन्मनैव ब्राह्मणत्वादिकं पारस्परसापेक्षता च। न ह्येकस्य कार्य्यमन्येन सम्पद्यते। तेनैव ब्राह्मणस्य शूद्रत्वं शूद्रस्य ब्राह्मणत्वमस्वाभाविकमेव। स्वस्थानस्थितानामेव सर्वेषां माहात्म्यम्। यथैव मुखादीन्यङ्गानि पूर्वजन्मकर्मवशोत्पत्तिमूलकान्येव भवन्ति, न तात्कालिककर्ममूलकानि। तात्कालिकैस्तु कर्मभिस्तेषां पुष्टिस्तु भवति नोत्पत्तिः। अङ्गानां कर्माणि यद्यपि नियतानि तथापि प्रमादवशात् वैपरीत्य-मपि भवति। तथात्वे तेषां निन्दितत्वेऽपि नान्यरूपता भवति। मुखस्य बाहुत्वं

बाह्वोर्वा मुखत्वं पादत्वं वा ज्ञानभागमुखरूपत्वेन ब्राह्मणस्योत्कर्षोऽपि भवत्येव। वैपरीत्ये हानिरेव जायते सेवकपादरूपत्वेन मुखाद्यपेक्षया शूद्रस्यापकर्षेऽपि स्वधर्मस्थत्वेनोत्कर्ष एव। शिरस ऊर्ध्वत्वे अन्याङ्गानां जलनिमग्नत्वेऽपि न हानिः। पादयोरूर्ध्वत्वे शिरसो जलनिमग्नत्वे तु प्राणबाधैव–भवति। शयनसमये शिरस उपधानं दीयते। तदभावे बाहूपधानेनापि तस्योत्कर्षो रक्ष्यते। एकदेहस्याङ्गत्वेऽपि सर्वेषामनेकविधानि कार्य्याणि। स्वस्वकार्य्यनिष्ठानां प्रतिष्ठैव वर्धते न निन्दा। मुखस्य सौन्दर्यासौन्दर्य्ये अपि भवतः। मस्तिष्कमपि निर्बलं प्रबलञ्चापि भवति। बाहुरपि कार्श्यं प्राबल्यञ्च भजते। एवमेव कटिपादयोरपि शैथिल्याशैथिल्ये भवतः। तथापि स्वरूपं संज्ञा चापरिवर्त्तितमेव भवतः। यथा शरीरे विविधान्यप्यङ्गानि भवन्ति तथैव विराट्पुरुषदेहेऽन्या अपि जातयो भवन्ति। अतएव तासां वर्णनम् त्रिंशेऽध्याये शुक्लयजुर्वेदीये दृश्यते।

यथैकस्मिन्नेव शरीरेऽङ्गानि भिन्नानि भवन्ति, तेषां मर्य्यादा अधिकाराश्च नियता भवन्ति, नचैकस्य कार्यमन्यैः क्रियते, नवान्यस्याऽन्यरूपता संभवति। विकारे जरायां वा तेषां तेषामङ्गानां स्वस्वकार्य्याक्षमत्वेऽपि स्वरूपसंज्ञादिपरिवर्त्तनं न भवति यथा तथैव जन्मना नियता वर्णव्यवस्था परिवर्त्तनं नार्हति। यथा बाल्ये जरायां वा कार्य्याक्षमत्वेऽपि तेषामङ्गानां रक्षणं भवत्येव तथैव निरक्षराणामपि विप्राणां श्राद्धादिष्वग्राह्यत्वेऽपि रक्षणमावश्यकमेव। पूर्वजन्मकर्मणां सम्मानमेव तत्। अतएव नैर्बल्येऽपि मुखनेत्रादिप्रक्षालनं क्रियते। अतएव 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः।' इत्युक्तम्। ( गी० )

यथा शरीरस्य ज्ञानवीर्य्यसंग्रहसेवाङ्गानां स्वस्वनियतकर्मनिष्ठता सहयोगोऽप्रतिस्पर्धा च दृश्यते तथैव समाजे विप्रक्षत्रविट्शूद्राणां स्वस्वधर्मनिष्ठता सहयोगादिकमपेक्षितम्। मुखं भुजकार्य्याय, भुजौ च मुखकार्य्याय न प्रयतन्ते। सत्यामावश्यकतायामेव मुखहस्तादिपादादिकं स्पृश्यते, स्पर्शे च जलादिना क्षालनं न पादाद्यवमानजनकम्, तथैवास्पृश्यस्पर्शनादिकमपि सति प्रयोजने भवति शुद्धिश्चापि क्रियते।

यदुक्तम् 'मुखजानां केषाञ्चिद् ब्राह्मणत्वेऽपि तत्सन्तानस्य कुतो ब्राह्मणत्वम् तस्मात् शास्त्रार्थे वाक्शक्तेः प्रभावाद् ब्राह्मण्याभिव्यक्तिरेव मुखाद् ब्राह्मणस्य

प्रादुर्भावः। युद्धे बाहुप्राबल्येन क्षत्रियत्वं व्यज्यते तदेव बाहुभ्यां राजन्योत्पत्तिरिति तत्तुच्छम्, 'ब्रह्म हि ब्राह्मणः क्षत्र राजन्यः' ( शतपथ ५।१।१।११ ) ब्राह्मणः ( ब्राह्मणस्य ) अपत्यं ब्राह्मण इति व्युत्पत्त्या ब्राह्मणसन्तानस्यापि ब्राह्मणत्वसिद्धेः।

एवमेव राज्ञो ( क्षत्रियस्य ) अपत्यस्य राजन्यत्वेऽपि बाधाभावः। 'राजश्वसुराद्यत्' ( पा० ४।१।१३७ ) 'राज्ञोऽपत्ये जातिग्रहणं कर्तव्यम्' ( म० भा० ) राजन्यस्यापत्यं राजन्यः। तस्यापत्यम् ( पा० ४।१।९२ ) इत्यण्प्रत्ययेऽपि सिद्ध्यति। नच तत्र जातिर्नास्तीति वाच्यम्। 'जातेरस्त्रीविषयादयोपधात् (पा० ४।१।६३) इत्यत्र 'सकृदाख्यातनिगर्ह्याह्या' इति ब्राह्मण जातिलक्षणसमन्वयवत् तत्रापि जातिव्यवहारे बाधाभावात्। एवं क्षत्रस्यापत्यं क्षत्रियः इति रीत्या प्रथमबाहुजस्य क्षत्रियस्यापत्यमपि क्षत्रियो भवत्येव।

वाक्शक्तिस्तु न केवलं ब्राह्मणानामेव शास्त्रज्ञाने क्षत्रियविशोरप्यधिकारसत्त्वेन ब्राह्मणस्येव तयोरपि वावदूकत्वसंभवात्। जनकाजातशत्रुप्रभृतीनां वावदूकत्वश्रवणात्। एवमेव बलवत्त्वं ब्राह्मणस्यापि संभवत्येव। तेन ब्राह्मणोऽस्य मुखमासीदिति न गौणार्थकं वचनम्। मुख्यार्थत्वसंभवे तदसंभवात्। उपनिषद्भिस्तूपदेष्टृणामपि जनकाजातशत्रुप्रभृतीनां क्षत्रियत्वमुक्तमनभिज्ञानामपि गार्ग्यादीनां ब्राह्मणत्वमेवोक्तम्।

किञ्च गालिप्रदानमपि मुखेनैव भवति तथा च गालिप्रदायकस्यापि मुखेनैवाभिव्यक्तेर्ब्राह्मणत्वं स्यात्। तूष्णींभूतस्य ब्रह्मविदोऽप्यब्राह्मणत्वापत्तेश्च। तथात्वे च वाचालस्य पितुर्ब्राह्मणत्वे मौनस्वभावाद्यप्रगल्भाया मातुः शूद्रत्वेन तयोः संसर्गे संकरोत्पत्तिश्च स्यात्। ब्राह्मणस्यापिभोगजः पुत्रोऽमुखजत्वाच्छूद्रः स्यादेवमेव युधिष्ठिरस्यानेकधा कर्णप्रतिभटे पराजितस्याक्षत्रियत्वापत्तिः।

वस्तुतस्तु न भीरुर्मूर्खो वा कश्चिद्वर्णः। किञ्चैकस्यैव वावदूकत्वे वीरत्वे च वर्णसंकरत्वापत्तिः स्यात्। स्त्रीणाञ्चाबलात्वेनाक्षत्रियत्वापत्तिः स्यादथवा मुखे गालिप्रदानदक्षात्वेन स्त्रीणां ब्राह्मणीत्वे पुरुषस्य बलवत्त्वेन क्षत्रियत्वे तदुत्पन्नसन्तानस्य प्रतिलोमसंकरत्वापत्तिश्च स्यात्।

मनुष्यस्य शूद्रकर्म करणाच्छूद्रत्वञ्चेत्तदा तस्य यज्ञानुष्ठानवेदाध्ययनाधिकारोऽस्ति न ? वा यज्ञाद्यनुष्ठानेन स ब्राह्मणो भवति शूद्र एव वा तिष्ठति। यदि ब्राह्मण एव शूद्रस्तदा कर्मणा शूद्रो भवतीति न सिद्ध्यति। ब्राह्मणत्वे तु

यागाधिकारो ब्राह्मणस्यैव न शूद्रस्य ( मी० द० ६।१।२५ )। शूद्रस्य यज्ञाधिकारनिषेधश्च समन्वितो भवति। सेवाशिल्पादि स्वधर्मत्यागमन्तरा नाध्ययनयज्ञादि संभवति। किञ्च सामाजिकानां मते मूर्ख एव शूद्रो भवति, तेन सामर्थ्याभावादेव तस्य वेदानधिकारः सिद्ध्यति। तथात्वे 'यथेमां वाच' मिति मन्त्रेण कथं वेदाधिकारसमर्थनम्? यदि शिल्पसेवादिकं त्यक्त्वा वेदाध्ययनाद्यर्थं सर्वे प्रवृत्ता भवेयुस्तदा लोकव्यतिकरोऽपि स्यात्। शूद्रो वैश्यकर्मकरणाद्वैश्यो ब्राह्मणकर्मकरणाद्ब्राह्मणो भवेत्तदाऽव्यवस्थैव स्यात्। जन्मना व्यवस्थायामेव सर्वसामञ्जस्यम्, अन्यथा सर्वस्यैव ब्राह्मणत्वप्राप्त्यौ ब्राह्मणकर्मकरणप्रवृत्तौ युद्धव्यापारशिल्पादिनाशाल्लोकनाश एव स्यात्। कर्मणा वर्णव्यवस्थायां न कस्याप्युत्तरदायित्वं भवति।

गीतायां तु—'श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥'
ये व्यपेताः स्वधर्माच्च परधर्मे व्यवस्थिताः।
तेषां शास्तिकरो राजा स्वर्गे लोके महीयते॥'
( अत्रिस्मृति १७ )

तस्माज्जन्मना वर्णपक्ष एव संघर्षमन्तरा लोकव्यवस्थोपपद्यते। ईश्वरीयनियमेन जन्मना वर्णविभागे सेवार्थमेको विभागो भवति। तस्य तत्र जन्मसिद्धोऽधिकारः। समाजप्रतिष्ठाहेतुत्वात्तस्य समूहस्यैव विराट् पादस्थानीयत्वेन शूद्रत्वं सेवाध्यक्षत्वमुच्यते। निर्मितवस्तूनां वाणिज्येन वितरणार्थमपरः समूहः वाणिज्ये तस्य जन्मसिद्धोऽधिकारः। स एव गमनसाधनत्वादूरुस्थानीयः धनाध्यक्षश्च। दुष्टापचारात्तद्रक्षणार्थं विराट्पुरुषस्य भुजस्थानीयः क्षत्रियो राजा भवति। सत्त्वस्य निष्क्रियत्वात् तमसश्चालस्यप्रमादादिमत्त्वेन च ब्राह्मणशूद्रयोर्न शासनाधिकारः। वैश्यस्यापि क्रियामूलकतमउपसर्जन रजोगुणवत्त्वेन न तत्राधिकारः। किन्तु क्रियाशक्तिमूलकसत्त्वोपसर्जनरजोवत्त्वेन क्षत्रियस्यैव तत्राधिकारः। क्रियाशक्त्यैव शत्रुदमनायैतत्प्रवृत्तिः। सत्त्वेन च धर्माभिमुख्यञ्च। तेनैव धर्मनियन्त्रितं शासनं भवति। ज्ञानविज्ञानयुक्तस्य दूरदर्शिनो ब्राह्मणास्योपर्येव धर्मतन्त्रस्याधिकारः। स उपदेशेन धर्माभिमुख्यापादनेन वर्णत्रयस्याप्युपकरोति। एवं वर्णव्यवस्थाया जन्मसिद्धत्वेनैवोत्तरदायित्वं भवति, न कर्मणा वर्णपक्षे, सर्वस्य वर्णान्तरापत्तौ प्रयत्नशीलत्वेन

पूर्वकर्मपरित्यागसंभवात्। हस्ताङ्गुलिष्विव ब्राह्मणादिषु वैषम्यमुत्कर्षापकर्षौ च न दूषणम्। नैसर्गिकवैषम्यस्यादूषणत्वादुपकारकत्वाच्च। यथाङ्गुलिषु वैषम्यमेव हितकरं सौन्दर्य्यापादकं च भवति न साम्यं तद्वत् प्रकृतेऽपि।

यद्यप्याऽधुनिका सुधारका अपि परवञ्चनाय मनुस्मृतिं महाभारतं गीतां वेदानुपनिषदश्च प्रमाणयन्ति, तत्र तत्र स्वादरमप्यभिव्यञ्जयन्ति, रामचरितमानसवचनञ्चोद्धरन्ति तथापि स्वविरुद्धवचनानि वैदिकान्यप्युपेक्षन्ते। 'ब्राह्मणो नावमन्तव्यः सदसद्वा समाचरन्।' ( ९।२९०।५३ भारते )

'न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्।' ( मनु० ८।३८० )

'त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्।' त्र्यष्टवर्षोऽष्टवर्षां वा' ( ९।९४ मनुः ) सुधारको भगवान्दासस्तु 'द्विर्दशवार्षिकीम्' इति पाठं कल्पयति। 'हृद्यां विंशतिवार्षिकीमि'ति कुतो नोक्तम्। 'अष्टवर्षा'मिति स्थाने अष्टिवर्षामिति २६ वर्षीयामिति। अत्र अप्रतीतदोषोऽत्र नानुसंहितः।

महाभारते—गरुडं प्रति कश्यपेनोक्तम्—निषादेषु निषादाचारोऽपि ब्राह्मणो न हन्तव्यः। कथं तज्ज्ञानं स्यादिति प्रश्ने तेनैव प्रोक्तम्—

'यस्ते कण्ठमनुप्राप्तो निगीर्णं बडिशं यथा।
दहेदङ्गारवत्पुत्र तं विद्याद् ब्राह्मणर्षभम्॥
विप्रस्त्वया न हन्तव्यः संक्रुद्धेनापि सर्वदा।'
( म० भा० २।२८।२२ )

'तस्य कण्ठमनुप्राप्तो ब्राह्मणः सहभार्य्यया।
दहन् दीप्त इवाङ्गारः ···· ···· ···· ···· ····॥
·······द्विजोत्तम विनिर्गच्छ ···· ···· ···· ···· ····।'

'नहि मे ब्राह्मणो वध्यः पापेष्वपि रतः सदा'। ( २।२९।२ )

किमत्र जन्मना वर्णव्यवस्था न सिद्ध्यति? यदि कर्मणा ब्राह्मण्यं तर्हि कथं न निषादाचाराणां निषादत्वमेव। एवमेव—

'उद्वहेत द्विजो भार्य्यां सवर्णां लक्षणान्विताम्' इति ( मनु० ३।४ ) सवर्णाया विवाह उक्तः। गुणकर्मभ्यां वर्णव्यवस्थायां कथं तयोः सावर्ण्यम्?

तद्रीत्यापि पुरुषेण २०, स्त्रिया २६ वर्षाणि पठनीयानि। तथा च कुतो न विद्यावैषम्येण वर्णवैषम्यम्। 'आज' पत्रे मार्गशीर्षे १९९६ भगवद्दासः

वदति 'मनुस्मृतौ प्रक्षिप्तांशाः परिवर्त्तितांशा लुप्तांशाश्च सन्ति'। नच तत्र किमपि प्रमाणमुपन्यस्यति। वस्तुतस्तु स्वविरुद्धांशानां प्रक्षिप्ततामेव निश्चिनोति।

यदि नाम भवत्पक्षविरोधिवचनानां प्रक्षिप्तता तदास्मत्पक्षविरोधिवचनानां कुतो न प्रक्षिप्तता ? महाभारते युधिष्ठिरभीष्मादयः क्षत्रिया एव घोषिताः। द्रोणाश्वत्थामादयो गुणेन क्षत्रिया अपि ब्राह्मणा एव व्यपदिश्यन्ते।

युधिष्ठिरेणोक्तम्—

'ब्राह्मणेन तपः कार्य्यं दानमध्ययनं तथा।
क्षत्रियेण धनुर्नाम्यं स भवान् ब्राह्मणब्रुवः॥'

( कर्णपर्व ५५।३३ )

तेनाप्युक्तम्—

'सोऽस्मि जातः कुले श्रेष्ठे ब्राह्मणानां सुपूजिते।
मन्दभाग्यतथाऽस्म्येतं क्षत्रधर्ममनुष्ठितः॥'

( सौप्तिकपर्व ३।२१ )

'क्षत्रधर्मं विदित्वाहं यदि ब्राह्मण्यमाश्रितः।
प्रकुर्य्यां सुमहत्कर्म न मे तत्साधुसम्मतम्॥' २२

व्यासेनोक्तं—

'ब्राह्मणस्य सतश्चैव यस्मात्ते वृत्तमीदृशम्।
असंशयस्ते तद्भावि क्षत्रधर्मस्त्वया श्रितः॥' ( ६।१७-१८ )

'गुणकर्मालोचनयात्युग्रकर्मकरत्वान्न ब्राह्मणत्वं संभवति दुरात्मनः' ( १२।७ ) 'सतां मार्गे जातु न स्थाता' ( १२।९ ) 'दुष्टात्मा संरम्भी दुरात्मा चपलः' ( १२।४१ ) क्रोधी 'कृतं पापमिदं ब्रह्मन् रोषाविष्टेन चेतसा ( १५।१८ ) 'त्वां तु कापुरुषं पापं विदुः सर्वे मनीषिणः। असकृत्पापकर्माणं बालजीवितघातकम्।' ( १६।९ ) श्री कृष्णेन— 'यस्मादनादृत्य कृत्यं त्वयास्मान् कर्मदारुणम्। ब्राह्मणस्य सतश्चैव यस्मात्ते वृत्तमीदृशम्। ( १६।१० ) 'क्षत्रधर्मस्त्वयाश्रितः' ( १६।१८ ) एवं ब्राह्मण गुणकर्मरहितस्यापि द्रौणेः पुनः पुनर्ब्राह्मण्यमुक्तम्। ब्राह्मणत्वादेव तद्वधो न कृतः किन्तु 'राष्ट्रादेनं बहिष्कुर्य्यात् ( मनु० ८।३८० ) तथा च कर्मणा वर्णव्यवस्था पूर्व पक्ष एवं। सिद्धान्तस्तु जन्मना वर्णव्यवस्था।

युधिष्ठिरस्तु शमदमादि सम्पन्न एवासीत्तथापि न ब्राह्मणः किन्तु क्षत्रिय एव व्यपदिष्टः। 'घृणी ब्राह्मण रूपोऽसि कथं क्षत्रेषु जायथाः।' इति भीमः (वनपर्व ३५।२०) 'ब्रह्मवर्चसी पाण्डवनन्दनः।' (उद्योग ५३।८) भीमस्य भीमकर्मत्वं प्रसिद्धमेव तथापि तयोरुभयोरपि जन्मना क्षत्रियत्वमेव गुणकर्मणो-र्वर्णनिर्णायकत्वे तयोर्वर्णभेदेन भाव्यम्। 'युद्धे चाप्यपलायनं' (गी०) क्षत्रस्य धर्मः। युधिष्ठिरस्तु कर्णस्य प्रतिभटे स्थातुमशक्तः पलायितवान्।

'एवं पार्थोऽभ्युपायात् स निहतः पार्ष्णिसारथिः।
अशक्नुवन् प्रमुखतः स्थातुं कर्णस्य दुर्मनाः।' (कर्ण पर्व ४९।५०)।
कर्णेनोक्तं 'कथं नाम कुले जातः क्षत्रधर्मे व्यवस्थितः।
प्रजह्यात्समरं भीतः प्राणान् रक्षन्महाहवे॥'

स भवान्क्षत्रधर्मेषु 'ब्राह्मे बले भवान्युक्तःस्वाध्याये यज्ञकर्मणि। मास्म-युद्धस्व कौन्तेय मास्म वीरान् समासदः॥ ४९।६०।५५।५६। ततोऽपायाद् द्रुतं राजन् व्रीडन्निव नरेश्वरः। (४९।६० कर्णपर्व) तथापि युधिष्ठिरः क्षत्रिय एवासीत्, न ब्राह्मणः, नवा तेन ब्राह्मणकन्योद्वोढा। कर्णेन तस्य ब्राह्मण्ये प्रोक्ते तेन व्रीडैवानुभूता। एवमेव सञ्छाद्यमानस्तु तदा द्रोणपुत्रेण-मारिष। पार्थोऽपयातः शीघ्रं वै विहाय महतीं चमूम्॥' (कर्ण ५५।३७) अश्वत्थाम्नोऽपि युद्धे युधिष्ठिरः पलायितः। श्रीकृष्णो महाभारतदृष्ट्या परमाराध्योऽपि गीतोपदेष्टापि क्षत्रियत्वेनैव व्यपदिष्टो न ब्राह्मणत्वेन। रथचालनेनापि कृष्णस्य न सूतत्वव्यपदेशः। गीतयाऽपि कृष्णो न सूतो न वा ब्राह्मणो व्यपदिष्टः। किन्तु 'वृष्णीनां वासुदेवोऽस्मि' इति क्षत्रियत्वमेवो-क्तम्। धर्मव्याधो ब्राह्मणोचितगुणोऽपि न ब्राह्मणः। कर्णस्य क्षत्रियकर्मत्वे-ऽपि पितुः सूतत्वेन प्रसिद्धिः।

भारते जन्मनैव वर्णव्यवस्था गुणकर्मभिस्तु स्तुतिनिन्दे भवतः।

'प्रजापतिः प्रजाः सृष्ट्वा कर्म तासु विधाय च।
वर्णे वर्णे समाधत्ते ह्येकैकं गुणभाग्गुणम्॥' (सौप्तिक ३।१८)
'ब्राह्मणो वेदमग्र्यन्तु क्षत्रिये तेज उत्तमम्।
दाक्ष्यं वैश्ये च शूद्रे च सर्ववर्णानुकूलताम्॥' (३।१९)
'अदान्तो ब्राह्मणोऽसाधुर्निस्तेजाः क्षत्रियोऽधमः।
अदक्षो निन्द्यते वैश्यः शूद्रश्च प्रतिकूलवान्॥' (३।२०)

एतेन प्रजापतिः पूर्वं वर्णान् निर्माय तेषु गुणकर्माणि ददाति। तत्सत्त्वे प्रशंसा तदभावे निन्दा भवति तेषाम्। जन्मना वर्णव्यवस्थाऽसत्त्वे युद्धादुपरतं ब्राह्मणधर्मे प्रवर्त्तमानमर्जुनं भगवान् पापं मत्वा निषिषेध। 'ततः स्वधर्मं कीर्तिञ्च हित्वा पापमवाप्स्यसि।' तदस्थाने स्यात् कर्मणा तत्त्वे यावद्युद्धरतस्तावत्क्षत्रियो भवेत् तदुपरतौ ब्राह्मधर्मरतस्य ब्राह्मण्यं स्यात्तथा सति निषेधस्य कोऽवकाशः? जन्मना वर्णत्वे तु वर्णानुसारवृत्तिविधानात्तदतिक्रमे पातकं प्रसज्यते। तदैव 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।' 'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।' 'सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्।' इत्यादि वाक्यानि संगच्छन्ते। अन्यत्र स्वधर्मपरधर्मव्यवस्थैव न स्यात्, कर्मानुसारिवर्णत्वे सर्वकर्मणां स्वधर्मत्वसम्भवात्।

किञ्च कस्मिंश्चित्सर्वसम्मत्या ब्राह्मणगुणा क्षत्रियगुणा वा न निर्णेतुं शक्यन्ते। बहुमतेन निर्णये तत्रापि कदाचित्कस्यचिद् बहुमतेन साधुत्वनिर्णयेन निर्वाचनं भवति। कदाचित्तु तदसाधुत्वनिर्णयेन तदुपेक्षणमन्यनिर्वाचनञ्च। गुणानां कर्मणाञ्च परिवर्त्तनमपि भवत्येव। कदाचिच्चौरः कालान्तरे साधुर्भवति। तथात्वे एकजीवनेऽनेकधा ब्राह्मण्यं क्षत्रियत्वञ्च। प्रतिदिनमपि वर्णपरिवर्तनं संभाव्यते। गृहमार्जनादौ प्रवृत्त्या शूद्रत्वं, शाकादिक्रयणप्रवृत्तौ वैश्यत्वं, श्वादिनिवारणे दण्डोद्यमने क्षत्रियत्वं, पूजापाठादौ प्रवृत्त्या ब्राह्मण्यं स्यात्। प्रतिक्षणं कर्मानुसारिवर्णपरिवर्त्तने पितुस्तामसत्वेन शूद्रत्वे मातुश्च सात्त्विकत्वेन ब्राह्मणत्वे तत्संसर्गजस्य पुत्रस्य ब्राह्मणत्वे पितुश्च शूद्रत्वे पित्रा पुत्रो वन्दनीयः स्यात्। नहि कश्चित् शूद्रत्वं कामयिष्यते।

ननु—'ब्राह्मणो नावमन्तव्यः सदसद्वा समाचरन्।' (१।१९० भारते) 'न जातु ब्राह्मणं हन्यात् सर्वपापेष्ववस्थितम्' (मनु० ८।३८) इति रीत्या कदाचारस्यैव जन्मना वर्णाभ्युपगमे समर्थनं भवतीति चेन्न वचनस्य ब्राह्मणत्वापादकजन्मान्तरीयसत्कर्मसम्मानपरत्वेन कदाचारविधाने तात्पर्य्याभावात्। तदनुरोधेनैव दण्डविधानेऽपि तारतम्यं भवति। यथाऽद्यत्वे राष्ट्रियसत्कर्मकरणाद् वीरगतिप्राप्तौ तत्पुत्रभार्य्याद्यनुग्रहोऽपि भवति तथैव महर्षीणां विश्वहितविशेषकरणात्तद्वंशजानामपि विशेषानुग्रहो युक्त एव।

नित्यत्वादात्मनः जन्मान्तरीयब्राह्मणत्वापादकशुभकर्मणामपि माहात्म्यात् समुचितगुणाभावेऽपि पूज्यता न विरुद्ध्यते।

'दुर्बला अपि विप्रा हि बलीयांसः स्वतेजसा।' (१९०।२३ आदिपर्व)

'दुर्वेदा वा सुवेदा वा प्राकृताः संस्कृतास्तथा।
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः॥' (वनपर्व २००।८८)

'यथा श्मशाने दीप्तौजाः पावको नैव दुष्यति।
एवं विद्वानविद्वान् वा ब्राह्मणो दैवतं महत्॥' ( ८० )

'अविद्वान् ब्राह्मणो देवः पात्रं वै पावकं महत्।
विद्वान्भूयस्तरो देवः पूर्णसागरसन्निभः॥' ( अनु० २५२।२० )

एवमादिभिर्जन्मनैव वर्णव्यवस्था दृश्यते। नच प्रक्षिप्तत्वं तेषाम्, भवदुदाहृतवचनानामपि तथात्वापत्तेः। मनुवचनेनापि सर्वपापलिप्तस्यापि ब्राह्मणस्यावध्यत्वमुक्तम्। 'राष्ट्रादेनं वहिष्कुर्यात्समग्रधनमक्षतम्' ( मनु ८।३८० ) सत्यपराधे राजा राष्ट्रादेनं समग्रधनमक्षतं निष्कासयेत्। अथर्ववेदेऽपि 'न ब्राह्मणो हिंसितव्यः' ( ५।२८।६ )

'तद् वै राष्ट्रमास्रवति नावं भिन्नामिवोदकम्।
ब्रह्माणं यत्र हिंसन्ति तद्राष्ट्रं हन्ति दुच्छुना॥' ( ५।३९।८ ) इति

तस्य हिंसा निषिद्धा। तावतापि वर्णो जन्मनैव सिद्ध्यति।

'सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु।
आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते॥'

इति, जन्मना वर्णव्यवस्थोक्ता। सैव भारतेन समर्थिता।

'एवं यद्यप्यनिष्टेषु वर्त्तन्ते सर्वकर्मसु।
सर्वथा ब्राह्मणा पूज्याः परमं दैवतं हि तत्॥' ( ६।३०० मनु० )

किञ्च मन्वादयो ब्राह्मणक्षत्रियविशां दानाध्ययनयज्ञान् समानरूपेण विधाय वृत्तिभेदं वर्णयन्ति। यदि कर्मणा वर्णः स्यात्तर्हि समानकर्मणां त्रयाणां वर्णविभागं कथं विदधीरन्? पूर्वं जन्मना वर्णं निरूप्य पश्चात्कर्म वर्णयन्ति। यदि कर्मणा स्यात्तदा तु कर्माणि विधाय वर्णविभागमुपदिशेयुः। सर्वत्रैव वेदेषु वर्णान् सिद्धान् मत्वा तानुद्दिश्य कर्मणां विधानं। नच कर्माण्युद्दिश्य वर्णविधानम्। य एवं कुर्यात्स विप्रः, य एवं कुर्यात्स क्षत्रिय इति। यत्र

कर्मणा वर्णव्यवस्था प्रतीयते तत्रापि जन्मान्तरीयजन्मभिरेव जन्मद्वारैव वर्ण-व्यवस्था ।

यदुक्तं 'सदसद्वा समाचरन्' इत्यादिवचनानि दण्डमोक्षायैव कल्पितानी'ति तन्न, राष्ट्रनिष्कासनरूपदण्डस्य तत्रापि विधानात् । दण्डतारतम्यन्तु लोकेऽपि दृश्यते । पित्रा समानेऽपि पुत्राणामपराधे यथायोग्यं बालकाय चपेटिकार्पणम् । तदुत्कृष्टस्य कर्णमर्दनं कस्यचित्तर्जनमन्यस्यावगूरणमेव क्रियते । राजभिरपि समेऽप्यपराधेऽपराधिनां स्तरभेदेन दण्डभेदः क्रियत एव । मन्वादिभिः व्यवहारालये व्यवहारेष्वपि तारतम्यमुच्यते ।

ब्रूहिति ब्राह्मणं पृच्छेत् सत्यं ब्रूहीति पार्थिवम् ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥' (मनु ८।८८ )

ब्रूहीत्युक्त्वा ब्राह्मणं पृच्छेत्, सत्यं ब्रूहीति पार्थिवम्, गोबीजकाञ्चनशपथैर्ब्रूहीति वैश्यम्, मिथ्याभाषणे सर्वाणि पातकानि भविष्यन्तीत्युक्त्वा शूद्रं पृच्छेत् ।

'शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ।
वैश्योऽप्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति ॥'

( मनु० ८।२६७ )

पञ्चाशद् ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने ।
वैश्ये स्यादर्धपञ्चाशत् शूद्रे द्वादशको दमः ॥ ( ८।२६८ )

वेदेष्वपि—एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजा ( शु० य० ८।४० ) इति रीत्या ब्राह्मणस्य राजशासनाविषयता । गौतमधर्मसूत्रेऽपि 'राजा सर्वस्य ईष्टे ब्राह्मणवर्जम्' ( १।२।९।११।१ )

यदि च सद्गुणैरेव ब्राह्मण्यं तदा तु तद्रहितेषु ब्राह्मण्यमेव न स्यात्तथा च व्यभिचारासंभवात् । सद्ब्राह्मण-इत्यत्र सद्विशेषणवैयर्थ्यमेव । असद्ब्राह्मण इत्यपि विशेषणमसंभवि, असतोऽविदुषोऽब्राह्मणत्वात् ।

एवमेव शूद्रेण सार्द्धमपि सदसद्विशेषणं निरर्थक एव । 'हैतुकान् वकवृत्तींश्च' ( ४।३० )

'न वार्यपि प्रयच्छेत्तु वैडालव्रतिके द्विजे ।
वकव्रतिके विप्रे नावेदविदि धर्मवित् ॥' ( ४।१९२ )

'धर्मनिष्ठान् श्रुतवतो वेदव्रतसमाहितान्।
अर्चयित्वा यजेथास्त्वं गृहे गुणवतो द्विजान्॥' ( शान्ति ७१।३ )

कुब्राह्मणः सुब्राह्मणः दुर्वृषलः सुवृषलः ( महाभाष्ये २।२।१८ ) इत्यादिशब्दैः जन्मनैव वर्णव्यवस्था सिद्ध्यति।

सद्गुणैः प्रशंसा दुर्गुणैश्च निन्दा भवति। कर्मणा तत्त्वे तु विशेषणानि व्यर्थान्येव स्युः। क्षत्रियवैश्या अपि तत्रैवान्तर्भवितुं शक्यन्ते। कर्मणा वर्णप्रत्यायकानि वचनानि तु कर्मप्रशंसार्थं तद्रहितानां निन्दार्थमेव चेति मन्तव्यम्। अन्यथा—

'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमासु गच्छति सान्वयः॥'
( म० स्मृ० २।१६८ )

अत्रैकस्य वेदविमुखत्वे तद्वंशजानां कुतः। शूद्रत्वं स्यात्? मानवमात्रस्य कर्मणा वर्णत्वे तदन्वमानां कथं शूद्रत्वनिर्णयः। अत्र शूद्रशब्दस्य विद्याराहित्येन शूद्रसदृश इत्येवार्थः।

'न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद्बहिष्कार्य्यः सर्वस्माद् द्विजकर्मणः॥' ( मनु० २।१०३ )

एतेन—

'नैतद् घोरतमं पापं वेदानध्ययनं तु यत्।
सर्वपापसमं नापि सन्ध्योपासनवर्जनम्॥
शूद्रत्वाप्तिस्तु तत्रापि दण्डो हि मनुना धृतः।
ब्राह्मण्यमवशिष्येत सर्वपापस्थितौ कथम्॥'

मानवधर्मसारे पृ० ४६ इत्यपि खण्डितम्। तत्र शूद्रसदृशत्वप्राप्तिरेवेत्यर्थस्योक्तत्वात्। 'न तिष्ठती' त्यस्य सन्ध्याऽननुष्ठाननिन्दार्थवादत्वात्। 'ये बकव्रतिनो विप्रा' इत्यादि वचनान्यपि निन्दार्थवादत्वेन गौणार्थकान्येव। अतएव विद्यादिसम्पन्नयोरपि क्षत्रियवैश्ययोः प्रतिग्रहः आचार्य्यरूपेणाध्यापनादिकञ्च निषिद्धम्। तदुक्तम्—

'त्रयो धर्मा निवर्त्तन्ते ब्राह्मणत्क्षत्रियं प्रति।
अध्यापनं याजनं च तृतीयं च प्रतिग्रहः॥' ( १०।७७ मनु० )

वैश्यं प्रति तथैवेते निवर्त्तेरन्निति स्थितिः ।
न तौ प्रतिहितान् धर्मान् मनुराह प्रजापतिः ॥' ( १०।७८ )

अन्यथा विद्यादिसम्पन्नतायामेवाध्यापनादिसामर्थ्यं भवति, सति सामर्थ्ये च ब्राह्मण्यमेव', तर्हि क्व निषेधावसरः ? क्षत्रियादिभ्यो ब्राह्मणानामध्ययनन्त्वापत्काल एव । 'अब्राह्मणादध्ययनमापत्काले विधीयते ।' ( मनु० २।२४१ ) अत एव क्षत्रियैरनुपनीयैव क्वचिद् ब्राह्मणा अध्यापिताः, आचार्य्यत्वेन तदध्यापननिषेधात् । तेन ब्राह्मणादयो न केवलं जन्मना किन्तु गर्भादेव तेषामाचार्य्यकरण ( उपनयन ) कालोऽपि भिद्यते । शूद्रस्य तद्राहित्येन एकजातित्वमवर्णानमन्त्यजानामपात्रत्वञ्च निश्चितम् ।

'जप्येनैव तु संसिद्ध्येद् ब्राह्मणो नात्र संशयः ।
कुर्य्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥' ( २।८७ म० )
'सावित्रीमात्रसारोऽपि वरं विप्रो नियन्त्रितः ।
नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी ॥'
( २।११८ मनु )

मित्रमेव मैत्रः मित्रः सूर्य्यस्तदेवताको वा ब्राह्मणो गायत्रीजपेनापि सिद्ध्यति ।

यत्तूक्तम्—ब्राह्मणानामदण्ड्यत्वोक्त्या पापप्रोत्साहनमेव भवतीति तन्न देशनिष्काशनादि दण्डस्य तेषामपि विधानात् । ब्राह्मणत्वप्रापकपूर्वजन्मार्जितानां कर्मणां संमानार्थमेतदित्युक्तमेव । 'यद्वै मनुरवदत्तद् भेषजम्' इति श्रुत्यनुरोधान् मनूक्तीनां प्रामाण्यम् । तत एव ।

'अंग्रेजो नावमन्तव्यः सदसद्वा समाचरन् ।
न जातु हन्यादंग्रेजं सर्वपापेष्ववस्थितम् ॥
प्रत्यक्षं श्वेतवर्णोऽयं सर्ववर्णोत्तमोत्तमः ।
सर्वेषामेव वर्णानामंग्रेजो न्यायतः प्रभुः ॥
महती देवता ह्येषा नररूपेणत ष्ठिति ।'

इत्याद्यपास्तम् । मनुवचनवत्तेषां वचनानामप्रामाण्यात् । दानविक्रयादिपत्रेष्वपि प्रामाणिकाप्रामाणिकभेददर्शनात् । येषां मन्वादिष्वाप्तबुद्धिर्नास्ति तेषां कृते मनुवचनानामप्रामाण्यम् भवत्येव ।

नच तादृग्वचनानां प्रक्षिप्तत्वमेव, 'राज्ञः सम्बन्धेऽपि महती देवता ह्येषा नररूपेण तिष्ठती'ति दर्शनात्। नच तस्यापि प्रक्षिप्तत्वम्, 'नराणाञ्च नराधिप'मिति गीतायामपि तस्य परमेश्वररूपत्वोक्तेः। वेदेऽपि 'राज्ञो विश्वजनीनस्य यो देवो मर्त्यां अति।' ( अथर्व शौ० २०।१२७।७ ) ब्राह्मणसंबंधेऽपि 'न ब्राह्मणो हिंसितव्यः' ( अ० ५।१८।६ )

एतेन हिंसार्हस्यापि ब्राह्मणस्य हिंसानिषेधेन जन्मनैव वर्णव्यवस्था सिध्यति। अन्यत्रापि मनुना प्रोक्तम्।

'न ब्राह्मणवधाद्भूयानधर्मो विद्यते भुवि।
तस्मादस्य वधं राजा मनसाऽपि न चिन्तयेत्॥' ( ८।३८१ )

ब्रह्महा च एते पतन्ति' ( छान्दोग्य ५।१०।९९ )

वृश्च प्रवृश्च संवृश्च दह प्रदह संदह॥ ६२॥ ब्रह्मज्यं देव्यघ्न्य आमूलादनुसंदह॥ ६३॥ यथायाद्य मासादन्यद् पापलोकान् परावतः॥ ६४॥ ( अथर्व १२।५।६२।६३।५४ ) निकृत्तय निकृत्य पातय तिलशः कर्त्तय दह प्रदह संदह्य भस्मीकुरु ब्राह्मणं संतापिनम्। हे अघ्न्ये देवि यमसदनादपि दूरवर्तिनो लोकान् यातु तदेषाभ्युक्ता ये अर्वाङुत वा पुराणैवेदं विद्वांसमभितो बदन्त्यादित्यमेव ते परिवदन्ति सर्वे अग्निं द्वितीयं च हंसामिति। यावतीर्बैदेवताः ताः सर्वा वेदविदि ब्राह्मणे वदन्ति। तस्माद् ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यात् नाश्लीलं कीर्तयेत्। एता एव देवताः प्रीणाति' ( तै० आ० २।१५ ) नतु तस्मिन् विद्यमानमपि दोषं कीर्तयेत् इति ऋग्वेदीयोद्घाते सायणः। ब्राह्मणसम्बन्धीन्यपि मन्वादिवचनानि वेदमूलकान्येव। पतनमूलं तु शास्त्रोपेक्षणमेव न शास्त्राज्ञापरिपालनम्। एतेन—

'गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायान्तं हन्यादेवाविचारयम्॥' (मनु ८।३५०)

इत्यादि वचनन्तूत्सर्गभूतमर्थशास्त्रपरञ्च अपवादवचनं धर्मपरवचनञ्च ततो बलीयः। 'प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते' इति ( महाभाष्य पा० १।२।१२४ ) न्यायेन 'अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थिति' रिति स्मृत्या च ब्राह्मणातिरिक्तविषय उत्सर्गवचनप्रवृत्तेः।

यद्वा 'न जातु ब्राह्मणं हन्या'दित्युत्सर्गः, आततायिनमायान्तमित्यपवादः आततायिब्राह्मणवधेऽपि न शारीरदण्डविधानेन, किन्तु देशनिष्काशनादिना ।

'ब्रह्मबन्धुर्न हन्तव्यः आततायी वधार्हणः ।'
'वपनं द्रविणदानं स्थानान्निर्यापणं तथा ।
एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः ॥'

( श्रीभागवत् १।७।३३-५७ )

इत्याद्युक्तेः 'जित्वा मुक्तो निहतौ ब्राह्मण्याद्गौरवेण च । यशोऽस्य पतितं देवि शरीरं त्ववशेषितम् ।' ( सौप्तिक पर्व १६।३२ ) एभिर्वचनैराततायिनोऽप्यश्वत्थाम्नः शारीरदण्डो वर्जितः ।

'यथाश्मशाने दीप्तौजाः पावको नैव शाम्यति ।
एवं विद्वानविद्वान्वा ब्राह्मणो दैवतं महत् ॥' (वन०२०।८९)
'सापराधानपि हितान् विषयान्ते समुत्सृजेत्' ( शान्ति ५६।३१ )
विधीयते न शारीरं दण्डमेषां कदाचन ।
क्षत्रियेण हि कृन्तत्यः क्षत्रियो लोभमास्थितः ।
अक्षत्रियो वा दाशार्ह स्वधर्ममनुतिष्ठता ॥
अन्यत्र ब्राह्मणत्तात सर्वपापेष्ववस्थितात् ।
गुर्हि सर्ववर्णानां ब्राह्मणः प्रसृताग्रभुक् ॥' (उ०८२।१६)
'मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते ।
इतरेषान्तु वर्णानां दण्डः प्राणान्तिको भवेत् ॥'

( मनु० ८।३७९ )

'वधार्हे दण्डे प्राप्ते मौण्ड्यमेव न वधः, इतरेषां वध एवे'ति टीकाकाराः । अतएव राजा ब्राह्मणातिरिक्तानामेव शासकः ।

'ब्राह्मणेभ्यो नमेन्नित्यं धर्मायैव च सञ्जय ।'
'नियच्छन्नितरान् वर्णान् विनिघ्नन् सर्वदुष्कृतः ॥'

( १३४।४०।४१ )

यदुक्तम्—'अष्टापाद्यं तु शूद्रस्य' ( म० ८।३३७ ) ब्राह्मणस्य चतुःषष्टिः ।' ( मनु ८।३३८ ) इत्यादि श्लोकैर्ब्राह्मणस्य' दण्डविधानदर्शनेन

तद्विरुद्धत्वात्। 'सदसद्वा समाचार'न्निति प्रक्षिप्तवचनमिति, तन्न, तेषां वचनानां चौर्य्यादिकृत्यपरिणामप्रदर्शनपरत्वात् 'स्तेये भवति किल्विषम्' इत्युक्तत्वात्। शूद्रस्याष्टगुणितं, वैश्यस्य षोडशगुणितम्, क्षत्रस्य द्वात्रिंशद्गुणितम्, ब्राह्मणस्य तु चतुःषष्टिगुणितं शतं वा किल्विषमुक्तम्। ब्राह्मणस्य तद्दोषगुणवित्त्वात् 'तद्दोषगुण विद्धि सः।' इत्युक्तेः। इह लोके तस्यादण्ड्यत्वेऽपि परलोके तस्यापि पापकर्मफलभागित्वात्। 'कथञ्चिदप्यतिक्रामन् पापः सूकरतां व्रजेत्।' (मनु ३।१९०) इति वचनात्। अथवा गुणदोषविदां समेषामेव द्विगुणम् पापं भवति।

'अष्टापाद्यं तु शूद्रस्य स्तेये भवति किल्विषम्।
षोडशैव तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य च॥ (८।३३७)
ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत्।
द्विगुण्यं वा चतुःषष्टिः तद्दोषगुणविद्धि सः॥'(८।३३८)

अथवा सर्वपापकृदपि विप्रोऽवध्य इत्येव न जातु ब्राह्मणं हन्यादित्यस्यार्थः। क्वचिदन्यवर्णापेक्षया ब्राह्मणस्याल्पतमो दण्डः। क्वचित्तु शूद्राद्यपेक्षया ब्राह्मणस्याधिको दण्डः। सुरापाने ब्राह्मणस्य मरणान्तं प्रायश्चित्तं प्रसिद्धमेव।

अव्यवस्थितपुरुषचित्तानां गुणानाञ्च परिवर्त्तनशीलत्वेन नित्यं नवनवप्रियत्वाच्च स्थैर्य्याभावात् गुणकर्मभिर्वर्णव्यवस्थायामव्यवस्थैव। अनुत्तरदायित्वञ्चाप्यापतति। ब्राह्मणस्य क्षत्रियस्य च स्वधर्मत्यागेन जातायां राष्ट्रक्षतौ न कश्चित्पर्यनुयोज्यः। ब्राह्मणधर्मं परित्यज्य क्षत्रियत्वकाम्यया मया तद्धर्मोऽन्यधर्मोऽनुष्ठीयत इत्युत्तरसंभवात्। किञ्च ऐहिककर्मणां वर्णहेतुत्वे कर्मणां जन्मारभ्य मरणपर्यन्तं सत्त्वात् कैर्वर्णव्यवस्था स्यात्? नहि कर्मणां परीक्षापरिणामो वा समकालो भवति। कर्मणां परिवर्त्तनशालित्वेन वर्णानामपि परिवर्त्तित्वं स्यात्। यद्येकवारमेव सभया केनचिद्विशिष्टेन वा निधारितो वर्णो यावज्जीवनमेव स्थायी भवेत्तदा तु परमेश्वरनिर्धारितजन्ममूलिकैव वर्णव्यवस्था युक्ता। मनुष्याणां भ्रमप्रमादवत्त्वेन तन्निर्धारणस्य सदोषत्वात्। तदपेक्षया सर्वज्ञपरमेश्वरदत्तजन्मानुसारिवर्णस्वीकृतिरेव ज्यायसी।

यदप्युक्तम्—

'न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्।
ब्रह्मणा पूर्वसृष्टं हि कर्मणा वर्णतां गतम् ॥'
(म० भा० शा० ११८।१०)

इत्यादिवचनैः कर्मणैव वर्णव्यवस्था ज्ञायते इति, तन्न, मतङ्गाद्युपाख्यानानुरोधेन तेषामपि जन्मान्तरीयकर्मानुसारि वर्णव्यवस्था बोधने तात्पर्य्यावगमात्।

श्लोकार्थस्तु—वर्णानां विशेषो नास्ति आकारादिभेदो नास्ति। सर्वमिदं ब्राह्मं ब्रह्मणा हि सृष्टम्। अपत्यार्थकोऽयं प्रत्ययस्तेनैव ब्राह्ममित्युक्तम्। जातिविवक्षायान्तु ब्राह्मण इति स्यात्। 'ब्राह्मोऽजातौ' (पा० ६।४।१७१) हि शब्देन हेतुर्विवक्षितः। ब्रह्मणा सृष्टत्वात्सर्वमिदं ब्राह्मम्। अन्योशेन तु जन्मना वर्णव्यवस्थैव बोध्यते। नात्र कर्मणा वर्णव्यवस्थासत्त्वे प्रमापकं किञ्चित्। जन्मान्तरीयकर्मभिरेव ब्राह्मणादिवर्णभेदः। कर्मणा वर्णत्वे ब्रह्मणा सृष्टत्वात् सर्वमिदं ब्राह्मं ब्राह्मण इत्यर्थस्त्वसंगत एव, त्वद्रीत्या वर्णस्य कर्ममूलकत्वं नात्र कर्ममूलकत्वमुक्तम्, किन्तु ब्रह्मकर्तृकसृष्टिमूलकत्वमेवोक्तम्। नहि जन्मसमकालिकं कर्म संभवति। नहि वालो जन्मसमकालमेव कर्म करोति येन तस्य ब्राह्मणत्वं स्यात्। अतएव श्वेतरक्तपीतकृष्णवर्णत्वमुपपद्यते। न ह्येकस्मिन् जन्मनि कर्मभेदेन श्वेतपीतादिरक्तभेदो दृश्यते। जन्मसिद्धवर्णरङ्गस्यैव यावज्जीवं दर्शनात्। जन्मान्तरे तु प्राक्तनकर्मभेदेन रङ्गभेदो भवत्येव। तदुक्तं न्यायभाष्येऽपि—'अथापि धर्माधर्मलक्षणमदृष्टमुपादीयते तथापि पूर्वशरीरयोगोऽप्रत्याख्येयः। तत्र हि पूर्वजन्मशरीरे तस्य (धर्माधर्मलक्षणादृष्टस्य) निर्वृत्तिः नास्मिन्जन्मनि (पूर्वजन्मकर्मणामेवात्र भोगस्वीकारात्) कर्म खलु जातिविशेषानिवर्त्तकम्' (न्या० द० ३।१।२७) तत एवात्रापि—

'असृजद् ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतीन्।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम ॥'
'ये चान्ये भूतसङ्घानां वर्णांस्तांश्चापि निर्ममे।'
(शा० प० ११८।१-४)

इति वर्णभेदः कर्मभेदमूलक एव। कर्माणि च जन्मान्तरीयाण्येव।

यदुक्तं 'वर्णाश्रमव्यवस्थाश्च न तदासन् न संकरः ।' इति वायुपुराणीय-श्लोकेन कृतयुगे वर्णव्यवस्थाभावात् पश्चात् कर्माणि वर्णसाधन'मिति तत्तुच्छम् । प्रवाहरूपेण वर्णव्यवस्थाया अनादित्वेऽपि प्रतिकल्पं प्रादुर्भावक्रमे वाय्वाद्युत्पत्ति-पूर्वकाले वायवाद्यसत्वमिव वर्णव्यवस्थाप्रादुर्भावात् प्राक् तदसत्त्वस्य स्वा-भाविकत्वात् । उक्तश्लोकैः कर्महेतुकत्वमेव बोध्यते । तथाहि तत्र कृतयुगे ब्राह्मणादय आसन्न वा ? यद्यासंस्तदा जन्मनैव मन्तव्याः । यदि नासंस्तदाऽपि किं तदानीं कर्माण्येवासन्न वा ? प्रथमे कुतो न कर्मानुसारिणी वर्णव्यवस्था जाता ? द्वितीये 'नहि कश्चित्क्षणमपि जातुतिष्ठत्यकर्मकृ'दिति विरोधात् । 'न संकर' इत्युक्त्या तु स्पष्टं विज्ञायते यत् वर्णेषु सत्स्वेव विरुद्धविवाहाद्यभावात्-साङ्कर्य्यं नासीत् । प्राप्तौ सत्यामेव निषेधसंभवात् ।

किञ्च यदि वादिनः पुराणप्रामाण्यं नाङ्गीकुर्वन्ति तत्र प्रक्षेपं वाङ्गी-कुर्वन्ति तदा कथं तैरेतैः श्लोकैः वर्णव्यवस्थाऽभावः कर्मणा वा तद्भावःसाधयितुं शक्यः ?किञ्च वेदस्यानादित्वे 'ब्राह्मणोऽस्य मुखमासी'दिति वर्णव्यवस्थानादित्व-मेव सिद्ध्यति ।

किञ्च सत्ययुगे—ब्रह्मचर्य्यगृहस्थवानप्रस्थसंन्यासाश्रमाश्चेन्नासंस्तदा कथमुत्पत्तयो जनानां भवन्ति स्म ? तस्मान्न तत्र वर्णाश्रमनिषेधः किन्तु वर्णाश्रमव्यवस्थानिषेध एव । सर्वेषां वर्णानां स्वधर्मनिष्ठत्वेन कुमार्गगामित्वा-भावेन व्यवस्थाया नियन्त्रणस्याभावात् व्यवस्थाभावो युज्यते । यथा मात्स्य-न्यायेन शोषणाभावाद्राज्यव्यवस्थाभावस्तथैव प्रकृतेऽपि ज्ञेयम् । वर्णसाङ्कर्या-श्रमसाङ्कर्य्यापनोदनायैव व्यवस्थाया अपेक्षितत्वेन कुमार्गगामित्वाभावेन साङ्कर्य्यासंभवेन तदनुपपत्तेः । स्वभावनियतानां कर्मणां त्यागप्रसङ्गे तदपेक्षा सत्त्वात् । तत एव तेषां सिद्धत्वात् संकल्पादेव प्रजोत्पत्तिः । 'तासां विशुद्धात्-संकल्पाज्जायन्ते मिथुनाः प्रजाः ।' ( वायु० पु० ८।१५८ ) किं सुधारकाः मैथुनमन्तरा संकल्पादेव प्रजोत्पत्तिमभ्युपगन्तुं शक्नुवन्ति ?

यदुक्तम्, 'भविष्ये कर्मणा वर्णव्यवस्थोक्ता' तदपि तुच्छम्, तत्र कर्महेतुकत्वस्यापि खण्डनात् । 'तस्माद् देहात्मके नैतद् ब्राह्मण्यं नापि कर्मजम् ।' ( ब्राह्मपर्व ४१।५७ ) तस्मात्तत्र जन्मकर्मसमुच्चये तात्पर्य्यं मन्तव्यम्, श्रुति-स्मृत्यनुरोधेनैव पुराणानां नेयत्वात् । लोकव्यवहारव्यवस्थापनस्य धर्मशास्त्र-

विषयत्वात् । 'लोकवृत्तं पुराणस्य विषयः' इति रीत्या पुराणस्य लोकवृत्तबोध-परत्वोक्तेः । 'यथाविषयमेतानि प्रमाणानीन्द्रियव'दिति ( न्याय द ४।१।६२ ) ।

यदुक्तम् 'धर्मशास्त्रेष्वपि कर्मणैव वर्णव्यवस्थोक्ता धर्मचर्य्यया जघन्यो जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ' ( आ० धर्मसूत्र ) विद्याऽविद्योपासनसमुच्चयविधानायैकैकस्य निन्दनमिव वर्णव्यवस्थापनाय जाति-कर्मसमुच्चयविधानायैकैकनिन्दनमिह वर्णितम् । भविष्यपुराणे चत्वारिंशोऽध्याये । कार्तिकेयवर्णने विप्रादिजातिवर्णनम् प्रकृत्य शतानीक उवाच—

अहो बत महत्कष्टं संशयो हृदि वर्त्तते ।
कार्तिकेयस्य माहात्म्यं श्रुत्वा जन्म तथा द्विज ॥ १ ॥
अनेकजनितस्येह कार्तिकेयस्य सुव्रत ।
माहात्म्यं सुमहद्विप्र कथमेतद्विभाव्यते ॥ २ ॥
जातिः श्रेष्ठा भवेद्विप्र उत कर्मभवेद्वरम् ।
संशयस्तु महानत्र दृष्ट्वा मे कृत्तिकासुतम् ॥ ३ ॥
एतद्वद विनिश्चित्य न यथा संशयो भवेत् ।
जन्मतः कर्मणश्चैव यज्ज्यायास्तद् ब्रवीहि मे ॥ ४ ॥

सुमन्तुरुवाच—

इममर्थं पुरा पृष्टो ब्रह्मा शिष्यैर्मनीषिभिः।
यदुक्तं तेन तेषां च तत्ते वच्मि निबोध मे ॥
सुरज्येष्ठं सुखासीनमभिगम्य महर्षयः ।
प्रणम्य च महाबाहो विश्वामित्रस्य विप्रताम् ॥
दृष्ट्वा विस्मयमागत्य कौतूहलसमन्विताः ।
भक्तिं श्रद्धां पुरोधाय प्रणम्यानतकन्धराः ॥

ऋषय ऊचुः

भो ब्रह्मनादिकल्पे हि ब्राह्मण्यं ब्रूहि किं भवेत् ।
जात्यध्ययनदेहात्मसंस्काराचारकर्मणाम् ॥
बाह्याभ्यन्तरसामान्यविशेषा यदि कृत्रिमाः ।
मनोवाक्कर्मशारीरजातिद्रव्यगुणात्मकाः ॥

संत्यक्तव्याः प्रसिद्धा ये जातिभेदविधायिनः ।
वस्तुभूताः परोक्षैर्वा प्रमाणैर्न विनिश्चिताः ॥
अव्यक्तागमसिद्धश्चेज्जातिभेदविधिर्नृणाम् ।
विकल्पोऽयं न पुष्णाति भवतः शेमुषीबलम् ॥

ब्रह्मोवाच

एवमेतन्न संदेहो यथा यूयं वदन्ति ह ।
शृणुध्वं योगिनो वाक्यं सतर्कं शिष्यश्रेयसे ॥ १२

योगेश्वर उवाच

प्रमाणे हि प्रसिद्धे तु भिन्नार्थविषये यतः ।
स्पष्टयोगार्थविषयं प्रत्यक्षं तावदीक्षते ॥ १३
सामान्यातीन्द्रियग्राही सिद्धान्तोऽभ्युपगम्यते ।
स एव भगवानेकं प्रमाणमिति चेन्न तत् ॥ १४
यस्माद्विविधमेतत्ते संकटं भद्र वर्त्तते ।
वेदस्य पौरुषेयत्वं नित्यजातिसमर्थकम् ॥ १५
कार्य्या विशेषा वेदोक्ता न युक्तमकृतं वचः ।
ताल्वादिकरणानाञ्च व्यापारानन्तरं श्रुतेः ॥
व्यापारात्परतस्तस्य प्रागभाव विशेषतः ।
तद्भावानुविधायित्वमन्वयव्यतिरेकतः ॥
तस्मात् धूमाग्निवद्वार्थफलभावोऽवतिष्ठते ।
नच व्यापारवचसोरन्यथानुपपत्तितः ॥
पुरुषानुगता जातिर्ब्राह्मणत्वादिकास्ति चेत् ।
द्विवर्णजातिभेदेन प्रत्यक्षार्थोपलक्षणात् ॥
गोवर्णमध्यं च गतो यथाश्वो निर्धार्यते ज्ञैः सुविचक्षणत्वात् ।
मनुष्यभावादिविशिष्यमाणास्तद्वद्विजः शूद्रगणान्न भिन्नः ॥
मनुष्यजातेर्न परो विशेषो यः कल्प्यते सर्वनरानुयायी ।
संस्कारयुक्ता हि क्रिया विशिष्टा द्विजन्मनां शूद्रविवेकहेतुः ॥

जीवोऽपि ब्राह्मणः प्रोक्तो यैरतत्त्वज्ञमानवैः
प्रभ्रष्टब्राह्मणात्वास्ते जायन्ते विप्रसंगतः ॥
जराजन्मान्तरक्लेशदुष्टग्राहकुलाकुलम् ।
नरतिर्यगसच्छूद्रयोनिदुःखोर्मिसंकटम् ।
दौःस्थित्यरोगशोकार्ति जनावर्तसमन्वितम् ।
श्वानशूकरचाण्डालकृमिकूर्मादिकायकम् ॥
संसारसागरं घोरं मग्नः खलु परिप्लवन् ।
भूरिपापभराक्रान्तः स जीवो ब्राह्मणः कथम् ॥

ब्रह्मोवाच—

सप्तव्याधकथा विप्रा मनुना परिकीर्तिता ।
तां निशम्य यदुश्रेष्ठ नित्यं जातिपदं त्यजेत् ॥
सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ ॥
चक्रवाकाः मरिद्द्वीपे हंसाः सरसि मानसे ॥
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।
प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ ॥
तस्मान्न जीवे ब्राह्मण्यं पश्यामो हि कथञ्चन ।

शस्त्रादिमद्भार्गवजाति युक्तो गजाश्वगोजोष्ट्रखरादिकानाम् ।
शक्त्या कृतो ह्यंगजवर्णधर्मैर्भेदः स्फुटं लक्षणतोऽत्र यद्वत् ॥
तदुत्तरानैव विकर्त्तनीया ब्राह्मण्य जातिर्नप नास्ति काचित् ॥
नित्याकृतिर्मानुषभेदरूपा यथाहि भेदः परमोऽत्र सिद्ध्येत् ॥
सिताद्यसाधारणतुल्यरूपाः सनातनोंगेषु न वर्णभेदः ॥
ब्राह्मण्यमध्रुवमिदं किल कृत्रिमत्वाकृत्रिमं भवति सामयिकत्वयोगात् ।
सांकेतिकं सुकृतलेशविषलब्धं वाणिज्यभेषजकृतामिव जातिभेदाः ॥
किं ब्राह्मणा ये सुकृतं त्यजन्ति किं क्षत्रिया लोकमपालयन्तः ॥
स्वधर्महीना हि तथैव वैश्याः शूद्राः स्वमुख्यक्रियया विहीनाः ॥
तस्मान्न गोश्ववत्कश्चित् जातिभेदोऽस्ति देहिनाम् ।
कार्यशक्तिनिमित्तस्तु संकेतः कृत्रिमो भवेत् ॥

एवं प्रमाणैः प्रतिषिध्यमानां सांकेतिकीं याति नरो व्यवस्थाम् ।
स्वकीयसिद्धां स्वमतैर्निषिद्धां न बुद्धयते मूढमना वराकः ॥

गोमहिष्यजवाज्युष्ट्रवानेयाविगजाधिपाः ।
प्रेष्यवार्धुषिकाकार्यकरणोद्यतमानसाः ॥
वणिक्कारुक्रियाविष्टादिव्यास्तेऽपि च ये द्विजाः ।
विनष्टास्ते तु विज्ञेयाः क्रव्यादाश्च कुशीलवाः ॥
पलाण्डुलशुनादाश्च मृग्युष्ट्रीक्षीरपायिणः ।
मांससर्वरसक्षीरक्रयविक्रयकारिणः ॥
पुनर्भू वृषली वेश्या चांडालस्त्रीनिषेविणः ।
शूद्रान्नरसपुष्टाङ्गाः प्रेतवस्त्रान्नभोजनाः ॥
मृतसूतकलब्धान्नपानाद्यभ्यवहारिणः ।
ब्रह्मदेवपितृभूतमनुष्येषु बहिष्कृताः ॥
मात्सर्यमदविद्वेषतृष्णाकामतमोमयाः ।
हीनाचारा हि ये केचिदपरे पिशुना द्विजाः ॥
प्रकारैर्बहुभिः सर्वे ते प्रणश्यन्ति नान्यथा ।
एवं शास्त्रोदितन्यायमार्गभ्रष्टास्तु ये नराः ।
विशिष्टगोत्रसंस्कारकलापसकलात्मकाः ॥
वेदानध्यापयन्तोऽपि तेऽधीयानाः श्रुतिक्रमात् ।
ब्राह्मणत्वाद्विहीयन्ते दुराचारविधायिनः ॥
तस्मान्न जातिरेकत्र भूतात्मास्त्यनपायिनी ।
नाशित्वादत्र च श्लोकान्मानवाः समधीयते ॥
सद्यः पतति मांसेन लाक्षया लवणेन च ।
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयी ॥
गोरक्षकान्वाणिजिकांस्तथा कारुकुशीलवान् ।
प्रेष्यान्वार्धुषिकांश्चैव शूद्रास्तान् मनुरब्रवीत् ॥
शूद्रो ब्रह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।
क्षत्रियो याति विप्रत्वं विद्याद्वैश्यं तथैव च ॥

इति श्रीभविष्यपुराणे शतार्धसाहस्र्यांसंहितायां। ब्राह्मे पर्वणि षष्ठीकल्पे कार्तिकेयवर्णने जातिवर्णनं नाम चत्वारिंशोऽध्यायः॥

॥ भविष्यपुराणे—एकचत्वारिंशोऽध्यायः ॥

ब्रह्मोवाच

वेदाध्ययनमप्येतद् ब्राह्मण्यं प्रतिपद्यते।
विप्रो वैश्यराजन्यौ राक्षसा रावणादयः॥
श्वादचाण्डालदासाश्च लुब्धकाभीरधीवराः।
येऽन्येऽपि वृषलाः केचित्तेऽपि वेदानधीयते॥
शूद्रा देशान्तरं गत्वा ब्राह्मण्यं क्षत्रियं श्रिताः।
व्यापाराकरभाषाद्यैर्विप्रतुल्यैः प्रकल्पितैः॥
वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्।
प्रोद्वहन्ति शुभां कन्यां शुद्धब्राह्मणजां नराः॥
अथवाधीत्य वेदांस्तु क्षत्रवैश्यैस्तु वा नराः।
गौडपूर्वाकृतामीयुर्जातिं वा दाक्षिणात्यजाम्॥
अपरिज्ञातशूद्रत्वाद् ब्राह्मण्यं यान्ति कामतः।
तस्मान्न ज्ञायते भेदो वेदाध्यायक्रियाकृतः॥
शास्त्रकारैस्तथा चोक्तं न्याममार्गानुसारिभिः।
ते साधुमतमाकर्ण्य सन्तः सन्ति विमत्सराः॥
आचारहीनान्न पुनन्ति वेदाः यद्यप्यधीताः सह षड्भिरङ्गैः।
शिल्पं हि वेदाध्ययनं द्विजानां वृत्तं स्मृतं ब्राह्मणलक्षणन्तु॥
अधीत्य चतुरो वेदान् यदि वृत्ते न तिष्ठति।
न तेन क्रियते कार्यं स्त्रीरत्नेनेव षंढकः॥
शिखाप्रणवसंस्कारसन्ध्योपासनमेखलाः।
दण्डाजिनपवित्राद्याः शूद्रेष्वपि निरङ्कुशाः॥
प्रसङ्गोऽपि हि शूद्रायां न शक्यो विनिवारितुम्।
देवोत्तमत्रयेणापि निवर्त्तन्ते नराः स्वयम्॥
तस्मान्नैतेऽपि लक्ष्यन्ते विलक्षणतया नृणाम्।
यज्ञोपवीतसंस्कारमेखलाचूलिकादयः॥

आभिचारिकमन्त्राद्यैर्दुर्लभत्वादिभाषणैः ।
ब्राह्मणस्यैव शक्तिश्चेत् केनास्य विनिहन्यते ॥
तपःसत्यादिमाहात्म्याद्देवतासमयस्मृतिः ।
मन्त्रशक्तिर्नृणामेषां सर्वेषामपि विद्यते ॥
वचनं दुर्वचस्यापि क्रियते सर्वमानवैः ।
शूद्रब्राह्मणयोस्तस्मान्नास्ति भेदः कथञ्चन ॥
शापानुग्रहकारित्वं शक्तिभेदो न विद्यते ।
चौरचाटादिराजन्यदुर्जनाभिहते नृणाम् ॥
आत्मदुःखोदयापायं स्वेषु जन्तुषु रक्षणम् ।
कर्तुं न प्रभवेच्छूद्रो ब्राह्मणस्तद्वदेव हि ॥
मा भूद्युगे कलावेतद्देशे चाकार्यकृद्द्विजे ।
स्यादन्यदेशकालादौ द्विजानामतिशायिनाम् ॥
शापानुग्रहसामर्थ्यमन्यद्वाध्यात्मगोचरम् ।
ब्रह्मसाधनमेतद्धि लिङ्गं केचित्प्रचक्षते ॥
संसाराकचेतस्का मोहान्धतमसावृताः ।
पतन्त्युन्मार्गगर्तेषु प्रत्यग्नि शलभा यथा ॥
जातिधर्मः स्वयं किञ्चिद्विशेषः श्रुतिसंगमात् ।
असिद्धः शूद्रजातीनां प्रसिद्धो विप्रजातिषु ॥
संस्कारो योनिसाध्यो वा सामग्रीप्रभवोऽथवा ।
शूद्रेभ्योऽतिशयं धत्ते यः साधारणतागुणः ॥
विप्राणां पञ्चधा भेदः कल्पनीयस्तु पण्डितैः।
न जातिजस्त्वयीजो वा विशेषो युक्तिबाधकात् ।
क्रमाक्रमक्रियाः सन्ति न सनातनवस्तुनः ॥
नित्यो न हेतुर्विगतक्रियत्वाद्धेतुर्भवेद्वेदविशेषतः सः ।
स तत्समस्तत्प्रतिसन्निधानात्कालात्ययेक्षित्वमयुक्तमेव ॥
स्वान्तःशरीरवृत्तिस्थः श्रुतियोगादुदेति यः ।
सोऽनन्यवेदविज्ञातस्वभावोऽन्यैर्न गम्यते ॥
विशिष्टाधीतिधर्मत्वे कृत्रिमा ब्रह्मसंगतिः ।
यस्यास्त्यतिशतस्तस्य नान्योनाश्रयते यदि ॥

दृश्यस्वभावं किमभीष्टमेतद् ब्राह्मण्यमाहोस्विददृष्टरूपम् ।
सर्वैःप्रतीयेत हि दृश्यरूपं ततोऽन्यथावद् गतिरेव न स्यात् ॥
सामग्र्यभावात्परमं विशेषं भूदेवगात्रस्थमभूमिदेवाः ॥
स्मरन्ति तेनात्मनि पुण्यपापं यथातथेत्येतदयुक्तमुक्तम् ।
सामग्र्यनुष्ठानगुणैः समग्राः शूद्रा यतः सन्ति समा द्विजानाम् ॥
तस्माद्विशेषो द्विजशूद्रनाम्नोर्नाध्यात्मिको बाह्यनिमित्तको वा ।
संस्कारतः सोऽतिशयो यदि स्यात्सर्वस्य पुंसोस्त्यतिसंस्कृतस्य ।
यः संस्कृतो विप्रगणप्रधानो व्यासादिकैस्तेन न तस्य साम्यम् ॥
हेतुत्वं घटते नैषां जात्यादीनामसंभवात् ।
जातेरकृतकत्वाच्च अधीते न विशेषतः ॥
संस्कारातिशयाभावादंतरस्यागते परैः ।
भौतिकत्वात् शरीरस्य समस्तानामसंहृतैः ।
किं चान्यनास्तिकम्लेच्छयवनादिजनेष्वलम् ।
वेदोदितबहिर्दुष्टचरितेषु दुरात्मसु ॥
धर्मादतिशयो दृष्टः क्रूरसाहसकादिषु ।
तस्माद्विप्रेषु जात्यादिसामग्रीप्रभवो न सः ॥
तस्मान्न च विभेदोऽस्ति न बहिर्नान्तरात्मनि ।
न सुखादौ न चैश्वर्य्ये नाज्ञायां नामयेष्वपि ॥
न वीर्य्ये नाकृतौ नाक्षे न व्यापारे न चायुषि ।
नाङ्गे पुष्टे न दौर्बल्ये न स्थैर्ये नापि चापले ॥
न प्रज्ञायां न वैराज्ये न धर्मे न पराक्रमे ।
न त्रिवर्गे न नैपुण्ये न रूपादौ न भेषजे ॥
न स्त्रीग्रभे न गमने न देहमलसम्प्लवे ।
नास्थिरन्ध्रे न च प्रेम्णि न प्रमाणो न लोमसु ॥
शूद्रब्राह्मणयोर्भेदो मृग्यमाणोऽपि यत्नतः ।
नेक्ष्यते सर्वधर्मेषु संहतौ त्रिदशैरपि ॥
उक्तमात्रा विसम्भूर्तिविचारक्रमकारिभिः ।
वृद्धवृन्दारकाधीशैरप्रधृष्यमिदं वचः ॥

न ब्राह्मणाश्चन्द्रमरीचिशुभ्रः न क्षत्रियाः किंशुकपुष्पवर्णाः ।
न चेह वैश्या हरितालतुल्याः शूद्रा नचाङ्गारसमानवर्णाः ।
पादप्रचारैस्तनुवर्णकेशैः सुखेन दुःखेन च शोणितेन ।
त्वङ्मांसमेदोस्थिरसैः समानाश्चतुष्प्रभेदा हि कथं भवन्ति ॥
वर्णप्रमाणाकृतिगर्भवासवाग्बुद्धिकर्मेन्द्रियजीवितेषु ।
वलत्रिवर्गामयभेषजेषु न विद्यते जातिकृतो विशेषः ॥
स एक एवात्र पतिः प्रजानां कथं पुनर्जातिकृतः प्रभेदः ।
प्रमाणदृष्टान्तनयप्रवादैः परीक्ष्यमाणे विघटत्वमेति ॥
चत्वार एकस्य पितुः सुताश्च तेषां सुतानां खलु जातिरेका ।
एवं प्रजानां हि पितैक एव पित्रैकभावान्न च जातिभेदः ।
फलान्यथोदुम्बरवृक्षजातेर्यथाग्रमध्यान्तभवानि यानि ।
वर्णाकृतिस्पर्शरसैः समानि तथैकतो जातिरतिप्रचिन्त्या ॥
ये कौशिकाःकाश्यपगौतमाश्चकौण्डिन्यमाण्डव्यवशिष्ठगोत्राः ।
आत्रेयकौत्सांगिरसः सगर्गामौद्गल्यकात्यायनभार्गवाश्च ॥
गोत्राणि नानाविधजातयश्च भ्रातृस्नुषामैथुनपुत्रभावाः ।
वैवाहिकं कर्म न वर्णभेदाः सर्वाणि शिल्पानि भवन्ति तेषाम् ॥

ये चान्ये पण्डिताः प्राहुर्देहब्राह्मणतां नराः ।
तेषां दुर्दृषि तिमिरमपनीयानुकम्प्य च ॥
न्यायाञ्जनौषधैर्दिव्यैः परिणामसुखावहैः ।
उपनीतैः प्रयत्नेन सुदृष्टि संविदध्महे ॥
मूर्तिमत्वाच्च नाशित्वं नाशित्वाच्छेषभूतवत् ।
वेदाधारनिविष्टानां ब्राह्मण्यं न प्रकल्पते ॥
एकैकोवयवस्तेषां न ब्राह्मण्यं समश्नुते ।
नचानेकसमूहेऽपि सर्वथातिप्रसङ्गतः ॥
पृथिव्युदकवाय्वग्निपरिणामा विशेषतः ।
देहतः सर्वभूतानां ब्राह्मणत्वप्रसङ्गतः ॥
देहस्य ब्राह्मणत्वं यैरतत्त्वज्ञैः प्रकल्प्यते ।
संस्कर्तॄणां शरीरस्य तेषां न ब्रह्मता भवेत् ॥

मृग्यमाणे प्रयत्नेन देहे तन्नोपलभ्यते।
तस्मान्न देहे ब्राह्मण्यं नापि देहात्मकं भवेत्॥
वर्णापसदचाण्डालश्वादादीनां प्रसज्यते।
यदि देहस्य विप्रत्वं भवद्भिरुपगम्यते॥
देहशक्तिगुणैः क्षीणैः कायभस्मादिरूपवत्।
तस्माद्देहात्मके नैतद् ब्राह्मण्यं नापि कर्मजम्॥

॥ द्वाचत्वारिंशोऽध्यायः॥

॥ ब्राह्मणसंस्कारविवेकवर्णनम् ॥

जात्यभिमानत्यागाय जातिखण्डनम्, न वस्तुस्थितिमनुरुध्य। तदुक्तम्—जातिकुलरूपवयोवर्णानेकश्रुतमदान्धा क्लीबाः परत्र चेह च हितमप्यर्थं न पश्यन्ति। ज्ञात्वा भवपरिवर्त्ते जातीनां कोटिशतसहस्रेषु हीनोत्तममध्यमत्वं को जातिमदं बुधः कुर्य्यात्। यथा संस्काराणां वेदेषु विधानान्न तेषामपलापः। किन्तु ज्ञानाध्ययनमीमांसानियमेन्द्रियनिग्रहैर्विना संस्कारयोगेऽपि शूद्रान्न पुंसः भिन्नता भवति। संस्कारः क्रियमाणश्च न शूद्रे च प्रवर्त्तते। एतेनापि जन्मनैव शूद्रः। तत एव शूद्रे संस्कारो न प्रवर्त्तत इत्युक्तम्।

आधुनिकास्तु—न जन्मना कस्यापि संस्कारा न हेतुत्वमुपगच्छन्ति।

'संस्कृताङ्गश्च पापेभ्यो न पश्यति निवर्तते'
विलासिनी भुजङ्गादिजनवन्मदविह्वलाः॥
व्यामुह्यन्ति सदाचाराद् ब्राह्मणत्वात् पतन्ति च।
संस्कृतोऽपि दुराचारो नरकं याति मानवः॥
निःसंस्कारः सदाचारो भवेद्विप्रोत्तमः सदा।

एवमेव ४३ अध्याये संस्कारस्याकारणत्वमुक्तम्। संस्कारे कस्य विशेषः—

'किं देहस्योत येनासौ निसर्गमलिनः स्थितः'
शुक्रशोणितसंभूतः शमलोद्भवकीटवत्॥

निषेकादिश्मशानान्तैर्विविधैर्विधिविस्तरैः ।
देहिनोऽतिशयं केचिदुपगच्छन्ति मानवाः ॥
वैदिकाखिलसंस्कारसारभूता द्विजातयः ।
सर्वकार्यकरान् सर्वान् वृषलानतिशेरते ॥
चण्डकर्मा विकर्मस्थो ब्रह्महा गुरुतल्पगः ।
स्तेनो गोघ्नो सुरापाणः परस्त्रीरमणप्रियः ॥
मिथ्यावादी मदोन्मत्तो नास्तिको वेदनिन्दकः ।
वाङ्मनःकायजैर्दुष्टैर्हता ये ब्राह्मणाधमाः ॥
तेन शुद्धि व्रजन्तीह अपि यज्ञशतैरपि ।
सर्वधर्मसमानत्वात् संस्कारादिनिरर्थकम् ॥

अथ तत्रैव चतुश्चात्वारिंशेऽध्याये—

वर्णधर्मविभागव्यवस्थावर्णनम् ।

ब्रह्मोवाच—

हेयोपादेयतत्त्वज्ञास्त्यक्तान्यायपथागमाः ।
जितेन्द्रियमनोवाचः सदाचारपरायणाः ॥
नियमाचारवृत्तस्था हितान्वेषणतत्पराः ।
संसाररक्षणोपायक्रियायुक्तमनोरथाः ॥
सम्यग्दर्शनसम्पन्नाः समाधिस्था हतकुधः ।
स्वाध्यायसक्तहृदयास्त्यक्तसंगा विमत्सराः ॥
विशोका विमदाः शान्ताः सर्वप्रणिहितैषिणः ।
सुखदुःखसमालोका विविक्तस्थानवासिनः ॥
व्रतोपयुक्तसर्वाङ्गा धार्मिकाः पापभीरवः ।
निर्ममा निरहंकारा दानशूरा दयापराः ॥
सत्यब्रह्मविदः शान्ताः सर्वशास्त्रेषु निष्ठिताः ।
सर्वलोकहितोपायप्रवृत्तेन स्वयम्भुवा ॥
वागीश्वरेण देवेन नाभेयेन भवच्छिदा ।
ब्रह्मणा कृतमर्य्यादास्त एव ब्राह्मणाः स्मृताः ॥

महातपोधनैरार्यैः सर्वसत्त्वाभयप्रदैः ।
सर्वलोकहितार्थाय निपुणं सुप्रतिष्ठितम् ॥
ब्रह्मत्वाद्भगवान्ब्रह्मा नाभेयस्तस्य ये जनाः ।
भक्त्यासक्ताः प्रपन्नाश्च ब्राह्मणास्ते प्रकीर्तिताः ॥
क्षत्रियास्तु क्षतत्राणाद्वैश्या वार्ता प्रवेशनात् ।
ये तु श्रुतेर्द्रुति प्राप्ताः शूद्रास्तेनेह कीर्तिताः ॥
ये चाचाररताः प्राहुर्ब्राह्मण्यं ब्रह्मवादिनः ।
ते तु फलं प्रशंसन्ति यत्सदा मनसेप्सितम् ।
क्षमा दमो दया दानं सत्यं शौचं धृतिर्घृणा ॥
मार्दवार्जवसंतोषानहंकारतपःशमाः ॥
धर्मो ज्ञानमपैशुन्यं ब्रह्मचर्यममूढता ।
ध्यानमास्तिक्यमद्वेषो वैराग्यञ्च शमात्मता ॥
पापभीरुत्वमस्तेयममात्सर्यमतृष्णता ।
नैःसंग्यं गुरुशुश्रुषा मनोवाक्कायसंयमः ॥
यं एवंभूतमाचारमनुतिष्ठन्ति मानवाः ।
ब्राह्मण्यं पुष्कलं तेषां नित्यमेव प्रवर्धते ॥
ते स्वमतास्वादलब्धवर्णाचारा महौजसः ।
सर्वशास्त्राविरोधेन पवित्रीकृतमानसाः ॥
सज्जनाभिमताः प्राज्ञाः पुराणागमपंडिताः ।
गीतगीतागमाचाराः स्मृतिकाराः पठन्ति च ॥

मन्वन्तरेषु सर्वेषु चतुर्युगविभागशः ।
वर्णाश्रमाचारहतं कर्मसिद्धत्यनुत्तमम् ॥
संसिद्धायां तु वार्तायां ततस्तेषां स्वयं प्रभुः ।
मर्य्यादां स्थापमामास यथारब्धां परस्परम् ॥
ये वै परिगृहीतारस्तेषां सत्त्वबलाधिकाः ।
इतरेषां क्षतत्राणात् स्थापयामास क्षत्रियान् ॥
उपतिष्ठन्ति ये तान् वै याचंतो नर्मदाः सदा ।
सत्यब्रह्म सदाभूतं वदंतो ब्राह्मणास्तु ते ॥

ये चान्येऽप्यबलास्तेषां वैश्यकर्मणि संस्थिताः ।
कीलानि नाशयन्तिस्म पृथिव्यां प्रागतंद्रिताः ॥
वैश्यानेव तु तानाह कीनाशान् वृत्तिमाश्रितान् ।
शोचंतश्च द्रवंतश्च परिचर्यासु ये नराः॥
निस्तेजसोऽल्पवीर्य्याश्च शद्रास्तानब्रवीत्तु सः ।
ब्राह्मणक्षत्रियविशां शूद्राणां च परस्परम् ॥
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ।

शमस्तपो दमः शौचं क्षन्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्मस्वभावजम् ॥
शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वाभावजम् ॥

कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्य्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥
योगस्तपो दया दानं सत्यं धर्मः श्रुतिघृणा ।
ज्ञानं विज्ञानमास्तिक्यमेतद् ब्राह्मणलक्षणम् ॥

शिखा ज्ञानमयी यस्य पवित्रं च तपोमयम् ।
ब्राह्मण्यं पुष्कलं यस्य मनुः स्वायम्भुवोऽब्रवीत् ॥
यत्र वा तत्र वा वर्णो उत्तमाधममध्यमः ।
निवृत्तः पापकर्मभ्यो ब्राह्मणः स विधीयते ॥

शूद्रोऽपि शीलसम्पन्नो ब्राह्मणादधिको भवेत् ।
ब्राह्मणो विगताचारः शूद्राद्धीनतरो भवेत् ॥
सुरां संधयेद्यस्तु आपणेषु गृहेषु च ।
न विक्रीणाति च तथा सच्छूद्रो हि स उच्यते ॥

यद्येका स्फुटमेव जातिरपरा कृत्यात्परं भेदिनी ।
यद्वा व्याहृतिरेकतामधिगता यच्चान्यधर्मं ययौ ॥
एकैकाखिलभावभेदनिधनोत्पत्तिस्थितिव्यापिनी ।
किं नासौ प्रतिपत्तिगोचरपथं यायाद्विभक्त्या नृणाम् ॥

अतएव शोचन्तश्च द्रवन्तश्चेति शूद्रलक्षणमुक्तम्। नहि शोको द्रवणं वा विधीयते, तस्यानिष्टत्वादपुरुषार्थत्वाच्च। एवमेव निस्तेजस्त्व-मल्पवीर्य्यत्वञ्चापि जन्मान्तरीयकर्मप्रभावादेव भवति। अत एवोक्तम्—

कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः।'

स्वभावोऽत्र फलोन्मुखं जन्मान्तरीयं कर्मैव। शमादयो गुणाः स्पृहणीयत्वाद्विधीयन्तेऽपि जन्मना वर्णत्वे सत्येव वर्णेषूत्तममध्यमाधमत्वं संभवतीत्युक्तमेव। यथा निम्बाम्राङ्कोला-दीनां स्वाभाविका गुणा वर्ण्यन्ते। एवमेवेह ब्राह्मणादिगुणा वर्ण्यन्ते। यथा—निम्बाम्रदीनां जन्मजा एव गुणा एते भवन्ति न प्रयत्नसाध्याः, एवमेव ब्राह्मणादीनां जन्मजा एव ते गुणा न कृत्रिमाः प्रयत्नसाध्याः, किन्तु जन्मान्तरीयकर्मसाध्याः। तेषु केचिच्छमादयो गुणाः प्रयत्ने-नान्येनापि साध्या भवन्ति। तैर्जन्मान्तरेषु जातिलाभोऽपि संभवत्येव। सर्पादिष्वप्युत्प्रेक्षिता वर्णव्यवस्था जन्मनैव। तथाहि—

'सर्पा ज्ञेयास्तु चत्वारः पञ्चमो नोपलभ्यते।
ब्राह्मणः क्षत्रियो वैश्यः शूद्राश्चैव चतुर्थकः॥
ब्राह्मणो मधुरं दद्यात् तिक्तं दद्यात्तथोत्तरे।
वैश्ये कर्षफलं दद्यान् शूद्रे त्रिस्थूलमेव च॥
ब्राह्मणेन तु दंष्टस्य दाहो गात्रेषु जायते।
मूर्छा तु प्रबला स्याद्वै नात्मानमभिजानते॥
श्यामवर्णमुखञ्च स्यान्मज्जास्तंभश्च जायते।
क्षत्रियेण तु दंष्टस्य कम्पो गात्रेषु जायते॥
मूर्छामोहस्तथा स्याद्वैनात्मानमभिवेत्ति सः।
जायते वेदाना तस्य ऊर्ध्वञ्चैव निरीक्षते॥
वैश्येनापि हि दंष्टस्य शृणु रूपाणि यानि तु।
श्लेष्मप्रकोपो लाला च नचोद्वहति चेतनाम्।
मूर्च्छा च प्रबला यस्य आत्मानं मभिनन्दति॥
शूद्रेणापि हि दंष्टस्य शृणु तत्त्वेन गौतम।
कुथ्यते वेपते चैव ज्वरः शीतञ्च जायते॥

अङ्गानि चुलुचुलायन्ते शूद्रदष्टस्य लक्षणम् ।
पूर्वाह्ले चरते विप्रो मध्याह्ले क्षत्रियश्चरेत् ॥
अपराह्ण चरेद्वैश्यः शूद्रः सन्ध्याचरो भवेत् ।
आहारो वायुपुष्पाणि ब्राह्मणानां विदुर्बुधा ॥
मूषिकाः क्षत्रियाणाञ्च आहारो द्विजसत्तम ।
वैश्या मण्डूकमक्षाश्च शूद्राः सर्वाशिनस्तथा ।
अग्रतो दशते विप्रः क्षत्रियो दक्षिणेन तु ॥
वामपार्श्वे सदा वैश्यः पश्चाद्वै शूद्र आदशेत् ।
पुष्पगन्धाः स्मृता विप्राः क्षत्रियाश्चन्दनावहाः ॥
वैश्याश्च घृतगन्धा वै शूद्रास्युर्मत्स्यगन्धिनः ।
वापीकूपतड़ागेषु गिरिप्रसवणेषु च ।
वसन्ति ब्राह्मणः सर्पा ग्रामद्वारे चतुष्पथे ॥
आरामेषु पवित्रेषु शुचिष्वायतनेषु च ।
वसन्ति क्षत्रिया नित्यं तोरणेषु सरस्सु च ॥
श्मशाने भस्मशालासु पलालेषु तटेषु च ।
गोष्ठेषु पथिवृक्षेषु विप्रवर्णा वसन्ति हि ॥
अविविक्तेषु स्थानेषु निर्जनेषु वनेषु च ।
शून्यागारे श्मशाने च शूद्रा विप्रा वसन्ति हि ॥

श्वेताश्च कपिलाश्चैव ये सर्पास्त्वनलप्रभाः ।
मनस्विनः सात्त्विकाश्च ब्राह्मणास्ते बुधैः स्मृताः ॥
रक्तवर्णाः सुवर्णाभाः प्रवालमणिसन्निभाः ।
सूर्य्यप्रभास्तथा विप्रा क्षत्रियास्ते भुजङ्गमाः ॥
नानाविचित्रराजोभिरतसीवर्णसन्निभाः ।
बाणपुष्पसवर्णाभा वैश्या ते वै भुजङ्गमाः ॥
काकोदरनिभाः केचिद् ये च अञ्जनसन्निभाः ।
काकवर्णा धूम्रवर्णास्ते शूद्राः परिकीर्तिताः ॥

भविष्ये ब्रह्मपर्वणि ३६ अध्याये

शूद्रां प्ररोचते विप्रो रागिणीं मैथुनं प्रति ।
सा कामदुःखविगमे गर्भं धत्ते समागमे ॥

कामं कामातुराभ्यस्तु रोचन्ते शूद्रमानवाः।
मैथुनं प्रति ब्राह्मण्ये तेऽपि तासां सुखावहाः॥
ये तु जात्यादिभिर्भिन्ना गवाश्वोष्ट्रमतङ्गजाः।
ते विजातिषु नो गर्भं कुर्वतेऽपि सुखार्थिनः॥

अनड्वानेव गोरेव कामं पुष्णाति संगमे।
घोटकाश्च रतिं सम्यक्कुर्वते वडवासु च॥
पतिं करभमेवाप्य करभी रमते मुदा।
गजमेव पतिं लब्ध्वा सुखं तिष्ठति हस्तिनी॥
तिर्य्यग्जातिस्त्रिया सार्कं कुर्वाणाऽपि हि मैथुनम्।
न तस्याः कुरुते गर्भं नरो नाऽपि सुखासिकाम्॥

तिरश्चा सह कुर्वाणा मैथुनं मनुजाङ्गना।
नाधत्ते तत्कृतं गर्भं न युक्तं मैथुनं तयोः॥
नैवं कश्चिद्विभागोऽस्ति मैथुने स्त्रीमनुष्ययोः।
येन संक्षीयते भेदः प्रस्फुटं द्विजशूद्रयोः॥
(भ० पु० अ० १।४३)

'तस्मान्मनुष्यभेदोऽयं संकेतवलनिर्मितः'। ४३।५०)
'व्यलीककल्पनैवैषा तस्याज्जात्यादिकल्पना'। १।४३।५२।

इति तदपि पूर्वोक्तरीत्या जन्मकर्मणोः समुच्चयार्यं जातिनिन्दार्थवादो न स्वार्थपर्य्यवसायी प्रमाणान्तरविरुद्धत्वात्।

किञ्चास्मिन्नेव पुराणे शुकी मण्डूकी हरिणी प्रभृतिविजातीतास्वपि स्त्रीषु शुकमाण्डूकऋष्यशृङ्गादिमहर्षीणामुत्पत्तय उक्ताः। इदानीमपि वैज्ञानिकैः अजेन मृग्यां मृगेणाजायां सन्तानोत्पत्तयः समर्थ्यन्ते। तथा समुच्चिचीषयैव गुणकर्मजन्मादीनामिह निन्दनमपलापश्च, परलोकसंदेहोक्तिर्यथा, यथा वा विद्यया घोरान्धतमः प्राप्तिरुक्ता। अर्थवादत्वादेव समेषामेतेषां वचसां स्ववाक्यार्थे तात्पर्य्याभावात् विधिस्तुतिरेव तेषामर्थः। सर्वथाऽपि समान-प्रसवात्मिका जातिरित्यस्य समानबुद्धिप्रसवहेतुत्वेन सर्वत्र जातिः सिद्धयति।

यदप्युक्तम्—ब्राह्मणशूद्रादिषु दुष्टेषु पापेषु न ब्राह्मणस्य श्रेष्ठत्वादिकम्।

'वैदिकाखिलसंस्कारसारभूता द्विजातयः ।
सर्वकार्य्यकरान् सर्वान् वृषलानतिशेरते ॥
चण्डकर्मा विकर्मस्थो ब्रह्महा गुरुतल्पगः ।
स्तेनो गोघ्नः सुरापाणः परस्त्रीलम्पटस्तुयः ॥
मिथ्यावादी मदोन्मत्तो नास्तिको वेदनिन्दकः ।
कैवर्तो नटः पापी सर्वाशी सर्वविक्रयी ॥
वाङ्मनः कायजैर्दोषैः र्वजितः ब्राह्मणाधमाः ।
तेन शुद्धिं व्रजन्तीह अपि पञ्चशतैरपि ॥
शूद्राणां यान्यनिष्टानि सम्पद्यते स्वभावतः ।
क्रोधादाभ्यन्तरान् दोषान् तयादुष्टमनोरथान् ।
अत्यजन्तो विशिष्टानां श्रेष्ठास्ते कुचमर्दिनः ॥
नोपादेयानि वस्त्राणि नित्यमाददते द्विजाः ।
हापयन्ति न हेयानि कथं ते गुरवः क्षितौ ॥
सख्यान् श्रद्धामयान् नम्रान् चण्डाश्चण्डालचेष्टिताः ।
वैतण्डिकास्ते निघ्नन्ति यथा सिंहो मृगान् पशून् ॥
( भ० पु० १।४३।३१—३५ )

तदपि निःसारम्, उक्तवाक्यानां दोषत्यागविधाने तात्पर्य्येण स्वाभाविकवर्णोत्कर्षनिषेधे तात्पर्य्याभावात् । यथा कलौ गवां विड्भक्षणप्रवृत्तावपि जातिनिबन्धनतदुत्कर्षनिषेधो न भवति । देव-पित्रादिकार्य्येषु गवामेव दानादिविधानात् । दुष्प्रवृत्तीनामपि गवामेव गोमूत्रगोमयादिशुद्धिराद्रियते न साधीयसीनामपि गर्दभीनाम् ।

तदुक्तं महर्षिणाऽत्रिणा स्मृतौ—

'दुःशीलोऽपि द्विजः पूज्यः न शूद्रो विजितेन्द्रियः ।
कः परित्यज्य गां दुष्टां दुहेच्छीलवतीं खरीम् ॥

यदुक्तं–दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम् गोखर्योर्विजातीयत्वात् तत्तुच्छम्। द्विजशूद्रयोरपि विजातीयत्वाविशेषात्। छान्दोग्योपनिषदि रमणीयचरणानां ब्राह्मणयोनिप्राप्तिरुक्ता। कपूयचरणानां श्वसूकरचाण्डालादियोनिप्राप्तिरुक्ता तर्हि कथं नैतयोर्वैषम्यमत एव 'ब्रह्मबन्धुर्न हन्तव्यः' (श्री०भा० १।६।५३) इत्यादिषु भागवतादौ ब्रह्मबन्धोरपि वधो निषिद्धः। 'ब्राह्मणो न मुनयः' इत्यादौ जातिनिबन्धन एव ब्राह्मणो गृह्यते। आत्रेयीवधप्रायश्चित्तप्रसङ्गे गर्भस्थस्यापि हनने प्रायश्चित्तमुक्तम्। किञ्च भविष्यपुराणोक्तं जातिखण्डनम् अभ्युपगमसिद्धान्तेन। 'अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगम सिद्धान्तः' ( गो० सू० १।३१ ) इत्यत्र तल्लक्षणम्। 'शृणुध्वं योगिनो वाक्यं सत्तर्कं शिष्यश्रेयसे' १२ इति तर्कमाश्रित्य जातिखण्डनं तस्याः शास्त्रैकगम्यतां बोधयति न केवलं जन्मना किन्तु गुणकर्मसंस्काराध्ययनादिभिरपि जातिर्न सिद्ध्यतीत्यप्युक्तम्।

यत्तु—पराशरवशिष्ठमन्दपालव्यासादीनां जातिपरिवर्त्तनमुक्तं तत्तु अभ्युपगमसिद्धान्तेनापरीक्षितमेव। तद्विशेषखण्डनायाभ्युपेतम्। तत्तत्कथा परीक्षणेन तु जन्मनैव जातिः सिद्ध्यति। न च संस्कारादिना तत्परिवर्त्तनं संभवति अविचारितरमणीयाभिरेव कथाभिर्यावत्परीक्षणं न स्यात्तावदेव निम्नजात्युत्पन्नानां संस्कारादिभिर्जातिपरिवर्त्तनं प्रतीयते।

> 'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः।
> भृगुर्वशिष्ठो दक्षश्च दशमस्तत्र नारदः'॥
>
> ( भागवत स्कंध ३।१२।२२ )

वशिष्ठस्य ब्रह्मणो मानसपुत्रत्वे नायोनिजत्वमेव सिद्ध्यति। निमि शापात्तद्देहत्यागे उर्वस्या दिव्याप्सरसो दर्शनमात्रेण क्षुब्धघटनिक्षिप्तमित्रावरुण शुक्रेण वशिष्ठस्य देहान्तरलाभः। 'विद्युन्नयापतन्तीदविद्योद्भरन्ती मे अप्या-

काम्यानि जनिष्ठो अपो नर्य्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥ ऋग्वेद सं० १०।९५।१० )।

यास्काचार्यदृष्ट्याऽस्य मन्त्रस्य प्रतिपाद्या विद्युद्रूपादेवता सैवोर्वशी।

'उतासि मैत्रावरुणो वशिष्ठोर्वश्या ब्रह्मन् मनसोऽधि जातः।
द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे त्वाददन्त ॥
( ऋ० सं० ७।३३।११ )

ब्रह्मन् वशिष्ठ त्वं मित्रावरुणः मनसा ममायंपुत्रः स्यादिति सङ्कल्पात् उर्वस्या अधि जातः। विश्वे देवा द्रप्सं स्कन्नं दैव्येन ब्रह्मणा पुष्करे त्वां अददन्त। तदेव पुराणे स्पष्टम्—

निमिः प्रति ददौ शापं गुरवेऽधर्मवर्तिने।
तवापि पतताद्देहो लोभाद्धर्ममजानतः ॥
इत्युत्ससर्ज स्वं देहं निमिरध्यात्मकोविदः।
मित्रावरुणयोर्जज्ञे उर्वश्यां प्रपितामहः ॥
( श्री भा० स्क० ९ अ० १३ )

नहि दिव्याप्सरसो वेश्यात्वं तस्या अलौकिसामर्थ्यत्वात्। सापि शुक्रक्षोभकमिति घटस्यैव तत्क्षेत्रत्वेन तस्या अतथत्वात्तथा च वसिष्ठस्य वेश्या पुत्रत्वम्।

उपरिचर वसोः शुक्रादद्रिजायां मत्स्यां मत्स्यो राजा मत्स्यगन्धिनी कन्या च जाता।

तयोः पुमांसं जग्राह राजोपरिचरस्तदा।
स मात्स्यो नाम राजासीद्धार्मिकः सत्यसंगरः ॥
सा कन्या दुहिता तस्या मत्स्या मत्स्यसगन्धिनी।
राज्ञा दत्ता च दाशाय कन्येयं हे भविष्यति ॥
( म० भा० आ० प० अध्याय ६३ )

तथा च सत्यवती क्षत्रियकन्यात्वात् क्षत्रियैवासीत्। अतो व्यासस्यानिषादीपुत्रत्वमसिद्धं क्षत्रियकन्यापुत्रत्वात्। पराशरस्य श्वपाकी पुत्रत्वमपि निर्मूलमपरीक्षितमेवाभ्युपगमसिद्धान्तेनोक्तम्। महर्षेः शक्तेर्वीर्य्यादृश्यन्त्यां जातः पराशरः।

'परासुः समतस्तेन वशिष्ठः स्थापितो मुनिः।
गर्भस्थेन ततो लोके पराशर इति स्मृतः' ॥
( म० भा० आदि पर्व अ० १७८ )

आश्रमस्था ततः पुत्रमदृश्यन्ती व्यजायत।
शक्तेः कुलकरं राजन् द्वितीयमिव शक्तिनम्' ॥
( म० भा० आ० प० १७८।१ )

जातिकर्मादिकास्तस्य क्रियाः स मुनिसत्तमः।
पौत्रस्य भरतश्रेष्ठ चकार भगवान् स्वयम् ॥
( म० भा० आदिपर्व अ० १७८ )

पुराणेषु रामायणेषु महाभारते च अदृश्यन्त्याः स्वपाकीत्वं न कोऽपि दर्शयितुं शक्नोति। तेनापरीक्षितत्वमेवादृश्यन्त्याः श्वपाकीत्वम्। ऋषिपत्नीत्वात् ब्राह्मणीत्वं तु धर्मशास्त्रानुरोधेन सिद्धमेव। एवमेव मन्दपालोऽपि न कैवर्त्तीपुत्रः।

धर्मज्ञानां मुख्यतमस्तपस्वी संशितव्रतः।
आसीन्महर्षिः श्रुतवान् मन्दपाल इति श्रुतः ॥
( ५ म० भा० आदि पर्व २२९ )

तथा चाभ्युपगमसिद्धान्ते नापरीक्षितमेव निम्नयोनिजत्वम् अङ्गीकृत्य संस्कारादिभिर्जातिर्भवति न वेति तद्विशेषपरीक्षणं कृतम्।

ऋष्यश्रृङ्गस्य हरिणीगर्भसंभूतत्वं, कमादस्योलूकीगर्भसंभूतत्वं, शुकीगर्भसंभूतत्वं शुकस्य, मण्डूकीगर्भसंभूतत्वं माण्डव्यस्यासंभावनापराहतमाहुः केचित् तच्च यद्यपीदानीं शक्तिहीनत्वादसंभाव्यमेव तथापि तपोधनानामचिन्त्यशक्तीनां नासंभाव्यमित्राहात्रिः—

तपोज्ञानसमायुक्ताः कृतत्रेतायुगे नराः।
द्वापरे च कलौ नृपां शक्तिहानिर्हि निर्मिता ॥
अनेकधा कृताः पुत्राः ऋषिभिश्च पुरातनैः।
न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैः ॥
( अत्रिः भविष्य पु० ब्रा० अ० ४४ )

'ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परस्परम्।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैरि'त्यादिभिस्तत्रैव।

शमो दमः तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानविज्ञानमास्तिक्यं ब्रह्मकर्मस्वभावजम् ॥
वीर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।

कृषिगोरक्षवाणिज्य इत्यादिभिः शमदमादिभिः ब्राह्मण्यादिपरिचय उक्तः। प्राक्तनकर्मभिस्तत्रैव शुक्रशोणितसंयोगे देहं गृह्णाति यत्र शमदमादियोग्यता भवति। तदनुगुणसंसर्गवातावरणसहकारे ते गुणा विकासमायान्ति। अन्यथा योग्यतायां सत्यामपि न विकसन्ति।

अन्ते च तत्रैव

'संसिद्धि यान्ति मनुजा जातिकर्मसमुच्चयात्।
एवं संसिद्धिमायाति पुरुषो जातिकर्मणोः॥

( भविष्य ब्रा० अ० ४५ )

तदेव—

'तपः श्रुतञ्च योनिश्चेत्येतद् ब्राह्मणकारकम्।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः॥

महाभाष्यकारैरप्युक्तम्।

किञ्च हरिणी मण्डूकी शुकी प्रभृतिषु मनुष्यजन्मासंभवस्तदा त्वसंभाव्य-वस्तुप्रतिपादकत्वे सुधारकाणां रीत्या भविष्यपुराणस्य प्रामाण्यमेव न सिद्ध्यति। कुतस्तरां तदाश्रयेण जन्मना वर्णव्यवस्थाखण्डनं संभवति? यदि च ब्रह्मखण्डोक्तरीत्या जन्मविद्याशरीरात्मसंस्कारकर्मभिरन्यतमेनापि जातिर्न सिद्ध्यति तर्हि गुणकर्मादिभिर्वर्णव्यवस्था साधनमपि कथं सिद्ध्यति?

अधर्मचर्य्यया पूर्वःपूर्व वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ'

( अपस्तंम्भ २। ११।१—११ )

अत्र स्पष्टं धर्माधर्माचरणभेदेन जातिपरिवर्तनमुक्तमिति तत्तुच्छम्, भावानवबोधात्। तत्र हि जातिशब्देन जन्म विवक्षितम्। तथा च जन्मपरिवर्तने सति धर्मचर्यया जघन्यो वर्ण उत्कृष्टं वर्णमापद्यते। अधर्मचर्य्ययोत्कृष्टो वर्णो जघन्यं वर्णतामापद्यत इत्येवार्थः।

अन्यस्यामपि जातौ मा वेश्या भूस्त्वं हि सुन्दरि।
चारित्र्यगुणसम्पन्ने जायेथा विमले कुले॥'

( इति मृच्छकटिके ८।४३ )

जन्मार्थे जातिशब्दप्रयोगदर्शनात् 'जातिः सामान्यजन्मनोः' ( ३।३।६८ ) इत्यमरकोषाच्च। अत एव व्याख्याकारो हरदत्तः प्राह—धर्मचर्य्यया

स्वधर्मानुष्ठानेन जघन्यो वर्णः शूद्रादिः पूर्वपूर्ववर्णं वैश्यादिकं प्राप्नोति जातिपरिवृत्तौ जन्मनः परिवर्त्तने शूद्रो वैश्यो जायते, तत्रापि स्वधर्मनिष्ठः क्षत्रियो जायते, तत्रापि स्वधर्मपरो ब्राह्मणः । एवं क्षत्रियवैश्ययोरपि द्रष्टव्यम् । मरणानन्तरमेव जन्मपरिवर्त्तनमित्युत्सर्गः । ब्राह्मणश्च स्वधर्मभ्रष्टः मरणानन्तरं जन्मान्तरे शूद्रादित्वं प्राप्नोति जन्मनैवात्र वर्णः सिद्धयति ।

अत एव 'चत्वारो वर्णाः ब्राह्मणक्षत्रियवैश्यशूद्रास्तेषां पूर्वः पूर्वो जन्मतः श्रेयान्' (आप० ध० सूत्र १।१।४—५) इति जन्मनैव पूर्वपूर्वश्रेष्ठ्यमुक्तम् । ब्राह्मणमात्रं च हत्वा 'ब्राह्मघ्नो भवति' (आ० ध० सू०)। मात्रग्रहणेन नाभिजनविद्यासंस्कारापेक्षा भवती'ति हरदत्तः । 'गर्भञ्च तस्य विज्ञातं आत्रेयीञ्च स्त्रियम्' (आ० ध० सू० १।२४।९) ब्राह्मणीगर्भहननादपि ब्राह्महत्योक्ता । तेन जन्मना गर्भेण च ब्राह्मण्यं सिद्धयति, न च गर्भे कर्म संभवति ।

अत एव छान्दोग्येऽपि रमणीयचरणानां ब्राह्मणादियोनिप्राप्तिरुक्ता । कपूयचरणानां श्वादियोनिप्राप्तिरुक्ता । 'अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् श्वयोनिं सूकरयोनिं चण्डालयोनिं वा' (छान्दग्ये ५।१०।७) नहि तात्कालिकैस्तज्जन्मभवैः कुत्सितैरपि कर्मभिः श्वसूकरयोनिप्राप्तिर्दृश्यते । तस्मात् कर्मभिर्जन्मान्तर एव वर्णान्तरप्राप्तिर्युक्ता । किन्तु 'कथञ्चिदप्यतिक्रामन् पापःसूरकतां व्रजेत्' (मनु० ३।१९०) इत्यादावपि जन्मान्तर एव सूकरताप्राप्तिरुक्ता । अन्यथा तस्मिन्नेव जन्मनि नियन्त्रणातिक्रमणे ब्राह्मणस्य सूकरताप्राप्तिः स्यात् । नच तथा संभवति, दृश्यते वा । जन्मना वर्णव्यवस्थानभ्युपगम एव वृत्तिसाङ्कर्य्यम् । ब्राह्मणादयश्च लोभाभिभूताः 'स्वे स्वे कर्मण्यभिरतः' इति वचनान्यतिक्रम्य यथेष्टचेष्टाः पतन्ति । कर्मणा वर्णव्यवस्थायां पूर्वकर्मत्यागेऽभिनवकर्मस्वीकारे दोषो नोक्तः । जन्मना वर्णत्वे तूभयत्र दोष उक्तः । यत्र क्वापि सर्वभक्षी च गौः श्रेष्ठः सर्वत्यागी निर्दुग्धापि च गौः पूज्या, न तु दुग्धवति खरी (सत्यार्थप्रकाश उद्धतः)

'दुःशीलोऽपि द्विजः पूज्यः नतु शूद्रो जितेन्द्रियः ।
कः परित्यज्य गां दुष्टां दुहेच्छीलवतीं खरीम् ॥

(पराशरः ८। ३३)

इत्यादिभिः कर्महीनप्रशंसाप्यर्थवाद एव न कर्मत्यागप्रोत्साहनम्, स्वधर्म भ्राष्टानां दुर्गतिस्मरणात् । जन्मान्तरीयदुष्कृतैः शूद्रजन्मनां पूर्वकर्मानुरोधेनैव

अपूज्यता यथा तथैव जन्मान्तरीयसुकृतानुरोधेनैव ब्राह्मणानां पूज्यतापि। जन्मान्तरवादानभ्युपगन्तारस्तु शास्त्रबहिर्भूता एव। तदभ्युपगमे तु जन्मान्तरीयकर्मानुरोधेनैव शुभाशुभजन्मानि तदनुरोधिनी च वर्णव्यवस्था युज्यत एव।

किञ्च यद्यैहिककर्मणामिहैव फलं स्यात्तदा हेत्वन्तराभावजन्मान्तराभावाज्जन्मान्तराभावापत्तिः स्यात् तस्मादैहिककर्मणां जन्मान्तरे फलमित्युत्सर्गः, तीव्रपुण्यपापैः क्वचिदिहापीत्यपवादः। लौकिकं सम्मानन्तु सत्कर्मभिः शूद्राणामपि विदुरप्रभृतीनां भवत्येव।

यदुक्तं 'शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्।
(मनु० १०।६५)

इतिवर्णपरिवर्त्तनमुक्तमिति, तदपि न, विकल्पासहत्वात्। तथाहि—तत्र शूद्रब्राह्मणशब्दौ गुणकर्मानुरोधेन प्रवृत्तौ जन्ममूलकवर्णानुरोधेन वा? नान्त्यः जन्मनैव वर्णव्यवस्थापत्तेः। नाद्यस्तत्र गुणकर्मानुरोधिनः शूद्रस्य गुणकर्मानुरोधेन ब्राह्मणत्वासंभवात्।

वस्तुतस्तु

'शूद्रायां ब्राह्मणाज्जातः श्रेयसां चेत् प्रजायते।
अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमाद्युगात्॥
(मनुः १०।६४)

'शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्।
क्षत्रियाज्जातमेवं तु विद्याद् वैश्यात्तथैव च॥ (१०।६५)

एवं पदेनोभयोः श्लोकयोः सम्बन्धो ज्ञायते। अत्र पारशवस्य सप्तजन्मभिर्ब्राह्मणत्वप्राप्तिरुक्ता। ब्राह्मणाच्छूद्रायां जातः पारशव उच्यते। अत्र रक्तापेक्षया वीर्य्यस्य प्राधान्यमुक्तम्। पारशवकन्याया पुनरपि ब्राह्मणात्कन्यैव चेदुत्पन्ना स्यात्सापि ब्राह्मणेनैव विन्ना स्यात्ततोऽपि ब्राह्मणादेवोत्पन्नायामेवं षष्ठे युगे सा कन्या ब्राह्मणी भवति। तस्माद् ब्राह्मणेनोत्पन्नो बालकः ब्राह्मणो भवति। अतोऽनेन गुणकर्मानुरोधेन वर्णपरिवर्तनपक्षो न सिद्ध्यति।

एवमेव शूद्राद् ब्राह्मण्यां कन्योत्पद्येत सापि शूद्रेण विन्ना स्यातस्यामपि शूद्रेण कन्यैवोत्पद्येत सा च शूद्रेणैव च परिणीता स्यात् एवं सप्तमी कन्या शूद्रा भवेत्, तस्यां शूद्राज्जातो बालक शुद्धः शूद्रो भवति। एवमेव वैश्यक्षत्रिययोरपि सप्तमे युगे वर्णपरिवर्त्तनं भवति।

लोकेऽपि हरिणेनाजायामुत्पन्ना स्त्री सन्ततिरुभयोर्गुणसांकर्येणोत्पद्यते। तस्यामपि चेद्धरिणेनैव स्त्रीसन्ततिरेव स्यात् तस्यामपि तथैव भवेत्तदा सप्तमे पर्य्याये तथैवाजेन मृग्यां स्त्रीसन्ततिः स्यात्तदपि तथैव सप्तमे पर्य्याये शुद्धोऽजो जायते। एकतः षष्ठपर्य्यायं यावत्साङ्कर्य्यमनुवर्तते, सप्तमे तन्निवर्त्तते।

एवमेव शूकरमेषसंसर्गेऽपि।

एवमेव विभिन्नजातीयेभ्यः आम्रेभ्यः साङ्कर्य्येण सप्तमे पर्य्याये विभिन्नजातीयत्वप्राप्तिः। एवमेव आङ्गलेन केनचित् विजातीयायां कन्यायां जातायां कन्यकायामुभयो रूपरङ्गसाङ्कर्य्यं भवति, तथैव सापि यदाङ्गलेनैवोढा स्यात्तदा तस्याञ्च पुनः कन्यकैव स्यात्सापि शुद्धेनाङ्गलेनैवोढा स्यादेवं सप्तमे पर्य्याये शुद्ध आङ्गलो भवति। अत्र वीर्य्यस्य प्राधान्यं क्षेत्रस्य तत्पोषकत्वमात्रञ्चोक्तम्। संकरे क्षेत्रस्याल्पांशा भवन्ति बीजस्याधिकांशा भवन्ति। नियमेन सप्तसु पर्य्यायेषु बीजस्य शुद्धतायां क्षेत्रांशाः सर्वथा निवर्त्तन्ते।

'संस्कारतः सोऽतिशयो यदि स्यात्,
सर्वस्य पुंसोऽस्त्यतिसंस्कृतस्य।
यः संस्कृतो विप्रगणप्रधानो
व्यासादिकस्तेन न तस्य साम्यम्, ॥ भविष्य ४१।१० )

यदि पुराणप्रामाण्यं तदा संस्कारेण ये सुधारका ब्राह्मणादिकं मन्यन्ते तेषामपि मतं खण्डितमेव।

'वेदाध्ययनमप्येतद् ब्राह्मण्यं प्रतिपद्यते।
विप्रवद्वैश्यराजन्यौ राक्षसा रावणादयः॥' ( भवि ४१।१ )

वेदविद्यया ब्राह्मण्यमित्यपि खण्डितम्। एवमेव—

'जातिधर्मः स्वयं किञ्चिद् विशेषः श्रुतिसंगमात्।
असिद्धः शूद्रजातीनां प्रसिद्धो विप्रजातिषु॥'

अत्र ब्राह्मणजात्याचारेण ब्राह्मण्यं प्रजायते इति पक्षोऽपि खण्डितः। वेदे विप्राणामेवाचारा विहिता न शूद्राणाम्। ततो वेदविरुद्धाचारेण कथं शूद्रस्य ब्राह्मण्यम्।

'देहशक्तिगुणैः क्षीणैः कायभस्मादिरूपवत्।

तस्माद् देहात्मके नैतद् ब्राह्मण्यं नापि कर्मजम् ॥' (भविष्य ४१।५७)

अत्र शरीरेण कर्मणा वा जातिवादः खण्डितः । तत्कर्मणा वर्णवादोऽपि निरस्तः ।

वस्तुतस्तु आकाङ्क्षायोग्यतासत्तिनैरपेक्ष्येण वाक्यार्थकरणे वाक्यानर्थक्यापत्या तदनुरोधेनैव वाक्यार्थो युक्तः, प्रकरणविरुद्धार्थकल्पनया वाक्यानर्थक्यापत्तेः । अत एव 'यत्परः शब्दः स शब्दार्थ' इति रीत्या प्रकरणतात्पर्य्याद्यनुरोधेनैव वाक्यार्थलापनं युक्तम् । 'आज्यैः स्तुवते' 'आकाशादेव खल्विमानि भूतानि जायन्ते' इत्यादि घृतभूताकाशादिप्रतीतावपि विचारे क्रियमाणे सामपरमात्मादिबोधो भवति । तत्र भविष्यपुराणे ब्रह्मपर्वणि चत्वारिंशदध्याये प्रश्नः—

'जातिः श्रेष्ठा भवेद्वीर उत कर्म भवेद्वरम् । ( १।४०।१ )
एतद्वद विनिश्चित्य न यथा संशयो भवेत् ॥
जन्मतः कर्मणश्चैव यज्ज्यायांस्तदवेहि मे । २,

इति सुमन्तुं प्रति शतानीकस्य प्रश्न :—

'भो ब्रह्मन्नादिकल्पे हि ब्राह्मण्यं ब्रूहि किं भवेद् ।
जात्यध्ययनदेहात्मसंस्काराचारकर्मणाम् ॥ ४० । ८
बाह्याभ्यन्तरसामान्या विशेषा यदि कृत्रिमाः ।
संत्यक्तव्याः प्रसिद्धा ये जातिभेदविधायिनः ॥
अत्यक्तागमसिद्धश्चेद् जातिभेदविधिर्नृणाम् ।
विकल्पोऽयं न पुष्णाति भवतः शेमुषीवलम् ॥

इति ब्राह्मण्यं प्रति ऋषीणां प्रश्नः । तत्र ( ४१।४२।४३।४४ ) अध्यायेषु पूर्वपक्ष एव महता समारोहेणोपस्थापितः । ४५ अध्याये ब्रह्मोवाच इत्यादिनोत्तरपक्षः ।

'इदं शृणु मयाख्यातं तर्कपूर्वमिदं वचः ।
युष्माकं संशये जाते कृते वै जातिकर्मणः ॥ ( ४५।१ )
इति पृष्टः पुरा ब्रह्मा ऋषीन् प्रोवाच भारत ।
सवितर्कमिदं वाक्यं विप्रर्षे जातिकर्मणोः ॥ ( ४५।५ )
पुनर्वच्मि निबोधध्वं समासान्नतु विस्तरात् ।

संसिद्धिं यान्ति मनुजा जातिकर्मसमुच्चयात् ॥ ( १४५।२ )
एवं संसिद्धिमाप्नोति पुरुषो जातिकर्मणोः ॥' ( ४५।३ )

यथा न केवलेन दैवेन, न वा केवलेन पुरुषकारेण कार्यं सिद्ध्यति, किन्तूभयसमुच्चयेनैव कार्यं सिद्ध्यति तथैव न केवलेन कर्मणा। न वा केवलेन जन्मना किन्तूभयसमुच्चयेनैव कार्यसिद्धिर्भवति । अत एव महाभाष्येऽप्युक्तम्—

'विद्या तपश्च योनिश्च त्रयं ब्राह्मण्यकारकम् ।
विद्यातपोभ्यां यो हीनो जातिब्राह्मण एव सः ॥'

'नहि निन्दा निन्द्यं निन्दितुं प्रवर्त्तते किन्तु विधेयं स्तोतु' मिति न्यायेन-एकैकनिराकरणमुभयसमुच्चिचीषयैवेति मन्तव्यम् । यथा शु० यजुःवाजसनेयिसंहितायां विद्याविद्योपासनयोः समुच्चयप्रशंसनायैवैकैकस्य निन्दा प्रोक्ता ।

'अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव तमो यऽविद्यायां रताः ।'

अत एव—

'विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥'

इति विद्याऽविद्योपासनसमुच्चयविधानम् । विद्ययाऽविद्योपासनया कर्मानुष्ठानेन मृत्युतरणस्य स्वाभाविककामकर्मातिक्रमणस्य विद्योपासनया च हिरण्यगर्भप्राप्तिलक्षणस्यामृतत्वस्य प्राप्तिरुक्ता यथा तथैवेहापि जातिकर्मणोः समुच्चिचीषयैकैकनिन्दा युक्ता, निन्दायां तात्पर्याभावात् । तत्रापि जातिकर्मणोरिति जातिशब्दस्य पूर्वप्रयोगादभ्यर्हितत्वं जन्मन उक्तम् । यथा तत्र पृथक् पृथग्विद्याविद्ययोर्विधानात् । 'कर्मणा पितृलोकः विद्यया देवलोकः' इति फलविधानान्न निन्दायां तात्पर्यं संभवति । उपनयनवेदाध्ययनाग्निहोत्रादिकर्मसु ब्राह्मणादिजातिसम्बन्धविधानं स्पष्टमेव ।

एवमेव वज्रसूचिकोपनिषदोऽपि ब्रह्मविल्लक्षणब्राह्मण्यप्रशंसार्थमेव जीवदेहजातिज्ञानकर्मधार्मिकादि ब्राह्मण्यखण्डनम् । तत्रापि यथा जातेर्ब्राह्मणत्वं खण्डितम् तथैव ज्ञानस्यापि ब्राह्मण्यं खण्डितम्। तेन गुणकर्मादिभिः ब्राह्मण्यमिति पक्षोऽपि खण्डितः ।

यथा कर्मादीनां ब्राह्मण्ये खण्डितेऽपि कर्मादीनां स्वरूपं न प्रत्याख्यातुं शक्यम्, शास्त्रोक्तत्वात्। तथैव जातेर्ब्रह्मज्ञानित्वलक्षणे ब्राह्मण्ये खण्डितेऽपि जातिर्न खण्डयितुं शक्या शास्त्रोक्तत्वादेव। यदपि

'गोवर्गमध्यञ्च गतो यथाऽश्वो।
निर्धार्य्यते ज्ञैः सुविचक्षणत्वात्।
मनुष्यभावादविशिष्यमाणः ।
तद्वद् द्विजः शूद्रगणान्न भिद्यते॥' (४।२०)
तस्मान्न गोऽश्ववत् कश्चिज्जातिभेदोऽस्ति देहिनाम्।
कार्य्यशक्तिनिमित्तस्तु संकेतः कृत्रिमो भवेत्॥ २४॥

अत्र शूद्रब्राह्मणादिषु आकृतिभेदाभावादाकृतिभेदाज्जातिभेदः खण्डितः। वैदिकैरपि तत्राकृतिग्रहणाजातिर्नाभ्युपेयते किन्तु 'सकृदाख्यातनिर्ग्राह्या' जातिरुपेयते।

यद्यपि हिन्दू चीनी जापानौ फ्रैञ्चांग्रेजादिषु आकृतिभेदोऽपि दृश्यते। तेनाङ्गलादिमध्यगतो हिन्दुर्ज्ञातुं शक्यत एव, तस्माद् गवाश्वादिवन्मनुष्येष्वपि जातिभेदः सिद्ध्यत्येव तथापि हिन्दुषु शूद्रवैश्यादिभेदस्तथा नोपलभ्यते। कार्य्यशक्तिभेदस्तेष्वस्ति तेनैव तत्र जातिभेदः संकेतितः सकृदुपदेशेन ज्ञातुं शक्यः। वादिनां रीत्या वेदाध्ययनादिगुणैर्ब्राह्मण्यं भवति तदपि खण्डितम्।

वेदाध्ययनमप्येतद् ब्राह्मण्यं प्रतिपद्यते।
विप्रवद्वैश्यराजन्यौ राक्षसा रावणादयः॥ ४१।१॥
श्वादचण्डालदासाश्च लुब्धकाभीरधीवराः।
येऽन्येऽपि वृषला केचित्तेऽपि वेदानधीयते॥'

ब्राह्मणेतरे देशान्तरं गत्वा वेदान् वेदं वेदौ वाधीत्य ब्राह्मणाचारा भूत्वा ब्राह्मणकन्या अपि छद्मनोद्वहन्ति तस्माद्वेदाध्ययनमपि ब्राह्मण्यप्रयोजकं न भवति।

यज्ञोपवीतादिचिह्नानामपि ब्राह्मण्यप्रयोजकत्वं खण्डितम्।

शिखा प्रणवसंस्कारसन्ध्योपासनमेखलाः।
दण्डाजिनपवित्राद्या शूद्रेष्वपि निरङ्कुशाः॥
तस्मान्न तेऽपि लक्ष्यन्ते विलक्षणतया नृणाम्।
यज्ञोपवीतसंस्कारमेखलाचूलिकादयः॥'

संस्कृतस्यापि विप्रगणस्य व्यासादिभिः साम्यं न संभवति, तेन संस्कार-स्यापि ब्राह्मण्यहेतुत्वं न संभवति।

'तस्मान्नच विभेदोऽस्ति न बहिर्नान्तरात्मनि।
न सुखादौ न चैश्वर्य्ये नाज्ञायां नामयेष्वपि॥
न वीर्य्ये नाकृतौ नाक्षे न व्यापारे न चायुषि।
नाङ्गे पुष्टे न दौर्बल्ये न स्थैर्य्ये नापि चापले॥
न प्रज्ञायां न वैराग्ये न धर्मे न पराक्रमे।
न त्रिवर्गे न नैपुण्ये न रूपादौ न भेषजे॥
न स्त्रीगर्भे न गमने न देहमलसम्प्लवे।
नास्थिरन्ध्रे नच प्रेम्णि न प्रमाणे न लोमसु॥
शूद्रब्राह्मणयोर्भेदो मृग्यमाणो हि यत्नतः।
नेक्ष्यते सर्वधर्मेषु संहतैस्त्रिदशैरपि ॥' ३५।३९॥

तदपि वैदिकानामिष्टमेव, स्थूलभेदस्यासत्वात्।

'न ब्राह्मणाश्चन्द्रमरीचिशुभ्रा न क्षत्रिया किंशुकपुष्पवर्णाः।
नचेह वैश्या हरितालतुल्याः शूद्रा नचाङ्गारसमानवर्णाः॥'

इति रङ्गभेदेन जातिभेदो वारितः, तदपीष्टमेव। यदपि क्वचिच्छुक्ल-रक्तादिवर्णा ब्राह्मणादीनां प्रोक्तास्तत्तु सत्त्वादिगुणाभिप्रायेणैव, तत्तद्गुण-कर्मानुरोधेन ब्राह्मणादियोनिजन्माभ्युपगमात्।

'पादप्रचारैस्तनुवर्णकेशैः सुखेन दुःखेन च शोणितेन।
त्वङ्मासभेदोऽस्थिरसैः समानाश्चतुःप्रभेदा हि कथं भवन्ति॥
वर्णप्रमाणाकृतिगर्भवासवाग्बुद्धिकर्मेन्द्रियजीवितेषु ।
वलत्रिवर्गामयभेषजेषु न विद्यते जातिकृतो विशेषः॥
चत्वार एकस्य पितुः सुताश्च तेषां सुतानां खलु जातिरेका।
एवं प्रजानां हि पितैक एव पित्रेकभावान्नच जातिभेदः॥
एकैकोऽवयवस्तेषां न ब्राह्मण्यं समश्नुते ।
न चानेकसमूहेऽपि सर्वथातिप्रसङ्गतः ॥ ( भविष्य ४१।५३ )
मृग्यमाणे प्रयत्नेन देहे तन्नोपलभ्यते।
तस्मान्न देहे ब्राह्मण्यं नापि देहात्मकं भवेत्।
तस्माद्देहात्मकेनैतद् ब्राह्मण्यं नापि कर्मजम्' ॥ (४१।५७)

इति देहावयववादीनामपि न ब्राह्मण्यम्, अतिप्रङ्गात् । तदपीष्टमेव संस्कारस्यापि तदप्रयोजकत्वम् ।

'आचारमनुतिष्ठन्तो व्यासादिमुनिसत्तमाः ।
गर्भाधानादिसंस्कारकलापरहिताः स्फुटम् ॥ ४२।२९ ॥
विप्रोत्तमाः श्रियं प्राप्ताः सर्वलोकनमस्कृताः ।
बहवः कथ्यमाना ये कतिचित्तान् निबोधत ॥ २१ ॥
जातो व्यासस्तु कैवर्त्यां स्वपाक्याञ्च पराशरः ।
शुक्याःशुकः कणादाख्यस्तथोलुक्याः सुतोऽभवत् ॥
मृगीजो ऋषिश्रृङ्गोऽपि वसिष्ठो गणिकात्मजः ।
मन्दपालो मुनिश्रेष्ठो नाविकापत्यमुच्यते ॥
माण्डव्यो मुनिराजस्तु मण्डूकीगर्वसंभवः ।
बहवोऽन्येऽपि विप्रत्वं प्राप्ता ये पूर्ववद् द्विजाः ॥

इत्यादिवचनैरपि समुच्चयबुबोधयिषयैव जन्मनोऽपि केवलस्य तदहेतुत्वमुच्यते । लोकप्रसिद्ध्यनुरोधेन निन्दार्थम्, न वस्तुस्थितिमनुरुध्य । न तु वस्तुतस्तदहेतुत्वम् वचनान्तरविरोधात्, वस्तुस्थितिविरोधाच्च । प्रसिद्धिस्तु श्रीसीतापवादवन्निर्मूलाऽपि भवति । यथाहि व्यासो लोकप्रसिद्ध्यनुरोधेनेव कैवर्त्तीसुतः ।

वस्तुतस्तु—महाभारतरीत्या वनस्थितेनोरिचरेण वसुना स्वपत्नीमृतुमतीं स्मृत्वा स्कन्नं तेजोमयं शुक्रं द्रोणे निधाय श्येनेन स्वपत्न्यर्थं प्रेषितम् । मार्गे श्येनान्तरेण युद्धं प्रवृत्तम् । युद्धव्यग्रात्तस्मान्निपतितं शुक्रं मत्स्या उदरे गतं तेनेव मत्स्या उदरात् सत्यवती समुत्पन्ना । सा च सर्वथा दिव्या क्षत्रियकन्यैव । बीजप्राधान्यात् पराशरात्तस्यां जातो व्यासो ब्राह्मण एव । कैवर्त्तैर्मत्स्यजीविभिः पालितत्वात् कर्णस्य सूतपुत्रत्ववत् सत्यवत्याः कैवर्त्तकन्यात्वं प्रसिद्धम् ।

वसिष्ठस्य गणिकासुतत्वमपि वस्तुस्थितिविरुद्धमेव । वसिष्ठागस्त्ययोर्मित्रावरुणयोस्तेजसा वसतीवरीकुम्भादुत्पत्तिः । स्वर्गीयाया उर्वश्या अप्सरसस्तयोः क्षोभनिमित्तत्वात्तु पूर्वपक्षतया वसिष्ठे गणिकापुत्रत्वारोपः । तस्यादिव्यत्वात्तदुदरासंबन्धाच्च । पराशरस्य श्वपाकीसुतत्वमपि निर्मूलमेव । नचेदं वचनमेव तन्मूलं, तस्य पूर्वपक्षस्थत्वेनाप्रमाणत्वात् । तन्मातुरदृस्यन्त्याः

प्रमाणान्तरेणेतिहासेन वा श्वपाकीत्वासिद्धेः। अभ्युपगमसिद्धान्तेनाप्रामाणिकमप्यभ्युपगम्य समाधानमुक्तम्। 'अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः' ( न्या० द९ १।१।३१ )। यथा न्यायमतेन शब्दस्य गुणत्वेन द्रव्यत्वानभ्युपगमेऽपि तदभ्युपगम्य तन्नित्यत्वानित्यत्वपरीक्षणमभ्युपगमसिद्धान्तेन क्रियते तथैव श्वपाकीगर्भसंभूतत्वस्यापरीक्षितत्वेऽपि दुर्जनतोषन्यायेन तदभ्युपगम्यापि तद्ब्राह्मण्यादिपरीक्षणम्। नानेन श्वपाकीगर्भसंभूतत्वं सिद्ध्यति पराशरस्य। गर्भे बीजस्यैव प्राधान्यप्रदर्शनायापि तादृश्य उक्तयो भवन्ति। यथा शुक्यां हरिण्यां माण्डूक्याञ्च मनुष्यभिन्नास्वपि महर्षीणां तपःप्रभावात्तासु ब्राह्मणानामुत्पत्तयस्तथैवबीजप्राधान्याच्छ्वपाक्यामपि संभूतस्य पराशरस्य ब्राह्मण्यम्, पश्वाद्यपेक्षया मनुष्यस्य श्वपाकस्याप्युत्कर्षाभ्युपगमात्। अत एव स्त्रीरत्नं दुष्कुलादपि। ( मनुः ५।२३८ ) इत्यादिकमुक्तम्।

यदा महर्षीणां तपःप्रभावान्मनुष्येतरासु पश्वादिस्त्रीषु ब्राह्मणोत्पत्तिः संभवति तदा मानुषीषु निम्नजातीयासु ब्राह्मणोत्पत्तिःकैमुतिकन्यायेन सिद्ध्यति। योन्यपेक्षया बीजस्य प्राधान्यमुक्तमेव। 'तस्माद्बीजं प्रशस्यते' ( मनुः १०।७२ )।

यदि तु मनुष्येतरासु शुक्यादिषु मनुष्योत्पत्त्यसंभवात् शुक्यादिशब्दैस्तत्तद्गुणयुक्तास्तत्तन्नाम्न्यो मानुष्य एव शुक्यादिशब्दाभिधेयास्तदा तु श्वपाकीशब्देनापि ब्राह्मणी एव गुणयोगात् गौण्या वृत्या ब्राह्मण्येव वक्तुं शक्यते। ब्राह्मणेष्वपि चण्डालो भवति।

'देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः।
पशुर्म्लेच्छोऽपि चण्डालो विप्रा दशविधाः स्मृताः॥

( अत्रिस्मृति ३७१ )

इति रीत्या देवादयो दशविधा ब्राह्मणा भवन्ति।

'क्रियाहीनश्च मूर्खश्च सर्वधर्मविवर्जितः।
निर्दयः सर्वभूतेषु विप्रः चाण्डाल उच्यते'॥ ६८॥

इति पारिभाषिकः श्वपाको ब्राह्मण एव भवति। यदि तु स्वपक्षरक्षार्थं प्रतिपक्षिणः शुक्यादिषु मनुष्येतरासु मनुष्योत्पत्तिमभ्युपगच्छेरंस्तदा कथमिदानीं तथा न भवतीति ते प्रष्टव्याः। यदि तु कलौ शक्तिह्रासात्तथा भवतीति ते ब्रूयुस्तदाऽत्रापि तथैव समाधानं संभवति। यदि संस्कारेभ्यो विशिष्टतपोभ्यश्चा-

पकृष्टयोनिजानामपि ब्राह्मण्यमिष्यते–तदपि नोपपद्यते, संस्काराणां तपसाञ्च त्रैवर्णिकेभ्य इतरेषां निषेधात् । पूर्वं विशिष्टशक्तिमन्तो महर्षयः पश्वादिष्विव श्वपाक्यादिष्वप्यमोघवीर्य्यत्वाद् ब्राह्मणानुत्पादयितुं समर्था आसन्नैदानींतना ब्राह्मणाः । यदि तु शुक्यादिषु मनुष्योत्पत्तिर्नाभ्युपगम्येत तदा प्रदर्शित वचनानामप्रामाण्यात् श्वपाक्यादिष्वपि ब्राह्मणोत्पत्तिः प्रमाणशून्यैव । सामान्यशास्त्रानुसारेण मन्वादिरीत्या सर्वणासु सवर्णेभ्य एव तज्जातीया जायन्त' इत्युत्सर्गः । क्वचिदसवर्णास्वपि—महर्षीणां तपःप्रभावाद् ब्राह्मणा भवन्तीत्यपवाद एव । तदुक्तम्—

"तपोज्ञानसमायुक्ताः कृतत्रेतायुगे नराः ।
द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्मिता ॥
अनेकधा कृताः पुत्रा ऋषिभिश्च पुरातनैः ।
न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैः ॥"

( बृहस्पतिस्मृतिः )

ऋषीणाममोघवीर्य्यत्वादेव पशुपक्षिस्त्रीष्वपि ब्राह्मणा एव जाताः ।
विशिष्टं कुत्रचिद् बीजं स्त्रीयोनिष्वेव कुत्रचित् ॥ मनुः (९।३४)

बीजप्राधान्याद्विश्वामित्रव्यासादीनां निम्नजातीयास्वपि योषित्सु जातत्वेऽपि ब्राह्मण्यम्, योनिप्राधान्याच्च अम्बाम्बालिकादिषु व्यासेनोत्पादितानामपि पाण्डुधृतराष्ट्रादीनां क्षत्रियत्वम् । 'तयोरुत्पाद्यापत्यमनुरूपं कुलस्य च' ( महाभारते ( १।१०५।६४।९।६४ ) मनुपद्येन । बीजस्य वैशिष्ट्यं व्यासऋष्यशृङ्गादीनां महर्षीणां दृष्टम् । 'स्त्रीयोनिष्वेव क्षेत्रजादिपुत्रेषु धृतराष्ट्रादिषु विशिष्टा ते ब्रह्मणाज्जाता अपि मातृजातयः क्षत्रियाः' इति मेधातिथिः ।

'क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः पुमान् ।
क्षेत्रबीजसमायोगात् संभवः सर्वदेहिनाम् ॥' ९।३३ मनुः ॥
'बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते ।
सर्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता ॥' ९।३५ ॥
यादृशं तूप्यते बीजं क्षेत्रे कालोपपादिते ।
तादृग्रोहति तत्तस्मिन् बीजं स्वैर्व्यञ्जितैर्गुणैः ॥ ९।३६ ॥

इयं भूमिर्हि भूतानां शाश्वती योनिरुच्यते ।
न च योनिगुणान् कांश्चिद्बीजं पुष्यति पुष्टिषु ॥ ९।३७ ॥
'अन्यदुप्तं जातमन्यदित्येतन्नोपपद्यते ।
उप्यते यद्धि यद्बीजं तत्तदेव प्ररोहति ॥' ९।३७ ॥

बीजस्योत्कर्षादेवामोघवीर्य्याणां महर्षीणां वीर्य्यात् यत्र क्वापि जातानां क्षेत्रदोषपरिहारेण ब्राह्मण्यमेव सम्पन्नम् ।

'यस्माद्बीजप्रभावेण तिर्यग्जा ऋषयोऽभवन् ।
पूजिताश्च प्रशस्ताश्च तस्माद्बीजं प्रशस्यते ॥' (१०।७२मनुः)

अत्रापि जन्मनैव वर्णव्यवस्था सिद्ध्यति न कर्मणा गुणेन वा ।

'शूद्राणां यान्यनिष्टानि सम्पद्यन्ते स्वभावतः ।
विप्राणामपि तान्येव निर्विघ्नानि भवन्ति च ॥' (४०।१०मनुः)
'तस्मान्मन्त्रोऽग्निहोत्रं वा वेद्यां पशुवधोऽपि वा ।
हेतवो नहि विप्रत्वे शूद्रैः शक्या क्रिया यथा ॥
शूद्रविप्रादयो योनौ न भिद्यन्ते परस्परम् ।
सर्वधर्मसमानत्वात् संस्कारादि निरर्थकम् ॥' ११।१२ ॥

इत्यादिष्वपि पूर्वपक्षरूपेणैव संस्कारादीनां नैरर्थक्यमुक्तम्, संस्कारविधानविरोधात् । तथैव च—

'दौःशील्यदौर्मनस्याद्यैस्तुल्यजातीयबन्धनात् ।
शूद्रां प्ररोचते विप्रो रागिणी मैथुनं प्रति ॥' ( ४३।३२ )
'सा कामदुःखविगमे गर्भं धत्ते समागमे ।
कामं कामातुराभ्यस्तु रोचन्ते शूद्रमानवाः ॥ ३९ ॥
मैथुनं प्रति ब्राह्मण्ये तेऽपि तस्य सुखावहाः ।
ये तु जात्यादिभिर्भिन्नाः गवाश्वोष्ट्रमतङ्गजाः ॥
ते विजातिषु नो गर्भं कुर्वतेऽपि सुखार्थिनः ।
अनड्वानेव गौरेव कामं पुष्णाति सङ्गमे ॥
घोटकाश्च रतिं सम्यक् कुर्वते बडवासु च ।
पतिं करभमेवाप्य करभी रमते मुदा ॥
गजमेव पतिं लब्ध्वा सुखं तिष्ठति हस्तिनी ।

तिर्यग्जातिस्त्रिया सार्कं कुर्वाणो हि च मैथुनम् ।
न तस्याः कुरुते गर्भं नरो नापि सुखासिकाम् ।
तिरश्चां सह कुर्वाणा मैथुनं मनुजाङ्गना ॥
नाधत्ते तत्कृतं गर्भं न युक्तं मैथुनं तयोः ।
नैव कश्चिद्विभागोऽस्ति मैथुनं स्त्रीमनुष्ययोः ॥
येन संक्षीयते भेदः प्रस्फुटं द्विजशूद्रयोः ।
तस्मान्मनुष्यभेदोऽयं संकेतबलनिर्वृतः ॥'

इत्येवमादिभिश्च वचनैःपूर्वपक्षरूपेणैव जातिभेदः खण्डितः। तच्च खण्डनम् समुच्चयपक्षसाधनायैव विद्याविद्योपासनाखण्डनवदेव वेदितव्यम् । छान्दोग्ये-रमणीयचरणानां ब्राह्मणादिषु योनिषु कपूयचरणानां श्वसूकरचण्डालादियोनिषु जन्मवर्णनश्रवणात् । निन्दार्थवादत्वादेवोक्तवचनानां न स्वार्थे तात्पर्य्यं किन्तु योनिकर्मसंस्कारादिसमुच्चये जातिव्यस्थाप्रतिपादन एव तात्पर्य्यम् । तत एव परस्परविरुद्धान्यप्युक्तानि वाक्यानि । पूर्वं तु हरिणी-मण्डूकी-शुकी-उलूकी-प्रभृतिपशुस्त्रीषु मैथुनादृषीणामुत्पत्तय उक्ताः । अत्र तु तदसंभवोऽप्युक्तः । तस्माद् गोश्वादिवद् ब्राह्मणक्षत्रियादिषु स्थूलो भेदो नास्ति । तेनैव तत्राकृति-ग्रहणाजातिर्नास्ति किन्तु सूक्ष्मभेदात् सकृदाख्यातनिर्ग्राह्या जातिरभ्युपेता शास्त्रज्ञैः ।

मनुष्येष्वपि देशाकृतिरङ्गभेदेन चीनी जापानी आङ्गलफ्रेञ्चअफ्रीकीप्रभृतिषु भेदो दृश्यत एव । गोष्वपि देशगुणादिभेदेन भेदः प्रसिद्धः । अश्वेषु हयाश्वादि-भेदो बृहदारण्यके प्रसिद्धः । आम्रेषु रसरूपगन्धभेदेन सूक्ष्मो जातिभेदः स्फुटः । शालिष्वपि वर्णाकृतिरसगन्धास्वादादिभेदेन यथा सूक्ष्मो भेदस्तथैव ब्राह्मण-क्षत्रियेषु सूक्ष्मो भेदः । अस्थित्वेन तुल्यत्वेऽपि यथा शंखमनुष्यास्थिषु पावित्र्या-पावित्र्यभेदोभ्युपेयते, मूत्रत्वेन तुल्यत्वेऽपि गोमूत्रमनुष्यमूत्रेषु महान् भेदाः, चर्मत्वेनावैशेष्येऽपि व्याघ्रगर्दभचर्मयोः पावित्र्यादिभेदः, जलत्वेन तुल्यत्वेऽपि गङ्गाजलस्यान्यजलापेक्षा वैशिष्ट्यमभ्युपेयत एव । यथान्यशब्दापेक्षया भगवन्नाममन्त्रादिशब्दवैशिष्ट्यं तथैव ब्राह्मणक्षत्रियादिवैशिष्ट्यमपि मन्तव्यम् । सामान्यजनदृष्ट्या वज्रादिमणीनामवैशेष्येऽपि रात्निकानां तद्वैशेष्यं स्पष्टमेव । कश्यपेन प्रोक्तं गरुडेन चानुभूतमेव निषादाचारो निषादीरक्ते दुर्वृत्तेऽपि ब्राह्मणे

निषादापेक्षया वैशिष्ट्यम्। निषादभक्षणे गले दाहो न जातः, तादृशस्यैव-ब्राह्मणस्य भक्षणे तु गले दाहो जातः। तस्मान्नात्र जातिभेदखण्डने तात्पर्य्यम्।

तत एव

'वागीश्वरेण देवेन नाभेयेन भवच्छिदा।
पुरुषा कृतमर्य्यादास्त एव ब्राह्मणाः स्मृताः॥' ४४.७ भ०॥
'शूद्रोऽपि शीलसम्पन्नो ब्राह्मणादधिको भवेत्।
ब्राह्मणो विगताचारः शूद्राद्धीनतरो भवेत्।' (भविष्य ४४-३१)

इत्यादि जन्मनैव ब्राह्मणशूद्रादिभेदमभ्युपगम्यैवोक्तम्। कर्मणा गुणेन महत्त्वमुक्तम् भविष्ये ४५ अध्याये। जातिकर्मसमुच्चय उत्तरपक्ष उक्तः। यथावा विभावानुभावसञ्चारिसंयोगाद्रसनिष्पत्तिरभ्युपेयते। समवायाभावे स्वातन्त्र्येण रसनिष्पत्तिरनैकान्तिका एव। यथा जात्याकृतिव्यक्तयः समुदिता एव पदार्था भवन्ति तथैव जन्मकर्मणोः समुदितयोरेव ब्राह्मणत्वादिकारणत्वम्। अध्ययन-संस्कारादयः कर्मण्येवान्तर्भवन्ति। तत्रापि जन्मनो वर्णव्यवस्थापकत्वं गुण-कर्मादीनामुत्कर्षाधायकत्वम्। तत एव 'ब्राह्मणोऽस्य मुखमासीत्' श्रुतौ—

'लोकानान्तु विवृद्धयर्थं मुखबाहूरूपादतः।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्तयत्॥' ( म० १।३१ )

मन्वादिधर्मशास्त्रेषु च स्पष्टम्।

'इमे ये नार्वाङ् न परश्चरन्ति न ब्राह्मणासो न सुतेकरासः।
त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः॥'
( ऋ. सं. १०।७१।९ )

इमे ये अविद्वांसः अर्वाक् अधोभाविन्यस्मिँल्लोके ब्राह्मणैः सह न चरन्ति। परः परस्तात् देवैः सह (ये) न चरन्ति ते। ब्राह्मणास वेदार्थतत्परा ब्राह्मणाः न भवन्ति। तथा सुतेकरा सः सोमं सुतं कुर्वन्तीति सुतेकरा ऋत्विजः तेऽपि न भवन्ति। अप्रजज्ञयः अविद्वाँसः। त एते मनुष्याः वाचं लौकिकीम्। अभि पद्य प्राप्य तथा पापया वाचा युक्तास्ते सिरीः सीरिणो भूत्वा। तन्त्रं कार्यलक्षणं तन्वते विस्तारयन्ति। इत्यस्मिन् मन्त्रे वेदार्थानभिज्ञस्य ब्रह्मकर्मरहितस्य कृषिपरायणस्यापि जन्मना ब्राह्मणस्य ब्राह्मण्यं सङ्गच्छते।

'उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि ।
वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने भद्रमा वद ।
विश्वतो नः शकुने पुण्यमा वद ॥ ७ ॥ २ ॥

( ऋक् सं० २।४३।२ )

शकुने हे कपिञ्जल ! उद्गातेव यथा उद्गाता साम गायति यथा त्वं साम गायसि गानस्वरं करोषि । ब्रह्मपुत्र इव ब्राह्मणपुत्रः ब्राह्मणाच्छंसी ऋत्विग्विशेषो यथा । सवनेषु शस्त्राणि शंसति । यथा त्वं कालेषु शंससि श्रौतस्वरं करोषि । वृषेव सेचनसमर्थो यथा वाजी अश्वः । शिशुमतीः बडवाः । अपीत्य अभिगत्य यथा शब्दं करोति यथा त्वमपि वद ।

एतेन ब्राह्मणपुत्रस्यैव यज्ञ आर्त्विज्यं सिद्धयति ।
यदुक्तम् "भृगोर्वचनमात्रेण स च ब्रह्मर्षितां गतः ॥ ५७ ॥
वीतहव्यो महाराज ब्रह्मवादित्वमेव च ।
तस्य गृत्समदः पुत्रो रूपेणेन्द्र इवापरः ॥ ५८ ॥
ऋग्वेदे वर्त्तते साग्र्या श्रुतिर्यस्य महात्मनः ॥ ५९ ॥
यत्र गृत्समदो राजन् ब्राह्मणैः स महीयते ॥ ६० ॥

( महाभारते अनुशासने ३०।५७-६० । )

एवं विप्रत्वमगमद्वीतहव्यो नराधिपः ।
भृगोः प्रसादाद्राजेन्द्र क्षत्रियः क्षत्रियर्षभ ॥ ६६ ॥

( म भा. अ. ३० )

अत्र क्षत्रियस्य ब्राह्मणत्वं जातमिति ज्ञायते" इति, तन्न, भावानवबोधात् ।

तथाहि—'अन्य एवैकदेशेन शास्त्रस्यार्थः प्रतीयते ।
अन्यस्तु परिपूर्णेन समस्ताङ्गोपसंहृतौ' ॥
एवञ्च–'श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते ।
तत्र श्रौतं प्रमाणन्तु तयोर्द्वैधे स्मृतिर्वरा' ( व्यास स्मृ. १।४ )

इति व्यासस्मृत्यनुरोधेनैव—

व्यासोक्तपुराणानां श्रुतिस्मृत्यनुसारेणैव व्यवस्था युक्ता । श्रुतौ स्मृतौ च जन्मनैव वर्णव्यवस्थोक्ता । पुराणेषु कर्मादिप्रशंसार्थमेव क्वचिद् गुणकर्मादिभिर्वर्णपरिवर्त्तनमुक्तम् । श्रुतिस्मृत्योः संविधानरूपत्वेन तयोरेव व्यवहारे

प्रामाण्यम् नेतिवृत्तस्य। तत्र प्रतिकूला अनुकूलाश्च घटना घटन्त एव। अनुकरणीया अननुकरणीयाः, आदरणीया अनादरणीयाः साधीयस्योऽसाधीयस्यो वा विविधा घटना वर्ण्यन्त एवेतिहासे। तासु साधीयस्यो ग्राह्या अग्राह्याश्चान्याः। तत एवोक्तं रामादिवद्वर्तितव्यं न रावणादिवत्। अनुशासनपर्वणि—

'क्षत्रियो यदि वा वैश्यः शूद्रो वा राजसत्तम।
ब्राह्मण्यं प्राप्नुयाद्येन तन्मे व्याख्यातुमर्हसि ॥ २७।३ ॥
तपसा वा सुहमता कर्मणा वा श्रुतेन वा।
ब्राह्मण्यमथ चेदिच्छेत् तन्मे ब्रूहि पितामह ॥ ४ ॥

इति युधिष्ठिरप्रश्ने भीष्मेणोक्तम्—

ब्राह्मण्यं तात दुष्प्राप्यं वर्णैः क्षत्रादिभिस्त्रिभिः।
परं हि सर्वभूतानां स्थानमेतद् युधिष्ठिर ॥ २७।५॥
बह्वीस्तु संसरन्योनीर्जायमानः पुनः पुनः।
पर्य्याये तात कस्मिश्चिद् ब्राह्मणो नाम जायते ॥

अयमेव सिद्धान्तपक्षः। तद्विरुद्धवचनानां कर्मप्रशंसायामेव तात्पर्यम् न तद्विरुद्धकर्मादिभिर्वर्णपरिवर्त्तने तात्पर्यम्। ब्राह्मणानां शूद्रत्वकथनं निन्दार्थवादः। क्षत्रियादीनां ब्राह्मणत्वकथनं प्रशंसार्थवादः।

तदुक्तम्—'प्रधानशब्दानुपपत्तेर्गुणशब्देन अनुवादः निन्दाप्रशंसोपपत्तेः' (न्याय द० ४।१।६० )

वात्स्यायनस्तत्राह—'प्रयुक्तोपमं चैतदग्निर्माणवकः। अत्र तेजस्वित्वादिगुणेनैव माणवकेऽग्निशब्दः प्रयुज्यते। यथा नरोऽनाचारात् पशुत्वं यातीत्युच्यते तथैव ब्राह्मणोऽनाचारच्छूद्रत्वं याति। यथा पशुत्वं न तत्र तात्त्विकं तथैव प्रकृतेऽपि ज्ञेयम्। अत एव—पृषध्रस्य गोहननेन शूद्रत्वप्राप्तिः शूद्रसादृश्यप्राप्तिरेव, शूद्रस्यापि हिंसादिनिषेधात्। अत एव न हिंसा कर्मणा तस्य शूद्रत्वं वक्तुं युक्तम्।

क्वचित्तु ब्राह्मणक्षत्रिययोर्वैश्यत्वकथनं तत्कर्मप्रावीण्यप्रदर्शनार्थमेव। यथा शुद्धायां लक्षणायां तात्कर्म्यलक्षणः सम्बन्ध उक्तः, यथा अतक्षापि तक्षकर्मप्रावीण्येन तथा प्रोच्यते।

तदुक्तम्—महाभाष्यकारैः—'चतुर्भिः प्रकारैः अतस्मिन् सः इत्येतद्भवति।

तात्स्थ्यात्, ताद्धर्म्यात् तत्सामीप्यात्' तत्साहचर्य्यात्' ( पा. सू. ४।१।४८) 'अन्तरेणापि वतिमतिदेशो गम्यते। तद्यथा—एष ब्रह्मदत्तः। अब्रह्मदत्तं ब्रह्म-दत्त इत्याह। तेन मन्यामहे ब्रह्मदत्तवदयं भवतीति ( पा. सू. १।२१ महाभा० ) तथा ( म० अ० २।३।६९ ) तथैव क्षत्रियो ऽब्राह्मणोऽपि सादृश्यात् ब्राह्मणत्वेन व्यपदिश्यते।

लाक्षणिका अपि शब्दाः प्रयुज्यन्ते। यथा—

'देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः।
पशुर्म्लेच्छोऽपि चाण्डालो विप्रा दशविधाः स्मृताः ॥'

( अत्रिस्मृतिः ६७१ )

तत्र लक्षणानि विवक्षितानि भवन्ति। तथा—

'स्नानं सन्ध्यां जपं होमं देवतानित्यपूजनम्।
अतिथिं वैश्यदेवञ्च ( कुर्वन् ) देवब्राह्मण उच्यते ॥'
शाके पत्रे फले मूले वनवासे सदा रतः।
निरतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते ॥,
वेदान्तं पठते नित्यं सर्वसङ्गं परित्यजेत्।
सांख्ययोगविचारस्थः स विप्रो द्विज उच्यते ॥
अस्त्राहताश्च धन्वानः संग्रामे सर्वसंमुखे।
आरम्भे निर्जिता येन स विप्रः क्षत्र उच्यते ॥
कृषिकर्मरतो यश्च गवाञ्च प्रतिपालकः।
वाणिज्यव्यवसायश्च स विप्रो वैश्य उच्यते ॥
लाक्षालवणसंमिश्राः कुसुमक्षीरसर्पिषः।
विक्रेता मधुमांसानां स विप्रः शूद्र उच्यते ॥
चौरश्च तस्करश्चैव सूत्रको दर्शकस्तथा।
मत्स्यमांसे सदा लुब्धो निषादो विप्र उच्यते ॥
ब्रह्मतत्त्वं न जनाति ब्रह्मसूत्रेण गर्वितः।
तेनैव च 'स पापेन विप्रः पशुरुदाहृतः' ॥

सर्वत्रात्र नहि ब्राह्मणा वस्तुतः पश्वादयो भवन्ति, तत्तल्लक्षणैर्युक्तत्वात्तु तैस्तैः शब्दैर्व्यपदिश्यन्ते। एवमेव—

'वापीकूपतडागानामागमस्य सरस्सु च।
निःशंकं रोधको यश्च स विप्रो म्लेच्छ उच्यते॥
क्रियाहीनश्च मूर्खश्च सर्वधर्मविवर्जितः।
निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उच्यते॥

अनयैव दृष्ट्या क्वचिद् ब्राह्मणी सत्यप्यदृश्यन्ती चाण्डाली श्वपाकी वोक्ता। चाणक्यनीतावपि '११।११ ऋषिविप्रः ११।१२ द्विजविप्रः १३ वैश्यविप्रः १४ शूद्रविप्रः १५ मार्जारविप्रः १६ म्लेच्छब्राह्मणः १७ चण्डालविप्रः;। नहि वकविडालादिशब्दैरुच्यमाना ब्राह्मणा वस्तुतो वकादयो भवन्ति। किन्तु वकादिवृत्तिभिस्तु ते ते ब्राह्मणा वकादिशब्दैर्व्यवह्रियन्ते। एवमेव क्षत्रियादयोऽपि।

'अब्राह्मणानां वित्तस्य स्वामी राजेति वैदिकम्।
ब्राह्मणानाञ्च ये केचिद्विकर्मस्था भवन्त्युत (शा० प० १६।१०)
विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथञ्चन।
नियम्याः सविभाज्याश्च धर्मानुग्रहकारणात्। (७६।११)

इति शान्तिपर्वणि जन्मना ब्राह्मणानामेव तत्तत्कर्मभिः ब्राह्मसमाः, देवसमाः, 'क्षत्रसमाः वैश्यसमाः, शूद्रसमाः, ब्राह्मणचाण्डालादिभेदा उक्ताः। एतदनुरोधेनैवान्यवचनानां व्यवस्था युक्ता।

एतेन कर्मभिर्ब्राह्मण्यादिकमित्यस्य—

स्वकर्मण्यपरे मुक्तास्तथैवान्ये विकर्मणि।
तेषां विशेषमाचक्ष्व ब्राह्मणानां पितामह॥ (शा० प० ७६।१)
विद्यालक्षणसम्पन्नाः सर्वत्र समदर्शिनः।
एते ब्रह्मसमा राजन् ब्राह्मणाः परिकीर्तिताः॥
ऋग्यजुः सामसम्पन्ना स्वेषु कर्मस्ववस्थिताः।
एते देवसमा राजन् ब्राह्मणानां भवन्त्युत॥
जन्मकर्मविहिना ये कदर्य्या ब्राह्मबन्धवः।
एते शूद्रसमा राजन् ब्राह्मणानां भवन्त्युतः॥
आह्वायका देवलका नाक्षत्रा ग्रामयाजकाः।
एते ब्राह्मण-चाण्डाला महापथिकपञ्चमाः॥
ऋत्विक् पुरोहितो मन्त्री दूतो वार्तानुकर्षकः।
एते क्षत्रसमा राजन् ब्राह्मणानां भवन्त्युत॥

इत्यादिभिर्वचनैः जन्मना ब्राह्मण एव सन्तः तैस्तैः कर्मभिर्ब्रह्मक्षत्रवैश्य-शूद्रादिसमा ब्राह्मणा भवन्तीति प्रतिपादितम्। त एव तत्तत्सादृश्यात्तत्तच्छब्दैरपि व्यपदिश्यन्ते। किञ्च यथा ज्यौतिषशास्त्रे पुष्यश्लेषानुराधाज्येष्ठोत्तरभाद्रपदारेवत्यादिनक्षत्रोत्पन्नानां सर्ववर्णबालकानां ब्राह्मणत्वमुच्यते। आर्द्रा-पुनर्वसु स्वातीविशाखाशतभिषादि नक्षत्रोत्पन्नानां शूद्रत्वं भवति। यथा च तत्रैव नक्षत्रानुसारेण कस्यचिन्मनुष्यस्यैव वानरयोनित्वं, कस्यचिद्व्याघ्रयोनित्वम्, कस्यचित्सिंहराशित्वं, कस्यचित्कन्याराशित्वं, कस्यचिन्मूषकवर्गत्वं, कस्यचिन्मृगवर्गत्वं, व्यपदिश्यते। नात्र वस्तुतो ब्राह्मणमूषकसिंहादित्वम्। तथैव पुराणेषु ब्राह्मणेषु क्षत्रियत्ववैश्यत्वादिकं क्षत्रियादिषु ब्राह्मणत्वादिकञ्च लाक्षणिकं पारिभाषिकमेव वा मन्तव्यम्। वर्णो जातिर्वा तेषां पित्रोरेव। अन्यवर्णानां वृत्त्या गुणेन वा गौणमेव। तेन नाभागो वैश्यतामगमत्। (विष्णु पु. ४ १।१६) वैश्यकर्मनिपुणो जातो वैश्यवृत्तिर्वा जात इत्येवार्थः, नतु वस्तुतो वैश्यवर्णो वैश्यजातीयो वा जात इति तदर्थः।

येस्तु गुणाकर्मानुसारेण वर्णव्यवस्था अङ्गीक्रियते तैर्वीतहव्यः क्षत्रियश्चेद् गुणकर्मानुसारेणासीत् स कथं भृगोर्वचनमात्रेण ब्राह्मणगुणकर्माभावाद् ब्राह्मणो जातः।

यदि तु दिव्यशक्तिसम्पन्नस्य तपस्विनो वचने तादृक्सामर्थ्यविशेषोऽभ्युपेयते तदा तु यथा वरशापादिभिः स्त्रीणां पुरुषत्वं पुरुषस्य च स्त्रीत्वं संपद्यते तथैव वरशापादिभिः क्षत्रियादिषु ब्राह्मणत्वादिकं ब्राह्मणेषु शूद्रत्वादिकञ्च संभाव्यत एव। तदुक्तम्—

'यद् दुस्तरं यद् दुरापं यद् दुर्गं यच्च दुष्करम्।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम्॥' (म०११।२६८)

इति रीत्या भृर्गोवचनमात्रेण तपःप्रभावाद्वीतहव्यस्य ब्रह्मणत्वं संगच्छते। यस्तु मूषकदेहस्य मार्जाररूपेणापि परिवर्त्तनं न कर्त्तुं शक्नोति स शूद्रस्य ब्राह्मणत्वसम्पादनं कुर्यादित्यसंगतमेव। अपवादभूता तथाविधा घटना भवति नोत्सर्गः। व्यवहारस्तूत्सर्गेणैव भवति। पुराणेतिहासेषु सिद्धान्तरूपेण तु जन्मनैव वर्णव्यवस्थोक्ता। यथा महादेवं प्रति भगवत्याः प्रश्नः—

'चातुर्वर्ण्यं भगवता पूर्वं सृष्टं स्वयम्भुवा।
केन कर्मविपाकेन वैश्यो गच्छति शूद्रताम्॥
वैश्यो वा क्षत्रियः केन द्विजो वा क्षत्रियो भवेत्।
केन वा कर्मणा विप्रः शूद्रयोनौ प्रजायते॥
क्षत्रियः शूद्रतामेति केन वा कर्मणा विभो॥'

महाभारते अनुशासनपर्वणि १४३। २......४

महादेवस्य चोत्तरम्—

ब्राह्मण्यं देवि दुष्प्रापं निसर्गाद् ब्राह्मणः शुभे।
क्षत्रियो वैश्यशूद्रौ वा निसर्गादिति मे मतिः॥
(म० भा० अनु० १४३।६)

'स्थितो ब्राह्मणधर्मेण ब्राह्मण्यमुपजीवति।
क्षत्रियो वाथ वैश्यो वा ब्रह्मभूयं स गच्छति॥
यस्तु विप्रत्वमुत्सृज्य क्षात्रधर्मं निषेवते।
ब्राह्मण्यात्स परिभ्रष्टः क्षत्रयोनौ प्रजायते॥

अत्र प्रसङ्गेषु ब्राह्मण्यादिकं नैसर्गिकमेवोक्तम्। स्वधर्माद् भ्रष्टानामेव जन्मान्तरेषु योन्यन्तरेषु जन्म चोक्तम्। सर्वमेतज्जन्मना वर्णपक्षे घटते।

'वैश्यकर्म च यो विप्रो लोभमोहव्यपाश्रयः।
ब्राह्मण्यं दुर्लभं प्राप्य करोत्यल्पमतिः सदा॥
स द्विजो वैश्यतामेति वैश्यो वा शूद्रतामियात्।
स्वधर्मात् प्रच्युतो विप्रस्ततः शूद्रत्वमाप्नुते॥
तत्रासौ निरयं प्राप्तो वर्णभ्रष्टो बहिष्कृतः।
ब्रह्मलोकात् परिभ्रष्टः शूद्रः समुपजायते॥
'यस्यान्नेनावशेषेण जठरे यो म्रियेद् द्विजः।
तां तां योनिं व्रजेद्विप्रो यस्यान्नमुपजीवति॥
'विहीनसेवी विप्रो हि पतति ब्रह्मयोनितः॥
गुरुतल्पी गुरुद्रोही गुरुकुत्सारतिश्च यः।
ब्रह्मविच्चापि पतति ब्राह्मणो ब्रह्मयोनितः॥
एभिस्तु कर्मभिर्देवि शुभैराचरितैस्तथा।
शूद्रो ब्रह्मणतां याति वैश्यः क्षत्रियतां व्रजेत्॥

'स वैश्यः क्षत्रियकुले शुचौ महति जायते।
एते योनिफला देवि स्थानभागनिदर्शकाः॥ ३५॥'

इत्यादिभिर्वचनैः शुभाशुभकर्मभिरेव ब्रह्मणादियोनिप्राप्तौ ब्राह्मण्यादिकं स्पष्टमुक्तम्। नास्मिन्नेव जन्मनि वर्णपरिवर्त्तनं कर्मभिः संभवति। पुराणेषु तु क्वचित्तथा वर्णनं तद्धर्मत्वात्तद्वृत्तित्वात्तत्सदृशत्वाच्च सङ्गमनीयम्।

यत्रैकस्यैव महर्षेः विभिन्नवर्णाः सन्ततय उक्तास्तत्र क्षेत्रप्राधान्याद्वेदितव्याः। ब्राह्मणस्य 'ब्राह्मणी क्षत्रिया वैश्या शूद्रा चाप्यग्रजन्मनः।' (मनु०-३।१३) इतिरीत्या चतस्रः भार्य्याः संभवन्ति। तासूत्पन्नाः सन्ततयो बीजप्राधान्याद् ब्राह्मणवर्णेन व्यपदिश्यन्ते, क्षेत्रप्राधान्यात्तु मातृवर्णेन व्यवह्रियन्ते। क्वचिच्च मैथुनसम्बन्धमन्तराऽपि तपोबलेन—सङ्कल्पभेदेन चत्वारो वर्णा उत्पादिताः। न तेन जन्मना वर्णव्यवस्थाभङ्गः। क्वचित्तु 'ब्राह्मणतां गताः' इत्यस्य ब्रह्मभूयं गता इत्येवार्थः। 'ब्रह्म हि ब्राह्मणाः' (शतपथ ५।१।१।१२) इति श्रुतेः।

यत्र तु राज्ञश्चातुर्वर्ण्यप्रवृत्तिरित्युक्तम्। तत्र विशृङ्खलतानिवृत्तिपूर्वकं स्वस्वधर्मव्यवस्थापनमेवार्थः, चातुर्वर्ण्यस्य ब्रह्मणैव प्रवर्त्तितत्वात्।

किञ्च यथा परमेश्वरो वर्णरहितोऽपि स्वसंकल्पेन मुखादिद्वारा चातुर्वर्ण्यं रचयति तथैव क्वचिदृषयोऽपि तपोबलान्मानस्या सृष्ट्या चातुर्वर्ण्यं रचितवन्तः। ऋचीको महर्षिर्गाधिपत्न्यां क्षत्रियायां चरुद्वारा विश्वामित्रं ब्राह्मणमारचितवान्। पूर्वं मनसि वाचि दृष्टौ च सृष्टिशक्तिरासीत्। कालक्रमेण क्षीणायां शक्तौ मैथुनी सृष्टिः प्रवृत्ता। साङ्कल्पिक्यां सृष्ट्यामन्ये नियमाः, मैथुन्यां सृष्टावन्ये नियमाः।

यत्र तु 'क्षत्रोपेता द्विजातयः' इत्यादिवर्णनम्, तत्र तु परशुराम द्रोणाचार्यादिवद् ब्राह्मणाः सन्तोऽपि बलवन्तो धनुर्विद्यानिष्णाता भवन्ति इत्येवार्थः। यत्र क्षत्रियादिषु 'ब्रह्मण्यः' इतिशब्दः प्रयुज्यते तत्र ब्रह्मसु ब्राह्मणेषु साधुः ब्रह्मण्यः ब्राह्मणभक्त इत्येवार्थः। अथवा ब्रह्मसु वेदोक्तकर्मसु साधुः वैदिककर्मकलापनिरत इति वार्थः। ब्रह्मलग्नो ब्रह्मविद्यानिष्णातः इति वार्थः। न तत्र ब्राह्मणो ब्राह्मणजातीयो ब्राह्मणवर्णो वा जात इत्यर्थः।

यत्र तु 'ब्रह्मभूयं गतः क्षितौ' इत्युक्तम्, तत्र तु भूमौ ब्रह्मभावं गतः जनकादिवज्जीवन्मुक्तपदं गत इत्येवार्थः। यत्र तु 'कर्मणा ब्रह्मतां गता' इति

दृश्यते तत्रापि मुक्ति गता इत्यर्थः । यथा 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ।, ( मनुः २।२८ ) इत्यत्र ब्रह्मप्राप्तियोग्यतनुप्राप्तिरुक्ता । क्वचित् ब्रह्मज्ञत्वादपि क्षत्रियो ब्राह्मण उच्यते लक्षणया ।

यदुक्तम्—'जन्मना ब्राह्मणे ब्राह्मण्यप्राप्त्यर्थं प्रयत्नाभाव' इति तदपि तुच्छम् ।

नश्यन्ति हव्यकव्यानि नराणामविजानताम् ।
भस्मीभूतेषु विप्रेषु मोहाद् दत्तानि दातृभिः ॥' ( मनु० ३।९७ )

इत्यादिभिर्ज्ञानविज्ञानशून्यस्य ब्राह्मणस्य निन्दादर्शनात् ।

विद्यातपःसमृद्धेषु हुतं विप्रमुखाग्निषु ।
निस्तारयति दुर्गाच्च महतश्चैव किल्विषात् ॥' ( ३।९८ म० )

इति विद्यातपः समृद्धस्य ब्राह्मणस्य प्रशंसादर्शनाच्च ।

एवमेव गोपथेऽपि 'तस्य ब्राह्मणस्यानग्निकस्य नैव दैवं दद्यात्, न पित्र्यम्, नचास्य स्वाम्यायाशिषौ न यज्ञे आशिष स्वर्गंगमा भवन्ति' ( १।२।१३ )। अतएवोत्तमैः कर्मभिरुत्कर्षोपकर्षश्च । हीनकर्मभिर्व्यवस्था तु जन्मनैव स्वधर्मस्था एवोत्कृष्टैर्गुणैः पूज्यते । गुणेन विशिष्टा वीणादिगतास्तन्तवः सौवर्णतन्त्वपेक्षयापि बहुमूल्याः पूज्याश्च भवन्ति । मर्य्यादाहीनस्य ब्राह्मणपुत्रस्य प्रयत्नेन ब्राह्मण्यसम्पादनं सुकरम् । तत्त्यागेन शूद्रपुत्रग्रहणेन तद्ब्राह्मण्यसम्पादनं न सुकरम् । तत एवोक्तम् 'श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।'

यद्यपि वेदादिशास्त्ररहस्यज्ञा जन्मना ब्राह्मणेष्वेव लभ्यन्ते, न कर्मणा वर्णव्यवस्थासिद्धान्ते । यथा मनुष्यत्वे सत्यपि केचिदेव विद्वांसः सुकर्माणश्च, अन्ये मूर्खा विपरीतकर्माणश्च भवन्ति । तथैव ब्राह्मणत्वे सत्यपि केचिद्विद्वांसः केचिदविद्वांसो भवन्ति । एतेन जन्मना वर्णव्यवस्थायामपि स्वधर्मानुष्ठानपरधर्मवर्जनयोः माहात्म्यातिशयः स्पष्टः ।

इदमपि जन्मनैव ब्राह्मणत्वाभ्युपगमे संगच्छते । अन्यथोत्पत्तिकाले सर्वस्यैव शूद्रत्वब्राह्मणत्वादिकेऽभ्युपगम्यमाने श्रैष्ठ्योक्तिरयुक्तैव स्यात् ।

उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद् ब्रह्मणश्चैव धारणात् ।
सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः' ॥ मा० स्मृ १।९३ )

अत्र उत्तमाङ्गोद्भवादित्यनेन 'ब्राह्मणोऽस्य मुखमासीदिति' मुखजत्वेन श्रेष्ठयोक्तिः संगता ।

'ब्राह्मणः संभवेच्चैव देवनामपि दैवतम् ।
प्रत्यक्षं चैव लोकस्य ब्रह्मतेजो हि कारणम् ॥'

( व्यासस्मृतिः अ० ४ )

इत्यादि सङ्गच्छते। अतएव 'जायमानो ह वै ब्राह्मण, इति ब्राह्मणपदं वर्णचतुष्टयस्याप्युपलक्षणमित्यपास्तम् ।

ननु 'स्वाध्यायेन व्रतैर्होमैः ' इति मनूक्तवचनानुरोधेन ब्राह्मणो यदि स्वाध्यायादिकमनुतिष्ठेत्तदा ब्राह्मण्यं लभते इतिवद् ब्राह्मणः क्षत्रियकर्मणा क्षत्रियत्वं, वैश्यकर्मणा वैश्यत्वं, शूद्रकर्मणा शूद्रत्वञ्च लभते। एवमेव क्षत्रियो ब्राह्मणकर्मणा ब्राह्मणत्वञ्च लभते। शूद्रश्च ब्राह्मणकर्मणा ब्राह्मण्यं प्राप्नोति। अत एव

'न विशेषोऽस्ति वर्णानां सर्वं' ब्राह्ममिदं जगत् ।
ब्रह्मणा पूर्वसृष्टं हि कर्मणा वर्णतां गतम् ॥
शूद्रोऽप्यागमसंपन्नो द्विजो भवति संस्कृतः ।
ब्राह्मणो वाप्यसद्वृत्तः सर्वसंकरभोजनः ।
ब्राह्मण्य स समुत्सृज्य शूद्रो भवति तादृशः ॥

( अ० प० १४३ )

इति चेन्न, यतः कर्मब्राह्मण्यबोधकवचनानामुपनयनादिसम्पादितद्वितीय-ब्रह्मण्यपरतयैव योजनमुचितम् । अतएवानुशासनपर्वणि ३३ अध्याये—

'शकायवनकाम्बोजास्तास्ताः क्षत्रियजातयः ।
वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ॥
द्राविडाश्च कलिङ्गाश्च पुलिन्दाश्चाप्युशीनराः ।
कोलिसर्पा महिषकास्तास्ताः क्षत्रियजातयः ।
वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ॥

—तथा अनुशासनपर्वणि ३५ अध्याये—

'मेकला द्राविडा लाटाः पौण्ड्राः कन्वशिरास्तथा ।
शौण्डिका दरदा दार्वाश्चौराश्शबरवर्बराः ॥
किराता यवनाश्चैव तास्ता क्षत्रियजातयः ।
वृषलत्वमनुप्राप्ता ब्राह्मणानाममर्षणात् ॥

अत्र ब्राह्मणसंसर्गाभावे शास्त्रीयधर्मसम्बन्धविच्छेदात् वृषलत्वं गताः। कर्मणा ब्राह्मण्ये तेष्वेव सत्यादिसम्पन्नानां ब्राह्मणत्वं स्यादिति कथं ब्राह्मणादर्शनमुपपद्यते। तथा च जातिकृतं ब्राह्मण्यमङ्गीकार्यमेव। अतएवानुशासने ३४ अध्याये—

'ब्राह्मणं जातिसम्पन्नं धर्मज्ञं संशितव्रतम्।
वासयेत गृहे राजन्न तस्मात् परमस्ति वै॥
'ब्राह्मणं जातिसम्पन्नं धर्मज्ञं संशितं शुचिम्।
अपरेषां परेषाञ्च परेभ्यश्चैव ये परे॥

अत्र पूज्यतायां जातियोगोऽपि स्पष्टः। जातिब्राह्मण्याभावेनेमौ श्लोकौ न सगच्छेते। अनु० ३५ अध्याये भीष्मः—

'जन्मनैव महाभागो ब्राह्मणो नाम जायते।
नमस्यः सर्वभूतानामतिथिः प्रसृताग्रभुक्॥

अत्र जन्मनैव ब्राह्मणस्य पूज्यत्वमुक्तम्। तथैव ३५ अ०

सृष्ट्वा द्विजातीन् धाता हि यथा पूर्वं समादधत्।
न चान्यदिह कर्तव्यं किञ्चिदूर्ध्वं यथाविधि॥

अत्र सृष्टिकाल एव द्विजातिसृष्टिरुक्ता। इयाँस्तु भेदःयत् प्रथमसृष्टिसमये अदृष्टविशेषारब्धशरीरविशेषमात्रं ब्राह्मणत्वादिकम्। अनन्तरन्तु ब्राह्मणमातापितृकत्वेनैव। जातिब्राह्मणनामपि उपनयनात्पूर्वं शूद्रसमत्वं शास्त्रोक्तमादायैवादावेकवर्णत्वव्यवहारः, न जातिकृतविभागाभावाभिप्रायेण। यत्र ब्राह्मणस्य शूद्रत्वमुक्तं तदपि ब्राह्मश्रीविनाशाभिप्रायेण ज्ञातव्यम्। ( अनुशासने ३५ अ० )

'शौद्रं हि कुर्वतः कर्म धर्मः समुपरुध्यते।
श्रीश्च बुद्धिश्च तेजश्च विभूतिश्च प्रतापिनी॥

इत्युक्तत्वात्। तत्रैव १४१ अध्याये

अविद्वान् ब्राह्मणो देवः पात्रं वै पावनं महत्।
विद्वान् भूयस्तरो देवः पूर्णसागरसन्निभः॥
अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत्।
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत्॥

श्मशाने ह्यपि तेजस्वी पावको नैव दुष्यति।
हविर्यज्ञे च विधिवद् गृह एवातिशोभते॥
एवं यद्यप्यनिष्टेषु वर्तते सर्वकर्मसु।
सर्वथा ब्राह्मणो मान्यो दैवतं विहितं परम्॥

एतेन जातिकृतमेव ब्राह्मण्यं न कर्मकृतम्। अतएव तत्रैवानुशासनपर्वणि २०८ अध्याये स्वाभाविकमेव चातुवर्ण्यमुक्तम्। तदनुरोधीन्येव कर्माणि—

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेति चतुर्विधम्।
ब्राह्मणा विहिताः पूर्वं लोकतन्त्रमभीप्सता॥
कर्माणि च तदर्हाणि शास्त्रेषु विहितानि च।
यदीदमेकवर्णं स्यात् जगत्सर्वं विनश्यति॥
सहैव देवि वर्णानि चत्वारि विहितान्यतः।
मुखतो ब्राह्मणाः सृष्टास्तस्मात्ते वाग्विशारदाः।
बाहुभ्यां क्षत्रिया सृष्टास्तस्मात्ते बाहुगर्विताः॥
ऊरुभ्यामुद्गता वैश्यास्तस्माद्वार्तोपजीविनः।
शूद्राश्च पादतः सृष्टास्तस्मात्ते परिचारकाः॥

अत्र मुखादिभ्यो जातत्वात् वाग्विशारदत्वादयो गुणा उक्ता न गुणानुसारेण तेषां मुखादिरूपतोक्तेत्यपि विभावनीयम्। जन्मकृतमेव ब्राह्मण्यादिकं न कर्मकृतं कदापीति।

यदुक्तं-'कृतयुगे चातुर्वर्ण्यं नासी'त्तदपि निर्मूलं भारतविरुद्धञ्च—

ब्राह्मणाः क्षत्रिया वैश्या शूद्राश्च कृतलक्षणाः।
कृते युगे समभवन् स्वकर्मनिरताः प्रजाः॥

(वनपर्व १५१ अध्याये)

जातिब्राह्मण्यस्य जातकर्मादिसंस्कारसापेक्षं मुख्यं ब्राह्मण्यं भवति। तस्यैव ब्राह्मणाधिकारिकेषु कर्मस्वधिकारः। तथा च ज्ञानविज्ञानास्तिक्यादिस्वभावत्वे सति यथावद् वृत्तसम्पन्नत्वे सति जातिब्राह्मणत्वं मुख्यं ब्राह्मणत्वम्। यदि च जातिब्राह्मणस्य ब्राह्मणवृत्तं न स्यात्तदापि केनचिद् वृत्तेन तस्य क्षत्रियतुल्यत्वम्, केनचन वैश्यतुल्यत्वं, केनचन शूद्रतुल्यत्वं भवति। ये क्षत्रियसमास्तेषां याजनाध्यापनप्रतिग्रहेष्वधिकारो नास्ति। वैश्यसमा अपि तथैव। शूद्रसमानानां

तु प्रायश्चित्तमन्त्रषट्कर्मस्वप्यधिकाराभावः। तथा च विद्यातपोयोनित्रितय-वैशिष्ट्यं मुख्यब्राह्मण्ये प्रयोजकम्। अन्यतरैकवैशिष्ट्येन तद्द्वितयवैशिष्ट्येन च गौणब्राह्मण्यादिकम्। मुख्यं ब्राह्मण्यं न केवलजात्या नवा केवलकर्मणा भवतीति ज्ञेयम्।

किञ्च जातिब्राह्मणस्य प्रायश्चित्तादिना कर्माधिकरिणो मुख्यं ब्राह्मण्यं शक्यसम्पादनम्। कर्ममात्रेण गौणब्राह्मणस्य शूद्रास्ते विज्ञानादिसम्पन्नस्यापि न कथमपि जातिब्राह्मण्यसिद्धिद्वारा मुख्यब्राह्मण्यसिद्धिर्भवति। कर्मब्राह्मण्यं हि कर्मानुष्ठानमात्रेण सिद्ध्यति। तच्चेत् कर्म यदि न निषिद्धं स्वानधिकारिकतयाऽनिर्णीतं वा। जातिब्राह्मण्यं तु केवलजन्माधीनम् जन्मान्तर एव भवति नहि शूद्रोत्पन्नस्य तस्मिन्नेव जन्मनि ब्राह्मणोत्पन्नत्वमपि संभवति।

दत्तकविधानेनापि न शूद्रस्य ब्राह्मणत्वम्। ब्राह्मणेन दत्तकपुत्रत्वेन शूद्रस्य ग्रहीतुमशक्यत्वात्। यद्यपि द्विविधं जन्म भवति शास्त्रीयं लौकिकञ्च। शास्त्रीयं दत्तकादीनाम्, द्वितीयम् औरसादीनाम्, तथापि शास्त्रीयं जन्म लौकिकजन्माधीनमेव,नतु तन्निरपेक्षम्। तपोविशेषेण मन्त्रशक्तिविशेषेण वा जन्मान्तर एव ब्राह्मणत्वं भवतीति मतङ्गोपाख्याने स्पष्टमेव। तथा च पुराणादिषु यत्र क्षत्रियादीनामपि तपोविशेषेणैव ज्ञातव्यम्। अन्यथा मतङ्गोपाख्यानविरोधात्। वीतहव्यादीनामपि प्रजापालनादिक्षात्रधर्मनिवृत्तिरेव ब्रह्मर्षित्वप्राप्तिः। तत्पुत्रादीनामपि तपोविशेषनिरतानां ब्राह्मणत्वेन व्यवहारोऽपि गौण एव व्यवहारो ज्ञातव्यः। एतेन ब्राह्मणोत्पत्तिमार्तण्डोक्तवचनानामपि समन्वयो ज्ञातव्यः।

आदौ कृतयुगे वर्णो नृणां हंस इतीरितम्।
कृतकृत्याः प्रजा जात्या तस्मात्कृतयुगं विदुः॥

'आचार्य्या, अध्यापकाः, याजका, साधवो, मुनयश्च ब्राह्मणाः' इति सद्धर्मसूत्रे। राजानो राजकर्मचारिणः रक्षकाश्च क्षत्रियाः। वित्तोपार्जककृषिशिल्पिवणिगादयो वैश्याः। सद्धर्मसूत्रे युधिष्ठिरं प्रति वैशम्पायनः—

ब्राह्मण्यादिगुणैर्युक्तस्त्यक्तदण्डो निरामिषः :
नमन्ति सर्वभूतानि प्रथमं ब्रह्मलक्षणम्॥
यदा सर्वं परद्रव्यं पथि वा यदि वा गृहे।
अदत्तं नैव गृह्णाति द्वितीयं ब्रह्मलक्षणम्॥

त्यक्त्वा क्रूरस्वभावन्तु निर्ममो निष्परिग्रहः ।
युक्तश्चरति यो नित्यं तृतीयं ब्रह्मलक्षणम् ॥
देवमानुषनारीणां तिर्यग्योनिगतेष्वपि ।
मैथुनं हि यदा त्यक्तं चतुर्थं ब्रह्मलक्षणम् ॥
सत्यं शौचं दया शौचं शौचमिन्द्रियनिग्रहः ।
सर्वभूतदयाशौचं तपःशौचं च पञ्चमम् ॥
पञ्चलक्षणसम्पन्नो दुर्दर्शो यो भवेज्जनः ।
तमहं ब्राह्मणं ब्रूयां शेषाः शूद्रा युधिष्ठिर ॥
न कुलेन न जात्या वा क्रियाभिर्ब्राह्मणो भवेत् ।
चाण्डलोऽपि हि वृत्तस्थो ब्राह्मणः स युधिष्ठर ॥
कर्मक्रियाविशेषेण चातुवर्ण्यं प्रतिष्ठितम् ।
सर्वे हि योनिजा मर्त्याः सर्वे मूत्रपुरीषिणः ॥
एकेन्द्रियेन्द्रियार्थश्च तस्माच्छीलगुणो द्विजः ।
शूद्रोऽपि शीलसम्पन्नो गुणवान् ब्राह्मणो भवेत् ॥
ब्राह्मणोऽपि क्रियाहीनः शूद्रान् प्रत्यवरो भवेत् ।
पञ्चेन्द्रियार्णवं घोरं यदि शूद्रोऽपि तीर्णवान् ॥
तस्मै दानं प्रदातव्यमप्रमेयं युधिष्ठिर ।
न जातिर्दृश्यते राजन् गुणाः कल्याणकारकाः ॥
जीवितं यस्य धर्मार्थं परार्थे यस्य जीवितम् ।
अहोरात्रं चरेत् क्रान्तिं तं देवा ब्राह्मणं विदुः ॥
परित्यज्य गृहावासं ये स्थिता मोक्षकाङ्क्षिणः ।
कामेष्वसक्ताः कौन्तेय ब्राह्मणास्ते युधिष्ठर ॥
अहिंसा निर्ममत्वञ्च सतः कृत्यस्य वर्त्तनम् ।
रागद्वेषनिवृत्तत्वमेतद् ब्राह्मणलक्षणम् ॥
क्षमा दया दमो दानं सत्यं शौचं स्तुतिर्घृणा ।
विद्याविज्ञानमास्तिक्यमेतद् ब्राह्मणलक्षणम् ॥
यदा न कुरुते पापं सर्वभूतेषु दारुणम् ।
कायेन मनसा बाचा ब्रह्मसम्पद्यते तदा ॥

'वनपर्वणि—

> 'शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
> न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥
> यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम् ।
> यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ॥'

भागवते आपस्तम्बधर्मसूत्रे च अधर्मचर्यया पूर्वो वर्णो अघन्यवर्णमापद्यते जातिपरिवृत्तौ……तत्सर्वमपि पूर्वोक्तरीत्या व्याख्येयम् । जातियुक्ते वृत्त-सम्पन्ने मुख्यं ब्राह्मण्यम्, जातिहीने तु गौणमेव ब्राह्मण्यम्, देवदत्तादावपि असिंहेऽपि सिंहशब्दप्रयोगवत् । कृतयुगे सर्वेषां ज्ञानित्वेन क्षीरनीरविवेकिहंस-तुल्यत्वाद्धंसेति नामापि गौणमेव । जातिब्राह्मणादयोऽपि क्षत्रियादिवृत्तैः क्षत्रि-यादिसमा एव, न क्षत्रियादय एव । मोक्षधर्मवचनानि तु वृत्तप्रशंसापराण्येव । अतएव—'ब्राह्मणाज्जातः संस्कृतो ब्राह्मणो भवेत्' । इति देवलः ।

> 'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
> अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः ॥',

इति याज्ञवल्क्यरीत्या ब्राह्मणादिभ्यो ब्राह्मण्यादिषु 'विन्नास्वेष विधिः स्मृतः' विन्नास्वेव जाताः सन्तानवर्धनाः मातापितृसमानजातीया ब्राह्मणत्वा-दिजातियोगिनो जायन्ते इति वर्णविवेकः । तदेव

> सवर्णेभ्यश्च तुल्यासु पत्नीष्वक्षतयोनिषु ।
> आनुलोम्येन सञ्जाता जात्या ज्ञेयास्त एव हि ॥'

मनुनाप्युक्तम् ।

सवर्णेति विशेषणेनासवर्णोत्पन्नानां मूर्धावसिक्तादीनां न वर्णत्वम् । सव-र्णोत्पन्नानामपि कुण्डगोलादीनामपि विन्नास्वितिविशेषणान्न वर्णत्वम् । पौनर्भवक्षे-त्रजातानामपि न वर्णत्वम् । अत्र सजातित्वं मातापितृसजातित्वं विशिष्टं लक्ष-यम् । तत्प्रयोजकं तु सवर्णात् सवर्णायां विन्नायां वेतुरुत्पन्नत्वम् । तदभावे तदपायः ।

अत्र विशेषणतो विशेष्यतश्च समुदायतश्च विन्नायामप्यसवर्णायामुत्पन्नत्वे मूर्धावसिक्ते सवर्णायामप्यविन्नायामुत्पन्ने गोलकेऽसवर्णायामविन्नायामुत्पन्नायां प्रतिलोमसजातौ न मातापितृसजातीयत्वरूपं ब्राह्मण्यादिकम्, तथा सवर्णा-यामविन्नायामप्युत्पन्ने क्षेत्रजादौ विशिष्टं नेति न साजात्यम् । अत एवोक्त-

प्रयोजकवैकल्ये क्वचिदन्यतरजातीयता। यथा क्षेत्रजे क्षेत्रप्राधान्यात् शिष्ट-समाचारात् नियोगस्मरणाच्च स्मरणलक्षणब्राह्मणत्वादिजातिर्गोत्रवत्।

न चैवं मातृजातीयत्वे कथमस्याध्ययनं विरुद्धमिति वक्तव्यम्। तस्योपनय-जातीयत्वरूपत्वादिति वक्ष्यमाणत्वात्। नारदवशिष्ठविश्वामित्रादेर्ब्राह्मणत्वेऽपि सवर्णविन्नानुत्पन्नत्वान्नाव्याप्तिः शङ्कनीया। पूर्वोक्तलक्षणेन मातापितृजातीयत्वा-दिलक्षणस्य अपवादभूतवशिष्ठादिभिन्नब्राह्मणादेरेव लक्ष्यत्वात्। तच्चास्मदा-दीनां ब्राह्मणत्वादौ पर्य्यवस्यति। तत्प्रयोजकं सवर्णोत्पन्नत्वं वशिष्ठादेः मातापितृजातीयत्वं निवर्त्तयत्येव।

नचैतद्विरुद्धं अयोनिजेषु तदनाश्रयणात्। तेषां ब्राह्मणत्वं तु स्मरण-लक्षणम्, ईश्वरानुग्रहप्रयोज्यत्वादाधुनिकविलक्षणमेव, सुवर्णकलशे घटत्वमिव। न चैवं धृतराष्ट्रपाण्डवादीनां क्षत्रियत्वाभावे तद्धर्मानापत्तिः, शंखविष्णु-वचनैस्तेषामपि क्षेत्रजातीयधर्मातिदेशात्। विन्नत्वादेर्विशेषणस्य तत्राश्र-वणात्। व्यभिचारोत्पन्नास्तु—

'शूद्राणाञ्च सधर्माणः सर्वेऽपध्वंसजाः स्मृताः।'

इति वचनेन शूद्रधर्माण एव भवन्ति। क्षत्रियत्वप्रसिद्धिस्तु तद्धर्मानुष्ठातृत्वेनैव। अतएव वर्णत्वं ब्राह्मणत्वादिजातिचतुष्टयान्यतमत्वम्, जातिचतुष्कज्ञापक-जात्यन्तरं वा। 'चातुर्वर्ण्ये भैक्ष्यमाचरे' दित्यादिप्रयोगात्। ब्राह्मणदित्वादिजाति-भेदचतुष्टयभिन्ना क्वचिदीश्वरमुखजन्यतावच्छेदिका सृष्ट्यादौ ब्राह्मणे, कर्म-जन्यतावच्छेदिका विश्वामित्रे, ऊढब्राह्मण्यामूढब्राह्मणजन्यतावच्छेदिका सर्वेषु ब्राह्मणेषु, देवरोत्पन्ने तु शास्त्रबोध्या। योगीश्वरस्तु-देवरोत्पन्नेप्यूढायां देवरोत्पन्न-त्वमेव ब्राह्मण्यम्। तत्रापि देवरः पुत्रकाम्यया घृताभ्यक्त ऋतावियादित्युक्त्वा—

'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः।
तामनेन विधानेन निजो विन्देत देवरः॥'

इति वाक्येन विन्देतेति पूर्ववाक्योक्तघृताक्तत्वविशिष्टवेदनरूपविलक्षणस्य विवाहस्योक्तत्वात्। एवं तत्रापि विलक्षणविवाहत्वेन चोत्पन्नत्वमव्याहृतम्। श्राद्धे कुण्डगोलकनिषेधोऽप्येतद्विषय एव संगच्छते। नात्र कुण्डत्वासंभवः, म्रियेतेत्ययस्य महारोगाद्युपलक्षणत्वात्। कुण्डत्वादिकं तु न जातिः, येन ब्राह्मण-त्वादिना संकरः स्यात्, किन्त्वमृतपतिकस्त्रीजारोत्पन्नादिरूपोपाधिरेव। अता-

दृशे देवरोत्पन्ने तु व्यभिचारजन्यत्वेन न ब्राह्मण्यम्। अतएव वाग्दानोत्तर-विवाहस्य युगान्तरविषयत्वाद्देवरोत्पन्नब्राह्मणोऽपि युगान्तरविषय एव। एवं जात्युत्कर्षवति कर्मोत्कर्षवति च ब्राह्मणे ब्राह्मणत्वभेदो बोध्यः।

'जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्॥'

इति याज्ञवल्क्यवचनात् क्षत्रियादीनामपि तथैव बोध्यम्। नच--

'स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुताम्।
सदृशानेव तानाह मातृदोषविवर्जितान्॥'

इति वचने मातृसदृशत्वेन मूर्धावसिक्तादीनां मातृसजातीयत्वबोधनात् कथं तत्र क्षत्रियत्वादिजात्यभाव इति वाच्यम्, मातृधर्मप्राप्तिबोधन एव तद्वचनस्य तात्पर्य्यात्।

'शूद्रां शयनमारोप्य ब्राह्मणश्च कथञ्चन।
जनयेद् ग्राम्यधर्मेण तस्यां पारशवं सुतम्॥
महाशूद्र इति ख्यातः शूद्रेभ्यः किञ्चिदुत्तमः।'

एतस्यैव संज्ञान्तरं निषादः। अस्य निषादस्थपतिकर्मण्यधिकारः।

'यज्ञियासः पञ्चजनाः मम होत्रं जुषध्वम्।'

इति मन्त्रलिङ्गात्। 'चत्वारो वर्णा पञ्चमो निषाद' इति यास्केन तस्यैव पञ्चमत्वेन गणनात्।

'वैश्यायां क्षत्रियाज्जातो माहिष्यस्त्वनुलोमतः।
वैश्याद्धर्मेण शूद्रायां जातो वै तालिकाभिधः॥
करणोऽसावपि भवेत्सूतो वृषलधर्मतः।
माहिष्येण करण्यां तु रथकारः प्रजायते॥'

रथकारस्यापि 'वर्षासु रथकारो अग्नीनादधीते'ति श्रुत्या अग्न्याधाने तत्साध्यसौधन्वनाख्ययागे अधिकारः। विश्वम्भरवास्तुशास्त्रे प्रतिलोमजानां कर्माणि जीविकाश्च विहितानि। स्त्रीणाच्च मूर्धावसिक्ता, अम्बष्ठा, निषादो, पारशवा, माहिष्या, उग्रा, करणी, सूता, वैदेही, मागधी, क्षत्ता, आयोगवी इत्यादीनि नामानि। माहिष्यस्य वैश्योचिता व्रतबन्धादिका क्रिया भवन्ति। भोगाष्टके निर्माणे चतुःषष्टिकलायाञ्चाधिकारः।

'सुगन्धं वनिता वस्त्रं गीतं ताम्बूलभोजने।
शय्या च कुसुमञ्चैव भोगाष्टकमुदाहृतम् ॥'

चतुःषष्टिकला—

'वेदांशागमशास्त्रशिल्पकवितावक्तृत्वतौर्यत्रिकम् ।
द्यूतास्त्राद्भुतवादशिल्परचनाश्चित्रं पणे वैद्यकम् ॥
नानारत्नपुरादिलेखपुरुषस्त्रीधातुजायालिपिः ।
प्रज्ञानाटककेलिदन्तितुरगप्रेक्षा च सामुद्रिकम् ॥
शय्याभोजनयुद्धमर्दनविभूषाबन्धसेवेङ्गितज्ञानम्
राजतरासभारंथकृतिः सौख्येषु भोगेषु धीः।
त्राणं वारिविषाग्निचारिषु यथा स्वीयाङ्गशीर्षेषु च
दुर्गारामकृतिः पशुद्विपचमत्कारः शिवार्चादयः ॥

शूद्रायां क्षत्रियादुग्रो जायते स शस्त्रविद्यायां कुशलः संग्रामकुशलो भवेत्। वैश्याच्छूद्रायां जातः करणः, राज्ञां ब्राह्मणानाञ्च गुणवर्णनं संगीतं कामशास्त्रं चैतस्य जीविका। ब्राह्मण्यां क्षत्रियाज्जातः सूतः, गजाश्वबन्धनवाहादिकं शस्त्रादिकौशलं तेन संपादनीयम्। धर्मयुद्धवृत्तिं कर्तुं शक्नोति। न वेदाध्ययनाद्यधिकारस्तस्य 'प्रतिलोमो धर्महीन' इति स्मरणात्। ब्राह्मण्यां वैश्याज्जातो वैदेहः। राज्ञां शुद्धान्तःपुररक्षणम् सामान्यवनितापोषणं, चतुःषष्टिकला कामशास्त्रञ्च तस्याजीविका। ब्राह्मण्यां शूद्राज्जातश्चाण्डालः। तस्य स्पर्शे सचैलस्नानम्, वध्यवधादिकं तस्य जीविका। क्षत्रियायां वैश्याज्जन्मागधो जायते। स एव वन्दीजनः।

कथालङ्कारगद्यादिषड्भाषासु विशारदः।
गद्यपद्यादिचित्राणि विरुदानि महीभुजाम् ॥ स एव भाटः ॥

क्षत्रिया शूद्रसंयोगात् क्षत्तारं जनयेत्, आरण्यकपशुपक्ष्यादिबन्धनादिकं तज्जीविका। वैश्यस्त्रीशूद्रसंयोगात् आयोगवो जायते, तस्य कुट्टिमादिनिर्माणं जीविका। एवं व्रात्यानां संततयोऽपि।

'यः संस्कारविहीनश्च व्रात्यतामुपगच्छति।
ब्राह्मण्यां व्रात्यतः पुत्रो भृजुकण्ठः स हि स्मृतः ॥
ब्राह्मण्यां भृजुकण्ठाच्च सुतस्त्वावर्तको भवेत्।

ब्राह्मण्यावर्तकाभ्यां यः पुत्रः स कटधानकः।
ब्राह्मण्यां कटधानेन सुतोऽसौ पौष्पशेखरः।
भृजुकण्ठादयः प्रोक्ताश्चत्वारः पूर्वतः क्रमात्॥
वर्ण्यौ हरिहरौ तैश्च गीतगाथाप्रबोधकैः।
चरितैर्देशभाषायां गानं तज्जीविका स्मृता॥
लोकाचाराः स्मृतास्तेषां शूद्राचारा नहि क्वचित्।

एते नानुलोमजा न वा प्रतिलोमजा। अपितु ब्राह्मणा एव मद्यपतितब्राह्मणादिवत्। एवं—

'शुद्धा या क्षत्रिया सूते व्रात्यक्षत्रियमैथुनात्।
पुत्रः स लल्ल इत्युक्तः शूद्रधर्मविधायकः॥
ब्राह्मणी लल्लसंयोगात् जातो मल्लाभिधः परः॥
राज्ञः कौतुकमुत्पाद्य नियुद्धेन धनार्जनम्।
कुर्य्यात् स्ववृत्तिनिरतः शूद्रधर्मानशेषतः॥
क्षत्रिणीमल्लसंयोगाच्छिलीन्ध्र उपजायते।
शिलीन्ध्रः क्षत्रिणीयोगाज्जनयेद् भटसंज्ञकम्॥'
'शूद्रकन्यासमुत्पन्नो ब्राह्मणेन च संस्कृतः।
अपरो नापितः प्रोक्तः शूद्रधर्माधिको हि सः॥'
माहिषस्त्री ब्राह्मणेन संगता जनयेत्सुतम्।
आभीरपल्यामाभीर इति तं विधिरब्रवीत्॥
दुग्धं दधि घृतं तक्रं विक्रीणीते धनाय च।

माहिष्यायां वैश्यक्षत्रियतो जातत्वेनानुलोमत्वात्तस्यां ब्राह्मणादुत्पन्नत्वेनाभीरोऽप्यनुलोम एव।

पद्मपुराणे रेणुकामाहात्म्ये कायस्थास्त्रिविधा :—(१) चित्रगुप्ताः (२) चान्द्रासेनाः (३) संकरजाताश्च।

(१) सागरमन्थनकाले कालीशरीरोत्पन्नश्चित्रगुप्तः। तस्य मनुकन्यायां धर्मगुप्तस्तस्यापि गन्धर्वकन्यायां रुद्रगुप्तः। तस्य पुत्रचतुष्टयमासीत् माथुर-गौड़-नागर-नैगमा' इति।

(२) जामदग्न्यरामभीत्या चन्द्रस्य राज्ञो भार्य्यायां क्षत्रियत्वत्यागेनोत्पन्नाश्चान्द्रा दक्षिणदेशे प्रभुनाम्ना ख्याताः।

(३) संकरजाताश्चान्ये।

माहिष्यनिषादीसंसर्गेण जातो मालाकारः। अम्बष्ठायां वैदेहाद् वेलो जायते। माहिष्यां मागधेन मर्दनसंज्ञको जायते। गीतवाद्यादिकं तस्य जीविका। अयोगवी सैरन्ध्री कायस्थाद्धीनं सुतं जनयति। अभ्याङ्गानुलेपनादिकं तस्य जीविका। सैरन्ध्री प्रसाधनादिषु चतुरा भवति। वैश्यात्-क्षत्रियायां जाता कन्या वन्दिकी। सा द्विजात् मद्गुसंज्ञं पुत्रं जनयति। तस्मात् कुम्भकारपत्न्यां छालभला जायते। स एव ताम्बूलविक्रयी तामोली।

ब्राह्मण्यां वैश्येन जातो वैदेहकः, तस्मात् शूद्रायां जातः धातुसन्धायकः रसविक्रयार्थमन्नानि निर्माति, भटिहारा भड़भूँजादिनामभिः प्रसिद्धः। वटधानमद्गुकन्यायोगेन छागलिको जायते। छागलादिपालनं जीविका (गडेरिया) इति प्रसिद्धिः।

मद्गुसैरन्ध्रीयोगेन शय्यापालकः। स राजशय्याकर्माणि करोति। कर्मचाण्डालवनिता पुष्पशेखरयोगेत मण्डलकोत्पत्तिः, शुनकानां पालनमाखेटश्च जीवनोपायः। वन्दिनी शूद्रयोगेन स्वन्दोलिको जायते। मञ्जिष्ठरङ्गरञ्जनकर्त्तरीसूचिकादिभिर्जीवनं यापयति। निषादीकन्या शूद्रयोगात्क्रोधकः कुक्कुटको वा जायते। उग्रवैदेहिकायोगात् मड्डूषो जायते। स एव रजकः वस्त्रनिर्णेजनं वृतिः। उग्रपारशवाभ्यामौद्दलिको जायते। तैलविक्रयादिकं वृतिः। रथकारवनिता, आयोगवेन सूत्रधारं जनयति, स एव जायाजीवः शैलूषः। कुक्कुटवनिता कुम्भकारेण संगता कुरुविन्दं जनयति। वेनवनिता वर्त्तकेन शाम्बरकालं जनयति। आभीरकुक्कुटाभ्यां सोशीरो भवति। स वसनानि निर्माति! मार्गानापितयोः सांखिल्यो जायते। केशवपनं जीविका। मैत्रेयशुक्रेण जङ्घिकायां जातो बन्धुलो मैत्रेयो नटः। जङ्घिका भेवड़ा। निषादनार्य्यां मौष्टिकेन पांसुलको जायते। छागलीद्विजसंगात् औरभ्रो जायते। ऊर्णापटनिर्माणवृत्तिः।

'आवर्त्तवनिता सूते क्षेमकादत्रपुत्रकम्।
स महामद्गुकः प्रोक्त उष्ट्रवाहनतत्परः॥

क्षेमको द्वारपालकः। आयोगव्यां पारशवाज्जातः कैवर्त्तकाभिधः।

उपानदङ्गत्राणानि कुर्य्यादश्वस्य पाखरः।

गवानाञ्च महिष्याश्च चर्मणा तस्य जीवनम् ।
आभीरी वेनसंयोगादैष्कलं जनयेत्सुतम् ॥

सुराविक्रयो जीविका ।

कैवर्त्तजाङ्विकाभ्यां मद्गुरुत्पद्यते । निषादवैदेह्ययोरहितुण्डको जायते । विषधरसर्पैः खेलप्रदर्शनं वृत्तिः । दासवधूः कर्मचाण्डालात् सौनिकं सूते, मेषादिमांसविक्रयो वृत्तिः । व्याधाहितुण्डिकाभ्यां जातः अन्धोधीकः, मूषिकादिवधो वृत्तिः ।

भेदस्य राजवनिता तथा वेनेन संगता ।
सा सूते यवनं पुत्रं तुरुष्कः सम्प्रकीर्तितः ॥

निषादस्त्रियां चण्डालाड्डोमो जायते । श्मशानवासी । भेदजायुवतीसंगाच्चाण्डालेन श्वपचो जायते । मत्स्यधर्ता निषादः प्रतिलोमजो निन्द्यः । ब्राह्मणात्परिणीतायां शूद्रकन्यायां जातः पारशवः । निषादस्तु शूद्रादुत्कृष्टः ।

रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्त्तभेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृता ॥

यद्यपि संसारस्योत्पत्तिमत्वान्नित्यात्मादिवदनादित्वं नास्ति तथापि प्रवाहाविच्छेदाभिप्रायेण कार्याणामप्यनादिता प्रोच्यते । तदुक्तं कल्पतरौ—

'तदाकृत्युपरक्तानां व्यक्तीनामेकया विना ।
अनादिकाला वृत्तिर्या सा कार्यानादिता मता ॥'

तत्रावान्तरप्रलये लोकान्तराणां विद्यमानत्वात् जात्यवच्छिन्नव्यक्तीनां मध्ये एकस्या अपि व्यक्तेः संस्थानसंभवात् प्रवाहस्याविच्छेदः । महाप्रलये तु वासनारूपेणावस्थानं भवत्येव ।

"अनादाविह संसारे दुर्वारे मकरध्वजे ।
कुलेऽत्र कामिनीमूले का जातिपरिकल्पना ॥

किञ्च— विप्रादिषु मनुष्येषु विप्रत्वादेर्न लक्षणम् ।
सास्नादिरिव गोत्वादेर्गवादिषु पशुष्विव" ॥

"गवि यथा गोत्वव्यञ्जकं सास्नादिमत्वं तद्वद् मनुष्यत्वे न ब्राह्मणादिष्वविशिष्टेषु व्यञ्जकं किमपि नास्ति" इति तदपि तुच्छम्, प्रत्यक्षजातावेव व्यञ्जकप्रत्यक्षत्वस्यावश्यकत्वात्। अत्र तु ब्राह्मणत्वादिकं शास्त्रगम्यमेव। तदुक्तं—

'भवेदेवं स्थितिर्यत्र लिंगप्रत्यक्षगोचरा।
शब्दैकगम्येष्वर्थेषु प्रमाणं शब्द एव नः॥

शब्दोऽपि श्रुतिस्मृत्यादिः, न लौकिकः। तथा च वेदतन्मूलकः, स्मृत्यादिभिः प्रमाणैर्ब्राह्मणत्वादिजातयः सिद्ध्यन्त्येव। अथवात्र गवादिवदाकृतिग्रहणाया जातेरभावेपि सकृदाख्यातग्राह्या जातिः प्रत्यक्षैव। 'अयं ब्राह्मणः' इत्युक्तौ तत्पुत्रपौत्रभ्रातृपित्रादिषु 'अयं ब्राह्मणः' इति प्रत्यक्षेणैव ब्राह्मणत्वग्रहणात्। एवं क्षत्रियादिष्वपि ज्ञेयम्। गरुडेन मुखदाहकत्वरूपेण प्रत्यक्षेणैव ब्राह्मण्यं गृहीतम्। ब्राह्मतेजःसद्भावादिकं तु शास्त्रैकगम्यं कदाचित्तपआदिभिर्व्यज्यते।

यच्च कुलञ्च कामिनीमूलमित्यादिकन्तदवैदिकमतानुसारेण ज्ञातव्यम्। अथवा 'अवश्यं व्यभिचारात् स्त्रियो रक्ष्याः' इति बोधन एव तद्वाक्यतात्पर्यम् तदभिप्रायेणैव व्यासोऽप्याह—

रहो नास्ति क्षणो नास्ति, नास्ति प्रेरयिता जनः।
तेन नारद नारीणां सतीत्वमुपजायते॥

किञ्च प्रकृतिवैचित्र्यं जगति दृश्यते। पाषाणकणभक्षणपरा अपि कपोताः कामिनो भवन्ति। मांसाशिनोऽपि सिंहा कदाचिदेव कामयितारो भवन्ति। केचित्स्त्रीपुरुषाः निर्निमित्तमपि पदे पदे विक्रियन्ते। केचिच्च निमित्तेषु सत्स्वपि न विक्रियन्ते। विशेषतः शास्त्रोक्तबुद्धिकर्मसंस्कारादिसंस्कृताः पवित्रवातावरणपालिता संयमशीला एव भवन्ति। यासां पतिपुत्रभ्रात्रादयः संयमिनो देशधर्मसंस्कृतिरक्षणपरायणाः समरमूर्धसु वीरगतिं गतास्तासां पद्मिनीप्रभृतीनां परःसहस्राणां लोकोत्तरसुन्दरीणामपि भीषणज्वालाजटिलेषु सामूहिकेषु चिताग्निषु पाटलादिपुष्पेभ्योऽपि सुकोमलानि शरीराणि समर्पयित्रीणां महान् त्यागः (जोहरव्रतं) प्रसिद्ध एव।

'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः' इत्यादिवचनैर्ब्राह्मणत्वादिजातयः प्रसिद्धा एव। शब्दैकगम्येषु ब्राह्मणत्वादिषु न व्यञ्जकापेक्षा।

यथा विप्रत्वे समानेऽपि गोत्रभेदो भवति तथैव मनुष्यत्वे समानेऽपि ब्राह्मणक्षत्रियादिभिदा, जलत्वे समानेऽपि गंगाजलं यमुनाजलमिति भेदः। मूत्रत्वेन समानेऽपि गोमूत्रस्य वैलक्षण्यम्। अस्थित्वेन समानेऽपि शंखशुक्त्यादीनां मनुष्याणाञ्चास्थिषु शुद्ध्यशुद्ध्यादिषु महदन्तरं तथैव प्रकृतेऽपि ज्ञेयम्।

कल्पसूत्रकारैः पुराणैश्च गोत्रप्रवरवर्णनं कृतम्। मत्स्यपुराणे मनुप्रश्नः—

ऋषीणां नामगोत्राणि वंशावतरणं तथा।
प्रवराणां तथा सौम्य साम्यं विस्तरतो वद॥

मत्स्य उवाच—

भृगुश्च लोम्नश्च सुतां दिव्यां मायामविन्दत।
तस्यां सप्त सुता जाता देवा द्वादशजातिका॥
भवनो भावनश्चैव वसुजन्यः सुजनस्तथा।
क्रतुश्च विश्वमूर्धा च रत्नजस्य वसुवश्च हे॥
प्रभवश्चाप्ययश्चैव दक्षो द्वादशकस्तथा।
इत्येते भृगवो नाम देवा द्वादश कीर्तिता॥
पौलस्त्योऽजनयद्विप्रं देवानान्तु कनीयसम्।
च्यवनस्तु महाभाग नन्दध्यानं तथाप्यमी॥

अत्र ब्राह्मणानामेव गोत्रप्रवर्त्तकत्वात् तेषामेव गोत्रप्रवरो यदेव कल्पसूत्रकारादिभिरुपन्यस्तः क्षत्रियवैश्ययोर्यजनादिषु प्रवरानतिदिशतिस्म भगवानाश्वलायनः। पौरोहित्यान् राजविशां प्रवृत्तीन् इति त्रैवर्णिका एव यज्ञसम्बन्धिनः द्विजत्वात्तेषाँ अमुकगोत्रोणाममुकप्रवरा इति गोत्रमुपलक्षणीकृत्य प्रवरा भवन्ति। एवमुपदेशातिदेशाभ्यां शूद्रस्य गोत्रप्रवरसम्बन्धाभावः। अद्विजत्वात्तस्य यज्ञसंयोगाभावश्च। तथापि कमपि मूल-

पुरुषं प्रसिद्धमुपलक्षणीकृत्य तेषामपि तन्नाम्ना गोत्रव्यवहारश्चलति। अथवा परिणीतायां शूद्रायां ये द्विजातिभ्य उत्पन्नास्तेषां यावत्पिण्डनिवृत्तिस्तज्जनकगोत्रेणैव व्यवहारात् तत्परम्परायामपि तद्गोत्रेणैव ते व्यवहरन्ति। अतएव बौधायनः 'चतुर्णामपि वर्णानां पितॄणां पितृगोत्रतः' इति।

इदञ्च ब्राह्मणत्वादिकं प्रत्यक्षमेवेति कुमारिलभट्टपादाः। तद्यथा कथं पुनरयं दृष्टविरोधो यदा समानाकारेषु पिण्डेषु ब्राह्मणादिविभागः शास्त्रेणैव निश्चीयते। नायं शास्त्रविषयः लोकप्रसिद्धत्वाद् वृक्षत्वादिवत्। कथं पुनरिदं लोकस्य प्रसिद्धं, प्रत्यक्षेणेति ब्रूमः। कस्मात्पुनर्मातापितृसम्बन्धानभिज्ञाश्चक्षुःसन्निकृष्टेषु मनुष्येष्वनाख्यातं न प्रतिपद्यन्ते, शक्त्यभावात्।

यथा वृक्षत्वं प्रागभिधानव्युत्पत्तेः नैतत्तुल्यम्। वृक्षत्वं प्रागभिधानव्यापाराज्जात्यन्तरव्यवच्छिन्नं स्वव्यक्तिष्वनुगतं शाखादिमद्रूपेण दृश्यते, न ब्राह्मणत्वम्। अपि च व्युत्पन्नशब्दोऽपि निमित्तान्तरादृते नैव प्रतिपद्यते। नचोपवीताध्ययनादिकं निमित्तम्, वर्णत्रयसाधारणत्वात्। अध्ययनाद्यपि भिन्नाचारक्षत्रियादिप्रतियोगित्वात् सन्निवेष्टव्यम्। सर्वत्र दुष्टशूद्रेषु सम्भाव्यमानत्वादनिश्चितम्। यस्त्वविचारितसिद्धमेव प्रतिपद्यते स शुक्तिकामपि रजतं मन्यमानः क्रीणीयात्। नैष दोषः। क्वचिद्धि काचिज्जातिग्रहण इतिकर्तव्यता भवतीति वर्णितमेव। तेन यथैवालोकेन्द्रियानेकपिण्डानुस्यूतिस्मरणव्यक्तिमहत्त्वसन्निकर्षाकारविशेषादयोऽन्यजातिग्रहणे कारणम्। तथैवात्रोत्पादकजातिस्मरणम् कारणम्। अयञ्चोत्पाद्योत्पाकसम्बन्धो मातुरेव प्रत्यक्षः। अन्येषां त्वनुमानाप्तोपदेशाद्यवगतः कारणं भवति। नचावश्यं प्रत्यक्षावगतमेव प्रत्यक्षनिमित्तं भवति, चक्षुरादेरनवगतस्यापि निमित्तत्वदर्शनात्। आन्तरात्मिकस्मृतिव्यवहितमपि चेन्द्रियसम्बन्धानुसारिप्रत्यक्षमित्येतत् साधितम्।

न च यत्सहसा सर्वस्य प्रत्यक्षं न भवति तन्निपुणतोऽपि पश्यतां न प्रत्यक्षमित्येतदप्युक्तमेव। रत्नयाथात्म्यस्य सहसा सर्वस्यागम्यस्यापि रत्नशास्त्राभ्यासजन्यसंस्कारवता निपुणतः पश्यतां प्रत्यक्षगम्यत्वात्। स्त्र्यपराधात्तु दुर्ज्ञानोऽयं सम्बन्धः इति स्वयमेव वक्ष्यति।

न च तावन्मात्रेण प्रत्यक्षता हीयते। नहि यद्गिरिशृङ्गमारुह्य गृह्यते तदप्रत्यक्षम्। न च स्त्रीणां क्वचिद् व्यभिचारदर्शनात् सर्वत्रैव तत्कल्पना युक्ता, लोकविरुद्धानुमानासंभवात्। विशिष्टेन हि प्रयत्नेन महाकुलीनाः परिरक्षन्त्यात्मानम्। अनेनैव हेतुना राजभिर्ब्राह्मणैश्च स्वपितृपितामहादिपारम्पर्याविस्मरणार्थं समूहलेख्यानि प्रवर्तितानि। तथा प्रतिकुलं गुणदोषस्मरणात् तदनुरूपाः प्रवृत्तिनिवृत्तयो दृश्यन्ते। न च भर्तृव्यतिरेककृतेन वर्णसंकरोऽपराधेन जायते, दृश्यते ह्यपराधिनीनामपि स्वभर्तृनिमित्तः प्रसवः। तदपराधनिमित्तस्तु तासामशुभफलोपयोगो भवेत्, नत्वपत्यानां वर्णसंकरः। नच नियोगतो वर्णान्तरैरेव सह प्रमादः। सवर्णेन चोत्पादितस्य नैव वर्णान्तरत्वप्राप्तिः, संकरजातानामपि पुनरुत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वान्यतरवर्णोत्पत्तिः स्मर्यते। तत्र त्वेतावन्मात्रमागमिकं प्रत्येतव्यम्। नह्ययं पुरुषेयत्तानियमो लौकिकप्रमाणगम्यः। तस्मात्सत्यपि सारूप्ये यथा केनचिन्निमित्तेन स्त्रीपुंस्कोकिलादिज्ञानं तथैव दर्शनस्मरणपारम्पर्यानुगृहीतप्रत्यक्षगम्यानि ब्राह्मणत्वादीनि इति भवत्यज्ञानवचनस्य प्रत्यक्षविरोधः। येषामप्याचारनिमित्ता ब्राह्मणत्वादयस्तेषामपि दृष्टविरोधस्तावदस्त्येव। न त्वाचारनिमित्तवर्णविभागे प्रमाणं किञ्चित्। सिद्धानां हि ब्राह्मणादीनामाचारा विधीयन्ते। तत्रेतरेतराश्रयता भवेत्। ब्राह्मणादीनामाचारास्तद्वशेन ब्राह्मणादयः इति स एव शुभाचारकाले ब्राह्मणः पुनरशुभाचारकाले शूद्र इत्यनवस्थितत्वम्, तथैकेन प्रयत्नेन परपीडानुग्रहादिकुर्वतां युगपद् ब्राह्मणत्वाब्राह्मणत्वविरोधः। एताभिरुपत्तिभिस्त्विदं प्रतिपाद्यते यत् न तप आदीनां समुदायो ब्राह्मण्यम्, न तज्जनितः संस्कारः, न तदभिव्यङ्ग्या जातिः। किं तर्हि? माता-पितृ-जातिज्ञानाभिव्यङ्ग्या प्रत्यक्षसमधिगम्या। तस्मात्पूर्वेणैव न्यायेन वर्णविभागे व्यवस्थिते 'मासेन शूद्रो भवति' इत्येवमादीनि कर्मनिन्दावचनान्यथवा वर्णत्रयकर्महानि प्रतिपादनार्थानीति वक्तव्यम्?

उपदेशातिदेशाभ्यां गोत्रप्रवरसम्बन्धरहिता द्विजाः शूद्रसमानधर्माणः। यद्यप्येते द्विजातिभ्य उत्पन्नास्तथापि उपनयनाभावाच्छूद्रेभ्य उत्कृष्टा अपि तत्समानधर्माणः। 'शूद्राणाञ्च सधर्माणः सर्वेऽपध्वंसजाः स्मृताः।' इति

( मनुः ) । अत्रानुलोम्येन शूद्रायामुत्पन्ना अपध्वंसजा गृह्यन्ते । सवर्णविवाहो न्यायः न्यायादनपेतः । शूद्रापरिणयस्तु याज्ञवल्क्येन निषिद्धः । 'नैतन्ममतं यस्यादात्मास्यां जायते स्वयम् ।'

ये पूर्वोक्तरीत्या व्रात्यादुत्पन्नास्तेऽपि शूद्रसदृशाः । ये द्विजातिस्त्रीषु द्विजातिभ्यो व्यभिचाराज्जायन्ते तेऽपि शूद्रसदृशा कुण्डगोलकाः ।

द्वितीयेन तु पित्रा च सवर्णायां प्रजायते ।
असवर्णोढ इति ज्ञेयः शूद्रधर्मा च जातितः ॥

एतच्च शास्त्राभ्यनुज्ञातक्षेत्रजातिव्यतिरिक्तविषयम् ।

संकरे जातयस्त्वेताः पितृमातृप्रदर्शिताः ।
प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः ॥
सुधन्वाचार्यस्त्वपरो भवेद्रुद्रस्य पूजकः ।
तृतीयश्च विजन्माख्यः सूतिकावेश्मनित्यशः ॥
भूतप्रेतपिशाचांश्च पूजयेद्राजशासनात् ।
साध्यानां पूजके भेदश्चैत्यादीनां चतुर्थकः ॥
पञ्चमः सात्वतो नाम विष्णोरायतनान्यपि ।
पूजयेदाज्ञया राज्ञा यदि स्यात्स जितेन्द्रियः ॥

शूद्राद् ब्राह्मण्यां जातः, ब्राह्मणात्प्रव्रजिताद् ब्राह्मण्यां जातः, सगोत्राविवाहजश्चेति त्रिविधाश्चाण्डाला भवन्ति ।

'चतुर्णामपि वर्णानां जीवतामन्यसंभवः ।
कुण्डस्तु संकरो ज्ञेयः मृतानामथ गोलकः ॥
कुण्डश्च गोलको विप्रः सन्ध्योपासनमात्रवित् ।
स्नानभोजनसन्ध्यासु देवेषु च पठेच्च तत् ॥

अत एव यथार्हमुपनयनमपि विद्यते ।

'वर्णापेतमविज्ञातं नरं कलुषयोनिजम् ।
आर्यरूपमिवानार्यं कर्मभिः स्वैर्विभावयेत् ॥
अनार्यता निष्ठुरता क्रूरता निष्क्रियात्मता ।
पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥' मनुः

'कुले मुख्येऽपि जातस्य यस्य स्याद् योनिसंकरः ।
संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ॥

पुनश्च—जातिसम्बन्धे कन्दलीकारः—

'व्यक्तिग्रहणमिव समयग्रहणमपि तस्य प्रतीतिकारणम्, ब्राह्मणत्वस्यैव । तत्रापि विशुद्धब्राह्मणसन्ततिजायोत्पत्तिमात्रानुबद्धमपि ब्राह्मणत्वमिन्द्रियापातमात्रेण क्षत्रियादिविलक्षणतया न गृह्यते, अत्यन्तं व्यक्तिसादृश्येनानुभूतत्वात् । यदा च मातापित्रोः पूर्वेषाञ्च वृद्धपरम्परायां विशुद्धं ब्राह्मणत्वमवसितं तदा ब्राह्मणोऽयमिति प्रत्येक्षेणैव प्रतीयते । यथा सुविदितरत्नपरीक्षाशास्त्रो रत्नजातिभेदं प्रत्यक्षतः प्रत्येति ।'

मिताक्षरारीत्या—

'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः ॥
विन्नास्वेषविधिः स्मृतः··· ··· ··· ··· ··· ।

इत्युपसंहारात् विन्नासु सवर्णासु इति सम्बध्यते । विन्नाशब्दस्य सम्बन्धिशब्दत्वात् वेत्तृभ्यः सवर्णेभ्य इति लभ्यते । एकः सवर्णशब्दः स्पष्टार्थः । तेन विधिनोढायां सवर्णायां वोढुः सवर्णादुत्पन्नाः समानजतीयाः कानीनसहोढजादीनामसवर्णत्वमेव ।

ननु कुण्डगोलकादीनामब्राह्मणत्वे श्राद्धे प्रतिषेधोऽनुपपन्नः, न्यायविरोधश्च । यथा अश्वाद्वडवायामश्वो जायते, गोर्गवि गौर्जायते तथैव ब्राह्मणाद्ब्राह्मण्यां जातो ब्राह्मण एव स्यात् । तथा च कानीनपौनर्भवादीननुक्रम्य 'सजतीयेष्वयं प्रोक्तस्तनयेषु मया विधिः, इति याज्ञवल्क्यवचनविरोधश्च' इति चेन्न, यतो ब्राह्मणाद् ब्राह्मण्यां जातस्य ब्राह्मणत्वभ्रमेणैव तत्प्राप्तौ निषेधसार्थक्यम् । यथा वात्यन्तमप्राप्तस्य पतितस्य श्राद्धे प्रतिषेधः तथैवात्रापि ज्ञेयम् । न च न्यायविरोधः, यत्र प्रत्यक्षगम्या जातिर्भवति तत्र तथात्वेऽपि ब्राह्मणत्वादिजातिस्तु स्मृतिलक्षणा तेन न विरुध्यते । यथा स्मरणं भवति यथा समानेऽपि ब्राह्मण्ये कुण्डिनो वशिष्ठोऽत्रिर्गौतमः इति स्मरणलक्षणं गोत्रं तथैव मनुष्यत्वे समानेऽपि ब्राह्मण्यादिजातिः स्मरणलक्षणा । मातापित्रोश्च तदेव जातिलक्षणम् । न चानवस्था अनादित्वात्सं-

सारस्य शब्दार्थव्यवहारवत्' । 'सजातीयेष्वयं प्रोक्तः' इति त्वनुवादत्वाद्यथा-सम्भवमेव व्याख्येयम् । क्षेत्रजस्तु मातृसमानजातीयो नियोगस्मरणात् शिष्टसमाचाराच्च । अतएव धृतराष्ट्रपाण्डुविदुराः क्षेत्रजाः सन्तो मातृ-समानजातीयाः ।

'जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा ।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥

अत्रापि शब्दात् षष्ठे इत्यपि बोध्यम् । तेन ब्राह्मणेन शूद्रायामुत्पादिता निषादी सा ब्राह्मणेनोढा दुहितरं काञ्चिज्जनयति । सापि ब्राह्मणेनोढाऽन्यां जनयति अनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति । ब्राह्मणेनोढायां वैश्यायामुत्पादिताऽम्बष्ठा । साप्यनेन प्रकारेण पञ्चमी षष्ठं ब्राह्मणं जनयति । मूर्द्धावसिक्ताप्येवं चतुर्थी पञ्चमं ब्राह्मणं जनयति । एवमुग्रा क्षत्रियेणोढा महिष्या च षष्ठं पञ्चमञ्च क्षत्रियं जनयति । तथा करणी वैश्येनोढा पञ्चमम् वैश्यम् । एवमेव कर्मणां व्यत्यये वृत्त्यर्थानां कर्मणां विपर्यासे यथा ब्राह्मणो मुख्यया वृत्त्याऽजीवन् क्षात्रेण कर्मणा जीवेदित्यनुकल्पः । तेनाप्यजीवन् वैश्यवृत्त्या, तयाऽप्यजीवन् शूद्रवृत्त्या । क्षत्रियोऽपि स्ववृत्त्याऽजीवन् वैश्यवृत्त्या, तयाऽप्यजीवन् शूद्रवृत्त्या । एवं वैश्योऽपि स्ववृत्त्याऽजीवन् शूद्रवृत्त्या जीवेदिति कर्मणां व्यत्ययः ।

यदा आपद्विपोक्षेऽपि तां वृत्तिं न परित्यजति तदा सप्तमे षष्ठे पञ्चमे वा जन्मनि यस्य हीनवर्णस्य कर्मणा जीवति तत्समानजातित्वं भवति । तद्यथा ब्राह्मणः शूद्रावृत्त्या जीवस्तामपरित्यजन् यदि पुत्रमुत्पादयति सोपि तथैव वृत्त्या जीवन् पुत्रान्तरमुत्पादयति इत्येवं परम्परया सप्तमे जन्मनि शूद्रमेव जनयति । वैश्यवृत्त्या जीवन् षष्ठं वैश्यम् । क्षत्रियवृत्त्या जीवन् पञ्चमं क्षत्रियं जनयति । क्षत्रियोऽपि शूद्रवृत्त्या जीवन् षष्ठे शूद्रं वैश्यवृत्त्या-जीवन् पञ्चमे वैश्यम् । वैश्योऽपि शूद्रवृत्त्या जीवन् पञ्चमे जन्मनि शूद्रं जनयति ।

इदमेव 'पूर्ववच्चाधरोत्तरम्' तदर्थस्तु वर्णसंकरे प्रतिलोमजा अनुलोमजाश्चोक्ताः । संकीर्णसंकरजाताश्च रथकारनिदर्शनेन दर्शिताः । अधरे उत्तरे चाधरोत्तरम् यथा मूर्धावसिक्तायां क्षत्रिय-

वैश्यशूद्रैरुत्पादितास्तथाम्बष्ठायां वैश्यशूद्राभ्यां, निषाद्यां शूद्रेणोपादिता अधरा प्रतिलोमजातास्तथा मूर्धावसिक्ताम्बठानिषादीषु ब्राह्मणेनोत्पादिता महिष्योग्रयौ ब्राह्मणेन क्षत्रियेन वैश्येन चोत्पादिताः उत्तरे अनुलोमजा भवन्तीत्येवमन्यप्यूह्यम्। एतेनापि जातित एव चातुवर्ण्यं सिद्धयति।

अन्यैस्तु कुण्डगोलकादीनां ब्राह्मणत्वादिकमेव। याज्ञवल्क्यवाक्ये 'विन्नासु' 'सवर्णास्विति' सम्बन्धेऽपि स्ववेत्तृभ्य इत्यर्थो लब्धुमशक्यः। तथा सत्येकस्य सवर्णशब्दस्य वैयर्थ्यापत्तेः। अतएवेकः सवर्णशब्दः स्पष्टार्थ इति कण्ठत उक्तः। विन्नाशब्दस्य कन्याव्यावृत्तितात्पर्यकतयाऽपक्षयेण वेतृरूपसम्बन्धाक्षेपकत्वाक्षमत्वात्। अतएव भट्टपादः 'सवर्णेनोत्पादितस्य नैव वर्णान्तरत्वापत्तिः' इत्युक्तम्।

भट्टसोमेश्वरेणोक्तं वार्तिकव्याख्यानावसरे "गवादावुत्पादकसजातीयोत्पादकत्वदर्शनेनेहापि तथानुमानान्न वर्णान्तरत्वापत्तिरित्युक्तम्। किञ्च विन्नास्विति वचनस्य कुण्डगोलकयोः ब्राह्मणत्वेऽपि ब्राह्मणादिविहितकर्मानधिकारप्रतिपादनरूपं कन्याव्यावृत्त्यतिरिक्तमपि प्रयोजनमप्युक्तम्। 'अमृते जारजः कुण्डो मृते भर्तरि गोलकः' इति वचनमनुसन्धाय कुण्डगोलकवचनमपि सत्येव ब्राह्मण्ये अवान्तरसंज्ञाप्रतिपादनपरमित्यपि सोमेश्वरेणोक्तम्। अतएव 'सजातीयेष्वयं प्रोक्तः' इति वचनेनापि कुण्डगोलकादीनां मातापितृसजातीयत्वमेवोक्तं संगच्छते। ब्राह्मणेन ब्राह्मण्यामुत्पन्नस्य ब्राह्मणत्वभ्रमोऽपि न युक्तः, तत्प्रत्ययस्य भ्रमत्वे मानाभावात्। अतएव श्राद्धे प्रतिबन्धोऽप्युपपद्यते। पतितब्राह्मणनिषेधोऽपि ब्राह्मणत्वेन तत्प्राप्तावेव सार्थक इति दृष्टान्तानुपपत्तिश्च।

यदुक्तं 'स्मरणलक्षणमेव ब्राह्मण्यादिकं न प्रत्यक्षम्, तदपि न युक्तम् भट्टपादोक्तयुक्त्या तस्य प्रत्यक्षसिद्धत्वात्। अन्यथा चार्वाकबौद्धादीनां तादृशपूर्वपक्षे समाधिदुर्भिक्षप्रसङ्गात्। योगीश्वरोक्तसुवर्णपदद्वयमपि कुण्डगोलकादीनां ब्राह्मणादित्वे मानम्।

ननु मूलब्राह्मणक्षत्रियादिषु प्रकृतवार्तिकोक्तस्य मातापितृजातिस्मरणादेरभिव्यञ्जकस्याभावाद् ब्राह्मणत्वादेर्दुर्ग्रहतया तत्पुत्रादावपि तज्जाति-

स्मरणासंभवेन तस्य दुर्ग्रहत्वमेवेत्यद्य यावदपि ब्राह्मणत्वादेः कस्याञ्चिदपि व्यक्तौ ग्रहणं न स्यात्। मूलभूते व्यञ्जकान्तरेण ब्राह्मणत्वादिग्रहाङ्गीकारे तेनैव सर्वासु व्यक्तिषु तद्ग्रहसंभवान्मातापितृजातिस्मरणाय व्यञ्जकत्वाभ्युपगमो व्यर्थ एवेति चेन्न। आदिगवादावपि तुल्यत्वात्।

कथमाद्यगवे गोत्वग्रहो गोत्वव्यवहारो वा? अथ सर्गान्तराय गोत्वग्रहशालिनो हिरण्यगर्भादेरुपदेशात्तद्ग्रहः, गोत्वस्य तत्सम्बन्धस्य च नित्यतया गवान्तरवदादिगवेऽपि तत्सत्त्व निराबाधमेव। अथवा गोपदशक्तिग्रह एव हिरण्यगर्भादेरुपदेशाद्भवति। गोत्वप्रत्यक्षं तु प्रकृतसामग्रीवशादेव।

नचैतन्मूलब्राह्मणादौ संभवति प्रकृतसामग्रीघटकस्य मातापितृजातिस्मरणस्य तत्र दुर्वचत्वादिति चेन्न, यथाहि मातापितृजातिस्मरणं गोत्वादिप्रत्यक्षकारणातिरिक्तमधुनातनीषु ब्राह्मणादिव्यक्तिषु ब्राह्मणत्वादिप्रत्यक्षं प्रति कारणतया फलबलात् कल्प्यते। यथा हि मातापितृजातिस्मरणम् गोत्वादिप्रत्यक्षं प्रति कारणतया फलबलात् कल्प्यते तथा हिरण्यगर्भादीनां मूलब्राह्मणादिकाले ध्रियमाणानामन्येषाञ्च मूलब्राह्मणादिषु ब्राह्मणत्वादि प्रत्यक्षं प्रति मुखादिजन्यत्वज्ञानमेव कारणतयाभ्युपगम्यते, मूलबलात्। तथा च हारीतस्मृतौ—

'पुरा देवो जगत् सृष्ट्वा परमात्मा जलोपरि।
सुष्वाप भोगपर्य्यङ्के शयने तु श्रिया सह॥
तस्य सुप्तस्य नाभौ तु महत्पद्ममभूत् किल।
पद्ममध्येऽभवद् ब्रह्मा वेदवेदाङ्गभूषणः॥
सचोक्तो देवदेवेन जगत् सृज पुनः पुनः।
सोऽपि सृष्ट्वा जगत्सर्वं सदेवासुरमानुषम्॥
यज्ञसिद्ध्यर्थमनघान् ब्राह्मणान् मुखतोऽसृजत्।
असृजत् क्षत्रियान् बाह्वो वैश्यानप्यूरुदेशतः॥
शूद्रांश्च पादयोः सृष्ट्वा तेषाञ्चैवानुपूर्वशः।
यथा प्रोवाच भगवान् ब्रह्मयोनिः पितामहः॥
तद्वचः सम्प्रवक्ष्यामि शृणुत द्विजसत्तमाः।
धन्यं यशस्यमायुष्यं स्वर्ग्यं मोक्षफलप्रदम्॥

ब्राह्मण्यां ब्राह्मणेनैवमुत्पन्नो ब्राह्मणः स्मृतः ।
तस्य धर्मं प्रवक्ष्यामि तद्योग्यं देशमेव च ॥
कृष्णसारो मृगो यत्र स्वभावेन प्रवर्त्तते ।
तस्मिन्देशे वसेद्धर्मः सिद्धयन्ति द्विजसत्तमाः ॥
'ब्राह्मण्यां ब्राह्मणेनोत्पन्नो ब्राह्मणः स्मृतः' ।

इति हारीतेनोदितं पितामहवाक्यम् । तत्र एवं शब्दोपादानात् यथा मूलब्राह्मणेषु मन्मुखजत्वज्ञानं ब्राह्मणत्वव्यञ्जकम् तथा ब्राह्मण्यां ब्राह्मणेनोत्पन्नेषु शाखाब्राह्मणेषु मातापितृजातिस्मरणम् ब्राह्मणत्वव्यञ्जकमित्यस्मदुक्तं मूलशाखयोर्ब्राह्मणत्वादिव्यञ्जकद्वयं स्पष्टं विज्ञायते ।

उदयानाचार्येस्तु कुसुमाञ्जलौ द्वितीये स्तबके द्वितीयश्लोकस्य तृतीयपादं 'उद्भिद्वृश्चिकवद्वर्णा' इति व्याचक्षाणैः "वृश्चिकतण्डुलीयकादिवद्वर्णादिव्यवस्थाप्युपपद्यते । यथाहि वृश्चिकपूर्वकत्वेऽपि वृश्चिकस्य गोमयादाद्यः, तण्डुलीयकपूर्वकत्वेऽपि तण्डुलीयकस्य तण्डुकणादाद्यः, वह्निपूर्वकत्वेऽपि वह्नेररणेराद्यः, एवं क्षीरदधिघृततैलकदलीकाण्डादयः । तथा मानुषपशुगोब्राह्मणपूर्वकत्वेऽपि तेषां प्राथमिकस्तत्तत्कर्मोपनद्धभूतहेतुका एव । स एव हेतुः सर्वत्रानुगत इति सर्वेषां तत्सान्तानिकानां समानजातीयत्वम् । गतं तर्हि गोपूर्वकोऽयं गोत्वादित्यादिना, न गतम् योनिजेष्वेव व्यवस्थापनात्, मानसास्त्वन्यथापीति । गोमयवृश्चिकादिवदिदानीमपि किं न स्यादिति चेन्न, कालविशेषनियतत्वात् कार्यविशेषाणाम् । नहि वर्षासु गोमयाच्छालूक इति हेमन्तेऽपि किं न स्या' दित्यप्युक्तम् । क्षीरादक्षीराच्च परमाणोः क्षीरम्, नन्विदानीं ब्राह्मणत्वादिव्यवस्थापकं विशुद्धमातापितृजत्वादिकं सर्गादौ तु कर्मेत्यननुगम इत्यत आह—स एव इदानीमप्यदृष्टविशेषोपगृहीतभूतजनितत्वेनैव तद्व्यवस्थेत्यर्थः, इति वर्द्धमानः । अदृष्टविशेषोपगृहीतभूतजनितत्वमेव मूलशाखानुगतमितरव्यावृत्तञ्च ब्राह्मणत्वादिजातिव्यञ्जकम् । व्यञ्जकत्वमात्र द्विविधं मूलब्राह्मणादिषु तात्कालिकानां सूक्ष्मव्यवहितविप्रकृष्टदर्शिनामतीन्द्रियापूर्वविशेषघटिततादृशधर्मविषयकं यदलौकिकं प्रत्यक्षं तद्द्वारकमेकं, शाखाब्राह्मणादिषु तु मातापितृजातिस्मरणद्वारकं द्वितीयम् । यथा वा विशिष्टशक्तिमूलकेषु गोधूमादिषु विशिष्ट-

शक्तयोऽनुगतास्तथैव ब्रह्मणो मुखबाह्वादिविशिष्टशक्तयः मूलतूलब्राह्मणेषु अनुवृत्ताः। तद्व्यञ्जकं तु मूले मुखजत्वज्ञानमितरत्र तत्संततिजत्वज्ञानम्। परममूलं ब्राह्मणस्तु भगवान् ब्रह्मैव। तथा च श्रुतिः 'सैषा क्षत्रस्य योनिर्यद् ब्रह्म। (बृ० उ० अ० ३।ब्रा।४।११) मनुश्च—

क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान् प्रति सर्वशः।
ब्रह्मैव संनियन्तृ स्यात् क्षत्रं हि ब्रह्मसंभवम्॥ (मनु ९।३२०)

हिरण्यगर्भस्य ब्राह्मणत्वं स्पष्टं मन्वर्थमुक्तावल्याम्। 'क्षत्रियो ब्राह्मणात्प्रसूतः ब्रह्मणो बाहुप्रसूतत्वात्।

कार्त्तवीर्य्यार्जुनं प्रति देवदूतः—

अथवा ब्राह्मणश्रेष्ठमनुभूतानुपालकम्।
कर्त्तारं जीवलोकस्य कस्माज्जानन् विमुह्यसे॥
तथा प्रजापतिर्ब्रह्मा अव्यक्तः प्रभुरव्ययः।
येनेदं निखिलं विश्वं जनितं स्थावरं चरम्॥

हिरण्यगर्भे अदृष्टविशेषोपगृहीतत्वमेव ब्राह्मणत्वस्य व्यञ्जकमुपेयं गत्यन्तराभावात्। तदेव च मुखजेषु तज्जेष्वपि व्यञ्जकं स्वीकर्तुं युक्तम्।

यदुक्तम् 'ब्राह्मणकर्मणां ब्राह्मणेतरैः क्षत्रियकर्मणां तदितरैश्चानुष्ठाने तेषामपि ब्राह्मणत्वादिकं युक्तमेवेति' तन्न मुखजत्वादीनामेव तत्प्रयोजकत्वात्। भगवतो मुखजत्वेन ब्राह्मणस्य, बाहुजत्वेन क्षत्रियस्योरुजत्वेन वैश्यस्य, पादजत्वेन शूद्रस्य, श्रुतिस्मृतिपुराणेषु प्रतिपादनात्। अन्येन कर्त्तव्यस्य शास्त्रीयस्य कर्मणोऽन्येन कर्त्तुमशक्यत्वाच्च। विध्यभावात्तदप्राप्तावन्यस्य ब्राह्मणत्वादिकं दुर्वचमेव।

सजातीयासूढासु सजातीयाज्जातानामेव ब्राह्मणादित्वम्। ब्राह्मणेनोढायां क्षत्रियायां वैश्यायां शूद्रायाञ्च पितृतो मातृत उत्कृष्टा इति पितृसजातीया मूर्धावसिक्तादयो जायन्ते। तत्र सजातीयोढमातापितृजन्यत्वसजातीयोढमातापित्रिच्छाविशेषविषयत्वस्याप्युपलक्षणम्। तेन कुन्त्युक्तार्थविषयकपाण्डुसंमत्या मन्त्रबलेन पाण्डोः कुन्तीमाद्र्योरुत्पन्नानां धर्मराजभीमार्जुननकुलसहदेवानां यमानिलेन्द्राश्विजातानामपि क्षत्रियत्वं,

तथा द्रुपदेन कृते यज्ञे देवतानुग्रहेणाग्नावुत्पादितयोः द्रौपदीधृष्टद्युम्नयोरग्नि-जन्यत्वेऽपि क्षत्रियत्वमेव, सपत्नीकस्य द्रुपदस्य तदर्थं प्रवृत्तेः। तथा दत्त-कस्यापि स्वतःसजातीयोढमातापित्र्युत्पादितत्वात् तन्मातापितृसजाती-यत्वमेव प्रतिगृहीतसजातीयत्वमातापित्रिच्छाविशेषविषयत्वाच्च।

न च चन्द्राद् बृहस्पतेः पत्न्यामुत्पन्नस्य बुधस्य कथं क्षत्रियत्वम्? शुक्रा-चार्य्यपुत्र्यां देवयान्यां क्षत्रियाद् ययातेरुत्पन्नयोर्यदुतुर्वस्वोः कथं क्षत्रियत्व-मिति वाच्यम्? हिरण्यगर्भस्य शुक्रस्य च संकल्पविशेषेण तदुपपत्तेः।

न च ब्रह्मक्षत्रविशो द्विजातयस्तेषां मौञ्जीबन्धनेन द्वितीयं जन्म भवति, शूद्रस्य तदभावादेकजातित्वम्—

ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः।
चतुर्थ एक जातिस्तु शूद्रो नास्ति तु पञ्चमः॥

संकीर्णजातीनां त्वश्वतरवन्मातापितृजातिव्यतिरिक्तजात्यन्तरत्वम् पञ्चमवर्णस्तु नास्त्येव।

उपनयनात्पूर्वं ब्राह्मणे शूद्रव्यपदेशस्तु तत्तुल्यार्थक एव। अतएव मनुना द्वितीयाध्याये उक्तम्।

'नह्यस्मिन् विद्यते कर्म किञ्चिदामौञ्जिबन्धनात्।
नाभिव्याहारयेद् ब्रह्मस्वधा विनयनादृते'॥ ११७

शूद्रेण हि समस्तावद्यावद्वेदे न जायते।
कृतोपनयनस्यास्य व्रतादेशनमिष्यते॥
ब्रह्मणो ग्रहणञ्चैव क्रमेण विधिपूर्वकम्।
यद्यस्य विहितं कर्म यत्सूत्रं या च मेखला॥
यो दण्डो यच्च वसनं तत्तत्तस्य व्रतेष्वपि। १७४

जन्मनैवात्र वस्तुभूतं ब्राह्मण्यम्, तदपि जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैः ऋणवान् जायते। ब्रह्मचर्य्येणर्षिभ्यः, यज्ञेन देवेभ्यः, स्वधया पितृभ्यः इति—( तै० सं ६-३-१ )

'ब्राह्मणो जायमानो वै पृथिव्यामधिजायते।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये॥'

इति मनोश्चोत्पत्तिकलावच्छिन्नब्राह्मणत्वादिकमाश्रित्य तदुद्देश्येन ऋणत्रयापाकरणोक्तिः संगच्छते। अन्यथा जायमानस्य ब्राह्मणत्वायोगात्तदसंगतिरेव स्यात्।

सर्वस्वं ब्राह्मणस्येदं यत्किञ्चिज्जगतीगतम्।
श्रेष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोर्हति॥
स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च।
आनृशंस्याद् ब्राह्मणस्य भुञ्जते हीतरे जनाः॥

—०—

## गोत्रप्रवरविमर्शः

'सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते'—इत्याश्वलायनसूत्रे।

प्रवरलक्षणन्तु गोत्रवंशप्रवर्तकर्षीणां व्यावर्त्तका ऋषिविशेषाः प्रवरा इत्येव संक्षेपतो ज्ञेयम्। समानगोत्रत्वं समानप्रवरत्वं पृथक् पृथक् विवाहप्रतिबन्धकम्।

ब्रह्मवर्षमानेन शतवर्षात्मकं द्विपरार्धमायुः, तदेव महाकल्पः, तदीयमेकदिनं कल्पः। तत्र चतुर्दश मनवो भवन्ति। श्वेतवाराहेऽस्मिन्कल्पे स्वायम्भुवस्वारोचिषोत्तमतामसरैवतचाक्षुषाः षण्मनवो व्यतीताः। सप्तमो वैवस्वतो मनुरिदानीं विद्यते। इन्द्रा अपि कल्पे चतुर्दशैव भवन्ति। तेऽपि षडतीताः पुरन्दराभिधानोऽधुना विद्यते। मन्वन्तरे परिवर्त्तमाने सर्वे पितर ऋषयश्च परिवर्त्तन्ते। अस्मिन्मन्वन्तरे सप्तर्षिपदाधिष्ठिताः सप्त ऋषयोऽगस्तिश्चेत्यष्टौ गोत्रकृतः समाम्नाताः।

वशिष्ठः कश्यपोऽथात्रिर्जमदग्निश्च गौतमः।
विश्वामित्रभरद्वाजौ सप्त सप्तर्षयोऽत्र तु॥
(विष्णुपुराणे ३ अंशे) (भा० ८।१३)

जमदग्निर्भरद्वाजो विश्वामित्रात्रिगौतमाः।
वशिष्ठः कश्यपोऽगस्त्यो मुनयो गोत्रकारिणः॥
(स्मृत्यर्थसारे।)

एतेषामगस्त्याष्टमानां यस्यापत्यमृषित्वं मन्त्रद्रष्टृत्वं भजते तदपत्यं तस्य ऋषेर्गोत्रमिति बोधायनादिभिरभिहितम्।

अपत्यं पौत्रप्रभृतिगोत्रमिति पाणिनीयसूत्रे त्वन्यद् गोत्रं तद्धितप्रत्ययोपयोगी। अनन्तरापत्ये गोत्रापत्ये युवापत्ये च प्रत्ययविधानात्। गोत्रभिदमित्यत्र तु गोत्रशब्देन पर्वता उच्यन्ते। पर्वतानां पक्षच्छेदकत्वेनेन्द्रस्य गोत्रभेत्तृत्वप्रसिद्धेः। प्रवरसम्बन्धे—

ऋषयो दश तेषां तु संततावृषितां गताः।
यज्ञे प्रव्रियमाणास्ते प्रवरा इति कीर्तिताः॥

भृग्वङ्गिरसौ यद्यपि कर्त्तारौ नाभिमतौ, तथापि गोत्रकर्तृवदेतावपि मन्तव्यौ। तेनैव तेषां दश मुनीनां सन्ततिपरम्परायां ये समुत्पन्ना मन्त्रद्रष्टारस्ते च यज्ञे प्रव्रियमाणाः प्रवरा भवन्तीति बोधायनादयः।

गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च।
ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात्॥

इति रीत्यागोत्रभूतस्य ऋषेः पितापितामहप्रपितामहादयः मन्त्रद्रष्टारः प्रवरा भवन्तीति प्रवरदर्पणकारः।

यद्यपि गोत्राणि बहूनि भवन्ति तथापि ऊनपञ्चाशदेव बोधायनमते प्रवरा भवन्ति। तथाहि शुद्धभृगवश्चत्वारः, जमदग्नयस्त्रयः, एते सप्तभृगुगणाः। गौतमाः सप्त, भरद्वाजास्त्रयः, शुद्धाङ्गिरसः सप्त, एते सप्तदश अङ्गिरोगणा भवन्ति। अत्रयश्चत्वारः, विश्वामित्रा दश, कश्यपास्त्रयः, वशिष्ठाश्चत्वारः, अगस्तयश्चत्वारः, इत्यूनपञ्चाशत् प्रवरा भवन्ति।

एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते न चतुरो न पञ्चापि वृणीते। इति श्रुतिरीत्या प्रवरे एको द्वौ वा त्रयो वा पञ्च वा ऋषयो भवन्ति, न चत्वारो न वा षडाद्याः। भृगुगणे यास्कस्य विदस्य आर्तिषेणस्येति

त्रयाणां पञ्चार्षेयप्रवरः। अङ्गिरोगणे कौमण्डस्य दीर्घतमसः काक्षायणस्य गर्गस्येति चतुर्णां पञ्चार्षेयप्रवरः। गर्गस्य त्र्यार्षेयप्रवरोऽपि भवति। विश्वामित्रगणे पूरणाख्यस्य द्व्यार्षेयप्रवरः। शुनकानां वशिष्ठानाञ्च एकार्षेयप्रवरः। इतरेषां त्र्यार्षेयप्रवरः। भृग्वङ्गिरोगणौ विहायेतरप्रवरेषु एकऋषिर्यावद्वर्तते तावत्समानगोत्रत्वम्। जमदग्निरत्रिर्विश्वामित्रो भरद्वाजो गौतमः कश्यपोऽगस्त्यश्चेत्यष्टौ गोत्रकर्त्तारः। भृगुरंगिराश्च गोत्रकर्तृवदभिमतौ। तेन दशैते गोत्रहेतवः। भृग्वगिरोगणयोस्तु एक ऋष्यनुवर्त्तनेऽपि न समानगोत्रत्वम्। यथा जमदग्निप्रवरे भृगुरनुवर्तते तथापि जमदग्नेः शुद्धभृगूणां न समानप्रवरत्वम्, भृगोर्गोत्रकर्तृत्वाभावात्। एवं गौतमप्रवरेषु शुद्धाङ्गिरोगणेषु चाङ्गिरोऽनुवर्तनेऽपि गौतमानां भरद्वाजानाञ्च शुद्धाङ्गिरसाञ्च मिथोविवाहोऽस्त, अङ्गिरसो गोत्रकर्तृत्वाभावात्।

तदुक्तं बोधायनेन—

एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते।
तावत्समानगोत्रत्वम् ऋते भृग्वङ्गिरो गणात्॥

किञ्च—

पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः।
भृग्वङ्गिरोगणेष्वेवं शेषे त्वेकोऽपि वारयेत्॥

इति माधवीयोद्धतस्मृत्युक्तरीत्या भृग्वङ्गिरोगणेषु वधूवरयोः त्र्यार्षेयप्रवरयोर्मध्ये यदि द्वौ ऋषी समानौ स्यातां तदा न विवाहः। पञ्चार्षेयप्रवरयोस्त्र्यार्षसन्निपाते न विवाहः। अर्धाधिकऋषिसाम्ये न विवाहः। तेन त्र्यार्षेयप्रवरसन्निपाते ऋषिद्वयसाम्ये न विवाहः। पञ्चार्षेयसन्निपाते प्रवरस्य ऋषित्रयसाम्येऽपि नोद्वाहः। शेषेषु त्वेकर्षिसाम्येऽपि न विवाहः।

'यास्का मित्रयवो वैन्याः शुनकाः प्रवरैक्यतः।
स्वं स्वं हित्वा गणं सर्वे विवहेयुः परस्परम्॥

समानगोत्रेषु समानप्रवरेषु च समान एव रक्तप्रवाहो विज्ञायते।

'धर्माधिकारः सर्वेषां गोत्रप्रवरहेतुकः।
विवाहश्चेति मन्वानः प्रवरानाह सूत्रकृत्॥

गोत्रप्रवरविज्ञानं स्वधर्मफललिप्सुभिः ।
सम्पाद्यमाहुर्धर्मज्ञाः प्रत्यवायजिघांसया ॥' आपस्तंबः
'आदौ गोत्रविशुद्धिः स्याततः सप्तमपञ्चमम् ।
राशिकूटं ततश्चैव त्रेधा सम्बन्धलक्षणम् ॥' शातातपः ।

ब्रह्मचारी वेदानधीत्य दक्षिणाम् उपहृत्य गुरोरनुज्ञातः दारान् कुर्वीत असगोत्रान् मातुरसपिण्डान् नग्निका तु श्रेष्ठा ।

नैकगोत्रां वरयेत नैकार्षेयाञ्च भार्गव ।
पितृतः सप्तमादूर्ध्वं मातृतः पञ्चमात्तथा ॥

विष्णुधर्मोत्तरे सगोत्राविवाहे दोषमाह—

'परिणीय सगोत्रां तु समानप्रवरां तथा ।
कृत्वा तस्याः समुत्सर्गं पालयेज्जननीमिव ॥ शातातपः ।

आश्वलायनः आपस्तम्बः बोधायनः आश्वलायनः लौगाक्षिः सत्याषाढ इति मत्स्योक्ता प्रवरदर्पणकारप्रदर्शिता गोत्रप्रवरर्षयस्तत एव ज्ञातव्याः ।

'समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च ।
तस्यामुत्पाद्य चाण्डालं ब्राह्मण्यादेव हीयते ॥
कामाद्विवाहमात्रे वा प्रजानुत्पादनेऽपि वा ।
तस्य चाण्डालवासः स्याद् व्रतं प्राणान्तिकं चरेत् ॥' शातातपः ।
'सगोत्रायां प्रजां जातां चाण्डालेषु विनिक्षिपेत् ।
गुरुतल्पव्रतं कृत्वा तां रक्षेज्जननीमिव ॥' मदनपारिजाते ।
'आरूढपतितापत्यं ब्राह्मण्यां यस्तु शूद्रजः ।
सगोत्रोढासुतश्चैव चाण्डालास्त्रय ईरिताः ॥'

## पत्नीचयनम्

यदुक्तम् "पत्नीचयने जातिबन्धनमस्वाभाविकम् । प्राचीनकाले विवाहे स्वातन्त्र्यमासीत् । तत एवार्जुनेन नागकन्या उलूपी वृता । चन्द्रगुप्तेन सैलूकसस्य हैलनसंज्ञिका कन्योद्वाहिता । सौविध्यमपेक्ष्य परिचितेषु तत्रापि स्वजातीयेषु सा व्यवस्था स्थिरा जाता । वर्णाश्रमव्यवस्थया पतनं जातम् ।

गर्दभाश्ववत् ब्राह्मणशूद्रौ विभिन्नजातीयत्वेन स्वीकृतौ। परन्तु शोधकैस्तु अश्वगर्दभावपि समानजातीयावेव साधितौ। ब्राह्मणशूद्रयोरपि तादृशी गतिः।

इदानीं परस्परविवाहसम्बन्धेनैवोन्नतिर्भविष्यति। जन्तुपोषकानामनुभवेन वर्णसाङ्कर्य्योत्पन्नसन्ततयः पित्र्यपेक्षयाधिकं गुणशालिनो भवन्ति।" इति तत्तुच्छम्, शास्त्रानवबोधात्। वेदादिशास्त्रस्यानादित्वेनानादिकालादेव वर्णव्यवस्थाया विद्यमानत्वात्सर्वदैव विवाहादिव्यवस्था शास्त्रानुसारिणी समासीत्। अपवादभूतस्तु क्वचित्तदतिक्रमः। नागानां दिव्यत्वेन नागकन्योद्वाहो नोक्तव्यवस्था विरोधी। न केवलमश्वगर्दभादिषु किन्तु वाज्यश्वादिवदपि सूक्ष्मभेदवत्त्वेन जातिभेदः। हयो भूत्वा देवानवहत्। बाजी गन्धर्वान्। अश्वो मनुष्यान् (बृ० आ० १।१।२) इति श्रुतेः। गुणिभिस्तज्ज्ञैः जातिभेदनिबन्धनगुणभेदानुगुण्येन मूलभेदस्य चाभ्युपगमात्। आधुनिकानामश्वगर्दभयोरैक्यज्ञानं भ्रम एव। साङ्कर्य्योत्पन्नसन्ततीनां केषुचिदंशेषु गुणवत्त्वेऽपि धर्मांशे दोषावहत्वमेव। साङ्कर्य्योत्पन्नाम्राणां रस गन्धाद्यंशे वैशिष्ट्ये सत्यप्यायुर्वेदादिदृष्ट्या दोषावहत्ववत्। पारम्पर्यं रक्षणन्तु तैर्न भवत्येव स्वल्पकालेनैव वंशक्षयदर्शनात्।

येषां पाश्चात्त्यानामाङ्गलजर्मनानां विवाहेन योग्यसन्तानोत्पत्तिर्दृश्यते, तेषु तु शास्त्रीयजातिभेदो नास्त्येव। प्रायेण भारतीयवर्णाश्रमानुयायिहिन्दूव्यतिरिक्तेषु सर्वत्रैव भोजनविवाहादि नियमाभावात्साङ्कर्यमकिञ्चित्करमेव। तेनैव ह्यूमन स्पिशीज प्रभृतीनामनुभवोऽपि नात्र प्रमाणम्।

अतएव यदुक्तं—"महद्भी रोगैर्हत्याभिरन्याभिश्च विपत्तिभिरन्तराऽन्तर्जातीयविवाहेषु निःसन्तानता न भवत्येवेति" तदपि तुच्छम्, कृत्रिमाश्वतरादिदृष्टान्तेन विरोधात्।

किञ्च गेट्समहाशयरीत्या स्पेनिश-चीनी-फ्रांसीसी-रेड इण्डियन-नाडिक-गङ्गोल-प्रभृतीनां परस्परविवाहस्यानौचित्यमेव। यक-डूगल प्रभृतिविदुषां मतेन योरोपियनरक्तैः नीग्रोजातीयरक्तसम्बन्धेन निकृष्टसन्तानोत्पत्तिर्जायते। डीन इङ्ग कैसन्फ प्रभृतीनामपीदमेव मतम्।

अतएव यदुक्तं 'तुर्क-अफगान-मुगलप्रभृतीनां रक्तमिश्रणेन क्षत्रियाणामुन्नतिर्जायते तदपि निष्प्रमाणकम्। क्षत्रियाणां साङ्कर्य्यसम्बन्धिनो गाथा कपोलकल्पितैव। वर्णाश्रमनियमबद्धानां तेषां तद्विरुद्धप्रवृत्त्यसंभवात्। धर्मध्वंसकमनोवृत्तिभिर्बहुभिर्विरुद्धमिथ्येतिहासकल्पना कृता।

यत्तु भगवतो व्यासस्य संकरत्वोक्तिः, सा तु शास्त्राज्ञानमूलिका। उपस्थिरवसुवीर्य्येण मत्स्यामुत्पन्नाया निषादपालितायाः सत्यवत्या दिव्यत्वेन तत्क्षेत्रे दिव्यशक्तिसम्पन्नात् पराशरान्महर्षेः सकाशाद् व्यासस्योत्पत्तौ साङ्कर्य्याप्रसक्तेः।

किञ्च न केवलं गुणविशेषविकासमूलको जातिभेदः ब्राह्मणेष्विव क्षत्रियादिष्वपि गुणविशेषविकासदर्शनात्। विदुरः शूद्रोऽपि ज्ञानविज्ञानसम्पन्नो धार्मिक आसीत्।

धर्मव्याधोऽन्त्यजोऽपि स्पृहणीयगुणसम्पन्न आसीत्। स्वस्वधर्मानुसारेण सर्वेऽपि वर्णा उन्नतिपदं लब्धुं शक्नुवन्ति। परधर्मनिष्ठाश्च सर्वे पतनं प्राप्नुवन्ति।

यदुक्तम्—"स्टडी आफ बृटिश जीनियस' रीत्या आयरिश-इङ्गलिश-वेल्जइंगलिम इति रक्तमिश्रणेन कीर्तिमन्तो योग्या जना उत्पद्यन्ते, तथा स्काचइङ्गलिशमिश्रणेन योग्या न भवन्ति, समानत्वादेव" तदपि न भारतीयशास्त्रदृष्ट्यापि यथा सगोत्राणां समानत्वादेव विवाहो निषिध्यते, तथैवातिविषमाणामसवर्णानाञ्च विवाहो निषिध्यते। सवर्णानामसगोत्राणामसमानप्रवराणामसपिण्डानाञ्च विवाह उक्तः। अतएव पाश्चात्त्यानां समेषामपि विचारोऽपूर्णः। ततएव कुलस्य पावित्र्य-रक्षणार्थं केचित् समानरक्तानां विवाहं योग्यं मन्यन्ते। केचित्तु विशिष्ट-गुणसम्पत्तये विषमाणामेव विवाहं योग्यं मन्यन्ते इति परस्परं तेषामपि वैमत्यमेव।

वृत्तिसाङ्कर्य्यमपि निषिद्धमेव। (मनु ३-६४-६५)

सरफ्रांसिसगाल्टनमहाशयो वंशपरम्पराया महत्त्वमभ्युपैति। मेकडूगल-रीत्या निम्नजातीयाः सोत्साहा भवन्ति, वैशिष्ट्यञ्च दर्शयन्ति। परन्तु स्वल्पैरेव दिनैस्तेषां वंशपारम्पर्यं नश्यति। वस्तुतस्तु यथा पक्षिणां शावकेषूड्डयनशक्तिः सहजा भवति, मत्स्येषु प्लवनशक्तिः स्वाभाविकी तथैव

नाविकबालकेषु नौचालनशक्तिः, वर्धकिपुत्रेषु तक्षणादिशक्तिः, शिल्पिषु शिल्पकलासंस्कारो योधृसन्ततिषु युद्धकर्म, वेदवित्परम्परायां वेदविद्यादिसंस्कारः स्वाभाविकः। तस्माद्यत्रानाद्यविच्छिन्नं वंशपारम्पर्यं नापि भवेत्तत्रापि गुणकर्मानुरोधेन वर्णव्यवस्थां व्यवस्थाप्य तस्याः स्थैर्याय जन्मपारम्पर्येणैव तद्वृत्तिषु नियमनमावश्यकं भवति ।

कश्चिदाह–द्वौ पुरुषौ धनार्जनार्थं यात्रां कृतवन्तौ । क्वचित् धान्यविशेषं सतृणं गृहीतवन्तौ। तत्रैकः किञ्चिद्दूरं गत्वा धान्यमेव दृष्ट्वा सतृणं धान्यं त्यक्त्वा तदेव गृहीतवान् । अन्यस्मै च तदेव कर्तुं परामर्शं दत्तवान् । स चोक्तवान् यदेतावत्कालं समूढं तत्कथं त्याज्यम् । अपरस्तु सुवर्णरत्नादिकमुपलभ्य तदपि त्यक्तवान । गृहप्राप्तौ सुवर्णरत्नवतो गृहसदस्याः सन्तुष्टाः अन्यस्य सतृणधान्यवाहकस्य गृहसदस्याः खिन्ना जाताः। तथैव सनातनधर्मानुयायिनः प्राचीनामेव मान्यतां वहमानाः सीदन्ति । प्रगतिशक्तिमन्तस्तु यथादेशं यथाकालं व्यवहरमाणाः प्रसीदन्ति' इति, तदपि तुच्छम्, भावानवबोधात् । तथाहि--प्रत्यक्षानुमानानधिगतस्य वेदादिशास्त्रैकसमधिगम्यस्यालौकिकाभ्युदयसाध्यसाधनस्यैव धर्मत्वमभ्युपगम्यते । प्रत्यक्षानुमानोपलब्धवस्तुषु तथाविधेषु च गुणदोषेषु सौष्ठवासौष्ठवपरिज्ञाने श्रेष्ठपरिग्रहस्तदितरत्यागः स्वभावसिद्धः । शास्त्रैकसमधिगम्यस्य वस्तुतस्तु श्रैष्ठ्यमश्रैष्ठ्यञ्च शास्त्रैकसमधिगम्यमेव । शास्त्रगम्योत्कर्षापकर्षज्ञानेऽपि यथाधिकारमुत्कर्षग्रहणेऽपि स्वाभाविकी प्रवृत्तिः। शास्त्रानुसारिणीनां देहेन्द्रियमनोबुद्ध्यहङ्कारादिसमस्तचेष्टानां धर्मत्वं शास्त्रविरुद्धतच्चेष्टानान्त्वमधर्मत्वमिति स्थितिः। शास्त्रमृग्वेदादिसमस्तमपौरुषेयमनादि च। सर्वाणि चान्यानि कुरान-बायबिलादीनि पुस्तकानि पौरुषेयाणि सादीनि च प्रसिद्धान्येव । तेन वेदाद्यनुगुणव्यापाराणां धर्मत्वम् तद्भिन्नमधर्मत्वमिति सुस्थितम् । श्रुत्यविरुद्धान्यन्यानि चार्षाणि पुस्तकानि प्रमाणान्येव । तेनेतिहासपुराणादीनामपि प्रामाण्यमेव । तेनैव केषाञ्चित्पदार्थानां खाद्यत्वमखाद्यत्वञ्चान्येषां युक्तमेव । लौहघृततैलरसविक्रयादिकं निषिद्धत्वादेव ब्राह्मणानामधर्मः । चिकित्सा-कुसीदवृत्तीनाञ्च भोजनं सहभोजनं स्त्रीभिः सह भोजनञ्च लशुनगृञ्जनादिभक्षणं च

निषिद्धत्वादेव त्याज्यम् । मनुस्मृतौ च वृथामांसभक्षणस्य निषेधेऽपि देवपित्रार्थमांसभक्षणम् अनुमतम् । प्रतिषिद्धनिन्दनार्थं मांसभक्षणे प्रशंसनार्थं, तदुपेक्षणे च दोषवर्णनम् । श्राद्धादिसम्बन्धेन मांसादिना पित्रादितृप्तिरपि शास्त्रैकगम्या । स्मृतिविशेषाच्च कलौ तन्निषेधोऽपि । देवपित्रतिथिव्यतिरेकेण सर्वदैव सर्वमांसभक्षणनिषेध एव । परस्परविरोध-भानं शास्त्रतात्पर्य्यज्ञानशून्यानामनाघ्रातमीमांसासिद्धान्तानां भवत्येव । तदुक्तमेव–'बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ।'

ये तु वेदकुरानादिविरुद्धधर्मग्रन्थानां विरोधप्रदर्शनेन सुन्दोपसुन्दन्यायेन सर्वबाधं वर्णयन्ति ते श्लाघनीयप्रज्ञाः स्वात्मानमेव बाधन्ते । सिद्धान्ते तु देशकालसम्प्रदायभेदेन सर्वाऽपि व्यवस्थाऽबाधनीया संभवत्येव । यथाप्रवृत्तिमार्गीयाणां स्त्री–स्वर्ण–ताम्बूलादिग्रहणे दोषाभावेऽपि यतीनां तन्निषेधः, कुरानानुयायिनां यद्विधानं गुणाय तदेवान्येषां दोषयाऽपि सम्भवत्येव । दक्षिणोत्तराभिमुखपुरीषोत्सर्गादि कालभेदेन सुसमञ्ज-समेव । 'उदिते जुहोति' 'अनुदिते जुहोति' 'समयाध्युषिते जुहोति' इति उदितहोमादि विधानेऽपि स्वसम्प्रदायप्राप्तपक्षे निष्ठादार्ढ्यायेत-रेतरपक्षनिन्दनमपि नासमञ्जसम् । 'नहि निन्दा निन्द्यं निन्दितुं प्रवर्त्तते किन्तु विधेयं स्तोतुम्' इति मीमांसान्यायप्रसिद्धेः ।

यदुक्तम् शाश्वतनियमस्यैव सनातनधर्मपदवाच्यता तदप्यत्र न विरुद्धम् । नियमाश्च यथाऽग्नेरौष्ण्यम्, जलस्य शैत्यं तथैव धूमस्याग्निज्ञापकत्व-नियमोऽपि शाश्वतिक एव । तथैवामुकामुकभोजनविवाहेन नरकप्राप्ति-नियमोऽपि शाश्वतिक एव । तादृग् विचारस्यातात्त्विकत्वं मातृदुहि-त्रादिगमनमपि जातित्रोटकसम्प्रदायस्यापतितं भवेत् । तथात्वे पशु-साधारण्यापत्त्यामनुष्यत्वव्याकोपः ।

यदुक्तम् 'प्रकाशौष्ण्यगतेर्गणितज्यौतिषादि वैद्युतादिधर्माणामेव शाश्वतधर्मत्वम्' तन्न, तस्यानुष्ठेयत्वासंभवात् ।

यदुक्तम् 'प्रत्यक्षानुमानाविरुद्धानामाप्तवाक्यानां धर्मस्वरूपे प्रामाण्यन्तत्त्वतीव तुच्छम् । तथात्वे त्वागमस्य प्रत्यक्षानुमानान्तर्भूतत्वेन शब्दस्य पृथक् प्रामाण्यानुपपत्तेः । अज्ञातज्ञापकत्वं प्रमाणानां

प्रामाण्यमितिसिद्धान्तविरोधश्च्च। तस्माद्यथा नेत्रानधिगतस्य शब्दस्य ज्ञापकत्वेनैव श्रोत्रस्य प्रामाण्यम्, श्रोत्रानधिगतस्य रूपस्य ज्ञापकत्वेनैव नेत्रस्य प्रामाण्यम् तथैव प्रत्यक्षानुमानानधिगगतार्थज्ञापकत्वेनैव वेदाद्यागमस्य प्रामाण्यम्। नहि धर्म ब्रह्मणोः प्रत्यक्षानुमानाधिगम्यता, तथात्वे घटादिष्विव मतभेदानुपपत्तेः। नहि सूर्यचन्द्रादयोऽनुष्ठेयाः, वस्तुनः पुरुषतन्त्रत्वाभावात्। यदेव हि पुरुष तन्त्रं तदेवानुष्ठीयते। नहि शाश्वतं ब्रह्मानुष्ठेयम् तस्य नित्यनिवृत्तत्वात्। नहि दृढ़लौहजटितपोतानां लौकिकमाहात्म्यं वैदिकैर्नाभ्युपेयते। प्रत्यक्षानुमानादिभिर्वानिरा अपि व्यवहरन्ति न केवलं मानवाः। परन्तु मानवास्तु तदतिरिक्तं शब्दमपि प्रामाणं स्वीकुर्वन्ति।

यदुक्तम्—"वैज्ञानिकेषु शस्त्रास्त्रेषु जलयानेषु च सत्सु वेदप्रामाण्यमपलपन्तो हिन्दूदेवमूर्तीस्त्रोटयन्त, गोमाँसादिभक्षयन्तोऽपि विजेतारो भवन्ति, तेष्वसत्सु वैदिकान् मन्त्रानादरेण जयन्तोऽपि पराभवं प्राप्नुवन्ति, तस्माद्विज्ञनासिद्धशक्तय एव शाश्वतधर्मपदवाच्या भवन्ती" ति, तदपि तुच्छम्, लोकसिद्धकार्य्यकारणाभावस्य लोके समादरणीयत्वेऽपि न तस्यैव धर्मब्रह्मरूपत्वम्। स्वविषय इव प्रमाणस्य शूरत्वात्। मन्त्रदेवादीनां शस्त्रास्त्रादिकार्य्यकरत्वमिति को ब्रूते। देवाद्यनुग्रहहेतुकसद्बुद्धयादि साहाय्येनदुःखादितरणप्रसिद्धेः।

'न देवा दण्डमादाय रक्षन्ति पशुपालवत्।
यस्यानुग्रहमिच्छन्ति बुद्धया संयोजयन्तितम्' ॥

इत्युक्तेः न च बुद्धेनैरर्थक्यम्, तस्याः सर्वकल्याणहेतुत्वात्। कर्णस्यामोघशक्तिसंपन्नत्वेऽपि पार्थजिघांसुत्वेऽपि कृष्णार्जुनसन्निधाने तत्प्रयोगस्मृतिसहकाराभावेन तत्प्रयोगाभावेन तम्प्रति वैकल्य दर्शनात्।

यत्तु 'सोमनाथरक्षार्थं विप्राणां जपपाठपरायणतायामपि सोमनाथमन्दिरादिध्वंसनं जातं' तत्तु लौकिकसाधनसंपत्तिप्रमादहेतुकम्, 'मामनुस्मर युद्धय चे'ति देवस्मृत्यादिभिः सार्द्धं युद्धादीनां लौकिकानामपि साधनानामुपयोगावश्यकत्वस्मरणात्। किञ्च यादृग्विघ्नः स्यात्तान्निवारणार्थं तादृक् प्रयत्नस्यावश्यकत्वेन प्रबलविघ्नविध्वंसं प्रति

प्रबलाराधनस्यावश्यकत्वेन तादृक्प्रबलाराधनाभावेन साफल्याभावस्योपपत्तेः ।

यत्तूक्तम् विज्ञानमूलकस्य सनातनधर्मस्य सामस्त्येनाद्याप्यज्ञातत्वात् यथाज्ञानं पूर्वपूर्वाज्ञानस्य स्वीकरणमेव भूषणमिति, तदपि न किञ्चित्, प्रमाणसिद्धस्यार्थस्य प्रमाणबाधमन्तरा बाधासंभवात् । भ्रमसिद्धानां बाधस्त्विष्ट एव । तथापि यथा कदाचिदपि रूपं घ्राणस्य न विषयस्तथैवालौकिकसाध्यसाधनभावो न प्रत्यक्षानुमानविषयः । शास्त्रैकगम्यधर्मब्रह्मादेः प्रत्यक्षाद्यविषयत्वेन तत्र तदन्वेषणप्रयत्नस्य वैयर्थ्यात् ।

यदुक्तम् "यद्यपि जीवेश्वरजगदादिसम्बन्धे जन्ममृत्युपुनर्जन्मस्वर्गनरकादिसम्बन्धिन्यो निश्चितयोऽपि धर्मपदवाच्यतामर्हन्ति । तासामपि शाश्वतता संभवति जगत्प्रसिद्धेषु ग्रन्थेषु तत्सम्बन्धे विगानदर्शनात्, तत्प्रामाण्यनिकषानुपलम्भात् तथापि कोऽनाप्तः कश्चाप्त इति निर्णयस्तु न संभवति । चित्तशुद्धितारतम्येन ज्ञानयाथार्थ्याभ्युपगमेऽपि कपिलपतञ्जलिगौतमकणादजैमिनिव्यासादिषु शंकररामानुजादिषु च कस्य चित्तशुद्ध्युत्कर्षो वक्तुं शक्यः ? सर्वेषामाप्तत्वे समानावस्थायां समानानुभवः स्यात् । परन्तु विरुद्धानुभव एव दृश्यते । कश्चित्प्रकृतिपुरुषादीनां सत्यत्वमुपैत्यन्यः प्रकृतेर्मिथ्यात्वं जीवब्रह्मणोरैक्यमुपैति, पतञ्जलिश्च पुरुषविशेषमीश्वरं मन्यते । वेदोऽपौरुषेयस्तर्हि तौरेत-जबूर-बायबिल-कुरानअवेस्तादिग्रन्था अपीश्वरप्रत्ता एव सर्वैरभ्युपगम्यन्ते सर्वेपि कथं नापौरुषेयाः ? सर्वेषां चैषां मतभेदो जागर्त्येव । वैदिकरीत्या महेन्द्रः स्वर्गस्य राजा । ईशामसीह रीत्या तद्धस्त एव स्वर्गकुञ्चिका । कुरानरीत्या मुहम्मद एव सर्वप्रभोर्देवदूतः । रेडइण्डियनानां स्वर्गे शूकरबाहुल्यम् पूर्णं सान्द्रं वनम् । परन्तु मुस्लिमानां स्वर्गे ताद्गशुद्धवस्तुलेशोऽपि नास्ति । ईश्वरेण यथैवोच्यते पैगम्बरैस्तदनुभूय तदेव समागत्योक्तमेव । नरकसम्बन्धेऽपि तादृशी स्थितिः । परस्परव्याघातात्सर्वेषामेवाप्रामाण्यं युक्तम् । स्वतन्त्रप्रामाण्याभावान्न कस्याऽपि प्रामाण्यम् । तथाप्यवतारभूतैर्विविधैर्महापुरुषैः नचिकेतःप्रभृतिभिस्तत्सम्बन्धिन्यः क्लृप्तयः समुद्भाविताः । तासामादरावश्यकत्वेऽपि प्रयोगेण याथार्थ्यं निर्णेतव्यतावशिष्यत एवेति" तदपि तुच्छम्, तथात्वेऽद्ययावद्धर्मब्रह्मादिनिर्णयस्याप्रामाणिकत्वेन नास्तिक्यप्रसरस्यैव संभवात् । पूर्वक्लृप्तीनां भ्रान्तत्वेन

तत्प्रादुर्भावकानां महापुरुषत्वोक्त्यनुपपत्तेश्च । पूर्वेषामिवोत्तरेषामपि भ्रान्तत्वसंभावनयानाश्वासप्रसङ्गाच्च ।

किञ्चाद्यापि लोकव्यवहारनिर्वाहाय धर्मेश्वरोपयोगो दृश्यते । शासनाधिकारिणो न्यायमूर्त्तयश्च सशपथं सप्रतिज्ञानं पदानि गृह्णन्ति । यथासंभवं तदनुसारिण्यः कर्त्तव्यनिष्ठा भवन्ति । धर्मेश्वरतत्प्रतिपादकग्रन्थेष्वनाश्वासे शपथप्रतिज्ञयोः सर्वथैव नैरर्थक्यम् । पूर्वजानां विधानेष्वविश्वासोत्पादने नव्यविधानेषु विश्वासोत्पादनमपि न शक्यम् । पूर्वजा असभ्या वानरप्रायाः, वयन्तु सभ्या नागरिका इत्यभिमानोऽपि निःसार एव । तत्संततीनां तज्जातीयत्वदर्शनात् । नहि गर्दभेषु वानरेषु वा सिंहा नरा वा उत्पद्यमाना दृश्यन्ते । डार्विन, स्पेन्सर, हैक्लादीनामपि पूर्वजत्वाविशेषात् तत्रापि विश्वासो न संभवत्येव । अहिंसा सत्यास्तेयादिसम्बन्धे देहातिरिक्तात्मवादसम्बन्धे च समेषामैकमत्यञ्च दृश्यते । देशकालपरिस्थित्यादिभेदेन धर्मविशेषेषु मतभेदोऽपि नासंगतः । कपिल-पतञ्जलि-गौतम-कणाद-जैमिनि-व्यासादीनां शङ्कर-रामानुजादीनाञ्च केषुचिदंशेषु मतभेदेऽपि वेदप्रामाण्य-सम्बन्धे समेषामैकमत्यमेव । वर्णाश्रमानुरोधि श्रौतस्मार्त्तधर्मानुष्ठानेषु च समेषामविगानम् । न च समेषां ग्रन्थानामनादित्वमपौरुषेयत्वञ्च सर्वैरभ्युपेयते । वेदातिरिक्तानां सर्वेषामपि वायविलादीनां कालविशेषकर्तृविशेषसम्बन्धश्रवणात् । सम्प्रदायाविच्छेदे सत्यस्मर्य्यमाणकर्तृत्वकत्वस्य वेदातिरिक्तेषु क्वाप्यसत्त्वात् तेषां तथोक्तयस्तु स्वाभ्युपगमविरुद्धा ॥

किञ्च यदा जीवेश्वरादि सत्त्वे प्रमाणं नास्ति तदा तेषामसत्त्वेऽपि न प्रमाणम् । न चानुपलम्भादेव तदसत्त्वम्, सतामप्यतिदूरा ईद्रियति पतत्रिणामतिसामीप्यात् नेत्रसंलग्नाञ्जनस्य, सौरीभिर्भाभिरभिभवात् नक्षत्राणां, सौक्ष्म्यात्परमाणूनामनुपलम्भदर्शनात् । एवमिन्द्रियघातमनोऽनवस्थानादिभ्यश्चानेकेषां सतामप्यनुपलब्धिः । अतएव योग्यानुपलब्धेरभावगमकत्वं भवति, नानुपलब्धिमात्रस्य । यो घटं जानाति स एव घटाभावं जानाति । यो देवदत्तं न परिचिनोति स तदभावं कथं ज्ञातुं शक्नुयात् ? लोकेऽपि क्वचिदवश्यगन्तव्ये पथि कण्टकसर्पव्याघ्रादिबाहुल्यतत्प्रतीकारपादत्राणभु-

शुण्ड्यादीनामुपदेशं वञ्चकोक्त्याऽनादृत्य यो गच्छति स कण्टकादिसत्त्वेऽनर्थमुपैति। तदसत्त्वे तु स लाभवान् भवति।

तदुक्तम्--'संदिग्धे परलोकेऽपि कर्तव्यः पुण्यसञ्चयः।
नास्ति चेन्नास्ति नो हानिरस्ति चेन्नास्तिको हतः ॥'

परलोकसत्त्वे तु पुण्यसञ्चयाभावे महती विनष्टिः। सति पुण्यसञ्चये तु महती समृद्धिः। निश्चितलक्ष्यप्राप्तये मार्गसम्बन्धिमतभेदेऽपि स्वपितृपितामहादिगतमार्गोऽनुसरणीयो न तु लक्ष्यमेवोपेक्षणीयम्।

तदप्युक्तम् –'गतो मार्गोऽनुगम्यते'
'येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात्, सतां मार्गस्तेन गच्छन्न रिष्यति ॥'

येन विश्वं निर्मीयते तेन तत्सञ्चालनाय व्यवस्थापि विधीयते। तत एव विश्वविधात्रा विश्वक्षेमाय विश्वनिर्माणसमकालादेव वैदिकं विधानमुपदिष्टम्। सर्वज्ञः सर्वशक्तिरनादिश्चेत् परमेश्वरस्तदा तद्विधानेनाप्यनादिनैव भाव्यम्।

त्वमेको ह्यस्य सर्वस्य विधानस्य स्वयम्भुवः।
अचिन्त्यस्याप्रमेयस्य कार्यतत्त्वार्थवित् प्रभो ।।' मनु १।३)
इति मनूक्त्या स्वयम्भूविधानमपि तदेव

मूलमनादिविधानम्। देशकालाधिकारिभेदेन किञ्चिद्रूपान्तरिततत्तद्विधानरूपेण परिणमय्योपदिष्टं महापुरुषैः सर्वथाऽपि नास्तिक्यनिर्धर्मकत्वनिरीश्वरत्वाद्यपेक्षयास्तिक्यमेव पूजनीयम्। धर्मः परमेश्वरश्च शान्तदान्तसर्वभूतहितैषिमहापुरुषपारम्पर्येण समादरणीयौ।

यदुक्तम्—भोजनपानग्राह्याग्राह्यशुद्ध्याशुद्ध्यादिसदाचारस्य नियतरूपमद्यापि निश्चितं नास्ती"ति तदपि तुच्छम्। यतः दृष्टहिताय वैदिकैर्नीतिकारैश्च महर्षिभिः, परलोकहिताय धर्मशास्त्रकारैश्च ते ते व्यवहारा आचाराश्च निश्चिता एव।

केश्चित्तु तत्त्वज्ञानोपासनादिषु बद्धादरैरपि आचारः कर्माणि चोपेक्ष्यन्ते, तदपि न युक्तं, सर्वत्र दर्शनैः सार्द्धमाचारसम्बन्धस्यापरिहार्यत्वात्। यथा विचा

रमन्तराऽऽचारो निर्वीर्य्यस्तथैवाचारमन्तरा विचारस्यापि मनोराज्यपर्य्यवसायित्वं भवति। यद्यपि च संप्रदायवादादिभेदेन तेषु तेषु कर्मसु परिवर्तनं भवति, तथापि सनातनशास्त्रनियंत्रितमेव तत्परिवर्तनं, न निरंकुशम्। यथा प्रातःसायमादिभेदेन सन्ध्याभेदस्तद्वत्।

ये तु लौकिकसमाधिगम्या लौकिकाः साध्यसाधनभावास्तेषु लोकानुसारेण परिवर्तनं भवत्येव। यथाकामकाणां शत्रूणां पराभवाय शस्त्रादीनि गमनागमनसाधनानि यानानि तेषु परिवर्तनं यथेष्टं भवत्येव। तत्रापि लोकहितानुरोधानि धर्माविरोधीनि नियन्त्रणानि सौविध्यावहानि। अतएव यद्यपि महायन्त्रनिर्माणमुपयोगि प्रतिभाति तथाप्यार्थिकासंतुलननिवृत्तये निर्जीविकत्वनिरुद्योगित्वनिवृत्तये च तदेवोपयुज्यते।

यद्यप्याधुनिकैरुच्यते वयं प्रगतियुगेस्मिन्नेतावतीं प्रगतिं प्राप्य पश्चाद्गामिनो भवितुं न शक्नुमः। वायुयानसुलभे युगेऽश्वरथेनानुडुद्रथेन वा धावितुं कोऽद्य प्रवर्तेत। परमाण्वस्त्रयुगे पाषाणमयैरस्त्रैः योद्धुं कः समुत्सहेत? परं तदविचारितरमणीयमेव। यतोऽद्यत्वे परमाण्वाद्यस्त्रनिर्माणं महतीं प्रगतिं सम्पाद्यापि तत्प्रतिबन्धाय यतन्ते निर्मातारः। मास्कोनगरे विश्ववारिष्ठा नेतारस्तत्प्रतिज्ञाबन्धे पत्रे हस्ताक्षरं कृतवन्तः। शान्तिक्षान्ति वैधुर्य्यादद्य महती शक्तिरनर्थायैव संपत्स्यते। पूर्वयुगेषु तु रथा अप्युदन्वदाकाशमहीधरसञ्चारिण आसन्। पुष्पकादीनि यानानि त्विदानींतनेभ्योऽप्यधिकशक्तिशालीन्यासन्। आग्नेयवारुण्य-ब्रह्मास्त्रादीनि प्रभूतप्रभावाण्यासन्। पार्थस्यनिखिलब्रह्माण्डसंहारकपाशुपतास्त्रसम्पन्नत्वेऽपि महत्यामापद्यपि तत्प्रयोगविचारोऽपि नोत्थितः। एतेन कृष्णार्जुनादीनां धनूंषि शस्त्रास्त्रादीनि च परमाण्वस्त्राद्यपेक्षयाल्पवीर्य्याणीत्युक्तिरपार्थिकैव।

आधुनिकास्तु यथाप्रसङ्गमात्मानं सनातनधर्मानुयायिनमार्य्यसमाजिवं घोषयन्तोऽपि वेदादितदुपदिष्टधर्मब्रह्मादिसिद्धान्तश्च प्रयोगावस्थमनिश्चितमेव मन्यन्ते, तत्तु शास्त्राज्ञानमूलकमेव। सुदृढप्रमाणमूलकत्वेन तत्र प्रमाणान्वेषणवैयर्थ्यात्। प्रत्यक्षानुमानानधिगतगन्तृत्वेनैव शास्त्रप्रामाण्यस्योक्तत्वात्।

यत्तु—"प्रगतिशीलेषु देशेषु सर्वत्र वस्तूनामाधुनिकतमत्वं ( अप्टुडेट ) यथाद्रियते तथैव धर्मब्रह्मादिविचारेष्वप्याधुनिकतमत्वमादरणीयम्। प्रतिक्षणञ्च तादृक् तारतम्यं पुरःसरद्धावति। एकत्रस्य एवाधुनिकः चतसृषु दिक्षु दूरदर्शक-दूरश्रावक-यन्त्र माहात्म्येन क्षणेष्वेव विश्वस्य सुदूरचतुर्दिग्देशवर्तिभिर्जनैः प्रत्यक्षवद् व्यवहरति। ततोऽद्य श्रुतिस्मृतिपुराणादिसिद्धान्ताः पूनिकुष्माण्डायिता एव। ततोऽद्य ये विचाराः प्रथा यन्त्राणि वस्तूनि चाधुनिकतमानि तान्येवादरणीयानि, नतु श्रुत्याद्युक्तानि। सर्वे स्वात्मानं समयोपयोगिनमारचयन्ति। वैदिकास्तु स्वप्राचीनमेव गौरवं मन्यन्ते। श्रुतिस्मृतिपुराणनिष्ठत्वं प्रगतिबाधकमत एव सर्वे देशाः प्रगतिशीलाः प्रवर्धन्ते। स्पर्शभोजनविवाहनिषेधादिभिरेव भारतमेव ह्रसति" तदप्यविचारितरमणीयम्। उत्तमत्वे प्राचीनत्वनवीनत्वयोरतन्त्रत्वात्। नव्यमपि विषूच्यादिक त्याज्यमेव भवति। प्राच्यमपि सूर्यचन्द्रभूतलादिकमत्याज्यमेव। स्वास्थ्य प्राच्यमपीष्टमस्वास्थ्यमर्वाचीनमप्यनिष्टमेव। तदुक्तमेव —

"पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः॥"

यदुक्तम् "जीवतां भोजनपरिपाकसामर्थ्यमिव ; कस्याश्चिज्जीवन्त्या जातेर्विभिन्नजातीयानां स्वात्मसात्करणमेव लक्षणम्, हिन्दुजातौ तदभावात्सा मृतप्रायेति तदपि तुच्छम्, तथात्वे पाटच्चराणां परस्त्रीपरधनपाचनसामर्थ्येन तेषामपि जीवितत्वलक्षणसमन्वयापत्तेः। अपि च यदि प्रमाणसिद्धा काचिज्जातिः स्यात्तदा तत्प्रमाणेनैव जीवनमरणादि लक्षणंनिर्णेयं येषां मते जातिरेव नास्ति तेषां मते तस्या लक्षणमपि किं स्यात्? नच प्रत्यक्षानुमानाभ्यां केवलाभ्यां मनुष्यत्वावान्तरजातिः सिद्ध्यति।

किञ्च शास्त्रप्रामाण्यपारम्पर्याभावे विवादास्पदभूता जातिरेव किमित्याश्रीयते, मानवत्वमाश्रित्यैव किमिति संघटनाय न यत्यते।

अतएव यदुक्तं "सर्वेषु धर्मग्रन्थेषु परलोकस्वरूपमनिश्चितमेव। यथा कसंज्ञको द्वीपो ग्रामो वा वनं वा प्राच्यां प्रतीच्यां वाऽवाच्यामुदीच्यां वा विद्यमानोऽविद्यमानो वा इत्यनिश्चये तत्प्राप्त्यर्थं विधाननिर्माणमकिञ्चि-

त्करमेवेति तदपि तुच्छम् निरस्तसमस्तशङ्काकलङ्कपङ्कस्यापौरुषेयस्य वेदस्याव्याहतप्रामाण्येन परलोकज्ञानस्य सुनिश्चितत्वात् । सच्चिदानन्दलक्षणस्य ब्रह्मण एव परमप्राप्यत्वेन तस्यैव परलोकत्वात् । व्यावहारिकस्य परलोकस्य ब्रह्मस्वर्गादिलोकस्यापि वेदादिप्रमाणकत्वेन तस्यापि सुनिश्चितत्वात् ।

यदुक्तम् —"अदुष्टा संततधारा वातोद्धूताश्च रेणवः ।
स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन ॥'

इति पराशरस्मृतिरीत्या वृद्धानां बालानां स्त्रीणाञ्च सर्वथाऽदुष्टता, 'यथाभूमिस्तथा नारी तस्मात्तां न तु दूषयेत्' (अत्रि संहिता २०१,२०२) पृथिवीवन्नारी सर्वथा निर्दुष्टा। विधर्मिदूषितापि नारी शुद्धैव, 'ऋतुस्नानेन शुद्ध्यति' इति देवलस्मृति ४७ रीत्या बलात्कारेण नारी न दुष्यति। गर्भधारणेऽपि सा न दुष्यति (४८-४९)। अग्निपुराण वचनेन गौतमचित्रकारिकयाऽपि च ऋतुस्नानेन नारी शुद्ध्यति। तदेव सिद्ध्यति" इति, तदपि तुच्छम्, युष्माभिः शास्त्रप्रामाण्यानभ्युपगमात् । ये शास्त्रप्रामाण्यमुपयन्ति तेषां रीत्या तद्विरुद्धप्रमाणानां समन्वयावश्यकत्वात् ।

किञ्च यथा बलादपि मलिनपदार्थसंसर्गाङ्गीकारेण तत्प्रक्षालनमपेक्षितं भवत्येव तथा बलादपि परपुरुषसंसर्गे तत्क्षालनाय प्रायश्चित्तादिकमावश्यकमेव। पराशरादिप्रोक्तशुद्धेः सत्त्वेऽपि साङ्कर्यपरिहाराय पृथक् श्रेणी स्थापनमुपयुज्यत एव ।

यत्तु काल्पनिकान् बहून् दृष्टान्तानुपन्यस्य पण्डितानां दौरात्म्येन स्वल्पेऽपि धर्मातिक्रमणे प्रायश्चित्तसंभवेऽपि तदनिर्देशात् जातिनिष्कासनेन धर्मान्तरप्रवेशो जात इति, तदपि तुच्छम्, शास्त्रीयव्यवस्थाया इदानीमिव तदानीमपि सत्त्वेन प्रायश्चित्तानिर्देशासंभवेन तत्कल्पनाया द्वेषमूलकत्वात् ।

यत्तु "ब्राह्मणकुमारासक्ताया मुस्लिमकन्याया हिन्दुधर्मप्रवेशाननुमत्या ब्राह्मणकुमारस्य कालापहाड़संज्ञा जाता। तेन मुस्लिमेन सता हिन्दुनामनिष्ठापादनं विहित' मिति प्रतिशोधभावनामूलकमेव। हिन्दूनां स्वधर्मशास्त्रनिष्ठताया भूषणत्वात् । एवमेव कालामिहिरस्यापि कथा समाधेया ।

रागरोषाभ्यां जायमानायाः प्रतिक्रियाया भीत्या स्वस्वधर्मोल्लंघनेन धर्मनिष्ठाया दत्तजलाञ्जलिता स्यात्। तन्निरोधार्थमेव 'स्वधर्मे निधनं श्रेयः परधर्मो भयावह' इत्युक्तम्। धर्मान्तरप्रवेशान्दोलनेनैव नानाविधाः संघर्षा जायन्ते। यथाऽद्यत्वे विश्वशान्तये कस्यापि राष्ट्रस्य प्रभुसत्ता नातिक्रमणीयेति नियमश्चलित तथैव प्रलोभनादिभिर्धर्मान्तरापादनमपि न करणीयमिति नियमो युज्यते।

यथायोग्यं हिन्दूधर्मप्रवेशस्तु न वारितः। वेदादिशास्त्रानुसारेण वेदादिशास्त्रोक्तधर्मविश्वासस्यैव हिन्दुत्वप्रयोजकत्वेन हरिभक्तिदयाक्षमादित्रिशल्लक्षणे हिन्दुधर्मे प्राणिमात्रस्य प्रवेशसम्भवात्। ब्राह्मणत्वादिकन्तु जन्मैकलभ्यम्, वर्णव्यवस्थाया जन्ममूलकत्वस्य साधितत्वात्। तेन ये मुस्लिमादयो हिन्दुबुभूषवस्ते हिन्दुशास्त्रानुसारेण हिन्दवो भवन्तु। स्वश्रेणीषु विवाहभोजनादिनिष्ठाः सन्तः स्वधर्मं पालयन्तु। मुस्लिमादयोऽपि स्वधर्मं ग्रन्थानुसारेणैव स्वधर्मं जानन्ति पालयन्ति च। तदनङ्गीकारे धर्मस्य जातेश्च व्यवस्थापतेः।

यत्तु "हिन्दूनां स्वधर्मप्रवेशनाक्षमत्वात् मुस्लिमानामुत्कर्षः तदक्षमत्वाच्च हिन्दूनामपकर्षः" तत्तुच्छम्, तथात्वे स्वधर्महीनानां पशुप्रायाणामेव सर्वोत्कर्षसिद्ध्यापत्तेः। आश्चर्यमिद येषां मते परलोक एक सुनिश्चितो नास्ति वेदकुरानबायबिलप्रभृतिषु केषुचिदपि ग्रन्थेषु तदुक्तधर्मेषु च विश्वासो नास्ति तैर्हिन्दुत्वरक्षणार्थमेव किमर्थं यत्यते। परलोको नास्ति, धर्मो नास्ति तर्हि हिन्दुत्वमेव किमिति स्वीक्रियते।

यदुक्तम् "पाकिस्ताननिर्माणानन्तरं लक्ष लक्ष संख्याका मुस्लिमा हिन्दवो बुभूषव आसन्। तेषां प्रार्थनयाऽपि तेषां कापट्यशङ्कया तत्प्रत्याख्यानं कृतवन्तः। साम्प्रतम् कथञ्चित् कापट्येऽपि तत्संततयः कालान्तरे शुद्धहिन्दवो भविष्यन्त्येव। हिन्दवस्तु बलादेव मुस्लिमधर्मे प्रवेशितास्तथापि कालान्तरे ते दृढमुसलमाना जाता" इति तदतीव मन्दम्, यतः आर्य्यसमाजिकाः सर्वथैवशुद्धिकार्ये संलग्ना एव सन्ति। श्रेणीविभागेन सनातनधर्मिणोऽपि शुद्धिकार्य्ये संलग्नाः सन्त्येव। ततो मिथ्यैव तत्प्रलपनम्।

यदप्युक्तम् "भोजनविवाहसम्बन्धमन्तरा सर्वथैव न भवति। रक्तमांसादिष्वैक्यं विवाहादिनैव भवति। यथा नारङ्गफलमुपरिष्टादेकरूपमप्यन्तरता

विभक्तमेव भवति तेनैव पदे पदे तत्पराजयः" इति तदपि तुच्छम्, श्वादिषु तद्वैपरीत्यदर्शनस्यासकृदुक्तत्वात् ।

वस्तुतस्तु मुस्लिमादिजातय एव नारङ्गफलोपमाः, हिन्दुजातिस्तु (खरबूज) फलोपमा । योपरिष्टाद्भिन्नत्वेनप्रतीयमानाप्यन्तरतः संघटितरूपैव । भोजन-विवाहादिव्यवहारभेदेऽपि स्वस्वकर्मभिः सर्वेऽपि भगवन्तमाराध्य संघटिता दिव्यगतिं यान्ति । यथा विविधाङ्गा विविधोपकरणा विविधवाहना विविधास्त्रापि सेना विजयोद्देश्येन प्रवर्त्तमाना साफल्यमपि गच्छति तद्वत् ।

यदप्युक्तम् 'तक्षशिलानिवासिनो ग्रीकराज्ञः कनिष्कहुविष्कादीनाञ्च पूर्वं हिन्दुधर्मे प्रवेशः सञ्जातः । शकहूणादयश्च हिन्दुषु विलीना जाताः । इदानीं संकीर्णतावशात् हिन्दुधर्मेऽन्यप्रवेशो वर्जितः" इति तदपि तुच्छम्, श्रेणीभेदेनान्येषामपि शास्त्रानुसारिप्रवेशे बाधाभावात् । ब्राह्मणादयस्तु जन्मसिद्धा एव साङ्कार्य्यस्य दोषावहत्वात् ।

यदुक्तम् "भोजनविवाहादिसम्बन्धाभावे द्वेषेर्ष्यादि संभवात् सङ्घर्षोऽनिवार्य्यः" तदप्यविचारितरमणीयम् । भारते ब्राह्मणक्षत्रियेषु विविधभेदभिन्नेषु ब्राह्मणेष्वपि च भोजनविवाहादिभेदे सत्यपि संघटनदर्शनात् । कलियुगमाहात्म्यात् विविधपातकोपपातकबाहुल्येन पुरुषनिष्ठशुद्ध्यशुद्ध्यादिज्ञाना संभवादपरिचितकुलशीलेषु भोजनविवाहादिसम्बन्धेन वर्णवृत्तिसाङ्कर्य्यादिभिः पतनमेव संभवि, जातिभेदाभावेऽपि श्वादिषु कलहप्रसरदर्शनाच्च जातिभेदाय प्रयत्नो व्यर्थ एव ।

यदुक्तम् 'समानवंशजानां कलहे जातेऽपि तदुत्तराधिकारिणां तद्विस्मरणं जायते, परन्तु द्विजशूद्रेषु बद्धमूलो द्वेषो विस्मर्तुमशक्य एवे" ति तत्तुच्छम्, द्विजशूद्रेषु पोष्यपोषकसेव्यसेवकभाव दर्शनेन द्वेषासत्वात्, क्वाचित्तु दुष्प्रचारमूलक एव द्वेषः ।

यत्तु स्खलितानां बहिष्करणं विघटनमूलमिति हेतोः सर्वैर्विवाहभोजनादि सम्बन्धेन सर्वसंकलनमावश्यकमिति तदपि तुच्छम् । सर्वसंघटनानां नियमानुशासनप्राणत्वात् । नहि सदस्यसंख्यावृद्धिलोभेन नियमोल्लंघनमुपेक्षणीयम्,

तथात्वे संस्थाविलोपप्रसङ्गात्। नियमोल्लङ्घिनः महान्तोऽपि संस्थातोऽवसार्य्यन्ते तदैव संस्थोन्नतिः।

यत्तु 'हिन्दूनां भोजनादिभेदाज्जात्यादिभेदाच्च मुस्लिमादयः स्वसंख्यावृद्धिं कामयन्ते' इति, तदपि तुच्छम्, संख्यावृद्धिप्रयत्नस्य राजनीत्यादिस्वार्थमूलकत्वात्। अतएव येषु भोजनस्पर्शादिभेदो नास्ति ततोऽपि संख्या वृद्धिप्रयत्नश्च नत्येव।

वस्तुतस्तु शास्त्रतदुक्तधर्मब्रह्मादिज्ञानदारिद्रयादेव ब्राह्मणा अपि स्वधर्माद् भ्रश्यन्ते, तद्युक्तास्तु शूद्रा अपि स्वधर्मपरिनिष्ठिता भवन्ति, भक्तिज्ञानादिप्राप्तौ तत्र यवनादयोऽपि रज्यन्ते, तत एव रसखानताजप्रभृतयः कृष्णभक्ताः सञ्जाताः।

यत्तूक्तम् "जातिप्रश्नेन निरर्थकं कष्ट भवति" इति, तदपि न, भोजनविवाहादिव्यवहारस्य जातिभेदाश्रितत्वे तदर्थं तत्प्रश्नस्यावश्यकत्वात्।

यत्तु 'छद्मना यज्ञोपवीतादिधारणेनाब्राह्मणस्यापि ब्राह्मणत्वं सिद्धयती'ति तदपि न, तदर्थमेव पारम्पर्यज्ञानस्यापेक्षणात्। अतएव परिचितेषु स्वजातीयेषु स्वश्रेणीष्वेव विवाहादिसम्बन्धस्य विधानम्।

यदुक्तम् 'काचिज्जातिः कश्चिद्देशस्तादृशो नास्ति यत्र तज्जातीयतद्देशीयभाषया सार्द्धं तत्परमेश्वरीयसंदेशवाहको दूतः ( रसूल ) न प्रेषितः। कुरानरीत्या जातिभेदस्य नाशेन तद्देशीयैः सार्द्धं मुसलिमानामपि सौहार्दं सम्पादयितुं शक्यम्, जातिभेदेनैव मुस्लिमैः सार्द्धं हिन्दूनां विरोध इति, तदपि तुच्छम् कुरानवचनेनापि जातिभेदसिद्धेः। तथात्वे जातिभेदहीनेषु चीन जापान जर्मनी इङ्गलेण्डादिदेशेषु मुस्लिममतप्रचारप्रयत्नानापत्तेः। 'हमारा समाज' भारतवर्ष में 'जातिभेद' इत्यादि पुस्तकेषु-अप्रमाणकानि बहून्युपाख्यानानि साङ्कर्य्यसाधकानि कथानकानि चोट्टङ्कितानि, तानि सर्वथा निर्मूलानि द्वेषमूलकानि चेत्युपेक्षणीयान्येव।

यदुक्तम् 'नम्बूद्री ब्राह्मणो नायरजातीयां कन्यामुद्वाह्य तस्याः पितृगृहे तत्रत्यप्रथानुसारेण रात्रौ निवसति स्म। परं तद्धस्तस्पृष्टजलभोजनादिकं न गृह्णाति। कदाचिद्रात्रौ पिपासाव्याकुलो भूत्वा 'स्त्रीरत्नं दुष्कुलादपि' स्त्रीमुखं

तु सदा शुचि' इति शास्त्रवचनानुसारेण तामुक्तवान्; त्वया स्वमुखे जलमादाय मन्मुखे देयम् तथा सति धर्मरक्षणं प्राणरक्षणञ्च भविष्यति। तया तथैव कृत' मिति तत्सर्वं निर्मूलम्, द्वेषमूलकञ्च। 'शूद्रां शयनमारोप्य ......... वृषलीफेनपानेन ......इति वचनविरोधश्च 'शुद्धसन्तानार्थं सवर्णाविवाहविधानं दृश्यते। स्त्रीमुखशुचित्वबोधकवचनस्य रतावधरोष्ठपाने चरितार्थत्वात्। रतिकाले मुखं स्त्रीणां शुद्धमाखेटके शुनामिति स्मृतेः।

यदप्युक्तम् "जातिभेदादेवोच्चावचकल्पना भवति। तथा च विवाहे-बाधा भवति। धनिकानां सन्तानाल्पता दरिद्राणां तदाधिक्यम् परं तेषां विवाहदौर्लभ्यं भवति। मुस्लिमादिषु स्वातन्त्र्येण सर्वत्र विवाहःसंभवति। तत एव तेषां संख्याबाहुल्यम्। जातिभेदादेव विधवाविवाहे बाधा। तत एव मुस्लिमादिशुद्धिरवरुद्धा अतएव स्त्रीसौलभ्याय विचारस्वातन्त्र्याय वहवः प्रगतिशीला मुसलिमादिधर्मे प्रविशन्ति" इति, तदपि तुच्छम्, कुरानादिनियन्त्रणस्य तत्रापि सत्त्वात्। सर्वथा शास्त्रनियन्त्रणाभावे भगिन्यादि विवाहापत्तौ पशुत्वापत्तेश्च। धर्मो हि तेषामधिको विशेषः इति मनुष्यमूलधर्माभावे मनुष्यत्वानापत्तेश्च। लाभलोभादिमूलकधर्मान्तरग्रहणे' क्वाप्यवस्थानानापत्तेश्च।

'अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते'।

धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः॥

इति रीत्या धर्मप्रधानानां मानवानां शास्त्रनियंत्रणमावश्यकमेव, राजकीयविधानवदीश्वरीयविधानस्यापि सर्वत्रावश्यकत्वात्।

यदप्युक्तम् 'सर्वजातिषु विवाहादिसम्बन्धेन वैश्यब्राह्मणकन्यानां क्षत्रियादिपुत्रैर्विवाहे भीरुतादिनिवृत्तिर्भविष्यती'ति तदपि कुशकाशावलम्बनम्, साङ्कर्य्येण क्षत्रियादिषु शौर्य्यहानेर्ब्राह्मणादिषु ब्रह्मवर्चसनाशप्रसङ्गाच्च।

यदुक्तम् 'कार्यसम्बन्धेनैव स्वभावपरिवर्त्तनं योद्धृणां युद्धाभ्यासः शिल्पिनां शिल्पाभ्यासो, वेदाभ्यासिनां वेदाभ्यासः, अनभ्यस्तकार्यप्रवृत्तिषु सर्वेऽपि बिभ्यति इति तदपि तुच्छम्, साङ्कर्य्येण सर्वं विषयदायविलोपप्रसङ्गात्। गतचीनयुद्धे बहवः सिड्यूलकास्टसंज्ञका (हरिजना) सेनासु नियुक्ता युद्धावसरे ते भीता

युद्धं कर्तुमसमर्था भारभूता जातास्ततस्ते सेनातः पृथक्कृताः। सिंहशावकानां करिघटाकुम्भोन्माथिनां साहसं दृष्ट्वा तन्मध्यपालितोऽपि शृगालशावको भीतस्तेषां निन्दनं कृतवान्। तच्छ्रुत्वा सिंह्या सान्त्वितः।

'शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक।
यस्मिन्कुले त्वमुत्पन्नो गजस्तत्र न हन्यते॥'

यदुक्तम् 'क्षत्रिया यद्यपि वीरा भवन्ति तथापि दूरदर्शिनो ना भवन्ति। वैश्याः चतुरा अपि भीरवो भवन्ति तत एव हिन्दूनां पराजयो भवति। अतएव रणजीतसिंहेन फ्रेञ्चः सेनानायको नियुक्तः' इति तत्तुच्छम् राजनीतिरणनीतिशास्त्राभ्यासिनां क्षत्रियाणां योग्यसेनानायकत्वे बाधाभावात्, तदनभ्यासे सर्वोऽप्ययोग्यो भवति।

यदुक्तम् 'जातिभेदादेव हीनशक्तिकत्वेन हिन्दवो विधर्मिभ्यः पराभूताः। जातिभेदाभावादेव बौद्धस्याशोकस्य पूर्वसमुद्रमारभ्य अफगानिस्तान ईरान पर्यन्त विशालराज्यं वृत्तम्। पुनरपि जातिवादिनां छद्मसाफल्येन जातिवादोन्मेषाद्धिन्दूनां पराभवो जातः। तदानीमेशियामहाद्वीपे मेक्सिकोचीननार्वेपर्यन्तं धर्मप्रचाराय बौद्धा गताः, इति तदपि तुच्छम्, अप्रयोजकत्वात्। जातिभेदस्य संघटनामूलत्वेन शक्तिवृद्धिहेतुत्वमेव भवति। कुटुम्बग्रामनगरप्रान्ताद संघटनानां राष्ट्रियसंघटनमूलत्ववज्जातिसंघटनानामपि महासंघटनहेतुत्वमेव भवति न विघटनहेतुत्वम्।

किञ्च जातिभेदाभावेऽपि धनिकनिर्धनादिभेदेन समूहभेदो भवत्येवं सर्वत्रैव च देशेषु ज्ञानिवर्ग-योद्धृवर्ग-व्यापारिवर्ग-शिल्पिवर्गभेदो भवति, वर्गैस्तैर्विना कार्यनिर्वाहासंभवात्। सर्वत्र तु तत्तत्क्षेत्रप्रवेशाय संघर्षो भवति। भारते तु जन्मना वर्णव्यवस्थानात् संघर्षमन्तरैव तद्विभागः सम्पद्यते। लोभद्वेषेर्ष्यामूलकः सर्वत्र संघर्षो भवति न जातिभेदमूलकः, जातिभेदस्य तदप्रयोजकत्वात्।

यदुक्तम् विधवाविवाहे काशीस्थविदुषां सम्मतिः प्राप्ता, तत्तु मिथ्यैव, विदुषां शास्त्रपारतन्त्र्यात्। विद्वदाभासाः सुधारकास्तु पूर्वमपि सम्भाव्यन्ते इत्यन्यदेतत्।

यदुक्तम् वैश्यः शूद्रोऽन्त्यजो वा यावद्धिन्दुर्भवति तावत्तस्य सम्मानं दुर्लभम्, यवनादिधर्माङ्गीकारेण न हिन्दुष्वेव तत्संमानं वर्धतेऽपितु तच्छासनमपि स्वीकर्त्तुं शक्यते, इति तन्न, तत्र जातिभेदापेक्षयाऽविवेकस्यैवापराधित्वात्। भारते धर्मतत्प्रतिपादकशास्त्रमूलको जातिभेदो न द्वेषघृणादिमूलकः। अत एव प्राचीनकाले तत्त्वज्ञस्य विदुरस्य शूद्रस्यापि, धर्मव्याधस्यान्त्यजस्यापि परमादरो दृष्टः काल्पनिकैर्मिथ्याभूतैरितिहासैः जातिव्यवस्थां प्रति घृणाप्रसारायैव यतितं सुधाकाभासैः इत्यपि न विस्मर्तव्यम्

यदुक्तम् मराठापेशवावीराणां पराक्रमं दृष्ट्वा भीतोऽपि अब्दाली अहमदशाहस्तेषां पृथक्-पृथक भोजननिर्माणादिव्यवस्थामालोक्य विजयाय साहस कृतवान्। मुसलमाना अश्वारूढा एव भुञ्जाना युद्धायोपजग्मुः महाराष्ट्रियास्तु भोजननिर्माणव्यग्रास्तेषां प्रतिभटा न बभूवुः। तेनैव ते पराजिता इति, तदपि तुच्छम्, नियमपालनस्य शक्तिसंवर्द्धनहेतुत्वात् नियमनिष्ठाः कदाचिद् भोजनाद्यलाभेऽपि युद्धतत्परा विजयन्ते। दार्ढ्यमेव विजयमूलमत एव कदाचिद्विपत्तौ भोजनविवेकशून्यानामपि भोजनं नोपलभ्यते तदानीं दार्ढ्यं तेषामप्यपेक्षितमेव तदन्तरा विजयासंभवात्। वर्णव्यवस्थासमर्थकस्य कौटल्यापरनामधेयस्य चाणक्यस्य नेतृत्वे वर्णव्यवस्थानुसारेणैव चन्द्रगुप्तस्य साम्राज्यमतिवृद्धिमुपगतम्। मर्यादानतिक्रमणेऽपि योद्धृणामुत्साहपारम्पर्यपूर्वकं विजयवैजयन्तीप्रस्फुरणदर्शनात्। किञ्च भोसलासिन्धियाप्रभृतीनामब्राह्मणानामपि शासनसम्मानं ब्राह्मणैरङ्गीकृतम्। तेषां भाग्यसूर्य्यावसानसमयेऽपि पेशवाशासकाः ससम्मानमेव तान् पुरोधायैव प्रवर्त्तन्ते स्म। राजसूये क्षत्रियं राजानं सिंहासनारूढं कृत्वा ब्रह्मविद्वरिष्ठा अपि ब्राह्मणास्तान् स्तुवन्ति। एतेन स्वोच्चत्वाभिमानेन ब्राह्मणा इतरानवमन्यन्ते इत्यादि कल्पना पराहता।

यदुक्तम् प्रजातन्त्रे जनतन्त्रे च जनतायाः शासनम्, जनतायै शासनम् जनतया शासनम्, जनतन्त्रशासनम् भवति। यद्यपि क्वचित्स्त्रीणां शूद्राणां जातिविशेषाणाञ्च वर्गविशेषाणाञ्च जनतायामन्तर्भावस्तथापि ये वयस्काः स्वपरार्थं चिन्तयितुं समर्थास्ते सर्वेऽपि जनताशब्दस्यार्थत्वेन गृह्यन्ते। तत्रापि

प्रजातन्त्रपदेन शासनसर्वोच्चसत्ता व्यक्तिषु परिवारेषु दलेषु च न पर्य्यवस्यति किन्तु समाजे पर्य्यवस्यति । तथा च समाजस्य तादृशी काचिद् व्यवस्था शासनस्य तादृक् संघटनं सामाजिकसम्बन्धस्य तादृशी पद्धतिः, येन कस्यचित् क्वचित् सहजातोऽधिकारो न भवति । तेन मनुष्यः स्वस्मिन् पूर्णश्चरमफलरूपः । समाजे वैयक्तिकोन्नतिम्प्रत्यल्पतमोऽवरोधः । तेनैव समेषां साम्यं सिद्ध्यति । रूसोमहाशयस्य रीत्या विषमता सभ्यतायाः परिणामः, सामाजिकप्रगतिविचारस्याधारः समता ततश्च जातिभेदे सति साम्यदर्शनं दुर्लभमेवेति, तदपि तुच्छम्, भावानवबोधात् । सर्वथा साम्यं नाम गुणवैषम्यमूलके त्रिगुणात्मके संसारे न सम्भवत्येव, त्रिगुणात्मकप्रपञ्चाधिष्ठानभूतं ब्रह्मैव सर्वत्र समम् । तदुक्तं गीतायाम्—

> समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
> विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥"
> 'विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
> शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥

मृल्लोहसुवर्णमयेषु घटेषु भेदे सत्यपि तत्रत्याकाशस्य सर्वत्र यथाऽभेदस्तथा सर्वाधिष्ठाने विज्ञानमात्रे परस्मिन्नभिन्नेऽपि ब्राह्मणश्वपाकादिहस्तिगवादिभेदास्तु सर्वथानपलपनीया एव । अमृतस्य पुत्रा, इति श्रुतिरीत्या समेऽपि जीवा यद्यपीश्वरपुत्रा एव, तेन समेषां स्वाभाविकं साम्यं भ्रातृत्वं स्वातन्त्र्यञ्च तथाप्यविद्योपस्थापितदेहाद्युपाधि यावच्छ्वशूकरहस्तिगवादिवत् विप्रश्वपाकादिभेदोऽपि विद्यत एव । व्यावहारिकरीत्याऽपि सर्वेषु प्राणिषु परमेश्वरांशत्वबुद्ध्यः सर्वत्र सौहार्दहितैषिताऽऽनृशंस्यादिकमादरणीयमेव । तदुक्तं रन्तिदेवेन—

> 'नत्वहं कामये राज्यं न स्वर्गं नापुनर्भवम् ।
> कामये दुःखतप्तानां प्राणिनामार्तिनाशनम् ॥'

मानवत्वेन समेषां यथायोग्यं भोजनाच्छादनावासचिकित्साभ्युदयौपयिक शिक्षादिव्यवस्था भवेदित्यंशे व्यावहारिकमपि साम्यं सम्भवति, न तदर्थं जातिधर्मध्वंसापेक्षा न वा शास्त्रोन्मूलनम् आवश्यकम् ।

यैरप्युच्यते 'अस्मद्देशे चर्मकारोऽपि राष्ट्राध्यक्षस्यासनमारोढुं शक्नोतीति हेतोरुन्नतिमार्गाप्रतिरोधात् सर्वसाम्यमिति तरपि राष्ट्राध्यक्षपदलिप्सोः योग्यत्वं राष्ट्रविश्वासभाजनत्वञ्चेति विशेषणमवश्यं देयमन्यथा समेषां राष्ट्राध्यक्षबुभूषाणां संघर्षः कथमिव परिहर्त्तव्यः ? तदभ्युपगमे तु भारतीयशास्त्रैरेव किमपराद्धम् ? तत्र तु सर्वेऽपि जीवा अमृतस्य पुत्राः सन्ति योग्याः सन्तः सर्वेऽपि न केवलं राष्ट्राध्यक्षतां किन्तु सर्वेश्वरताञ्चाप्यर्हन्ति । ब्रह्मविद् ब्रह्मैव भवती'ति 'निरञ्जनः परमं साम्यमुपैति' इति श्रुतिभ्यः । व्यवहारे तु समेषु-स्वपूर्वजानां देशानां कुलानामवस्थानाच्च वैशेष्यमनुवर्त्तत एव । शरीराणां परिमाणबलविज्ञानाद्यगणितशक्तिवैषम्यं सर्वजनीनमेव ।

यदुक्तम् जातिभेदे गालिदाने द्विजस्य साधारणोऽर्थदण्डः शूद्राणामुग्रदण्ड, इति तन्न, क्वचिद्दण्डवैषम्यस्य सर्वैरभ्युपेयत्वात् । क्वचिदेकापराधप्रसक्तेष्वपि दण्डवैषम्यं दृष्टम् । न्यायाधीशेन तस्मिन्नेवापराधे कस्मैचित् भवानेवं संवृत्त इत्युक्तम्, कस्मैचिद्धि वाग्दण्डः, कस्मैचित्कारावासो दत्तः । परिणामवैविध्यं तत्र दृष्टम् । प्रथमस्य तदानीमेव हृदयं पुस्फोट । द्वितीयेनात्मघातः कृतः । तृतीयः कालान्तरे पुनरपि तस्मिन्नेवापराधे निगृहीतः । अपराधिनां स्वभावावस्थादि-भेदेनैव कृतेऽधिकदण्डः, त्रेतायामर्थदण्डो द्वापरादौ शरीरदण्डः प्रचलितः । व्यव-सायादिभेदोऽपि वर्णभेदेन युक्त एव, वंशानुक्रमेण योग्यतापरिचयसौकर्य्यात् । अतएव सर्वाण्यपि शासनतन्त्राणि धर्मनियन्त्रितान्येव हितकराणि भवन्ति । धर्मविरुद्धा बहुमतिरपि नियन्तव्यैव. लोकेऽज्ञानविज्ञानबाहुल्याबाहुल्यदर्शनात् । तदुक्तम्—

'एकोऽपि वेदविद्धर्मं यं व्यवस्येद् द्विजोत्तमः ।
स धर्म इति विज्ञेयो नाज्ञानामुदितोऽयुतैः ॥, मनुः

नहि कश्चिदपि लोकतन्त्रप्रियोऽपि मतबाहुल्याश्रयेण स्वशिशोश्चिकित्सां कारयति किन्तु चिकित्साविशेषज्ञसंमत्यैव सर्वोऽपि तत्र प्रवर्त्तते । यन्त्रपरिष्कारे च शिल्पविशेषज्ञसंमत्यैव सर्वत्रादरो न बहुमतेः । न्यायवादिष्वपि विशेषज्ञः पूज्यते न मतबाहुल्यम् । राज्ञां लोकरञ्जनं धर्मः तत्राल्पज्ञोऽपि नावधीरणीयः ।

लोकप्रियेण शासकेन भाव्यमित्येतदर्थं लोकमतमादरणीयम्। तत्रापि न मतबाहुल्यमेव किन्त्वल्पलोकमतमपि नोपेक्षणीयमिति लोकतन्त्ररहस्यम्। तदनुरोधेनैव भगवता राघवेन्द्रेण महाभागा सीताऽपि विवासिता।

'स्नेहं दयाञ्च सौख्यञ्च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा॥'

किञ्च देहातिरिक्तात्मवादिमते यथैतज्जन्मकृतानां कर्मणामन्येन देहेन फलं भुज्यते तथैव जन्मान्तरकृतानामपि कर्मणां फलमन्येन देहेन भुज्यते। जन्मानि चोच्चावचानि तादृक्प्राक्तनकर्ममूलकानि। ये राष्ट्ररक्षणार्थमुत्साहेन प्राणानुत्सृज्य वीरगतिं गच्छन्ति तेषां परिवारा अनुगृह्यन्ते। जीवन्तश्च ते सविशेषमाद्रियन्ते।

तथैव ये शुभकर्मभिः शुभां योनिमाप्नुवन्ति ये चाशुभैरशुभां योनिं निगच्छन्ति तेषु व्यवहारवैषम्यं नासङ्गतम्। श्रुतिश्च रमणीयाचरणैर्ब्राह्मणादि योनिप्राप्तिः, कपूयाचरणैः कपूययोनिप्राप्तिर्भवतीति स्पष्टं वक्ति। तेनैव शिक्षादि वैषम्यम् तदनुरोधेनैव वेदाध्ययनतदर्थानुष्ठानाधिकारानधिकारव्यवस्था यथानेकेषां बहूनां विशेषाणां सत्त्वेऽपि शासनपर्षत्प्रतिनिध्यादि निर्वाचने बाधा नोत्पद्यते तथैव जातिसमुचितधर्मादिविशेषाणां सत्त्वेऽपि न तत्र काचिद्बाधा। नहि सर्वाणि कार्याणि सर्वैः कर्तुं शक्यन्ते नवा तत्र सर्वेषां विशेषज्ञता संभवति। साम्प्रतमपि तत्तद्विशेषज्ञताऽर्जनाय प्रयतमानो दृश्यते।

योग्यता च वंशानुक्रमेण स्पष्टं विज्ञायते। यत्रान्यत्रानुमीयते तत्र भ्रान्तिरपि संभवति। यद्यपि चान्दोलनैः स्वाभाविकं वैशेष्यमतिक्रम्यते तथापि नहि वस्तुशक्तिरान्दोलनेन, निवार्य्यते सिंहत्वादि वैशिष्ट्यं नान्दोलनेन निवार्य्यते।

भारतीयेतरैश्च सुधारकैः यद्यपि जन्ममूलकं चातुर्वर्ण्यं नाभ्युपगम्यते तथापि गुणमूलकं तदभ्युपेयत एव। शास्त्रविरोधिभिरितरैरुच्छृङ्खलैस्तु सर्वथापि चातुर्वर्ण्यमपनुद्यते। तद्रीत्या ब्राह्मणक्षत्रियादि नाम सोढुं न शक्यते।

अपरैश्च तत्र क्षम्यते, प्लेटोप्रभृतिभिर्विद्वद्भिरपि मनुष्यमात्रे श्रेणीत्रयस्याभ्युपगमात् शास्त्रज्ञैस्तु यत्र जन्मना वर्णव्यवस्था लुप्ता तत्र गुणकर्मभिः सा प्रति-

ष्ठापनीया। येषामविच्छिन्नपारम्पर्येण वर्णव्यवस्थाऽऽगता तैस्तु तस्याः प्राणपणेन पालनं कर्तव्यम्। येषां तु ब्राह्मणादिनामतोऽपि घृणा भवति तेषां तु हिन्दुनामतोऽपि न चिराद् घृणोत्पत्स्यते।

यदुक्तम् कदाचिज्जातिप्रथाया लाभदायकत्वेऽप्यद्य तस्या हानिकरत्वेनोन्मूलनमावश्यकम्, स्मृतिपुराणादिभेदेन परिवर्तनसिद्धायास्तस्या अभ्युगमात् धर्मस्य सदैकरूपत्वे स्मृतिभेदानुपपत्तिरिति तन्न भावानवबोधात्।

तथाहि 'धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुति' रिति नीत्या धर्मस्यापौरुषेयवेदमूलकत्वेन 'श्रुतेरिवार्थं स्मृतिरन्वगच्छ,' दिति रीत्या स्मृतीनां तन्मूलकत्वेनैव प्रामाण्यम्। वेदानाञ्चानादित्वमपौरुषेयत्वमेकरूपत्वमेव। वेदविरुद्धाश्च स्मृतयस्त्यज्यन्ते।

'या वेदबाह्याः स्मृतयः याश्च काश्च कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः।।' इति स्मृतेः।

वेदाविरुद्धा अपि स्मृतयो वेदमूलकत्वानुमानेनैवाद्रियन्ते। विरोधे त्वनपेक्षं स्याद सति ह्यनुमान' मिति जैमिनीयसूत्रप्रामाण्यात्। अतएव 'औदुम्बरीं स्पृष्ट्वोद्गायति' इति श्रुतिविरोधेन औदुम्बरी सर्वा वेष्टयितव्या. इतिकल्प स्मृतेः गौणार्थकताभ्युपेयते। तथा च प्रातरादिभेदेन सन्ध्याभेदवदापत्संपद्भेदेन तद्धर्मभेदवद्युगादिभेदेनापि धर्मभेदोऽनादिवेदमूलक एव। स एव भेदः स्मृतिभिर्बोध्यते। तथा च स्मृतयः सर्वथा वेदमूलिका एव न स्वतन्त्राः। वेदविरुद्धानां त्याज्यत्वोक्तेः। तथा च जातिभेदेन धर्मभेदस्य वेदविहितत्वात्तदपलापोऽसङ्गत एव। धर्मस्य हितकरत्वमधर्मस्य हानिकरत्वमपि शास्त्रैकगम्यमेव। तद्भिन्नप्रमाणकत्वे शास्त्रस्य निष्प्रयोजनत्वापत्तेः।

यदुक्तम् 'देशकालभेदेन शब्दार्थपरिवर्तनं भवति पूर्वमसुरशब्दस्य सुराऽस्वीकारात् श्रेष्ठेऽर्थे प्रवृत्तिरासीत्। परमेश्वरोऽपि महानसुरो महाप्राणत्वात् कुशाग्रबुद्धित्वादुच्यते स्म। परमद्यत्वे निकृष्टेऽर्थे तस्य शब्दस्य प्रवृत्तिर्जाता। चण्डालशब्दस्य प्रचण्डतेजस्विन्यर्थे प्रवृत्तिरासीदिदानीमन्त्यजे तस्य प्रवृत्तिः। राक्षसशब्दस्य रक्षके प्रवृत्तिः परमिदानीं तेषां स्वसम्बन्धे प्रयोगे क्षोभो जायते।" इति,।

तन्न, व्युत्पत्तिभेदेनार्थभेदस्य शाश्वतिकत्वात्। नहि कालभेदेन शब्दार्थभेदः. शब्दार्थसम्बन्धस्यौत्पत्तिकत्वात्। 'औत्पत्तिकस्तु' इति जैमिनि सूत्रात्। अनेकार्थस्य हरिशब्दस्येव प्रयोक्तृभेदादवसरभेदाच्च नानार्थानां शब्दानां श्लेषालंकारे श्लिष्टभाषणे च विभिन्नेष्वर्थेषु प्रयोगो न विरुध्यते। सुराया अस्वीकारात् असुरः। असु प्राणः; प्राण इति बलं बोध्यते, तस्य प्राणमूलकत्वात्। तथा च

असुषु प्राणेषु तदुपलक्षितेष्वनात्मसु रमणादपि असौ बलवानसुर उच्यते। अशोभने ब्रह्मभिन्ने जगति रमणाच्च असुरशब्दस्य तामसजनेषु प्रवृत्तिर्भवति।

राक्षसशब्दस्य तु न रक्षके प्रवृत्तिः रक्षत्यस्मादिति व्युत्पत्त्या धातुकेषु यातुधानादिष्वेव शब्दकल्पद्रुमादौ तत्प्रवृत्तिरुक्ता।

यदुक्तम्—यजुर्वेदे त्रिंशदध्याये चण्डालशब्दस्य प्रचण्डतेजस्विन्यर्थे प्रयोगस्तदसत्, 'वायवे चण्डालमित्युक्तः, तत्राध्याये ब्राह्मणक्षत्रियादिजातिप्रसङ्गात् सङ्करजातिरेव गृहीता। ब्राह्मणीगर्भाच्छूद्राज्जातः चण्डालः। चडि धातोश्चण्डत्वात् चण्डः परमेश्वरश्चण्डीभवतीति तु यौगिकः। चण्डालस्तु जाति विशेषे रूढः।

यदप्युक्तम् "श्रेणीभेदो यत्र भवति। तत्र जातिनिबन्धना दोषा न भवन्ति। भारते तु जातिमूलक उच्चावचभावो भवति।" इति तन्न, धर्मार्थं वृत्त्यर्थञ्च ब्राह्मणादिजातिप्रयोगावश्यकत्वात्।

वेदादिशास्त्रेषु येषां प्रामाण्यबुद्धिस्तेषां ब्राह्मणादिवर्णव्यवस्थासु परमादरो; येषां तज्ज्ञानं तदादरश्च न स्यात्तेषामेव तदपलापः संभवति। दूर्वाकन्दनिकन्दना वंशाखनन्दना इव शासकाः सुधारकाश्च बहवः समायान्ति यान्ति च; ते दूर्वाकन्दनिकन्दनमिव जातिव्यवस्थोन्मूलनं सुकरं मन्यन्ते। परं तेषां तदभिमानं मिथ्यैव। यथाकालं दूर्वादिलस्येव जातिवादस्य विरूढमूलत्वादुन्मूलनमसंभवमेव।

यदुक्तम् यथा शीतोष्णनिवृत्त्यर्थं अन्धकारनिवृत्त्यर्थञ्च प्रयत्न आस्थीयते तथैव निकृष्टजातिनिवृत्त्यर्थं यत्नः कर्तव्यः।" इति, तन्न, केषाञ्चिद्धर्माणां परिवर्त्तनासंभवात्। नहि प्रयत्नसहस्रेणापि गर्दभोऽश्वः, श्वा वा सिंहः

संपादयितुं शक्यः। तथैव श्वपाको ब्राह्मणः, ब्राह्मणो वा श्वपाको न भवितुं शक्तः। मतङ्गोपाख्यानेन तत्साधितत्वात्। शुभैरशुभैर्वा कर्मभिर्जन्मान्तरेषु तु जातिपरिवर्त्तनं सुशकमेव। जातिवादेन भोजनविवाहादिनियन्त्रणेनोच्छृङ्खलतैव निवार्य्यते। यथेष्टाचरणन्तु न जातिवादस्य फलं, किन्त्वविवेकस्य तत्फलम्।

यद्यपि साम्प्रतं सेक्युलरवादाभ्युपगमात् शासका निर्धर्मकतायां धर्महीनतायां गौरवं मन्यन्ते। ते च जातिभेदं नाङ्गीकुर्वन्ति। स्वाच्छन्द्येन भोजनविवाहादिसमर्थकाः सन्ति। तद्रीत्या सर्वे सर्वाधिकारिणः, सर्वे सैनिकाः सर्वे पुरोहिताश्च भवन्ति।

न्यायालयेषु शिक्षणालयेषु च जात्युल्लेखप्रथा समापिता। जातिभेदाभ्युपगन्तारो व्यवहर्त्तारश्च घृणास्पदतां गताः। भोजनविक्रेतारः सार्वजनिकभोजनालयस्वामिनो जातिभेदव्यवहारिणो दण्ड्यन्ते। जातिभेदमुपमृद्य हरिजनादिषु भोजनविवाहादिव्यवहारिणः पुरस्क्रियन्ते। जातिनिन्दकानि जातिसम्बन्धितघृणोत्पादकानि साहित्यानि पुरस्क्रियन्ते, पाठ्यपुस्तकेषु च निवेश्यन्ते। न्यायवादिचिकित्सकाध्यापकपुरोहितादिपदे शूद्रहरिजनादयः प्रतिष्ठाप्यन्ते। ब्राह्मणक्षत्रियाद्यङ्कितविद्यालयादयः प्रतिबद्ध्यन्ते। शासकीयेषु सूचनाप्रसारकेन्द्रेषु ( रेडियो ) समाचारपत्रेषु जातिविरुद्धाः प्रचाराः प्रसार्य्यन्ते। शासकीयपत्रेषु पण्डितचतुर्वेदद्विवेदचतुर्धरादिजातिसूचकाश्च शब्दा निष्कास्यन्ते। जात्यादित्रोटका भावाः प्रतिक्षणं प्रसार्य्यन्ते। तथापि शुद्धशास्त्रीयसिद्धान्तप्रसारेण तन्निवारणं संभवत्येव। धियां तत्त्वपक्षपातित्वस्वाभाव्यात्। अविचारितरमणीयैस्तर्काभासैरसद्भिरभिनिवेशैः प्रचारिता विरूढमूला अपि जातिधर्मादिसम्बन्धिन्यो भ्रान्तधारणाः प्रमाणमूलकैर्विचारैः संघर्षे स्थातुं न शक्ष्यन्ति। तथा चाहुर्बाह्या अपि

> 'निरुपद्रवभूतार्थस्वभावस्य विपर्य्ययैः
> नबाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः।'

लोकतन्त्रशासने जनमनोऽनुविधायिनो नियमा भवन्ति। तद्विरुद्धास्तु नियमा लोकतन्त्रविरुद्धा एव। युक्तिशास्त्रविरुद्धानां विचाराणामाचाराणाञ्च शासकीयनियमबलेन जनतायामारोपणम् युक्तिशास्त्रबलरिक्ततामेव द्योतयति। किञ्च मिथ्याप्रचारैरपि युक्तिशास्त्राश्रितमपि सत्यं क्वचिन्मिहिकाभिर्मिहिर

इवाच्छाद्यते। श्रूयते छद्मकुशलैः पाटच्चरैः कस्यचिच्छ्रोत्रियस्याजशावके श्वशावकबुद्धिमुत्पाद्याजशावकस्त्याजितः।

आस्तिकास्तु नित्यनिरस्ताशेषशङ्काकलङ्कपङ्कैः पौरुषेयैर्वेदैर्ज्ञापिततन्मूलकान् धर्मानाश्रयन्ते धर्माणां जात्याद्युद्देशेन विधीयमानत्वात्। चित्रमिदं सर्वेषामपि स्वधर्मजातिसंस्कृतिशास्त्रपालनवर्धनादौ प्रवृत्तिर्दृश्यते। भारतीयानां तेषु घृणैव दृश्यते। बद्धमूलाया दासताया परिणतिर्यच्छत्रूणां जात्यादयो रोचन्ते स्वीयाश्च द्विष्यन्ते इदमेव शत्रवः कामयन्ते—

'योऽसत्सेवी वृथाचारो न श्रोता सुहृदां सताम्।
परान् वृणीते स्वान् द्वेष्टि तं गौस्त्यजति भारत॥'

विजेतारो विजितान् दासान् कर्तुं प्रवर्त्तन्ते। कूटनीतिज्ञास्तु न केवलं राष्ट्रस्य भौतिकं शरीरमेव दासयन्ति किन्तु राष्ट्रस्य मानसमात्मानमपि परतन्त्रयन्ति। यत आयसोभिः शृङ्खलाभिर्निगडितोऽपि जनः तास्त्रोटयितुमुत्सहते। बुद्धिविलुम्पकैर्द्रव्यैर्विकृतमस्तकः पराधीनमानसस्तु स्वात्मानं स्वीयांश्च विगर्हति। विशृङ्खलोऽपि स तृणायते। तत एव पाश्चात्यैर्वञ्चिता भारतीयाः स्वसंस्कृतिं निन्दन्ति। स्वशास्त्राणि स्वधर्मांश्च धिक्कुर्वन्ति। स्वजातिं पूतिकूष्माण्डीकृतां मन्यन्ते। स्वपूर्वजांश्चासभ्यान् मन्यन्ते। स्वभाषा स्वचिकित्सा स्वपद्धतिः स्वजनाश्च तेभ्यो न रोचन्ते। शत्रवो यद्विनाशाय प्रवर्त्तन्ते तन्नाशाय भारतीया एवाहर्निशं प्रयतन्ते। आकाशवाण्यादिसूचनाप्रसारसाधनैर्वृत्तपत्रैः साहित्यैश्च शत्रूणामेव साहाय्यमाचरन्ति।

पाकिस्तानीयाः स्वरेडियोयन्त्रेण भारतीयान् शासकाञ्जनांश्च विधर्मान् नास्तिकान् धर्मनिरपेक्षान् वदन्ति। भारतीयनेतारोऽपि हिन्दुस्थानपाकिस्तानयोर्युद्धं धार्मिकाधार्मिकयोः (मजहवीराज्यगैरमजहवीराज्ययोः) युद्धं घोषयन्ति। स्वात्मनः सेक्युलरवादितां प्रमाणयितुं हिन्दूविश्वविद्यालयस्य हिन्दूनाम निष्कासनाय प्रयतन्ते। तदीयया दृष्ट्या न केवलं ब्राह्मणादिजातयो निन्द्याः किन्तु हिन्दुनामापि निन्दनीयमेव। जातिधर्मविरुद्धाभियाने वरिष्ठा अपि शासकाः आप्राणपातं बद्धपरिकराः तदभिनिवेशादेव जातिभेदान् धर्मभेदांश्चापलपन्ति चार्वाका इव ते सर्वे प्रत्यक्षमेव प्रमाणं प्रधानयन्ति।

वस्तुतस्तु प्रत्यक्षमेव प्रमाणमिति वदनमपि प्रत्यक्षवादिनो नोपपद्यते। तथा हि-प्रत्यक्षमेव प्रमाणमिति युक्तिर्विप्रतिपन्नानज्ञान् संशयालून् विपर्यस्तांश्च प्रति प्रयुज्यते ? सर्वान्प्रति वा ? नान्त्यः, उन्मादविलसितत्वात् प्रतिपित्सितमथ प्रतिपादयतोऽनवधेयवचनत्वात्। प्रथमे कथमन्यगता प्रतिपित्सा विप्रतिपत्तिर्वाऽयुष्मता प्रतिपन्ना ? तयोः रूपादिहीनत्वेन नेत्राद्यगोचरत्वात्। नापि-मनसा तस्य बहिरस्वातन्त्र्यात्। तेषां वाग्विन्यासेनेति चेन्न, शब्दप्रामाण्याभ्युपगमापातात्। नापि मुखाकृत्या तदवगमः, अनुमानप्रामाण्याभ्युपगमापातात्। किञ्च शब्दप्रामाण्यं विना पित्रोः परिज्ञानासंभवेन पितृसम्पत्तौ दायभागित्वानुपपत्तिः। भगिन्यादिज्ञानासंभवेन भगिन्यादिपरिणयापत्त्या पशुप्रायत्वापत्तिश्च भवेताम्।

ननु ब्राह्मणस्य शूद्रस्यान्त्यजस्य यवनस्य वा जन्मनि मरणे च शरीरे रक्तमांसादौ च चक्षुरादिभिर्वैलक्षण्यं नोपलभ्यते इति कुतस्तत्र जातिभेद इति चेन्न, केवलचक्षुराद्यनुपलब्धे हीरकादिरत्नवैशेष्ये, षड्जत्वादिस्वरवैशेष्ये च व्यभिचारात्। यथा तत्र रत्नशास्त्राभ्यासजसंस्कारसंस्कृतमनःसचिवेनैव चक्षुषा रत्नादिवैशेष्यमुपलभ्यते, गान्धर्वशास्त्राभ्यासजन्यसंस्कारसहकृतमनःसव्यपेक्षेणैव श्रोत्रेण षड्जत्वादिभेदा ज्ञायते, तथैव धर्मशास्त्राभ्यासजन्यसंस्कारसंस्कृतमनःसव्यपेक्षेण प्रत्यक्षादिनैव जातिवैशेष्योपलम्भः।

किञ्च भवतां बहुमता मुस्लमईसाईभृतयोऽपि मातृदुहितृभगिनीभिः परिणयं वर्जयन्ति। जारजांश्च सन्ततोर्निन्दन्ति। नच तत्र वैशेष्यमध्यक्षेणाध्यक्षयितुं शक्यते तथापि तत्र वैशेष्यमभ्युपगम्यैव व्यवहारः क्रियते। तेन भगिन्यः पत्न्यः मातरो दुहितरः सर्वा अपि स्त्रियः समाः, जारजाः कुलजाः सर्वे मानवाः समाः, इति भवतां गुरवः पाश्चात्या अपि नाभ्युपगच्छन्ति। सर्वा स्त्रियः समा इति घोषस्तु शुनामेव शोभते न मनुजानाम्।

'न जारजातस्य ललाटशृङ्गं कुलप्रसूतस्य न पाणिपद्मम्॥''
इत्यप्युक्तम्।

आस्तिकास्तु गङ्गाजलमितरजलविलक्षणमेव, भगवन्नामेतरनामविलक्षणमेव, ब्राह्मणक्षत्रियादिकं मात्रादिकञ्चेतरविलक्षणमेवाभ्युपयन्ति। आम्रेषु शालिषु गवाश्वादिषु च यथा अपरिगणिता जातिभेदा अभ्युपगम्यन्ते। तेषां

साङ्कर्य्यं परिवर्ज्यते.। नित्यमनेकसमवेतं घटत्वादिकं जातिर्भवति। मनुष्यत्वादिकमिव ब्राह्मणत्वादिकमपि तदुपर्यभ्युपगन्तव्यमेव। अनुलोमसाङ्कर्य्ये प्रातीतिकलाभेऽपि वंशक्षयः, प्रतिलोमसाङ्कर्य्ये तु सन्ततिह्रासोऽपि। व्यभिचारश्च सर्वैंदूषणमुपेयते। यदि दूषणं तर्हि तज्जन्या सन्ततिर्दूषितैवेति मन्तव्या। रक्तभेदो रङ्गभेदो रचनाभेदो नासिकाशिर आदिभेदाच्च वैलक्षण्यं मनुष्येषु-स्पष्टमुपलभ्यते। मुसलिमा ईसायिनश्च हिन्दूनां स्वधर्मे संग्रहाय हिन्दूधर्मस्य हिन्दूशास्त्रस्य हिन्दूसंस्कृतेश्चापकर्षं वर्णयन्ति। मुस्लिमादिधर्मादीनां महत्त्वञ्चाप्युभये वर्णयन्ति। साधारणा हिन्दवोऽपि स्वेषां परेषाञ्चैकमत्येन हिन्दूधर्मादेरपकर्षं विज्ञाय मुस्लिमादिधर्मादेरुत्कर्षञ्च विज्ञाय हिन्दूधर्माद्विरज्य मुस्लिमादयो भवन्ति।

पाकिस्तानीया अन्ये च सर्वे स्वधर्मग्रन्थानां धर्माणां संस्कृतीनां लोकोत्तरं माहात्म्यं वर्णयन्तस्तत् प्रशसन्ति। भारतीयाश्च स्वशास्त्राणां धर्मसंस्कृतीनाञ्च धिक्कारपूर्वकं निन्दां कुर्वन्ति।

तदुपेक्षणार्थं पुरस्कारं वितरन्ति। यदि सत्यमेव तर्हि ते नेतारो मुस्लिमादिधर्मेषु किमर्थं न प्रविशन्ति।

वस्तुतः हिन्दुधर्मादिनिन्दार्थमेव परधर्मान् प्रशंसन्ति। वस्तुतस्ते नास्तिका सर्वधर्म-सर्वशास्त्र-बहिर्भूताः सर्वानेव तथाभूतांश्चिकीर्षन्ति। अन्येषां स्वधर्मनिष्ठाञ्चालयितुमसमर्था लज्जमानाः हिन्दवो भूत्वा तिष्ठन्ति। केचित्तु अन्तरतोधर्मनिष्ठा अपि नास्तिकप्रायाणां शासकानां सन्तोषार्थं बहिरेव नास्तिकायन्ते अनर्गलञ्च प्रजल्पन्ति।

क्षितिमोहनसेनादयो यत्र ऋग्वेदस्य दशममण्डले पुरुषसूक्ते ब्राह्मणादिवर्णानामुत्पत्तिस्तस्यार्वाचीनतां मन्यन्ते। तदपि निर्मूलम्। सम्प्रदायाविच्छेदे सत्यस्मर्य्यमाणकर्तृकत्वेन न केवलं सम्पूर्णस्य ऋग्वेदस्य किन्तु सर्वस्यैव वेदस्यानादित्वापौरुषेयत्वप्रसिद्धेः।

श्रीगांधीमहाशयोऽम्बेडकरश्च जन्ममूलकं चातुर्वर्ण्यं मन्यते। न केवलं चतुर्णामिव वर्णानां किन्तु तेषां साङ्कर्य्येण तदवान्तरजातीनामपि सिद्धिरस्त्येव।

शुक्लयजुर्वेदस्य त्रिंशदध्याये 'वायवे चण्डालम्' इतिसङ्करजातीनामपि वर्णन-दर्शनात् ।

अत एव गृत्समदपुत्राच्छौनकाच्चातुवर्ण्यप्रवृत्तिरिति कथनमज्ञानविजृम्भितम्; तस्यानादिवेदसद्धत्वात् ।

शौनकाद्ब्राह्मणादिकन्यासु चतुर्णां वर्णानामुत्पत्त्या तस्य चातुर्वर्ण्यप्रवर्तकत्वोपचार एव । वेदपुराणादसर्ववचनानां समन्वयसिद्ध एवार्थो ग्राह्यः । न च सर्वज्ञकल्पानां परस्परविरुद्धभाषित्वमाधुनिकानामिव संगच्छते । अतः हरिवंशे—

'पुत्रो गृत्समदस्यापि शुनको यस्य शौनकाः ।
ब्राह्मणाः क्षत्रियाश्चैव वैश्या शूद्रास्तथैव च ॥

ब्रह्म वा इदमग्र आसीत् एकमेव तदेकः सन्न व्यभवत् । तच्छ्रेयोरूपमत्यसृजत् क्षत्रम्' इत्यादिना ब्राह्मणादीनामुत्पत्तयः श्रुता उक्ता एव । तत्र यथा वाय्वादेः प्रागाकाश एवासीदित्युक्तिस्तथैव क्षत्रियादेः प्राग्ब्राह्मण एवासीदित्युक्तिर्न विरुद्ध्यते । तथापि प्रतिकल्पं यथा वाय्वादीनामुत्पत्तिस्तथैव क्षत्रियादीनामपि प्रतिकल्पमुत्पत्तिर्भवत्येव । तेन न चातुर्वर्ण्यासत्त्वं सिद्ध्यति । यथैकस्मात्-परमात्मन एव विभिन्नवस्तूनामुत्पन्नत्वेऽपि गवाश्वादिजातिभेदस्तथैव, ब्राह्मणोत्पन्नत्वेऽपि क्षत्रियादिजातिभेदो न विरुद्ध्यते । मुखबाहूरुपादीयशक्तिविशेषजत्वेन तद्भेदसंभवात् । ब्राह्मणोत्पन्नत्वेन यज्ञापकारकत्वेन यज्ञियत्वं सर्वेषामपि । सेवादिना शूद्राणामपि यज्ञोपकारकत्वेन यज्ञियत्वाविशेषात् ।

ब्राह्मणेभ्यश्च शेषा वर्णाः प्रादुर्भूता' (शान्तिपर्व ६०।४६ ४७) अतएव नीलकण्ठोऽत्र--'यस्मात् त्रषु वर्णेषु ब्राह्मणो यज्ञस्रष्टा तस्मात्सर्वेऽपि वर्णा ऋजवः साधव एव यज्ञसंयोगात् ।' यथा सृष्ट्यादौ ब्रह्मैवासीदिति कथनेऽपि न जात्यपलापस्तथैव—

एक एव पुरा वेदः प्रसवः सर्ववाङ्मयः ।
देवो नारायणो नान्यः एकोऽग्निर्वर्ण एव च ॥
आदौ कृतयुगे वर्णो नृणां हंस इति स्मृतम् ।

अप्रवृत्तिः कृतयुगे कर्मणोः शुभपापयो ।
वर्णाश्रमव्यवस्थाश्च न तदासन्न संकरः ॥'

इति कथनेनापि न वेदविशेषवर्णविशेषाद्यपलापः, सृष्ट्यादौ स्रष्टव्यस्थूल-पदार्थासत्त्वस्य स्वाभाविकत्वात्। अन्यथा सृष्टेरेवानुपपत्तेः। बीजरूपेण तु सर्वसत्त्वमेव, सर्वथाऽसतां कारकसहस्रेण व्युत्पत्त्यसंभवात्।

यदुक्तम् 'स्वेदमूत्रपुरीषाणि श्लेष्मपित्तं सशोणितम्।
तनुः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते ॥' 'शान्तिपर्वणि १८८।८

इत्यादिभिः समेषां समश्लेष्मशोणितस्वेद-मूत्र-पुरीषादिमत्त्वेन समक्रोधशोकादिमत्त्वेन च वर्णविलोप एव कृत" इति तन्न, तदपलापस्य वेदविरुद्धत्वेन कर्ममहत्त्ववर्णन एव तद्वचनतात्पर्यात्। अतएव तत्रैवोक्तम्—

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ॥" म०भा०शा०प०१८८ १०)।

वस्तुतस्तु यथा यथा व्रीह्याम्रहयाश्ववाज्यादीनां समानोत्पत्तिविनाशोपयोगादिमत्त्वेन केनचिद्वैधर्म्येण पृथग् जात्यादिमत्त्वं तथैव ब्राह्मणक्षत्रियादीनां कैश्चिद्धर्मैः साधर्म्येऽपि मुखबाहूरुजत्वादेर्वैधर्म्येणावान्तरजातिभेदसंभवः साधर्म्यवैधर्म्ययोः सार्वत्रिकत्वात्।

ननु भोजनविवाहादिकर्मणां धर्मेण सार्धं न कोऽपि सम्बन्धः। तस्मात् सुरामांसादिभोजनसवस्पृष्टभोजनैर्गम्यागम्यसम्बन्धैः सगोत्रसप्रवरविवाहैरसवर्णविवाहैश्च न धर्महानिर्न वाऽधर्मवृद्धिरिति चेन्न, धर्माधर्मयोर्विधिनिषेधलक्षणत्वेन तद्विरुद्धैराचरणैर्धर्माधर्मोत्पत्त्यनिवार्यत्वात्। येषां रीत्या धर्मो नापक्वसूत्रमिव स्पर्शविनाशि भोजनविवाहैस्तस्य न विनाशसंभवस्तेषां मते कूटस्थो नित्यो धर्मः कथं तेन पुरुषसम्बन्धोऽपि स्यात्? तेषां धर्मः कृष्णायसवज्रतनुः, न व्यभिचारसहस्रैर्न वा मातृभगिन्यादिगमनैर्वा नश्यति। तस्माद्देहेन्द्रियमनोबुद्ध्यहङ्कारादिचेष्टा एव धर्मोऽधर्मश्च। विहितास्ता धर्मो निषिद्धाश्चाधर्मो भवति। तथा भोजनविवाहादावपि विधिनिषेधानुसारिधर्माधर्मत्वमस्त्येव। तथा च निषिद्धभोजनविवाहादीनामधर्मत्वमेव। गीतासु चातुर्वर्ण्यं गुणहेतुककर्माश्रितजन्ममूलकम् उक्तम्। अतएव 'मया सृष्ट' मिति भगवत्सृष्टत्वमेव तस्य।

'कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः।
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः॥
गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः।
स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः॥
हिंसानृतप्रिया लुब्धा सर्वकर्मोपजीविनः
कृष्णा शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गता॥
इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः।'

(म भा. शान्तिपर्वणि-१८८-११ ..... १५)

इत्येतैरपि वचनैस्तत्तत्कर्ममूलकैजन्मभिरेव वर्णपरिवर्त्तनमुक्तम् एकस्मिन्नेव जन्मनि कथं चरकपोतकृष्णवर्णपरिवर्त्तनासंभवात्।

यदुक्तम् 'धर्मो यज्ञक्रिया तेषां नित्यं न प्रतिषिद्ध्यते।
इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती।
विहिता ब्राह्मणाः पूर्वं लोभात्त्वज्ञानतां गताः॥'

इत्यनेन समेषां शूद्रादीनामपि वेदयज्ञाद्यधिकारः सिद्ध्यतीति' तन्न, पूर्वोक्त मीमांसाविरोधेनोक्तवचनस्य प्रत्यक्षवेदयज्ञवर्जपुराणानूदितस्वाधिकारानुसारवेदार्थानुष्ठानयाज्ञिकपरिचर्यादिनिर्वर्त्तकत्वेन यज्ञियत्वोक्तेः, अन्यथा तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः, अयज्ञियो हि स इति विरोधः।

यदुक्तम् 'सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः।
त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः॥'

इति त्यक्तवेदस्य सर्वकर्मकरस्याशुचेरेव शूद्रत्वमिति, तन्न, तत्र शूद्रशब्दस्य निन्दापरत्वात्। यथा क्वचिद् वृत्तप्रशंसार्थं वृत्तेनाब्राह्मणोऽपि ब्राह्मण उच्यते तथैव क्वचिदनाचारत्वेनाशूद्रोऽपि शूद्र उच्यते।

'स्वधर्मे संस्थितः सम्यक् शूद्रोऽपि स्वर्गमश्नुते।'

इत्यादि रीत्या शूद्रस्यापि स्वधर्मनिष्ठतास्मरणात्। विदुरधर्मव्याधादयः स्वाचारसम्पन्नाः शूद्रा अन्त्यजा अपि स्वधर्मनिष्ठा ब्रह्मविदः ब्रह्मविदादृताः स्मर्यन्ते।

'शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥
(म०भा०व०प०१८०।२५)

इत्यादिवचनमपि पूर्वोक्तरीत्या वृत्तप्रशंसापरम् ।

'शौचेन तपसा युक्तः सदाचारसमन्वितः ।
सानुक्रोशश्च भूतेषु तद् द्विजातिषु लक्षणम् ॥
'येन पूर्णमिवाकाशं भवत्येकेन सर्वदा ।
शून्यं येन जनाकीर्णं तं देवाः ब्राह्मणं विदुः ॥'

शान्तिपर्वणि० २४५।११ इत्यादिषु ब्रह्मविदेव ब्राह्मण उक्तः ।

यद्वा-विद्यातपोयोनियुक्ते मुख्ये ब्राह्मणे स्वाभाविकान्येतानि लक्षणानि भवन्ति ।

'न क्रुध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः ।
सर्वभूतेष्वभयदस्तं देवा ब्राह्मणं विदुः ॥२४५॥
जीवितं यस्य धर्मार्थं धर्मो ह्यर्थर्थमेव च ।
अहोरात्राश्च पुण्यार्थं तं देवाः ब्राह्मणं विदुः ॥२४५।२३॥
'निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
निर्मुक्तं बन्धनैः सर्वैस्तं देवा ब्राह्मणं विदुः ॥२४५।२४॥
शा० प० २४५ वृत्तप्रशंसार्थमेव ।

द्विजत्वे तु वृत्तस्यैव कारणत्वमुक्तम् ।

'न योनिर्नापि संस्कारो न श्रुतं न च सन्ततिः ।
कारणानि द्विजत्वेऽस्य वृत्तमेव तु कारणम् ॥५०॥
वृत्ते स्थितस्तु शूद्रोऽपि ब्राह्मणत्वं नियच्छति ॥५१॥
( अनुशासने २४३ )

'आर्जवे वर्त्तमानस्य ब्राह्मण्यमभिजायते' ।
( म० भा० वन. प० २१२ । ११)

'एभिस्तु कर्मभिर्देवि शुभैराचरितैस्तथा ।
शूद्रो ब्राह्मणतां याति वैश्यः क्षत्रियतां व्रजेत् ॥,
( अनु० १४३ । २६ )

'एतैः कर्मफलैर्देवि न्यूनजातिकुलोद्भवः।
शूद्रोऽप्यागमसम्पन्नो द्विजो भवति संस्कृतः॥,
(म० म० अ० प० १४३। ४६)

तत्रैव एभिर्गुणैः सम्पन्नस्य जन्मान्तरे ब्राह्मण्यं जायते इत्येवात्र मतङ्गाख्यानसमन्वितोऽर्थः। अत एव 'न्यूनजातिकुलोद्भवः' इति न्यूनजातिसत्त्वं सूच्यते। तदुद्भवस्य शूद्रत्वेपि शुभैः कर्मभिर्जन्मान्तरे द्विजत्वं जायते इत्यर्थः। अत एव कर्मफलैर्द्विजत्वमुक्तम्—

कर्मफलं तु जन्मान्तरे स्वाभाविकम्। कर्मणां तीव्रसंवेगे च नन्द्यादिवदिहापि जातिपरिवर्त्तनमुक्तमेव। एवमसद्वृत्तैः ब्राह्मणोऽपि जन्मान्तरे शूद्रत्वं याति। अत एव 'शुद्धात्मा जितेन्द्रियः शूद्रोऽपि द्विजवत् सेव्यः' इत्युक्तम्। तत्र वत्कारो भेदं व्यनक्त्येव।

'कर्मभिः शुचिभिर्देवि शुद्धात्मा विजितेन्द्रियः।
शूद्रोऽपि द्विजवत्सेव्य इति ब्रह्माऽब्रवीत्स्वयम्॥'
( म० अनु० प० १४३। ४८ )

अतः ब्राह्मणस्य सतो निन्द्यकर्मनिषेधः। तस्य शूद्रभृत्यत्वं निषिद्धमनापदि।

'ब्राह्मणस्य सदाकालं शूद्रप्रेषणकारिणः।
भूमावन्नं प्रदातव्यं यथा हि श्वा तथैव सः॥ ९। ३५॥

आपस्तम्बसंहितायाम्। अत्र ब्राह्मणस्य श्वतुल्यत्वेऽपि यथा न श्वत्वं तथैव शूद्रसमत्वेऽपि न शूद्रत्वं ब्राह्मणस्य संभवति। यदि शूद्रवैश्यक्षत्रियाणां धर्महीनत्वमेव स्यात्तदा स्वधर्मपालनेन विप्रत्वप्राप्तिरुक्ता विरुद्धयेत। स्मृतिषु गीतासु च चातुर्वर्ण्यधर्मप्रतिपादनञ्च विरुद्धयेत। यदि तादात्विकैः शुभाशुभकर्मभिर्गुणैर्वा तस्मिन्नेव जन्मनि जातिपरिवर्त्तनं विवक्षितं स्यात्तदा तथा व्यवहारोऽपि स्यात्, न च तथा व्यवहारो दृश्यते। अतस्तथाभूतेऽर्थेऽननुष्ठापकत्वेनाननुष्ठापकत्वलक्षणमप्रामाण्यमेव तादृगुक्तवचनानाम्। ज्ञापकत्ववदननुष्ठापकत्वस्याप्रामाण्यप्रयोजकत्वात्। अतएव सद्भिराचरितत्वमपि धर्मस्य लक्षणमुक्तम्। राम-

हरिश्चन्द्रभीष्मयुधिष्ठिरादीनां ब्राह्मणगुणसम्पन्नानामपि क्षत्रियत्व-व्यवहार एव। परशुरामद्रोणादीनां क्षत्रियधर्मवत्त्वेऽपि ब्राह्मण्यमेव व्यवहृतम्। कर्णस्य क्षत्रियधर्मत्ववेऽपि सूतपुत्रव्यवहारस्तत एव। द्रौपद्या सूतपुत्रमहं न वरिष्यामीत्युक्तम्। तुलाधार-समाधि-विदुर-धर्मव्याधादीनां ब्राह्मणगुणोपेतत्वेऽपि वैश्यादिव्यवहार एव तत्र क्रियते स्म।

इदानीं राजकीयनियमेन धनेन सेनाबलेन शासकैर्जातिप्रथा-ऽपनोदनाय यत्यते। तेषां शास्त्रयुक्तिबलशैथिल्यमाभाति। अवश्यं घृणामूलिका संकीर्णा संहतिर्निराकरणीया परन्तु प्रमाणसिद्धा धर्मभेद-मूलिका जातिपद्धतिस्तु कल्याण्येव।

मनुना दशमाध्याये 'ब्राह्मणाद्वैश्यकन्यायामित्यष्टमं श्लोकमारभ्य 'ब्राह्मणानामपि गर्हितम्' इति एकोनचत्वारिंशं श्लोकं यावत् पञ्चाशत् संख्याका जातयो वर्णिताः। ततः परमपि दर्शनेन षष्टिसंख्याका जातयो भवन्ति। तत्राप्यादिशब्देनान्या अपि जातयो ज्ञायन्ते। मागध-वैदेहाभी-रावन्त्य-मल्ल-लिच्छवि-खस-द्रविड़-आन्ध्रप्रभृतयश्च देशाद्युपाधिकाः श्रेणयो भवन्ति। क्षत्रियाश्च क्रियालोपाद् व्रात्यत्वमुपगताः। पौण्ड्रक-चौण्ड्र-द्रविड-कम्बोज-यवन-शक-पल्हव-चीन-किरात-दरद-खसादयश्च पृथगुक्ताः।

अन्यैस्तु एता न जातयः किन्तु मानवश्रेणयः। तास्वेव शूद्राणामप्य-न्तर्भावः।

'शिबयः शूरसेनाश्च शूद्राश्च मलदैः सह' (द्रोण पर्वणि ६।१५) 'शूद्राभीराश्वदरदाः काश्मीराः पशुभिः सह' ( भी० म० पर्वणि ६।६७ ) इत्यादिषु शूद्रा आभीराश्च श्रेणीभेदा एव ज्ञायन्ते। आभीराश्च शूद्रेषु गण्यन्ते। तथापि वेदेषु मन्वादिषु शूद्राभीरादीनां जातित्वेन गण-नाच्छ्रेणीभेदेष्वायातानामपि जातित्वेनैव ग्रहणौचित्यात्।

यद्वा यथा शूद्रकशब्दः क्षत्रिये राज्यपि प्रवृत्तस्तथैव क्वचिच्छ्रेणीविशेषे प्रवृत्तावपि शूद्रजात्यपलापासंभवात्। आवृताभीरवाटधानादीनां येषां नामानि वेदेषु नापि भवेयुस्तथापि पुराणेतिहासादिषु वर्णनान्नापला-पस्तेषां शक्यः।

क्षितिमोहनसेनेन यदुक्तम्--'सूतजातेर्नाम वेदेषु नास्ति' तदसत्, 'नृत्ताय सूतमिति शुक्ल यजुर्वेदे (३०।६) पाठदर्शनात्। देशकालभेदेन नामभेदेऽपि व्यवहारविशेषात् शास्त्रोक्तजातौ तासामन्तर्भावः शक्यः। यथा डोमादयोऽन्त्यजेषु व्यवहारवशान्निर्णीयन्ते। शास्त्रोक्तजातीयानामप्यर्थस्तु व्यवहारादेव विज्ञायते, शक्तिग्रहे व्यवहारस्यैव प्राधान्यात्। 'हड्डि डोमौ' ब्रह्मवैवर्त्ते (१०।१४५) तत्रैव १०।११८ वागदी—चर्चाऽपि। म्लेच्छेन कुविन्दकन्यासंयोगात् जोला, (जुलाहा) तेन कुविन्दकन्यासंयोगात् शराकस्योत्पत्तिरुक्ता (१०।१२१)। तत्रैव जोगीराजवंशीकपाली माली—लुहार-शंखारी—वढयी-सुनान-पटुवा-राजमिस्त्री-तेली-लेट-मल्ल—भद्र-कोलादीनामुत्पत्तय उक्ताः।

यदुक्तम् 'गङ्गापुत्रस्य लेटजातीयेन धीवरकन्यायामुत्पत्तिस्तथापि ते तीर्थगुरवः सन्तः पूज्यन्ते' इति, तन्न, धीवरेष्वपि गङ्गापुत्रसत्तेति क्षितिसेनेनैवाङ्गीकरणात्। गङ्गापुत्रास्तु पुरोहितब्राह्मणा एव गङ्गायास्तटे दानग्रहणादुच्यन्ते। अतिक्रुष्टाय मागधम् शैलूषं रेभं रथकारं तक्षाणं कौलालं कर्मारं मणिकारं मृगयु खनिनम् नैषादं पौञ्जिष्ठं पुल्कसं विदलकारीं कण्टकीकारीं परिवित्तं परिविविदानम् पेशस्कारीं गोपालं अविपालम् अजपालं सुराकारं (कलवार) क्षत्तारं दार्वाहारं वासःपल्पूलीं (धोबी) रजयित्रीं अञ्जनीकारीं कोशकारीं धीवरं दाशं विन्दोनिषादापत्यम् पर्णकं भिल्लं किरातं जम्भकं पौल्कसम् हिरण्यकारं गोघातं तनयम् दावयम् वायवे चण्डालं वंशनर्तनम् इत्यादिशब्दैरनेका जातयः शुक्लयजुषि ३० अध्याये वर्णिताः। श्रुति–स्मृति–पुराणोक्तास्तदविरुद्धा अन्याश्च लोकप्रसिद्धा अङ्गीकरणीयाः। शिष्टव्यवहारेणापि जातिज्ञानसंभवात्। आदिमयुगेऽपि जातिव्यवस्थासीदेव। अनुलोमसङ्कराणां प्रतिलोमसंकरापेक्षयाऽद्यापि व्यवहार्य्यातिशयता दृश्यत एव।

क्षितिमोहनसेनरीत्याऽपि सर्वेषु देशेषु निम्नतरवर्णेनोत्कृष्टतरवर्णकन्यायां जातस्य निन्द्यता भवति। तेन कुलभ्रंशो भवति। गीतायां तु साङ्कर्य्येण जातिकुलधर्मोत्सादनमुक्तमेव। 'उत्साद्यन्ते

जातिधर्माः कुलधर्माश्च शाश्वताः।' दीर्घतमः कवषजावालादिकथा-समाधानमिहैवान्यत्रोक्तमेव। विश्वामित्रब्राह्मणकथासमाधानमिहैवान्य-त्रोक्तम्।

यदुक्तम् 'वशिष्ठस्य संमत्या सगरः शक-यवन-कम्बोज-पारद पल्हव-ताल-जङ्घादि जातीयान् क्षत्रियान् सगरस्य पितृपितामहादि-राज्यापहारकान् सगरपराक्रमेण पराजितान् वशिष्ठशरणागतान् संस्कृति-हीनान् कृतवान्। यवनान् मुण्डितशिरसः अर्धमुण्डान् शकान् प्रलम्ब-केशान्पारदान् पल्लवांश्च श्मश्रुधरान् निःस्वाध्यायवषट्कारान् एता-नन्यांश्च क्षत्रियांश्चकार। विष्णुपुराणे ४।३।२१। ते च निजधर्मत्यागाद् ब्राह्मणैश्च परित्यक्ता म्लेच्छतां ययुः। तत्रैव स्वीयानां परकीयत्वा-पादनसम्बन्धीदमितिवृत्त' मिति, तन्न, तात्पर्यानभिज्ञानात्। धना-द्यपहारवत् संस्कृत्यपहारस्यापि दण्डविधानेऽन्तर्भावोऽनेनैव विज्ञायते। संस्कृतेर्वेषभूषादीनां माहात्म्यमेतेन विज्ञायते।

इदानींतनैस्तु तृणायाऽपि संस्कृत्यादयो नाङ्गीक्रियन्ते। तत्र धनाद्यपेक्ष-याऽपि तेऽधिकमादर्तव्या इति द्योतयितुमेषा कथा। वशिष्ठस्तु महातपाः पूर्णकामो निःस्पृहोऽपि यावत्तपसा ब्राह्मणदेहारम्भकपरमाणुसंघटनेन ब्राह्मण-देहनिर्मितिर्न जाता तावद्विश्वामित्रस्य ब्राह्मण्यं नाङ्गीकृतवान्। तत्सम्पत्तौ तु ब्राह्मण्यमङ्गीकृतमेव तेन।

कैश्चित्तु सहकारासहकारप्रेमद्वेषादिविरुद्धधर्मवत्त्वात् वशिष्ठविश्वा-मित्रनानात्वमभ्युपगम्यते, तत्तुच्छम्, तन्नानात्वे मानाभावात्। परिस्थितिभेदकालभेदादिभिर्व्यक्त्यभेदेऽपि विरुद्धधर्मवत्त्वोपपत्तेः। मन्त्रद्रष्टारस्तु न केवलं क्षत्रिया एव किन्तु सरमा देवशून्यपि मन्त्रद्रष्ट्री जाता। न तावता मन्त्रनिर्मातृत्वप्रसिद्धिः। न वा तावताऽऽ नधिकारिणां वेदाध्ययनाधिकारसिद्धिः। देवतानुग्रहवशात् यथाऽन्याः सिद्धयो लभ्यन्ते तथैव मन्त्रदर्शनमपि। किञ्च सुखावबोधार्थाऽ-ख्यायिका नेतिवृत्तबोधिका तेन नाश्वपत्यादीनामपि उपनिषदादि निर्मातृत्वं सिद्ध्यति।

क्षितिनोहनसेनादिभिर्विश्वामित्रवशिष्ठकथाभिस्तयोः पौरोहित्य-सम्बद्धो रागद्वेषमूलकः संघर्ष उक्त इति तन्न, तत्कल्पनस्यैव द्वेषमूल-कत्वात्। मधुच्छन्दःपुरूरवःप्रभृतीनां मन्त्रद्रष्टॄणां कथापि पूर्ववदेव ज्ञातव्या ।

आर्ष्टिषेणस्य देवापेर्वा अन्येषां वा तपोभिः विशिष्टैः सिद्धर्षि-संकल्पैश्च पूर्वदेहारम्भकपरमाणुविघटनेन ब्राह्मणदेहारम्भकपरमाणु-संघटनेन ब्राह्मणदेहसंभव उक्त एव। तेन धौम्यादिकृतसम्मानं न विरुद्धयते अत एव ।

> यत्रार्ष्टिषेण्यः कौरव्यो ब्राह्मण्यं संशितव्रतः ।
> तपसा महता राजन् प्राप्तवान् ऋषिसत्तम ॥
> सिन्धुद्वीपश्च राजर्षिर्देवापिश्च महातपाः ।
> ब्राह्मण्यं लब्धवान् यत्र विश्वामित्रस्तथा मुनिः ॥
> महातपस्वी भगवानुग्रतेजो—महातपाः ॥ (वनपर्व)

तत्रैव, तस्य पुत्रा महात्मानो ब्रह्मवंशविवर्धनाः ।
> तपस्विनो ब्रह्मविदो गोत्रकर्तार एव च ॥

एवमेव मनुनहुषादिपुत्राणामपि ब्राह्मण्यदिकमुग्रैस्तपोभिर्ब्राह्मण्यावाप्ति-स्मरणात् । न साधारणगुणकर्मादिपरिवर्त्तनेन वर्णपरिवर्त्तनं संभवति ।

यत्तु वीतहव्यस्य भृगोर्वचनमात्रेण ब्राह्मण्यावाप्तिस्तदपि न विरुद्धयते, सिद्धवचनेन जातिपरिवर्तनस्येष्टत्वात् । यथाऽगस्त्यवचनेन नहुषस्याजगरत्वप्राप्तिस्तथैव भृगोर्वचनेन वीतहव्यस्य क्षत्रियत्व-निवृत्या ब्राह्मण्यप्राप्तौ बाधाभावात्। परन्तु यस्य वचने मूषकस्यापि जातिपरिवर्त्तनशक्तिर्न स्यात् तद्वचनेन जातिपरिवर्तनाशा दुराशैव ।

'भृगोर्वचनमात्रेण स च ब्रह्मर्षितां गतः'। (अनु० ३०।५७) गृत्समदरचिता श्रुतिर्वेदे विद्यते इत्युक्तिस्तु मौर्ख्यमूलिकैव, श्रुतेरपौरुषे-यत्वात्। द्रष्टृत्वं तु पूर्ववदेव । यत्र तु ब्राह्मण्यावाप्तिविशेष-

हेत्वभावेऽपि ब्राह्मण्यमुक्तं तत्र तु ब्रह्मवित्त्वमेव ब्राह्मण्यमित्यपि साधु। वज्रसूच्यादौ ब्रह्मविद्येव ब्राह्मणपदप्रयोगात्। यथा—

नाभागारिष्टस्य पुत्रौ द्वौ वैश्यौ ब्राह्मणतां गतौ।' (हरिवंश ११।१५८)

'ऋषभस्य पुत्रा एकाशीतिर्ब्राह्मणा बभुवुः'। (श्रा० भा० ५।४।१३)

वीतहव्यस्य ब्राह्मणत्वे तद्वंशीयस्य गृत्समदस्यान्येषाञ्च तद्वंशीयानां ब्राह्मण्यं सिद्धमेवेति वृथैव तत्पिष्टपेषणम्। रथीतरस्याप्रजस्य पत्न्यामङ्गिरसोत्पन्नाः सन्ततयः क्षत्रोपेता द्विजातयः। नियोगविधिनोत्पादिताः सन्ततयः क्षेत्रजातीया इत्युत्सर्गः। ऋषिभिरुत्पादितास्तु तेषां संकल्पवशात् पितृजातीया अपि भवन्ति। भागवते 'दुरितक्षयस्य राज्ञस्त्रय्यारुणिः कविः पुष्करारुणिरिति त्रयः पुत्राः ब्राह्मणत्वं गताः।

क्षत्रियस्य मुद्गलस्य वंशजा मौद्गल्या ब्राह्मणा जाताः'। (९।२१।३३)

'करूषस्य क्षत्रियस्य वंश्या ब्राह्मणत्वं प्राप्ता'। (९।२।१६)

पारपुत्रो नीपस्तस्य पुत्रशतम्। तेनैव शुककन्यायां कृत्व्यां ब्रह्मदत्तो महायोगी जनितः। वायुपुराणेऽपि 'नहुषपुत्रो ययातिस्तपोबलेन ब्राह्मणो जातः।(९७।१४)। सर्वत्र श्रुतिस्मृत्यनुसारेण केचित्तपोभिः केचित्सिद्धर्षिवचनैर्ब्राह्मणा जाताः। अन्यत्र तु ब्रह्मनिष्ठतैव ब्राह्मणता।

यदुक्तम्—'स्थितो ब्राह्मणधर्मेण ब्राह्मण्यमुपजीवति।
क्षत्रियो वाथ वैश्यो वा ब्रह्मभूयं स गच्छति॥'

(ब्रह्मपुराण २२३।१४)

'एभिस्तु कर्मभिर्देवि शुभैराचरितैस्तथा।
शूद्रो ब्राह्मणतां याति वैश्यः क्षत्रियतां व्रजेत्॥'

(म०भा०अनु०प० १४३।०६)

'शूद्रोऽप्यागमसम्पन्नो द्विजो भवति संस्कृतः'।

(म०भा०अनु०प०१४३४।१)

इति वचनैरब्राह्मणानामपि कर्मभिर्ब्राह्मण्यं स्मर्यते इति, तन्न; वचनान्तरविरोधेन जन्मान्तरेण ब्राह्मण्यं प्राप्यत इति तदर्थत्वात्।

यदुक्तं 'किं ब्राह्मणस्य पितरं किमु पृच्छसि मातरम्।
श्रुतं चेदस्मिन् वेद्यं स पिता स पितामहः ॥'
(काठक संहिता ३०।१)

इत्यनेन श्रुतमेव ब्राह्मण्यस्य कारणम्, तदपि न, भावानवबोधात्। विशेषणाभावप्रयुक्तविशिष्टाभावदर्शनेन विशेषणस्यापि विशिष्टहेतुत्वमुपगन्तव्यम्। श्रुतमपि ब्राह्मण्यस्य प्रयोजकं महाभाष्यकारेणोक्तम्।

'विद्या तपश्च योनिश्च त्रयं ब्राह्मणकारणम्।
विद्यातपोभ्यां हीनस्तु जातिब्राह्मण एव सः॥'

यथा दण्डाभावेऽपि दण्डाभावप्रयुक्तो दण्डित्वाभावो विशेष्यभूतस्य पुरुषस्य सत्त्वेऽपि तथैव जातिब्राह्मणसत्त्वेऽपि श्रुताभावे मुख्यं ब्राह्मण्यं नास्त्येवेति। श्रुतस्य ब्राह्मण्यकारणत्वोक्तिः संगतैव। महाभाष्यटीकादौ चैतत्स्पष्टम्।

यदुक्तम् 'यथा गङ्गा विष्णुपादोद्भवा पतितपावनी तथैव विष्णुपादोद्भवत्वेन शूद्रस्यापि पतितपावनत्वमेव' तत्सत्यम्, विष्णुपादोद्भवत्वस्य पावनत्वाप्रयोजकत्वात्। यथा जलजत्वेऽपि कुमुद कल्हारादिव्यवहारभेदाः, जलजजलूकादिभेदः, समुद्रोद्भूतत्वेऽपि विषामृतादिभेदस्तथैव भगवत्पादोद्भवत्वेऽपि गङ्गया भगवत्स्नानादौ प्रयोगाच्छुद्धत्वं, शूद्रस्य वेदाध्ययनप्रतिषेधात्, यागादावनधिकृतत्वात्तदन्नस्याग्राह्यत्वाच्चाशुद्धिर्विज्ञायते, नहि तर्कमात्रेण धर्मादिज्ञानम्, प्राण्यङ्गत्वाविशेषेऽपि शङ्खशुक्त्यादिशुद्धिर्नरशिरःकपालाद्यशुद्धिश्च मांसाशित्वेऽपि व्याघ्रस्य चर्म शुद्धं घासाशित्वेऽपि गर्दभचर्मणोऽशुद्धिः, मूत्रपुरीषत्वाविशेषेऽपि गोमूत्रादिकं शुद्धं नृमूत्रादिकमशुद्धम् तद्वदेव प्रकृतेऽपि ज्ञेयम्। व्यवहारदृष्ट्येदमुक्तम्।

परमार्थतस्तु 'अमृतस्य पुत्राः' इति श्रुतिरीत्या समेषामेव परमात्मपुत्रत्वेन परमात्मरूपतैव 'सर्वं खल्विदं ब्रह्मे' ति सर्वस्य ब्रह्मात्मकत्वात्। ब्राह्मणानां यद्यपि जन्मनैव पूज्यत्वं तथापि पूजकानामेव कृते तत्, तेषां कल्याणं तु तपोविद्यादिभिरेव, तद्धीनानां

बहुधा निन्दितत्वात्। यथा तुलस्यश्वत्था जड़त्वेऽपि पूज्यन्ते। गवां पशुत्वेऽपि पूज्यता गोलोकादिप्रदत्वं तथापि तुलस्यश्वत्थगवादीनां गोलोकादिप्राप्ति-स्तु बहुकालधर्माधनुष्ठानादि साध्या। तत एव 'ब्राह्मणो जन्मना श्रेयान् सर्वेषां प्राणिनामिह। विद्यया तपसा तुष्ट्या किमु मत्कलया युतः।' (श्रीभागवते) इत्यादिनां तपोहीनानामपि जातिमात्रोपजीविनामपि प्रशंसा।

"विप्राद् द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठं। मन्ये तदर्पितमनोवचनेहितार्थप्राणं पुनाति सकुलं न तु भूरिमानः। (श्री. भा. ७।६।१०) इति भक्तिहीनानां षड्गुणयुतानामपि विप्राणामपकर्ष उक्तः। वेदविक्रयिणः कुसीदवृत्तेः सदाचारहीनस्य च पतितत्वं शूद्रत्वादिकमुक्तम्। नहि निन्दा निन्द्यं निन्दितुँ प्रवर्त्तते अपि तु विधेयं स्तोतु' मिति रीत्या ब्राह्मणानां कल्याणार्थं स्वधर्मादिषु प्रवृत्त्यर्थ-माचारादिहीनानां निन्दोक्त्या पूजकानां विप्रपूजादौ प्रवृत्त्यर्थं गुणहीना-नाम् जन्ममात्रब्राह्मणनामपि प्रशंसाऽपि तादृशी। शास्त्राणां तादृशं तात्पर्य्यमज्ञात्वैव प्राचीना अर्वाचीनाश्च बहवो ब्राह्मणान् निन्दन्त्येव। बहवश्च ब्राह्मणा आचारहीना अपि जातिमात्रं प्रशंसन्ति। निन्दार्थमेव क्वचित्समेषां शूद्रत्वमुक्तम्।

कश्चिदाह 'स्त्रीणां शूद्रत्वात्तद्गर्भजाः सर्वेऽपि ब्राह्मणाब्राह्मण-जत्वेऽपि पारशव एव' इति, तत्तुच्छम्, स्त्रीणां शूद्रत्वासिद्धेः।

यदुक्तम् 'उपनयनाद्यभावात्स्त्रीणां शूद्रत्व' मिति, तदपि तुच्छम्, स्त्रीणामुपनयनविधानाभावात्। विवाहविधेरेव तासामुपनयनसंस्कार-स्थानीयत्वेन विवाहसंस्कृतानां शूद्रत्वासंभवात्। अतएव शूद्रस्त्रीणा-ममन्त्रको विवाहो द्विजस्त्रीणां तु समन्त्रकः। जन्मकालेऽनुपनीतत्वात् समेषां शूद्रत्वमित्यपि न, 'जन्मना ब्राह्मणो ज्ञेय' इति संस्कारानपेक्ष जन्मनैव विप्रत्वोक्तिविरोधात्। जैना बौद्धास्तु वेदादिहीनत्वाज्जाति-भेदं निन्दन्ति। वैदिका महाभारतपुराणागमादयस्तदनुयायिमहात्मानस्तु सदाचारतपस्यादिषु प्रवृत्त्यर्थमेव जातिमात्राभिमानं शमयितुं तां निन्दन्ति।

यदुक्तं 'भारते आदि पर्वणि १३७।१३।१४।१५—६१ भीष्मकृते कर्णाधिक्षेपे दुर्योधनेनोक्तं नदीनां शूराणाञ्चोत्पत्तयो दुर्ज्ञेया भवन्ति। जलोत्पन्नेनाप्यग्निना सर्वं व्याप्तम्, दधीचोऽस्थ्नि वज्रमुत्पन्नम्। अश्विनीकृत्तिकागङ्गादिभ्यः कार्त्तिकेयोत्पत्तिः, क्षत्रियोत्पन्नेन विश्वामित्रेण ब्राह्मण्यमुपलब्धम्। कलशोद्भूतत्वेऽपि द्रोणाचार्य्यस्य शस्त्रधारिश्रैष्ठ्यम्। पाण्डवादिजन्मापि तथाविधमेवे' ति तत्तुच्छम्। दुर्योधनस्य स्वपक्षीयकर्णप्रशंसोद्यतस्योक्तेस्तथ्यहीनत्वात्, भीष्मस्य तदपेक्षया परमाप्तत्वाच्च।

किञ्च दुर्योधनोक्तावपि न जात्यपलापः किन्तु जातेर्दुर्ज्ञेयतोक्ता। नदीनामुत्पत्तिर्यथा दुर्ज्ञेया तथा शूराणामुत्पत्तिर्दुर्ज्ञेया। तेन कर्णस्य सूतपुत्रत्वमवस्तुभूतं तादृशशूरस्य तत्रोत्पत्त्यसंभवात्। तद्रहस्यमन्यतोऽवगन्तव्यमित्यर्थः। अत एव सूर्य्येण कुन्त्यां जातस्य कर्णस्य क्षत्रियत्वमेवेति सिद्धान्तः।

तपः संभृतस्य दधीचोऽस्थ्नस्तु पावित्र्यं प्रसिद्धमेव। महाशक्तिशालिनां समस्तदेवास्त्राणां न्यासरूपेण दधीचिसविधे रक्षितानां सुरक्षाबुद्ध्या स्वास्थिषु सारसङ्ग्रहात्, ततो वज्रोत्पत्तेरदोषत्वात्।

कार्त्तिकेयोत्पत्तावपि न काचिदनुपपत्तिः। विश्वामित्रस्य ब्राह्मण्यन्त्वन्यत्र समाहितमेव।

पाण्डवानां जन्मकथाऽपि भारते विस्तरेणोक्ता। क्षत्रियायां कुन्त्यां माद्र्याञ्च धर्मेन्द्रपवनाश्विभिर्जातत्वेन तेषां सर्वथा निर्दोषत्वात्। सदोषत्वोक्तिस्तु दुर्योधनस्य द्वेषमूलिकैव। एवमेव द्रोणकृपाद्युत्पत्तिरपि दिव्यैव। पञ्चाग्निविद्याक्रमेणोत्पन्नानामेव शास्त्रीयविधिनिषेधविषयत्वात्। स्त्र्यग्निसम्बन्धमन्तरेणैव जातत्वाद् द्रोणकृपादीनां दिव्यता स्पष्टैव। नहि तपोभृतां महर्षीणां शुक्रैः द्रोणात् शरस्तम्बाद्वा जातानामशुद्धिलेशकल्पनापि संभवति, स्त्रीशोणिताद्यपेक्षया द्रोणादीनां शुद्धेरनतिशंकनीयत्वात्।

प्रायेण प्रतिक्रियावादिन एव जातिद्वेषिणः। 'अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते' इति न्यायात्। वज्रसूच्यादौ तु ब्रह्मविद्रूपब्राह्मणप्रतिपादने तात्पर्यं न जातिब्राह्मणखण्डने। अतएव कः जीवः का जातिः किं ज्ञानं कः धार्मिक इत्यादि विकल्पेषु जातिविकल्पोऽपि विद्यते।

तेन जातिरूपो ब्राह्मणोऽत्र नापाचिकीर्षितः। यदि जातिर्नाभ्युपगता स्यात्तदा तद्विकल्पावसर एव न स्यात्। यथा जीवोऽस्ति तदैव तद्विकल्पस्तथैव जातिसम्बन्धेऽपि मन्तव्यः। तत्र जीवो न ब्राह्मणस्तस्य सर्वदेहसाधारणत्वात्। एकस्यापि जीवस्यानेकदेहसम्बन्धात् न देहोऽपि ब्राह्मणः। कर्मवशात् आचाण्डालम् मानुषाणां पाञ्चभौतिकत्वेन देहस्यैकरूपत्वात् जरामरणधर्मसाम्यदर्शनात् ब्राह्मणः श्वेतवर्णः, क्षत्रियो रक्तवर्णः, वैश्यः पीतवर्णः, शूद्रः कृष्णवर्णः इति नियमाभावात्। पित्रादिशरीरदाहेन पुत्रादीनां ब्रह्महत्यादिदोषसंभवाच्च, न देहो ब्राह्मणः। एतावता व्यवहारे ब्राह्मणचण्डालादिभेदः प्रसिद्ध एव।

यद्यपि मृतदेहस्य न ब्राह्मण्यं तथापि मुखशक्तिजनितदेहपरम्पराजनितजीवितदेहस्य ब्राह्मणत्वे नानुपपत्तिरन्यथा जीवितदेहस्यापि वधे ब्रह्महत्यानुपपत्तिः स्यात्। प्राणवियोगानुकूलव्यापारस्यैव मरणपदार्थत्वेन मृतदेहे प्राणाभावात्प्राणवियोगानुकूलव्यापारासंभवात् ब्रह्महत्याद्यनुपपत्तिः।

'जातिर्ब्राह्मण इति चेन्न, तत्र जात्यन्तरजन्तुष्वनेकजातिसंभवा महर्षयो बहवः सन्ति।' एतावतापि जातिब्राह्मणसिद्धिः, अन्यजातिसिद्धिश्च। तत्र जातिव्यवस्थायां तत्तज्जातीयमातापितृजनितानामेव तज्जातीयत्वं प्रसिद्धम्। तच्चात्र व्यभिचरति 'ऋष्यशृङ्गो मृग्याः, कौशिकः कुशात्, जम्बूको जम्बुकात्, वाल्मीको वल्मीकात्, व्यासः कैवर्त्तकन्यायाः, शशपृष्ठाद् गोतमः, वशिष्ठ उर्वश्याम्, अगस्त्यः कलशे जात' इति श्रुतत्वात्। एतेषां जात्या विनाऽपि अग्रे ज्ञानप्रतिपादिता ऋषयो भवन्ति। तस्मान्न जातिर्ब्राह्मणः।

यद्यत्रापि शुक्रप्राधान्याद् ब्रह्मण्यमस्त्येव। मृगकुशजम्बुकशशवल्मीकादिषु विरुद्धजात्यभावाच्च ब्राह्मण्यं न विरुद्ध्यते। व्यासमातुश्च कैवर्त्तपालितत्वेन तत्कन्यात्वमौपचारिकमेव। तस्या उपरिचरवसुवीर्येण मत्स्यां जातत्वात्। वशिष्ठस्याप्युर्वशीपुत्रत्वमौपचारिकमेव। तस्याः स्मरक्षोभहेतुत्वेऽपि तदसंसर्गात्। अत एवागस्त्यस्येव वशिष्ठस्यापि कलशोद्भवत्वम्।

किञ्च जात्यभावे कथं कैवर्त्तककन्यात्वस्यापकर्षहेतुत्वम् ? तस्माज्जातिवादमभ्युपगम्यापि निकृष्टजातिसमुद्भवत्वेन ब्राह्मणक्षेत्रा-जातत्वेऽपि ब्रह्मविद्यानिबन्धनं ब्राह्मणत्वं केषाञ्चनोक्तम्। केषाञ्चित्तु तपस्यया ब्राह्मण्यजातिलाभोऽप्युक्त एव।

'तर्हि ज्ञानं ब्राह्मण इति चेत्तन्न, क्षत्रियादयोऽपि परमार्थ-दर्शिनोऽभिज्ञा बहवः सन्ति। तस्मान्न ज्ञानं ब्राह्मणः।' अत्रापि क्षत्रियादिजातिमभ्युपगम्यैव केवलं तत्र ज्ञाननिबन्धनं ब्राह्मण्य-माक्षिप्तम्।

कर्मणोऽपि समेषां विद्यमानत्वात्तन्निबन्धनमपि ब्राह्मण्यं न संभवति। यद्यपि याजनादिषट्कर्मवत्वं ब्राह्मणत्वमिति संभवति ब्राह्मणजातिलक्षणम्, याजनादिकं तु जन्ममूलकब्राह्मणकर्तृकमेव। तथाप्यत्र ब्रह्मज्ञानमूलकमेव ब्राह्मण्यं विवक्षितम्, तदन्यच्चाक्षिप्तम्। क्षत्रियादीनामपि धार्मिकत्वाद्धार्मिकत्वमपि न ब्राह्मण्यप्रयोजकम्।

'तर्हि को ब्राह्मणो नाम' इत्याक्षिप्य यः कश्चिदात्मानमद्वितीयं जातिगुणक्रियाहीनं सत्यज्ञानानन्दानन्तस्वरूपं साक्षादपरोक्षीकृत्य वर्त्तते स एव ब्राह्मणः इति श्रुतिस्मृतिपुराणेतिहासानामभिप्रायः।' अन्यथा हि ब्राह्मणत्वसिद्धिर्नास्त्येव। पूर्वोक्तं ज्ञानं परमार्थज्ञानमात्रमेवातस् तन्न जातिब्राह्मण्यप्रयोजकमित्युक्तमिह तु अपरोक्षब्रह्मसाक्षात्कार एव ब्राह्मण्यप्रयोजक उक्तः।

कैश्चिदुच्यते 'वज्रसूची' धर्मकीर्तेः कृतिर्बौद्धानां जातिविरोधित्वा-दिति तन्न, बौद्धानां क्षणिकविज्ञानं शून्यं वा तत्त्वमिति सच्चिदानन्दब्रह्म-तत्त्वानभ्युपगमेन ब्रह्मतत्त्वज्ञानप्रतिपादनानुपपत्तेः। नैरात्म्यवादश्च बौद्धानां प्रसिद्ध एव। तस्मादुपनिषदेव वज्रसूची, मौक्तकोपनिषदादौ तदुल्लेखात्। 'पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्। बाल्यञ्च पाण्डि-त्यञ्च निर्विद्याथ मुनिर्भवति। मौनञ्चामौनञ्च निर्विद्याथ ब्राह्मणो भवति' इत्यादावद्वितीयब्रह्मात्मन्युपक्रमोपसंहारादितात्पर्य्यनिर्धारकषड्विधलिङ्गै — रुपनिषदां तात्पर्यनिर्धारणलक्षणं पाण्डित्यमुक्त्वा दृढतारूपबलौपयिक-

मननात्मकं बाल्यं प्राप्य निदिध्यासनात्मकं मौनं प्राप्नोति। तदुभयं ज्ञात्वा ब्राह्मण्यं संपद्यते। व्यावहारिकस्य ब्राह्मणस्यापि मुख्यब्राह्मण्यमिदमेव, व्यावहारिकब्राह्मणस्य तत्साध्यसंन्यासस्य तत्रैवोपयुक्तत्वात्। अपेतब्रह्मक्षत्रादिभेदब्रह्मस्वरूपनिरूपणे बचनानां तात्पर्यात्। जातिभेदखण्डनस्य प्रत्यक्षविरुद्धत्वात्। आत्मदृष्ट्या पाञ्चभौतिकत्वदृष्ट्या च समत्वेऽपि यथा पशुपक्ष्यादि जातिभेदः आकृतिभेदगम्यः प्रत्यक्षस्तथैव ब्राह्मणक्षत्रियादिषु सकृदाख्यातग्राह्यो जातिभेदः प्रत्यक्षसिद्धान्तपित्रादि ब्राह्मण्यज्ञाने तत्सम्बन्धिपुत्रभ्रात्रादिषु ब्राह्मण्यस्य प्रत्यक्षसिद्धत्वात् मनुष्यत्वाविशेषेऽपि यथा रक्तभेदो विज्ञानसिद्धः, तथैव जातिभेदसिद्धिः।

देशभेदेनाकृतिरङ्गभेदोऽपि प्रत्यक्षसिद्धस्तथैव समानदेशीयेषु समानाकृतिषु समानरङ्गेष्वपि मुखबाहूर्वादिजवंशजन्यशक्तिपरमाण्वादिजन्यजीवितमनुष्यशरीरत्वलक्षणस्य ब्राह्मणादित्वस्य भेदेन जातिभेदसिद्धेः। अतएव ब्राह्मणादिशुक्रशोणितजन्यत्वं प्रायिकं ब्राह्मणत्वादिलक्षणम्। सत्त्वोत्कर्षरजउपसर्जनादि निबन्धनं ब्राह्मणादियोनिजन्मलाभ इत्युक्तमेव।

क्वचित्तपोविशेषैः सिद्धर्षिवरशापादिमयबचनैर्वा अन्यशुक्रशोणितादिजन्यदेहाद्यारम्भकपरमाणुविघटनेन ब्राह्मदेहारम्भकपरमाणुसंघटनस्यापवादत्वेन पूर्वलक्षणस्यौत्सर्गिकत्वात्। एकपितृकत्वेनैकजातित्वमपि प्रत्यक्षविरुद्धम्। सर्वस्यैव जगतः परमेशपितृकत्वेऽपि पशुमनुष्यपक्ष्यादिजातिविशेषोपलम्भात्।

किञ्च यदपलापाय यद्विरोधाय यत्सम्पत्तये च सुधारकैराप्राणपातं प्रयत्यते तदेव ब्राह्मण्यमित्यपि लक्षणं संभवति।

यदुक्तम् "ब्राह्मणैरेव प्राधान्येन जातिविरोधः कृतः, ईश्वरचन्द्रविद्यासागर-राममोहनराय-दयानन्द-रामानन्दादीनां ब्राह्मणत्वात्" इति तदपि तुच्छम्, त्वद्रीत्यैव तेषां जन्मना ब्राह्मणत्वासिद्धेः।

कैश्चित्तु श्रेष्ठमस्तिष्कत्वेन सर्वत्रैव ब्राह्मणानामेव नेतृत्वं सम्भवति। तत एव कस्यापि संघटनस्य सम्प्रदायस्य मतस्य येन विनाऽनुपपत्तिस्तस्यैव ब्राह्मणत्वम्।

यदप्युक्तम् "संकीर्णताविशेषात्"—

'समुद्रयातुः स्वीकारः कमण्डलुविधारणम् ।
द्विजानामसवर्णासु कन्यासूपयमस्तथा ।
यतेश्च सर्ववर्णेषु भिक्षाचर्य्या विधानतः ।
ब्राह्मणादिषु शूद्रस्य पचनादि क्रियापि च ॥

( निर्णयसिन्धुः चौखम्बा ४ संस्करण ) । १२८७।१३००

'कन्यानामसवर्णानां विवाहश्च द्विजातिभिः ।
शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणाम् ॥
भोज्यान्नता (पराशरमाधव १ अ. आचारकाण्डे) ।

अनेन ज्ञायते-यत् पूर्वं शूद्रादिकन्योद्वाहो ब्राह्मणस्यानिषिद्ध एवासीत् । शूद्रनिर्मितभोजनग्रहणञ्चानुमतमासीत् । संकीर्णता विकासात्तदवरोधः । याज्ञवल्कीये वीरमित्रोदये ब्रह्मचारिप्रकरणे ब्रह्मचारिणः सर्ववर्णान्नग्रहणं व्यासमतेनोक्तम् ।" इत्यादि, तदपि तुच्छम्, आपत्सम्पदायत्ततत्तद्देशकालाद्यनुरोधेन क्वचित्कस्यचिच्छास्त्रनिषिद्धस्याचारस्य तु मतत्वेऽपि तदकरणीयताया औत्सर्गिकत्वानपायात् ।

तथाहि-श्रीहर्षः—

'निषिद्धमप्याचरणीयमापदि क्रिया सती नावति यत्र सर्वथा ।
घनाम्बुना राजपथे हि पिच्छिले क्वचिद् बुधैरप्यपथेन गम्यते ॥

अत एव क्वचित् मनस्तापेन तच्छुद्धिः ( आपस्तम्बसंहिता ९।२० ) इत्येवमादिकानि प्रायश्चित्तानि विहितानि ।

माधवरीत्या शूद्रेण सहैकस्मिन् गृहे निवासः, एकयानारोहणञ्च निषिद्धम् ।



# जातिलक्षणविमर्शः

ते विभक्त्यन्ताः पदम् (गौ० सू० अ० २ आ० २ सू० ५९) विभक्त्यन्तानां वर्णानां पदसंज्ञा प्रोक्ता। तत्र पदस्यार्थः क इति विचारावसरे 'तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः' (६०) सूत्रेण व्यक्तिराकृतिर्जातिर्वा पदार्थ इति संशयः। तत्र पूर्वपक्षः-व्यक्तिः पदार्थः, व्यक्तौ शब्दप्रभृतीनां प्रयोगात्। या गौस्तिष्ठति या गौर्निषण्णा इति नेदं वाक्यं जातेरभिधायकमभेदात्। भेदात्तु द्रव्याभिधायकम्। गवां समूह इति भेदात् द्रव्याभिधानम्, न जातेरभेदात्। चैत्राय गां ददातीति द्रव्यस्य त्यागः, न जातेरमूर्त्तत्वात्। स्वत्वेनाभिसम्बन्धरूपपरिग्रहोऽपि कौण्डिन्यस्य गौरित्यादिकं जातौ न संगच्छते।

एवं संख्या-दश गावः, वृद्धिः अवर्द्धत गौरिति च जातौ नोपपद्यते। वर्णः-शुक्ला गौरिति द्रव्यस्यैव गुणयोगो न जातेः। गोहितं गोसुखमित्यादिषु सुखादियोगोऽपि द्रव्यस्यैव न जातेः। गौर्गां जनयति इत्यपि व्यक्तौ संभवति न जातौ तस्या अनुत्पत्ति धर्मकत्वात्।

तत्रोत्तरं न व्यक्तिः पदार्थः कस्मात् अनवस्थानात्। व्यक्तीनामानन्त्यात्तत्र शक्तिग्रहासंभवश्च। शब्दप्रभृतिभिर्यो विशेष्यते स गोशब्दार्थो न द्रव्यमात्रं किन्तु जातिविशिष्टमेव। 'यष्टिकान् भोजय' 'मञ्चाः क्रोशन्ति' इत्यादिवदुपचारात् जातिवाचकोऽपि शब्दो व्यक्तौ प्रयुज्यते।

कश्चिदाह 'आकृतिः पदार्थः तदपेक्षत्वात सत्त्वव्यवस्थानसिद्धेः।'६४।। सत्त्वावयवानां तदवयवानाञ्च नियतो व्यूहः संस्थानविशेषो वाऽऽकृतिः। तस्यां गृह्यमाणायां सत्त्वव्यवस्थानं सिद्धयति। यस्य ग्रहणात्सत्त्वव्यवस्थानं सिद्धयति सोऽवयवानां नियतो व्यूह एव पदार्थः। तदपि न, यतो यस्य जात्या योगस्तज्जातिविशिष्टं पदेनाभिधीयते। न चावयवव्यूहस्य जात्यायोगः किन्तु नियतावयवव्यूहस्य द्रव्यस्य जातिसम्बन्धो भवति। गां प्रोक्षय, गामानय, गां देहि, नैतानि मञ्जवके प्रयुज्यन्ते तत्र

व्यक्त्याकृत्योः सत्त्वेऽपि जातेरभावात्। तस्माज्जातिरेव पदार्थोऽस्तु इति, तदपि न, आकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः।

व्यक्त्याकृतिजातयस्तु पदार्थः (६५) इति सूत्रे यदाहि भेदबिवक्षा विशेषागतिश्च तदा व्यक्तिः प्रधानमङ्गं तु जात्याकृती। यदाभेदोऽविवक्षितः सामान्यगतिश्च तदा जातिः प्रधानम्, अङ्गं तु जात्याकृती। तत्र व्यक्तिगुण-विशेषाश्रयो मूर्त्ति (६६) इति यो गुणविशेषाणां स्पर्शान्तानां गुरुत्वघनत्व-द्रवत्वसंस्काराणामण्यापिनः परिमाणस्याश्रयो यथासंभवं तद्द्रव्यं मूर्ति-र्मूर्च्छितावयवत्वाद्व्यक्तिः।

'आकृतिर्जातिलिङ्गाख्या'।

यया जातिर्जाति लिङ्गानि च प्रख्यायन्ते सा जात्याकृतिः। शिरसा पादेन गामनुमिन्वन्ति। नियते सत्त्वावयवानां व्यूहे सति गोत्वं प्रख्यायते। जातिपदार्थः क इति जिज्ञासायामाह-समानप्रसवात्मिका जातिः (२।२।६८ गौ. सू.) या समानां बुद्धि प्रसूते भिन्नेष्वधिकरणेषु यथा च बहूनीतरेतरतो न व्यावर्त्यन्ते योऽर्थोऽनेकत्र प्रत्ययानुवृत्तिनिमित्तं तत्सामान्यं। यच्च केषाञ्चिदभेदं कुतश्चिद्भेदं करोति तत्सामान्यविशेषो जातिः। तेनात्र समानः प्रसवः प्रजननव्यापारः आत्मा स्वरूपं यस्या सेति व्याख्यानं परास्तम्, नित्येष्वात्मादौ तदसिद्ध्यापत्तेः। गोमहिषादौ समानप्रसवत्वेनैक-जातित्वापत्तेश्च। येषु स्त्रीपुरुषे च सन्ततयः प्रसूयन्ते तेष्वेकजातित्व-मित्यपि न, घटादिषु जात्यसिद्ध्यापत्तेः। श्वशृगालेषु अश्वगर्दभेषु च समानजात्यापत्तेः। न चेष्टापत्तिः संस्थानविशेषव्यङ्ग्यजात्यन्तरस्य तत्र प्रत्यक्षसिद्धत्वात्। संस्थानवैलक्षण्येऽपि जात्यैक्ये चूताशोकादिष्वपि जात्यैक्यापत्तेः। आम्रादिष्ववान्तरजातिलोपापत्तेश्च।

न्यायमञ्जरीकारश्च पूर्वपक्षे—

> समानवृत्तिता नाम सामान्यस्य निजं वदुः।
> कथं स्पृशति सापेक्षमनपेक्षाक्षजा मतिः॥

समानेष्वाकलितेषु तद्वृत्तिसाधारणरूपमवधार्य्य सामान्यं गृह्यते इति सापेक्षं तद्रूपं गृह्यते। तत्र बौद्धरीत्या-प्रत्यक्षस्य स्वलक्षण-

मात्रग्राहित्वान्न विकल्पग्राहित्वम्। तत्पृष्ठभाविनो विकल्पास्तु स्वभावत एव वस्तुसंस्पर्शकौशलशून्यात्मान इति विकल्पविषयीकृतस्यापि सामान्यस्य न परमार्थसत्त्वम्। विकल्पविषयत्वेनैवानुमानं शब्दश्च न सामान्यवास्तवत्वव्यवस्थापकौ।

जातिव्यक्तिसम्बन्धानुपपत्त्याऽपि तदसत्त्वम् किं प्रतिपिण्डं कार्त्स्न्येन वर्तते जातिः, उतैकदेशेन। 'पिण्डे सामान्यमन्यत्र यदि कार्त्स्न्येन वर्त्तते। तत्रैवास्य समाप्तत्वात् तन्न स्यात् पिण्डान्तरे ग्रहः। "एकदेशेन वृत्ते तु गोत्वजातिर्न कुत्रचित् समग्रास्तीति गोबुद्धिः प्रतिपिण्डं कथं भवेत् ? निरवयवत्वान्न तस्या एक देशः संभवति।

किञ्च—सर्वसर्वगता वा स्यात् पिण्डसर्वगतापि वा।
सर्वसर्वगतत्वे स्यात् कर्कादावपि गोमतिः॥
अश्वधीः शावलेयादावुष्ट्रबुद्धिर्गजादिषु।

न च कर्कादिपिण्डानां गोत्वव्यञ्जकत्वाभावान्न सांकर्य्यमिति वाच्यम् खण्डादिव्यक्त्यभिव्यक्तगोत्वस्यानंशकत्वात्।

सर्वत्रैव प्रतीयेत नवा सर्वगतं भवेत्।

पिण्डसर्वगतत्वेऽपि नैवाद्यजातायां गवि गोप्रत्ययो भवितुमर्हति।

पिण्डेनासीदसंजाते जातिर्जाते च विद्यते।
संक्रामति न चान्यस्यात् पिण्डादन्यत्र निष्क्रिया॥
आयान्त्यपि न तं पिण्डमपोहति पुरातनम्।
न चांशैर्वर्तते तत्र कष्टा व्यसनसन्ततिः॥
न याति न च तत्रासीन्न चोत्पन्नं न चांशवत्।
जहाति पूर्वं नाधारमहो व्यसनसंततिः॥

इति च।

'सामान्यं विशेष इति बुद्ध्यपेक्षम्' इति कणादसूत्र (१।२।३) सामान्यं लक्षितम्। द्विविधं सामान्यम् परमपरञ्च। परं सत्ता अपरं सत्ताव्याप्यंद्रव्यत्वादि। सामान्यस्य तद्विशेषस्य लक्षणं बुद्धिरेव, अनुवृत्त-बुद्धिः सामान्यस्य, व्यावृत्तबुद्धिर्विशेषस्य, इतिनाद्वयमवच्छिद्य परामृश्यते, तेन बुद्ध्यपेक्षमिति नपुंसकनिर्देशः।

अथवा बुद्धिरपेक्षा, लिङ्गं लक्षणं यस्य तद्बुद्धचपेक्षम्। तत्र नित्यमनेकसमवेतमनेकव्यक्तिवृत्ति सामान्यम्, नित्यत्वे सत्यस्वान्योऽन्याभावसमानाधिकरणत्वं वा? परमपरमपि सामान्यं विशेषसंज्ञामपि लभते। यथा द्रव्यमिदं द्रव्यमिदम् इत्यनुवृत्तप्रत्यये सत्येव नायं गुणो नेदं कर्मेति विशेषप्रत्ययो भवति तथा च द्रव्यत्वादीनां सामान्यानामेव विशेषत्वम्। विधिरूपं सामान्यं नास्त्येव अनुगतबुद्धेरतद्व्यावृत्यैवोपपत्तेः। गौरयमिति प्रतीतेरगोव्यावृत्तोऽयमित्येवविषयः। जातिवादिनाऽपि गोत्वादिविशिष्टप्रत्ययस्य तद्विषयत्वाभ्युपगमात्। नहि वैशिष्ट्यमतद्व्यावृत्तेरन्यत्, गवादिपदप्रवृत्तिनिमित्तमप्यगोव्यावृत्यादिरेव।

ननु वस्तुबुद्धिर्हि सर्वत्र व्यावृत्यनुगमात्मिका जायते। द्वयात्मकत्वेनापि स न सिद्धयति। केवलविशेषात्मकपदार्थपक्षे सामान्यप्रतीतेर्नालम्बनत्वम्। सामान्यमात्रवादे विशेषबुद्धेरनुपपत्तिः। न चान्यतराबुद्धिर्भ्रान्तिर्बाधाभावात्।

नहि मरुमरीचिप्रतीतित्वत् सामान्यप्रत्ययोपमर्देन विशेषप्रतीतिः। विशेषोपमर्देन वा सामान्यप्रतीतिः। किन्त्वविरोधेनोभयावभासः इति चेन्न परस्परविरुद्धत्वेन तदयोगात्। नह्येकस्य विरुद्धं नानारूपं संभवति। तदेव सामान्यं तदेव विशेषः, तदेव नित्यम्, तदेवानित्यमिति नोपपद्यते। न च तथादृष्टत्वान्नविरोध इति वाच्यम्, चाक्षुषादिप्रत्यक्षप्रत्ययस्यानुवृत्ताग्राहकत्वात्।

विकल्पविप्रलब्धबुद्धयोऽनेकरूपतां प्रतिपद्यन्ते। तस्मात्स्वलक्षणमेव वस्तुनोरूपमितरस्तु कल्पनामयम्। ननेति प्रत्ययादेव धियां मिथ्यात्वम्, येषु सामान्यमनुगतं तेषु बुद्धयाननुसन्धीयमानेषु तद्वृत्तिसामान्यं नानुसन्धातुं शक्यते। क्षणिकप्रत्ययेन नानेकव्यक्तिग्रहणसंभवो, नच तदन्तरानुगमप्रत्ययः संभवति।

ननु तर्हि गौ गौरित्यनुगतप्रतीतेः किमालम्बनमिति चेन्न, विकल्पानामर्थशून्यत्वात्। यथा सत्तादिसामान्यानां निःसामान्यत्वेऽपि औपाधिक अनुगत प्रत्ययः, तथैव गवादिष्वपि एकार्थक्रियाकारित्वेनानुगतप्रत्यय उपपद्यते।

'यदेव वाहदोहादि कार्य्यमेकेन जन्यते।
गोपिण्डेन तदेवान्यैरिति तेष्वनुवृत्तधीः' ॥

यद्यपि प्रतिव्यक्तिकार्य्यमपि भिन्नमेव तथापि तत्रैकत्वोपचारो भवत्येव। यथा कर्कादिकार्य्याद् गवादिकार्य्यान्यत्वं न तथा खण्डकार्य्यान्मुण्ड-कार्य्यस्य भिन्नत्वं लोके दृश्यते। यद्यपि कार्य्यं तद्दर्शनञ्च प्रतिव्यक्ति भिन्नं दर्शनञ्चापि भिन्नमेव, तथापि स्वपृष्टभाविप्रत्यवमर्शाख्यकार्य्यैक्यादेक-मित्युच्यते। यथैव शाबलेयादिपिण्डदर्शनेऽपि गौरित्येवावमर्श इति तदेक-त्वमुच्यते।

'एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी।
एकधीहेतुभावेन व्यक्तिनामपि भिन्नता' ॥

यद्यपि सामान्येऽनभ्युपगम्यमाने सम्बन्धग्रहणाधीनजन्मनोः शब्दानुमानयोः कथं प्रवृत्तिः। व्यक्तिषु सम्बन्धो न ग्रहीतुं शक्यते, व्यक्तीनामानन्त्यात्।

एकस्यां व्यक्तौ सम्बन्धग्रहे ततोऽन्यत्र शब्दप्रयोगो न स्यात्। तथापि प्रत्यक्षविषये स्वलक्षणे तयोरप्रवृत्तावपि विकल्पविषये तत्प्रवृत्तेः। तदुक्तम्—

विकल्पविषये वृत्तिरिष्टा शब्दानुमानयोः।
'अवस्तु निषयाश्चैते विकल्पा इति वर्णितम्' ॥

विकल्पानां वस्तुविषयत्वाभावेऽपि अपोहविषयत्वमस्त्येव। तदुक्तम्—

'अतद्रूपपरावृत्तिस्वभावमबहिर्गतम्।
बहिस्थमिव सामान्यमालम्बते हि विकल्पः ॥
या च भूमिर्विकल्पानां स एव विषयो गिराम्।
अत एव हि शब्दार्थमन्यापोहं प्रचक्षते' ॥

विकल्पा वस्त्वसंस्पर्शिनः।

'एकस्यार्थस्वभावस्य प्रत्यक्षस्य सतः स्वयम्।
कोऽन्यो न दृष्टो भागः स्याद्यः प्रमाणैः परीक्ष्यते' ॥

यथारूपसाधर्म्यसमारोपितरजताकारनिवारणाय नेदं रजतमिति शुक्तौ प्रमाणान्तरं प्रवर्त्तते तथेहापि भ्रमनिर्मितसमारोपिताकार-निवारणाय शावलेयादि स्वलक्षणे निर्विकल्पेन सर्वात्मना गृहीतेऽपि निमि-त्तादारोपितमगोरूपमिव निवारयन्ति विकल्पाः, अगौर्न भवतीति। नात्र स्वलक्षणे तेषां व्यापारः, प्रागेव गृहीतत्वात्।

नन्वनेकविशेषणविशिष्टस्य वस्तुनः विशेषणनिकरूषितस्यापि वस्तुनः किञ्चिद्विशेषणविकल्पैर्गृह्यतामिति चेन्न, विशेषणोपकारशक्ति-व्यतिरिक्तात्मनोऽनुपलम्भादभेदे सति तत्तद्विशेषणोपकार्य्यवस्तु स्वरूप-ग्रहणवेलायामेव ग्रहणेन तदयोगात्।

मीमांसकास्तु—तन्न क्षमन्ते। यथाहि—अपोहो नाम व्यावृत्तिरभाव-इत्यनर्थान्तरम्। नचाभावः स्वातन्त्र्येणावभासते। घटाभाववद्भूतलमिति भूतलाद्याश्रयत्वेनैव तत्प्रतीतेः। बौद्धमतेन तस्याश्रयः संभवति स्वलक्षणस्य नाश्रयत्वम्, तस्य विकल्पभूमित्वाभावात्। नाप्यवान्तरसामान्यं शावले-यत्वादि तदाश्रयः, यतस्तः शावलेयनिवृत्तेराश्रयताम्प्रतिपद्यते, नह्येवमु-पपद्यते अशाबलेयो भवतीति गौः, किन्तु शावलेय इति। शावलेयव्यावृत्ति-र्हि गोष्वपि बाहुलेयादिष्वस्ति।

अथवा शावलेयादि स्वलक्षणसमुदायमगोव्यावृत्तेराश्रयं ब्रूयुः। सोऽप्यघटमान एव। समुदायिव्यतिरेकेण तस्यानुपलम्भात्। समुदायिनां स्वलक्षणानामानन्त्याद्वर्गीकरणासंभवात्। तस्मात्समुदायोऽपि नाश्रयः। तस्मात्सर्वसाधारणं प्रतिपिण्डं परिसमाप्तं किमपि नतनमगोव्या-वृत्तेरधिकरणमभिधातव्यम्, तच्च गोत्वमेव। किञ्चैवमश्वादयो विधि-रूपतया न गृह्यन्ते।

किन्त्वन्यव्यवच्छेदेनैवेति तेषामपि व्यवच्छेदग्रहणे सैव वार्त्तेति मेदानीं विकल्पैः क्वचिदपोहो ग्रहीतुं शक्यते। न च विकल्पेन कश्चिद् व्यवहारः संभवति। अपि च यदि गवादि सर्वेऽपि शब्दा अपोहवाचका-स्तर्हि सर्वे पर्य्यायवाचिनो भवेयुः। न चापोहभेदाददोषः, अपोहभेदा-संभवात्। भिद्यमानत्वे वा वस्तुत्वप्रसक्तिः।

न चैवं सामान्यवाचकत्वेऽपि स्वलक्षणवत् सैवाव्यवस्था। सामान्यानां विधिरूपत्वेन परस्परसंरहित( भिन्न )स्वभावतया नानात्वावगमात्। न चैवमभावभेदः संभवति, न च कर्काद्यनुयोगिभेदादपोहभेदः, तेषामाधारत्वस्य निरस्तत्वात्। आधारभेदेन तद्भेदाभ्युपगमे प्रतिस्वलक्षणमपोहतद्भेदप्रसङ्गः। ततश्च सामान्यस्थानापन्नताऽस्य न संभवति। न च प्रतियोगि( अपोह्य )भेदात्तद्भेदः। अपोह्यभेदादपोहभेदस्य गौणत्वेन पर्य्यायत्वानपनोदकत्वात्।

वस्तुतस्तु नापोह्यभेदादपोहभेदो यो हि संभावितसंसर्गैराधारैरपि न भिद्यते स पूर्ववर्त्तिभिरलब्धसम्बन्धैरपि बाह्यैरपोह्यैः कथं भेत्स्यते ?

किञ्च यद्यपोह्यभेदाद्भिन्नत्वमपोहस्य तदाऽपोह्यैक्यात्तदैक्यमपि स्यात्। ततश्च गवाश्वयोरन्यापोहे न व्यवस्थाप्यमानयोरगावोऽनश्वाश्च हस्त्यादयोऽपोह्यास्तुल्या भूयांसो वा भवन्ति।

असाधारणस्तु एको गौरश्वे गवि चाश्वोतिरिच्यते। तन्नेहापोह्यभेदाद् गवाश्वयोर्भेदो भवतु भूयसामपोह्यानामभेदादभेदो भवत्विति विचारणायां विप्रतिषिद्धधर्मस्य समवाये भूयसां स्यात् सधर्मत्वमित्यभेद एव न्यायो भवेत्।

अथ साधारणत्वादश्वापोह्य एव गोऽपोहेन व्यवस्थाप्य इष्यते स तर्हि सिंहादावप्यस्तीति। सोऽपीदानीं गौर्भवेत्। अथाश्वादिविशेषोद्घोषरहितमगोरूपं व्यवच्छेद्यमुच्यते, तत्प्रत्येकं ग्रहीतुमशक्यमानन्त्यात्। वर्गीकरणञ्च किञ्चिन्नास्ति।

नहि सर्वेषामगवामश्वादीनामेकदेशकालत्वं समस्ति। यदि गोप्रतिषेध एव वर्गीकरणहेतुस्तदा गौः पूर्वसिद्धः स्वीकार्य्यः। यत्प्रतिषेधेनागावः प्रतीयेरन्। पूर्वसिद्धे च गवि लब्धे किमगोभिः! किं वा तदपोहेन प्रयोजनम्? न च पूर्वसिद्धं गोस्वलक्षणमस्त्येवेति वाच्यम् तेन व्यवहारासंभवात्। गोसामान्ये तु पूर्वसिद्धे मृषापोहप्रयत्नः।

यदि गोसामान्यमगोप्रतिषेधेन सिद्ध्यति तदाऽन्योऽन्याश्रयता। अगोनिषेधेन गोसिद्धिः, गोसिद्ध्यायागो निषेधसिद्धिः।

किञ्चाश्वादयः सामान्यरूपेणापोह्येरन् विशेषात्मना वा ? नान्त्यः तदनङ्गत्वादशब्दवाच्यत्वाच्च। न प्रथमः, तेषामप्यपोहरूपत्वात्। कथमभावस्यैवाभावः क्रियते ? तथात्वे च प्रतिषेधद्वयसम्बन्धेन विधिरेवावतिष्ठते इति विधिरूपः शब्दार्थः स्यात्। अपोह्यात्मनोऽश्वादेर्योऽपोहः स तस्माद्विलक्षणोऽविलक्षणो वा। प्रथमे-अभावाद्वैलक्षण्य भावात्मतैव स्यात्। अन्त्ये यादृशोऽपोह्यस्तादृश एवापोह इति गौरप्यगौः स्यात्।

किञ्चापोहः शब्दार्थ इति पक्षे नीलमुत्पलमित्यादौ विशेषणविशेष्यसामानाधिकरण्यादिव्यवहारा लुप्येरन्। नह्येकस्मिन्नर्थे द्वयोरपोहयोर्वृत्तिरुपपद्यते। न चैकः कश्चिदर्थोऽस्ति यत्र द्वयोर्वृत्तिः स्यात्। स्वलक्षणस्याशब्दार्थत्वादन्यस्यावस्तुत्वात्। न च वृत्तिरपि काचिदस्ति सज्ज्ञेयादिशब्दानामपोहनिरूपणासंभवान्नापोहवाचित्वम्। नह्यसदज्ञेयं वा किञ्चिदवगतम्, यद् व्यवच्छिद्येत। ज्ञातञ्चेत् सदेव तज्ज्ञेयं चेन्यतः कथं सच्छब्देन सदेवोच्येत ? ज्ञेयशब्देन न ज्ञेयमेवोपोह्यते। अज्ञातन्तु नितरामनपोह्यम्। कल्पितं तु तद्वक्तुमशक्यम् कल्पनयैव सत्त्वाज् ज्ञेयत्वाच्च अपोहशब्दस्य किं वाच्यम् ? अनपोहो न भवतीत्यपोहः कश्चायमपोहः कथं वाऽसौ न भवति ? अभवन् वा किमवशिष्यते ?

'जातेरस्त्रीविषयादयोपधात्' ( पा. सू. ४।१।६३ )
'का जातिर्नाम' आकृतिग्रहणा जातिः। गृह्यतेऽनेनेति ग्रहणं। आकृतिर्ग्रहणं यस्याः सा अवयवसंनिवेशविशेषव्यङ्ग्या गोत्वादि जातिः। ब्राह्मणक्षत्रियादीनां संस्थानस्य सदृशत्वात्।

ब्राह्मणत्वादिकरनेन न लक्ष्यते इत्याह 'लिङ्गानाञ्च न सर्वभाक्'। लिङ्गानामिति कर्मणि षष्ठी। तेन सर्वाणि लिङ्गानि न भजति यः शब्दः सोऽपि जातिपरः। तथा च असर्वलिङ्गभाक्त्वं जातेर्लक्षणम्। तेन ब्राह्मणत्वादि जातिः सिद्ध्यति। तटादेः सर्वलिङ्गत्वेऽपि आकृतिग्रहणत्वाज्जातिरूपोपपत्तिः। देवदत्तयज्ञदत्तेत्यादीनामसर्वलिङ्गत्वेऽपि न जातिपरत्वम्, सकृदाख्यातग्राह्यत्वाभावात्। यथाऽयं गौः इति सकृदुपदिष्टा जातिः पिण्डान्तरे निश्चेतुं शक्या तथा न देवदत्तादिषु। अयं

ब्राह्मण इति सकृदुपदेशेन तद्भ्रातृपित्रादिरूपपिण्डान्तरे ब्राह्मणत्वं ग्रहीतुं शक्यत इति ब्राह्मणत्वादिजातिः। अत आह 'सकृदाख्यातनिर्ग्राह्या' इति।

'नाडायनं नपुंसक' मिति दर्शनात् गोत्रस्य सर्वलिङ्गत्वेऽपि गोत्रमपि जातिरिति पृथगुक्तम्। 'गोत्रञ्च चरणैः सह' इति। तथा च प्रवराध्याय-प्रसिद्धगोत्रप्रत्ययान्तमपत्यम्। चरणशब्दोऽध्ययनवचनः। उपचारा-च्चरणशब्देन शाखाध्यायिनः कठादयो गृह्यन्ते।

तत्रैव महाभाष्ये जातेरपरं लक्षणं यथा—

> प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद् गुणैः।
> असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः॥

सत्त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्यां याऽविर्भावतिरोभावैः प्राप्नोति सा यावद्द्रव्यभाविनी जातिः। या गुणैर्युगपद् द्रव्येण संबद्ध्यते सा जातिः। यथा निर्गुणस्य द्रव्यस्यानुपलम्भस्तथैव जातिरहितस्याप्यनुपलम्भः। बह्वर्थां अत्र अर्थशब्दो विषयवाची। सर्वव्यक्तिव्यापिनीं तां कवयो जातिं वदन्ति।

यदि प्रथमं जातिलक्षणं तदा कुमारवयोविशिष्टा स्त्री कुमारी, कुमारी भार्या यस्यासौ कुमारीभार्य इति प्राप्नोति, तत्राकृतिग्रहणलक्षणाया जातेः सत्त्वेन 'जातेश्च' (पा॰ सू॰ ६।३।४१) इति पुंवद्भावप्रतिषेधात्। अथोत्तरं जातिलक्षणम् तर्हि कौमारस्यायावद्द्रव्यभावित्वेन जातित्वाभावात् 'स्त्रियाः पुंवत्' (पा॰ सू॰ ६।३।३४) इत्यादिना पुंवद्भावे कुमारभार्य इति प्राप्नोति।

अत्र प्रथममेव लक्षणं महाभाष्यकारस्याभिमतम्। तथाहि 'ङ्याप्' इति सूत्रे 'युवतीतरा' इत्युदाहृतम्। यद्युत्तरं लक्षणमभिमतं स्यात्तर्हि यौवनस्य यावद्द्रव्यभावित्वाभावेन जातित्वाभावात्। जातेश्चेति पुंवद्भाव-प्रतिषेधो न स्यात्।

जननेन या प्राप्यते सा जातिरित्येके। जायेते भिन्नेष्वभिन्नाभिधान-प्रत्ययावित्यन्ये। नित्यमेकमनेकानुगतं सामान्यमित्यपरे।

'क्लेशमूलः कर्माशयो दृष्टादृष्टजन्म वेदनीय.' पातञ्जले (साधन पादे १२ सू०) भाष्ये। तत्र पुण्यापुण्यकर्माशयः, कामलोभमोहक्रोध-प्रसवः, दृष्टजन्मवेदनीयो, अदृष्टजन्मवेदनीयश्च। तीव्रसंवेगेन मन्त्रतपः-समाधिभिर्निर्वर्तित ईश्वरदेवता महर्षि महानुभावानामाराधनाद्वा यः परिनिष्पन्नः स सद्यः परिपच्यते पुण्यकर्माशयः। तथा तीव्रक्लेशेन पीडितव्याभितकृपणेषु विश्वासोपगतेषु वा महानुभावेषु तपस्विषु कृतः पुनः पुनरपकारः। सोऽपि पापकर्माशयः सद्यः परिपच्यते। यथा नन्दीश्वरः कुमारः मनुष्यपरिणामं हित्वा देवत्वेन परिणतः, तथा नहुषोऽपि देवानामिन्द्रः स्वकं परिणामं हित्वा तिर्य्यक्त्वेन परिणतः। नारकाणां दृष्टजन्मवेदनीयः क्षीणक्लेशानामदृष्ट-जन्मवेदनीयश्च कर्माशयो न भवति। 'सति मूले तद्विपाको जात्यायुर्भोगाः' १३ सूत्रभाष्येऽपि नन्दीश्वरवन्नहुषवद्वेत्युक्तम्।

त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिर्पक्षै स्त्रिभिर्दिनैः।
अत्युग्रपुण्यपापानामिहैव फलमश्नुते॥

इति स्मरणाच्च।

तत्रैव कैवल्यपादे 'जात्यन्तरपरिणामः प्रकृत्यापूरात्' (२० सूत्रे) कामे-न्द्रियाणामन्यजातीयपरिणतानाम् जात्यन्तरपरिणामः प्रकृत्या पूरादुक्तम्। पूर्वपरिणामाय उत्तरपरिणामोपजनस्तेषामपूर्वावयवानुप्रवेशाद भवति। कामेन्द्रियप्रकृतयः, पृथिव्यादीनि भूतानि, अस्मिता च स्वं-स्वं विकारमनु-गृह्णन्ति, आपूरेण धर्मादिनिमित्तमपेक्षमाणाः। तत्रापि धर्मादिनिमित्तं प्रकृतिकार्यत्वान्न प्रकृतिप्रयोजकं किन्तु ततो वरणभेदप्रति बन्धनिरसनं भवति।

तदप्युक्तम्। 'निमित्तप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिक-वत्' (१३ सू०) नहि धर्मादिनिमित्तं प्रयोजकं प्रकृतीनां भवति। नहि कार्य्येण कारणं प्रवर्त्यते। वरणभेदस्तु ततः क्षेत्रिकवत्। यथा क्षेत्रिकः केदारादपां पूरणात् केदारान्तरं पिप्लावयिषुः समं निम्नं निम्नतरं वा नापः पाणिना अपकर्षति, आवरणन्तु तासां भिनत्ति। तस्मिन् भिन्ने स्वयमेवापः केदारा-न्तरमाप्लावयन्ति। तथा धर्मः प्रकृतीनामावरणमधर्मं भिनत्ति। तस्मिन् भिन्ने स्वयमेव प्रकृतयः स्वं-स्वं विकारमाप्लावयन्ति।

यथावा स एव क्षेत्रिकः तस्मिन्नेव केदारे न प्रभवति औदकान् भौमान् वा रसान् धान्यमूलानि अनुप्रवेशयितुं किं तर्हि मुद्ग गवेधुक श्यामाकादीन् ततोऽपकर्षति अपकृष्टेषु तेषु स्वयमेव रसा धान्यमूलानि अनुप्रविशन्ति। तथा धर्मोऽधर्मस्य निवृत्ति- मात्रे कारणम्, शुद्धयशुद्धयो-रत्यन्तविरोधात्। न तु प्रकृतिप्रवृत्तौ धर्मो हेतुर्भवति। अत एव नन्दीश्वरादय उदाहार्य्याः। विपर्य्ययेणाऽप्यधर्मो धर्मं बाधते। ततश्चा-शुद्धिपरिणाम इति। तत्रापि नहुषाजगरादय उदाहार्य्याः।

'अतिशायने तमबिष्ठनौ' (पा० सू० ५।३।५५) यदप्युच्यते जातेर्नेति वक्तव्यमिति। न वक्तव्यम् जननेन या प्राप्यते सा जातिः। न चैतस्यार्थप्र-कर्षापकर्षौ स्तः। एतेन जन्मना या प्राप्यते सा जातिरिति गुणोपष्टम्भादिना जातिरिति सिद्धयति। यथा काकाज्जातमात्रे प्राणिनि काकत्वं, शुकाज्जाते शुकत्वं, मनुष्याज्जातमात्रे च मनुष्यत्वं, शूद्राज्जातमात्रे शूद्रत्वम्, क्षत्रिया-ज्जाते क्षत्रियत्वम्।

कश्चिद्राजगृहे कश्चिद्भिक्षुगृहे जातो न तयोर्गुणातिशयः। एवञ्च ब्राह्मणाज्जातो ब्राह्मणो क्षत्रियाज्जातः क्षत्रियः नानयोः कोऽपि दृश्यो विशेषः। केवलजातिभेददर्शनात्तेषां भिन्नाः संस्काराः। यथा काकाज्जाते शिशौ न स्तनपानसंस्कारः काकेन क्रियते, न वा गोवत्से काकवत् मुखेनान्न-रससंस्कारः।

'पुंयोगादाख्यायाम्' (पा० सू० ४।१।४८)

त्रीणि यस्यावदातानि विद्या योनिश्च कर्म च।
एतच्छिवं विजानीहि ब्राह्मणाग्रस्य लक्षणम्॥

'अनृष्यानन्तर्ये विदादिभ्योऽञ्' (४।१।१०४) अनृष्यान्तर्य इत्युच्यते। तत्रेदं न सिद्धयति कौशिको विश्वामित्रः इति। किं कारणम्, विश्वामित्र-स्तपस्तेपे नानृषिः स्यामिति। तत्र भवान् ऋषिः सम्पन्नः। स पुनस्तपस्तेपे नानृषेः पुत्रः स्यामिति। तत्र भवान् गाधिरपि ऋषिः सम्पन्नः। स पुनस्त-पस्तेपे नानृषेः पौत्रः स्यामिति। तत्र भवान् कुशिकोऽपि ऋषिः सम्पन्नः।

तदेतद्दृष्यानन्तर्य्यं भवति विरुद्धसंस्कारमात्रेण जातिपरिवर्त्तनं नैव भवतीत्यनेन ज्ञायते। अन्यथा तपश्चरणं व्यर्थमेव स्यात्। तपश्चरणसामर्थ्यञ्च तदानीं विशिष्टमेवासीत्।

'प्रत्यभिवादेऽशूद्रे। (पा० सू० ८।२।८३) भो राजन्यविशां वेति अभिवादये वक्तव्यम्' इन्द्रवर्माहं भोः। आयुष्मानेधीन्द्रवर्मन् ३। विश् इन्द्र इन्द्रपालितो हं भोः, आयुष्मानेधीन्द्रपालित ३ इत्यादिना राजन्यवैश्ययोर्विकल्पेन प्लुतविधानम्। शूद्रब्राह्मणयोश्च नित्यं प्लुतं विहितम् भारते-सूतपुत्रकर्णवशिष्ठारुन्धत्याद्युत्पत्तिः ब्राह्मणब्रुवः।

कौटल्यः—स्वधर्मः स्वर्गायानन्त्याय च। तस्यातिक्रमे लोकः संकरादुच्छिद्येत।

तस्मात्स्वधर्मं भूतानां राजा न व्यभिचारयेत्।
स्वधर्मं सन्दधानो हि प्रेत्य चेह च नन्दति॥
व्यवस्थितार्यमर्य्यादः कृतवर्णाश्रमस्थितिः।
त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति॥

# पुराणप्रामाण्यम्

यदुक्तं-पुराणानि सर्वथाधुनिकानि तत एव तत्र विकासक्रमेण तेषां सिद्धान्तानां प्रादुर्भावानन्तरं तत्समर्थनाय पुराणानि निर्मितानीति तन्न, मन्त्रब्राह्मणात्मके वेदे पुराणानां चर्चितत्वत् ।

'तं गाथया पुराण्या पुनानमभ्यनूषत् (ऋ० ६।६६।४) तं सोमं पूयमान पुराण्या पुराकृतया गाथया स्तुत्या स्तोतारः अभ्यनूषत् अभिष्टुवन्ति ।

सना पुराणमध्येम्याारात् ( ऋ० १।३४।६ ) आरात् अधुनाऽहं सना सनातनं पुराणं अध्येमि पठामि !

पुराणमोकः सख्यं शिवं वाम् (ऋ० ३।५८।६) हे अश्विनौ वां युवयोः ओकः स्थानं पुराणेषु युस्मत्स्वरूपमाहात्म्यादि वर्णनात् युष्माकं सख्यञ्च शिवं कल्याणमयम् चाक्लृपे, तेन ऋषयो मनुष्या यज्ञे जाते पितरो नः पुराणे पुराणवर्णितं सृष्टिस्वरूपं यज्ञे जाते निष्पद्यते । तदैव नः पितर ऋषयो मनुष्याश्च चाक्लृपे उत्पन्नाः ।

यत्र स्कम्भः प्रजनयन् पुराणं व्यवर्त्तयत् । 'एकं तदङ्गम् स्कम्भस्य पुराणमनुसंविदुः'(अथर्व १।१७ २६) स्कम्भः सर्वाधारः परमेश्वरो व्यासरूपेण पुराणं पुराणसाहित्यं प्रजनयन् नित्यसिद्धगुरुपरम्परा प्राप्तं ग्रन्थरूपेण प्रादुर्भावयत् । तस्य वेदस्यैकमङ्ग स्कम्भस्य परमात्मनोऽनुवर्णनं पुराण संविदुः ।

ये अर्वाङ् मध्ये उत वायुपुराणं वेदं विद्वांसमभितो वदन्ति ( अ० १०।८।१७) इयं नारी पतिलोकं वृणाना धर्मं पुराणमनुपालयन्ती (१८।३।१)

इतिहासस्य च पुराणस्य गाथानाञ्च नाराशंसीनाञ्च प्रियं धाम भवति य एवं वेद (१५।६।१२) ये त आसीद्भूमिः पूर्वायामद्धातय इदं विदुः यो वैतां विद्यान्नामथा मन्येत पुराणवित् (अ० ११।८।७)

ऋचः सामानि छन्दांसि पुराणं यजुषा सह ।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिवि श्रिताः (११।११।७।२४)
इतिहासपुराणं पञ्चमं वेदानां वेदम् (छा० ७।१।२)
इतिहासपुराणम् (बृहदा० २।४।११)

एवमिमे सर्वे वेदा निर्मिता सेतिहासा सपुराणाः (गोपथ पू० ०२।१०)

मध्वाहुतयो ह वा एता देवानां यदनुशासनानि विद्यावाको वाक्यमितिहासः पुराणं गाथा नाराशंसी (शत० ११।५।६।८) पञ्चवेदा निरमिमीत सर्पवेद, पिशाचवेदं, असुरवेदमितिहासवेदं पुराणवेदम् (गोपथ० १।१०) वाकोवाक्यमितिहासपुराणमित्यहरहः स्वाध्यायमधीते (शत० ११५।७।६)

ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासपुराणं विद्या उपनिषदः श्लोकाः सूत्राणि अनुव्याख्यानानि वाचैव सम्राट् प्रजायन्ते (श० १४।६।१०।६) तान् उपदिशति पुराणं वेदः (श० १३।४।३ १३) ब्राह्मणानि इतिहासपुराणानि कल्पान् गाथा नाराशसीरिति (तैत्तरीयारण्यक० २।६) अथ नममे इति किञ्चत्पुराणमचक्षीत (शतपथे १३।४।३।१।३)

सबृहती दिशमनुव्यचनेन तमितिहासश्च पुराणञ्च गाथाश्च नाराशंसीश्चानुव्यचत् (अ०१५ ६ ११)

मन्त्रा ब्राह्मणानि उपनिषदः अपौरुषेयवेदान्तर्गता एव। तेन तेषां कालनिर्धारणमशुद्धमेव, वाचा विरूपनित्यया इति ऋङ्मन्त्रेणैव तेषां नित्यत्वप्रतिपादनात्। तेषु पुराणनामश्रवणात्। प्रवाहरूपेण पुराणानामपि नित्यत्वमेव। आनुपूर्वीपरिवर्त्तनसंभवेन पुराणानां पौरुषेयत्वं तदभावाद्वेदानामपौरुषेयत्वमिति विवेकः।

सूत्रेष्वपि-अथ स्वाध्यायमधीयते। ऋचो यजूंषि सामान्यथर्वाङ्गिरसो ब्रह्माणानि कल्पान् गाथा नाराशंसीतिहासः पुराणानि इति अमृताहुतिभिः (आश्व० गृ०सू० ३।३।१) इतिहासपुराणानि अमृतस्य कुल्याः (आ०गृ०सू० ४।६) आयुष्मतां कथां कीर्तयन्तो माङ्गल्यानीतिहासपुराणानि (आ० गृ० ४।६
पुराणे श्लोकमुदाहरन्ति—

अष्टाशीति सहस्राणि ये प्रजामीषिरर्षयः ।
दक्षिणेनार्य्यमणः पन्था न ते श्मशानानि भेजिरे ।।
अष्टाशीतिसहस्राणि ये प्रजानेषिरर्षयः !
उत्तरेणार्य्यमणः पन्था। तं तेऽमृतत्वं हि कल्पते । (आ०ध० सू० २।२३।३५)

आभूतसंप्लबास्ते स्वर्गजितः पुनः स्वर्गे बीजार्था भवन्ति इति भविष्यत्पुराणे । (आपस्त० धर्मसूत्र २।२४।१६) ब्रह्माण्डपुराणे अनुसङ्गवादे ५४ अध्याये । १५६।१६६ विष्णुपुराणे । ३।२ मात्स्ये । अ० १२४।१०२ पद्मपुराणे सृष्टिखण्डे श्लोकौ दृश्येते ।

वुलरप्रभृतयः आपस्तम्बसूत्रकालः पाणिनिकालात्पूर्वतन इत्यभ्युपगच्छन्ति । सनातनधर्मदृष्ट्या तु तान्यप्यनादीन्येव पौरुषेयत्वात्परिवर्त्तनमानुपूर्वीणाम् ।

स्मृतिषु च —

'ब्राह्मणक्षत्रियविशस्त्रयो वर्णा द्विजातयः ।
श्रुतिस्मृतिपुराणोक्तधर्मयोगस्तु नेतरः ।। (व्यासस्मृतिः १।५)
मीमांसते च यो वेदान् षड्भिरङ्गैः सविस्तरैः ।
इतिहासपुराणानि स भवेद्वेदपारगः ।। (व्या० ४।४५)
इतिहासपुराणकुशलः । (गौतमस्मृतिः ८।२।)
तस्य व्यवहारो वेदो धर्मशास्त्राण्यङ्गान्युपवेदाः पुराणम् (गो०११ १)
वेदं धर्मपुराणञ्च तथा तत्त्वानि नित्यशः ।
संवत्सरोषिते शिष्ये गुरुर्ज्ञानं विनिर्दिशेत् ।। (उशनसस्मृति० ३।३४ ।)
पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ।। (याज्ञ्यवल्क्ये ३ ।)

ऐतिहासिकानां विचाररीतिर्वस्तूपस्थापन एवोपयुज्यते, न तु तस्य वस्तुतोऽयोग्यता योग्यता विचारे, तत्र तु मीमांसकानां रीतिरेवोपयुज्यते ।

युक्तीनां धर्मे न स्वतः प्रामाण्यम् । युक्तिरनुमानमेव । अदृष्टविशेषसहकृतभूतविशेषारब्धशरीरत्वम् ब्राह्मणत्वादिकम् । ब्राह्मणराजन्ययोः

( का० सू० २१।१ ) सर्वस्वं ब्राह्मणस्य ( का० श्रौ० सू० २१।१ कण्डिका १४ )

अथ यदि ब्राह्मणो यजेत् सर्ववेदसं दद्यात् (श० ब्रा० १६।६।२।६) ब्रह्मणे ब्राह्मणम् इत्यादि (शु० य०) ऊर्ध्वप्रमाणमास्यं ब्रह्मवास्यम्, १२, उरः क्षत्रियस्य १४ ऊर्ध्वं वाहू वा, १४ ऊरू वैश्यस्य।

शूद्रार्य्यौ चर्मणि परिमण्डले व्यायच्छेते (का० सू० १३ ३।७।)

अथ यदि ब्रह्मणो यजेत्, यदि बा राजन्यो यजेत् ( श० ब्रा० ५।१।४।२ ) रथकारः ऐन्द्राः क्षत्रियस्य चक्रदुन्दुभ्याः (१४।३।१३) क्षत्रियः सप्तदशेषु प्रव्याधानस्पति तीर्थादुदीचः (१६ का० सू०) ब्राह्मणा वा श्रुतेः (१५।८।१६ का० सू०) शतं ब्राह्मणाः सोमं भक्षयन्ति श्रुतिः।

राजयज्ञोऽश्वमेधः सर्वकामस्य (२०।१।१ का० सू०) क्षत्रिययज्ञ उ वा एष यदश्वमेधः (श० ब्रा० १३।४।१-२) आयोगवमाह श्वानं चतुरस्त्रमभिहन्यस्वेति (२०।२।३६) वैश्यायां शूद्रेण जातः आयोगव; सिप्राक मुसलेन हन्ति। प्रयाजेषु दक्षिणो ब्राह्मणो यजमानस्य यज्ञदानयुक्ताः स्वयं कृतास्त्रिस्रो गाथा गायति (७ का० सू०) राजन्यो धृतिपु युद्धजययुक्ताः (८)

अग्निहीना श्रोत्रियषण्ढवर्जम् (१-१-५) ब्राह्मणराजन्यवैश्यानां श्रुतेः ६। 'न विधौ परः शब्दार्थः'। रथकारस्याधाने ९। वर्षासु रथकार आदधीत।

न च रथक्रियायोगात् त्रैवर्णिकः नियतश्च १०। माहिष्येण करण्यां तु रथकारः प्रजायते। क्षत्रियाज्जातो वैश्यायां माहिष्यः। वैश्येन शूद्रायां जाता करणी। रथकारशब्दश्चात्र रूढः। रुढिश्च योगाद्बलीयसी (का० सू० भाष्ये) निषादस्थपतिर्गवेधुकेऽधिकृतः (१२ का०) यस्य रुद्रः पशून् संज्ञपयेत् स वास्तुमध्ये रौद्रं गावेधुकं चरुं निर्वपेत्, श्रुतां प्रकृत्य एतया निषादस्थपतिं याजयेत। अत्रापि न त्रैवर्णिकः किन्तु निषादश्चासौ स्थपतिश्च जात्यन्तरमेव ग्राह्यकूट दक्षिणाकाणो गर्दभ (हलाग्रस्थलोहः कूटम्)

ब्राह्मणा ऋत्विजो भक्षप्रतिषेधादितरयोः (का० सू० १।२ ८) तद्वै नाब्राह्मणः पिबेत्. अग्नौ ह्यधिश्रयन्ति तस्मान्नाब्राह्मणः पिबेत् (श्रुतिः कर्कभाष्ये।)

दर्शनाच्च ६। द्वया वै देवा देवा आहैव देवा। अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवास्तेषां विभक्त एवं भक्षः। आहुतय एव देवानां दक्षिणा वा मनुष्यदेवानां ब्राह्मणानाम्। आहुतिभिर्देवान् प्रीणाति दक्षिणाभिर्मनुष्य देवान् ब्राह्मणान्। स्मरन्ति ब्राह्मणस्याधिका प्रवचनयाजनप्रतिग्रहाः (का० भा०) उद्धृतवचोभिः ब्राह्मणादिजातिभेदतत्कृताधिकारभेदश्च सिद्धयति।

इतिहासस्य धर्मेऽप्रामाण्यम् १५३। अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितं नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेत् (बोधायनः १४८) शास्त्रस्य प्राबल्यम् १५६। नेन्द्रियाणि नानुमानम्। वेदा एवैनं वेदयन्ति तस्मादाहुर्वेदा इति पिप्पलादश्रुतिः।

यावत्सिन्धुविहरणी सूर्य्यस्योदयनं पुरा।
यावत्कृष्णोभिधावति तावद्वै ब्रह्मवर्चसम् ॥अ० १॥
देशधर्मान् जातिधर्मान् कुलधर्मांश्च शाश्वतान्।
पाखण्डगणधर्मांश्च शास्त्रेऽस्मिन्नुक्तवान् मनुः॥
यस्य देशस्य यो धर्मः प्रवृत्तः सार्वकालिकः।
श्रुतिस्मृत्यविरोधेन देशधर्मः स उच्यते॥

वीरमन्त्रोदये कात्यायनवचनम्—

व्यवहारो हि बलवान् धर्मस्तेनावहीयते।
नारदः-इतिहासपुराणाभ्यां वेदं समुपबृंहयेत।
बिभेत्यल्पश्रुताद्वेदः। वायुपुराणे, भारते च।
सूक्ष्मो हि भगवान् धर्मः परोक्षोऽर्थविचारणः।
अतः प्रत्यक्षमार्गेण व्यवहारगतिं नयेत्॥

नारदवचनस्य सर्वेषामाचाराणां स्मृतीनां वा समूलप्रत्यक्षदर्शनं विना न प्रामाण्यमित्यभिप्रायः।

अतएव भट्टपादैः सर्ववेष्टनस्मृतेर्यावत् श्रुतिदर्शनमननुष्ठानलक्षणमप्रामाण्यमुक्तम्। परैः पूज्यानामप्यत्राप्रवेशात्। इतः पतितानामपि तैः परिग्रहान्न-खिस्तमोहम्मदादिसमये विदुषामास्था।

भक्ष्यपेयाद्वैतरुचिश्च रागात् ।
प्रपाठकचतुःषष्ठिनियतस्वरकैः पदैः ।
लोकेष्वप्यश्रुतप्रायैः ऋग्वेदं कः करिष्यति ॥

तस्मादस्यापौरुषेयत्वम् । वार्तिके २५३ । वेदानुगुण्येनैवेतिहासप्रामाण्यम् ।

यौवनस्थैव कृष्णा हि वेदिमध्यात्समुत्थिता ।
साथ श्रीः श्रीश्च भूयोभिर्भुज्यमाना न दुष्यति ॥

महानुभावा किल तासु मध्यमा बभूव कन्यैव गते गतेऽहनि ।

अथवा बह्व्य एव ताः सदृशरूपाः द्रौपद्य एकत्वेनोपचरिता व्यवहारार्था पत्या गम्यते ।

अथवा नार्य्यर्जुनस्यैव केवलस्य भविष्यति, साधारणप्रसिद्धिस्तु निश्छिद्रत्वाप्रदर्शिता सभामध्ये रजस्वला वेषधारणवत् ।

देशजातिकुलधर्मा आम्नायैरविरुद्धाः प्रमाणम् । गौतमः । 'क्वचिद् दुर्बलेनापि बलवतो बाधः, मिताक्षरा । सुराग्रहस्य—

कलौ युगे त्विमान् धर्मान् वर्ज्यानाहुर्मनीषिणः ।

इति श्रुतिप्राप्तस्यापि कालिवर्जवचनेन बाधः ।

कश्चित्तु रजनीकान्तः 'हिन्दूनामुत्थानपतन' नामके ग्रन्थे घृणासूयादिवशंवदोऽतीव निन्दति वैदिकान्तत्सभ्यताञ्च । रक्तमिश्रणवशान्नात्र कश्चन शुद्ध आर्य्योऽवशिष्यते । जातिभेदो वर्णव्यवस्था चात्र सर्वानर्थमूलभूता । वेदैरेव वर्णव्यवस्थामुद्घोष्य परस्परं घृणामुत्पाद्य पारतन्त्र्यनिगडनिबद्धेयं जातिः । मिथ्याभिमानवशादन्यान् म्लेच्छशब्देनेयं संबोधयति । अत्र जातौ न केवलं गोमेधाश्वमेधादयो जघन्ययागाः प्रवृत्ताः किन्तु नरमेधोऽपि प्रचलितः । हरिश्चन्द्रसदृशस्य परमधर्मात्मनोऽपि यज्ञे अजीगर्तपुत्रस्य शुनःशेपस्य बलिदानायोजनं संवृत्तम् । कथञ्चिद्विश्वामित्रशरणग्रहणेन तस्यात्मरक्षणं जातम् । तन्मतरीत्या गोमेधादीनामन्यपथार्थकरणं वेदार्थकरणपद्धतिविरुद्धम् । वाममार्गीयैः प्रक्षिप्तमित्यादिकथनं ततोऽपि विप्रतिषिद्धम् । वाममार्गीया अपि स्वपूर्वजा एवेति ततोऽपि हिन्दूनां निन्दितत्वमेव सिद्ध्यति ।

सतीत्वप्रथयाप्यस्या जातेः पैशाचकानि कृत्यानि व्यज्यन्ते। तथाकथितस्य भगवतो वेदस्य ब्राह्मणोऽस्य मुखमासीदि'त्यादि मन्त्रा एव राष्ट्रियताध्वंसकाः। यावत्तादीयसत्ताऽक्षुण्णा स्थास्यति तावदस्या दासता स्थास्यत्येव।

वर्णव्यवस्थापसारणमन्तरा रोगकीटाणूनां विनाशोऽसंभव्येव। वर्णव्यवस्था बोधकान् ग्रन्थान् निबध्य क्वचित्संग्रहालये निक्षेप्तव्या। ब्राह्मणक्षत्रियादि-नामभिः परिचयदानं दण्डविधानेन वारयित्वैव स्वातन्त्र्यदर्शनं शक्यम्। भारतस्य वृथैव जगद्गुरुत्वाभिमानम्। जगद्गुरुत्वं तु ख्रिस्तीयधर्माधि-कारिणामेव संगच्छते। येहागत्य वनपर्वतारण्येषु सर्वथा संस्कारशून्यान् हिन्दून् शिक्षासंस्कारादिभिः संस्कुर्वन्ति। धन्यवादार्हश्च बृटिशशासका यैः सतीत्वप्रथाविरुद्धनियमादिनिर्माणेनासभ्यकृत्यानपनीतवन्तः। निरर्थक-श्रौतस्मार्तधर्माचरणैर्वेदमन्त्रघोषणादिभिर्वृथैव कालापव्ययं कुर्वाणाः समाजं पातयन्त्येव ब्राह्मणादयः।

किञ्च को धर्मः कश्चाधर्म इत्यस्मिन् विषये सर्वैरपि धर्मग्रन्थस्यैव प्रामाण्य-मभ्युपेयते प्रत्यक्षादिगम्यत्वे धर्मस्य तत्प्रामाण्यानभ्युगमाद्। तदुक्तं—

मतयो यत्र गच्छन्ति तत्र गच्छन्ति वानराः।
शास्त्राणि यत्र गच्छन्ति तत्र गच्छन्ति ते नराः।

तदभ्युपगमे गोनरादिघातस्यापि दोषत्वानापत्तेः। नहि लौकिकबुद्ध्यैव तद्दोषनिर्णयः, तस्यानैकविधत्वदर्शनात्। रूपे नेत्रस्यैव, गन्धे घ्राणस्यैव धर्म-ब्रह्मणोर्वेदस्यैव प्रामाण्यसंभवात्। वेदेन तूत्सर्गतो न हिंस्यात् सर्वाभूतानीति नीतिर्पिपीलिकादिप्राणिनामपि हिंसाया निषिद्धत्वात्। युद्धादाविव क्वचिद्वि-धानन्त्वपवादभूतमेव। सतीत्वव्यवस्था तु शास्त्रप्रामाण्यबुद्धीनां सतीनां स्वसामर्थ्यमूलिका। तदशक्तानां शास्त्रेषु वैधव्यधर्मपालनविकल्पस्यापि विधानात्। वेदप्रामाण्यविचारस्त्विहैवान्यत्र द्रष्टव्यः।

गालिप्रदानन्तु वेदनिन्दकस्य नास्तिकस्यैव शोभते तत्सर्वं बालचापलं वेदवेदान्तादि गंभीरार्थाज्ञानविजृम्भितम्। वर्णाश्रमादिधर्मस्य ब्रह्मज्ञान-स्य चापौरुषेयवेदमूल्यकत्वेनायस्तदौषत्वात् सर्वस्य। सांकर्य्यन्तु प्रमाण-शून्यमेव। व्यभिचारस्याद्यापि निन्दितत्वदर्शनात् स्त्रीरक्षणादौ भारतीयानां-

प्रयत्नविशेषदर्शनाच्च वैदिकधर्मभेदहेतुजातिभेदस्तु वस्तुस्थितिमूलको न घृणामूलकः। परमार्थतः सर्वस्यैवामृतपुत्रत्वाभ्युपगमात्।

एवमेव सन्तरामः बी०ए० स्वीये 'हमारा समाज' पुस्तके वक्ति सामाजिकसंघटनशक्तिरेव शास्त्रास्त्रवायुयानाद्यपेक्षयाऽपि महती शक्तिः। हिन्दूसमाजे जन्ममूलकोच्चावचभावेन तत्संघटनं भग्नम्। तेनैव मुष्टिमेयैः कैश्चिदसभ्यैरयं देशः पराक्रान्तः। क्षत्रियादीनां शौर्य्यपाण्डित्यधनादिभिरपि देशरक्षणं दुष्करं वृत्तं तेनैकत्वबन्धुत्वयोरभावादेव भारतस्य पतनम्। बहोः कालादनन्तरं स्वातन्त्र्यं प्रकृतिप्रसादात्प्राप्तम्। पूर्वमपि सिक्खोत्थानसमये शिवाजी समुत्थानसमयेऽपि स्वातन्त्र्यप्राप्तेरवसरः समायातः। परन्तु रोगनिदाननिराकरणाभावान्न किञ्चिदाप्तम् न वाऽप्स्यते। समाजशास्त्रस्यायं नियमः यत्र परस्परं भोजनविवाहादिकपरिवर्जनं क्रियते तत्रोच्चावचभावो वर्धते। हिन्दूनां न केवलमहिन्दुभ्यः किन्तु परस्परमपि नानाविधजात्युपजातिभेदकल्पनया भोजनविवाहादिव्यवहारः परिवर्ज्यते। तेनैव भेदभावसंवर्धनात् सामाजिकराजनीतिककार्य्येष्वपि सहयोगो न भवति। यदेव ब्राह्मणानां हितकरं तदेव चर्मकारस्याहितकरम्। तेन राष्ट्रैक्यभावनाऽपि भज्यते। तदप्यविचारितरमणीयम् हिन्दुशास्त्रतात्पर्यानभिज्ञानात्। तथाहि संघटनदार्ढ्यस्य समाजोन्नतेश्च मूलं विवेकः, सौहार्दञ्च, न भोजनविवाहादिविवेकपरित्यागः। तादृग्विवेकहीनानामपि शुनां तददर्शनात्। प्राचीने भारते भोजनविवाहादिविवेकवतोऽपि भारतीयसमाजस्य समुन्नतत्वविज्ञानात्।

## हिन्दूशब्दविचारः

हिन्दूशब्दसम्बन्धे कश्चिद्वक्ति। नायं शब्दः संस्कृतस्य न वा पालीभाषायाः, भारतीयग्रन्थेषु तदनुपलम्भात् पारसीकैरयं शब्दो विदेशीयानां विशेषतश्च भारतीयानां कृते प्रयुक्तः। सकारस्थाने हकारप्रयोगात् सिन्धु शब्दस्थाने हिन्दशब्दः प्रयुज्यते सरस्वती हरस्वती सप्त हप्तेत्यादि प्रयोगवत्।

अन्यैस्तु-संस्कृतसकारस्य प्राकृते हकारः संपद्यते इत्युच्यते। तच्च प्रमाणशून्यम्। वररुचिहेमचन्द्रादिकृतप्राकृतव्याकरणविरुद्धत्वात्। सूत्रेण सुत्तेण, सत्यं सच्च इत्यादि प्रयोगेषु तदनुसारेणैव ख घ थ ध भ वर्णानामेव स्थाने हकारः संपद्यते "ख घ थ ध भां हः" इति सूत्रात् मुखं मुहं, मेखला, मेहला मेघः मेहः इत्यादिप्रयोगाश्च दृश्यन्ते।

केषाञ्चिद्रीत्या आर्य्यानार्य्यद्रविडादिजातीनामेकसूत्रता सम्पत्त्यर्थमेवायं शब्दोऽङ्गीकृतः।

अन्यरीत्या—घृणावशात् मुस्लिमजातीयैरयं शब्दो भारतीयेषु प्रयुज्यते। तन्मतरीत्या चौरदासाद्यर्थकोऽयं शब्दः।

वस्तुतस्तु विभिन्नभाषासु समानविरुद्धाः अर्थाः प्रतिभान्ति। अतएव संस्कृते देवतार्थको देवशब्दः फारसीभाषायां दैत्यार्थको भवति। पारसीभाषायां हस्तार्थकः दस्त शब्दो हिन्दीभाषायां मलार्थको भवति। मारः संस्कृते कामदेवार्थकः फारसीभाषायां सर्पार्थको भवति।

वस्तुतस्तु ख्रिस्तीयसप्तम्यां शत्यां हजरत मुहम्मद महाशयस्य प्रादुर्भावः। तत एव मुस्लिममतानुयायिनां सत्ता। तेन ततोऽयं शब्दो घृणावशात् प्रयुक्त इति मतं न समीचीनम्। यतः पारसीकानां शातीरनामके धर्मग्रन्थे-महम्मदाविर्भावकालादनेकसहस्रवर्षेभ्यः प्राक् प्रसिद्धसमुत्पत्तिकानां भारतीयानां कृते हिन्दुशब्दप्रयोगः।

तथाहि-'अकन् विरहमने व्यासनाम अजहिन्द आमद वसदाता कि अकलचूनास्नत। तदर्थस्तु-व्यासाह्वयो ब्राह्मणो हिन्द (भारत) देशात् समागताः यादृशः कश्चिदपि मतिमान्नासीत्। अयञ्च व्यासः कृष्णद्वैपायनमहर्षिः भारतपुराणादिरचयितैवेति सुशक्यनिर्णयः।

तत्रैव—'चूं-व्यास हिन्दो वलख आमद गश्ताशप जरदश्त शव रव्वाद।' यदा स भारतीयो व्यासः वलख देशमागतस्तदा ईरान सम्राजा गश्ताशयेन जरदश्तो जटथुस्तः पारसीकधर्मप्रवर्त्तकः समाहूतः।

'मन मरदे अमहिन्द निजादः।' अहं भारतसमुत्पन्नः 'व हिन्द वाजगश्त' स पुनश्च हिन्ददेशं प्रत्यागतः।

चन्दवरदायी महाशयेन तदैव पृथ्वीराजपितुर्वेनस्य च पृथ्वीराजस्य स्तवने च हिन्दव शब्दस्य प्रयोगः कृतः।

उठल ठाट महिपाट अटल तारागढ़ थानं।
अटलमग्ग अजमेर अटल हिन्दव अस्थानम्।
किये सलाम तिनवार जाहु अपने सुस्थानम्।

मत्तिहिन्दू परसाहिसज्जिआवौ स्वस्थानह
निर्लज्जम्लेच्छ लाजै नहीं हमहिन्दूलजवान् ।

इति राजन्यवीराणां कृते तत्प्रशंसकैः कविभिस्तेषां कृते हिन्दू शब्दः प्रयुक्तः ।

वस्तुतस्तु हिन्दूशब्दः हीनं दूषयति, हिंसन्ति धर्मान् हिंसाः तान् दुनोति द्यातीति हिन्दुः हिनस्तिदुष्टान् । मेदिनीकोषे. कल्पद्रुमादि कोषेषु, मेरुतन्त्रे पारिजातहरणनाटके, कालिकापुराणे च हिन्दुशब्दो विद्यते ।

यदुक्तं-महाभारतादि ग्रन्थेषु रामायणादिष्वार्षग्रन्थेषु तदनुपलम्भात्तन्नोपपद्यत इति तत्र वेदे परमेश्वरशब्दस्याभावेऽपि तस्याभारतीयत्वासंभवात् । न च कालिकापुराणस्यानार्षत्वं, पद्मपुराणवत्तस्य पुराणत्वाविशेषत्वात् । मेरुतन्त्रस्यापि नानार्षत्वोक्तिर्युज्यते, तस्य रुद्रयामलादिवदीश्वरोक्तत्वात् ।

हीनं दूषयते यस्मात् तस्माद्धिन्दुरितिस्मृतः ।
गोषु भक्तिर्भवेद्यस्य प्रणवादौ दृढा मतिः ।
पुनर्जन्मनि विश्वासः सवै हिन्दुरिति स्मृतः ॥
वस्तुतस्तु वेदे तदनुगुणे शास्त्रे तदुक्तेषु च कर्मसु ।
तदुक्तरीत्या श्रद्धालुः यः स हिन्दुः प्रकीर्तितः ॥ विस्तरस्त्वन्यत्र

यदुक्तं हरिणी हस्तिनि शुकी, इत्यादिः शब्दैरभिधीमाना अपि स्त्रिय एव न मनुष्येतरपशुपक्षिजातीयाः । यथाद्यत्वेऽवैधगर्भधारिण्यो घटादिषु तत्संभवाञ्छिशून् निधाय क्वचिन्निक्षिपन्ति तथैव व्यभिचारगोपनार्थमेव शुकीसमुत्पन्नोऽयं महर्षिः कुशस्तम्बसमुत्पन्नोऽयमपरः इत्याद्युक्तयः इति तदपि न तत्प्रतिपादकपुराणादिप्रामाण्यानभ्युपमे तत्सत्वे मानाभावात्तदुद्भावनस्यैव निरर्थकत्वात् । तत्प्रामाण्ये तत्सत्ववत्तदुत्पत्त्यादिकमपि प्रत्येतव्यमर्धजरतीयस्यान्याय्यत्वात् । वोधायनवचनेन महर्षीणाममोघवीर्यवतां विशिष्टसामर्थ्यसत्त्वावगमेन तददोषाच्च ।

यदुक्तं दालब्रह्मचारिरूपेण प्रसिद्धोऽपि वेदव्यासः कस्यचिदनार्थ्यकन्यायां शुक्यां परमप्रसिद्धं ।

अत्र काममिवापरमितिवचनेन श्रीव्यासस्य कन्दर्पप्रतिमसौन्दर्य्यमेव स्वाभाविकमुक्तम्। तेन भ्रातृवधूनां रागोत्पत्तिराहित्यार्थमेव दुःसहोग्रगन्धरूपवत्वेन व्यासस्य प्रादुर्भावः तादृग्रूपगन्धसहनरूप तपोर्थं वा तथा रूपाविर्भावो मन्तव्यः ब्रह्मिष्ठं शुकमुत्पादितवान्। तेनैव वशिष्ठवंशीयानां रक्तमिश्रणम् ज्ञेयम्। तत्तुच्छम् शुवया अनादित्वासिद्धेः महर्षेर्दिव्यरूपत्वेऽपि तस्यास्तादृक्सामर्थ्यहित्येन वांप्रतितादृश्वैरूप्यविकटगन्धप्रादुर्भावसम्भवात्। तत एवतत्सहनरूपेणतपसाऽभीष्टपुत्रलाभ उक्तः, अन्यथाऽदेत्वेकोवानियमेनस्वमदवचनविरोधेन पुत्रपुत्री वा समुत्पादयितुं शक्नोमि। काचिद्दिव्याप्सराशूकीभूत्वामुनिकुपस्थितेतिपुराणाच्च तीव्रेण तपसाऽन्यजातीयपरमाणुनिरसनपूर्वकब्राह्मणजातीयरक्ताणुसंयोजनेन स्यात्तेषां शुद्धब्राह्मणमपि। न च शूद्रादीनां तपोनिषेधात्। तदुल्लघङ्ते शम्बूकवद् वधदण्डनीयत्वाच्च। रक्ताणुपरिवर्त्तनप्रमाणाभावाच्चेति वाच्यम् व्यासस्य क्षत्रियकन्योत्पन्नत्वेन शूद्रत्वाभावात्। तथात्वे तादृक् तपसा स्वदेहस्थ वैरूप्यदौर्गन्ध्यनिराकरणं कथं न कृतम्। कार्ष्णादेव तस्य कृष्णद्वैपायनेति नामापि प्रसिद्धम्।

> यदि पुत्रः प्रदातव्यो मया भ्रातुरकालिकः।
> विरूपतां मे सहतां तयोरेतत्परं व्रतम्॥
> यदि मे सहते गन्धं रूपं वेषं तथा वपुः।
> अद्यैव गर्भं कौशल्या विशिष्टं प्रतिपद्यताम्॥
> ऋतुकाले ततो ज्येष्ठां वधूं तस्मै न्ययोजयत्।
> सा तु रूपञ्च गन्धञ्च महर्षेः प्रविचिन्त्यतम्॥
> नाकरोद्वचनं देव्या भयात्सुरसुतोपमा।
> (म० भा० आदिपर्व १०५, ४१, ४२, १०६।२३, २४।)

एतैः श्लोकैः श्रीव्यासस्य भीषणं वैरूप्यं दौर्गन्ध्यञ्च विज्ञायते इति तदपि तुच्छम्—

> सापिसत्यवती जाता सद्योगर्भवती सती।
> सुषुवे यमुनाद्वीपे पुत्रं काममिवापरम्। ३६।

जातमात्रस्तु तेजस्वी तामुवाच स्वमातरम् ।
मातर्यदा भवेत्कार्य्यं तव किञ्चिदनुत्तमम्
स्मर्तव्योऽहं तदाशीघ्रमागमिष्यामि कामिनि । ३९ ।
इत्युक्त्वा निर्ययौ व्यासः सापि पित्रन्तिके गता ।
द्वीपेऽन्यतस्तदा बालस्तस्माद्वैपायनोऽभवत् ४.। देवी भागवत २ । २

यदुक्तं क्षत्रियाणामपि तथैव सांकर्य्यम् । अत्रिपुत्रश्चन्द्रः ब्राह्मणः सन्नपि स्वगुरोर्भार्य्यायां तारायां बलात्कारेण बुधमुत्पादितवान् । तादृशस्य बुधस्य को वर्ण इति चिन्तनीयम् । बुधः सूर्यवंशीयायामिलायां पुरूरवसमुत्पादितवान् । स चोर्वश्यां वेश्यायामायुरादीन् पुत्रान् जनयामास । आयुषः पुत्रो ययातिश्च ब्राह्मणकन्यायां देवयान्यां यदुमुत्पादितवान् । यस्य कुलरत्नं श्रीकृष्णो बलरामश्च । कृष्णस्य पट्टमहिषीषु च ऋक्षकन्या ( अनार्य्यकन्या ) जाम्बवती । ययातेरेवासुरकन्यायाः शर्मिष्ठाया गर्भात्समुपन्ने पुरुवंशे शंतनुः संजातस्तस्य गङ्गायां देवव्रतः । सत्यवत्यां चित्राङ्गदविचित्रवीर्य्यौ जातौ । सत्यवतीकैवर्त्तकन्या या बाल्ये पराशरात् व्यासं जनितवती । तयोर्विधवयोर्व्यासेन पाण्डुधृतराष्ट्रौ समुत्पादितौ । तत एव पाण्डवा युधिष्ठिरार्जुनादयो जाताः तदपि तुच्छम् ।

तेजीयसां न दोषाय वह्न्यः सर्वभुजो यथा ।

इतिरीत्या देवानामृषीणां तपसाक्षीणकल्मषाणां शुद्धसंकल्पेन शुद्धक्षत्रियसमुत्पत्तिसंभवात् । गुरोस्ताराविद्यैव भवति चन्द्रःशिष्यस्तां गृहीत्वा बुधं ज्ञानं जनयति । इत्यध्यात्मविदः समष्टिमनोरूपश्चन्द्रःसर्वमनोरूपत्वात्तत्र सक्तोऽपि न प्रत्यवैति । देवयानी समाधानंत्विहैवान्यत्र द्रष्टव्यम् । ऋच्छो जाम्बवान् ब्रह्मावतारभूतो देवरूप एव नानार्यः, वाल्मीकिरामायणप्रामाण्यात् ।

यदपि अद्यत्वेऽतिशूद्राश्चर्मकारादयोऽपि कनिष्ठभ्रातृविधवाग्रहणं पातकमन्यन्ते । तस्याः स्पर्शोऽपि निषिद्धः । परं महाभारतकाले क्षत्रियेषु प्रथेयम्प्रचलितैवासीत्, तदपि तुच्छम्; मातृवचनेन सिद्धस्य व्यासस्य तददोषात् ।

यथा चन्द्रवंशे पूर्वोक्तरीत्या रक्तमिश्रणं तथैव सूर्यवंशे सूर्य्यात् श्राद्धदेवो मनुस्ततो दिष्टस्ततस्तृणविन्दुस्तस्मादलम्बुषायां स्ववेश्यायां विशालः तद्वंश एव ।

रथीतरस्य पत्न्यां ऋषिणाङ्गिरसा पुत्रा उत्पादिता। तत्रैवेक्ष्वाकुर्यस्य वंशे रामचन्द्रोऽवततार। तत्रैव सौदस्य पत्न्या मदयन्त्यां वशिष्ठेनाश्मक उत्पादितः, इत्यादि निरस्तम्, महर्षिसंकल्पवशाच्छुद्धक्षत्रियस्यैवोत्पत्तेः।

किञ्च पुराणादिप्रामाण्येनैतेषां महातपसां प्रभावात् क्षत्रियत्वे तदप्रामाण्ये तत्सत्त्वस्यैवासिद्धेः।

यदुक्तं आधुनिकाश्च राजपुत्रवाच्याः क्षत्रियास्तु न क्षत्रियाः 'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्' इत्यमरोक्तनामसु तदभावात्, किन्तु 'क्षत्रात् करणकन्यायां राजपुत्रो बभूव ह' जातिभास्करे, ब्रह्मवैवर्त्ते—

शूद्रायां क्षत्रियादुग्रः क्रूरकर्मा प्रजायते।
शस्त्रविद्यासु कुशलः संग्रामे कुशलो भवेत्।
तया वृत्या स जीवेद् यः शूद्रधर्मा प्रजायते।
राजपूत इति ख्यातो युद्धकर्मविशारदः॥ (इत्युक्तेरिति)

तदपि न, राजसूयप्रकरणे राजशब्दस्य शुद्धक्षत्रियपरत्वाभ्युपगमेन आधुनिकेतिवृत्तदृष्ट्या यत्र पृथ्वीराजो महाराणाप्रतापादयः सञ्जातास्ते सर्वेऽपि अनार्य्यजातीयाः। शकहूणगुर्जरादि विदेशीया जातयो हिन्दवः सम्पन्नाः ताः जातयः कुटुम्बा यैः शासकपदमलंकृतं ते हिन्दुराजशासनपद्धत्या क्षत्रियाः। सम्पन्नाः। येषां पञ्चम्यां षष्ठ्यां शत्यां भारते समागमनं संवृत्तम् ते अन्या अपि दाक्षिणात्या अनार्य्यजातयो हिन्दवो भूत्वोन्नतिपदं प्राप्ताः। तत्प्रभावादेव सूर्य्यचन्द्रसम्बन्धेन सूर्यचन्द्रवंशीयाः सम्पन्नाः। गोंडभरखरवारजातीयाः क्रमेण चन्देल, राठौर, गहरवारा अन्ये च प्रसिद्धक्षत्रियजातीया सम्पन्नाः। तदपि तुच्छम्, प्रामाणिकपरम्पराविरुद्धत्वात्। इतिवृत्तलेखकास्तु पाश्चात्यास्तत् शिक्षया भारतीया वा जातिपतिताः तत एव तेषां स्वस्येव सर्वस्यैव सांकर्यसाधनप्रयासः।

यदपि-यत्र ब्राह्मणक्षत्रियाणामीदृशी गतिस्तत्र वैश्यानां का कथा। येषां कृते

'मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥

इति भगवता स्पष्टं पापयोनित्वमुक्तम्। परमयमर्जुनं प्रत्युपदेश एव। तस्यैव सा कुन्तीमाता यया कौमारावस्थायामेव कर्णमुत्पाद्य स्वसतीत्वमुध्व-

स्तम्। या च स्वपतिना पाण्डुना प्रोत्साहिता सती इन्द्रादिभ्योऽर्जुनादीनुत्पादि-तवती तदपि मन्दम्; महामहिममन्त्रप्रभावात्। सूर्य्यादिदेवकर्तृके कर्णपाण्डवादि समुत्पत्तीनामवचनीयत्वात्। तथैव भारते तस्या महात्म्यातिशयस्य वर्णनात्। येषां क्षत्रियाणां सम्बन्धे तेषामुत्पत्तिस्तेषां ततो भिन्नत्वात्। तेषां निर्णयस्तु पुरोहितव्यवहारात् गोत्रव्यवहाराच्च सुशकः।

**विवाहभेदः**

यच्च—

ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः।
गान्धर्वो राक्षसश्चैव पैशाचस्त्वष्टमः स्मृतः॥

इत्यनुरोधेनाष्टौ विवाहा धर्मशास्त्रेणोक्ता। तत्र

हत्वा छित्वा च भित्वा च क्रोशन्तीं रुदतीं गृहात्।
प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते।
सुप्तां प्रमत्तां वा रहो यत्रोपगच्छति।
स पापिष्ठो विवाहानां पैशाचः प्रथितोऽधमः।

इति राक्षसपैशाचविवाहावुक्तौ।

तत्र—ब्राह्मादिविवाहचतुष्टयस्य प्रशस्तत्वेऽपि आसुरादिविवाहानामसुर-गन्धर्वराक्षसपिशाचाद्यनार्य्यजातिभ्यः शिक्षितत्वादत्यन्तनिन्दितत्वमेव। कन्यायाः क्रयविक्रयादिकमेवासुरविवाहः। गान्धर्वविवाहो यद्यपि परस्पर-सम्मत्यैव भवति तथापि कामोन्मादेन कुलीना अपि कन्याः धूर्तैः वञ्चिताः स्वसर्वस्वं नाशयन्ति इति निन्द्यत्वमेव।

राक्षसपैशाचौ तु न केवलं विवाहपदवाच्यत्वायोग्यौ किन्तु अपराधावेव वर्तमानभारतीयदण्डविधानस्य ३६६-३६७ धाराभ्यां दण्डनीयौ। यः कश्चित् कांचित् स्त्रियम् इतरमभिप्रेत्य हरति स तदनभिमतेन केनचित्सार्धं विवाह्या संगमनीया वा स दशवर्षं कारावासमर्हति। यः क्षत्रियस्य विवाहत्वेनानुमतः स एवेदानीं घोरो दण्डनीयोऽपराधः। यत्र रक्षको भक्षकस्तत्र कैव कथा रक्षणस्य।

द्वितीयधारायास्त्वयमर्थः-यत्र कश्चित् बलपूर्वकं मैथुनं करोति यत्र वा सुप्तां मादकद्रव्यसेवनेन प्रमत्तां विक्षिप्तां वा स्त्रियमभिगच्छति सोऽपि

दशवर्षं कारावासमर्हति। आजन्म द्वीपान्तरवासं वार्हति। पवित्रधर्मग्रन्थेषु तस्य पैशाचविवाहपदवाच्यता इति तन्न; भावानवबोधात्।

तथाहि—

चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः।
राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः। मनुः ३।२४

इति रीत्या ब्राह्मणस्य ब्राह्मदैवार्षप्राजापत्यानां प्राशस्त्यमुक्तम्। वैश्यशूद्रयोरासुरविवाहस्य श्रेष्ठत्वमुक्तम्। प्रशस्तविवाहसंभवे जघन्यस्यापि परिग्रह इति ब्राह्मणस्यासुरगान्धर्वविवाहानुमतिः। क्षत्रियस्यासुरादीनां चतुर्णाम् अनुमतिः। विट्शूद्रयोस्तु राक्षसवर्जितानासुरगान्धर्वपैशाचान् धर्म्यानाहुः।

पुनश्च 'पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह।
पैशाचश्चासुरश्चैव न कर्तव्यौ कदाचन॥

पैशाचप्रतिषेधादुपरितनानां प्राजापत्यादीनां पञ्चानां मध्ये प्राजापत्यगान्धर्वराक्षसास्त्रयो धर्म्या धर्मादनपेताः प्राजापत्यः क्षत्रियादीनामप्राप्तो विधीयते। ब्राह्मणस्य विहितत्वादनूद्यते। गान्धर्वश्चाप्राप्तत्वादनुवादः। राक्षसोऽपि वैश्यशूद्रयोरप्राप्तत्वाद्विधीयते। ब्राह्मणस्य क्षत्रियवृत्त्यवस्थितस्याप्यासुरपैशाचौ न कर्तव्यौ कदाचनेत्यविशेषाच्चतुर्णामेव निषिध्यते।

पृथक् पृथग्वा मिश्रौ वा विवाहौ पूर्वचोदितौ।
गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ॥ (म०३।२६)

अत्र गन्धर्वराक्षसौ क्षत्रियस्यैवोक्तौ। यदा स्त्रीपुंसयोरन्योन्यानुरागपूर्वकसंवादेन परिणेता युद्धादिना विजित्य तामुद्वहेत्तदा गान्धर्वराक्षसौ मिश्रौ भवतः।

विवाहभेदाश्च तत्रैव विवृता—

आच्छाद्य चार्चयित्वा तु श्रुतिशीलवते स्वयम्।
आहूय दानं कन्यायाः ब्राह्मो धर्मः प्रकीर्तितः॥
यज्ञे तु वितते सम्यगृत्विजे कर्म कुर्वते।
अलङ्कृत्य सुतादानं दैवं धर्मं प्रचक्षते॥

एकं गो मिथुनं द्वे वा वरादादाय धर्मतः ।
कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते ॥
सहोभौ चरतां धर्ममिति वाचाऽनुभाष्य च ।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिःस्मृतः ॥
ज्ञातिभ्यो द्रविडं दत्त्वा कन्यायै चैव शक्तितः ।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते ॥
इच्छयाऽन्योऽन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसंभवः ॥

राक्षसपैशाचौ पूर्वमेवोक्तौ । अत्रासुरपैशाचयोः सर्वथा निषेध उक्त एव । क्षत्रियाणां प्रायेण स्वयम्बरविधिरप्यत्रैवान्तर्भूतः इच्छयान्योऽन्यसंयोग इति गान्धर्वलक्षणस्य तत्र समन्वयात् । यत्र तु पित्रादीनामसंमतिः तत्रैव युद्धादिनाहरणसंभवेन राक्षसलक्षणयोगेन मिश्रत्वं सम्पद्यते ।

क्षत्रियाणां शौर्य्यवर्धनानुगुणत्वाद्यथा युद्धेन भूमिप्राप्तिर्न दूषणं तथैव युद्धेन कन्याप्राप्तिरपि न दूषणम् । तावताऽपि तेषां रक्षकत्वमेव न भक्षकत्वम् । बलवत्स्वमित्रभूतेषु क्षत्रियेष्वेव तथा प्रवृत्तेः । अत एव राज्ञां राजस्वेवाक्रमणं भवति, न तु प्रजासु । यत्र राजकन्याहरणार्थमेव च राज्ञां युद्धं भवति । तत्रैव राक्षसेन विधिना पाणिग्रहणम् । यथा रुक्मिणीकृष्णयोः, सुभद्रार्जुनयोः । संयुक्तापृथ्वीराजयोर्वा पूर्वोक्तरीत्या गुणदोषनिर्धारणेऽपि निन्द्यविवाहानां त्याज्यतोक्तैव । तथाहि—

दशपूर्वान् परान् वंश्यानात्मानं चैकविंशकम् ।
ब्राह्मी पुत्रः सुकृतकृन्मोचयत्येत् नसःपितॄन् ।
पुत्रादयश्च तस्य कुले निष्पापा जायन्ते । कुल्लूकभट्टाः
दैवोढाजः सुतश्चैव सप्त सप्त परावरान् ।
आर्षोढाजः सुतस्त्रीं स्त्रीन् षट्षट्कामोढजः सुतः ॥

दैवविवोढायाः पुत्रः सप्त परान् पित्रादीन् सप्तावरान् पुत्रादीन्, आर्षविवाहोढाजः पुत्रस्त्रीन् स्त्रीन् पुत्रादीन्, प्राजापत्यविवोढाया पुत्रःषट् पुत्रादीन् आत्मानश्चैनसो मोचयति ।

ब्राह्माद्यष्टविवाहोद्देशक्रमानुसारेण मन्दफलस्यार्षस्येह बहुफलप्राजापत्यात्पूर्वाभिधानम्

ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः ।
ब्रह्मवर्चसिनः पुत्रा जायन्ते शिष्टसम्मताः ॥
रूपसत्त्वगुणोपेताः धनवन्तो यशस्विनः ।
पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः ॥
इतरेषु तु शिष्टेषु नृशंसानृतवादिनः ।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥
अनिन्द्यैः स्त्रीविवाहैश्चानिन्द्या भवति प्रजाः ।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत् ॥
औरसः क्षेत्रजश्चैव दत्तः क्रित्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयं दत्तश्च शौद्रश्च बाहुदायादबान्धवाः ॥

वशिष्ठस्मृतिरीत्या – ( मनुः ९।१५६ )

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रः भवेदिति ॥

इति पुत्रिकापुत्रोऽपरः । क्षेत्रजःनियोगजः कानीनः कन्यापुत्रः सहोढगर्भिणी विवाहजः विधवाजः पौनर्भवः शौद्रादीनां पुत्रत्वेन स्वीकरणमपि रक्तमिश्रणकारणानामप्यन्यतमत् । येषां सर्वथाऽवैधता तेषा धर्म्यत्वघोषणाऽपि नैतिकं पतनकारणम् । विगर्हितैर्विवाहैरवैधैश्च पुत्रैः समाजे साङ्कर्य्यं दुराचारश्च विस्तीर्यते ।

विधानविशेषज्ञैः प्रोच्यते यत्प्राचीनहिन्दूनां यौनसम्बन्धोऽतीव शिथिलः स्त्रीणां सतीत्वस्य महत्त्वं नगण्यमेवासीत् मातरं । दुहितरञ्चाभियन्ति इत्यादिकं तदपि तुच्छम् ।

पुत्रेष्टियागाङ्गभूतस्यार्थवादस्य पुत्रेष्टियागविधानस्तुतावेव तात्पर्य्येण तदन्यत्र तात्पर्य्याभावेन तददोषात् । प्रमाणान्तरविरुद्धस्यार्थवादस्य सर्वथा

स्वार्थे न तात्पर्य्यम् । मनुना चौरसपुत्रस्यैव माहात्म्यमुपवर्णितम् । अन्येषाञ्च कृते तेनैवोक्तम्—

यादृशं फलमाप्नोति कुप्लवैः सन्तरञ्जलम् ।
तादृशं फलमाप्नोति कुपुत्रैः संतरंस्तमः ॥ मनुः ९।१६१

तृणादिर्निर्मितकुत्सितोडुपादिभिरुदकं तरन् यथाविधं फलमाप्नोति तथाविधमेव कुपुत्रैः क्षेत्रजादिभिः पारलौकिकदुःखं दुरुत्तरं प्राप्नोति । अनेन क्षेत्रजादीनां मुख्यौरसपुत्रवत्सम्पूर्णकार्य्यकरणसमत्वं न भवतीति दर्शितम् (कुल्लूः) ।

किञ्च सर्वज्ञकल्पैर्ऋषिभिः धर्माधर्मदृष्ट्यैव सर्वं विवेचितम् । पूर्वेषां षण्णामृक्थहरत्वे नोत्तरेषां षण्णां तत् । तदभागित्वेऽपि पिण्डतर्पणादिभागित्व-मस्त्येव । तेषामपि स्वाभाविकैः कामादिभिरपि यौनसम्बन्धे सन्तानोत्पत्तौ च सत्यां कुत्र कियतांशेन धर्मादिसम्बन्ध इति तु धर्मशास्त्रस्य विषयः । नहि-लौकिकमेव तत्सर्वं धर्माधर्मयोः शास्त्रैकगम्यत्वात् ।

अपुत्रेण सुतः कार्य्यः यादृक् तादृक् प्रयत्नतः ।
पिण्डोदकक्रियाहेतोर्नामसंकीर्तनाय च ॥

दत्तकमीमांसोद्धृतमनुवचनात्

अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा ।
पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नतः । (अत्रिस्मृतिः५२)

इत्यादीन्यपि वचनानि तादृगर्थवादभूतान्येव ।

यजमानस्य पशून् पाहि गां मा हिंसीः । (श० ब्रा०)

इत्यादिर्गवादिपशूनां रक्षणमेवाभिप्रेतं वेदस्य ।

वेदार्थोपनिबद्धत्वात्प्राधान्यं हि मनोः स्मृतम् ।
मन्वर्थविपरीता या सा स्मृतिर्नैव शस्यते ॥

इति विपरीतस्मृतिसंकोच एव युक्तः ।

अथातः सवनीयस्य पशोर्विभागं व्याख्यास्यामः । उद्धृत्यावदानि हनू सजिह्वे प्रस्तोतुः, कण्ठः सककुदः प्रतिहर्तुः, श्येनपक्षः उद्गातुः, पार्श्वं सोंशमध्वर्य्योः ।

ऐतरेयेऽपि एवम् ।

ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्त्रिमौ ।
पैत्रिको दण्डदासश्च सप्तैते दासयोनयः ॥

एतेनाजादिशब्देन विशेष एव यज्ञ उपयुज्यते, न साक्षात् पशुरित्यपास्तम् औषधविशेषे कण्ठकुकुद्जिह्वाविसंभवाभावात् ।

यथाश्वेषु तदवान्तरजातिभेदो भवति तथैव मनुष्येष्वेपि । बृहदारण्यके हयवाज्याद्यश्वप्रभेदवर्णनात् ।

हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वासुरानश्वो मनुष्यान् समुद्र एवास्य बन्धुः समुद्रो योनिः । (बृ०उ० १) ब्राह्मणश्रुते । तथा वाज्यादयो जातिविशेषा इति शां० भाष्याच्च । (पुरुषसूक्त यजु ३१ अ० अ० वे० का०१९।६।६)

मध्यं तदस्य यद्वैश्यः ( अ० वे० ) इत्यादिभिस्तथैव ब्राह्मणादिजात्युत्पत्तिरुक्ता ।

लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः ।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत् ॥ (मनुः १।३१)
ततः कृष्णो महाभागः पुनरेव युधिष्ठिरः ।
ब्राह्मणानां शतं श्रेष्ठं मुखादेवासृजत्प्रभुः ॥
बाहुभ्यां क्षत्रियशतं वैश्यानामूरुतः शतम् ।
पद्भ्यां शूद्रशतञ्चैव केशवो भरतर्षभ ॥ इति

व्यासादिभिस्तथैव व्याख्यातत्वात् ।

यदुक्तं—प्राकृतनियमविरुद्धत्वादालङ्कारिक एवात्रार्थो ग्राह्यः । परमात्मनः शरीरित्वे तन्न सशरीरया स्त्रियाऽपि भाव्यम् तथात्वे योनिजत्वमेव सर्वस्येति मन्तव्यमिति । तत्र प्रथमशरीरस्य शरीरजत्वे प्राथम्यानुपपत्तिः । अशरीरजत्वे तादृङ्नियमानुपपत्तिः । न च मातृपितृपरम्पराया अनादित्वम्, तथात्वे प्रलयानुपपत्तेः ।

विकासवादिक्रमेण तु अमीवादिभ्य एव मनुष्यस्यापि विकासः । न च सर्वभूतेषु समानोत्पत्तिक्रमः लोकवैलक्षण्यानुपपत्तेः ।

न च 'अपाणिपादो जवनो ग्रहीतापश्यत्यचक्षुः स शृणोत्यकर्णः' इतिश्रुत्या-तस्य पाणिपादादिराहित्यं विज्ञायते इति वाच्यम् ।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादिति, तस्य सहस्रशीर्षत्वादि श्रुति-विरोधेन साकारनिराकाररूपद्वैविध्याभ्युपगमेन निराकारपादादिराहित्येऽपि साकारस्य तद्वत्वोपपत्तेः ।

किञ्च मार्क्सादिनास्तिकमतरीत्या परमेश्वरतद्बोधकवेदादीनामपि प्रामाण्यं नास्ति कुतो वर्णव्यवस्था तदनुगुणधर्माधर्मव्यवस्था च । आस्तिकानां रीत्या तु पूर्वोक्तरीत्या सर्वं सुस्थमेव ।

यदुक्तम्—कारुरहं ततोभिषगुपलप्रक्षिणी नना नानाधियो व सूयवोऽनु-गा इव तस्थिमेन्द्रायेन्द्र परिस्रव (ऋ० ९।११२।३)

इत्यादिमन्त्रेणैकस्मिन्नेव परिवारे पुत्रः कारुःशिल्पी पिता वैद्यः, माता धानादिमर्ज्जनपेषणादि कार्यकर्त्री अन्ये चक्षरस्या नानाधियो भवन्ति स्मेति । गुणकर्मादिभिरेव वर्णव्यवस्था निश्चीयत इति तन्न, मन्त्रार्थानवबोधात् । सायणादिरीत्या पुत्रस्य मन्त्रद्रष्टृत्वेनैव कारुत्वोक्तेः, मन्त्रनिर्मातृत्वमेव शिल्पि-त्वम् । पितुश्च यज्ञचिकित्सकत्वेन ब्रह्मनामकऋत्विक्त्वमेव तथैव मातुर्गृहे धानादिपेषणादिकार्य्यकर्तृत्वमेव विज्ञायते नात्र भिन्नजातीयत्वं पुत्रादीनां कल्पयितुं शक्यते, प्रमाणाभावात् ।

विरोधिभिरप्येतदनुमन्यते तत्तत्कर्मसु दक्षता प्रवीणतादिसम्पत्तये तेषु सुरुचि सम्पत्तये च व्यवस्थैवोचिता । यस्मिन्कर्मणि यस्य दक्षता तस्यतद्दले प्रवेशः ततोऽन्यकर्मभ्यस्तस्य मुक्तिः । समानशीलव्यसनानाम्परम्परानुराग-सहानुभूत्यादयो भवन्ति । तेनैव क्रमेण जनसमुदायस्य ब्राह्मणादि चातुर्वर्ण्य रूपेण । विभागः प्रायेण पिता पुत्राय स्वीयमेव कर्म शिक्षयति शैशवकालादेव तादृक्कर्मयोगेन तत्रैवाभिरुचिः कौशलञ्च वर्धते तेनैव वंशानुसारेण जातिभेदः संवृत्तः ।

आकृतिग्रहणाजातिर्लिङ्गानाञ्च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणैः सह ।

जातेरस्त्री विषयादयोपधात् ४।१।६३ नञ् २।६ जातिरप्राणिनां २।४।६ जातिनाम्नः कन् ५।६।८१ वा बहूनां जातिपरिप्रश्ने डत्तमच ५।६।६६ ब्राह्मो- ऽजातौ ६।४।१७१ इत्यादिमिश्च आकृतिसाम्येपि जातिभेदःसिद्धश्चति।

प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद् गुणैः।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः।

इत्यादि परिभाषानुसारेण मनुष्यमात्रस्यैकैव जातिः यथा अश्वस्यैकैव जातिस्तत्र अरबी बैलर काबूली मुठिया गर्दभादयः प्राकृतिका अवान्तर- भेदास्तथैव आर्य्यद्राविडहवशी मङ्गोलइङ्गलिश फ्रेञ्च आदयोऽवान्तरभेदाः।

यदुक्तं-यौनसम्बन्धेन यत्र समानप्रसवक्रिया स्यात्त्रैकजातित्वम्। तत्रापि ब्राह्मणादिषु कृत्रिमा भेदा द्राविडादिषु प्राकृताभेदाः अष्टविकल्पो दैवस्ति- र्यग्योनश्च, पञ्चधा भवति मनुष्यश्चैकविधः समासतः भौतिकः सर्गः।

समानप्रसवात्मिका जातिः (न्याय अ० २ सू० ७१) समानस्तुल्यो जनन- व्यापारः आत्मास्वरूपो यस्याः सा जातिः। तस्मान्न गोश्ववत्कश्चिज्जाति- भेदोऽस्ति देहिनां भविष्ये। इति तदपि तुच्छम्, गोतमसूत्रार्थानवबोधात्। तत्र समानबुद्धिप्रसवत्वेन जातिव्यवहार उक्तो न समानयौनसम्बन्धेन समान जातिव्यवहारः न्याय भाष्य मञ्जर्य्यादिषु तथैव व्याख्याततत्वात्।



## इतिहासविमर्शः

आधुनिकैरुच्यते यत् 'अनुमानतः बी० सी० ३३० वर्षेभ्यो भारतीयमितिवृत्तमारब्धम्। तदानीमेव सिकन्दरेण भारतमाक्रान्तम्। सिकन्दरस्यमृत्योरनन्तरं तदीयसेनापतिना सेल्यूकसेन पश्चिमेशियाप्रदेशे साम्राज्यं स्थापितम्। बी० सी० ३०४ वर्षे मौर्यसाम्राजश्चन्द्रगुप्तस्य राजसभायां कतिचिद्दिनानि मेगस्थनीजस्तस्थौ। तेन यात्रावृत्तान्तो लिखितः। यद्यपि स पुस्तकाकारेण नोपलभ्यते तथापि तदीयांशाः परवर्तिनां लेखकानां ष्ट्रावो अरियन् प्रभृतीनां पुस्तकेषूद्धरणरूपेणोपलभ्यन्ते। तत्रैकत्र मेगस्थनीजेनोक्तम्—'समस्तभारतवर्षः एको विराट् देशः। तत्र विभिन्नजातीया निवसन्ति। तेषु न कश्चनापि मूलतो वैदेशिकवंशोत्पन्नः, सर्वेऽपि भारतीयादिमनिवासिवंशधरा इति स्पष्टं विज्ञायते। भारते वैदेशिकानामुपनिवेशो न कदाचिदपि स्थापितः, न वा भारतेनैव विदेशेषूपनिवेशः स्थापितः।' इति।

आधुनिकानां पुरातत्त्वान्वेषिणां मतेन ( बी० सी० २५०० वर्षमारभ्य बी० सी० १५०० वर्षपर्यन्तं दलबद्धा आर्यजातयः पश्चिमोत्तरसीमान्तमार्गेण भारतं प्रविष्टाः। भारतीयादिवासिनस्तु द्रविडकोलभिल्लादयः तान् पराजित्यार्यैरुपनिवेशः स्थापितः। ते चार्या हिन्दूनां पारसीकानां काकेशियाणां ग्रीकाणां यूरोपियाणाञ्च पूर्वजा आसन्। स च कालः मेगस्थनीजभारतस्थितिकालात् १२०० वर्षपूर्वः।)

परन्तु यदि वैदिकानार्याणां बहिर्देशादत्रागमनं स्यात् तदा मेगस्थनीजस्य पूर्वमुट्टङ्कितं कथनमसङ्गतमेव स्यात्। न तु भारतीयैस्तद्विस्मृतमिति कल्पयितुं शक्यम्, तत्स्मृतिनैर्बल्याभावात्। सस्वरा बृहत्काया वेदा यैः कण्ठस्थीकृतास्तेषां कृते स्वपूर्वजानामागमनं पूर्वनिवासस्थानञ्च कथं विस्मियेत। मेगस्थनीज उच्चपदस्थो निरपेक्षो निष्पक्षः प्रामाणिकश्चासीत्। स भारते बहुतिथं स्थित्वा भ्रमणञ्चकार। तद्विवरणमन्यांशेषु प्रमाणत्वेनाङ्गीक्रियते। अत इदमपि तद्विवरणमङ्गीकार्यम्।

यदीतः २३०० वर्षपूर्वं तदानींतनानां भारतीयानां बहिर्देशाद् अत्रागमनं स्मृतं स्यात् तदा मेगस्थनीजेन तदवश्यं ज्ञातं भवेत्। परं तदुक्तरीत्या सर्वेऽपि भारतादिवासिवंशधरा एवेति तदानींतनानां विश्वास आसीत्। स एव मेगस्थनीजेन प्रकाशितः। ततः पूर्वं भारते वैदेशिकानामुपनिवेशो न स्थापितः, अर्थात् भारतीयानां पराजयो न जातः। भारतस्यापि अन्यत्रोपनिवेशो नासीत् अर्थात् भारतीयैः कस्यचिद्राज्यापहरणाय न प्रयतितम्। तेन भरत आर्य्यभिगमकल्पनं निर्मूलमेव।

श्राद्धेषु पितृ-पितामहप्रपितामहादिनामस्मरणं विवाहेषु शाखोच्चारप्रणाली च बहोः कालादारभ्याद्य यावत् प्रचलिता विद्यते। सर्वेषु शुभकर्मसु देशकालोच्चारणपूर्वकं च संकल्पः क्रियते। अश्वमेधेषु विवाहेषु चतुर्दशपुरुषपर्यन्तानां पूर्वजानां स्मरणमनिवार्य्यमासीत्। ब्राह्मणक्षत्रियादिषु चत्वारिंशत् पुरुषस्मरणं विवाहादिषु क्रियते। तेन यदि वैदिकानामन्यत आगमनं सत्यं स्यात्तदावश्यमार्याणां साहित्येषु तच्चर्चितं स्यात्। मौर्यसम्राट् चन्द्रगुप्तकालमारभ्य पुष्यमित्रकालं यावत् भारतभूमिमलङ्कृतवता महर्षिणा पतञ्जलिना स्वकीये महाभाष्ये कतिपयजातीनां बहिर्निर्वासनं चर्चितम्।

एलफिंशटन्महाशयेन शतवर्षेभ्यः प्रागेव मेगस्थनीजस्यागमनं भारतीयेतिहासे लिखितम्। अधुनातनहिन्दूनां भारतीयाः पूर्वपुरुषाः स्वीयनिवासस्थानात् (भारतात्) अन्यदेशनिवासिन आसन्नित्यभ्युपगमस्य किञ्चिदपि कारणं नोपलभ्यते। वेदे मनुस्मृतौ तथान्येष्वपि ग्रन्थेषु हिन्दूजातेः पूर्वनिवासभूमेरुल्लेखो नोपलभ्यते।

एल्फिन्स्टन महाशयस्योक्तलेखावसरे तथाकथितस्यार्याभिगमनस्य गाथा न कल्पितासीत्। मैक्समूलरादिगवेषणायाः कालः पश्चात् प्रवृत्तः। आर्याभियानकल्पनाविरुद्धत्वादेव आधुनिकेष्वितिहासेषु मेगस्थनीजस्येदं विवरणं न प्रकाशितम्।

सुविख्यातेतिहासान्वेषको डाक्टरकीथमहाशयः स्पष्टं वक्ति यत् भारतीयाः कथं भारतमागता इति निर्धारणे ऋग्वेदसाहाय्यं सर्वथा नोपलभ्यते। हिन्दुकुशदर्या आर्याभियात्रिणो भारते प्रविष्टा इति सम्भाव्यते।

यदीयं घटनाऽपि यथा स्यात्तथाभूतस्याभियानस्य छायापि ऋग्वेदे नोपलभ्यते।

यद्यप्याधुनिकाः पश्चात्त्या वेदानभिज्ञा एव तथापि ते कोषादि-साहाय्येन वेदेभ्य आदिमनिवासियुद्धेतिहासं कल्पयन्ति, आर्याणामादिम-निवासस्थाननेतृनामादिकं कल्पयन्ति भ्रमयन्ति च भारतीयान्। परन्तु दुरवगाहवैदिकसाहित्यविषये कीथस्तु स्पष्टं वक्ति यत् ऋग्वेदे यद्यपि आर्यशब्दस्य स्थानत्रये (१।१०३।३, ३।६।२५, १०।११ ) दर्शनं भवति तथापि क्वचिदपि अयं शब्दो न जतिवाचकः।

महञ्जोदड़ोखण्डगृहाणामुत्खननप्राप्तवस्त्वालोचनेन स्पष्टमवगन्तुं शक्यते। उपरिस्तरीयवस्त्वपेक्षयाऽन्तरस्तरीयवस्तुभिरुत्कृष्टसभ्यता सिद्ध्यति। ते चावशेषा ईसवी पूर्वसहस्रत्रयवर्षप्राचीनाः (बी० सी० ३०००) प्राचीनतरसभ्यतायाः प्रतीकाश्च।

यद्यप्याधुनिकैरितिवृत्तवेत्तृभिः २५०० वर्षेभ्यः पूर्वमार्याभियानं न जातमिति निर्धारितम्, तच्च महञ्जोदड़ोखण्डगृहानुसन्धानसिद्धान्तेन विरुद्ध्यत एव। आधुनिकानां दृष्ट्या ईशवीपूर्वं २५०० वर्षेभ्यः पूर्वं कोलभिल्लानामेव राज्यमासीत्, परन्तु मुहञ्जोदड़ो हरप्पादि खण्डगृहेषु त्वार्यसभ्यतायाश्चिन्हान्युपलभ्यन्ते। स्वकपोलकल्पितार्याभियानकथावि-रोधपरिहारायैव तत उपलब्धसभ्यताया आर्यसभ्यतेति नाम तदीयमते किन्तु सिन्धूपत्यका सभ्यतेति नामदीयते।

गार्डन चाइल्डरीत्या नेयमार्यसभ्यता किन्तु भारतीया काचित् प्राचीनजातीया सभ्यता। आर्यजातिसम्बन्धयोक्त्री च।

परन्तु हरप्पा स्थानं ततः शतत्रयमीलदूरमस्ति ततोऽपि सुदूरस्थित-पश्चिमविलोचिस्तानस्थितेषु ध्वंसावशेषेष्वपि सैवैकरूपा सभ्यतोपलभ्यते। तासां सिन्धूपत्यकानामकरणं सर्वथानर्गलमेव। मध्यभारते महेश्वरस्थाने सुप्राचीनध्वंसावशेषा आविष्क्रियन्ते। अन्येष्वपि स्थानेषु च तथैव सम्भा-व्यन्ते। वस्तुतो मोहञ्जोदड़ोप्रभृतिखण्डगृहोत्खननं तदध्ययनञ्चाद्याप्यव-शिष्यत एव। तत्रत्यमुद्राक्षरज्ञानमद्यापि न जातम्। तज्ज्ञानेनावश्यं वैदिक-सभ्यतैव तत्र सेत्स्यति।

नासाग्रदृष्टिः पुरुषमूर्तिरपि तत्रोपलब्धा। सेयं योगविद्यायामेवोपलभ्यते। योगविद्या च वैदिकसभ्यता एव। नहि ग्रीकरोमादिकलाकारा नासाग्रदृष्टिमूर्तिनिर्माणमिच्छन्ति। त्रिशिरस्का पशुपरिवृता साधकमूर्तिरपि तत्रोपलब्धा। सरजानमारशलरीत्या पशुपति (शिव) मूर्तिरेव सा।

मोहञ्जोदड़ो हरप्पा उभयत्र शिवलिङ्गाकृतयः पाषाणा उपलब्धाः। अनेकाश्च शिवलिङ्गमूर्तयस्ततोऽपि भारतीयसभ्यता विज्ञायते।

शिवलिङ्गपूजा न वैदिकी किन्तु अनार्येभ्यो वैदिके धर्मे सा प्रविष्टेति ईसामतप्रचारकैः प्रचारितम्। 'शिश्नदेवाः' (८।२१।६,१०।९७।३) इति ऋक्संहितामन्त्रांशेन केचित्तथात्वं परिकल्पयन्ति। परन्तु सायणभाष्यरीत्या अब्रह्मचर्या इत्येव तदर्थः। शिश्नोदरपरायणा इति फलितार्थः। प्रणवात्मकमेवादिलिङ्गं नादब्रह्ममयस्यार्धनारीश्वरस्य प्रतीकरूपं तत्। तदुक्तं–'तदेवलिङ्गं प्रथमं प्रणवं सर्वकालिकम्। (शिव० पु० विद्येश्वरसंहिता १६।२२) तस्यानादिलिङ्गस्य प्रतीकं पाषाणादिमयं लिङ्गम्। विंटरनीजरीत्या शिवालिङ्गपूजायामश्लीलता नास्ति।

प्राचीनसभ्यतायाः सुविख्यातसमालोचकः डा० डूराण्टः कथयति यत्–'हिन्दूशासनपद्धतौ शिवलिङ्गपूजा सर्वप्राचीना।' किञ्च स्वयं सर्वाङ्गपूर्णोऽपराजितः सनातनधर्मो योऽन्येभ्यः स्वयं ददाति कथं सोऽपूर्णेभ्योऽर्धसभ्येभ्य उपासनां गृह्णीयात्? सरलत्वान्निराडम्बरत्वाच्च सर्वत्र तत्प्रचारः। अधुनादिवासित्वेन प्रसिद्धेषु शिवलिङ्गपूजायाः प्रचारलेशोऽपि नास्ति। तेनार्याणामेषा पूजापद्धतिरिति मृषैव जल्पनम्।

मोहञ्जोदड़ो प्रभृतिध्वंसावशेषेषु चित्रमेकमुपलब्धम्। यत्रैकवृक्षशाखायां द्वौ सुपर्णौ उपविष्टौ। तत्रैकस्य मुखे फलम् परस्य तु तन्नास्ति। तच्चैतत्—

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥'

समानं वृक्षं संसाररूपं तच्छाखारूपं शरीरं वा जीवेशरूपौ द्वौ शोभनपक्षौ पक्षिणौ सयुजौ तादात्म्यादिसम्बन्धवन्तौ सखायौ परस्परमित्रभूतौ

परिषस्वजाते समाश्रितौ तयोरेको जीवः स्वादु पिप्पलं कर्मफलमत्ति। अन्यो दिव्य ईश्वरः अनश्नन् अभिचाकशीति प्रकाशयत्येव। अनेन मोहन्जोदड़ोसभ्यता वैदिकसभ्यतैव प्रतीयते।

तत्रैवापरस्मिश्चित्रे श्मशानचित्रं लभ्यते। तत्र कलशोऽर्धदग्धकाष्ठं चिता भस्म च दृश्यन्ते। वैदिकानामेव शवसंस्कारे तादृग्विधानं भवति। तथा च सिन्धूपत्यकासभ्यता वैदिकीसभ्यतैव। स्वर्गीयेण कलत्ताविश्वविद्यालयीयेन वरूवा महाशयेन तादृगनुसन्धानं कृतम्।

भारतीयानामितिवृत्तलेखनप्रणाली नासीत्परम्पराप्राप्तेत्युक्तिरप्यपार्थैव। ई०सप्तम्यां शत्यां प्रख्यातपरिभ्रमकेण हु एन सांग महाशयेम भारतमागत्य बहुकालं स्थितवता लिखितम् यत्–'घटनानामितिहासोल्लेखाय सर्वेषु देशेषु निश्चिताः कर्मचारिण आसन्। घटनानां पूर्णविवरणं नीलपीतनाम्ना व्यपदिश्यतेस्म। तत्र साध्वसाधुसौभाग्यदौर्भाग्यादिकं विव्रियते स्म।

यथान्यत्रार्य्याणामाक्रमणे तत्तद्देशजयस्तथैव भारतेऽप्यार्याणामाक्रमणमासीत् (भारत में अंग्रेजीराज पृ० ४३)।

तच्च प्रमाणविरुद्धमेव। भारतस्यैवानादिकालादार्य्यदेशत्वात् यथैतत्तथात्रैवान्यत्र प्रतिपादितमेव।

यूनानी इतिहासलेखक नियारकसरीत्या आफगानिस्तानपर्य्यन्तं भारतीयसीमासीत्। असीरियासाम्राज्ञ्या, सेमिरामिसनाम्न्या प्रथममाक्रमणं कृतम्। परमन्ते सापि-अवशिष्टैः २५ सैनिकैः सार्धं पलायिता।

द्वितीयईरानशासकेन साइरसेनार्य्यवैविलोनमिश्रईराकटरकीप्रभृतिदेशा विजिताः, परं सप्तभिः सैनिकैः सार्धं सोऽपि पलायितः। भारतीयशस्त्राघातेन स मृतः। सिन्धोः परस्तादेवैतौ पलायितौ।

ईसवीयपूर्वं ३२६ सिकन्दरेण प्रसिद्धविजेत्रा सिन्धुरुलङ्घितः। पञ्जावशासकेन पौरवेण युद्धं जातम्। तद्वीरता इतिहासकारैः, सिकन्दरेण च स्वीकृता। तस्य राज्यञ्च परावर्तितम्। स्वकीयसेनाया उत्साहभङ्गेन खिन्नो भूत्वा सिकन्दरोऽपि परावृत्तः। २० वर्षानन्तरं सेल्युकसप्रथमेनाप्याक्रमणं कृतम्। सोऽपि चाणक्यसहकृतचन्द्रगुप्त-

सेनाया प्रभावं दृष्ट्वैव पराजयं मत्वा सिन्धोः पूर्वीयप्रदेशान् काबुल, कन्धार हिरात न्यूचिस्तान प्रदेशानपि तस्मै प्रत्यर्पितवान्। स्वीयां कन्यामपि चन्द्रगुप्ताय दत्त्वा ततः प्रस्थितम् तेन।

अशोकस्य मृत्योरनन्तरं एण्डि ओकसेन आक्रान्तम्-परम् हिन्दूकुश-मुल्लङ्घ्य सोऽपि परावृत्तः।

वाख्तेयारी यूनानी सैनिकैराक्रमणं कृतं, पश्चात् शकानामाक्रमणं जातं, ततो हूणानाम्। येषां भीत्या द्विसहस्रमीलपरिमितो विस्तृतायामः प्राचीरश्चीनशासकैः निरमायि। ईसवीय १५० वर्षपूर्वं वाख्तेयारी साम्राज्यं तैरेव नाशितम्। रूसयोरपप्रभृतिदेशा अपि तैर्विध्वस्ताः। सहस्र-वर्षं यावत् खण्डगृहावशेषास्तेन कृताः।

ईसवीयपञ्चम्यां शत्यां तज्जातीयैर्हूणैः भारतमाक्रान्तम्। तत्प्र-धानेन तुरामानेन यद्यपि बौद्धगुप्तसम्राजा पराजितस्तथापि शीघ्रमेवो-ज्जयिनिपतिना यशोधर्मदेवेन तुरामानपुत्रो मिहिरकुलनामा ईसवीये ५७३ वर्षे मुल्तानसमीपे कोरूरस्थाने पराजितः। ततो राज्यवर्धनेन हूणाः समूलकाषं कषिताः। योरोपादिप्रदेशेष्वितोऽप्यधिकान्याक्रमणानि जातानि। पूर्वमार्य्यैस्तत्राक्रमणं कृतम्।

ईसवीय ८०० पूर्वं एशियावासिभिराक्रमणं कृतम्। ई० २ शत्यां हूण अवार वलगर खजार याजेनाक अगियार मङ्गोल प्रभृतीनाम् सहस्र-वर्षं यावदविच्छिन्नरूपेण रूस-जर्मनी-इटली-इङ्गलैण्ड-स्पेन-प्रभृतिदेशेष्वा-क्रमणं प्रवृत्तमासीत्। योरोपियनैरितिहासकारैरेवैतद्वर्ण्यते।

ई० पू० ५ शत्यां योरोपस्याधिकांशभागे। यत्र यूनान-वलकान-इटली-स्पेन-इङ्गलैण्ड प्रभृतीनामन्तर्भावः रोमनानाँ साम्राज्यमासीत्। एशियावासि-भिराक्रामकैस्तत्सर्वथा विध्वस्तम्। तेष्वेवान्यतमजातीयैराक्रामकैः रोमना-न्निष्कास्य वृटिशाः स्वायत्तीकृताः। तदानीमेव हूणैः कात्स्न्र्येन समुद्रस्य डेन्यूब नद्याश्च मध्ये स्वतन्त्रं साम्राज्यं स्थापितम्। रोमसम्राजा वल्युपहा-रादिकं समर्प्यते स्म।

फ्रेञ्च इतिहासलेखको वुइसेनेदो लिखति 'प्राचीनरोमसमाजस्योच्चमध्यमश्रेण्यो विनाशं गताः। अवशिष्टा आक्रामकेषु मिलित्वैक्यमुपगताः। एडलोसेजातीयैः वृटेनजातिः सर्वथा ध्वस्ता। आक्रामकैः भौमिका नाशिताः। गिरजागृहाण्युन्मूलितानि। वृटेन जातिर्दासीकृता। दुःखनैराश्यवैवश्यैर्दास्यमङ्गीकृतम्। सर्वे डेन्यूब-राइन-जालर-फ्रान्स-वेलजियम-इटलियादि-प्रदेशेषु ये वधान्मुक्तास्ते दास्यमुपगताः।

वृटेनजातीया बहवः पलाय्य अमेरिकाप्रदेशं गताः। महत्यां संख्यायां सामूहिकवधो जातः। एक्कीटेन स्पेनप्रदेशेषु धर्मपरायणाः पादरीसमूहाश्च ताडयित्वा शृङ्खलाभिर्बध्वा जीविता एव दग्धाः। स्त्रियश्चात्रमानिताः, सतीत्वाद् भ्रंशिताः। प्रत्याक्रमणमाक्रामकानां पत्न्यो वध्यन्ते स्म। तूरानियैः जर्मनैरपि बहवो निहताः। स्त्रियो बालाश्च निगडिताः। केनचित्कविनोक्तम्-फ्रान्सस्योपरि समुद्रप्लावनापेक्षयाऽपि भीषणं दुःखं सम्पत्तिनाशश्च जातम्।

इडेसियसनामकस्य लेखकस्य रीत्या ५ शत्यां स्पेनो नाममात्रावशिष्टः। असंख्यानि समृद्धानि नगराणि नाशितानि। हूणजातीयैरेव वृटेनदेशे लन्दीनियम ( लन्दन ) यार्क-कालाचेष्ट-कैण्टर-वरी नारविच-वाथ प्रभृतीनि नगराणि समूलमुन्मूलितानि। पोपमिग्रो प्रथमेन रुदित्वोक्तम् 'संसारस्यान्त इदानीं सम्भाव्यते'। पैनोनिया नारिच्मा रेटिया हैलवेशिया गॉल वेलजियम वृटेन स्पेन इतालियावासिनां विशेषतः तद्दुःखपारम्पर्यं प्राप्तम्।

वलकानप्रायद्वीपस्य ततोऽप्यधिकदुरवस्था जाता। ईसाधर्मग्रन्थानुसारेण यः प्रलय उक्तः स एवेदानीमागत इत्यपि धारणा जाता।

अष्टम्यां नवम्यां दशम्याञ्चापि शत्यायान्याक्रमणानि तेषां सम्बन्धे वुइसोनेदो लिखति—स्केनडिनेविया वास्तव्यैराक्रामकैः शताब्दीपर्यन्तं जनसंहारपारम्पर्य्यं स्थापितम्, नगराणि दग्धानि, जनता दासतां नीता। जर्मनी हालैण्ड वेलजियम फ्रान्स स्काटलैण्ड आयरलैण्ड-इङ्गलैण्ड-देशा ध्वस्ताः। पूर्वं योरोपे हूणजातीयैः अवारजातीयैश्च मध्ययोरपे इटली-फ्रान्सादिदेशेषु हत्यापहारादिभिः सर्वेऽप्यातङ्किताः।

सहस्रवर्षीयाक्रमणं चर्चयता तेन लिखितमसभ्यजातीयैः ईशायीसाम्राज्यं समूलमुद्ध्वस्तम्। महता श्रमेण या उन्नतयः संम्पादिताः सर्वाः समाप्ताः। सर्वत्र खण्डगृहाण्येव दृश्यन्ते।

सर्वत्र अव्यस्था अराजकता च व्याप्ता। विधानस्थाने यथेष्टाचारस्य प्रसारः। पूर्वजैरुपार्जितानि धनानि ध्वस्तानि। समाजिकोन्नतिः सर्वथावरुद्धा। सन् ६२६ मक्कास्थानं मोहम्मदस्याधीनतां गतम्। वर्षद्वयेनैव सर्वोऽपि अरबदेशस्तद्वशं गतः। ६३६ वर्षे अरबैः ईराक-सीरिया च स्वायत्तीकृतौ ६३७ जेरुशलमस्थानं गृहीतम्।

६५७ पर्य्यन्तं ईरानदेशो वशीकृतः। सन् ७०१ चीनदेशस्योपर्य्याक्रमणं कृतम्। ७१५ वर्षं यावत् मिश्रदेशोऽनया जात्या वशीकृतः। ततः कारथेज उत्तरीयअफ्रीका देशः, यूरोपीयरोमनसाम्राज्यं चाप्यनयाक्रान्तम्। ७१३ ईस्वीये स्पेनोऽपि तद्वशं गतः। तदनन्तरं क्रमेण समस्त रूसदेशः यूनान वालकान-पोलैण्ड-इटली-सिजली-सहितोऽर्धयोरपप्रदेशस्तद्वशं गतः।

भारते ६३६ वर्षे उमरशासनकाले बम्बईसमतानाद्वीपे मुसलमानानां जलसेना आगता। उमरस्य दोषेण पश्चात्पदं गता। ७१२ मोहम्मद विन कासिमस्य नेतृत्वे भारते आक्रमणम्। इस्लामधर्मारम्भात्प्रागेव समुद्रतटेषु व्यापारप्रसङ्गे अरबाणां गतागतम् आसीत्। पूर्वं तेषां स्वभावः सरल आसीत्। इस्लामप्रादुर्भावानन्तरमपि सम्बन्धः प्रवृत्त एवासीत्। भारते हिन्दूधर्म-बौद्धधर्मयोः सङ्घर्षः प्रचलितः। लघुलघुसम्प्रदायबाहुल्यं तथाभूतमेव शासनबाहुल्यमासीत्तदानीमेव मुसलमानैरपि स्वधर्मप्रचार आरब्धः। तदानीं मालावारशासकः हिन्दूराजा चेरामनयेरूमलः, इस्लाममतमङ्गीकृतवान्। अब्दुररहमाननाम्ना निर्दिष्टः स अरबदेशं गत्वा ततः प्रचारकान् प्रेषितवान्। तदानीमेव मलावारतटे मसजीद निर्माणं जातम्।

अनेकैश्च मुस्लिममतप्रचारकैर्विदेशेभ्य आगत्य प्रचारैरिस्लामविस्तारः कृतः। इस्लामधर्मानुयायिभिश्चान्यदेशीयधर्मसंसर्गेण ज्ञानविस्ता-

रेणानेके सम्प्रदाया आविष्कृताः। सूफीसम्प्रदाये अद्वैतवादो हिन्दूधर्माद् गृहीतः, एकेश्वरवादस्तु तत्रासीदेव। पुनर्जन्मवादश्च तत्र सन्निविष्टः।

वेदादिशास्त्रानभिज्ञत्वात् वेदादिशास्त्रोक्तधर्मेषु जटिलता दुष्करता इस्लामधर्मे सरलता च भात्येव। वर्णाश्रमाचारो वैदिकजातिव्यवस्था चाद्यत्व इव पुरापि तदभिज्ञानां प्रतिकूलाः प्रतिभासन्ते स्म।

'भारमें अंग्रेजी राज' पुस्तकलेखकोऽपि मुसलीमधर्मप्रभावितो हिन्दुधर्म-जाटिल्येन भीतः मुस्लिमधर्मस्यैव माहात्म्यं वर्णितवान्। हिन्दूमहात्मनामपेक्षया मुस्लिम (फकीर) सतो माहात्म्यातिशयं वर्णयति। तत्सर्वमज्ञानविजृम्भितमेव। सम्प्रदायैक्यसंपादनमरुमरीचिकामोहितो वा यत्किञ्चिज्जल्पितवान् स तु शाङ्कराद्वैतेरामानुजभक्तौ च मुस्लीमप्रभावं स्वीकृतवान्।

विनकासिमकृताक्रमणात् शतत्रयवर्षानन्तरम् महमुदगजनबी-कृतमाक्रमणं सोमनाथमूर्तिनाशधनापहरणमतीव मृदुभाषया वर्णितवान्। शतवर्षानन्तरं मुहम्मदगोरी कृतमाक्रमणम्। तद्रीत्या कस्यापि जाति-विशेषस्य कस्मिंश्चिद्देशेऽसाधारणाधिकारमादाय नावतरणं भवति। मानवजातिविभागेन देशविभाजनं कृत्रिममेव। मन्ये तत्संस्कारेणैव देशविभाजनमङ्गीकृत्य हिन्दुस्तानपाकिस्ताननिर्माणपातकं कृतवन्तः। सत्येवमाङ्गलानामपि भारतेऽधिकारो मन्तव्यः, तन्मतरीत्या आर्य्याणां मुस्लिमानामपि आङ्गलवदाक्रमणकारित्वात्। सर्वमेतद्दुर्मतमुपरिष्टान्निराकरिष्यते। तद्रीत्या राष्ट्रियताऽपि रोग एव। यो तत्र निश्चयेनैक-निष्टः सन्निवसेत् स तद्देशवास्तव्य एव मन्तव्यः।

जैनेषु बौद्धेषु च शैवानामत्याचारो बहुधा तेन वर्णितः, हिन्दूधर्मानभिज्ञत्वेन तत्काठिन्येन तं प्रति द्वेषवत्वात्। तन्मतरीत्या जातिभेदमूर्तिपूजा नाशेनैव कल्याणम्। तस्यैव प्रचारः कबीर-नामदेव-रानाडेप्रभृतिभिः कृतः। तन्मतरीत्या हिन्दूधर्म-बौद्धधर्म-मुसलिमधर्मसंयोगेनैव तदानीं भारतीयधर्म प्रचलितः।

चंगेजखां कृतमाक्रमणं एशियापूर्वीयप्रदेशेष्वपि। तदुत्तराधि-रिभिः भारतम् एशीयाप्रदेशः योरपभागश्च स्वायत्तीकृतः

रुस-पोलैन्ड-वल्कान्-हङ्गरी-जर्मनी-प्रभृतिदेशाः मुगलसाम्राज्ये निविष्टाः । चंगेजखां बौद्धमतानुयायी समासीत् । मंगोलिया धर्मेऽपि विश्वासवानासीत् ।

१३९८ ईसवीये तैमूरस्य भारते आक्रमणम् । तदानीं मुहम्मदतुगलकः सम्राडासीत् । पञ्चदशदिनानन्तरमेव तैमूरो दिल्लीतः प्रस्थितः । १५२६ ई० बाबरस्याक्रमणम् । तेन इब्राहीम लोदी नामकं शासकं पराजित्य मुगलसाम्राज्यं भारते स्थापितम् । तद्रीत्या राजनीतिकसंघटनदृष्ट्या मुगलसाम्राज्यं वरदानमेव जातम् । तदानीमेकशासनमेकराजभाषा प्रचलिता । समानमुद्रा तुलामानादिकमपि समानम् । साहित्यिकोन्नतिश्च जाता । ततो हिन्दुभिः प्राप्तलिपिक्रमैरैतिहासिकसाहित्योल्लेखश्च ।

सर्वमेतदपि दासता मनोवृत्तिरेव, अशोकसम्राजोऽपि पूर्वं चन्द्रगुप्त-शासनावसरे कौटलीयार्थशास्त्रे सर्वव्यवस्थायाः वर्तमानत्वात् । द्वेषव-शादेव लेखकेन कौटल्यस्य चर्चाऽपि न कृता ।

अयोध्यायां रामजन्मभूमिस्थाने, मथुरायां कृष्णजन्मभूमिस्थाने, काश्यां विश्वनाथमन्दिरस्थाने च भगवतो मन्दिराण्युन्मूल्य मसजिद भवनानि निर्मितानि मुस्लिमशासकैः । शाहजहांप्रभृतिशासकानां न्याय-शीलताप्यासीदेव । तच्चर्चाप्युपेक्षिता । तेन इतिहासलेखकेषु यथा अन्ये तथाऽयमपि । परमनेन महाशयेन शिवाजी-समर्थरामदास-महाराणाप्रताप-प्रभृतीनां माहात्म्यं न ज्ञातं न वा वर्णितं, मुस्लिमपक्षापातबुद्धित्वात् । गोवधश्च शाहजहांप्रभृतिभिरवरुद्धस्तच्चर्चाऽपि पुस्तके न कृता । बाबर-स्यादेशानुसारेण हुमायुसाम्राजौदार्य्यमवलम्बितम् । तदानीं योरपे कैथोलिकविरुद्धा उपद्रवाश्चलन्ति स्म । धर्मप्रावरणव्याजेन जीवन्त एव सहस्रशो दह्यन्ते स्म । औरङ्गजेबेनापि प्रयागस्थसोमनाथमन्दिराय जागीर-दानं कृतम् । एवमनेकान्युदाहरणानि । शाहजहां कालेऽपि चौर्यं प्रायेण न भवति स्म । सति च कोतवालशासकात्तदाहरणप्रथासीत् ।

वीरमित्रोदये चेयं व्यवस्था पूर्वत एवोक्ता । अकबरकाले रूप्यकेन अद्यतनपरिमाणेन सपादमनपरिमाणं गोधूमादिकं, चतुराणकेन सुन्दरं कम्बलं लभ्यते स्म । भारते जनगणना व्यवस्थासीत् । योरपे तच्चर्चापि

नासीत्। औरङ्गजेबस्य मौर्ख्यपूर्णेनात्याचारेण साम्प्रदायिकसंघर्षो जातः। आलमशाह-बहादुरशाह-प्रभृतिभिर्यद्यपि तत्समीकरणाय प्रयत्न आरब्धः परमाङ्गलागमनेन तत्साफल्यं न जातम्।

करनलमालेसन रीत्या-भारतीयाः निष्कपटव्यवहारपरकीयविश्वासमयेन जातीयस्वभावेनाङ्गलानां वशं गताः। सर्वदैवार्धसभ्या असभ्याश्च सभ्याना-क्रमणादिभिः पराजयन्ति। योरपेऽपीयं घटना प्रसिद्धैव। इङ्गलिस्ताने सर्वेऽपि व्यापारलुब्धाः। तत्रत्याया राज्ञ्या अपि सैव कथा। भारते राजभिर्व्या-परानापेक्षिताः। व्यापारिषु सौविध्यसंपादने परमौदर्य्यञ्चात्रासीत्। परन्तु कौटल्येन व्यापारनियन्त्रणमपि स्पष्टमुक्तम्। तदज्ञानेनैव भारतीयानां पतनं जातम्। भारतीयनरेशैः सन्धिपत्राणि पालितानि। आङ्गलैस्तानि पुनः पुनः खण्डितानि।

एडमण्डवर्केण इङ्गलिशपार्लियामेण्टे वारनहेस्टिङ्गस्याभियोगप्रसङ्गे उक्तम्-एकमपि भारतीयैर्विहितं सन्धिपत्रं तादृशं नास्ति यदाङ्गलैर्न भग्नम्। वचनपालनं भारतस्य विशेषतासीत्।

कतिपय एवमाहुः—महाभारतस्य पात्राणि युधिष्ठिरार्जुनप्रभृतयो नैतिहासिकाः पुरुषाः किन्तु धर्माधर्मकल्पनावत् देवासुरकल्पनावच्च कौरव-पाण्डवादयोऽपि कल्पनामात्रप्रसूताः। परं नैतदुचितम्—यदि नाम महाभार-तस्य पात्राणि कल्पनामात्रप्रसूतान्यभविष्यंस्तदा ततोऽर्वाचीनानि ग्रन्थान्त-राणि न तान्युदधरिष्यन् पुराणेषु।

'आसन् मघासु मुनयः शासति पृथिवीं युधिष्ठिरे नृपतौ।'

इति बृहत्संहितायां ज्यौतिषे शास्त्रे। 'वासुदेवार्जुनाभ्यां वुन्' ४।३।९८ अष्टाध्याय्यां पाणिनीये व्याकरणे, सादरमेतेषां नामोल्लेखः क्रियते।

अमरसिंहेनापि स्वीये नामलिङ्गानुशासने 'इतिहासः पुरावृत्तम्' इत्यभाणि। इतिहासेत्ययं पारम्पर्योपदेशे, तदास्तेऽस्मिन्निति इतिहासः।

वाचस्पत्ये चेतिहासस्य लक्षणमेवमुक्तम्—

'धर्मार्थकाममोक्षाणामुपदेशसमन्वितम्।
पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते॥'

अर्थात् निरर्थकानां पुरावृत्तानामाख्यानमेव नेतिहासः। किन्तु धर्मार्थकाममोक्षाणामुपदेशमाविष्कुर्वत् यत् पुरावृत्तं तद्वर्णनमेवेतिहासः।

मनुसंहितायाम्—'आख्यानानीतिहासांश्च' (३।२३२) इत्यत्र 'इतिहासान् महाभारतादीन्' इति कुल्लुकभट्टः, 'इतिहासा महाभारतादयः' इति मेधातिथिश्चाहतुः।

यद्यपि क्वचित् क्वचित् 'द्वैपायनेन यत्प्रोक्तं पुराणं परमर्षिणा।' (म. भा. आ. प. १।१७) 'इतिहासमिमं विप्राः पुराणं परिचक्षते।' (म. भा. आ. प. १३।६) इत्यादौ पुराणशब्देनापि महाभारतग्रन्थोऽभिहितः तथापि।

'आचख्युः कवयः केचित् सम्प्रत्याचक्षते परे।
आख्यास्यन्ति तथैवान्ये इतिहासमिमं भुवि॥' (म. भा. आ. प. १।२६)

'तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम्।
इतिहासमिमं चक्रे पुण्यं सत्यवतीसुतः॥' (म. भा. आ. प. १।५४)

इत्यादि विविधस्थलेषु अस्य इतिहासत्वाभिधानात् इतिहासत्वमेव। महर्षिणा वेदव्यासेन सर्वलोकगुरोः परमेष्ठिनः समक्षं स्वयमस्य काव्यत्वाभिधानात्।

'कृतं मयेदं भगवन् काव्यं परमपूजितम्।' (म. भा. आ. प. १।६१) लोकगुरुणा च।

'त्वया च काव्यमित्युक्तं तस्मात्काव्यं भविष्यति।' (म. भा. आ. प. १।७२) इति तथैव समर्थनात् अस्य काव्यस्यैव सतः इतिहासत्वमपि।

'इतिहासः प्रधानार्थः श्रेष्ठः सर्वागमेष्वयम्। (म. भा. आ. प. २।३६)

इति भगवता व्यासेन प्रधानप्रतिपाद्यतया इतिहासस्यैव समर्थनात्। कवित्व-रीतिभेदात् कर्तुः भेदकल्पनमपि न समीचीनम्, यतो हि स्वयं भगवता व्यासेनैव।

'ग्रन्थग्रन्थिं तदा चक्रे मुनिर्गूढं कुतूहलात्।
यस्मिन् प्रतिज्ञयाप्राह मुनिर्द्वैपायनस्त्विदम्॥
अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च।
अहं वेद्मि शुको वेत्ति संजयो वेत्ति वा न वा॥' (म.भ.आ.प.१।८१-८१)

एवं प्रतिज्ञानात् कवित्वरीतिभेदस्यावश्यंभावित्वात् । अन्येष्वपि कविषु विषयभेदात् परिस्थितिभेदात् मानसोल्लासानुल्लासभेदात् कवित्वशैलीषु-भेदस्य बहुतरमुपलम्भात्। एवमेव समासव्यासवर्णनभेदात् कवित्व-शैलीभेदः ।

'विस्तीर्यैतन्महज्ज्ञानं ऋषिः संक्षिप्यचाब्रवीत् ।
इष्टं हि विदुषां लोके समासव्यासधारणं ॥ (म. भा.आ. प. १।५१)
इति रीत्या सम्भाव्यते ।

## रचनाकालविचारः

श्रीमन्महाभारतेनैव स्वीयरचनाकालविषये स्वान्तः साक्ष्येणैवं-प्रस्तूयते

'उत्पाद्य धृतराष्ट्रं च पाण्डुंविदुरमेव च ॥ ९५ ॥
जगाम तपसे धीमान् पुनरेवाश्रमं प्रति ।
तेषु जातेषु वृद्धेषु गतेषु परमां गतिम् ॥ ९६ ॥
अब्रवीद्भारतं लोके मानुषेऽस्मिन् महानृषिः ।
जनमेजयेन पृष्टः सन् ब्राह्मणैश्च सहस्रशः ॥ ९७ ॥
शशास शिष्यमासीनं वैशम्पायनमन्तिके ।
स सदस्यैः सहासीनः श्रावयामास भारतम् ॥ ९८ ॥
(म. भा. आ. अध्याय १)

एभिर्वचनैः प्रतीयते यत् भगवान् कृष्णद्वैपायनो व्यासः धृतराष्ट्र-पाण्डु-विदुरेषु कालधर्मं गतेषु अनन्तरं पारीक्षितस्य जनमेजयस्य सर्पसत्रात्पूर्वं च महाभारतं रचयामास। जनमेजयस्य सर्पसत्रं प्रवर्तमाने तेन पृष्टे सहस्रशो-ब्राह्मणानामनुरोधेन स्वगुरोर्वेदव्यासस्याज्ञया वेदव्यासशिष्यो वैशम्पायनः सदस्यैः सहासीनः मध्ये मध्ये यज्ञविरामकाले वेदव्याससमक्षमेव महाभारतं श्रावयामास ।

युधिष्ठिरादीनां बाल्य एव पाण्डुः पञ्चत्वमापेदे। महाभारत-युद्धानन्तरं च पञ्चदशवर्षपर्यन्तं युधिष्ठरराज्ये धृतराष्ट्र उवास ।

'पाण्डवाः सर्वकार्याणि सम्पृच्छन्तिस्म तं नृपम् ।
चक्रुस्तेनाभ्यनुज्ञाता वर्षाणि दश पञ्च' च ॥ ९ ॥
(म. भा. आश्रम वा. प-अध्याय १)

षोडशे वर्षे च धृतराष्ट्रस्य निर्वेदः।
'ततःपञ्चदशे वर्षे समतीते नराधिपः ॥ १२ ॥
राजा निर्वेदमापेदे भीमवाग्बाणपीडितः।' (महाभारताश्रमवासिप० अध्याय ३) महाभारतयुद्धात् षोडशे वर्षे धृतराष्ट्रस्य वनगमनम्। वने निवसतः कञ्चित् कालं तपस्वतः धृतराष्ट्रस्य समीपे ऋषीणामागमनम्। शतयूपस्य प्रश्ने नारदस्योत्तरम्—

'तत्राहमिदमश्रौषं शक्रस्य वदतः स्वयम्।
वर्षाणि त्रीणि शिष्टानि राज्ञोऽस्य परमायुषः ॥' (म.भा.आ.वा.प. २०।३२)

अर्थात् महाभारतयुद्धोत्तरं त्रिंशे वर्षे धृतराष्ट्रादीनां परमपदप्राप्तिः। साग्राणि षट्त्रिंशत्वर्षाणि यावत् महाराजयुधिष्ठिरस्य राज्यम्। त्रिंशे वर्षे परीक्षतोऽभिषेकः। चतुर्विंशति वर्षाणि यावत् परीक्षितो राज्यम्। षष्टितमे वर्षे च दिष्टान्तप्राप्तिः। तथाचाश्वत्थामानं प्रति भगवदुक्तिः—

'इतश्चोर्ध्वं महाबहुः कुरुराजो भविष्यति ॥ १५ ॥
(म. भा. सौ. प. १६।१५)

अर्थात् अमोघब्रह्मशिरोऽस्त्रप्रयोगादूर्ध्वमपि न मरिष्यति किन्तु मृतो जातोऽपि दीर्घमायुरवाप्य कुरुराजो भविष्यतीत्यर्थः। कियानायुरित्याकांक्षायाम्—

'वयः प्राप्य परिक्षित्तु वेदव्रतमवाप्य च ॥ १३ ॥
कृपाच्छारद्वताच्छूरः सर्वास्त्राण्युपपत्स्यते।
विदित्वा परमास्त्राणि क्षत्रधर्मव्रते स्थितः ॥ १४ ॥
षष्टिं वर्षाणि धर्मात्मा वसुधां पालयिष्यति।,
(म. भा. सौ. प. अध्याय १६)

षष्टिं वर्षाणि वयः प्राप्येत्यन्वयः। अत एव आदिपर्वणि एकोनपंचाशे अध्याये—

'प्रजाइमास्तवपिता षष्टिवर्षाण्यपालयत्।
ततो दिष्टान्तमापन्नः सर्वेषां दुःखमावहन् ॥१७॥

इत्यत्र नीलकण्ठः-'षष्टिवर्षाणि जन्मतः षष्टिवर्षपर्यन्तं न तु राज्यलाभात् षट्त्रिंशे वर्षे लब्धराज्यः चतुर्विंशतिवर्षपर्यन्तं तत्पालनस्य दृष्टात्वादित्यर्थः'। एतस्यार्थस्य समर्थकः अस्मिन्नेवाध्यायेषड्विंशः श्लोकः-'परिश्रान्तो वयःस्थश्च षष्टिवर्षो जरान्वितः।' अत्र वयःस्थ इत्यस्यउपक्रान्तवार्धकः, जरान्वित

इत्यस्य मृत्युनाक्रान्त इत्यर्थः । महाभारतयुद्धात् षष्टितमे वर्षे बाल्यावस्थायामेव जनमेजयस्य राज्याभिषेकः । वयस्के जात उद्वाहः । तदनन्तरं उत्तङ्कस्य प्रेरणया प्रवर्तिते जनमेजयस्य सर्पसत्रे स्वगुरोर्व्यासस्याज्ञया वैशम्पायनेन महाभारतं तत्समक्षं श्रावितम् ।

## महाभारतेतिनामकरणविषये किञ्चित्—

यथा खलु भगवत आदिकवेः वाल्मीकेः चतुर्विंशतिसहस्रात्मकस्यादिकाव्यस्य नामत्रयं प्रस्तावनायां भगवता वाल्मीकिना निरूपितम्—

(१) रामायणम् (२) सीताया महच्चरितम् (३) पौलस्त्यवधम् ।

'काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् ।
पौलस्त्यवधमित्येव चकार चरितव्रतः ॥' (बा. का. ४।७)

कृत्स्नमपि काव्यं रामायणम् रामस्य अयनं चरितम्, अथवा राम एव अयनं पर्यवसानं प्रतिपाद्यतयास्येति एकं नामधेयम्, ।

भगवत्या जनकनन्दिन्या अयोनिजाया महीतलात् जन्म, तस्याः पातिव्रत्यबलात् महाविभूतिमतः सर्वराक्षसराजस्य महाराजरावणस्य राजधानीं लङ्कां सर्वथा दहतो महाज्वालस्य वह्नेः हनूमतः शरीरे स्वस्य स्वाभाविकमौष्ण्यमपाकृत्य शिशिरसम्पातरूपेण स्थितिः, युद्धे विजये जाते कृते चितारोहणे सर्वसाक्षिणो भगवतो वह्नेः सर्वथा परमनिष्कलमषस्य सीताचरितस्य साक्ष्यम्, अन्ते प्रतिपद्यमाने शपथे भगवत्या धरित्र्या स्वाङ्के सीतामुपवेश्य स्वरूपे प्रतिष्ठेति द्वितीयं नामधेयम् ।

महातपसः स्वतपोबलेनैव प्राप्तपरमैश्वर्यस्य अभिजातवंशजातस्य पौलस्त्यस्य अन्ते उद्दाम्नः सतः साधूनां तपस्विनां वर्णाश्रमाचारवतां सच्चरितानां गोब्राह्मणानाञ्च कण्टकभूतस्य त्रैलोक्यकण्टकस्य वध इति तृतीयं नामधेयम् ।

विभिन्नासु मानसीषु स्थितिषु भगवतो वाल्मीकेर्हृदि प्रदीप्तेषु त्रिष्वप्येतेषु नामसु रामायणमित्येव नाम ऋषिणा स्वीकृतम् । न भ्रमितव्यं यत्—

'रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत' ।
(बा. का. २२।१२)

इति मधुरवाणीयोगात् तथा नामस्वीकृतिरिति । यतो हि सीताशब्दस्यापि तथैव मधुरवाणीप्रतिपादनं दृश्यते ।

'सीतेति मधुरां वाणीं व्याहरन् प्रतिबुद्धयते।' (सु. का. ३६।४४)

सीताया निर्दोषत्वख्यापनाय ग्रथितस्य काव्यस्य तत्पतेः स[illegible]धावेव वर्णनम्। वेदोपबृंहणार्थाय च लोके प्रचारणम्।

'वेदोपबृंहणार्थाय तावग्राहयत प्रभुः।' (बा. का. ४।६)

तथैव शतसहस्रश्लोकसम्मितस्य अस्य ग्रन्थस्य नामधेयप्रसङ्गे एवं विज्ञायते यत् भगवतो महागणपतेर्लेखनारम्भात्प्रागेव भगवतो व्यासस्य बुद्धिस्थे वस्तुनि आद्यं भारतं, भारतं, महाभारतमिति नामत्रयमुपस्थितम् जयनाम्नापि एतदेवस म्बोद्धयते। तथाहि—

'इदं शतसहस्रं तु लोकानां पुण्यकर्मणाम् ॥१०१॥
उपाख्यानैः सह ज्ञेयमाद्यं भारतमुत्तमम्।
चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम् ॥१०२॥
उपाख्यानैर्विना तावद्भारतं प्रोच्यते बुधैः।
ततोऽध्यर्धशतं भूयः संक्षेपं कृतवानृषिः ॥१०३॥
अनुक्रमणिकाध्यायं वृत्तान्तानां सपर्वणाम्।' (म भा. आ. १)

अर्थात् उपाख्यानैः सहितस्य शतसहस्रश्लोकात्मकस्य आद्यं भारतमिति नामधेयम्। एतस्यैव घटकीभू[illegible] उपाख्यानैर्विना चतुर्विंशतिसहस्रश्लोकात्मकं ग्रन्थं भारतसंहितां चक्रे। अर्थात् भारतसंहिता नाम्ना निर्देष्टुं निश्चिकाय [illegible] न तु महाभारतसंहितातः खिलांचक्रे ततोऽपि संक्षेपम् अध्यर्धशतश्लोकात्मकम् अनुक्रमणिकाध्यायं चक्रे। तमपि महाभारतग्रन्थघटकमेव चक्रे, न खिलम्। एतस्या लक्षश्लोकसम्मितायाः संहिताया भिन्नां षष्टिलक्षश्लोकसम्मितां संहितां वेदव्यासश्चक्रे। लक्षश्लोकात्मकमहाभारतसंहितामपि षष्टिलक्षश्लोकसम्मितग्रन्थघटकीभूतां चकार।

'षष्टिं शतसहस्राणि चकारान्यां स संहिताम् ॥१०५॥
त्रिंशच्छतसहस्रं च देवलोके प्रतिष्ठितम्।
पित्र्ये पञ्चदश प्रोक्तं गन्धर्वेषु चतुर्दश ॥१०६॥
एकं शतसहस्रं तु मानुषेषु प्रतिष्ठितम्।'
(म. भा. आ. प. अ. १)

अत एव षष्टिलक्षसम्मितश्लोकात्मकस्य ग्रन्थस्यैव अन्यां संहितामिति व्यपदेशः।

'इदं शतसहस्रं हि श्लोकानां पुण्यकर्मणाम् ।
सत्यवत्यात्मजेनेह व्याख्यातममितौजसा ॥१४॥ (ग्र. प. ६२)
इति महाभारतं प्रकृत्य—
'जयो नामेतिहासोऽयं श्रोतव्यमिति शुश्रुवान् । ( आ. प. ६२।२० )
तस्यैव जयसंज्ञाभिधानम् । तथा च स्वर्गारोहणपर्वणि पञ्चमेऽध्याये—
'आकर्ण्य भक्त्या सततं जयाख्यं भारतं महत् ।
श्रीश्च कीर्तिस्तथाविद्या भवन्ति सहिताः सदा ॥ (४६)
'जयो नामेतिहासोऽयं श्रोतव्यो मोक्षमिच्छता ।' (५१)
जयेत्यन्वर्थसंज्ञा स्य महाभारतग्रन्थरत्नस्य—
यतो धर्मार्थकाममोक्षाश्चत्वारोऽपि पुरुषार्थाः प्राप्यन्ते तस्य जयेति संज्ञा । चतुर्णां पुरुषार्थाणामपि हेतौ जयोऽस्त्रियाम्, इतिकोषात् । इदं कोषवाक्यं नीलकण्ठेन स्वीये भारतभावदीपे उद्धृतम्—
एतस्यार्थस्य समर्थकं महाभारतीयं वचनं यथा—
'धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥
(ग्रा. प. ६२।५३, स्वर्गारोहणपर्व ५।५०)
महाभारतनामकरणेऽपि व्यासस्य वचनं यथा—
'एकतश्चतुरो वेदा भारतं चैतदेकतः ॥२७१॥
पुरा किल सुरैः सर्वैः समेत्य तुलया धृतम् ।
चतुर्भ्यः सरहस्येभ्यो वेदेभ्यो ह्यधिकं यदा ॥२७३॥
तदा प्रभृति लोकेऽस्मिन् महाभारतमुच्यते ।
महत्त्वे च गुरुत्वे च ध्रियमाणं यतोऽधिकम् ॥२७३॥
महत्त्वात् भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥२७४॥'
(आ. प. अध्याय १)
'महत्त्वाद् भारवत्त्वाच्च महाभारमुच्यते ।
निरुक्तमस्य सो वेद सर्वपापैः प्रमुच्यते ॥४५॥'
(स्वर्गारोहणपर्व ५)

'भरतानां महज्जन्म महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥'
(आ. प. ६२।३६)

अस्य महाभारतस्य निर्माणं त्रिभिर्वर्षैर्महर्षिणा व्यासेन विहितम्—

'त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनिः ।
महाभारतमाख्यानं कृतवानिदमद्भुतम् ॥'
(आदिपर्व ६२।५२)

त्रिभिर्वर्षैरिदं पूर्णं कृष्णद्वैपायनः प्रभुः ।
अखिलं भारतं चेदं चकार भगवान् मुनिः ॥'
(स्वर्गारोहण प० ५।४८)

एष भारतीययुद्धस्य विशद इतिहासो महाराजयुधिष्ठिरस्य विजयमुपलक्ष्य निबद्धः । युद्धानन्तरं विंशतिवर्षाणि यावत् धृतराष्ट्रस्य स्थितिः । अतः तदनन्तरं युधिष्ठरराज्यकालस्य अर्थात् महाभारत-युद्धानन्तरं ३६ वर्षात् प्रागेव एतस्योपनिबन्धनं प्रतीयते । यद्यपि विजय-मुपलक्ष्योपनिबद्धव्यानि काव्यानि विजयानन्तरं झटित्येवोपनिबद्धयन्ते तथापि—धृतराष्ट्रस्य समक्षमुपनिबन्धनं नौचितीमावहति । यतो हि महाराजो युधिष्ठरः सर्वात्मना धृतराष्ट्रं प्रसादयितुं सन्तोषयितुं च प्रायतत ।

'यथा पुत्रवियुक्तोऽयं न किञ्चिद् दुःखमाप्नुयात् ॥२५॥
इति तानन्वशाद् भ्रातॄन्नित्यमेव युधिष्ठरः ॥' (आश्रम ग्रा. १)
'उवाच स तदा भ्रातॄन् अमात्यांश्च महीपतिः ॥३॥
मया चैव भवद्भिश्च मान्य एव नराधिपः ।
निदेशे धृतराष्ट्रस्य यस्तिष्ठति स मे सुहृत् ॥४॥
विपरीतश्च मे शत्रुर्नियम्यश्च भवेन्नरः ।'
(आश्रम वा. प. २)

महाभारते च—

'विस्तरं कुरुवंशस्य गान्धार्या धर्मशीलताम् ॥९९॥
क्षत्तुः प्रज्ञां धृतिं कुन्त्याः सम्यग्द्वैशम्पायनोऽब्रवीत् ।
वासुदेवस्य माहात्म्यं पाण्डवानां च सत्यताम् ॥१००॥
दुर्वृत्तं धार्तराष्ट्राणामुक्तवान् भगवानृषिः ।'

अतः धृतराष्ट्रस्य परलोकगमनान्तरं युधिष्ठरराज्य एव एतस्य निर्माणम् ।

**महाभारतयुद्धकालनिर्णयः—**

'अन्तरे चैव सम्प्राप्ते कलिद्वापरयोभूत् ।
समन्तपञ्चके युद्धं कुरुपाण्डवसेनयोः ॥' (आदि प. २।१३)

इति कलिद्वापरसन्धावेव युद्धं जातम् वचनान्तरेणापि अस्यैव सिद्धान्तस्य परिपोषो जायते । तथाहि—

'द्वापरस्य कलेश्चैव सन्धौ पार्यवसानिके ॥९८॥
प्रादुर्भावः कंसहेतोर्मथुरायां भविष्यति ।'
(महाभा० शान्तिपर्व ३३९)

स एव कालः कलिसंवत् रूपेण भारतयुद्धरूपेण च लोकैरुपादीयत । ज्यौतिषशास्त्रे पञ्चाङ्गेषु च स एव कालो जागरूकः । केषुचित् शिलालेखेष्वपि तस्यैव कालस्योल्लेखः । अस्य प्रारम्भः ईसवीयसन् प्रारम्भतः द्वयधिकसहस्रत्रयवत्सरपूर्वं ( ३१०२ वर्षपूर्वं ) फरवरीमासस्य अष्टादश तारिकायां प्रातःकालाद्गण्यते ।

ततः परं महाराजयुधिष्ठरस्य राज्यं ३६ वर्षपर्यन्तम् । ततः पाण्डवानां प्रस्थानगमनम् । ततः परीक्षितो राज्यम्, तद्राज्यप्रथमवर्षे युधिष्ठिरशकः । चालुक्यवंशीयेन महाराजपुलकेशिना द्वितीयेन बीजापुरक्षेत्रे एहोलीनामधेये पर्वतीये स्थाने निर्मितजैनमन्दिर उत्कीर्णेन शिलालेखेनापि अयमेव पन्थाः प्रशस्यते । तथाहि—तत्रत्यं श्लोकद्वयम्—

'त्रिंशत्सु त्रिसहस्रेषु भारतादाहवादितः ।
सप्ताब्दशतयुक्तेषु गतेष्वब्देषु पञ्चसु ॥
पञ्चाशत्सु कालौ काले षट्सु पञ्चशतीषु च ।
समासु समतीतासु शयनाय च भूभुजाम् ॥

अर्थात् भारतयुद्धतः पञ्चत्रिंशदुत्तरसप्तशताधिकसहस्रत्रयवत्सरेषु गतेषु। अर्थात् प्रस्तुते महाराजयुधिष्ठिरसमये इतः कियत्कालात्पूर्वं तस्य स्थितिरिति जिज्ञासायमाचार्यवराहमिहिरो गणनया तं कालं व्याचष्टे–'षड्द्विकपञ्चद्वियुतः शककालस्तस्य राज्ञश्च'। अर्थात् २५२६ युतः शककालो युधिष्ठिरकाल इत्यर्थः।

एषमः २०२६ विक्रमसंवत्सरे व्यतीते गतकलिः ( अर्थात् युधिष्ठिर-शकः ) ५०७३। ५०७३–२५२६=२५४७। अर्थात् सप्तचत्वारिंशद-धिकपञ्चशतोत्तरेषु सहस्रद्वयकलिवत्सरेषु व्यतीतेषु अर्थात् विक्रमसंवत्स-रारम्भात् धृतिबाण (५१८) वर्षपूर्वं ईस्वीसन् प्रारम्भाच्च भूतर्षिबाण (५७५) वर्षपूर्वं कस्यचन शकस्य प्रवृत्तिराचार्यवराहमिहिराभिमता। यतोहि युधिष्ठिरशकः कलिवत्सरश्चैक एव।

केचित्तु आन्ध्रशकप्रवृत्तिः ईस्वीसन् प्रारम्भात् ५५० वर्षपूर्वं जाता। स एव शक उपर्युक्ते श्लोके वराहमिहिरेण गृहीत इत्याहुः। परन्तु १९७२ | ५५० | २५२६=५०४८ वत्सराणि तेषां मते भवन्ति। व्यतीतानि च ५०७३ वत्सराणि। इति तत्त्व (२५) वर्षान्तरं स्पष्टमेव तेषां मते दुःशकसमाधानमेतदिति।

तथा शकभूभुजां षट्पञ्चाशदुत्तरपञ्चशतवत्सरेषु गतेषु एतन्मन्दिर-निर्माणं जातम्। वराहमिहिरस्य स्थितिः ईशूजन्मतः पूर्वमेव निम्नप्रमाणैः सिद्धयति। तथाहि—पञ्चतन्त्राख्यस्य नीतिशास्त्रस्य पारसीकभाषायाम-नुवादः ईसवीयपञ्चमशताब्द्यां सम्पन्न इति निर्विवादम्। तस्मिंश्च पञ्चतन्त्रे नामग्राहं वराहमिहिरो मित्रभेदे स्मृतः। तत्र चत्वारःश्लोकाः अपि तन्ना-म्नोद्धृताः। ज्यौतिषशास्त्रीयकरणग्रन्थस्य खण्डखाद्यस्य टीकायामामराज-कृतायामुल्लेखो विद्यते यत् 'नवाधिकपञ्चशतसंख्यशाके वराहमिहिरा-चार्यो दिवं गतः।' यदि 'शाके' शब्देन वर्तमानप्रचलितशकसंवत्सरो गृहीतो भवेत् तर्हि ५५७ ईसवीयवर्षे तस्य निधनं युज्यते। एवं षष्ठ्यां शताब्द्यां सम्पन्ने तस्य निधने शतवर्षपूर्वमेव अनूदिते ततः बहुतिथपूर्वकाल-सम्भावितसन्दृब्धे ग्रन्थे कथंकारं तस्य स्मृतिः, तन्नाम्ना श्लोकोद्धरणं च

सम्भाव्येत ? अतः वर्तमानशकसवत्सरादन्यः कश्चन शकसंवत्सरः ईशू-जन्मतः पूर्वमेव प्रचलित आसीत्। तस्य च सङ्केतः वराहमिहिरेण स्वीयबृहत्संहिताग्रन्थे दत्तः। यथा—

आसन् मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ।
षड्द्विकपञ्चाद्वियुतः शककालस्तस्य राज्ञश्च ॥' ( १३।३ )

अत्र प्रसङ्गात्कलिप्रवृत्तिमधिकृत्य किञ्चित् विचार्यते—'द्वापरस्य-कलेश्चैव सन्धौ पार्यंव सानिके।' इति शान्तिपर्वणि ३३९ अध्याये एकोन-नवतितमे श्लोके कलिद्वापरसन्धेः पर्यवसाने कृष्णावतारो वर्णितः। श्रीमद्भागवते च द्वादशस्कन्धे द्वितीयेऽध्याये—

'विष्णोर्भगवतो भानुः कृष्णाख्योऽसौ दिवं गतः।
तदाविशत्कलिर्लोकं पापे यद्रमते जनः ॥ २९ ॥

यावत्सपादपद्माभ्यां स्पृशन्नास्ते रमापतिः।
तावत्कलिर्वै पृथिवीं पराक्रान्तुं नचाशकत् ॥३०॥'

यदा देवर्षयः सप्त मघासु विचरन्ति हि।
तदा प्रवृत्तस्तु कलिः द्वादशाब्दशतात्मकः ॥३१॥

अत्र श्रीधरस्वामी—'यदा विष्णोर्भानुः, भातीति भानुः शुद्धसत्त्वा-त्मको देहः, दिवं वैकुण्ठं गतः, तदा कलियुगमविशत्। यत् यस्मिन् युगे जनः पापे रमते इति कलियुगस्य' लक्षणम् ॥२९॥

ननु श्रीकृष्णे पृथिव्यां वर्तमानेऽपि सन्ध्यारूपेण कलिः प्रविष्ट एवासीत्, सत्यम्, तथापि तावत् तस्य पराक्रमो नाभवत् ॥३०॥

अतो यथोक्त एव कलिप्रवेशकाल इत्याह—यदा देवर्षय इति। द्वादशाब्दशतात्मक इति—दिव्येन मानेन संध्या संध्यांशाभ्यां सह यो द्वादशाब्दशतात्मकः स कलिस्तदा सन्ध्यामतिक्रम्य प्रविष्ट इत्यर्थः ॥३१॥

एतनेदं सुस्पष्टमभिज्ञायते यत् महाभारताहवात् षट्त्रिंशद्वर्षाणि यावत् महाराजो युधिष्ठरः पृथिवीमपालयत्। सप्तत्रिंशे च वर्षे भगवतः श्रीकृष्णस्य परमधामगमनं श्रुत्वा परीक्षितं राज्यसिंहासने संस्थाप्या-

भिषिच्य भ्रातृभिः पत्न्या च सह महाप्रस्थानमगमत्। अतः परीक्षितः साम्राज्यसिंहासनाधिरोहणकाल एव कलिप्रवेशकालः न ततः पूर्वम्। जैन-मन्दिरशिलालेखे—

त्रिंशत्सु त्रिसहस्रेषु भारतादाहवादितः।
सप्ताब्दशतयुक्तेषु गतेष्वब्देषु पञ्चसु॥

अर्थात्—इतः अधुनातनात् कालात् भारतात् आहवात् भारतयुद्धं यावत् अभिव्याप्य ३७३५ वत्सरेषु गतेषु' इति यत् उत्कीर्णं तत्तु भ्रान्त्या। तत्र श्लोके त्रिंशत्सु त्रिसहस्रेषु कलिकाल-प्रवेशतः इति भाव्यम्। महाराजयुधिष्ठिरस्य महाप्रस्थानगमनान्तर परीक्षितो राज्ये धर्मराजस्य युधिष्ठरस्य स्मृत्यर्थं युधिष्ठिरशकप्रवृत्तिः। प्रायः शकशाकसंवत्सरशब्दाः पर्यायवाचिनः। महाराजजनमेजयस्य ताम्रशा-सनेन विज्ञायते यत् युधिष्ठरशके कलिप्रवृत्तावेव जयकाव्य (महाभारत)-स्योदयः। अर्थात् लोके प्रादुर्भावः। कृष्णद्वैपायनस्य मनसि पूर्वत एव तस्य सद्भावात्। जैनमन्दिरोत्कीर्णशिलालेखानुसारं भारताहवसंवत्सरस्य (अस्मद्दृष्ट्या कलिसंवत्सरस्य) शकसंवत्सरस्य चान्तरं ३१७९ वर्षाणि भवन्ति। अधुनातने काले कलिसंवत्सरः ५०७३ शकश्च १८९४ एतयो-रप्यन्तरं ३१७९ वर्षाण्येव। एतेन दृढं निश्चीयते यत् कलिसंवत्सरः युधिष्ठिरशकश्च एक एव।

'आसन् मघासु मुनयः शासति पृथिवीं युधिष्ठिरे नृपतौ।
षड्द्विकपञ्चद्वियुतः शककालस्तस्य राज्ञश्च॥'
(बृ. सं. १३।३)

अर्थात् वराहमिहिरकाले यः शक आसीत् तस्मिन् २५२६ संख्यासंकलनेन युधिष्ठिरशकः समायाति। युधिष्ठिरराज्ये च सप्तर्षयः मघास्वासन्। एतत्सिद्धान्तसमर्थकं वचनं वृद्धगर्गस्य भट्टोत्पलेन स्वीय-बृहत्संहिताविवृतावुद्धृतम्। तद्यथा—

'कलिद्वापरसन्धौ तु स्थितास्ते पितृदैवतम्।
'एकैकस्मिनृक्षे शतं शतं ते चरन्ति वर्षाणाम्॥' (बृ. सं. १३।६)

इति वदता वराहमिहिरेण सप्तर्षीणां स्थितिः प्रतिनक्षत्रं शतवर्षं यावत् अभिहिता। एतस्मिन्नर्थे भट्टोत्पलेन कश्यपस्य मतमुद्धृतम्। तद्यथा—

शतं शतं तु वर्षाणामेकैकस्मिन् महर्षयः।
नक्षत्रे निवसन्त्येते ससाध्वीका महातपाः॥' इति

श्रीमद्भागवतेनापि एष एव सिद्धान्तः समर्थ्यते—

'महर्षीणां तु यौ पूर्वौ दृश्येते उदितौ दिवि।
तयोस्तु मध्ये नक्षत्रं दृश्यते यत्समं निशि ॥२७॥
तेनैते ऋषयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम्।
ते त्वदीये द्विजाः काले अधुना चाश्रिता मघाः ॥२८॥'(१२।२)

ते द्विजास्त्वदीये काले अर्थात् तव जन्मकाले कलिद्वापरसन्धौ तथा अधुना च अस्मिन् कलिकाले तव मृत्यौ सन्निहिते च मघाः आश्रिता वर्तन्ते।

अधुनातनैः पौरस्त्यपाश्चात्त्योभयविधसरणिमनुयायिभिः सांवत्सरिकैः यद्यप्येष सिद्धान्तो नाद्रियते तथापि पुरातनानृषीन् परमाप्तान् मन्वाना वयमधुनातनानामेव भ्रमं कल्पयामहे।

राज्ञः सुधन्वनो दानपत्रेण ( संस्कृत चन्द्रिका खण्ड १४ संख्या २-३ ) तथा राज्ञः सर्वजित्वर्मणो दानपत्रेण [ संस्कृतचन्द्रिका खण्ड १४ संख्या २-३] पञ्चाङ्गेषु प्रवहमाणया अविच्छिन्नपरम्परया च युधिष्ठिर-संवत्सरस्य कलिसंवदैक्यं प्रमीयते।

'षड्द्विकपञ्चद्वियुतः शककालस्तस्य राज्ञश्च।' (१३।३) इति वराहमिहिरश्लोकं वीक्ष्य वर्तमानशके २५२६ संख्यां सङ्कलय्य कलिसंवत्सरे च तां व्यवकलय्य शेषं ६५३ लब्ध्वा राजतरङ्गिणीकारः कल्हणोऽपि बभ्राम। तथा च भारतादिविरुद्धं राजतरङ्गिण्यामुपनिबबन्ध—

'शतेषु षट्सु सार्धेषु त्र्यधिकेषु च भूतले।
कलेर्गतेषु वर्षाणामभूवन् कुरुपाण्डवाः॥'

( १।५१ राजतरङ्गिणी )

एवञ्च महाभारतग्रन्थविषये पाश्चात्त्यविचारकाणां बहुधा दुरभिसन्धयो विद्योतन्ते।

डाक्टर बेबर, लुडविग, बुहलर प्रभृतयोऽन्यान्ये अनेके पाश्चात्त्या भारतीयेतिहासक्षेत्रे प्रायोऽराजकतामेव वितेनिरे। तथा चाश्वलायन-समयम् ईसा पूर्वं ३५० वर्षकालमनुमाय तस्य सूत्रे महाभारतना-मग्रहणात् ततः शतवर्षपूर्वं महाभारतग्रन्थरचनामनुमिन्वन्ति ते। दुर्भाग्यवशादयमेव राद्धान्तोऽधुना सर्वतन्त्रसिद्धान्तः प्रचुर-प्रचारश्च संवृत्तः। अधुनातनीषु शिक्षासंस्थासु च अध्यापकाध्येतृपरम्परासु अयमेव सिद्धान्तो जागर्ति।

मैक्समूलरमहोदयो भारतीयवेदादिशास्त्राणां परममर्मज्ञो विद्वाना-धुनिकेषु गण्यते। परन्तु सोऽपि स्वीये प्राचीन-संस्कृत-साहित्येतिहास-ग्रन्थे नैकविधा अनर्गलाः कल्पना उद्भमति। सोऽभिप्रैति यत् नायं महाभारत-ग्रन्थः कस्यचिदेकस्य कवेः कृतिः, परं तन्निर्मातारः दृढ मनुप्रोक्तधर्मा-नुयायिनः सम्भवेयुः। तैर्नैकधा सम्पाद्यमानेऽप्यावरणे पाण्डवानां प्राचीन-परम्परा इतस्ततः प्रस्फुट्य प्रकाशन्त एव। बाल्ये पाण्डवानां शिक्षा ब्राह्मण-सम्प्रदाय एव संवृत्ता। ब्राह्मणैस्तेषां सदा संसर्गः। परं तथापि पञ्चापि भ्रातर एकामेव स्त्रियम् उद्वाहितवन्तः। स्पष्टं धर्मविरुद्धैषा घटना महा-भारतस्य विभिन्नसम्पादकैः विभिन्नविधया सम्मार्जितापि विभिन्नारोपै-रारोपितापि न निष्कलङ्कतामाप। इत्येषा दिक् तेषां पाश्चात्त्य-विचारकाणां महाभारतग्रन्थविषये।

वस्तुतस्तु स्वतोगृहीतं समुद्रजलं यथा सलवणमपेयमेव तिष्ठति तदेव मेघद्वारानीतं मनोहृत्य सुहितहेतु भवति, तथैव भारतीयाचार-विचार-संस्काराणां भारतीयशास्त्राणां च रहस्यं गुरुपरम्परात एव समीचीनतया विज्ञायते। एवमक्रियमाणे विपरीत एवार्थो भासते। पाश्चात्त्यानां विदुषां विद्याव्यसनम्, अनुसन्धानम् अद्भुतप्रतिभावैभवं चावश्यं प्रशंसा-स्पदम् किन्तु शास्त्रगहने गूढं परिभ्राम्यतां तेषां दुरभिसन्धितमुद्देश्यमपि न तिरोहितम्। भारते पाश्चात्त्य ( इंगलिश ) शिक्षायाः प्रबलप्रचारको लार्ड मेकाले महोदयः कथयति यत् 'हिन्दूनाम् ईसायी धर्मे दीक्षार्थं हिन्दूधर्म-खण्डनमनावश्यकम किन्तु पाश्चात्त्यशिक्षाशिक्षितानां मूर्तिपूजायां स्वत एवानाश्वासः।'

इदानींतनेषु विचारकेषु भारतीयशास्त्राणि प्रति दृढबद्धादरतया ख्यातः मैक्समूलरमहोदय आत्मकथायां लिखति यत् 'वेदमन्त्रा न केवलं परम्परितार्थद्योतकाः किन्तु निरर्थका अपि। साम्प्रतं वयं यस्मिन् वातावरणे प्रतिष्ठितास्तस्मिन् हस्तक्षेपं विधातुं न वेदमन्त्रा अधिकारिणः। कामं प्राचीनसंग्रहालयेषु तेभ्यः प्रतिष्ठितं पदं दातुं वयमुद्यताः किन्तु तेषां प्रभावैराक्रान्तां स्वीयजीवनयात्रां निर्वोढुं न क्षमाः।'

अपरस्मिन् पुस्तके 'चिप्स फ्राम दी जर्मन वर्कशाप' नामधेये स एव महाशयः स्पष्टं प्रस्तौति यत्—'वेदाः हिन्दूधर्मस्य नाभिः। तेषां समीचीनज्ञानं तन्मध्ये वर्तमानानां द्रढीयसां दुर्बलानां च सन्दर्भाणां ज्ञानं धर्मजिज्ञासूनां विशेषत ईशायीमिश्नरीणां कृते अनिवार्यमास्थेयम्। अस्यां परिस्थितौ इदमेव शोभनं प्रतीयते यत् भारते ईशायीधर्मप्रचारकाणां कृते वेदानामेकं संस्करणमवश्यं प्रकाश्येतेति, नेतो महत्त्वमन्यद् भजते।' इति। एतेन कियानपि पाश्चात्त्यानां मनोभावः प्रकटयति।

## पाश्चात्यविदुषामितिहासान्वेषणस्याधारशिला

सर विलियम जोन्स महाशयः 'एशियाटिक सोसाइटी' कलकत्ता नाम्नीं संस्थां स्थापितवान्। सा च भारतीयैतिहासिकविषयाणामनुसन्धानाय सर्वतः प्रथमा संस्था। तस्यां २८ फरवरी सन् १७९३ ई० तिथौ सर विलियम जोन्स महाशयः स्वोपज्ञं वक्तव्य प्रकटीचकार। सैंड्राकोटस राजधान्यां पालिबोध्रायां सिल्यूकसस्य राज्ञो राजदूतरूपेण पञ्च वर्षाणि यावत् अवस्थाय मेगस्थनीज नाम्ना सन्दृब्धं किञ्चन पुस्तकं यदधुना क्वचिदपि न प्राप्यते किन्तु प्रकीर्णाः कतिचन तस्यांशा उद्धरणरूपेण यूनानी इतिहासलेखकानां ग्रन्थेषूपलभ्यन्ते। पाश्चात्त्यैर्विद्वद्भिस्तत्सर्वं समाहृत्य पुस्तकरूपेण प्रकाशितं वेकमहोदयेन इङ्गलिश भाषायामनूदितं च। ततः तदेवाश्रित्य जोन्स महाशयः पालिबोध्रां पाटलिपुत्रशब्दस्य, सेण्ड्राकोटसं मौर्यचन्द्रगुप्तशब्दस्य च अपभ्रंशं स्थापयामास। तथा यूनानी इतिहासानुसारं उक्तस्य चन्द्रगुप्तमौर्यस्य राज्यारोहणकालं ईस्वीयः सन् पूर्वं ३२२ वर्षं निश्चिकाय।

अधुना परीक्षणीयं यत् पालिबोध्रा कस्मिन् जनपदे केन पुंसा निर्मिता ? 'नागरी प्रचारिणी सभा, काशी' द्वारा प्रकाशिते आचार्य पण्डित रामचन्द्रशुक्लेनानूदिते 'मेगस्थनीज के भारत भ्रमण' पुस्तके लिखितं यत्–डायनूशस पश्चिमतः समायातः । ...तस्यैव वंशे हेराक्लीज उदपद्यत । यो बलबुद्धिवैभवे साधारणमनुष्येभ्यो महीयान् । स च बह्वीः योषित उद्वाह्य तासु बहून् पुत्रान् उत्पादयामास । स च बहूनि नगराणि आवासयत् येषु सर्वतो महत् सर्वविख्यातं च नगरं पालिबोध्रेति । आरायन उद्धृतेन मेगस्थनीजपुस्तकावतरणेन विज्ञायते यत् हेराक्लीजमारभ्य सैण्ड्राकोटस-पर्यन्तं अष्टात्रिंशदधिकशतवंशपरम्परा संवृत्ता (१३८ पीढ़ी) (अवलोकनीयं महाभारतमीमांसा, पृष्ठ ६१, प्रकरण, ४)

एतेन सिद्ध्यति यत् सैण्ड्राकोटसतः अष्टात्रिंशदुत्तरशतवंशपरम्परा-पूर्वं पालिबोध्रानगरनिर्माणमिति । प्रसिद्ध इतिहास विशारदः प्लायनी महोदयः पालिबोध्रानगरं गङ्गा—ईरानवोअस नद्योः सङ्गमात् शतक्रोशमु-परिष्टात् मनुते । (प्लायनीः फ्रैगमेंटस आफ इण्डिया, पृष्ठ १३०)

एम० डी० आनविल्लेमतेन ईरानवोअस नाम्ना यमुना नदी ग्राह्या । तथा च गङ्गायमुनासङ्गमात् ( अर्थात् प्रयागात् ) शतक्रोशमुपरिष्टात् पालिबोध्रानगरी आसीत् । आरायनमतेन सङ्गमः प्रसई ( अरसी ) जनपद आसीत् । कर्टियसमतेन मेगस्थनीजस्य पालीबोध्रानगरं प्रभद्रकजनपदे अथवा पारिभद्रक जनपदे आसीत् ।

एतेन विवरणेनैवं प्रमीयते यत् पालिबोध्रानगरी गङ्गायमुनासङ्गमात् उपरिष्टात् ( प्रवाहविपरीततया ) शतक्रोशदूरे स्थिता तथा सैण्ड्राकोटस नाम्नः पूर्वजपरम्परायां अष्टात्रिंशदधिकशततमेन पूर्वजेन निर्मिता आसीत् । यदि आधुनिकानामितिहासवेत्तॄणां मतानुसारं प्रतिवंश्यपुरुषं विंशतिवर्षाणि कालो भवेच्चेत् १३८×२०=२७६० वर्षेभ्यः प्राक् सैण्ड्राकोटसपूर्वजपुरुषात् पालिबोध्रानिर्माणमनुमीयते ।

आस्माकीनेषु साहित्येषु तावत् वायुपुराणे नवनवतितमेऽध्याये—

'उदायी भविता तस्मात् त्रयस्त्रिंशत्समा नृपः ॥३१८॥

स वै पुरवरं राजा पृथिव्यां कुसुमाह्वयम्।
गङ्गाया दक्षिणे कूले चतुर्थेऽब्दे करिष्यति ॥ ३१६ ॥'

इमौ श्लोका उपलभ्येते। अर्थात् शिशुनाकवंशीय अष्टम उदायी नाम राजा त्रयस्त्रिंशत्समा राज्यं करिष्यति। सिंहासनाधिरोहणाच्चतुर्थेऽब्दे गङ्गाया दक्षिणे कूले कुसुमाह्वयं कुसुमनामधेयं नगरं निर्मास्यतीति लभ्यते।

ब्रह्माण्डपुराणे उपोद्घातपादे चतुःसप्ततितमेऽध्याये द्वात्रिंशदधिकशततमः श्लोक उपरितन एव उपलभ्यते।

उदायीनामधेयस्य शिशुनाकवंशीयस्य अष्टमराजस्य राज्यसिंहासनाधिरोहणं कलिगताब्दे १३८५ वर्षे अर्थात् १६५७ विक्रम संवत्पूर्ववर्षे १७१६ ईसवी सन् पूर्ववर्षे जातम्। ततश्चतुर्थे वर्षे अर्थात् १६५४ विक्रमसंवत्पूर्ववर्षे १७१३ ईसवी सन् पूर्ववर्षे वा गङ्गाया दक्षिणे कूले कुसुमपुराख्यं नगरं तेन निर्मितम्। एतेन प्रतीयते यत् सर विलियम जोन्स महाशयः सर्वथा भ्रान्तोऽस्मिन् विषय इति।

एवमेव जनरल प्रिंसेप, जनरल वंकिंघम प्रभृतिभिः पाश्चात्त्यैर्विद्वद्भिः महाभारतयुद्धसमयतया वास्तविकयुद्धसमयात् सप्तदशशतीसमनन्तरभावी कालो निर्धारितः। परन्तु सर्वे एते भ्रान्ता इत्यधस्तान्निगदितमेव। यतो हि मेगस्थनीज-पुस्तकमाश्रित्यैवैते निर्णेतुं प्रवृत्ताः।

एतेन उपरितनेन विवेचनेन इदं फलितं यत् विक्रमसंवत्प्रवृत्तेः ३०४४ वर्षेभ्यः प्राक् तथा ईसवीसन्प्रवृत्तेः ३१०१ वर्षेभ्यः प्राक् कलेः प्रवृत्तिः। स एव युधिष्ठिरादीनां महाप्रस्थानगमनसमयः। स एव समयः परीक्षिदभिषेकस्य च। युधिष्ठिरादीनां महाप्रस्थानगमनानन्तरं युधिष्ठिरशकप्रवृत्तिः। महाराजजनमेजयस्य ताम्रशासने युधिष्ठिरशकोल्लेखः। ततः प्रभृति पञ्चाङ्गेषु युधिष्ठिरशकोल्लेखः कलिसंवत्सरोल्लखश्च अबाधरूपेण प्रचलति।

आधुनिकानां पाश्चात्त्यविदुषामयमपरोऽपि राद्धान्तो यत् महाभारते ज्योतिर्विज्ञाने या गणना सा स्थवीयसी गणना, वेदाङ्गज्यौतिषगणनयापि

स्थूला। तामनुसृत्यैव भीष्मः त्रयोदशसु वनवासवर्षेषु सौरमानेन सिद्धेषु पञ्चमासद्वादशदिनाधिकानि त्रयोदशवर्षाणि व्यवस्थापयामास। तथाहि—

'कलाः काष्ठाश्च युज्यन्ते मुहूर्ताश्च दिनानि च।
अर्धमासाश्च मासाश्च नक्षत्राणि ग्रहास्तथा ॥ १ ॥
ऋतवश्चापि युज्यन्ते तथा संवत्सरा अपि।
एवं कालविभागेन कालचक्रं प्रवर्तते ॥ २ ॥
तेषां कालातिरेकेण ज्योतिषां च व्यतिक्रमात्।
पञ्चमे पञ्चमे वर्षे द्वौ मासा उपजायतः ॥ ३ ॥
एषामभ्यधिका मासाः पञ्च च द्वादश क्षपाः।
त्रयोदशानां वर्षाणामिति मे धीयते मतिः ॥ ४ ॥ (म. भा. वि. प. ५२)

अयमभिप्रायः—चान्द्र-सावन-सौराख्येन भेदेन मासानां त्रैविध्यम्। मासत्रैविध्येन संवत्सरस्त्रिविधः। तदुक्तं ब्रह्मसिद्धान्ते—

'चान्द्रसावनसौराणां मासानां तु प्रभेदतः।
चान्द्रसावनसौराः स्युस्त्रयः संवत्सरा अमी ॥'

तत्र चान्द्रः संवत्सरः चैत्रशुक्लप्रतिपदादिः फाल्गुनदर्शान्तः, । सौरस्तु मेषादिमीनान्तः, सावनः षट्चत्वारिंशत्त्रयाहोरात्रात्मकः। चन्द्रकलावृद्धिक्षयप्रयुक्तप्रतिपदादितिथीनां षष्ट्यधिकशतत्रयेण निष्पन्नश्चान्द्रः, द्वादशराशिषु सूर्यसङ्क्रमणैर्निष्पन्नः सौरः, सावनशब्देन च अहोरात्रमुपलक्ष्यते, सोमयागे सवनत्रयस्याहोरात्रसम्पाद्यत्वात्, तैः सावनैः षष्ट्यधिकशतत्रयसंख्यकैर्निष्पन्नः सावनः संवत्सरः। गोसत्रादिषु लौकिकव्यवहारेषु च सावनस्यैव संवत्सरस्योपयोगः। तदुक्तं विष्णुधर्मोत्तरे—

'सत्राण्युपास्यान्यथसावनेन लोक्यं च यत्स्याद् व्यवहारकर्म ॥' इति।

'गोसत्रं वै संवत्सरो य एवं विद्वान् सः संवत्सरमुपयन्त्यृध्नुवन्त्येव' ( तै. सं. ७।५।१।१ )

इति श्रुतौ गवामयनस्य सत्रस्य संवत्सरनाम्ना व्यवहारात् संवत्सरकालस्तदङ्गमिति प्रतीयते। तत्र सावन एव ग्रहीतुं शक्यो

न सौरचान्द्रौ। यतोहि-अहोरात्रसाध्य एकः सोमयागो वेदेषु अहः शब्देनाभिधीयते। तादृशानामहर्विशेषाणां गणः षडहः। स च द्विविधः अभिप्लवः पृष्ठ्यश्चेति। तत्र चतुर्भिरभिप्लवैः षडहैः एकेन च पृष्ठ्येन षडहेन इति षडहपञ्चकेन एको मासः सम्पद्यते। तादृशैर्द्वादशभिर्मासैः साध्यं संवत्सरसत्रम्। एवञ्च सावनेनैव तत्सिद्धिः। चान्द्रस्य षड्भिरहोरात्रैर्न्यूनत्वेन सौरस्य च सपादैः पञ्चभिरहोरात्रैरधिकत्वेन तदयोगात्। तदेवं त्रयोदशसु सौरवत्सरेषु चान्द्रमानेन पञ्चमासा द्वादशाहोरात्राधिका भवन्ति।

"संवत्सरे संवत्सरे यजेत" इति श्रुतौ चान्द्रः संवत्सरो गृह्यते। "सर्वान् लोकान् पशुबन्धयाजी अभिजयति, तेन यक्ष्यमाणोऽमावास्यायां पौर्णमास्यां वा" इति कल्पसूत्रकारैः चान्द्रतिथौ तदनुष्ठानविधानात्।

सौरस्तु संवत्सरः सुजन्मावाप्ति-व्रतादावुपयुज्यते। तच्च व्रतं विष्णुधर्मोत्तरे—

'भगवन् कर्मणा केन तिर्यग्योनौ न जायते।
म्लेच्छदेशे च पुरुषस्तन्ममाचक्ष्व भो मुने॥

मार्कण्डेय उवाच—

मेषसंक्रमणे भानोः सोपवासो नरोत्तम।
पूजयेद्भार्गवं देवं रामं शक्त्या यथाविधि॥'—

इत्यारभ्य, 'मीनसंक्रमणे मत्स्यं वासुदेवञ्च पूजयेत्॥' इत्यन्तेन व्रतमभिधायान्ते तदुपसंहृतम्—

'कृत्वा व्रतं वत्सरमेतदिष्टं म्लेच्छेषु तिर्यक्षु न चापि जन्म।' इति।

एवं कामं भवतु गणनैवास्थवीयसी किन्तु शास्त्रोदितेषु शस्त्रानुसारिषु लौकिकेषु च व्यवहारेषु एतस्या एवोपयोगः। एतत्सर्वमनभिसन्धाय दुरभिसन्धाय च भारतीयपद्धतौ ये पाश्चात्त्या एवं ब्रुवते यत्-"भारतीया विद्वांसः नक्षत्रमण्डलस्य द्वादशविभागान् ( द्वादशराशीन् ) सप्तवासरान् ( अत्र पूर्वं षडहस्यैव वर्णनलाभात् ) यूनानदेशीयविपश्चिद्भ्योऽशिक्षन्त। अतः येषु ग्रन्थेषु राशिवर्णनम् सूर्यादिवारवर्णनञ्च लभ्यते ते सर्वेऽपि ग्रन्थाः

ईसवीयसन्वर्षेभ्यः चतुःशतवर्षेभ्यो न प्राचीनाः" इति ते सर्वेऽपि भ्रान्ताः। यतोहि वासरज्ञानं विना अहर्गणगणना असम्भविनी। सिद्धान्तज्योतिष-गणना च अहर्गणद्वारा मध्यमसूर्यचन्द्रादिग्रहेषु मन्दोच्चशीघ्रोच्च संस्कार दत्त्वा सम्पाद्यते।

'एको अश्वो वहति सप्तनामा' ( ऋ. सं. १।१६४।२ ) इति मन्त्रे सप्तवाराणां प्रमाणमुपलभ्यते। अयन (कर्कट-मकर) विषुव (मेष-तुला) षडशीतिमुख ( मिथुन-कन्या-धनु-मीन ) पर्व ( अर्थात् विष्णपद, वृषभ-सिंह-वृश्चिक-कुम्भ ) नाम्ना सङ्क्रान्तिवर्णनं महाभारत-संहिता-यामुपलभ्यते। अतो यथा वेदादिशास्त्राणि अनादीनि तथैव इयं गणनापि अनादिरेव।

सङ्क्रान्तीनां नामधेयप्रसङ्गे वृद्धवशिष्ठः—

'अयने द्वे विषुवे द्वे चतस्रः षडशीतयः।
चतस्रो विष्णपद्यश्च सङ्क्रान्त्यो द्वादश स्मृताः॥' इति।

ज्यौतिषे पञ्चाङ्गं तु–'तिथिवारं च नक्षत्रं योगः करणमेव च' इति प्रसिद्धम्। एतेनेदं सिद्धयति यदस्माकं सनातनकालगणना सौर-चान्द्री च। तदर्थं च सूर्यं वारादिसप्तवासराणां चैत्रादिमासानां द्वादशधाविभक्तनक्षत्र-मण्डलस्वरूपाणां राशीनाञ्च ज्ञानं नान्तरीयकम्।

एवं कलियुगप्रवृत्तेः प्राक् महर्षिणा कृष्णद्वैपायनेन सन्दृब्धस्यैतस्य महा-भारतसंहितारूपग्रन्थरत्नस्य केचनाधुनिकाः पण्डिताः संस्करणत्रयं सम्मन्वते। तत्रोदाहरन्ति च—'मन्वादि भारतं केचिदास्तीकादि तथापरे।
तथोपरिचराद्यन्ये विप्राः सम्यगधीयते॥'

( म. भा. आ. प. १।५२ )

अत्र नीलकण्ठः–'वर्णानुपूर्वीभेदेपि प्रतिकल्पमर्थानां समाननामरूपक्रमत्वात् भारतारम्भे मतभेदमाह–मन्वादीति। मनुर्मन्त्रः-नारायणं नमस्कृत्येति। ॐ नमो भगवते वासुदेवायेति वा, तदादि इति प्राञ्चः। दिवः पुत्रो वैवस्वत-मह्यसंज्ञो मनुः, तदादीति तत्त्वम्'। अर्थात्—

दिवः पुत्रो बृहद्भानुश्चक्षुरात्माविभावसुः।
सविता सऋचीकोऽर्को भानुराशावहो रविः॥४२॥

पुत्रा विवस्वतः सर्वे मह्यस्तेषां तथावरः ।' (आदिपर्व० १)

आस्तीकादि–आस्तीकपर्व–'शौनक उवाच—

किमर्थं राजशार्दूलः स राजा जनमेजयः ।

सर्पसत्रेण सर्पाणां गतोऽन्तं तद्वदस्व मे ॥१॥' ( आ. प. १३ )

इत्यारभ्य–'श्रुत्वा धर्मिष्ठमाख्यानमास्तीकं पुण्यवर्धनम् ।

व्येतु ते सुमहद् ब्रह्मन् कौतूहलमरिन्दम ॥३२॥' (आ. प. ५८)

इत्यन्तम्, तदादि,

उपरिचरादि–उपरिचरो वसुः, तच्चारितादि वा—"वैशम्पायन उवाच—

राजोपरिचरो नाम धर्मनित्यो महीपतिः ।

बभूव मृगयां गन्तुं सदा किल धृतव्रतः ॥१॥" (आ. प. ६३)

किन्तु नैतेन संस्करणत्रयं सिद्धयति । यतो हि कृष्णद्वैपायनाख्यस्य मुनेर्व्यासस्यैकं । वैशम्पायनस्य द्वितीयं । सौतेश्च तृतीयं संस्करणं कदाचित् तेषामभिमतं भवेत् । सूतपुत्रः सौतिरुग्रश्रवाः किल—

'जनमेजस्य राजर्षेः सर्पसत्रे महात्मनः ।' (आ. प.)

प्रथमेऽध्याये नवमं श्लोकं व्याजहार । तत एव तस्य संस्करणं प्रारब्धं स्यात् । वैशम्पायनश्च—

गुरवे प्राङ् नमस्कृत्य मनोबुद्धिसमाधिभिः ।

सम्पूज्य च द्विजान् सर्वान् तथान्यान् विदुषो जनान् ॥१॥' (आ.प.१६)

प्रथममिमं श्लोकं व्याजहार । तत एव तस्य संस्करणं प्रारब्धं भवेत् ।

व्यासस्य का प्रथमोक्तिरिति निश्चेतुमेव न पार्यते । तर्हि तत्संस्करणस्य प्रारम्भं को नु निश्चिनुयात् ? एवं विचार्यमाणे पूर्वे श्लोकाः कस्येति प्रश्ने मौनावलम्ब एव सर्वथा करणीयो भवेत् इति सर्वापि महाभारतसंहिता वैयासिकी । तथाहि—

'तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम् ।

इतिहासमिमं चक्रे पुण्यं सत्यवतीसुतः ॥५४॥' (आ. प. १)

इति महाभारतात् ।

अपि च स्कन्दस्वामिनोऽपि पूर्ववर्ती आचार्यदुर्गः स्वीये निरुक्तविवरणे 'यान्यनेकार्थानि एकशब्दानि तान्यतोऽनुक्रमिष्यामः' ( ४।१ ) इति विवृण्वन् –

'विस्तीर्य हि महज्ज्ञानमृषिः संक्षेपतोऽब्रवीत् ।
इष्टं हि विदुषां लोके समासव्यासधारणम् ॥'

इति (म. भा. आ. प. १।५१)

श्लोकं किंचिदन्यथाभ्योद्धरति । स एव च 'एष चाख्यान-समयः' (नि० ७।७) इत्यत्र विवृणुते 'भारते चाख्यानसमयः । एष एव सिद्धान्त इत्यर्थः । पृथिवी स्त्रीरूपेण भारावतरणाय ब्रह्माणं ययाचे । (म. भा. आ. प. ६४) अग्निश्च ब्राह्मणरूपेण वासुदेवार्जुनावुभौ खाण्डवं ययाचे । (म. भा. आ. प. २२४-२२५) पुरुषरूपेण (म. भा. आ. प. २३०) अग्निरूपेण (म. भा. आ. प. २२७) च खाण्डवं ददाह इत्येवमादिना ।'' इति ।

अपि च लङ्कावतारसूत्रस्य चीनीभाषायानुवादः (सन् ५७ ईसवीये) जातः । तत्र च व्यास-महाभारत-पाण्डव-कौरवादिशब्दा उपलभ्यते । तथाहि—

'व्यासः कणाद ऋषभः कपिलः शाक्यनायकः ।
निर्वृते मम पश्चात्तु भविष्यन्त्येवमादयः ॥
मयि निर्वृते वर्षशते व्यासो वै भारतस्तथा ।
पाण्डवाः कौरवा राम पश्चान्मौर्यो भविष्यति ॥'

इमे श्लोकाः—लङ्कावतारसूत्रीयाः ।

वररुचिकृते वाररुचनिरुक्तसमुच्चये—

'बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ।' ''इति व्यासवचनम्'' इति लिखितम् । वररुचिश्च विक्रमादित्यराज्ञः पुरोहितः आसीत् । अतः विक्रमसंवत् प्रथमशताब्दी तस्य समयः । वररुचिग्रन्थेनापि महाभारतस्य व्यासकृतत्वं सिद्ध्यति ।

पैशाचीभाषायां बृहत्कथासन्दृब्धा गुणाढ्येन । तस्यापि समये महा-भारतग्रन्थरत्नमासीत् । महाभारतीया रुरुमुनिकथा, सुन्दोपसुन्दकथा, कुन्तीदुर्वासःकथा, पाण्डु-मृनिवधकथा, शकुन्तलाकथा, बृहत्कथानुवादग्रन्थे कथासरित्सागरे समुपलभ्यन्ते ।

अश्वघोषेण स्वीये बुद्धचरिते (१।४७) नष्टानां वेदानां सारस्वतद्वारोपदेशो वर्णितः। एष च प्रसङ्गो महाभारते शल्यपर्वणि ५१ अध्याये एव लभ्यते नान्यत्र।

मृच्छकटिकप्रकरणकर्ता शूद्रको विक्रमसंवत्पूर्वभावी। स च स्वकीये ग्रन्थे महाभारतीयानितिवृत्तान् स्मरति।

तद्यथा—'एषोऽहं गृहीत्वा केशहस्तं दुःशासनस्यानुकृतिं करोमि।'(३।११)।

'मार्गो ह्येष नरेन्द्रसौप्तिकवधे पूर्वं कृतो द्रौणिना।' (३।११)

'अक्षद्यूतजितो युधिष्ठिर इवाध्वानं गतः कोकिलो।

हंसाः सम्प्रति पाण्डवा इव वनादज्ञातचर्यां गताः॥'(५।६)

शुङ्गवंशप्रवर्तकस्य पुष्यमित्रस्य अश्वमेधयज्ञसम्पादकः पतञ्जलिः स्वीये महाभाष्ये 'यूस्त्र्याख्यौ नदी' (१।४।३) इतिसूत्रे कस्यचित् पुरातनकाव्यस्येमं श्लोकम्।

'यस्मिन् दश सहस्राणि पुत्रे जाते गवां ददौ।

ब्राह्मणेभ्यः प्रियाख्येभ्यः सोयमुञ्छेन जीवति॥' उद्धरति।

सोयं श्लोकः—'यस्मिन् जाते ददौ द्रोणो गवां दशशतं धनम्।

ब्राह्मणेभ्यो महार्हेभ्यः सोऽश्वत्थामैष गर्जति॥'

(म.भा.द्रो.प. १९६।२९)

इति महाभारतीयं श्लोकं सुचारु अनुकरोति।

'कालसमयवेलासु तुमुन्' (३।३।१६७) इति सूत्रे पतञ्जलिः—
'कालः पचति भूतानि, कालः संहरति प्रजाः।' इति श्लोकमुद्धरति। सोऽयं श्लोकः महाभारते आदिपर्वणि प्रथमेऽध्याये २४८ तमः।

महाभारतेतिहासेन पतञ्जलिः परिचित आसीत्। यतो हि 'पुरि लुङ् चास्मे, (३।२।१२२) इतिसूत्रे 'स्मः सर्वेभ्यो विप्रतिषेधेन'ति वार्तिके स आह 'धर्मेण स्म कुरवो युद्ध्यन्ते' इति। पतञ्जलेः (महाभाष्यकर्तुः) अपि प्राचीना चरकसंहिता। तस्यां चिकित्सिते—

'विष्णुं सहस्रमूर्धानं चराचरपतिं विभुम्।

स्तुवन्नामसहस्रेण ज्वरान् सर्वान् व्यपोहति॥' (३।११३)

'सहस्रनामानि भारत' इति चक्रपाण्यादयष्टीकाकाराः।

एवमेव वासवदत्तायां स्मृतो न्यायवार्तिककारः उद्योतकरः 'तत्कारितत्वादहेतुः' (४।१।२१) इति सूत्रे आगमनाम्ना श्लोकद्वयमुद्धरति—

'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् श्वभ्रं वा स्वर्गमेव वा ॥'

स एष श्लोकः महाभारते इत्थं लभ्यते—

'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं नरकमेव वा ॥' (व.प. ३०।२८)

अपरश्च—

यदा स देवो जागर्ति तदेदं चेष्टते जगत् ।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति ॥

अयं श्लोकः मनुस्मृतौ प्रथमेऽध्याये ५२ तमः ।

विष्णुगुप्तस्य (कौटल्यस्य) अर्थशास्त्रे महाभारतच्छायाश्लोका उपलभ्यन्ते यथा—

'एकं हन्यान्नवा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥'

(म.भा.उ.प. ३३।४३)

'एकं हन्यान्नवा हन्यादिषुः क्षिप्तो धनुष्मता ।
प्राज्ञेन तु मतिः क्षिप्ता हन्याद् गर्भगतानपि ॥'

( कौ.अ.शा. १० अधि० ६ अ० ३२४)

एतेभ्यः सर्वेभ्योऽपि प्राचीनः पाणिनिः अष्टाध्यायाम्—'महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु' ( ६।२।३८ ) इति सूत्रेण महाभारतशब्दे महच्छब्दस्य प्रकृतिस्वरं विदधाति । स एव 'राजदन्तादिषु परम्' (२।२।३१) इतिसूत्रे राजदन्तादिगणे 'त्रिष्वकसेनार्जुनौ, 'पैलादिभ्यश्च, (२।४।५९) इतिसूत्रे पैलादिगणे 'सात्यकि'— भीमादयोऽपादाने' (३।४।७४) इति सूत्रे 'भीमभीष्म'—'शिवादिभ्योऽण्' (४।१।११२) इति सूत्रे शिवादिगणे 'जरत्कारु' 'अर्धर्चाः पुंसि च' (२।४।३१) इति सूत्रे अर्धर्चादिगणे 'गाण्डीव' इत्येवमादीन् शब्दानुपनिबबन्ध । महाभारते एतेषां चर्चा उपलभ्यते ।

महाभारते राजशास्त्र (अर्थशास्त्र) प्रणेतृत्वेन निम्नोद्धृतानां जनानां स्मरणम्—

'बृहस्पतिर्हि भगवान् न्याय्यं धर्मं प्रशंसति ॥१॥
विशालाक्षश्च भगवान् काव्यश्चैव महातपाः ।
सहस्राक्षो महेन्द्रश्च तथा प्राचेतसो मनुः ॥२॥
भरद्वाजश्च भगवान् तथा गौरशिरामुनिः ।
राजशास्त्रप्रणेतारो ब्रह्मण्या ब्रह्मवादिनः ॥३॥ (शा०प० ५८)

एतेषां नाम्ना श्लोका अपि महाभारत उद्धृताः । यथा—

'श्लोकश्चायं पुरा गीतो भार्गवेण महात्मना ।
आख्याते रामचरिते नृपतिं प्रति भारत ॥४०॥
राजानं प्रथमं विन्देत् ततो भार्यां ततो धनम् ।
राजन्यसति लोकस्य कुतो भार्या कुतो धनम् ॥ ४१॥' (शा०प० ५७)

'प्राचेतसेन मनुना श्लोकौ चेमावुदाहृतौ ।
राजधर्मेषु राजेन्द्र ताविहैकमनाः शृणु ॥ ४३ ॥
षडेतान् पुरुषो जह्यात् भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ४४ ॥
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् । ४५ ॥' (शा०प० ५७)

'भगवानुशना चाह श्लोकमत्र विशाम्पते ।
तदिहैकमना राजन् गदतस्त निबोध मे ॥ २ ॥
द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजनं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ ३ ॥' (शा० प० ५७)

'मरुत्तेन हि राज्ञा वै गीतः श्लोकः पुरातनः ।
राजाधिकारे राजेन्द्र बृहस्पतिमते पुरा ॥ ६ ॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य दण्डो भवति शाश्वतः ॥ ७ ॥' (शा० प० ५७)

'उत्थानं हि नरेन्द्राणां बृहस्पतिरभाषत ।
राजधर्मस्य तन्मूलं श्लोकांश्चात्र निबोध मे ॥ १३ ॥
उत्थानेनामृतं लब्धमुत्थानेनासुरा हता ।
उत्थानेन महेन्द्रेण श्रैष्ठ्यं प्राप्तं दिवीह च ॥ १४ ॥
उत्थानवीरः पुरुषो वाग्वीरानधितिष्ठति ।
उत्थानवीरान् वाग्वीरा रमयन्त उपासते ॥ १५ ॥
उत्थानहीनो राजा हि बुद्धिमानपि नित्यशः ।
प्रधर्षणीयः शत्रूणां भुजङ्ग इव निर्विषः ॥ १६ ॥' (शा०प० ५८)

न कस्यचिदाधुनिकस्य नाम महाभारत उपलभ्यत इति तस्य अतीव प्राचीनता ।

एवमेव वाल्मीकिनाम्नः द्रोणपर्वणि उद्धरणम् । यथा –

'अपि चायं पुरा गीतः श्लोको वाल्मीकिना भुवि ।
न हन्तव्यः स्त्रिय इति यद् ब्रवीषि प्लवङ्गम ॥ ६७ ॥
सर्वकालं मनुष्येण व्यवसायवता सदा ।
पीडाकरममित्राणां यत्स्यात्कर्त्तव्यमेव तत् ॥ ६८ ॥, (१४३)

साम्प्रतं वाल्मीकीयरामायण एवंरूपेणोपलभ्यते ।

'न हन्तव्याः स्त्रियश्चेति यद् ब्रवीषि प्लवङ्गम ।
पीडाकरममित्राणां यच्च कर्त्तव्यमेव तत् ॥' (यु० का० ८१।२८)

'स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि ।
आख्यानानीतिहासांश्च पुराणानि खिलानि च ॥' (मनुस्मृतिः ३।२३२)

इति व्याचक्षाणो नवमशताब्दीयो मेधातिथिराह–'इतिहासा महाभारतादयः। पुराणानि व्यासादिप्रणीतानि सृष्ट्यादिवर्णनरूपाणि ।'

'इतिवृत्त-पुराणाभ्यां बोधयेदर्थशास्त्रवित् ॥१८१॥' (कौ०अ०शा०६६अ०)

इति कौटलीयोऽपि स्वीये अर्थशास्त्रे इतिहासं पुराणञ्चोल्लिखति ।

एष च सारथ्येऽधिकृतात् सूतात् पौराणिकं सूत पृथक् आम्नाति । तथाहि—'क्षत्रियात्सूतः । पौराणिकस्त्वन्यः सूतो मागधश्च ब्रह्मक्षत्राद् विशेषतः ।' (कौ० अ० शा० ६४ अध्याये) प्रतिलोमजानां वर्णने । अत्र पंक्तौ

विशेष इति वैशिष्ट्यार्थकम्। तथा च उत्पत्त्यादिवैशिष्ट्येन पुराणादिवक्तृत्वरूपवैशिष्ट्येन च ब्रह्मक्षत्रमतिशेते इत्यर्थः।

एतस्मादपि प्राचीनो योगियाज्ञवल्क्यो याज्ञवल्क्यस्मृतावाह –

'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।

वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥' (१।३)

विज्ञानेश्वरः 'धर्मशास्त्रं मानवादि' व्याख्याति। अर्थात् एतस्मात् सर्वस्मादपि प्राचीनं धर्मशास्त्रं मनुस्मृतिः। तस्या एक वचन मल्लिनाथः—

वित्तस्य विद्या परिसंख्यया मे कोटीश्चतस्रो दश चाहरेति' (र० वं० ५।२१) इतिश्लोकव्याख्यायामुद्धरति –

'अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।

पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥'

अर्थात् वेदेषु-इतिहासेषु धर्मशास्त्रेषु-पुराणानां माहात्म्यं बहुधा प्रतिपादितम्। तद्वक्तृत्वेन व्याख्यातृत्वेन च सूतानां सुतरां वैशिष्ट्यम्।

प्रसिद्ध ऐतिहासिकः अलबेरुनी अष्टादशपुराणानां स्वल्पभेदेन सूचीद्वयमुपन्यस्यति। ततः पूर्वतनो राजशेखरः काव्यमीमांसायां द्वितीयेऽध्याये कथयति-'तत्र वेदाख्यानोपनिबन्धनप्रायं पुराणमष्टादशधा' पृष्ठ ७ ततोऽपि पूर्वभवे आद्यशङ्कराचार्यः स्वीये विष्णुसहस्रनामभाष्ये भविष्योत्तर विष्णु-ब्रह्म-पद्मपुराणानि चर्चयति।

अष्टादशपर्वात्मको महाभारतग्रन्थः, तत्खिलभूतो हरिवंशश्च विक्रम संवत् षष्ठशताब्द्यां बालीद्वीपेषु लब्धप्रसरौ। तत्रत्यायां प्राचीनायां कविभाषायामनूदितौ च। जातेऽपि कविभाषायामनुवादे तत्र मध्ये-मध्ये महाभारतस्य श्लोका एव निक्षिप्ताः।

गुप्तराजसमयस्य कश्चन शिलालेखः किञ्चित्कालपूर्वमुपलब्धः। तस्मिंश्च महाभारतग्रन्थो लक्षश्लोकात्मकः स्पष्टं निर्दिष्टः। स एव शिलालेखः ५०२ संवत् लिखितः। परलोकं गतेन शङ्करबालकृष्णदीक्षितेन स्वीये 'भारतीय ज्योतिःशास्त्र'भिधे ग्रन्थे (पृ० १०८) एष शिलालेख उद्धृतः।

भासः कालिदासादपि प्राचीनः। तेन बहूनि नाटकानि रचितानि। तेषु अधिकांशभागः महाभारतमेवाश्रयते। बालचरिताभिधे नाटके च श्रीकृष्णस्य

बालक्रीडायाः गोपीनाञ्च उल्लेखो विद्यते। अतः निःसन्दिग्धमिदं यत् भास-कालात्पूर्वं महाभारतं हरिवंशश्च लब्धप्रतिष्ठमासीत्।

भासकविकृतनाटकानां सम्पादयित्रा पण्डितगणपतिशास्त्रिणा स्वप्न-वासवदत्तनाटकप्रस्तावनायां लिखितम् यत् भासकवेः नाटकस्य एकः श्लोकः चाणक्यस्य अर्थशास्त्रे समुपलभ्यते। एतेन प्रतीयते यत् चाणक्या-दपि भासः प्राचीन इति।

प्रोफेसर वेबरमहोदयेन सन् १८६० तमे वत्सरे जर्मनीदेशे अश्वघोष-व्याख्यासहिता वज्रसूचिकोपनिषत् प्रकाशिता। व्याख्यायाञ्च सप्तव्याधा दशार्णेषु, (हरिवंश २४ २०-८१) शान्तिपर्वणश्च श्लोका उद्धृता। एतेन प्रतीयते यत् अश्वघोषात् प्राक् लक्षश्लोकात्मकस्य महाभारतस्य प्रतिष्ठा आसीत्।

बौधायनगृह्यसूत्रे विष्णुसहस्रनामस्तवस्य स्पष्टमुल्लेखात् 'पत्रं पुष्पं फलं तोयम्' इति श्लोकसमुद्धरणात् च ईसवीयसन् प्रारम्भात् सुदीर्घपूर्व-कालभाविबौधायनादपि प्राचीनं महाभारतम्।

इत्युक्तरीत्या प्रमाणजालैरन्तरङ्गविषया बहिरङ्गविषया च लक्ष-श्लोकात्मकस्य महाभारतस्य इतः पञ्चसहस्रवर्षेभ्यः प्राक् कलिप्रारम्भे श्रेयस्कर्यां स्थितौ सिद्धायां प्रागुदाहृतैः श्रुतिस्मृतिवचनैर्नानकरैर्महाविभूति-मतो भगवतः कालरूपायामेकतमायां विभूतौ स्पष्टतया हृदयगम्यायाम् श्री वीरविक्रमादित्यस्य जयसिंहासनाधिरोहणादतीतेषु एकोनत्रिंशदधिकसहस्र-द्वयवत्सरेषु प्रविष्टे च त्रिंशे ऐषमः क्रोधननाम्नि संवत्सरे श्रीकृष्णजन्माष्टमीतः प्राक् द्व्यूनशतद्वयाधिकपञ्चसहस्रवत्सरेषु समतीतेषु श्रीकृष्णरूपेण जन्माष्टम्यां निशीथे भगवतः प्रादुर्भावः। त्रिसप्तत्यधिकपञ्चसहस्रवत्सरेषु अतीतेषु तस्य भगवतो लीलासंवरणम्, ततः कलिप्रवृत्तिः।

एवञ्च ऐषमः वर्तमानकल्पारम्भतः व्यतीताब्दा १९७२९४९०७३॥ सृष्ट्यारम्भतो गताब्दाः=१९५५८८५०७३॥ अर्थात् षण्मनवो व्यतीताः। वर्तमानः सप्तमो वैवस्वतमनुः। एतस्य मनोः प्रवृत्तेरनन्तरं सप्तविंशति-महायुगानि व्यतीतानि। अष्टाविंशे महायुगे त्रयो युगचरणा व्यतीताः। चतुर्थस्य महायुगचरणस्य कलेः प्रवृत्तिः। कलेश्चारम्भतः त्रिसप्तत्युत्तर-

पञ्चसहस्रमितानि वर्षाणि व्यतीतानि। एतन्मितान्येव युधिष्ठिरशकवत्सराणि विक्रमराज्यसिंहासनाधिरोहणात् २०२९ वर्षाणि व्यतीतानि। शकारम्भतश्च १८९४ वर्षाणि व्यतीतानि। एवञ्च शुद्ध ऐषमः क्रोधनसंवत्सरे शुद्धवैशाख-कृष्ण ३० गुरौ निशीथे सौरमानेन युगादेरहर्गणः = १८५२९४४॥ विक्रम-राज्यसिंहासनाधिरोहणात् ऐषमः क्रोधनसंवत्सरे शुद्धवैशाख कृष्ण ३० गुरौ सौरमानेनाहर्गणः = ७४११०५॥ एषमः क्रोधनसंवत्सरे शुद्धवैशाखकृष्ण-३० गुरौ शकारम्भात् सौरमानेन अहर्गणः = ६९१७९५॥

एतस्मिन् प्रमाणरूपेण अस्माकं पूर्वजानां पञ्चाङ्गादिषु प्रचलिता पर-म्परैवोन्नेतुं शक्यते। तथा च भास्कराचार्यः—

'याता षण्मनवो युगानि भमितान्यद् युगाङ्घ्रित्रयम्।
नन्दाद्रीन्दुगुणास्तथा शकनृपस्यान्ते कलेर्वत्सराः।
गोद्रीन्द्वद्रिकृताङ्कदस्रनगगोचन्द्राः (१९७२९४७१७९) शकाब्दान्विताः।
सर्वे सङ्कलिताः पितामहदिने स्युर्वर्तमाने गताः॥'

(सिद्धान्तशिरोमणिगणिताध्यायमध्यमाधिकारः २८)

नवाद्रिचन्द्राग्निशकान्वितं स्यात्,
नूनं गताब्दाः कलिवक्त्रतश्च॥, इति केशवजातकम्

चाणक्य-शूद्रक-कालिदास-विक्रमादित्यादिविषये पाश्चात्यविचारधारा-प्रवाहपतितमतय आधुनिका न केवलं सन्दिहन्ति किन्तु निश्चप्रचमाहुर्यत् नैते वास्तविकाः किन्तु काल्पनिका इति। तद्विषयेऽपि किञ्चिद्विचार्यते।

वाग्भटस्तावदेवं प्रस्तौति—

'श्वेतपुष्करतुल्यांशैर्जीवत्याः कुसुमैः कृतः।
रुक्मपिष्टो मणिर्धार्यश्चाणक्योक्तो विषापहः॥'

चाणक्येन च स्वीयेऽर्थशास्त्रे १४९ अध्याये लिखितम् 'रुक्मगर्भश्चैषां-मणिः सर्वविषहरः।' 'जीवन्ती श्वेतामुष्ककपुष्पवन्दाकानामक्षीवे जातस्या-श्वत्थस्य मणिः सर्वविषहरः' इति।

महाकविः शूद्रकोऽपि मृच्छकटिके चाणक्यनाम गृह्णाति—'चाणक्के वा धुन्धुमाले तिशङ्कू' (८।३४)। मुद्राराक्षसे चाणक्यवृत्तं सर्वविदितमेव।

कामन्दकोऽपि--'आजहार नृचन्द्राय चन्द्रगुप्ताय मेदिनीम् ।' इत्यादि वर्णयन् य उद्दध्रे नमस्तस्मै विष्णुगुप्ताय वेधसे ।।' इत्यादि रीत्या नमस्कुर्वंश्च चाणक्यमैतिहासिकमसामान्यं स्वीकरोति ।

पञ्चतन्त्रग्रन्थकर्ता विष्णुशर्मापि कथामुखे 'चाणक्य य च विदुषे नमोऽस्तु नयशास्त्रकर्तृभ्यः' चाणक्यं नमस्कुर्वन् तस्य सत्तामूरीकरोति ।

एवमेव शूद्रकविषये—'अतिदयितलास्यस्य शैलूषमध्यमध्यास्य मूर्धानमसिलतया मृणालमिवालुनात् अग्निमित्राग्रजस्य सुमित्रस्य मूलदेवः ।' (हर्षचरिते षष्ठ उच्छ्वासः । ) इति टीकायां मर्मावबोधिनीटीकाकारो रङ्गनाथः 'अग्निमित्रः शूद्रकः' इत्याह । तत्रैव एतस्मिन्नेवार्थे सकोषवचनमु दाहरति –

' शूद्रकस्त्वग्निमित्रः स्याद्' इत्यमरः'' इति ।

यद्यपि नाधुना अमरकोषे तत्परिशिष्टे चेदं वचनमुपलभ्यते परन्तु तदानीं स्यादुपलब्धिमदित्यनुमिमीमहे ।

'राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः ।

चक्रवर्ती सार्वभौमो नृपोऽन्यो मण्डलेश्वरः' अमरकोषः २।८।२ ) इति टीकायां क्षीरस्वामी कस्यचित् पुरातनकोशस्य कतिपयान् श्लोकानुद्धरति । तेषामेकतमस्य प्रथमपादस्तावत् 'शूद्रकस्त्वग्निमित्राख्यः' इति ।

आचार्यकविर्दण्डी अवन्तिसुन्दर्यामाह—

'शूद्रकेणासकृज्जित्वा स्वच्छयाखड्गधारया ।
जगद् भूयोऽप्यवष्टब्धं वाचा स्वचरितार्थया ।।' इति

बाणोऽप्याह हर्षचरिते षष्ठोच्छ्वासे—'उत्सारणरुचि रहसि ससचिवमेव दूरीचकार चकोरनाथं शूद्रकदूतश्चन्द्रकेतुं जीवित त् ।' मृच्छकटिककर्ता शूद्रकः प्रसिद्धचरः ।

कालिदासस्य ऐतिहासिकत्वे यद्यपि नाद्य कश्चन विवदति परन्तु तस्य स्थितिकालविषये महान् विवादः । आधुनिकास्तु चतुर्थीं पञ्चमीं वा शताब्दि तस्य स्थितिमनुमेनिरे । वस्तुतस्तु —

'एकोऽपि जीयते हन्त कालिदासो न केनचित् ।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ।।'

इतिराजशेखरेण कालिदासत्रयाङ्गीकरणात् त्रय एव कालिदासाः सम्बभूवुः। तत्राद्यः कालिदासः रघुवंशकुमारसम्भवाभिज्ञानशाकुन्तलादि प्रणेता महाराजविक्रमसमकालिकः।

यतो हि रसभावविशेषदीक्षागुरोः श्रीविक्रमादित्यसाहसाङ्कस्याभिरूप-पण्डितभूयिष्ठेयं परिषद्' इत्यभिज्ञानशाकुन्तले प्रस्तावनायां स आह। विक्रमाभिधानेन प्रीयमाणश्च कालिदासः विक्रमोर्वशीयं नाम पौराणिक-कथामाश्रित्य नाटकं जग्रन्थ। अग्निमित्रनाम्ना च-मालविकाग्निमित्रमिति।

स एष शूद्रको मृच्छकटिके स्वात्मानं 'द्विजमुख्यतमः' 'कविः' 'अगाध सत्वः' 'ऋग्वेद-सामवेद-गणित-कला-हस्तिशिक्षादि निष्णातः' 'शर्वप्रसादात् निर्दोषज्ञानं लब्धा' 'परमसमुदयाश्वमेधयाजी' 'साग्रशतसंवत्सरायुष्मान्' प्रमादशून्यः' 'वेदविदां ककुद' 'तपोधनः' समरव्यसनी' इत्यादि विशेषणैर्वि-शिनष्टि। एतदनुरूपमेव दण्डी स्मरति शूद्रकम्।

रङ्गनाथश्च अग्निमित्रमेव शूद्रकं मनुते। असकृत् समरेषु आदित्यवत् प्रकाशनात् एष एव स्वविक्रमस्य विक्रमादित्यसंज्ञां लेभे। एतेनैव विक्रमा-दित्येन संवत्सरः प्रवर्तितः। ऐषमः क्रोधननाम्नि संवत्सरे यस्य संवत्सरस्य २०२९ वत्सरा व्यतीताः। अत्रापि लोके राजकुलसम्बद्धे। एषा संवत्सरस्था-पनमर्यादा प्रसिद्धा। यत् यः खलु स्वकर्तृकसुवर्णदानमहिमा भूतले सर्वस्यापि जनस्य अधमर्णतां निवारयेत् स एव संवत्सरं स्थापयितुं शक्नुयादिति। एतादृशी प्रसिद्धिः श्रीवीरविक्रमादित्यसम्बन्धे जैनसमुदाये उपलभ्यते। तथा च प्रभावकचरिते—

'शकानां वंशमुच्छेद्य कालेन कियतापि हि।
राजा श्रीविक्रमादित्यः सार्वभौमोपमोऽभवत्॥ ८९॥
स चोन्नतमहासिद्धिः सौवर्णपुरुषोदयात्।
मेदिनीमनृणां कृत्वाऽचीकरद्वत्सरं निजम्॥ ९०॥' इति।

श्री महाराजविक्रमादित्यस्य अस्तित्वे ऐतिहासिकत्वे च सर्वाधिकं स्पष्टं पुष्टं स्फूर्जच्च प्रमाणं तेन प्रवर्तितं विक्रमसंवदेव।

यद्यपि अन्येषामपि संवत्सराणां यथा कल्पसंवत्-सृष्टिसंवत्-सप्तर्षि संवत्-कलिसंवत्-युधिष्ठिरसंवत्-बुद्धसंवत्-कनिष्कसंवत् गुप्तसंवत्। चेदि

संवत्प्रचलनं पूर्वमासीत् किन्तु सर्वेष्वेतेषु संवत्सरेषु सर्वाधिकजीवनशक्तिसम्पत्त्या अधुनातनेऽपि काले द्योतमानो विक्रमसंवत्सर एव। आसेतुहिमाचलम् सम्पूर्णे भारतेऽस्य ख्यातिः। समस्तेषु धार्मिकेषु कार्येषु जन्मकुण्डल्या पञ्चाङ्गेषु च अस्यैव भूयान् प्रचारः। ज्योतिर्विदोऽद्यापि कुण्डल्यादौ लिखन्ति 'श्रीमन्नृपतिवीरविक्रमादित्यसंवत्सरे। अधुना च २०२६ संवत् पञ्चाङ्गं प्रचलति। इदमस्य तात्पर्यं यत् ऐषमः संवत्सरप्रारम्भे २०२६ वत्सरा व्यतीताः, २०३० च प्रविष्ट इति। साधारणगणनया ईस्वीयख्यसंवत्सरात् ५७ वर्षेभ्यः पूर्वं विक्रमसंवत्सरस्थापनं जातम्। तदानीमेव महाराजवीरविक्रमादित्यः भूतलमलंञ्चकारेति।

अत्र उत्थिताकांक्षया सन्देहद्वयं समुदेति। प्रथमस्तु अयं संवत्सरः स्व-स्थापनाकाले प्रारम्भिकशताब्दीषु च न विक्रमनाम्ना सम्बध्यते। द्वितीयस्तु-तदानींतनैः ज्योतिर्विद्भिः शकसंवत्सरस्यैव स्वग्रन्थेषु प्रयोगो विहितो नास्य संवत्सरस्येति। मालव-राजस्थानादि प्रान्तेषु तथा तत्समीपवर्तिषु स्थानान्तरेषु च लब्धैरभिलेखैरस्य संवत्सरस्य प्राचीनं नाम कृतसंवत् इति ज्ञायते।

तथाहि-अधुनातननाम्ना राजस्थानप्रान्ते. इतः प्राचीननाम्ना उदयपुरराज्ये नन्दसायूपाभिलेखतिथिः कृतसंवत् २८२ अस्ति। तथाहि तत्रत्यं वचनम्-कृतयोर्द्वयोर्वर्षशतयोर्द्व्यशीत्योः चैत्रपूर्णमास्याम्' (इत्यादि) राजस्थानप्रान्ते छोटाराज्य उपलब्धः बड़वा यूपाभिलेखितिथिः कृतसंवत् २९५ अस्ति। मालवेषु उपलब्धस्य दशपुर (आधुनिकनाम्ना मन्दसौर) अभिलेखस्य तिथिः कृतसंवत् ४७१ अस्ति। अस्मिन् अभिलेखे अस्य संवत्सरस्य नामद्वयम्। अथ कृतसंवत् (२ मलवगण संवत् इति) तथाहि तत्रत्यं वाक्यम्-श्रीमालवगणाम्नाते प्रथमे कृतसंवत् २२ इति। कुमारगुप्तस्य दशपुराभिलेखतिथिः मालवगणसंवत् नाम्नोट्टङ्किता। यशोधर्मणः शपुराभिलेखतिथिः मालवगणसंवत् नाम्ना ५८९ अस्ति। तथाहि तत्रत्यं वाक्य-

'मालवगणस्थितिवशात् कालज्ञानाय लिखितेषु।'

राजस्थानप्रान्ते कोटाराज्य उपलब्धस्य शिवगणाभिधेयस्य कस्यचित् कनकाभिलेखस्य तिथिः मालवेशसंवत्सरनाम्नाभिहिता। तथाहि तत्रत्यं 'वाक्यं संवत्सरशतैर्याते ...... मालवेशानाम्।'

चण्डमहासेनस्य धौलपुराभिलेखतिथिः ८९८ संवत्सरः। अत्र च विक्रम-कालनाम्नाभिधानम्। तथाहि तत्रत्यं वाक्यम् 'वसु-नवा-ष्टौ वर्षगतस्य कालस्य विक्रमाख्यस्य।'

राष्ट्रकूटराजस्य विदग्धराजाभिधानस्य बीजापुराभिलेखतिथिः विक्रम-कालः ९७३ अस्ति। तत्रत्यं वाक्य--'विक्रमकाले गते'।

बोधगयाभिलेखस्य तिथिः विक्रमसंवत् १००५ अस्ति। तथाहि–तत्रत्यं वाक्यम् - विक्रमसंवत्सरः १००५'।

उदयपुरराज्य उपलब्धस्य नरवाहनाभिधानस्य एकलिङ्गाभिलेखस्य तिथिः विक्रमादित्यसंवत् १०२८ अस्ति। तथाहि तत्रत्यं वाक्यम्--

' .................. विक्रमादित्यभूभृतः।
अष्टाविंशतिसंयुक्ते शते दशगुणे सति॥'

सिरोहीराज्य उपलब्धस्य पूर्णपालाभिधानस्य वसन्तगढ़ाभिलेखस्य तिथिः विक्रमादित्यकाल: (१०९९) अस्ति। तथाहि तत्रत्यं वाक्यं 'नवनवति-रिहासोद्विक्रमादित्यकाले।'

कृत-मालव विक्रमनाम्ना प्रथितः संवत्सर एक एवेति विदुषां मतम्। अत्र स्वाभाविकरीत्यैवैष प्रश्नः समुज्जृम्भते यत् वस्तुतो यदि विक्रम एव संवत्सरसंस्थापकस्तर्हि प्रारम्भकालादेव कथं न तन्नाम्ना संवत्सरोऽप्रथत। कथंकारं पूर्वं कृतनाम्ना तदनु मालवगणनाम्ना तदनन्तरं च विक्रमनाम्ना सम्बबन्ध ?

अत्रोत्तर्यते–वस्तुतः विक्रमादित्यो गणप्रमुख एवासीत्, न निरङ्कुशो राजा। कामं मालवसंवत् स्थापना तेन विहिता किन्तु संस्थापनस्य सम्पूर्ण श्रेयो यदि स एव नामसम्बन्धद्वारा गृह्णीयात् तर्हि गणे भेदः समुदियात्। मालवगणेन बर्बरशकेषु पराजितेषु जनमानसेषु शान्तियुगस्य, जनतासु समृद्धियुगस्य च प्रादुर्भावः समजनि। तस्य कालस्य कृतयुगसमत्वात् कृतनाम्नैव सवत्सरः प्रथितः। विक्रमराज्याधिरोहणात् १३५ वर्षानन्तरं पुनः शका विजायिनो जाताः। यथा प्रभावकचरिते —

'ततो वर्षशते पञ्चत्रिंशता साधिके पुनः।

तस्य राज्ञोऽन्वय हत्वा वत्सरः स्थापितः शकै ॥ ९२ ॥'

मालवगणस्य जयिभिः शकैः सङ्घर्षो न शशाम, कथञ्चित् शिथिलप्राय-जीवनो मालवगणोऽजीवत्। कृतयुगकालस्तु स्वप्नावस्थां प्राप्नोत्। अतः मालवगणनाम्ना सवत्सरव्यवहारः प्रवृत्तः। चतुर्थशताब्दीपूर्वार्धे गुप्तसाम्राज्य-शक्तौ परमोत्कर्षमतायामपि गुप्तसाम्राज्यस्य पश्चिमसीम्नि गणतन्त्ररूपेण मालवशक्तिर्विद्यमानासीत्। सम्राट् समुद्रगुप्तश्च पूर्वं मालवणं पराजित्य पश्चात् उन्मुक्तवन्। अतएव समुद्रगुप्तस्य प्रयागप्रशस्तौ गणतन्त्रनामावल्यां मालवस्य प्रथमङ्कनम्-यथा। 'मालवार्जुनायनयौधेयमाद्रकाभीरप्रार्जुनसनका-नीककाकखर्परिकादि ...... ' पश्चात् महत्त्वमाकांक्षमाणेन द्वितीयचन्द्र-गुप्तेन गणानुन्मूल्य साम्राज्यसीमा वितारिता। गुप्तराजभिरपि गुप्तसंवत् प्रचालितः। ३१९-३२० ईसवीये स लब्धजन्मा। मालवगणस्य तद्गणमुख्यस्य महाराजविक्रमादित्यस्य च शासनप्रणाली-न्यायप्रियता च अतीतेष्वपि शतश संवत्सरेषु प्रतिजनमानसानि तथा दृढमधिष्ठिते यथा गुप्तानां शासनाधीनापि मालवीया प्रजा विक्रमसंवत्सरमेव दृढतयाग्रहीत्। तथा च तस्मिन् क्षेत्रे महता सम्राजा कुमारगुप्तेनापि स्वीयाभिलेखे मालवसवत्सर एव व्यवहृतः। फलतः संस्थामातेऽपि गुप्तसाम्राज्ये मालवगणसंवत्नाम्ना व्यह्रियमाण आसत्। अष्टम्यां शताब्द्यां सर्वतोभावेन भारते निरङ्कुशराजतन्त्रस्थापना जाता। गणतन्त्रशासनव्यवस्थाभावनापि जनमानसतो बहिर्भूता।

इदानीन्तन इव लोकप्रियः प्रभविष्णुः सम्राट् विक्रमादित्योऽभवदि-तिभावनादृढं बद्धादरा जाता।

इत्थं विक्रमनाम्ना संवत्सरस्य योगो जातः। प्रारम्भिकशताब्दीषु विक्रमनाम्ना संवत्सरस्यासम्बन्धविषये विशेषत इदं विचारणीयं यत् न केवलं विक्रमसंवत् विषय एवेदृश वृत्तमुपलभ्यते किन्तु शकसंवदपि स्वप्रचलनादनन्तर पञ्चशततमे वर्षे अनेन नाम्ना सम्बद्धः, ईसवीसन् नामा संवदपि स्वप्रचलनात् पञ्चषवर्षशतसमयानन्तरं ईसानाम्ना सम्बद्ध इति।

एवमेव गुप्तसंवत् स्वप्रचलनात् २२१ वर्षपर्यन्तं पञ्चाशता निर्देशेन निर्दिष्टः। तत्र दशनिर्देशात् वर्षनाम्ना, सप्तत्रिंशत् निर्देशाः संवनाम्ना। त्रयो निर्देशा

गुप्तकालसंज्ञया तमभिदधाति। क एवं वक्तुं पारयेत् यत् गुप्तसंवत्स्थापनं केनचिद् गुप्तनृपेण न कृतमिति।

प्रतिष्ठानस्य राज्ञा हालेन सातवाहनापराभिधानेन सन्दृब्धायां गाथासप्तशत्यामुपलभ्यते। तथाहि—

'संवाहण सुहरसतो सियेण दन्जेण तुह करे लक्खम्।
चललेण विक्कमाइत्त-चरिअं अणु सिक्खिय तिस्सा ॥' (५६४)

एतस्य टीकाकारो गदाधर एव व्याख्याति—'पक्षे संवाहणं संवावनं। लक्ख लक्षणम् विक्रमादित्योऽपि भृत्यकर्तृकेन तुष्टः सन् भृत्यस्य करे लक्षं ददातीत्यर्थः ॥'

एष च सातवाहनः प्रथमशताब्द्यामासीत् इत्यैतिहासिकाः।

बृहत्कथापि विक्रमादित्यं ईसवीसन् प्रारम्भात् पूर्वकालिक स्थापयति। एषा च गुणाढ्येन पिशाचीप्राकृते रचिता। गुणाढ्यश्च हालसातवाहनस्य सभामलञ्चकार। अतः सातवाहनसमकालिक एव सः।

यद्यपि नाधुना बृहत्कथोपलभ्यते तथापि कश्मीरपरम्परायां नेपालपरम्परायाञ्च संस्कृतेऽनूदिता सा। कश्मीरपरम्परायामेकादशशताब्द्यामनुवादद्वयमेतस्याः संवृत्तम्।

प्रथमं क्षेमेन्द्रेण व्यासदासापराभिधेन कविना निबद्ध बृहत्कथामञ्जरीनामधेयम्। अत्र च कथावस्तुनो यथावस्थितत्वेऽपि लम्बकानां तरङ्गाणाञ्च पौर्वापर्ये क्षेमेन्द्रेण सर्वथा स्वातन्त्र्यमालम्बितम्।

अपरश्चानुवादः कथासरित्सागरनाम्ना सोमदेवभट्टेन विहितः। तत्र स लिखति-'यथा मूल तथैवैतन्नमनागप्यतिक्रमः।'

नेपालपरम्परायाञ्च अष्टमशताब्दीतः पूर्वमेव अनुवादः बुद्धस्वामिनाश्लोकसङ्ग्रहनाम्ना विहितः। एवञ्च बृहत्कथा निर्मातुर्गुणाढ्यस्य सातवाहनसमकालिकत्वेन ईसवीसन् प्रारम्भात्पूर्वमेव विक्रमादित्यस्थितिं द्योतयति।

जैनो मेरुतुङ्गाचार्यः स्वीये विचारश्रेण्यभिधाने प्राकृतनिबन्धे विशालाया (उज्जयिन्या) इतिहासं वर्णयन् लिखति-यत्-महावीरनिर्वाणानन्तरं (ईसवीसन् प्रारम्भात् ५२७ वर्ष पूर्वं महावीरनिर्वाणो जातः) ४७० वर्षेभ्यः पश्चात्

शकान् समूलघातं निहत्य मालवो राजा विक्रमादित्य उदेष्यति। तथाहि तत्रत्यं वाक्यम्-

'कालान्तरेण केणवि उप्पाडिता सगाण तं वंसं।

हो ही मालवरायानामेण विक्कमा इच्चो।'

ज्योतिर्विदां परम्परापि विक्रमादित्यं शककारकत्वेन संवत्सं स्थापकत्वेन) अनुस्मरति। तथाहि—

युधिष्ठिरो विक्रमशालिवाहनौ नराधिनाथो विजयाभिनन्दनः।

इमे तु नागार्जुनमेदिनोविभुर्बलोक्रमात् षट् शककारकाः कलौ॥' इति।

महाकविकालिदासेन स्वीयेऽभिज्ञानशाकुन्तले—'आर्ये रसभावविशेष-दीक्षागुरोः श्रीविक्रमादित्यसाहसाङ्कस्याभिरूपभूयिष्ठेयं परिषद्। अस्याञ्च कालिदासप्रयुक्तेनाभिज्ञानशाकुन्तलनाम्ना नवेन नाटकेनोपस्थातव्यमस्माभिः।' (इति संवत् १६९९ हस्तलिखितप्रतौ)

स एष कालिदासः स्वीये ज्योतिर्विदाभरणे आत्मानमेवं विशिनष्टि—

'काव्यत्रयं सुमतिकृद्रघुवंशपूर्वं पूर्वं ततः कियदहोश्रुतिकर्मवादः।

ज्योतिर्विदाभरणकालविधानशास्त्रं श्रीकालिदासकवितो हि ततो बभूव।'

ज्योतिर्विदाभरणरचनायाः समयः कालिदासः लिखति।

'वर्षैः सिन्धुरदर्शनाम्बरगुणैर्याते कलौ सम्मिते।

मासे माधवसंज्ञिते च विहितो ग्रन्थक्रियोपक्रमः॥'

अर्थात् कलेः ३०६८ वर्षेषु गतेषु वैशाखमासे ज्योतिर्विदाभरणरचना प्रारब्धा।

ऐषमः अधुना च गतकलिः ५०७३।५०७३-३०६८=२००५। विक्रमराज्यात् गताब्दाः २०२९-२००५=२४। अर्थात् विक्रमादित्यसिंहासनाधिरोहणात् चतुर्विंशतिवत्सरेषु व्यतीतेषु पञ्चविंशे च वत्सरे प्रविष्टे माधव-(वैशाख) मासे ग्रन्थरचना प्रारब्धा।

महाराजविक्रमादित्यस्य सभासदामपि गणना कालिदासेन तत्रैव दर्शिता।

'शङ्कु सुवाग्वररुचिर्मणिरङ्गुदत्तो जिष्णुस्त्रिलोचनहरी घटखर्पराख्यः।

अन्येऽपि सन्ति कवयोऽमरसिंहपूर्वा यस्यैव विक्रमनृपस्य सभासदोऽमी॥'

तस्मिन्नेव ग्रन्थे महाकविना कालिदासेन विक्रमादित्यनवरत्नानि वर्णितानि। यथा—

'धन्वन्तरिक्षपणकामरसिंहशंकुवेतालभट्टघटखर्परकालिदासाः।

ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य॥'

एष्वेव नवरत्नेषु वररुचिरासीत्। महाराजलक्ष्मणसेनस्य (सं० ११७३) सभापण्डितेन धोयीति नामधेयेन स्वात्मानं वररुचिकल्पलतायां प्रशंसता लिखितम्—

'ख्यातो यश्च श्रुतिधरतया विक्रमादित्यगोष्ठी-

विद्याभर्तुः खलु वररुचेराससाद प्रतिष्ठाम्॥'

इति सदुक्तिकर्णामृत उद्धृतः (पृष्ठ २९७)। एतत्समकालिको जयदेवोऽपि गीतगोविन्दे धोयी कविं प्रशंसति—

'श्रुतिधरो धोयी कविक्ष्मापतिः।'

वररुचेश्च विषये जिनप्रभसूरिरचिते 'विविधतीर्थकल्पे' एका अनुश्रुतिर्विद्योतते। यामनुसृत्य एष सिद्धान्त ऊरीकर्तुं शक्यते यत् सिद्धसेनदिवाकरमहानुभावस्य आज्ञानुसारं विक्रमादित्यशासनपट्टिका (अर्थात् शासनसिद्धान्तः) कात्यायनेन उज्जयिन्यां व्यतीते विक्रमप्रथमसंवत्सरे चैत्रशुक्लप्रतिपदि उपनिबद्धा। जिनप्रभसूरिणा सा पट्टिका स्वयं दृष्टा आसीत्। कात्यायन एव वररुचिः। स च स्वयं स्वकीये पत्रकौमुदीग्रन्थे निबध्नाति—यत्—

'विक्रमादित्यभूपस्य कीर्तिसिद्धेर्निदेशतः।

श्रीमान् वररुचिर्धीमांस्तनोति पत्रकौमुदीम्॥' इति।

नवरत्नेषु उपान्त्यो वराहमिहिरः।

खण्डखाद्यनामा ज्यौतिषशास्त्रस्यकश्चन करणग्रन्थः। तस्य टीकायामामराज आह—'नवाधिकपञ्चशतसंख्याके वराहमिहिराचार्यो दिवं गतः।' इति। स्वयं वराहमिहिरः बृहत्संहितायामाह—

'आसन् मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ।

षड्द्विकपञ्चद्वियुतः शककालस्तस्य राज्ञश्च॥ (३।१३)

अर्थात् युधिष्ठिरशककालस्य ज्ञानं शककाले २५२६ संख्यां संयोज्यकर्तुं सुशकमिति।

ऐषमः युधिष्ठिरशकाब्दो वा कलिशकाब्दो वा ५०७३ । तर्हि ५०७३-२५२६=२५४६ । अर्थात् अधुनातनकालात् २५४७ वत्सरपूर्वं अर्थात् ईसवीसन् प्रारम्भात् ५७५ वर्षपूर्वं कश्चन शककालः प्रवृत्तः । मन्ये बुद्धस्य महाप्रस्थानानन्तरं तदनुयायिभिरेष शकः प्रवर्तितो भवेत् । अथवा अन्येन वा केनचित् प्रवर्तितो भवेत् । उपर्युट्टङ्किताभ्यां वराहमिहिरामराजाभ्यां स एव शको गृहीतः । अर्थात् उपर्युक्तः शको विक्रमसंवत्प्रारम्भात् ५१८ वर्ष-पूर्वं प्रवृत्तः इत्यस्यां स्थितावामराजोक्तिरसमञ्जसा ।

सुधाकरद्विवेदश्च शकशब्देन शालिवाहनशाकं गृह्णानोऽपि आमराजो-क्तिमप्रमाणिकीमाह गणकतरङ्गिण्याम् । एतेन शकशब्देन बहवो बभ्रमुः । कल्हणः स्वीयराजतरङ्गिण्यां प्रथमे तरङ्गे 'आसन् मघासु मुनयः' इति बृहत्संहितास्थितं श्लोकमुदाजहार ।

एवं शकशब्देन वर्तमानं प्रचलितं शकं गृह्णानो बभ्राम । तथाहि वर्तमान संवत्सरे शकाब्दः १८९४ । कलिगताब्दश्च ५०७३ । २५२६ कलिगताब्दे तस्य मतेन शालिवाहन शकप्रवृत्तिः । तथा च २५२६+१८९४=४४२० ५०७३ - ४४२० = ६५३ । एवं रीत्या गणयन् अन्येषां मतं दूषयामास । तथाहि स आह राजतरङ्गिण्यां प्रथमे तरङ्गे—

'भारतं द्वापरान्तेऽभूद् वार्तयेति विमोहिताः ।
केचिदेतां मृषा तेषां कालसंख्यां प्रचक्रिरे ।। ४९ ।।'

उपर्युक्त्यनुसारं स वास्तविकीं संख्यां निर्दिशति-यथा—

'शतेषु षट्सु सार्धेषु त्र्यधिकेषु च भूतले ।
कलेर्गतेषु वर्षाणामभूवन् कुरुपाण्डवा ।। ५१ ।।' इति

तथा ततः प्राचीनैर्विद्वद्भिः स्थिरीकृतासु गणनासंख्यासु ६५३ वत्सराणि व्यवकलय्य कल्हणः कालसंख्यामुदघुषत् । तदेतत् सर्वं भ्रान्तिकवलितम् । उपर्युक्तदिशा कृतसमाधानत्वात् । शकशब्देन वर्तमानशालिवाहनशकात्पूर्व-भाविशकग्रहणादेव वराहमिहिरनिर्मितपञ्चसिद्धान्तिकास्थः—

'सप्ताश्विवेदसंख्यं शककालमपास्य चैत्रशुक्लादौ ।
अर्धास्तमिते भानौ यवनपुरे सौम्यदिवसाद्यः ।।'

अर्थात् शककाले ४२७ संख्या व्यवकलने चैत्रशुक्लप्रतिपद् बुधवासरश्च स्यादिति। पण्डितसुधाकरद्विवेदेन वैदेशिकाय विदुषे थिव्यूटमहोदयाय संस्कृत-भाषायामय ग्रन्थोऽनूदितः। शकशब्देन शालिवाहनशकं गृहीत्वा कृतायां गणनायां तेनावालोकि यत् बुधवारे चैत्रशुक्लप्रतिपदा नायातीति। तदा तेन सौम्यदिवसस्याभिप्रायतया सोमवार एव गृहीतः। एवं चाचार्यवराह-मिहिरस्य शब्दः परिवर्तितः।

मद्रासप्रान्तनिवासी प्रसिद्धः गणितवेत्ता थीरुवेङ्कटाचार्यः 'दी एण्टीक्यूटी आफ हिन्दू एस्ट्रोनोमी एण्ड दी तमिल' ग्रन्थ निर्माणावसरे ईसवीसन् पूर्वभाविनं शकं शकशब्देन सङ्गृह्य गणयित्वा च साधितवान् यत् ४२७ वर्षव्यवकलने अर्थात् ईसवीसन् प्रारम्भात् १२४ वर्षपूर्वं ३ मार्च बुधवारः चैत्रशुक्लप्रतिपदा आसीदिति तदानीं यवनपुरे सूर्यस्यार्धास्तमनम्।

उपर्युक्तेन श्लोकेन ज्ञायते यत् ४२७ शककाले पञ्चसिद्धान्तिकानिर्माण जातमिति। वैदेशिकेन यात्रिणा अलबरुनीनामधेयेनापि पञ्चसिद्धान्तिका रचना-कालः। स एव (४२७ शकः) स्वीकृतः। किन्त्वयंशकः विक्रमसंवत्सरारम्भा-त्पूर्वतनः यो ह्युपरिनिर्दिष्टः।

आचार्यवराहमिहिरकृतिषु विवृतिं टीकां विदधानो महोत्पलो यवने-श्वरस्य कस्यचिन्मतमवतारयति। तथाहि—

"यवनेश्वरेण स्फुजिध्वजेनान्यच्छास्त्रं कृतम्। तथा च स्फुजिध्वजः—

'गतेन साभ्यर्धशतेन युक्ताप्यङ्केन केषां न गताब्दसंख्या।

कालः शकानां (१०४४) स विशोध्य तस्मादतीतवर्षाद्युगवर्षजातम्॥'

एवं स्फुजिध्वजकृतं शककालस्यार्वाग्ज्ञायते।"

वर्तमानशकेन ८८७ शकाब्दे भट्टोत्पलो विवृतिं निबन्धाति। यवनेश्वरः स्फुजिध्वजस्य समयं महोत्पलो न लिखति, न विजानाति वा। महोत्पलात् बहुतिथे सुदूरपूर्वकाले यवनेश्वरस्फुजिध्वजकाले शकाब्दाः १०४४ व्यतीताः। एतेन विज्ञायते यत् पूर्वं बहवः शकाब्दाः प्रचलिता आसन्। तेष्वेकतमो वराहमिहिरेण जिघृक्षितः।

श्रीशङ्करबालकृष्णदीक्षितमहानुभावेन रघुनाथशास्त्रिटेंभुकरद्वारतया-परम्परीणः कश्चन श्लोको वराहमिहिरजन्मकालबोधकः प्राप्तः। सच श्लोकः

श्रीशङ्करबालकृष्णदीक्षितमहानुभावेन स्वीये 'भारतीयज्योतिषग्रन्थे' २१४ पृष्ठे उद्धृतः। स च यथा —

'स्वस्तिश्रीनृपसूसूर्यनुजशके याते द्विवेदाम्बरत्रै (३०४२)
मानाब्दमिते त्वनेहसि जये वर्षे वसन्तादिके।
चैत्रे श्वेतदले शुभे वसुतिथावादित्यदासादभून्।
वेदाङ्गे निपुणो वराहमिहिरो विप्रो रवेराशिषा॥'

अर्थात् सूर्यसूनुर्धर्मराजः तज्जो युधिष्ठिरः। नृपश्चासौसूर्यसूनुजश्चेति तस्य शके अर्थात् ३०४२ कलौ गते जयनाम्नि संवत्सरे वसन्ततौ चैत्रशुक्लाष्टम्याम् भगवतो भास्करस्याशीर्वलेन आदित्यदासनामकात् विप्रात् वेदवेदाङ्गनिपुणो वराहमिहिरो जातः। अर्थात् विक्रमसंवत् स्थापनात् वर्षद्वयपूर्वं वराहमिहिरस्य जन्म इति कालिदासेन वराहमिहिरस्मृतिनिर्माणमपि अनौचितीं भजते।

तत्र केचिदेवमाशेरते -यत् वराहमिहिरो (५०६ शाके) मृतः' इति आमराजवचनात् वराहमिहिरस्य स्थितिः पञ्चमषष्ठशकशतकेषु सम्भाव्यते। ज्योतिर्विदाभरणे च 'याते सिन्धुरे' त्यादिश्लोके शकप्रवृत्युदयपूर्वभावी कालो निर्माणकालतया लिखितः। एवं 'शाकः शराम्भोधि' इत्यादिश्लोके शकग्रहणम् कृतम्। शकप्रवृत्तिपूर्वकालस्थायिना समनन्तरभाविन उल्लेखः कथङ्कारं कर्त्तुं पार्यते इति कृत्वा एष श्लोकः कूटो (जाली) ज्ञातव्यः। परन्तु विक्रमादित्यकालपूर्वभाविशकस्य ग्रहणं वराहमिहिरस्य कालिदासस्य चाभिप्रेतम् इति उपरि साधितत्वात् न तथाविधाशङ्काकलङ्कपङ्कावकाशः।

कश्चन ब्रह्मगुप्ताभिधानः टीकाकारः पृथुस्वामिनाम्ना एतद्वचनमुद्धरति—

'नवाधिकपञ्चशतसंख्याके वराहमिहिराचार्यो दिवं गतः' इति।

संस्कृतसाहित्यस्येतिहासलेखकः जर्मनोदेशीयः कश्चन वेबरः आमराजनाम्ना वचनमेतद् गृहीत्वा ५०६ शक वराहमिहिरमृत्युकालतया गृह्णाति। किन्तु परमाश्चर्यस्य विषय एष यत् आमराजटीकायां पृथुस्वामिना प्रथमं लिखितस्य वचनस्यैतस्य साम्प्रतमनुपलब्धिरेव।

इदमपरमपि ज्ञातव्यं यत् कलेः ३०४४ वत्सरेषु गतेषु विक्रमसंवत्स्थापनम्। तथा कलेः ३१०१वर्षेषु गतेषु ईस्वीसन् स्थापनम् जातम्। विक्रमसंवत्स्थापनात्

वसिवन्दुबाग (५१८) वर्षेभ्यः पूर्वं तस्य शकस्य स्थापनं बृहत्संहितायां १३·३ स्थाने य उल्लिखितः। यद्यामराजवचन सत्यं तर्हि ५१८-५०९ = ९। अर्थात् विक्रमसंवत्स्थापनात् ९ वर्षेभ्यः पूर्वं वराहमिहिराचार्यो दिवं गत इति यदि बलात् वराहमिहिरस्थितिः पञ्चम्यां षष्ठ्यां वा शताब्द्यां कल्प्येत तर्हि तदानीन्तनेन गुप्तकालिकाभिलेखैः प्रकटितेन प्रादेशिकविभागेन मध्यदेशप्रसङ्गात् बृहत्संहितायां विस्तरशो वर्णितानां भारतवर्षस्य प्रादेशिकविभाजनानां साम्यमुपलभ्येत। परन्तु न साम्यमुपलभ्यते।

इत्युपर्युद्‌ट्ङ्कितैर्हेतुभिः प्रमाणै ज्योतिर्विदाभरणस्य अप्रामाण्यशङ्कानास्कन्दितत्व स्थिरायते। तथा च विक्रमस्तत्सभासदश्च सर्वेऽपि ईस्वीसन्प्रारम्भात् पूर्वमासन्। यावत्पर्यन्त प्रबलप्रतापमहिम्ना दूरीकृताराति: शकराजशास्ता गणप्रमुखो महाराजविक्रमः पृथ्वीमशासत् तावत्पर्यन्तं पुनरुत्थातुं शकाब्दा न प्राभवन्। कालधर्ममुपेयुषि विक्रमे तद्वंश्ये सिंहासनमधितिष्ठत्सु पुनः शका उद्दिदीपिरे।

महाराजविक्रमादित्यस्य आचार्यवराहमिहिरस्य चोभयोरपि दीर्घजीवित्वम्। यतो हि पञ्चसिद्धान्तिका आचार्यवराहमिहिरस्य प्राथमिको रचना। तस्या च—सप्ताश्विवेदसंख्यः। अर्थात् ४२७ शको गृहीतः।

बृहत्संहितामतेन २५२६ कलिवत्सरेषु गतेषु शकप्रवृत्तिः। अर्थात् ईस्वीसन् प्रारम्भात् ५७५ वर्षेभ्यः पूर्वं शकप्रवृत्तः। ४२७ शके अर्थात् ईश्वीसन् प्रारम्भात् १४८ वर्षेभ्यः पूर्वं पञ्च सिद्धान्तिकानिर्माणम्। तदनन्तरमनेकेषामितरेषां ग्रन्थरत्नानां निर्माणम्। ईस्वीसन् प्रारम्भात् ५७ वर्षेभ्यः पूर्वं महाराजविक्रमादित्यस्य सिंहासनाधिरोहणम्। तस्मिन्नेव वर्षे संवत्स्थापनञ्च। राज्यसिंहासनमलंकुर्वाणे श्रीविक्रमादित्ये तस्य सभां सविशेषमलंकुर्वत्सु नवरत्नेष्वपि वराहमिहिराचार्यस्य किञ्चित्कालपर्यन्तं स्थितिः।

ननु कथमेतावद्दीर्घकालजीवित्वम्? अधुनातनेषु जनेषु एतावद्दीर्घकालजीवित्वादर्शनादिति चेत् आधुनिकवृत्तपत्रेषु प्रचारितानि कानिचिदपवादभूतानि उदाहरणानि उद्ध्रियन्ते। तथैवैतयोरप्युभयोर्दीर्घजीवित्वम् नासम्भवि। वृत्तपत्रेषु च आगाखाँ महोदयस्य १५० वर्षपर्यन्तं दीर्घमायुः, थोमसपारस्य

१६२ वर्षपर्यन्तं दीर्घमायुः। एका फ्रांसीसी महिला द्वादशवर्षपर्यन्त तदानीं गर्भं दधार। यदा २०० वर्षपर्यन्तं तस्या दीर्घमायुः। कश्चिच् चीनदेशीयस्तदानीं सप्तविंश विवाहं सम्पादितवान्। यदा तस्य २५० वर्ष पर्यन्त दीर्घमायुरासीत्। एवमादीनि बहूनि उदाहरणानि प्रसिद्धानि।

तथाहि—कविरश्वघोषो बुद्धचरिते—

'यद्राजशास्त्रं भृगुरङ्गिरा वा न चक्रतुर्वंशकरावृषीतौ।
तयोः सुतौ सौम्य ससर्जतुस्तत् कालेन शुक्रश्च बृहस्पतिश्च॥,

तत्रैव—'सारस्वतश्चैव जगाद नष्टं वेदं पुनर्यद् ददृशुर्न पूर्वे।
व्यासस्तथैनं बहुधा चकार नष्टं वशिष्ठः कृतवान्न शक्तिः।
वाल्मीकिरादौ च ससर्ज पद्यं जग्रन्थ यन्न च्यवनो महर्षिः।
चिकित्सितं यच्च चकार नात्रिः पश्चात्तदात्रेय ऋषिर्जगाद॥,

गोतमो न्यायसूत्रकृत्गौतमः पुराणे—

'गौर्वाक्तयैव तमयन् परान् गोतम उच्यते।
गोतमान्वयजन्मेति गौतमोऽपि स चाक्षपात्॥'

चार्वाकेण नैषधे (१७।७५)

'मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम्।
गोतमं तमवेक्ष्यैव यथा वित्थ तथैव सः॥'

अक्षमिन्द्रियं लक्षणया ज्ञानशक्तिः पादे यस्य सः, अक्षो चक्षुषि ज्ञाने वा गमनं यस्य सोक्षपादः। तेन हि स्वमतदूषकस्य व्यासदेवस्य मुखदर्शनं चक्षुषा न कर्त्तव्यमिति प्रतिज्ञातं पश्चात् व्यासदेवेन प्रसादितः पादे नेत्रं प्रकाश्य तं ददर्शेति पुराणम्। वीरमित्रोदयस्य लक्षणप्रकाशे गौतमस्यायुर्वेद-कर्त्तृत्वमपि स्पष्टम्।

'गौतमश्च महाभागः आगस्त्यः कश्यपस्तथा।'

इति वृद्धत्रय्याम्।

काशिकावृत्तिकृतो वामनाचार्य्यस्य पुत्रेण मस्करिणा ख्रीष्टीयाष्टमशत्यां गौतमीयधर्मसूत्रस्यैकं भाष्यं निर्मितम्। १२ ई. शत्यां हरदत्त मिश्रेण पदमञ्जरीकृता तत्रैव मिताक्षरा च टीका कृता। उभाभ्यामेताभ्यां

मस्करिहरदत्ताभ्यां गौतमधर्मसूत्रस्य बहून्यपाणिनीयानि पदजातानि दर्शितानि। तस्माद् गौतमः पाणिनेः पूर्ववर्ती। अपाणिनीयानि बहूनि पदानि गौतमेन प्रयुक्तानि। लाट्यायन-डाह्यायण-गोभिलैरपि गौतमस्य नामोल्लेखः कृत इति तेभ्योऽपि गौतमः पूर्ववर्ती। गौतमधर्मसूत्रं पुरा सामगानामेवासीत्। 'पुरा सामगानां गौतमधर्मसूत्र'मिति तन्त्रवार्तिकम्। केश्चित्तु औद्दालकिः श्वेतकेतुः गौतमधर्मसूत्रकारः। अन्यैस्तु तन्नाद्रियते। तेन गौतमेनायुर्वेदवद्वेदानां प्रामाण्यमुक्तमित्युक्तमेव।

'सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते।
हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः॥ (म.भा.शा.प. ३४६।६५)

चरकोप्याह—'हिमवत्प्रदेशस्थितायां मुनिसभायां सांख्य आजगाम' सांख्यप्रवक्ता इत्यर्थः।

श्वेताश्वतरे 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति।' 'सिद्धानां कपिलो मुनिः' गीता। 'कपिलः कपिरव्ययः' विष्णुसहस्रनामसु।

'ऋषते परमं यस्मात् परमर्षिस्ततः स्मृतः।'?

श्रीभागवते कपिलः पञ्चमोऽवतारः। सगरवंशध्वंसकृदेव कपिलः सांख्यप्रवक्ता।

शङ्कराचार्यैस्तु व्याससूत्रानुसारेण प्रकृतिकारणवादिनोऽनीश्वरस्य कपिलसाङ्ख्यस्य पक्षः प्रतिक्षिप्तः। कपिलसूत्राणां कपिलनिर्मितत्वे विप्रतिपत्तिः, श्रीशङ्कराचार्यादिभिस्तदनुल्लेखात्, सांख्यकारिकाया एवोल्लेखाच्च।

कपिलशिष्य आसुरिः। तस्य शिष्यः पञ्चशिखः पञ्चशिखमुद्दिश्य शिष्टा आहुः—

'यमाहुः कपिलं सांख्याः परमर्षिं प्रजापतिम्।
स मन्ये तेन रूपेण विस्मापयति हि स्वयम्॥ ६॥
आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनम्।
पञ्चस्रोतसि यः सत्रमास्ते वर्षसहस्रिकम्॥ १०॥
पञ्चज्ञः पञ्चकृत् पञ्चगुणः पञ्चशिखः स्मृतः।
पुरुषावस्थमव्यक्तं परमार्थं न्यवेदयत्॥ १२॥

सर्वेऽप्येते वेदप्रामाण्यवादिनः। पञ्चशिखाचार्यस्यैव 'एकमेव दर्शनं' 'ख्यातिरेव दर्शनम्' (योगसूत्र १।४ भाष्ये) रूपातिशया वृत्त्यतिशयाश्च विरुद्धयन्ते' (योगसूत्र ३।१३ भाष्ये) 'स्वल्पः सपरिहारः सप्रत्यवमषः'। कुशलस्य नापकर्षायालम् संकरः इत्यादीनि वाक्यानि।

'ललाटमध्यादसृजान्नरदं प्रियदर्शनम्' हरिवंशे।

कश्यपान्नारदश्चैव　पार्वतोऽरुन्धती　तथा॥ (अग्निपुराणे)

पाश्चात्यैस्तु प्रथमख्रृष्टशतीये नारदस्याविर्भावः। किन्तु शास्त्रप्रातिकूल्येन तत्प्रतिक्षेपः। अगस्त्यो मित्रावरुणपुत्रः।

बुद्धचरितेऽश्वघोषः—

अगस्त्यः प्रार्थयामास सोमभार्य्यां च रोहिणीम्।
तस्मात्तत्सदृशीं　लेभे　लोपामुद्रामिति　श्रुतिः॥

लोपामुद्रा विदर्भाधिपतेः कन्या। 'लोपमुद्रे महाभागे राजपुत्रिपतिव्रते।' मार्कण्डेयः पुराणप्रवक्ता। दुर्गासप्तशती तत्रैव। आश्वलायनः श्रौत्रसूत्रनिर्माता। गृत्समदः शौनकवंशीयो महाशालकः। चन्द्रमा शुनासीरस्य प्रथमो मनुष्यशिष्यो भरद्वाजः। विश्वामित्रो वाल्मीकिरामायणे प्रसिद्धः।

अश्वघोषोऽपि—

'यच्च द्विजत्वं कुशिको न लेभे तद्गाधिनः सूनुरवाप राजन्।
वेलां समुद्रे संगरश्च दध्रे नेक्ष्वाकवो यां प्रथमं बबन्धुः॥

विश्वं मित्रमस्येति विश्वामित्रः। 'मित्रे चर्षौ' इति दैर्घ्यं' पूर्वपदस्य।

अथर्ववेदस्य कौशिकसूत्रप्रणेता आश्मरथ्यस्तु बादरायणपूर्ववर्ती। च्यवनः शर्य्यातिपुत्रीं सुकन्यामुपयेमे। एतदुपाख्यानं ऋग्वेदे।

युवं च्यवनमश्विना जरन्तं पुनर्युवान च चक्रः। शचीभिः युवोरथं दुहिता सूर्यस्य सहश्रिया नासत्या वृणीत (ऋ. सं. १ मे. ११७ सू. १३)।

महाभारतेऽपि—

'अग्नेरथ वचः श्रुत्वा तद्रक्षः प्रजहारताम्।
ब्रह्मन्　वराहरूपेण　मनोमारुतरंहसा॥१॥

ततः स गर्भो निवसन् कुक्षौ कुरुकुलोद्वह ।
रोषान्मातुश्च्युतः कुक्षेश्च्यवनस्तेन सोऽभवत् ॥२॥
तं दृष्ट्वा मातुरुदराच्च्युतमादित्यवर्चसम ।
तद्रक्षो भस्मसाद्भूतं पपात परिमुच्यताम् ॥३॥

( म०भा०आे०प० ६ )

गार्ग्यमुनिरथर्ववेदस्य नानामन्त्राणां द्रष्टा । गार्ग्यसंहिता वैद्यकग्रन्थः । शाण्डिल्यमुनिः गोत्रप्रवर्तकः भक्तिसूत्रकारः । वाचक्नवी गार्गी मुनेः पितृष्व सासीत् । कौडिन्यो विष्णुगुप्तो विष्णुना गुप्तत्वात् । स च पाणिनेः पूर्ववर्ती । अगस्त्यकौडिन्ययो··· ( २।४ ७० पा० सू० ) । देवलः रम्भाशापेन मुनेरलकस्य सुजातानाम्न्यां कन्यायामष्टावक्ररूपेण जन्म लेभे । कहोलमुनिरस्य जनक आसीत् । गालवः विश्वामित्रस्य शिष्यः ।

'विश्वामित्रस्तु शिष्यस्य गालवस्य तपश्विनः ।'

( म०भा० उद्यो०प० १०६।१६ )

अश्वघोषः

'ययातिश्चैव राजर्षिर्वयस्यपि विनिर्गते ।
विश्वाच्याप्सरसा सार्धं रेमे चैत्ररथे वने ।।'

प्रतिसंस्कृते सुश्रुते बौद्धप्रभावो न मनागपि प्रविष्टः । यतः कात्यायन-वात्स्यायनादीनां पन्थानमनुसृत्य शबरस्वामी मीमांसाभाष्यं प्रणयन् वेद-बाह्यधर्ममतस्य तीव्रः प्रतिवादः व्यधत्त । सुश्रुतप्रतिसंस्करणकालेऽपि सनातन-धर्मस्य दृढत्वसंपादनाय बोधायनद्रुमिडाचार्यादयः आप्रागपातमन्वेषन्त । सुश्रुतसंस्कारात् प्राक् कनिष्कसभ्यः कपिलबलः योगयस्थलेषु पातञ्जलवार्ति-कस्यापि संनिवेशेन तां संहितां संचस्कार । तेनैव स चरक इत्युपाधिं लेभे । स एव नवीनश्चरकः । मूलपाठस्तु प्राचीन एव । कपिलबलस्य सूनुः कापिल-बलः तेनापि सुश्रुतचरकौ संस्कृतौ । स च ई० द्वितीयशत्यां जातः । दृढ-बलोऽपि चरकं संस्कार । तदानीमेव नागार्जुन-दिङ्नाग-धातुसेन-वसुबन्धु-कुमारजीवादीनां सनातनधर्मप्रतिपक्षतया बौद्धधर्मस्य प्रचारो बलवानभूत् ।

दृढबलस्यापि तत्प्रभावोपहतत्वात्तत्संकृते बौद्धप्रभावोऽनुप्रविष्टः । चरकमते

सांख्यीयतत्त्वं यद्यप्यादृतं तथापि मोक्षस्वरूपं सांख्यवेदान्तसमन्वितमेव। 'आत्मन्येवात्मानं पश्येत्' इति श्रुतेः।

प्रकृतिं पुरुषे स्थाप्य पुरुषं ब्रह्मणि न्यसेत्।
अहं ब्रह्म परं ज्योतिः प्रसंख्याय विमुच्यते।

अग्निपुराणीयवचनाच्च।

द्वौ सुश्रुतौ हयायुर्वेदवित् नरायुर्वेदविच्च। प्रथमो राजर्षेः शालिहोत्रस्य तनयः। शालिहोत्रश्च महर्षेरात्रेयस्य शिष्यः। भगवान् धन्वन्तरिः स्ववैद्यः काशीराजवंशे दिवोदासरूपेण वाराणस्यां जनिरभूत्।

'भीतेभ्यश्चाभयं देयं व्याधितेभ्यस्तथौषधम्।
देया विद्यार्थिने विद्या देयमन्नं क्षुधातुरे॥'

प्रथमद्वितीयखृष्टशत्यां सुश्रुतप्रतिसंस्कारेण सुश्रुतसंहिता। नावनीतके बैम्बसारिजीवकस्य बुद्धसमकालिकस्य वचनानि समुद्धृतानि। वृद्धजीवकस्तु कश्यपशिष्यः वृद्धात्प्राचीनतमः। महावग्गतिब्बतीयकथायां बौद्धस्य जीवकस्य वृत्तम्।

केचित्तु कनिष्कमेव नागार्जुनमाहुः। नागार्जुनो विदर्भेषु ब्राह्मणवंशे जातस्तक्षशिलायां शिक्षां लेभे। तन्मतावलम्बिनो बौद्धा 'महायान' इत्याख्यया प्रसिद्धाः। राहुलभद्रसमीपे बौद्धदर्शनमधीत्य बोधिकनिष्कसभायां द्वौ सनातनधर्मावलम्बिनौ चरकः सुश्रुतश्च महावैद्यौ, तावेदानीं नवीनचरक-सुश्रुतरूपेण प्रसिद्धौ। नागार्जुनस्य चरकप्रतिसंस्कर्तृत्वं प्रतिसंस्कारप्रेरक-त्वादेव। सुश्रुततन्त्रस्य प्रतिसंस्कर्ताऽपि सनातनधर्मपरायण एव, तत्र बुद्धस्य बौद्धवस्तूनाञ्चानुल्लेखात्।

बौद्धमतावलम्बिनी विज्ञानकौमुदी परिव्राजिका चाह—

'यावत्स्वस्थमिदं वर्ष्म यावन्नेन्द्रियविप्लवः।
यावज्जरा च दूरेऽस्ति तावत्सौख्यं प्रसाधयेत्॥
अस्वास्थ्येन्द्रियवैकल्ये वार्धक्ये वा कुतः सुखम्।
शरीरमपि दातव्यमर्थिभ्योऽतः सुखेप्सुभिः॥
इत्वरो गत्वरो देहः सञ्चयाः सपरिक्षयाः।
इति विज्ञाय विज्ञाता देहैः सौख्यं प्रसाधयेत॥

परमेतत् बौद्धैरेव प्रतिक्षिप्तम् । यथा—अश्वघोषः—

'अग्नेर्यथा ह्यौष्ण्यमपां द्रवत्वं तद्वत् प्रवृत्तौ प्रकृतिं वदन्ति ।

केचित्स्वभावात् ... ... ... .. ... ... ... ॥

क कण्टकस्य प्रकरोति तैक्ष्ण्यं विचित्रभावं मृगपक्षिणां वा ।

स्वभावतः सर्वमिदं प्रवृत्तं न कामकारोऽस्ति कुतः प्रयत्नः ।'—बुद्धचरिते ।

'नाशीविषेभ्यो हि तथा बिभेमि नैवाशनिभ्यो गगनाच्च्युतेभ्यः ।

न पावकेभ्योऽनिलसंहितेभ्यो यथा भयं मे विषयेभ्य एव ॥

देवेन वृष्टेऽपि हिरण्यवर्षे द्वीपान्समग्रांश्चतुरोऽपि जित्वा ।

शक्रस्य अर्द्धासनमप्यवाप्य मान्धातुरासीद्विषयेष्वतृप्तिः ॥

ऐलश्च राजा त्रिदिवं विगाह्य नीत्वापि देवीं वशमुर्वशीं ताम् ।

लोभादृषिभ्यश्च करं जिहीर्षुर्जगाम नाशं विषयेष्वतृप्तः ॥'

पुनश्च —

'कामाभिभूता हि न यान्ति शर्म त्रिविष्टपं किं बत मर्त्यलोके ।

कामैः सतृष्णस्य हि नास्ति तृप्तिर्यथेन्धनैर्वातसखस्य वह्नेः ।

समुद्रवस्त्रामपि गामवाप्य पारं जिगीषन्ति महार्णवस्य ।

लोकस्य कामैर्न वितृप्तिरस्ति पतद्भिरम्भोभिरिवार्णवस्य ॥'

'रागादिरोगा सहजाः समूलाः येनाशु सर्वे जगतोऽप्यपास्ताः ।

तमेव वैद्यं शिरसा नमामि वैद्यागमज्ञांश्च पितामहादीन् ॥'

अत्रैव वैद्यः शिवः ।

चीनपरिव्राट् इचिं महोदयेन ६९१ खृष्टाब्दे भारतभ्रमणपुस्तकं लिखितम् । तत्र लिखितं यदितश्चत्वारिंशद्वर्षेभ्यः पूर्वं भर्तृहरिरुपरतः ।

ज्योतिर्विदाभरणकारः त्रयोदशचतुर्दशखृष्टशताब्दीयः । तत्र तेन विक्रमस्य सभायां नवरत्नानि प्रोक्तानि ।

धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटखर्परकालिदासाः ।

ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥'

अयं वररुचिः कालनादन्यो विज्ञायते। तथैव धन्वन्तरिरपि प्राचीनोऽन्यः । गोविन्दभगवत्पादस्य रसहृदयमष्टमखृष्टशताब्दीयो ग्रन्थः । तद्गुरो गौडपादस्य

त्याय माण्डूक्यकारिका सप्तमखृष्टशतीया। पञ्चदशशतीयेनानन्दगिरिणा तत्र टीका कृता।

'रसरत्न' प्रणेता वाग्भटः सिंहसूनुः त्रयोदशखृष्टशताब्दे यो ग्रन्थेऽनुमीयते। अष्टाङ्गसंग्रहकारस्तु नवमखृष्टशत्याः पूर्वः, यतोऽस्य ग्रन्थस्य बहवो व्याख्याकाराः नवमशतीतः प्रारभ्य लभ्यन्ते। रसतन्त्रसमुच्चये रसहृदयस्य २७ श्लोका उद्धृताः। १३ खृष्टशतीयस्य सिङ्नस्य समकालिकः खर्पणनामा लोकनाथः रससिद्ध आसीत्। तस्य नाम रसरत्नसमुच्चये।

सरसो धातुवादेषु शस्यते न रसायने।
अय हिरवर्पणाख्येन लोकनाथेन कीर्त्तितः'।

१३ शतीयसोमदेवप्रणीतरसेन्द्रचूडामणिनाम्नो ग्रन्थस्य रसरत्नसमुच्चये-उद्धृताः श्लोकाः।

रौप्येण सह संयुक्तं ध्मातं रौप्येण चेल्लगेत्।
तदा निरुत्थमित्युक्तं लोहं तदपुनर्भवम्।
अतोऽस्य प्रणेता चतुर्थो वाग्भट्टो नत्यनाथो वा।
नन्दी नागार्जुनश्चैव ब्रह्मज्योर्मुनीश्वरः।
वेत्ति श्रीसोमदेवश्च नापरः पृथिवीतले॥

अत्र केचित् रसतन्त्रसमुच्चायकारं सिंहसूनुं वाग्भट्टमेव मन्यन्ते। तत एव तस्य रसवाग्भट्ट इति नाम्ना प्रसिद्धिः। संक्षिप्तत्वात्स ग्रन्थो प्रसिद्धिं न लेभे। ततो महति काले रसेन्द्रचूडामणि-रसेन्द्रपरिभाषयोर्निर्मात्रा सोमदेवेन कालोपयोगिनां प्रतिसंस्कृत्य वाग्भट्टनाम्नैव प्रचारितः।

अश्वघोषः—

ऋष्यशृङ्गं मुनिसुतं तथैव स्त्रीष्वपण्डितम्।
उपायैर्विविधैः शान्ता जग्राह च जहार च॥
करालजनकश्चैव हृत्वा ब्राह्मणकन्यकाम्।
अवाप भृशमप्येवं न तु सेवेत मन्मथम्॥

गोमुखो नरवाहनस्य नर्मसचिवः। गोविन्दभगवत्पादस्तु रससिद्धः। रसहृदये गोविन्देन लिखितम्—

नप्त्रामङ्गलविष्णोः सुमनो विष्णोः सुतेन तन्त्रोऽयम्।
श्रीगोविन्देन कृतस्तथागतश्रेयसे भूयात्॥

अस्यैव बालः ष शवर्षो विषयरसास्वादलम्पटः ।
परवहजातविवेको वृद्धो मर्त्यः कथमवाप्नुयान्मुक्ति ।
बालस्तावत्क्रीडासक्तः तरुणस्तावत्तरुणीरक्तः ॥

एतेन शङ्करभगवत्पादगुरुरयम् । परं कैश्चन बौद्धोऽयमिति तथागत-नाम्ना प्रोच्यते ।

रसहृदयाख्यं तन्त्रं विरचितवान् भिक्षुगोविन्दः तस्मात् किरात-नृपतेर्बहुमानमवाप्य रसकर्मनिरतः किराताधिपतिकामदेवापरनामा मदनदेवः तस्य गुरुः भिक्षुः संन्यासी—

यथा गतास्ते मुनयः शिवां गतिं तथा गतिं सोऽपि तथागतो गतः । इत्युक्तेः । तथागतो बुद्ध एव यद्यपि तथापि बौद्धानां संतोषार्थं तथोक्तिरिति गम्यते । कलापस्य चैत्रकुटीवृत्तेर्नमस्कारपादे मुनिकल्पो वररुचिरपि पञ्चमख्रूष्टशत्यामाह—

देवदेवं प्रणम्यादौ सर्वज्ञं सर्वदर्शिनम् ।
कातन्त्रस्य प्रवक्ष्यामि व्याख्यानं सार्ववर्मिकम् ॥

बौद्धानां श्रेयः प्रार्थनया न बौद्धत्वं किन्तु श्रुतिस्मृतिविरुद्ध-बौद्धचारवशादेव बौद्धत्वम् । रसहृदये तु वेदान्तवेद्यं ब्रह्माभ्युपेतम् ।

परमे ब्रह्मणि लीनः प्रशान्तचित्तः समत्वमापन्नः आश्वासयंस्त्रिवर्गं विजित्य रसानन्दतृप्तः । श्रुतिस्मृतिविहितकर्मणां श्रेयस्त्वमुद्धुष्यते । यज्ञाद्दानात् तपसो वेदाध्ययनात् यमात् सदाचारात् अत्यन्तं श्रेयः किल ।

म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम् ।
ऋषिवत्तेऽपि पूज्यन्ते किं पुनस्त्वदविद्द्विजाः ॥

अतो नायं बौद्धः तत एवास्य शिष्यः शङ्कराचार्य्यः गोविन्द-भगवत्पादउक्तः ।

'कस्त्वं शिशो कस्य कुतोऽसि गन्ता ।
किं नाम ते त्वं कुत आगतोसि ॥

शङ्करोक्तिः—

स्वामिन्नहं न पृथिवी न जलं न तेजः
न वायवो न गगनं न च तद्गुणा वा ।

नापीन्द्रियाणि तु विद्धि ततो विशिष्टो
यः केवलोऽस्ति परमः स शिवोऽहमस्मि ॥

कालञ्जरदुर्गनिर्माता चन्देलवंशप्रतिष्ठापकः महाराजश्चन्द्रः चन्द्रसेनः तृतीयचतुर्थखृष्टशतीयः चन्द्रगुप्तस्य समकालिकः, दिल्लीस्थितसुप्रसिद्ध-लोहस्तम्भेऽस्य नाम उत्कीर्णम् ।

आगतं शिववक्त्राच्च गतञ्च गिरिजाश्रुतौ ।
मतञ्च वासुदेवस्य तेनागम······॥

निर्मलवारिणा वक्त्रागतं शिवमुखेषु यत नरवाहनः खृष्टपूर्वषष्ठ्यां शत्यां वत्सदेशीयः सम्राडुदयनेन वासवदत्तायां नरवाहनो जातः अत्र नकारो णो न भवति । कलापस्य ण्युट्कव्यहव्यप्ररीष्येषु । चैत्रकुटीवृत्तौ वररुचिराह—नरो वाहनो यस्य स नरवाहनः विहीनसनरवाहन बोधिरिति सम्पूर्णं नाम बौद्धग्रन्थे दृश्यते । अयं बुद्धस्य साक्षात् शिष्यः बोधिरिति तद्दतं नाम । पाणिनिः वार्तिककारः कात्यायनश्च एतं कुमारं वहीनरं व्याहरति ७।३।१। अन्येषामपि दृश्यते इति दीर्घः ।

कुणरवाडवस्तु विहिनरः आह । विहीनो नरः कामक्रोधाभ्यामिति विहीनरः पृषोदरादित्वान्नलोपः

पञ्चशतीयवृहत्कथातो ज्ञायते विहीनर इत्यपि बुद्धदत्तं नाम । नागार्जुनो नागबोधि कैश्चिदुभयोरभेदग्रहणात्तस्य तृतीयचतुर्थशतीयत्वम् । गीतगोविन्दप्रणेता जयदेवस्ततोऽष्टशतवर्षैः प्राचीनः ।

आदित्यदेवताश्चेष्ट्वा धन्वन्तरिपतञ्जली ।
दद्याद् वलिं च सर्वेभ्यो नानाभक्ष्योपचारतः ॥
तस्मिन्नवसरे बौद्धदेशे प्रव्रजतां ययुः ।
नागार्जुनेन सुधिया बोधिसत्त्वेन पालितः ॥

स च बौद्धदर्शनमधीत्य वटयक्षिणीं चोपास्य रससिद्धिमवाप । तथाहि—तदीयरसरत्नाकरे वटयक्षिणी उवाच—

'साधुसिद्ध महासिद्ध·········।'
किञ्चित्प्रार्थय मे सिद्ध तत्सर्वं प्रवदाम्यहम् ॥

नागार्जुन उवाच—

यदि तुष्टासि मे देवि सर्वदा भक्तवत्सले।
दुर्लभं त्रिषु लोकेषु रसबन्धं वदस्व मे ॥

माध्यमिकसूत्रादिकं तेन निर्मितम्। कनिष्कसभ्यः सः तत्पक्षमष्टखृष्टशत्यां शङ्कराचार्यः शारीरकभाष्ये समूलमुन्मूलयमास। प्रथमद्वितीयखृष्टशतीयौ कनिष्कनागार्जुनौ, अश्वघोषोऽपि तदानीमेवासात्। तदापि नागार्जुनस्य प्रतिष्ठाबाहुल्यमासीत्। एतदध्यक्षतायामेव काश्मीरे चतुर्थसंगीते राह्वाजम्। 'तदानीमेव हीनयान—महायानत्रिभागद्वयमासीत्। नागार्जुनसिद्धान्त-रसेन्द्रमङ्गल-तारातन्त्रादिकं च तेन निर्मितम्।

बुद्धखृष्टजन्मनः प्राक् चतुःषष्ट्यत्रिकपञ्चशततमे वर्षे शाक्यकन्या मायादेवी सिद्धार्थं हूणपुत्र शुद्धोदनादजीजनत्। प्रसूत्यनन्तरमेव सोपरता। तस्या भगिनी सपत्नी च महाप्रजावती गौतमी त सद्यो जातं शिशुं ततः प्रभृति पालयाञ्चकार। सिद्धार्थ इति बुद्धस्य नाम।

शुद्धोदनः कपिलवस्तुराजस्य सिंहहूणस्य पुत्रः, 'मायादेवी देहदहजनपदस्थितशाक्यराजस्य सुभूतेः कन्या। हूणजातीयपुरुषेण शकजातीयस्त्रियामुत्पन्नस्य तोकस्य संकरवर्णत्वात् सिद्धार्थः सर्वैरुपहसित आसीत्। एतन्यक्कारमसहमानः कुमारो वैराग्यात् संसारमपहाय तपश्चोग्रं चकार। ततः सिद्धिमवाम। बुद्धनाम्ना विश्रुतः। सनातनधर्मप्रातिकूल्येन बौद्धधर्मस्य प्रचारमारब्धवान्। उदयनराज्ञा सह तस्य सख्यमासीत्। खृष्टजन्मनः प्राक् सप्ताशीत्यधिकचतुःशततमे वर्षे निर्वाणं लेभे।

ततो गुरूपदिष्टधर्मस्य गुप्तये संगीतिमेकामाहूय तच्छिष्याः सूत्रविनयादिधर्मग्रन्थं त्रिपिटकं प्राहुः। किन्तु प्रतिपत्तिभेदात्ते त्रिधा विभक्ता आसन्। महाकश्यपभिक्षोराध्यक्ष्येण बौद्धधर्मो यथा कथञ्चित्प्रचारयोग्य आसीत्।

ततो भगवानुपवर्षो वेदादिशास्त्ररक्षार्थं पूर्वोत्तरमीमांसयोर्वृत्तिं प्रणयन् वेदबाह्यमतखण्डनं कृतवान्। ततः वात्स्यायनभाष्यादावस्य बौद्धधर्मस्य सारहीनत्वमाचार्य्याः प्रतिपादितवन्तः। तदनन्तरमशोकस्य राजत्वकाले मुद्गलीपुत्रस्तिष्यपादो विजयसमुत्कर्षादि बौद्धग्रन्थान् प्रणीतवान् तथापि बौद्धधर्मस्य प्रतिष्ठा नासीत्।

अशोकेन बहुद्रव्यव्ययैः बौद्धानां सुस्थता संपादिता। अशोकात्परं शबरस्वामी पूर्वमीमांसाभाष्ये तिष्यपादस्य युक्तिजालं निरस्य बौद्धान् हीनबलान् विदधे। ततो नागार्जुनेन न्यायद्वारतारकादिशास्त्रं शाश्वत-वादप्रतिवादमुपादाय बौद्धशास्त्रस्य दर्शनपदवाच्यता संपादिता। ततः प्रभृति सौत्रान्तिकवैभाषिकौ हीनयाननाम्ना, योगाचारमाध्यमिकौ महायाननाम्ना प्रसिद्धिं लेभिरे। पुनः कियतिचित्काले नागार्जुनस्यापि युक्तिजालं कुमारिलशङ्कराचार्यादिभिरभीक्ष्णं खण्डितम्।

पुराणतन्त्रयोरपि बुद्धः—

'मत्स्यः कूर्मो वराहश्च नारसिंहोऽथ वामनः।
रामो रामश्च रामश्च बुद्धः कल्की च ते दश॥

नवमावतारत्वेन प्रसिद्धः।

ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषाम्।
बुद्धो नाम्नाऽजिनसुतः कीकटेषु भविष्यति॥

कीकटेषु मगधदेशेषु। तारातन्त्रे कीकटो दक्षिणमगधः।

मुण्डमालायाम्—

'प्रकृतिर्विष्णुरूपा च पुंरूपश्च महेश्वरः।
एवं प्रकृतिभेदेन भेदास्तु प्रकृतेर्दश॥

दश— दशावतारा इत्यर्थः।

कृष्णरूपा कालिका स्याद्रामरूपा च तारिणी।
बगला कूर्ममूर्तिः स्यान्मीनो धूमावती भवेत्॥
छिन्नमस्ता नृसिंहः स्याद्वराहश्चैव भैरवी।
सुन्दरी जामदग्न्यः स्याद्वामनो भुवनेश्वरी॥
कमला बुद्धरूपा स्यान्मातङ्गी कल्किरूपिणी।
स्वयं भगवती काली कृष्णस्तु भगवान् स्वयम्॥
स्वयं च भगवान्कृष्णः कालीरूपोऽभवद् व्रजे।
'निन्दसि यज्ञविधेरहह श्रुति जातम्॥
सदयहृदयदर्शितपशुघातम्।
केशवधृतबुद्धशरीर जय जयदेव हरे॥

इत्यादिषु बौद्धमतानां हेयत्वेऽपि बुद्धदेवस्तु नारायणत्वेन निरूपितः।

(१) माघप्रणीते शिशुपालवधाख्ये महाकाव्ये टीकाप्रणेत्रा संवत् ९७७ काले वर्तमानेन वल्लभदेवेन महाभारतस्य श्लोकानां संख्या सपादलक्ष-परिमिता निरूपिता। वल्लभदेवस्य पुत्रश्चन्द्रादित्यः पौत्रश्च कैय्यटाभिध आसीत्। देवीशतकविवृतौ कैय्यटेन स्वसमयः कलिसंवत् ४०७८ अर्थात् विक्रमसंवत् १०३४ लिखितः। 'सपादलक्षं श्रीमहाभारतम्' (का. २।३८)। मन्येऽत्र हरिवंशसंख्याऽपि सम्मिलिता भवेत्।

(२) संवत् ९५७ काले वर्तमानो राजशेखरः स्वीयकाव्यमीमांसायां भारत-संहितां शतसाहस्रीमभिष्टौति।

(३) विक्रमनवमशताब्द्यां वर्तमान आनन्दवर्धनाचार्यो ध्वन्यालोकवृत्तौ (३।१५) महाभारतशान्तिपर्वस्थं (अध्याय १५३) गृध्रगोमायुसंवादं प्रस्तौति। अनुक्रमणिकाध्यायं हरिवंशं च महाभारतस्य भागमेव सम्मनुते। यथा 'न तु महाभारते यावान् विवक्षाविषयः-सोऽनुक्रमण्यां सर्व एवानुक्रान्तो ...महाभरतावसाने हरिवंशवर्णनेन तेनैव कविवेधसा कृष्णद्वैपायनेन सम्यक् स्फुटीकृतः॥' (ध्वन्यालोक ४।५)

(४) सप्तमशताब्द्यां विद्यमान आचार्यः कविर्दण्डी स्वकीयावन्तिसुन्दरी-ग्रन्थे महाभारतं तन्निर्मातारं श्रीवेदव्यासं च स्मरति। तथा च तत्रत्यः श्लोकः—

'मर्त्ययन्त्रेषु चैतन्यं महाभारतविद्यया।
अर्पयामास तत्पूर्वं यस्तस्मै मुनये नमः॥

(५) सप्तम्यामेव शताब्द्यां दण्डिनः पूर्वभावी बाणभट्टः स्वीये कादम्बर्या-ख्ये हर्षचरिताख्ये च निबन्धे नैकधा महाभारतमुल्लिलेख, तद्रचयितारं च व्यासम्। यथा—

पार्थरथपताकेव वानराक्रान्ता, विराटनगरीव कीचकशतावृता, (पृ०६७ भीष्ममिव शिखण्डिशत्रुम्, पराशरमिव योजनगन्धानुसारिणम् (पृ० १०७ तथा १०८) महाभारते शकुनिवधः, (पृष्ठ १४३) महाभारत - पुराण रामायणानुरागिणा, (पृष्ठ १७९) आस्तीकतनुरिवानन्दितभुजङ्गलोका (पृ०१८८) महाभारते दुःशासनापराधाकर्णनम् (पृ०१९९) महाभारत-

पुराणेतिहासरामायणेषु (पृष्ठ २६३) महाभारतमिवानन्तगीताकर्णनानन्दितनरम्, (पृ० ३१४) इतिकादम्बरीपूर्वभागे-हरिदासकृतकलिकाता संस्करणे शक १८५७)

'एकाकी तपस्वी वनमृगैं-सह संवर्धितः सहजब्राह्मणमार्दवसुकुमारमनाः कृतनिश्चयः चण्डचापवनाटनिटङ्कारनादनिर्मदीकृतदिग्गजं गुञ्जज्ज्यारवजनितगजज्वरं समग्रमुद्यतमेकविंशतिकृत्वः कृत्तवंशमुत्खातवान् राजन्यकं रामः (षष्ठ उच्छ्वासः पृष्ठ० २६१) हिडिम्बामुखचुम्बनास्वादितमिव रिपुरुधिरामृतमपायि पवनात्मजेन' (पृष्ठ उ० पृ० २६२) जामदग्न्येन च शाम्यन्मन्युशिखिशिखासञ्ज्वरसुखायमानस्पर्शशीतलेषु क्षत्रियक्षतजमहाह्लदेषु अस्नायि' (षष्ठ उ० पृ० २६२) (हर्षचरितकेरल विश्वविद्यालयसंस्करणे सन् १६५८)

'नमः सर्वविदे तस्मै व्यासाय कविवेधसे।
चक्रे पुण्यं सरस्वत्या यो वर्षमिव भारतम् ॥ ४॥'

'किं कवेस्तस्य काव्येन सर्ववृत्तान्तगामिनी।
कथेव भारती यस्य न व्याप्नोति जगत्त्रयम् ॥ १०॥

इतिहर्षचरिते उपोद्घाते—

(६) प्रायो बाणस्य समकालिको व्याकरणकाशिकाकारो जयादित्यः द्रोण-पर्वत-जीवन्तादन्यतरस्याम्' (पा. सू. ४।१।१०३) इति सूत्रे लिखति 'नैवात्र महाभारतद्रोणो गृह्यते' इति।

(७) इतोऽपि प्राचीनः मीमांसाशास्त्रव्याख्याता भट्टपादः कुमारिलः स्वीये औत्पत्तिकसूत्रवार्तिके उदाजहार—

'प्रसिद्धौ हि तथा चाह पाराशर्योऽत्र वस्तुनि॥
इदं पुण्यमिदं पापम्·········॥ २॥

(८) एतत्समकालिको दिग्गजो बौद्धविद्वान् धर्मकीर्तिः स्वीये प्रमाणवार्तिके लिखति- 'भारतादिष्वपि इदानींतनानामशक्तावपि कस्यचित् शक्तिसिद्धेः (प्र० वा० ४४७-४४८)

(९) एतस्मादपि प्राचीनेन शब्दब्रह्मवादिना वाक्यपदीयकर्त्रा महावैयाकरणेन भर्तृहरिणा वाक्यपदीये प्रथमकाण्डे 'तथेतिहासेषु निदर्शनान्युपलभ्यन्ते

इत्युक्त्वा'वैखर्या मध्यमायाश्च ( १ - १४२ ) इतिकारिकावृत्तौ - 'गौरिव प्रक्षरत्येका' इत्यादि श्लोका उदाहृताः। ते च किञ्चद् व्यतिक्रमेण महाभारते आश्वमेधिके पर्वणि २१ अध्याये उपलभ्यन्ते।

(१०) उद्योतकरस्य न्यायवार्तिके पातञ्जलयोगसूत्रे विहितस्य व्यास-भाष्यस्य उद्धरणं लभ्यते। योगभाष्ये 'निर्विचारवैशद्येऽध्यात्मप्रसादः' (१।४७) इतिसूत्रे वचनमेकमुद्धृतं विद्यते—

'प्रज्ञाप्रसादमारुह्य अशोच्यः शोचतो जनान्।
भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुपश्यति॥

एतच्च महाभारते एवंरूपेण, वनपर्वणि २०७ अध्याये—

'प्रज्ञाप्रसादमारुह्य मुच्यन्ते महतो भयात्।
प्रेक्षन्तो लोकवृत्तानि विविधानि द्विजोत्तम॥ ६८॥

तथा शान्तिपर्वणि १७ अध्याये एवंरूपेण,—

प्रज्ञाप्रासादमारुह्य अशोच्यान् शोचतो जनान्।
जगतीस्थानिवाद्रिस्थो मन्दबुद्धिर्न चेक्षते॥ २०॥

तथा शान्ति पर्वणि १५१ अध्याये—

'प्रज्ञाप्रासादमारुह्य अशोकः शोचतो जनान्।
जगतीस्थानिवाद्रिस्थः प्रज्ञया प्रतिपत्स्यति॥ ११॥

इत्येवंरूपेण साम्प्रतं लभ्यते।

अपरं चैकं वचनं 'सन्तोषादनुत्तमः सुखलाभः' ( पा. यो. सू. २।४२ ) इत्यत्र व्यासभाष्य उद्धृतं विद्यते। यथा—

'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥' इति

तदेतत् महाभारते शान्तिपर्वणि १७४ अध्याये ४६ तमे, १७७ अध्याये ५१ तमे तथा २७६ अध्याये षष्ठे स्थाने लभ्यते।

(१२) इतोऽपि पूर्वकालिकः मीमांसाभाष्यकारः शबरस्वामी स्वीये मीमांसाभाष्ये 'यस्य लिङ्गमर्थं संयोगादभिधानवत्' ( मी. द. ८।१।२ ) इतिसूत्रे अमुं श्लोकमुद्धरति—

'वितीर्य हि महज्जालमृषिः संक्षिप्य चाब्रवीत्।
इष्टं हि विदुषां लोके समासव्यासधारणम्॥

तदयं श्रीमन्महाभारते आदिपर्वणि प्रथमेऽध्याये ५१ तमे स्थाने अधो लिखितरूपेण साम्प्रतमुपलभ्यते। यथा—

'विस्तीर्यैतन्महज्ज्ञानमृषिः संक्षिप्य चाब्रवीत्।

इष्टं हि विदुषां लोके समासव्यासधारणम्॥ ( म. मा. १।१।५१ )

एतेनोद्धरणेन ज्ञायते यत् अनुक्रमणिकाध्यायोपि श्रीमन्महाभारतवत् ऋषिव्यासकर्तृक एव शबरस्वामिनोऽभिमत इति ।

(१३) अपि च महाराजधर्मराजयुधिष्ठिरप्रपौत्रस्य श्रीमहाराजजनमेजयस्य ताम्रशासनं महत्प्रमाणम्। तस्य प्रतिलिपिः सन् १८७५ नवम्बर मास मुद्रिते इण्डियन् अंटिक्योरी पुस्तके एवरूपा वर्तते। यथा—

"श्रीगणाधिपतये नमः।

पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः।

त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः॥

स्वतिश्रीजयाभ्युदये युधिष्टिरशके प्लवङ्गाख्ये एकोननवतिवत्सरे सहस्यमासे अमावस्यायां सौम्यवासरे श्रीमन्महाराजाधिराजपरमेश्वरो प्रतापशस्त्रो कुरुकुलोद्भवो वैताघ्रपादगोत्रजः श्रीजन्मेजयभूपः किष्किन्धानगर्यां सिंहासनस्थः सकलवर्णाश्रमधर्मप्रतिपालकः पश्चिमदेशस्थसीतापुरवटोदरक्षेत्रे तत्रत्यमुनिवृन्दमठस्य गरुडवाहनतीर्थ श्रीमदग्निष्यकैकयनाथैराराधितसीतारामस्य पूजार्थं कृतभूदानसाधनमस्य प्रपितामहयुधिष्ठिराधिष्ठितमुनिवन्द्यक्षेत्रेऽस्य चतुःसीमापरिमितिक्रमः पूर्वभागे उत्तरवाहिन्याः तुङ्गभद्रायाः पश्चिमे, दक्षिणभागे अगस्त्याश्रमसङ्गमादुत्तरेपश्चिमे, पाषाणनद्याः पूर्वे, उत्तरभागे भिन्ननद्याः दक्षिणे एतन्मध्यस्थमुनिवृन्दक्षेत्रं भवच्छिष्यपरम्परया आचन्द्रार्कपर्यन्तं निधिनिक्षेपजलपाषाणअक्षिणी?

आगामि सिद्धसाध्यतेजःस्वाम्यसहितं स्वबुद्धयनुकूलेन अस्मन्मातापित्रोः विष्णुलोकप्राप्त्यर्थं हरिहरसन्निधौ उपरागसमये सहिरण्येन तुंगभद्राजलधारापूर्वकक्षेत्रं यतिहस्ते दत्तवानस्मि एतद्धर्मसाधनस्य साक्षिणः—

आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापो हृदयं यमश्च।

अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य कृत्यम्॥

दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम्।

दानात्स्वर्गमवाप्नोति पालयन्नच्युतं पदं॥

स्वदत्ताद्विगुणं पुण्यं परदत्तानुपालनम् ।
परदत्तापहारेण स्वदत्तं निष्फलं भवेत् ।
स्वदत्ता पुत्रिका ज्ञेया पितृदत्ता सहोदरा ।
अन्यदत्ता तु जननी दत्तां भूमिं परित्यजेत् ।
अन्यैस्तु च्छर्दितं क्षुद्रैः श्वभिश्च च्छर्दितं न तु ।
ततः कष्टस्ततो नीचः स्वयंदत्तापहारकः ।
स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः ।
षष्टिवर्षसहस्राणि विष्ठायाँ जायते क्रिमिः ।" इति ।

केचित्तु एतस्मिन् ताम्रशासने उक्ताः प्लवङ्गसंवत्सरसहस्यमासकृष्णपक्षामावास्या सौम्यवासरोपरागादियोगा इतः पूर्वं त्रयोदशशताब्द्यां सम्भवन्तीति स एव समयो महाभारतस्येति वदन्ति ।

परन्तु वाराणसीस्थराजकीयसंस्कृतपाठशालाप्रधानगणिताध्यापकेन महामहोपाध्यायश्रीबापूदेवशास्त्रि-सी-आई-ई महाशयेन तु पूर्वोक्तकुकल्पनानिरासपूर्वकं तत्ताम्रशासनं गणितेन तदुक्तकालिकमेव व्यवस्थापितम् इति ।

(१४) अपि च विक्रमाब्दारम्भात् ४७० वर्षेभ्यः पूर्वं निर्वाणपदवीं गतानां जैन २४तमतीर्थङ्कराणां महावीरस्वामिनां कौटलीयशास्त्रस्य मिथ्याशास्त्रनिरुक्त्या उक्तसमयादनल्पपूर्वकालावस्थायित्वं कौटल्यस्य सङ्गच्छते । तेन पौराणिकस्य सूतस्य सङ्करजातेः सूताद्भेदः स्वीयेऽर्थशास्त्रे निरूपित इति महाभारतं पुराणं च अतिप्राचीनं सिद्ध्यति ।

आधुनिकास्तु दूरदेशस्थैरत्युग्रबुद्धिभिर्महासामर्थ्यवद्भिश्चिरस्थैरपि दुरधिगमान् विषयान् तस्मिन् समयेऽल्पायासेनाल्पेन कालेन राजदूतेन येन केनचित् मेगस्थनीजनाम्ना याथातथ्येनावगतान् समाकलय्य पुस्तकाभावेऽपि तन्नाम्ना पत्रादिना सङ्कलिते पुस्तके 'सेन्द्राकोत्तस' 'सेन्द्राकोत्तस' 'जन्द्रमस' इत्याकारकैः पदैः स्वविद्यावृद्धिमहिम्ना चन्द्रगुप्तं परिकल्प्य तत्प्रकरणे चाणक्यस्य चर्चाया अभावेऽपि बलात्कारेण तत्र चाणक्यं सन्निवेश्य अशोकवर्धनस्य चन्द्रगुप्तपौत्रस्य चर्चाया अभावेऽपि यं कञ्चिदशोकं सन्निवेश्य तज्जीवनचरितादिकं यथोक्तशिलाशासनादिभ्यो यथोक्तरीत्या परिकल्प्येदानीं महाभारतं विष्णुपुराणं वायुपुराणं मत्स्यपुराणादिकं च समन्वेतुमिच्छन्ति । यदि न पारयन्ति तदा तान्येवावज्ञायोपहसन्ति (सब गप्प है)। 'भाँग गाँजा पीकर लिखा है' इति प्रलपन्ति, तदेतत् महद्दुःखास्पदम् ।

# आर्याभियानम्

सर्वप्राचीने ऋग्वेदेऽन्येषु च वेदेषु ब्राह्मणादिषु स्मृतिषु च बहिर्देशादार्य्याणामागमं नोक्तम्' कीथः।

वर्षशतात्पूर्वभाषातत्त्वज्ञेन मैक्समूलरेण भारते आर्य्याभियानवादो वर्णितः। स चात्यन्तं निराधारोऽपि निर्विवादसिद्धान्तरूपेण प्रतिष्ठितः। तद्रीत्या आर्य्या इण्डो यूरोपीया ईसवीयपूर्व २५००। १५०० वा वर्षेभ्यः प्राक् भारताद्बहिः क्वचिद्भूखण्डे निवसन्त आसन् ते च विभिन्न समूहैः भारत ग्रीस रोम जर्मनी स्केण्डि नेविया प्रभृतिदेशेषु प्रसृताः। पूर्वेषां मतेन तात्कालिकैरसभ्यैः भारतीयैरादिमाः सिल्हणा दस्यवाः पराजिताः।

परन्तु व्यूनवी-पिगटप्रभृतिलेखकानां रीत्या आर्य्या निम्नस्तरीया असभ्यजातीयाश्चासन्। तदपेक्षया हड़प्पा मोहन्जोदड़ो निवासिनः सुसभ्या आसन्। असभ्यैरार्य्यैर्विजितानां सिन्धूपत्यकानिवासिनां सभ्यतातो बहवो गुणा गृहीताः। तस्माद्वैदिकसभ्यतामिश्रितसभ्यतायाः परिणाममात्रमभ्युपेयते। परं सर्वमेतदशुद्धम्, यतो निम्नोक्तैः प्रमाणैः वैदिकसभ्यता ईसवीय पूर्व ३००० वर्षेभ्यः प्रागेव विततासीत्। भारतीयज्यौतिषरीत्या कुरुक्षेत्रयुद्धात् युधिष्ठिराब्दनाम्ना कल्यब्दनाम्ना च कालगणना ईसवीयपूर्व ३१०२ वर्षेभ्यः प्राक्प्रवृत्ताः। तस्मादीसवीपूर्व २५००-१५०० वर्षेभ्यः प्रागार्य्याभियानकल्पनापास्ता भवति। पूर्वोक्तरीत्या ततः पूर्वमेवार्य्याणां वैदिकानां भारतनिवासित्वसिद्धेः।

किञ्च वेली - वालेस - प्रभृतिभिः पाश्चात्त्यैरपि गणितद्वारा साधितमेतद्यत्भारतीयज्योतिषसारिणी ज्यामितिसाहाय्येन भारते ईसवी पूर्व ३००० वर्षेभ्यः पूर्वमेव निर्णीता लिपिबद्धा च जाता। तत एव वैदिकसभ्यता ततोऽपि बहुप्राचीना।

देवशुन्या सरमया गवामन्वेषणं कृतम्। बलादयो असुरास्तेषु मान्या आसन्। ते व्यापारप्रसङ्गेन सर्वत्र भ्रामन्ति स्म। आर्यसभ्यताया वस्तारेऽपि तेषां योगः।

वस्तुतस्तु- 'शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
पौण्ड्काश्चौड्द्रविणाः कम्बोजायवनाःशकाः ।
पारदापह्लवाश्चीनाः किराता दरदाः खशाः ।
मुखबाहूरुपज्जानां या लोके जातयो बहिः ।
म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः ॥'
( म० स्मृ० १०।४३-४५ )

एवमादिभिर्वचनैर्ये सुमेर - मोहज्जोदरो - आदिसभ्यतास्रष्टारस्ते वेदोक्ता दस्यव एव। तेभ्य एव केचिद्यूरोपं गताः। वैदिकसभ्यताया वेदानाञ्चातिप्राचीनत्वात् ।

दीनानाथचुलैटस्य वेदकालनिर्णयपुस्तके वेदमन्त्रा लक्षत्रयवर्षेभ्योऽपि प्राचीनाः साधिताः ।

'वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ (भा. सं. १०।९०।६ ) अत्र सायणः अस्य यज्ञस्य वसन्तः वसन्तर्तुरेव । आज्यम् आसीत् अभूत्, तमेवाज्यत्वेन सङ्कल्पितवन्त इत्यर्थः । एवं ग्रीष्मः आसीत् तमेवेध्मत्वेन सङ्कल्पितवन्त इत्यर्थः । तथा शरद्धविः आसीत् । तामेव पुरोडाशादि हविष्ट्वेन सङ्कल्पितवन्त इत्यर्थः ।

'शतं जीव शरदो वर्धमानः शतं हेमन्तान् ।' शतमुवसन्तान् ( भा. सं. १०।१६२।४ ) अत्र सायणः–हे यक्ष्माद्विमुक्त वर्धमानः अहरहरभिवृद्धिं प्राप्नुवंस्त्वं । शतं । शरदः शतसंख्याकान् शरदृतून् जीव प्राणान् धारय। शतं हेमन्तर्तूंश्च जीव । शतं वसन्तान् च ।

'वि ये दधुः शरदं मासमादहर्यज्ञमक्तुँ चाहचम् । (भा० सं. ७।६६।११) ये मित्रादयः । शरदं संवत्सरम् वि । दधुः अकुर्वन् । आत् अनन्तरमेव । मासम् । अनन्तरम् अहः अहः साध्ययज्ञम् आत् अनन्तरम् अक्तुं रात्रिं । च ऋचं मन्त्रांश्च क्रमोऽत्रविवक्षितः ।

'वसन्त ऋतुः' ( मा. सं. १०।१० ) 'ग्रीष्म ऋतुः' ( मा. सं. १०।११
'वर्षा ऋतुः' ( मा. सं. १०।१२ ) 'शरदृतुः' ( मा. सं. १०।१३ )
'हेमन्तशिशिरावृतू' (मा.सं.१०।१३) 'वसन्तः प्राणायनः (मा.सं.१३।५४

'वसन्तमृतुं प्राणान्निरमिमीत' ( श० ब्रा० ८।१।१।५ )
'ग्रीष्मो मानसः' ( मा. सं. १३।५५ )
'ग्रीष्ममृतुं मनसो निरमिमीत' ( श. ब्रा. ८।१।१।८ )
'वर्षाश्चाक्षुष्यः ( मा. सं. १३।५७ )
'वर्षाऋतुं चक्षुषो निरमिमीत' ( श. ब्रा. ८।१।२।२ )
'शरच्छ्रौत्री, ( मा. सं. १३।५७ )
'हेमन्तो वाच्यः' ( मा. सं. १३।५८ )
'शरदमृतुं श्रोत्रान्निरमिमीत ( श. ब्रा. ८।१।२।५ )
'हेमन्तमृतुं वाचोनिरमिमीत' ( श. ब्रा. ८।१।२।८ )
'द्वादशमासाः संवत्सरः ( श. ब्रा. ७।३।१।४७ )
'वसन्तः प्राणायनः, 'ग्रीष्मो मानसः, ( तैं. सं ४।३।२।१ )
'वर्षाणि चाक्षुषाणि, 'शरच्छ्रौत्री, ( तै, सं. ४।३।२।२ )
'हेमन्तो वाच्यायनः' ( तै. सं. ४।३।२।३ )
'वसन्त ऋतूनाम्' 'ग्रीष्मऋतूनाम्' 'वर्षा ऋतूनाम् ( तै.सं. ४।३।३।२ )
'शरदृतूनाम्' 'हेमन्तशिशिरावतूनाम्' 'तै. सं. ४।३।३।१ )
'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि । ( मा. सं. ३२।२ )

सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।
कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः ॥

अर्धमासा मासा ऋतवः संवत्सरश्च कल्पन्ताम् । ( तै. आ० १०।१।२ ]

इत्यादिषु परःशतासु श्रुतिषु कालस्योत्पत्तिसावयवत्वयोरुपलभ्यमानत्वात् । 'उक्तो वेषो वासांसि च कालावयवानामितः प्रतीच्येषु' ( तै. आ. १।१२।५ ) इत्यस्यां इतोऽस्मादनुवाकात्प्रतीच्येषु' कालावयवानामृतूनां ध्यातव्यो वेष उक्तः, वस्त्राणि चोक्तानीत्यर्थिकायां श्रुतौ कालस्य सावयवोक्त्या कालतत्त्वं सिद्ध्यति ।

एतेषां पूर्वोक्तानां पितामहस्य दिव्यां सभामुपवर्णयता देवर्षिणा नारदेन प्रत्यक्षदर्शनं युधिष्ठिरायोपदिष्टम्—

'क्षणालवा मुहूर्ताश्च दिवारात्रिस्तथैव च ।
अर्धमासाश्च मासाश्च ऋतवः षट् च भारत ॥ ३७ ॥

संवत्सराः पञ्चयुगमहोरात्रश्चतुर्विधः ।
कालचक्रं च तद्दिव्यं नित्यमक्षयमव्ययम् ॥ ३८ ॥
( महा० सभापर्व ११ )

प्रभावादिषष्टिसंवत्सराणां द्वादशयुगं भवति । यतो हि पञ्चसंवत्सरा युगपदव्यपदेश्याः । मानुषः पैत्र्यः ( मासात्मकः ) दैवः ( संवत्सरात्मकः ) ब्राह्मः ( कल्पात्मकश्च ) एष चतुर्विधोऽहोरात्रः ।

एतद्दिव्यं कालचक्रं मूर्तिमत् ब्रह्मलोके देवर्षिणा दृष्टम् । व्यवहारेऽपि एतेषामुपयोगो दर्शितो महाभारते—

'कला काष्ठाश्च युज्यन्ते मुहूर्ताश्च दिनानि च ।
अर्धमासाश्च मासाश्च नक्षत्राणि ग्रहस्तथा ॥ १ ॥
ऋतवश्चापि युज्यन्ते तथा संवत्सरा अपि ।
एवं कालविभागेन कालचक्रं प्रवर्तते ॥ २ ॥
(विराट पर्व ५२)

व्यवहारे कालगणनायामेतेषां योगोभवतीत्यर्थः ।

स्मृतिरपिकालस्योत्पत्तिमाह—

'कालं कालविभक्तीश्च नक्षत्राणि ग्रहांस्तथा ।
सरितः सागरान् शैलान् समयनिविषमाणि च ॥'
(मनुस्मृति १।२४)

तत्र यः सामान्यकालः सविशेषानुगतत्वात् प्रत्यक्षः । तदपेक्षयानित्यो-ग्रहमत्यादिभिरनुमेयो भूतोत्पत्तिनिमित्तकारणम् इतितार्किकज्यौतिषिकादयः प्रतिपेदिरे ।

तत्र पौराणिका आहुः—

'युग - वर्ष - मास - दिवसाः समं प्रवृत्तास्तु चैत्रशुक्लादेः ।
कालोऽयमनाद्यन्तो ग्रहभैरनुमीयते क्षेत्रे ॥'

कालविशेषे तु संवत्सरः प्रधानभूतः । अन्ये तु सर्वे गुणभूताः । तथा चारुणकेतुना समाम्नायते ।

"नदीव प्रभवा काचिदक्षय्या स्यन्दते यथा ।
तां नद्योऽभिसमायान्ति सोरुः सती न निवर्तते ॥
एवं नाना समुत्थानाः कालाः संवत्सरं श्रिताः :

अणशश्च महच्छश्च सर्वे समवयन्ति तम् ॥ (तै.आ. १।२।१)

कालविभागे भगवान् मनुः—

'निमेषा दश चाष्टौ च काष्ठा, त्रिंशत्तु ताः कलाः ।
त्रिंशत्कला मुहूर्तः स्यादहोरात्रं तु तावतः ॥ ६४ ॥
अहोरात्रे विभजते सूर्यो मानुषदैविके ।
रात्रिः स्वप्नाय भूतानां चेष्टायै कर्मणामहः ॥ ६५ ॥
पित्र्ये रात्र्यहनी मासः, प्रविभागस्तु पक्षयोः ।
कर्म चेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्वरी ॥ ६६ ॥
दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः ।
अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम् ॥ ६७ ॥
ब्राह्मस्य तु क्षपाहस्य यत्प्रमाणं समासतः ।
एकैकशो युगानां तु क्रमशस्तान्निबोधत ॥ ६८ ॥
चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् ।
तस्य तावच्छती संध्या सध्यांशश्च तथाविधः ॥ ६९ ॥
इतरेषु ससंध्येषु ससंध्यांशेषु च त्रिषु ।
एकापायेन वर्तन्ते सहस्राणि शतानि च ॥ ७० ॥
यदेतत्परिसंख्यातमादावेव चतुर्युगम् ।
एतद्द्वादशसाहस्रं देवानां युग उच्यते ॥ ७१ ॥
दैविकानां युगानां तु सहस्रं परिसंख्यया ।
ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरेव च ॥ ७२ ॥

'अयने विषुवे चैव षडशीतिमुखेषु च ।
चन्द्रसूर्योपरागे च दत्तमक्षयमुच्यते ॥

( म. भा. व. प. २००।२५ )

ऋतुषु दशगुणं वदन्ति दत्तम्, शतगुणमृत्वयनादिषु ध्रुवम् ।
भवति सहस्रगुणं दिनस्य राहोर्विषुवति चाक्षयमश्नुते फलम् ॥

( म. भा. व. प. २००।२६ )

हेमाद्रौ दानखण्डे तृतीये प्रकरणे दानाङ्गकालनिरूपणावसरे महाभारतनाम्नावस्तनं वचनमुद्धतम् । तद्यथा—

'अमा सोमे तथा भौमे गुरुवारे यदा भवेत् ।
तत्पर्व पुष्करं नाम सूर्यपर्वशताधिकम् ।। इति ।

यजुर्वेदीयशतपथब्राह्मणान्तर्गतबृहरण्यकोपनिषदिह देशे ई. पू० ३१०० वर्षेभ्यः प्राचीना प्रसिद्धा । तत्र मधुविद्याया वंशब्राह्मणे गुरुशिष्य-पारम्पर्य्यमुपवर्णितम् ।

तत्र प्रथमो दध्यङ् अथर्वाऽन्तिमश्च सप्तचत्वारिंशत्तमः पौतिमाष्यो मुनिः । तत्रैकस्य पुरुषस्य पञ्चाशद्वर्षसमयेऽभ्युपगम्यमाने पौतिमाष्यस्य ई.पू. ३५०० वर्षं प्राचीनकाले स्वीकृते दधीचस्ततः पूर्वं २३५० वर्षप्राचीनता सिद्धयति । तस्मात् ई.पू. ५००० वर्षं पूर्वमिह देशे वैदिकसभ्यतासत्त्वमपि-सिद्धयत्येव ।

मोहन्दोदड़ों—हरप्पाप्रभृतिस्थानेषु प्राचीनध्वंसावशेषेषु लब्धवस्तूनां ई०पू० २५०० वर्षेभ्येऽपि प्राचीनता सिद्धयति । सिन्धूपत्यकायाः सा सभ्यता वर्णाश्रमसभ्यतैव । यतस्तत्र नासाग्रदृष्ट्यो बद्धासनाश्च मूर्त्तयो लब्धाः । योगासनासीनता भारतीयपद्धतिरेव । चीनजापानादिदेशेष्वपि सा पद्धति-रित एव प्रस्थिता । मनसश्चैकाग्र्येणान्तर्मुखत्वार्थंमेव नासाग्रदृष्टिता प्रशस्ता । तेन सा वैदिकी सभ्यतैव ।

तत्र एकस्यां मुद्रायां कलशीकाष्ठादिभिः सार्धश्मशानदृश्यञ्चाङ्कितम् । तदपि वैदिकसनातनधर्मस्यैव लिङ्गम् । प्रस्तरमयानि शिवलिङ्गानि च तत्रो-पलब्धानि वैदिकसनातनधर्मादन्यत्र शिवलिङ्गपूजनं च न दृश्यते । ध्वंसावशे-षूपलब्धमुद्रासु या लिपिः सा पाश्चात्यानामद्यापि दुःखगमा । सिलचरनि-वासिना महेन्द्रचन्द्रपण्डितेन काव्यतीर्थेन सांख्यार्णवेन कासाञ्चिन्मुद्राणां पाठोद्धारः कृतः । तत्रैकस्यां मुद्रायां—चित्रेऽधिवृक्षं द्वौ पक्षिणौ चित्रितौ तयोरेकः फलं खादति अन्योऽखादन् पश्यति केवलम् ।

तत्र चित्रे—

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरेकः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ।।

मन्त्रार्थ एव चित्रितो भाति । सांख्यार्णवस्य महेन्द्रस्य रीत्या तत्र मुद्रायां द्वा सुपर्णा इत्यनेन सदृशं सुवर्णध्वनिद्वयमङ्कितम् । तेन

सिन्धूपत्यकायां वैदिकधर्मविततिरेव सिद्धयति। अन्यास्वपि मुद्रासु धरणनवनिष्कगुणचरणरजतद( दी )नारपलमानद्योतकान्यक्षराणि तेन पठितानि। भारते प्राचीनयुगे मुद्राणामेतासां व्यवहारः प्रचलित आसीत्। तद्रीत्या व्यवसायिनां वस्त्रादिक्रयविक्रयादिव्यवहारेषु द्रव्येषु पूर्वोक्तमुद्राङ्कनप्रचलनमासीत्।

पिगटमहाशयेनापि तदनुगुणमेव स्वमतं प्रकाशितम्। उभयत्र नगरे पक्वेष्टकबद्धकूपानां परितो भग्नमृन्मयशरावादिपात्रराशय उपलब्धाः। तैरपि वैदिकसभ्यता परिचीयते। जलादिपानानन्तरं मृत्पात्रत्यागस्तत्रैव प्रचलितो नान्यत्र। स्पर्शास्पर्शविवेक आहारशुद्धिप्रथा च वैदिकसनातनधर्मे एव दृश्यते। तेन ई० पू० ५००० वर्षेभ्यः प्रागिह वर्णाश्रमिणामावासः सिद्धयति।

किञ्च ग्रीकसम्राजः सेल्यूकसस्य दूतेन मेगस्थनीजेन मौर्यराज्यसभायां ई० पू० चतुर्थशत्यां बहूनि वर्षाणि यापितानि। तदीयनिबन्धाश्च महत्त्वपूर्णा इति सर्वैः स्वीक्रियते। तेन लिखितं यत् भारते बह्वो लोका जातयश्च सन्ति, परन्तु न कोऽपि बहिर्देशादागतो विदेशीयो वा वास्तव्योऽस्ति।' एतेनापि ई० पू० १५०० वर्षेषु भारते आर्य्याभियानं न सिद्धयति यदि ततो १००० वर्षेषु विदेशादार्य्याभियानं संवृत्तं भवेत्तदा तत्कथं न स्मर्य्येत्? तेनार्य्याभियानकथा मिथ्याकल्पनामूलिकैव।

वर्णाश्रमप्रभावादेवातिप्राचीनापीयं सभ्यताऽद्यापि जागर्ति। तत्समक्षमेव सुमेरियन बैबिलोनियन चैल्डियन असीरियन कासायित हिण्डाइत ईसानियन रोमनक चीनी वाइमण्डीय इस्लामी यूरोपियन अमेरिकन मेक्सिकन भायापेरू अनेकाः सभ्यता बुद्बुदा इवोद्भूय विलीनाः। भारतीयैव सभ्यता अतिप्राचीनापि जीवति।

ननु आर्य्याणाँ दासभावः कौटलीयेऽर्थशास्त्रे वर्णितः। भारतीयशास्त्रदृष्ट्या वैदिकानां पराधीनता पराजयो वा घुणाक्षर न्यायेनापि नावगम्यते। आर्य्या आवर्त्तन्ते पुनः पुनरुद्भवन्ति आक्रम्याक्रम्यापि म्लेच्छनरस्थातारो भवन्ति अत्र स आर्य्यावर्त्तः। कीथ मतम्—

It is, however, certain that the Rigveda offers no assistance in determining the mode in which the Vedic Indians entered India. If, as may be the case, the Aryan invaders entered by the passes of the Hinduksh and proceeded thence through the Punjab to the east, still that advance is not reflected in Rigveda. ( Keith Cambridge History of India vol 1 page 78—9 )

Piggot

हड़प्पा मोहनजोदड़ों निवासिनः सभ्याः, किन्तु तैः पराजिताः।

"This method of interpretation, however, is one which grew up at a time when the Harrapa civilization was still undiscovered and when it was assumed that the Aryan invaders of India encountered only a rabble of aboriginal savages who could have contributed little save a few primitive animistic beliefs to vedic thought, nothing to the structure of later Indo—Aryan Society. With such an assumption it was safe to regard the whole Vedic corpus as representing in the main an Aryan evolution owing practically nothing to older vanquished people of the Punjab. But as the preceding chapters of this book have shown the Aryan advent in India was, in fact, the arrival of barbarians into a region already highly organized into an empire based on a long established tradition of listerate urban culture. The situation is, in fact, almost reversed, for the conquerors are seen to be less civilized than the conquered. ( Piggot, Prehistoric India Pangum pp. 257-58)

बेली वालेस आदिभिर्गणितद्वारा प्रमाणितम्

Astronomical tables in India must have been constru-cted by the principles of Geometery. × × Some are of opinion that they have been framed from observation made at a very remote period, not less than 3000 years before the christian era. ( This has been conclusively proved by Bailley) Prof. Wallance. in the Edinburg Ency-clopaedic Geometry ( P. 191 )

प्रस्तरमयानि शिवलिङ्गानि

" certain large, smooth, cohesive stones under earthed at Mohenjodaro and Harrappa were undoubtedly the Lings of these days. This association (with the worship of Siva ) however, seems more probable "

Mackey, the Indians civilization P (77-8)

श्रीमहेन्द्रचन्द्रकाव्यतीर्थसांख्यार्णवेन मुद्राणां पाठोद्धारः कृतः ।

( M.C. Kavyatirtha Sankhyarnava Mohanjodaro's seal deciphered P. 9 ) ( Piggot ).

पिगटमहाशयस्य मतम्

Harrapa tradess by about 2300 B. C. must have had their resident representatives in Ur and Lagesh and other centres of trade using the characterstic seals on merchandise and documents"

(Piggot, Prehistoric India) P. 210)

जलं पीत्वा पात्राणि भग्नानि

Round such well-heads have been found inumerable fragments of mass produced little clay cups. suggesting that as in contemporary Hinduism, there was a ritual taboo on drinking twice from the same cup and that each

cup was thrown away or amashed after it has been used.

( I bid p. 171 )

मेगस्थनीजरीत्या भारते विदेशीया नासन्

It is said that India, being of enormous size, when taken as a whole is peopled by races both numerous and diveres of which not even one was originally of foreign descent but all were evident by indigenous and moreover that India neither recevied a colony from abroad, nor sent out away to any other nation.

Mac Crinale "Ancient India"
Megasthenes (p. 31-34)



## सृष्टेर्मूलस्थानम्

इतः पूर्वं द्वितीयशत्यामेव विलियमजोन्समहोदयेन कलिकातायां संस्कृताध्ययनावसरे इदमनुभूतं यत् संस्कृता वाक् ग्रीक, लैटिन, जर्मन केल्टिक, भाषाभिः साम्यमावहति। पश्चादनेकासां भाषाणां साम्यं विद्वद्भिर्दृष्टम्। पितृ पिदर फादर, मातृ मादर मदर, भ्रातृ विरादर ब्रदर दुहितृ दुख्तर डाटर पद पा फुट, गो गाव काऊ, भ्रू अब्रू ब्राल भूवूवी इत्यादि संस्कृत, इरानी इंगलिश भाषागतेषु शब्देषु साम्यं स्पष्टं दृश्यते। तत्र मैक्समूलरप्रभृतिभिरेवं निर्धारितं यत्। कस्मिश्चित् समये भारतीयानां इरानीयानां यूनानीयानां रोमनानां रूसीयानां केल्टानां जर्मनानाञ्च पूर्वजा न केवलमेकस्मिन्नेव देशे किन्त्वेकस्यैव प्रावरणस्य हर्म्यस्य वाधस्तात् निवसन्तिस्म। तेषां दृढो विश्वासो जातो यत् गौराङ्गस्याङ्गलसैनिकस्याङ्गे तदेव रक्तं वहति यच्छ्यामलस्य वंगस्यास्यांगे। ततो

लम्बगौरदेहा विशालाक्षाः सुनसा आर्य्या भवन्तीति प्राचीन-मूर्तीनां दर्शनात्, वैदिककालिकार्य्यस्वरूपवर्णनाच्च विज्ञायते। तेन भारत-यूनान रोम यूरोप वासिन आर्य्या सभ्या इति निर्णीतम्। अस्या उपजातेर्नामकरणमपि भाषामाश्रित्यैव इण्डोयूरोपियन इण्डोजर्मन इति जातम्। अन्ते च आर्य्य ( आर्य्यन ) इति नामकरणं निश्चितम्।

भारतीयशास्त्रदृष्ट्या अनादिकालादेव भारतवर्षमेव तत्रापि हिमालयविन्ध्ययोः पूर्वपश्चिमसमुद्रयोश्च मध्यभाग एव मानवोत्पत्ति-स्थानम्।

यद्यपि कैश्चित् यूरोपप्रदेशे मानवोत्पत्तिरङ्गीकृता।
तथापि तन्मतं प्रायेण सर्वजनीनं न संपन्नम्॥

यद्यपि च समानभाषाभाषित्वेन तेषां पूर्वजानां कदाचिदेकभाषा भाषित्वं, तेन च तेषामेककुलोत्पन्नत्वादिकसाधनं कठिनमेव। अद्यत्वे विभिन्नदेशस्थानां विभिन्नजातीयानाञ्चाङ्गलभाषाभाषित्वेऽप्येककुलोत्पन्नत्वाभावस्य प्रत्यक्षत्वात्। संसर्गविशेषाद् भाषासंस्कृतिसभ्यतावेषविन्यास-भोजनपानादिपरिवर्त्तनसंभवाच्च।

तथाप्यत्यन्तविकासदशायामेतत्संभवति। सृष्टेरारम्भकाले यद्येक-स्मादीश्वराद्धिरण्यगर्भात प्रजायते। मनोर्वा सकाशादेकत्रैव सृष्टिरारब्धा, तदा तु तदुत्पन्नानां तत्पुत्रपौत्रप्रपौत्राणां समानैव भाषा युक्ता। श्रेणी-बद्धानां तेषां यथा यथा विप्रकर्षः सञ्जातस्तथा तथा परिस्थितिसंसर्गादि-भेदैरेकस्या एव भाषाया भेदाः सम्भवन्ति। तस्मात्पूर्वजानामेकभाषा भाषित्वं संभवत्येव। मानवत्वादिरूपेणैकजातीयत्वेऽपि तेषामनेकजातीयत्वं तु वेदादिषूक्तमेव। मुखजत्वेन ब्राह्मणत्वं, बाह्वादिजत्वेन क्षत्रियत्वादिकञ्च आधुनिकभाषया संख्यावृद्धया फलमूलपशुभूमिप्रभृतिभोजनसाधन-गवेषणाय व्यापाराय विजयाय चैकप्रदेशोत्पन्नानामप्यनेकत्र विस्तारः संभवति।

आर्य्याणां मूलनिवाससम्बन्धे मध्येशियावादः' सर्वत्र स्वीकृतप्रायः। शासकीयरीत्या [प्राप्तमान्यताकशिक्षणालयेष्वपि स एव वाद आद्रियते। तत्कारणमिदम् वेदादवेस्ताग्रन्थाच्चार्य्यसंस्कृतेः परिचयो लभ्यते।

येषामुभावेतौ धर्मग्रन्थौ तेषां बहुकालं सहवासः समानश्चेतिहास आसीत्। तेषां संस्कृतजेन्दभाषाभाषिणां समीपे यो देशो भवेत्तस्मादेवस्थानादेका शाखा भारतमागता अन्या ईरानदेशं गता। तृतोया शाखा पश्चिमस्यां दिशि गच्छन्ती यूरोपदेशं गता।

कोऽयं स तादृशो देश इति जिज्ञासायां प्राचीनाचार्य्याणां गवादिपशुपालकत्वात्कृष्यादिकार्यनिष्ठता वेदेभ्योऽवगम्यते। यो विशालो दीर्घायामः शीतप्रधानश्च स्यात्स एवादिमस्थानं भवितुं युक्तम्। वैदिकवर्षव्यवहारो हिमशब्देन भवति स्म। यथाऽद्य 'शरत्' शब्देन जीवेम शरदः शतम् तथैव 'यस्य तरेम तरसा शतं हिमाः' (ऋ. सं. ५।५४।१५)। अत्र शतं हिमास्तरेम शतं संवत्सरं जीवेम इति तद्भाष्यम्। तेन तदानीमेकस्माच्छीतकालाद् द्वितीयशीतकालं यावदेकवर्षरूपेण गण्यते स्म। तेन शतं हिमाः इत्यस्य शतं वर्षाणीत्यर्थो गृह्यते पश्चाच्छीतस्य ह्रासाच्छरत्पदेन वर्षव्यपदेशः प्रचलितः।

वेदे नावां वर्णनात् जलबाहुल्यमपि तत्र परिकल्पनीयम्। अश्वरथादिवर्णनात् अश्वरथतदुपयोगिविस्तृतमार्गादिसत्त्वमपि तत्रासीत्।

सर्वाण्येतानि यत्र भवेयुस्तादृशो देश एशियाद्वीपस्य मध्यभाग एव भवति। हिन्दुकुशपर्वतस्य परस्तात् काश्पियनसमुद्रस्याधस्तात् पामीरपर्वतस्योपत्यकायां शीताधिक्यमपि भवति। गवाश्वादयः पशवोऽपि भवन्ति। इत एव शकादिजातयो निःसृत्य देशान्तरेष्वाक्रमणं कृतवत्यः। ततो भारतमीरानञ्च गन्तुं सौविध्यमप्यस्ति। ततो यूरोपस्थानमपि गन्तुं शक्यम्। तेन तदेव स्थानमार्य्याणां मूलस्थानमिति निर्णीतम्।

पारसीकाणां धर्मग्रन्थे बाह्लीकदेशे मानवसृष्टिरुक्ता। बाह्लीकदेशश्च इदानींतन बैक्ट्रियाप्रान्तो वक्षुनद्यास्तटीयः फरातनदीपर्यन्तं प्रततः प्रदेशः। सोऽपि मध्येशिया क्षेत्र एवापतति। पूर्वोक्तकल्पनायामेतदुक्तिरनुकूला भवति। परमवेस्तापेक्षयाऽपि वेदस्यातीव प्राचीनता सर्वसम्मता। अवेस्ताग्रन्थस्य तदनुयायिमतरीत्या मूलरूपं नष्टम्। ईरानस्य पहलवीभाषायामवेस्ताग्रन्थस्योल्लेखो नासीत्।

जेन्दभाषा तत्सदृशी सती तद्भिन्नैवासीत्। पारम्पर्येणेदं तत्र प्रचलितं

यन्मगजातीयैर्मगधर्मस्य संस्कृतरूपं प्रसारितम्। ईरानप्रदेशस्योत्तर-पश्चिमस्थमीडियाप्रदेशस्थास्ते आसन्।

इस्कन्दरूमी (सिकन्दर) इत्यस्याक्रमणसमये अवेस्ताग्रन्थस्य प्रतयो दग्धाः। पश्चात् येषां केषाञ्चिद्यावत्स्मरणमासीत् तावद् बहुभिः संयोज्य तस्य पुनरुल्लेखः कृतः। ततोऽनेकांशस्य परिलोपोऽपि जातः। वेदस्य तु सम्प्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वेनैवापौरुषेयत्वनित्यत्वादिकं प्रसिद्धम्। आनुश्रविकत्वेन गुरुमुखोच्चारणानूच्चारणादिभिः कण्ठस्थीकरणपारम्पर्यात् दाहादौ जातेऽपि न वेदविलोपः।

अत एव वाल्मीकीये– 'हृदयेष्वेव तिष्ठन्ति ये वेदा नः परं धनम्।' इत्युक्तम्। तत्र वेदे मध्येशिया क्षेत्रस्य संकेतो नोपलभ्यते। तत्र तु सप्तसिन्धूनां महिमा गीयते सिन्धुमारभ्य सरस्वतीं यावत् सप्तसिन्धुदेशः। तत्र कश्मीर-पञ्चनददेशः समापतति। कुभानद्या अपि चर्चा आयाति 'तेन काबुल अफगानिस्तान प्रदेशोऽप्यत्रैव सन्निविशते। "सर्वाहमस्मि रोमशा गन्धारीणामिवाविका" (ऋ॰ सं. १।१२६।७) सूक्तानुसारेण गन्धारदेशस्यापि चर्चा लभ्यते। लम्बमानोर्णावतीनां मेषोणां बालैः कम्बलादिनिर्माणमार्य्यैः क्रियते स्मेति संकेतो लभ्यते। अन्य देशस्य चर्चा नास्ति।

यद्यपि नैतावता तेषां तदज्ञानं ज्ञातुं शक्यते। सर्वतन्त्रसिद्धान्त-सिद्धस्यावर्णनेऽपि तत्सिद्धौ बाधाभावात्। क्वचित्पुस्तके उदरस्यावर्णनेऽपि कस्याश्चनानुदरीत्वोक्तावप्युदरराहित्यस्य वर्णयितुमशक्यत्वात्। यद्यपि 'भूतं भव्यं भविष्यञ्च सर्वं वेदात्प्रसिद्ध्यति। (म. स्मृ १२।९७) इतिरीत्या मन्त्रब्राह्मणात्मकैर्वेदैः सर्वमेव वस्तु केनचिद्रूपेण गम्यत एव, तथापि समुलब्धेषु वेदेषु यस्याः ऋक्संहितायाः सर्वप्राचीनता पाश्चात्यैरप्यभ्युपगम्यते तामाश्रित्य मूलस्थाने निर्णेतव्ये प्राधान्येन यस्य स्थानस्य वर्णनं तदपहाय यत्र क्वापि तदन्वेषणमनर्थकमेव। वेदेष्वार्य्याणां कुतश्चिद्बहिर्देशादागमनं न वर्णितं किन्तु मानवसृष्टिरपि भारत एव वर्णिता। मनोः सकाशान्मानवानामुत्पत्तिर्मानवशब्दव्युत्पत्त्यैव ज्ञायते। मनोश्च हिमालये ब्रह्मावर्त्ते च निवासो वेदे वेदव्याख्यानभूते पुराणादौ स्पष्टं ज्ञायते। तथा च नावेस्तागाथानुसारेण मध्येशियामूलस्थानमभ्युपगन्तुं युक्तम्।

किञ्च बाह्लीकदेशस्तु भारते समायाति, न मध्येशियास्थाने। तथाहि 'पञ्चानां सिन्धुषष्ठानां नदीनां येन्तरा स्थिताः। तान् धर्मबाह्यानशुचीन् वाल्हीकानपि वर्जयेत्॥' (म. भा. क. प. ४४।७)

किञ्च कुतस्तस्मात्स्थानादार्य्यास्ततो बहिर्गताः? महामारीप्रभृतिरोगाद्युपद्रवात्खाद्याद्यभावाद्वा। किमपि कारणं प्रामाणिकं नोपलभ्यते। जनसंख्यावृद्ध्या गमनेऽपि तत्रावशिष्टानां निवासोऽवश्यमवशिष्येत। आर्य्याणां यन्मूलस्थानं तत्सर्वथा आर्य्यशून्यं स्याद्यार्य्याणां मूलभाषा सा सर्वथा लुप्येतेति युक्तिशून्यमेतत्। तस्माद्भारतमेवार्य्याणां मूलस्थानं संस्कृतमेव च मूलभाषेति मन्तव्यम्।

संसारे सर्वप्राचीनो वेदग्रन्थस्तमनाश्रित्यार्य्यमूलस्थानसम्बन्धिनिर्णयो न कथमपि युज्यते।

वेदेषु सप्तसिन्धूनामिन्द्रस्तुतिप्रसङ्गेन वर्णनं दृश्यते। 'दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः। अपाम् बिलमपिहितं यदासीद् वृत्रं जघन्वाँ अपतद्ववार॥' ११॥ 'अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन्देव एकः। अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्तसिन्धून्॥ १२॥' (ऋ. १।३२)

दासो लोकस्योपक्षयकर्ता वृत्रः पतिर्यासां अपां ता दासपत्नीः। अतएव अहिर्वृत्रः गोपा रक्षको (अवरोद्धा) यासां ताः गोपनं स्वच्छन्देन यथा न प्रवहन्ति तथा रोधनम् आपः पणिना तन्नामकेनासुरेण या अपहृत्य बिले स्थापयित्वा बिलद्वारमाच्छाद्य गावो निरुद्धाः। अपां यद्बिलं प्रवहणद्वारम् अपिहितं वृत्रेण निरुद्धमासीत्। तद्बिलं प्रवहणद्वारं वृत्र जघन्वान् इन्द्रः अपववार अपवृत्तमकरोत्। वृत्रकृतमपां निरोधं परिहृतवान्। सृके वज्रे देवः दीप्यमानः सर्वायुधकुशलः एकः अद्वितीयो वृत्रः। यत् यदा त्वा त्वां प्रत्यहन् प्रतिकूलत्वेन प्रहृतवान् तत् तदानीं त्वं अश्व्यो वारः अश्वसम्बन्धी बालः अभवः। यथाश्वस्य वालः (पुच्छगतः) अनायासेन मक्षिकादीन्निवारयति तद्वत् वृत्रमगणयित्वा निराकृतवान्।

किञ्च गाः पणिनापहृताः त्वं अजयः जितवान्। हे शूर इन्द्र! सोमम्! अजयः जितवान्! सप्तसिन्धून् इमं मे गङ्गे यमुने इत्याद्याम्नाताः सप्त

संख्याका नदीः। सर्त्तवे सर्त्तुं प्रवाहरूपेण गन्तुं अवासृजः व्यक्तवान् वृत्रकृतं प्रवाहनिरोधं निराकृतवान्।

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥५॥
तृष्टामया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्या त्या।
त्वं सिन्धो कुभया गोमतीं क्रुमुं मेहत्न्वा सरथं याभिरीयसे ॥६॥

(ऋक् सं० १०।७५)

इत्यादि मन्त्रेषु, अवयवभूताभिरन्यनदीभिः सार्धं प्रधानभूताः सप्तनद्यः स्तुताः। हे गङ्गे! हे यमुने! हे सरस्वति! हे शुतुद्रि! (सतलज) हे परुष्णि (रावी) असिक्न्या (चिनाव) सहिते मरुद्वृधे। वितस्तया (झेलम) सुषोमया च सहिते। आर्जीकीये सिन्धो यूयं मे स्तोमं स्तोत्रम्। आसचत आसेवध्वम् शृणुहि शृणुत च।

'हे सिन्धो, त्वं, क्रुमुं क्रमणशीलां गोमतीं नदीं यातवे प्रयातुं पर्वतादवरूढा। प्रथमं तृष्टामया नद्या सजूः सङ्गतासि। पश्चात् सुसर्त्वा रसया श्वैत्या च त्या कुभया। मेहत्न्वा च सह सजूर्भव। याभिः त्वं सरथं समानं रथमारुह्य ईयसे गच्छसि, इत्याद्यनेकैर्मन्त्रैः सिन्धुस्तवनं दृश्यते।

चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् यज्ञं दधे सरस्वती।

(ऋ.सं. १।३।११)

सेयं सरस्वती यज्ञं दधे धारितवती। कीदृशी सूनृतानां प्रियाणां सत्यवाक्यानां चोदयित्री प्रेरयित्री। सुमतीनां शोभनबुद्धीनामनुष्ठातृणाम्। चेतन्ती तदीयमनुष्ठेयं ज्ञापयन्ती चोदयित्री वा।

'पावका नः सरस्वती, वाजेभिर्वाजिनीवती यज्ञं वष्टु धिया वसुः।

(ऋ. सं. १।३।१०)

सरस्वती देवी वाजेभिः हविर्लक्षणैरन्नैर्निमित्तभूतैः। यद्वा यजमानेभ्यो दातव्यैरन्नैर्निमित्तभूतैः। नः अस्मदीयं यज्ञं वष्टु कामयताम्। कामयित्वा च निर्वहत्वित्यर्थः। कीदृशी सा पावका शोधयित्री वाजिनीवती अन्नवत्क्रियावती धिया वसुः कर्मप्राप्यधननिमित्तभूता।

'वाग्वैधियावसु' रिति (ऐ० आ० १।१।४) श्रुतेः।

पूर्वोक्ताभ्यामृग्भ्यां विग्रहवद् देवता स्तुता, नदीरूपा चेदानीं स्तूयते ।

'महो अर्णः सरस्वती प्रचेतयति केतुना धियो विश्वा विराजति ॥१२॥

(ऋ. सं. १।३।१२)

तादृशी सरस्वती केतुना कर्मणा प्रवाहरूपेण । महो अर्णः प्रभूतमुदकम् । प्रचेतयति प्रकर्षेण ज्ञापयति । किञ्च स्वकीयेन देवतारूपेण विश्वाधियः सर्वाण्यनुष्ठातृप्रज्ञानानि विराजति विशेषेण दीपयति । अनुष्ठानविषया बुद्धीः सर्वदोत्पादयति ।

'तत्र सरस्वतीत्येतस्य नदीवद् देवतावच्च निगमा भवन्ति' (२।३२) इतिनिरुक्तवचनादुभयरूपता तस्या विज्ञायते ।

कैश्चिदुच्यते 'वैदिकमन्त्रद्रष्टृभिर्ऋषिभिः समुद्रो न दृष्टः' तत्तुच्छम्, 'सिञ्चन्तीरवनयः समुद्रम्' (ऋ. सं. ५।८५,६) इत्यादिषु समुद्रवर्णनदर्शनात् ।

'आयद्रुहाव वरुणश्च नावं प्रयत्समुद्रमीरयावमध्यम् ।(ऋ. सं. ७।८८-३)

अस्मिन् मन्त्रे वशिष्ठस्य वरुणेन सार्द्धं नावा समुद्रे गमनम् । तत्रानेकाभिर्नौभिः सह विहरणमुक्तम् ।

'तुग्रोहभुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः ।
तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः ॥३॥
तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतङ्गैः ।
समुद्रस्य धन्वन्नार्दस्य पारे त्रिभीरथैः शतपद्भिः षडश्वैः ॥४॥

(ऋ. सं १।११६)

इत्यादिमन्त्रेष्वपि स्तुतिप्रसङ्गे तुग्राख्यानं वर्णितम् ।

कश्चित्तुग्रो नामाश्विनोः प्रियो राजर्षिरासीत् । स च द्वीपान्तरवर्तिभिः शत्रुभिरुपद्रुतः सन् तेषां जयाय स्वपुत्रं भुज्युं सेनया सह नावा प्राहैषीत् । सा च नौः मध्ये समुद्रमतिदूरं गत्वा वायुवशेन भिन्ना आसीत् । तदानीं स भुज्युः शीघ्रमश्विनौ तुष्टाव । तौ स्तुतौ सेनया सहितमात्मीयासु नौषु आरोप्य पितुस्तुग्रस्य समीपं त्रिभिरहोरात्रैः प्रापयामासतुरित्युक्तम् ।

तथाहि—तुग्रः उदमेघे उदकैर्मिह्यते सिच्यते इत्युदमेघः समुद्रस्तस्मिन् समुद्रे भुज्युं प्रियं पुत्रं अवाहाः नावा गन्तुं पर्य्यत्याक्षीत्। तत्र दृष्टान्तः ममृवान् म्रियमाणः सन् धनलोभी कश्चिन्मनुष्यः रयिं न यथाधनं परित्यजति तद्वत्। हे अश्विनौ तञ्च भुग्युं मध्येसमुद्रं मग्नं नौभिः पितृसमीपम् ऊहथुः युवां प्रापितवन्तौ। कीदृशीभिः आत्मन्वतीभिः आत्मीयाभिः अन्तरिक्षप्रुद्भिः अतिस्वच्छत्वात् अन्तरिक्षे जलस्योपरिष्टादेव गन्त्रीभिः। अपोदकाभिः अप्रविष्टोदकाभिः।

हे नासत्यौ सेनया सह उदके निमग्नं भुज्युं। तिस्रः क्षपः त्रिसंख्याका रात्रीः। त्रिरहा त्रिवारमावृत्तान्यहानि च अति व्रजद्भिरतिक्रम्य गच्छद्भिरेतावत्कालं व्याप्य वर्त्तमानैः पतङ्गैः पतद्भिः त्रिभिः त्रिसंख्याकैः। रथैः ऊहथुः युवामूढवन्तौ। समुद्रस्य मध्ये धन्वनि जलवर्जिते प्रदेशे आर्द्रस्योदके नार्द्रीभूतस्य समुद्रस्य पारे तीरदेशे च। कथं भूतैः रथैः शतं पद्भिः शतसंख्याकैश्चक्रलक्षणैः पादैरुपेतैः। षड्भिरश्वैर्युक्तैः।

> अनारम्भणे तदवीरयेथा मनास्थाने अग्रभणे समुद्रे।
> यदश्विना ऊहथुर्भुज्युमात्तं शतारित्रां नावमातस्थिवांसम्॥
>
> (ऋ. सं. ११६।५)

हे अश्विनौ ! अनारम्भणे आलम्बनरहिते समुद्रे, तत्कर्म, अवीरयेथाम् विक्रान्तं कृतवन्तौ युवाम्। अनास्थाने भूप्रदेशरहिते स्थातुमशक्ये जले। अग्रभणे हस्तेन ग्राह्यं शाखादिकमपि यत्र नास्ति तस्मिन् समुद्रे मग्नं भुज्युं। शतारित्रां बह्वरित्रां, नावं आस्थिवांसमारूढं कृत्वा अस्तं गृहं प्रति यत् ऊहथुः, तत्प्रापणमन्यैर्दुशकं युवां समुद्रमध्ये कृतवन्तौ।

सहोवाच इन्द्रेण वा उक्तोऽस्मि एतच्चेदन्यस्मै अनु ब्रूयास्तत एव ते शिरश्छिन्द्यामिति तस्माद्वै बिभेमि यद्वै स शिरोच्छिन्द्यात् तद्वामुपनेष्य इति (वृ. उ. २।५।१६ शां भा०)

अत्र समुद्रमहाजलपोतशतचक्रोपेतषडश्ववाह्यरथादिवर्णनदर्शनात् 'आर्य्या अर्धवन्या आसन्नि' त्यादि कल्पना मौर्ख्यविजृम्भणमात्रम्। एवमेव शतद्वारे पीडायन्त्रगृहे प्रवेश्य तुषाग्निनोत्पीड्यमानमत्रिमश्विनौ हिमेनाग्निमुपशमय्य तस्मात् अविकलेन्द्रियवर्गं सन्तं निरगमयताम्।

तद्वां नरा सनयेदंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम्।
दध्यङ् ह्यन् मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्रपदीमुवाच ।।

(ऋ. सं. १।११६।१२)

इन्द्रो दधीचः सकाशात् प्रवर्ग्यविद्यां मधुविद्याञ्च गृहीत्वा यदि इमां अन्यस्मै वक्ष्यसि शिरस्ते छेत्स्यामीत्युवाच। ततोऽश्विनौ अश्वस्य शिरश्छित्वा दधीचः शिरः प्रच्छिद्यान्यत्र निधाय तत्र अश्व्यं शिरः प्रत्यधत्ताम्। तेन दध्यङ् ऋचः सामानि यजूंषि च प्रवर्ग्यविषयाणि मधुविद्याप्रतिपादकब्राह्मणं चाश्विनावध्यापयामास। तदिन्द्रो ज्ञात्वा वज्रेण तच्छिरोऽच्छिनत्। अथाश्विनौ तस्य स्वकीयं मानुषं शिरः प्रत्यधत्तामिति। तदेतत् शाट्यायन-वाजसनेययोः प्रपञ्चेनोक्तम्। तदेवोच्यते, हे नरौ! वां युवयोः सम्बन्धि, उग्रमन्यैः दुःशकम। दंसः कर्म, युवाभ्यां पुराकृतं तत् कर्म सनये धनलाभार्थम्। आविष्कृणोमि, तत्र दृष्टान्तः तन्यतुः न यथा मेघस्थः शब्दः वृष्टिं मेघान्तर्वर्तमानमुदकं प्रवर्षणेन सर्वत्र प्रकटयति तद्वत्। किं तत्कर्मेत्याह-अथर्वणः पुत्रो दध्यङ् संज्ञः ऋषिः अश्वस्य शीर्ष्णा युस्मत्सामर्थ्येन प्रतिष्ठितेन शिरसा। वां युवाभ्याम् ईं इमां मधुविद्याम्। यत् हयदा खलु, प्र उवाच, तदानीमाश्वस्य शिरसः संधानलक्षणं पुनर्मानुषस्य शिरसः प्रतिसंधानलक्षणञ्च यत् भवदीयं कर्म तत् आविष्कृणोमि। पूर्वं शिरश्छित्वा शिरोऽन्तरयोजनेन कार्यसम्पादनं तस्मिंश्छिन्ने पुनः पूर्वशिरः प्रतिसंधानं किमद्यापि वैज्ञानिकैः कर्त्तुं शिक्षितम्? तादृग्विज्ञानं येषामासीत्ते किमर्धवन्या भवितुमर्हन्ति? षोडशे मन्त्रे नेत्रहीनस्य नेत्रदानमुक्तम्। (ऋ. सं. १।११७।२) मन्त्र मनसो जवीयान् रथो वर्णितः।

'रायः समुद्रांश्चतुरोऽस्मभ्यं सोमविश्वतः, आपवस्य सहस्त्रिणः।' (ऋ. सं. ९।३३।६) अत्र समुद्रचतुष्टयस्य वर्णनम्।

ध्रुवा एव वः पितरो युगे युगे क्षेमकामासः सदसो न युञ्जते।
अजुर्यासो हरिषाचो हरिद्रव आद्यां रवेण पृथिवीमशुश्रवुः ।।

(ऋ. सं. १०।९४।१२)

अत्र सोमाभिषवसाधनीभूतानां ग्राव्णां स्तुतिः। हे ग्रावणः युगे युगे सर्वेषु युगेषु। ध्रुवा निश्चला एव युष्माकं पितरः पर्वताः क्षेमकामासः

क्षेमकामाः सदसः सदांसि। आत्मना न युञ्जते न संयोजयन्ति। अनुर्यासः जरारहिताः। हरिषाचः सोमस्य संभक्तारः। हरिद्रवः सोमसंसर्गाद्धरित-वर्णाः। द्यां पृथिवीञ्च रवेण अभिषवशब्देन अशुश्रवुः श्रावयन्ति।

इन्द्रस्तवप्रसङ्गे—

यः पृथिवीं व्यथमानामदृंहद्यः पर्वतान् प्रकुपिताँ अरम्णात्।

यो अन्तरिक्षं विममे वरीयो योद्यामस्तभ्नात् स जनास इन्द्रः॥

(ऋ. सं. २।१२।२)

हे जना य इन्द्रः व्यथमानां चलन्तीं पृथिवीं अदृंहत् शर्करादिभिर्दृढा-मकरोत्, यश्च प्रकुपितान् इतस्ततश्चलितान् पक्षयक्तान पर्वतान् अरम्णात् नियमितवान् स्वे स्वे स्थाने स्थापितवान्। यश्च वरीयः उरुतमम् अन्तरिक्षं विममे विस्तीर्णं चकारेत्यर्थः। यश्च द्यां दिवञ्च अस्तभ्नात् तस्तम्भ निरु-द्धामकरोत् स इन्द्रः नाहमिति गृत्समद ऋषिरसुरान् ब्रूते।

'यो हत्वा हि मरिणात् सप्तसिन्धून्योगा उदाजदपधा बलस्य। यो अश्मनोऽन्तरग्निं जजान संवृक् समत्सु स जनास इन्द्रः। (ऋ.सं. २।१२।३)

यः अहिं मेघं हत्वा सप्तसर्पणशीलान् सिन्धून् स्यन्दनशीला अपः अरिणात् प्रैरयत्। यद्वा सप्त गङ्गा यमुनाद्या मुख्या नदीररिणात् स्राव-यामास। बलस्य तन्नामकस्यासुरस्य अपधा तत्कर्तृकान्निरोधान्निरुद्धाः गाः उदाजत् निरगमयत्। यश्च अश्मनोर्मेघयोरन्तः मध्ये वैद्युतमग्निं जजान उत्पादयासास। यश्च समत्सु संग्रामेषु संवृक् घातको भवति स इन्द्रः।

'येनेमा विश्वाच्यवना कृतानि ( ऋ. सं. २।१९४ )

यस्या श्वासः प्रदिशि यस्य गावो (ऋ. सं.२।१२।७)

प्रदिशि आदेश सर्वं अश्वा गावो ग्रामा रथाः। यश्च सूर्यं उषस च। जजान स अपां नेता इन्द्रः।

'यं क्रन्दसी संयती विह्वयेते परेऽवर उभया अमित्राः। समानं चिद्रथ मातस्थिवांसा नानाहवेते स जनास इन्द्रः॥' ( ऋ.सं. २।१२।८ )

यं क्रन्दसी रोदसी शब्दं कुर्वाणे मानुषी दैवी च द्वे सेने वा संयती परस्परं संगच्छन्त्यौ यमिन्द्र विह्वयेते स्वरक्षार्थं विविधमाह्वयतः परे

उत्कृष्टाः, अवरे अधमाश्च उभयविधा अमित्राः यम् आह्वयन्ति। समानमिन्द्रं रथसदृशम्। रथम् आतस्थिवांसा आस्थितौ द्वौ रथिनौ तमेवेन्द्रम्। नाना पृथक् पृथक् हवेते आह्वयेते। यद्वा समानरथारूढाविन्द्राग्नी यज्ञार्थं यजमानैः पृथक् पृथक् आहूयेते तयोरन्यतरः स इन्द्रः।

सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ( ऋ. सं. १०।१९० ) मन्त्रेणानेककल्पीयसृष्टिप्रक्रिया स्पष्टं वर्णिता नासदीयसूक्ते इत्युक्तमेव।

'सत्य ज्ञानमनन्तं ब्रह्म' 'यो वेद निहितं गुहायाम्' इत्युक्तसत्यज्ञानानन्तरूपाद् ब्रह्मणः आकाशादिप्रपञ्चोत्पत्तिरुक्ता। 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथ्वी पृथिव्या ओषधयः ओषधिभ्योऽन्नम्' (तै० उ० २।१।१) 'असद्वा इदमग्र आसीत्' (तै० उ० २।७) यथाग्नेर्ज्वलतः क्षुद्राः विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणा इत्यादिभिः श्रौतैर्वाक्यैः सत्यज्ञानादिलक्षणः परमेश्वरः महदादिक्रमेणाकाशादीनि भूतानि सृष्ट्वाऽपञ्चीकृतपञ्चमहाभूतमयं बुद्धिप्राणप्रधानं समष्टिसूक्ष्मशरीरं तदभिमानिनं हिरण्यगर्भञ्च सृष्टवान्। पश्चात्तद्वारैव पञ्चीकृतभूतमयं ब्रह्माण्डं तदभिमानिनं महाविराजञ्चोत्पादितवान्। विराड्भावापन्नात्तस्मात्परमात्मन एव वेदाः ब्राह्मणादयो वर्णाः, गवादयः पशवश्चोत्पन्ना इति वर्णितम्।

> 'तस्माद्यज्ञात् सर्वहुत ऋचः सामानि यज्ञिरे।
> तस्मादश्वा अजायन्त ये के चोभयादतः।
> गावो ह यज्ञिरे तस्मात्तस्माज्जाता अजावयः'॥

इत्यादि मन्त्रवर्णेभ्यः। पुराणानि तु वेदानां भाष्यभूतान्येव। तत्रत्येन 'ब्रह्मावर्त्तं योऽधिवसन् शास्ति सप्तार्णवां महीम्' 'श्रीमद्भागवते ३।२१।२५ ) इतिवचनेन ब्रह्मावर्तएवार्याणां मूलस्थानं सिद्ध्यति।

आधुनिकैः जेन्दावेस्ता ग्रन्थस्यापि प्राचीनता अङ्गीक्रियते जेन्दभाषायाः ऋग्वेदभाषयाऽपेक्षाकृततुल्यता चाङ्गीक्रियते, तदनुयायिन ईरानीयाः पारसीकाः आर्य्या एवासन् बहुभिरंशैर्हिन्दूधर्मेण तद्धर्मतुल्यता तस्य वेन्दिदादस्य द्वितीये फर्गर्दे जरथुस्त्र-अहुरमज्दयोः संवादेनेदमुक्तम्। विवनह्वत पुत्राय यिमाय ( विवस्वत्पुत्राय यमाय ) प्रथमं धर्मोपदेशो दत्तः। बहोः-

कालादनन्तरं तस्मै यिमाय अहुर्मज्देनोक्तमत्र भीषणशीतहिमपातादिना शीघ्रमेव सर्वनाशो भविष्यति। त्वया त्वेकं वाटं निर्माय सर्वप्राणिनामेकैकं स्त्रीपुंसयुगलमादाय तत्र स्थातव्यम्। तेन तथा कृतम्। तत्र वाटे चन्द्रसूर्य्यनक्षत्राणि प्रतिवर्षमेकवारमेवोद्यन्ति। सकृदेवास्तं यन्ति। प्रति चत्वारिंशद्वर्षानन्तरं तत्रत्यानां स्त्रीपुरुषयमजाः सन्ततय उत्पद्यन्ते। तां कथामाश्रित्य लोकमान्यतिलकः आर्य्याणां निवासस्थानं ध्रुवप्रदेश आसीदिति साधयति।

यद्यपि यत्र वाटे वर्षमयं दिनं भवति स यिमस्य प्रथममूलस्थानाद्भिन्नं गम्यते। तत्र च स्वाभाविकं शीताधिक्यं नोक्तम्। मूलस्थाने दीर्घदिनस्य चर्चा नास्ति। यद्यपि प्रति सार्द्धदशसहस्राब्दं तत्र भीषणहिमपातेन सर्वविप्लवो जायते, तथापि हिमाच्छादनद्वयस्य मध्यकाले तत्र वसन्तसदृशः समयो भवति। तत्र दक्षिणभागे सप्तमासानौष्ण्याव्याप्तिः, पञ्चमासान् शैत्यं भवति। तदानीमेवोत्तरभागे माससप्तकं शैत्यकालः मासपञ्चकश्चौष्ण्यकालो भवति। आङ्ग्रमन्युकृतोत्पातेन हिमपाताधिक्यात् मासदशकं शैत्यं, मासद्वयमौष्ण्यं भवति। यद्यपि वाटस्थानं क्वासीदिति नोक्तं मूले तथापि हिमपातभयादपसरणात्ततोऽन्यत्रैव तेन भवितव्यम्।

लोकमान्यस्याशयस्त्वेवं भाति यत्तत्रैव क्वचिद्वाटोप्यासीत्। परं वाटनिर्माणमात्रात्कथं तादृक् हिमपातोपद्रववारणमिति दुर्वचमेव। तत्र प्रकाशः कथं भवतीति जरथुस्त्रप्रश्नेनापि बीजस्थानाद्भिन्नमेव तत्स्थानं भाति। अत एवान्यरीत्या ईरानस्य सविध एव क्वचिद्बीजस्थानमासीत्। तत्र हिमपातसूचनात्ततो ध्रुवदेशगमनमनया कथया ज्ञायते। तेन तत्रैव वाटोऽपि स्यात्। ततोपि हिमपातोपद्रवादागत्य पुनः ईराने न्यूषुरिति कल्पयितुं शक्यते। तेन ध्रुवप्रदेशस्य मूलस्थानत्वं 'ऐर्यन वेइजो' न सिद्ध्यति।

किञ्च पूर्वोक्तरीत्या अवेस्ताग्रन्थस्य मूलरूपमन्यदासीत्। सिकन्दरस्याक्रमणकाले तस्य दग्धत्वात् कण्ठस्थाः केचिदेवांशाः पुनः पुस्तकरूपेण संकलिताः। तेन बहूनामंशानां लोपसंभवात् वाटस्य सम्बन्धेऽधिकं ज्ञानं न संभवति। परं बीजस्थाने वर्षोपमदिनस्य वर्णनं नास्ति। बीजस्थाने जर-

थस्त्रो गतवान् । तेन तत्र वर्षोपमं दिनं नानुभूतम् ।

किञ्च शतपथब्राह्मणे तथा श्रीमद्भागवतादिपुराणेषु मत्स्यावतार-कथाप्रसङ्गे खण्डप्रलयवर्णनं दृश्यते । जलप्लावनेन पृथिवीस्थसर्वप्राणि-नामोषधिवनस्पत्यादीनां विप्लवो जातः । मत्स्यावतारवता विष्णुना मनुः सुरक्षितः । सच पृथिवीरूपायां नावि सर्वभूतानां सर्ववनस्पत्यादीनां वीजानि निधाय ताञ्च मत्स्यशृङ्गे निबद्धय स्वयं सप्तर्षिभिः सार्धं तत्र स्थितः मत्स्य-रूपाद् भगद्वत आध्यात्मिकीं कथां शृण्वन् कालं निनाय । मिश्र-यूनान वैव-लिनामेरिकादिप्रदेशेष्वपीयं कथा प्रख्याता । वाइविलानुसारेण परमेश्व-रेण 'हजरत नूह' नामकाय महापुरुषाय पूर्वमेव तत्सूचितम् । तेन च महान्तं जलपोतं निर्माय तत्रैव सर्वप्राणिनामेकैकं युगलानि निधाय चत्वारिंशदहो-रात्राणि सर्वविप्लवकारिण्यां महावृष्टौ परिभ्रान्तमितस्ततः । तदानीं पृथिवीसमुद्राकाशानामेकरूपतैव जाता । जलमयमेव सर्वं जातम् । महा-वर्षोपरमे अरारतपर्वतस्य शिखरे नूहजलपोतस्यावरोधो जातः । सुरक्षि-तेभ्यो युगलेभ्यो पुनः सृष्टिर्जाता । पारसीकाणां भीषणहिमपातकथा-पि प्रोक्तैव ।

यद्यपि ऋग्वेदेऽस्य संकेतो नोपलभ्यते तथापि शतपथे पुराणेषु च जलौघेन सर्वप्रजानाशः उक्तः । 'औघ इमाः सर्वाः प्रजा निर्वोढा ततस्त्वा-पारयितास्मीति' ( श.ब्रा. काण्ड १ अध्याय ८ ब्राह्मण२ ) लघुमत्स्यरूप-धारिणा सूर्य्यार्घ्यप्रसङ्गेनाञ्जलिगतेन हरिणा सर्वनाशके भाविनि जलप्ला-वने त्वां रक्षिष्यामीत्युक्तम् । समागते तस्मिन्नोघे नावि यावदादेयमादा-यारूढो मनुः महामत्स्यभूतस्य तस्यैव भगवतः शृङ्गे नावमाबद्धय स्थितः । सच नावमादायोत्तरगिरिं जगाम । 'तेनैतमुत्तरं गिरिमतिदुद्राव' (श.ब्रा.-का. १ अध्याया० ८ ब्रा. ५ ) तत्रैव मनोरवसर्पणस्थानम् । तत्र 'मनुरे-वैकः परिशिशिषे, (श.ब्रा.का. १ अध्याय ८ ब्रा. ६) तत्रैव किञ्चित्का-लान्तरमुत्पन्नया श्रद्धानाम्न्या पत्न्या सह मनुः प्रजाः ससर्ज ।

शतपथे प्रथमकाण्डे अष्टमाध्याये । ऋग्वेदे तस्याः संकेताभावात् कैश्चित्ततः प्राक् ऋक्संहिताया निर्माणमभिप्रेयते । तच्च न युक्तं सर्वस्यैव मन्त्रब्राह्मणात्मकस्य वेदस्य नित्यत्वेन तदनुपपत्तेः । 'शब्द इति चेन्नातः

प्रभवात् प्रत्यक्षानुमानाभ्या' मिति ब्रह्मसूत्रे वेदशब्देभ्य एव विश्वसृष्टि-निर्णीता। नहि सर्वं वस्त्वेकत्रैव सन्निवेशनीयम्, ग्रन्थान्तरस्य वैयर्थ्यापत्तेः। नहि वेदान् पर्य्यनुयोक्तु' प्रभवामः, तदनुसारमर्थन्तु ज्ञातु' प्रभवामः।

तिलकरीत्या शतपथकथाया अवेस्ताकथायाश्चैक्यमेव। हिमार्थस्य प्रालेयशब्दस्य प्रलयशब्दप्रकृतिकत्वेन शतपथकथाया अपि हिमपातवर्णने तात्पर्य्यम् मन्तव्यम्।

अन्यैस्तु तन्नाद्रियते। हिमपाते जलपोतानुपयोगात्। श्रौतार्थबाधे हेत्वभावाच्च। ध्रुवप्रदेशादुत्तरदिशि कश्चिद्गिरिर्नास्त्येव,यस्य शृङ्गे नौबन्धनमुक्तं श्लिष्येत्। तेन न कथात्रयस्यैक्यम्, भिन्नकालिकानां भिन्नरूपाणां तासां भिन्नत्वमेव। न च ताभिरार्य्याणां ध्रुवप्रदेशो मूलस्थानमिति सिद्धयति।

ऐतिहासिकदृष्ट्यापि वन्येभ्योऽर्द्धवन्येभ्यश्च वैदिका आर्य्या भिन्ना एव। नगरेषु ग्रामेषु तेषामावासो दृश्यते। ऋग्वेदे मनुष्याणां वन्यावस्था न वर्णिता। नग्ना अर्द्धनग्नाः पाषाणायुधा अस्थ्यायुधाश्च असंस्कृता आमपक्वपशुमत्स्यमांसादिभक्षणपरायणा अग्निज्ञानशून्या मानवा वेदेषु न सन्त्येव। वैदिका आर्य्यास्तु कृषिव्यापारादिनिष्ठाः परिमार्जित-कर्मोपासनादिविधयः सुसम्पन्नसामाजिकव्यवस्थाना धातुविज्ञान-सम्पन्नाः, कौशेयकम्बलशालकार्पासादिनिर्माणकुशलाः। शतचक्ररथशता-रित्रजलपोतादिप्रयोगकुशलाः, ऋग्वेदीयपद्यप्रायसुसंस्कृतभाषापटवः। तेषां कुतश्चनागमनं वेदेषु न श्रूयते। नवा स्मृतीतिहासपुराणादिषु स्मर्यते।

अवेस्तानुसारेण काचिदार्य्याणां शाखा सप्तसिन्धुभ्यः पृथग्भूत्वा ऐर्य्यन् वेइगो स्थाने कञ्चित्कालं स्थित्वा परिस्थितिवशात् ध्रुवप्रदेशं गत्वा तत्रोवास। एतावदेव कथञ्चित् सिद्धयति। अवेस्तानिर्दिष्टेषु षोडशप्रदेशेषु सप्तसिन्धुप्रदेशस्यापि चर्चास्त्येव।

वेदेषु तादृशी स्पष्टचर्चा न दृश्यते। येन वैदिकार्य्याणां काचित्तादृशी यात्रा सिद्धयति, यत आर्य्याणामन्यत आगमनं सिद्धयेत्।

तिलकप्रभृतीनां गणनारीत्या उत्तरीध्रुवप्रदेशाद्धिमापसरणकालो दशसहस्रवर्षेभ्योऽप्यतिप्राचीनः। तदानीमेवार्य्याणां सभ्यता पूर्णविकास-

मुपगतासीत्। परमाश्चर्य्यमिदं यत्तेषामेव शाखा यूरोपं गता चेत्तदा तस्याः कथं न तादृग्विकासो जातः? यतस्तदानीं ते नग्ना असभ्याः सर्वथा वन्या एवासन्।

किञ्च सप्तसिन्धुमागतानां वैदिकानाम् उत्तरध्रुवप्रदेशीयः चिरवसन्तकालः कथं विस्मृतः? कथं न वेदे तदुल्लेखः? षण्मासा उत्तरायणम्, षण्मासा दक्षिणायनम् देवानामहोरात्रं भवति। 'द्वादशमासाः संवत्सरः, षड्ऋतवः 'त्रयोदशमासाः संवत्सरः, अधिकमासोऽपि भवति। तेन सौरचान्द्रमाससामञ्जस्यं सम्पद्यते। एवमनेकधा कालसंख्यानेऽपि उत्तरध्रुवप्रदेशीयचिरवसन्तकालवर्णनं वेदे न दृश्यते।

मेरोर्मेषादिचक्रार्धे देवाः पश्यन्ति भास्करम्।
सकृदेवोदितं तद्वत् असुराश्च तुलादिगम्।

मेष संक्रमणाच्चक्रार्धं यावन्मेरोरुत्तरीयध्रुवे स्थितं देवा भास्करं पश्यन्ति। तुलादिगं दक्षिणध्रुवस्थितमसुराः पश्यन्ति। तथा च देवानां षण्मासं दिनं षण्मासं नक्तं भवतीति-

षट्षष्टिभागाभ्यधिकाः पलांशा।
यत्राथ तत्रास्त्यपरो विशेषः॥६॥
लम्बाधिका क्रान्तिरुदक् च यावत्तावद्दिनं संततमेव तत्र।
यावच्च याम्या सततं तमिस्रा ततश्च मेरौ सततं समार्धम्॥७॥

सिद्धान्तशिरोमणौ गोलाध्याये त्रिप्रश्नाधिकारे उक्तम्।

'दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः।
अहस्तत्रोदगयनम् रात्रिः स्याद्दक्षिणायनम्॥

वैदिकार्य्याणामग्निहोत्रादिकर्माणि कालसापेक्षाणि। तेनैव तिथि-मास-संवत्सरपर्य्यन्तमेव समाप्यते तेषां कालगणना।

किन्तु कर्मणामारम्भात्प्राक् क्रियमाणे संकल्पे द्विपरार्घायुषो ब्रह्मणः सृष्टिमारभ्येदानीं यावत् कालस्मरणं प्रत्यहं क्रियते। द्वादशमासैर्मानवो वर्षो भवति। ४३२००० वर्षैः कलिः। ८६४००० वर्षैः द्वापरः। १२९६००० वर्षैस्त्रेता। १७२८००० वर्षैः कृतम्। एवं ४३२०००० वर्षैरेकं महायुगम्। सहस्रमहायुगैर्ब्रह्मण एकं दिनम्। तदेव कल्पपदेन व्यपदिश्यते। तावत्येव रात्रिः।

'सहस्रयुगपर्य्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्ते तेऽहोरात्रविदो जनाः॥' गीतोक्तेः ।

एकस्मिन्कल्पे चतुर्दशमन्वन्तराणि भवन्ति । एवं ४३२०००००० द्वात्रिंशकोट्युत्तरचतुरर्बदमानववर्षैः ब्रह्मणो दिनम् । रात्रिरपि तावत्येव । १५५५२०००००००० मानववर्षैर्ब्रह्मणः वर्षः । शतवर्षीयस्य द्विपरार्धायुषो ब्रह्मणः पञ्चाशद्वर्षाणि व्यतीतानि । तानि च ७७७६००००००००००० मानववर्षैः । ब्रह्मणो दिनान्तेऽपि भूर्भुवःस्वरिति लोकत्रयस्य नाशो भवति । रात्र्यन्ते पुनरुत्पत्तिर्भवति । अयं कालः ब्रह्मणो द्वितीयपरार्द्धस्य वाराहाख्यः प्रथमः कल्पः ।

तत्र षण्मन्वन्तराणि व्यतीतानि । सप्तमे मन्वन्तरे अष्टविंशतितमः कलिः किञ्चिदधिक एकसप्ततिमहायुगकालः एकमन्वन्तरकालो भवति । तदर्थमेव साधिकेति पदम् ।

'स्वं स्वं कालं मनुर्भुङ्क्ते साधिकां ह्येकसप्ततिम्'

तेन १९५५८८५०६ मानववर्षाणि कल्पगताब्दाः । वर्तमानकलेश्च ५०६७ गताब्दाः । शतब्रह्मकालैर्विष्णोरेका घटिका । षष्टिघटिकाभिस्तदहोरात्रम् । द्वादशलक्षविष्णुकालैः रुद्रस्येककला कालः । ४५० निमेषैरेका कला । रुद्रार्बुदैः ब्रह्माक्षरं भवेत् । तदेतदुच्यते पञ्चाङ्गेषु

'चतुर्युगसहस्रेण ब्रह्मणो दिनमच्यते ।
निजेनैव तु मानेनाःयुर्वर्षशतं स्मृतम् ।
पितामहसहस्रेण रुद्रस्य घटिकाः स्मृताः ।
विष्णोर्द्वादशलक्षाणि कलार्द्धं रौद्रमुच्यते ।
रुद्रस्यार्बुदसंख्याभिस्ततो ब्रह्माक्षरं भवेत् ।'

यद्यपि वेदानामनादित्वात् सर्वकालो वैदिकः कालस्तथापि कल्पादौ भूर्भुवः स्वर्लोकसृष्ट्यनन्तरमेव पृथिव्यां तत्सम्प्रदायप्रवृत्त्या वर्तमानकल्पगताब्दकालो वैदिकः काल इत्येव वक्तुं शक्यम् । महाभारते वनपर्वणि ततोऽपि स्पष्टतरं १६२-१६४ अध्याये मेरोर्वर्णनमर्जुनयात्राप्रसङ्गे उक्तम् ।

'एवं त्वहरहः मेरुं सूर्य्याचन्द्रमसौ ध्रुवम् ।
प्रदक्षिणमुपावृत्त्य कुरुतः कुरुनन्दन ।'

ज्योतींषि चाप्यशेषेण सर्वाण्यनघ सर्वतः ।
परियान्ति महाराज गिरिराजं प्रदक्षिणम् ॥'

(म.१.प.१६३।२७।२८)

'स्वतेजसा तस्य नगोत्तमस्य महौषधीनां च तथा प्रभावात् ।
विभक्तभावो न बभूव कश्चिदहोनिशानां पुरुषप्रवीर ॥८॥
'बभूव रात्रिर्दिवसश्च तेषां संवत्सरेणैव समानरूपः' ॥१३॥

(म.भा.व.प.१६४)

यदुक्तम् 'मेरौ पञ्चसहस्रवर्षेभ्यः प्राक्कालादेव हिमाच्छादनं विद्यते । तस्मात्तत्रोषधीनां सत्त्वासंभवात् पर्वतशिखराद्यभावाच्च कल्पनामात्रमेतन्न वस्तुभूतवर्णन' मिति तन्न, दिव्यौषधीनां हिमाच्छादनेऽपि प्रकाशे बाधाभावात् । उत्तरध्रुवप्रदेशस्यैव मेरुत्वेन तस्यैव नगोत्तमत्वाद्युपपत्तेः । अनेक ऋङ्मन्त्रास्तिलकेनोद्ध्रियन्ते तत्र ध्रुवप्रदेशवर्णनप्रदर्शनाय ।

अन्यैस्तु ततोऽन्यत्रापि तादृग्दृश्यं संभवतीति तत्प्रतिक्षिप्यते । यदि ध्रुववर्णनं भवेदपि तथापि यत्रार्याणां निवासस्तदेव स्थानं तेषां मूलस्थानमिति तु न सिद्ध्यति । कुरुक्षेत्रगङ्गासिन्ध्वादिवर्णनं तत्र यज्ञानुष्ठानादिकं तु तत्रावस्थानं सूचयति । तत्रान्यत आगमनन्तु नोच्यते । तेन भारतमेवार्य्याणां मूलस्थानं ज्ञायते । तेन उत्तरध्रुववर्णनेऽपि तन्मूलस्थानमिति न निश्चेतुं शक्यते । तेन—

'अमी ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुहचिद्दिवेयुः ।
अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥'

(ऋ.सं.१।२४।१०)

अमी सप्तर्षिरूपाः उच्चा उच्चैः द्युप्रदेशे निहितासः स्थापिता नक्तं दिवा कुहचिद् गच्छन्ति वरुणस्य अबाधितैः संकल्पैः चन्द्रमा नक्तं दृश्यते ।

तिलकमहाशयस्य दृष्ट्या उच्चानि इति शिरःस्थानि ज्ञेयानि । तथाविधा च नक्षत्राणां स्थितिर्ध्रुवप्रदेश एव भवति ।

अन्ये तु तन्न रोचयन्ते । उच्चा उच्चैः स्थिता इत्येवार्थः । तथाविधावस्थितिः सप्तसिन्ध्वादिप्रदेशेऽपि भवत्येव । भूमध्यरेखाया दक्षिण एव ऋक्षाण्यदृश्यानि भवन्ति । तत उत्तरस्यां दिशि तु क्रमेणोच्चस्थान्येव दृश्यन्ते ।

एवमेव 'द्वे स्रुती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम्' ( ऋ.सं. १०।८८।१५ ) इत्यादि मन्त्रेषु देवयान-पितृयानशब्दैस्तिलकमते-नोत्तरध्रुवप्रदेशस्य रात्र्यहनी प्रोच्येते। 'वसन्तो ग्रीष्मो वर्षाः ते देवा ऋतवः शरद्धेमन्तः शिशिरस्ते पितरो य एवापूर्य्यन्तेऽर्धमासः स देवा योऽपक्षीयते स पितरोऽहरेव देवा रात्रिः पितरः पुनरह्नः पूर्वाह्णो देवा अपराह्णः पितरः।'

अत्र वसन्तग्रीष्मवर्षा देवऋतवः, शरद्धेमन्तशिशिराः पितृऋतवः, शुक्लपक्षो देवपक्षः। कृष्णपक्षः पितृपक्षः। दिनं देवाः। रात्रिःपितरः। पूर्वाह्णो देवाः अपराह्णःपितरः इत्याद्युक्तैर्ब्राह्मणवचनैश्च ध्रुवदेशस्थाहोरात्रसूचना मन्यन्ते तेन।

अन्यैस्तु तदपि नाद्रियते। पूर्वाह्णापराह्णाहोरात्रादिवत् दक्षिणायनोत्तरायणयोरपि देवपितृत्वोक्त्यापि ध्रुवप्रदेशस्थाहोरात्रवर्णनसत्त्वे प्रमाणाभावात्।

'एकं वा एतद्देवानामहः यत्संवत्सर' इति तैत्तरीयब्राह्मणवचनमपि तादृगर्थबोधकमेव।

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः।
धूमो रात्रिस्तथा कृष्णःषण्मासा दक्षिणायनम्।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते।

इत्यादिष्वपि दक्षिणायनोत्तरायणचर्चाविद्यते। यद्यपि ब्रह्मविदामुक्तौ देशकालापेक्षा नास्ति, तत्त्वज्ञानस्याव्यभिचरितमुक्तिफलत्वात्, देहपातस्य च प्रारब्धाधीनत्वेनानियतकालत्वात्, तथापि कर्मिणामुपासकानाञ्च कर्मोपासनफलप्राप्तये मार्गसाधनापेक्षासंभवः। तत्रापि नहि दक्षिणायनादिमरणमात्रेण पितृलोकादिप्राप्तिः संभवति। कर्मोपासनहीनानामप्युत्तरायणमरणसंभवात्। तद्वतामप्यन्यत्र मरणदर्शनाच्च कर्मोपासनादिफलमपि नियतमेव मरणत्वनियतमित्युक्तमेव। तस्मात्तत्र तत्तत्कालाभिमानिन्यो देवता एवातिवाहिकत्वेन विवक्ष्यन्ते। ता एव फलप्राप्तये तन्निष्ठान् देशविशेषान् प्रापयन्ति। ताश्च दक्षिणायानाद्यभिमानिन्यो देवताः कर्मनिष्ठानुत्त-

रायणे मृतानपि पितृलोकमेव प्रापयन्ति। उत्तरायणाभिमानिन्यस्तु दक्षिणायनादिकालेऽपि मृतान् देवलोकमेव नयन्त्युपासकान्। तदेव ब्रह्मसूत्रस्य चतुर्थाध्यायस्य द्वितीयपादीयसूत्रेषु स्पष्टम्। रश्म्यनुसारी १८ सूत्रे 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' (छा० ८।१।१) इत्युपक्रम्य सप्रपञ्चं नाडीरश्मिसम्बन्धमुक्त्वा—'अथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' (छा.८।६।५) 'तयोर्ध्वमायन्नमृतत्वमेति' (छा.८।६।६) शताधिकया नाड्या निष्क्रामन् रश्मम्यनुसारी निष्क्रामतीत्युक्तम्। तत्र किमहनि रात्रौ वा म्रियमाणस्याविशेषेणैव रश्म्यनुसारित्वमाहोस्विदहन्येवेति संशयेऽविशेषश्रवणादविशेषेणैव रश्म्यनुसारीत्याशङ्क्य पूर्वपक्षिणा अहनि नाडीरश्मिसम्बन्धसत्त्वात् विशेषो रात्रौ तु मृतस्य नाडीरश्मिसम्बन्धविच्छेदादित्युक्तम्।

सिद्धांते तु—तत्प्रतिक्षिप्तम्। नाडीरश्मिसम्बन्धस्य यावद्देहभावित्वोक्तेः।

तथाहि—'अमुष्मादादित्यात् प्रतापयन्ते, ता आसु नाडीसु सृप्ता भवन्ति। आभ्यो नाडीभ्यः प्रतापयन्ते तेऽमुष्मिन्नादित्ये सृप्ताः' (छा.६।६।२) इति श्रुत्या यावद्देहभावी नाडीरश्मिसम्बन्धः प्रतीयते। निदाघे रात्रावपि किरणानुवृत्तिश्च दृश्यते। स्तोकानुवृत्तिस्तु ऋत्वन्तररात्रिष्वपि शैशिरेषु दुर्दिनेष्वपि। न चैतद्विशिष्योक्तं दिवारश्म्यनुसारेणोर्ध्वमाक्रमते रात्रौ तदनपेक्ष्यैव। न च रात्रिप्रायणापराधमात्रेण नोर्ध्वमाक्रामेत्, विद्यायाः पाक्षिकफलत्वापत्त्याऽनाश्वासप्रसङ्गात्। न चाहरागमनप्रतीक्षा युक्ता, 'यावदाक्षिप्येन्मनस्तावदादित्यं गच्छति' (छा० ८।६।५) इति श्रुतेरनुदीक्षादर्शनात्।

तस्मादविशेषेणैव रात्रिंदिवं रश्म्यनुसारित्वम्। निशि नेति चेन्न, संबंधस्य यावद्देहभावित्वात् दर्शयति च, १६। अत एव दक्षिणायने म्रियमाणो विद्वान् प्राप्नोत्येव विद्याफलम्, उदीक्षानुपपत्तेः, अपाक्षिकफलत्वाच्च, विद्यायाः अनियतकालत्वाच्च मृत्योः। उत्तरायणमरणस्य प्राशस्त्यप्रसिद्धे भीष्मस्य तत्प्रतीक्षा प्राशस्त्यप्रसिद्धिश्च विद्वद्विषया। भीष्मस्य तु पितृप्रसादलब्धस्वच्छन्दमृत्युता ख्यापनार्था प्रतीक्षा। 'अतिवाहिकस्तल्लिङ्गात् (ब्र० सु० ४।३।४) इतिसूत्रेण आतिवाहिका देवता एव।

आपूर्य्यमाणपक्षाद्यान् षडुदङ्ङेति मासान् (६)०६।१५।५ अग्न्यहःशु-क्लपक्षोत्तरायणादिशब्दैः श्रुतिस्मृतिषूक्ताः, न लोकप्रसिद्धा एव अग्न्यादयः। सर्वथाऽपि देवानामहोरात्रवर्णनेऽपि तैर्ध्रुवप्रदेशवर्णनं न शोभते। एवमेव ऋक्संहितायामुषसो वर्णनप्रसङ्गो ज्ञेयः. उत्तरायणदक्षिणायनभेदस्य सर्वत्र प्रसिद्धत्वात्। कैश्चिद् बहुवचनप्रयोगेण च दीर्घकालिकस्योषसोनुमानं क्रियते। तादृगुषःकालो मोहको दीर्घश्च ध्रुवप्रदेशीय एव। तदप्यन्यैर्नानु-मन्यते विषुवद्रेखाया अन्यत्र सर्वत्रैव प्रभातस्य मोहकत्वदर्शनात्

वेदे तु उषःकालस्याश्विकालत्वेनाश्विनोः प्रशंसनप्रसङ्गे तद्विशेषप्रशंसोप-पत्तेश्च। तयोःकाल ऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानुविष्टम्भम् यावत्। 'अचेतिकेतुरुषसः पुरस्ताच्छ्रये दिवो दुहितुर्जायमानः (ऋ. सं. ७।६७।२) वचनेन च अर्धरात्रादूर्ध्वमन्धकारनिरसनप्रथमप्रकाशविततिकालउषःकालः। तत्र गवामयनाख्ये यज्ञे उषःकाले होत्राऽश्विनशास्त्रं पठनीयम्। तत्र सहस्रम-न्त्रा पठनीया भवन्ति, नतु भारतदेशस्थे उषसि तच्छक्यम्। अत्रोषःकालस्या-ल्पत्वात् तस्माद्ध्रुवप्रदेशस्थ उषस्येव तच्छक्यम्। तेनार्य्याणां तत्र निवासः कल्प्यते। आश्वलायनसूत्रे (६।५।८) सहस्रपाठेऽपि सूर्योदये विलम्बश्चेत्तदपि मन्त्रानपरानपि शंसेदेव। आपस्तम्बे तु 'सर्वा अपि दाशतयीरनुब्रूयात्' इत्युक्तम्। सर्वमेतद्ध्रुवप्रदेशीये प्रलम्बमान उषःकाल एवोपपद्यते।

तदप्यन्येनाभ्युपगच्छन्ति। अर्धरात्रादूर्ध्वकालमारभ्य सूर्योदयकालं यावदुषःकालाभ्युपगमे तदुपपत्तेः। ध्रुवप्रदेशीयस्तु मासपरिमित उषःकालो भवति। सहस्रमन्त्रपाठेन संहितापाठेन वा तत्कालस्य समापयितुमशक्य-त्वात्। अतोऽयं यदि सहस्रमन्त्रपाठेऽपि सूर्योदयो न भवेत्तदान्यान् मन्त्रान् शंसेरितकथनं व्यर्थमेव स्यात्। तस्मान्नानेन दीर्घोषःकालवर्णनं संगच्छते।

एवमुषसे स्वाहा व्युष्ट्यै स्वाहोदेष्यते स्वहोद्यते स्वाहोदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहेत्युषसः सप्तविभागवर्णनेनापि दीर्घप्रभातस्य सत्त्वमनुमीयते। तदपि निःसारम्। उक्तवचनैः उषसःसप्तभेदासिद्धेः। नहि सुवर्गो लोकश्च उषसो भेदौ। एवमुदेष्यदुदितशब्दैरपि नोषस उल्लेखस्तयोः सूर्य्यपरत्वोपपत्तेः। एवमेव 'शश्वत् पुरोषा व्यवासदेव्यथो अद्येदं व्यावो मघोनी अथेव्युच्छादुत्तरां अनुघूनजरामृता चरति स्वधाभिः (ऋ. सं. १।

११३।१३) इति मन्त्रे शश्वत् प्रकाशत्वेनाजरामरत्वेन चोषसो दीर्घकालिकत्ववर्णनमपि कुशकाशावलम्बनमेव। प्रतिदिनमवश्यम्भावित्वेनैवोषसः शाश्वतत्वाद्युपपत्तेः। एवमेव 'कियात्या यत्समया भवाति या व्यूषुर्याश्च नूनं व्युच्छान्। अनु पूर्वा कृपते वावशाना प्रदीध्याना जोषमन्याभिरेति ॥ (ऋ. सं. १।११३।१०)

कियात्या उषाः समया समीपस्था भवाति यत् तदेतत् कियति काले प्रवृत्तं परिसमाप्तं वा इति आकारः प्रश्नार्थः। उषा येन कालेन संयुक्ता स कालः कियान् किं परिमाणं तस्येत्यर्थः। अनेनोषस आनन्त्यमुक्तम्। पुरा या उषसः व्यूषुः सञ्जाता नूनमितः परं याश्च उषसः व्युच्छन् व्युच्छन्ति व्युष्टा भविष्यन्ति। तत्र पूर्वाः अतीताः वावशाना कामयमाना इदानीं वर्तमाना उषाः अनुकृपते अनुकल्पते समर्था भवति। अतीता यथा प्रकाशमकुर्वन् तद्वदेषापि प्रकाशं करोति प्रदीध्याना प्रकर्षेण दीप्यमाना उषा अन्याभिः आगामिनीभिः उषोभिः जोषं सह एति संगच्छते आगामिन्योऽप्येतादृशं प्रकाशमनुकुर्वन्ति।

तिलकादिरीत्या अत्र प्रलम्बमानप्रभातो वर्णितः। उषसोऽनन्तरमुषा आयाति तेन लम्बमानप्रभा तेनोद्विग्नानामियमुक्तिः। तच्चायुक्तम्। सर्वानुभवसिद्धप्रभातस्यैव प्रश्नविषयत्वोपपत्तौ लम्बमानप्रभातकल्पनानुपपत्तेः। अत्र तु कियन्तं कालमारभ्योषसः प्रवृत्तिरासीत् कियन्तं कालं यावदुषसो भविष्यन्तीत्युक्त्या यथा रात्रेः पूर्वं दिनम् परस्ताच्चाहोरात्रानन्तरमहोरात्रान्तरं भविष्यति तथैवोषसः पूर्वमप्युषास्ततः 'पूर्वमप्युषा' आसीदेवं परस्तादपि तेनानन्त्यमेव बोध्यते।

'क्षत्राय त्वं श्रवसे त्वं महीया इष्टये त्वमर्थमिव त्वमित्यै विसदृशा जीविताभिप्रचक्ष उषा अजीगर्भुवनानि विश्वा' (ऋ. सं. १।११३।६) इति मन्त्रे उषाः विश्वानि भूतानि तमसा निगीर्णानि प्रकाशेनोद्गीर्णानीवाकरोत् प्रसुप्तान् प्राणिनः प्रबोधयति। कीदृशी सा त्वं एकं प्रति क्षत्राय धनाय, एकं प्रति श्रवसे अन्नाय, एकं प्रति महीयै महत्यै अग्निष्टोमादियज्ञार्थम्, त्वमेकं प्रति अपेक्षितार्थप्राप्तये विसदृशानि जीवनोपायभूतानि कृषिवाणिज्यादीनि आभिमुख्येन प्रकाशयितुं व्युच्छन्ती रात्रौ निद्रानिगीर्णान् जनान् उषाः

स्वस्य प्रकाशेन प्रबोधयति, नहि लम्बमानप्रभातस्थलीयैषोक्तिः संभवति। यत्र मासचतुष्टयस्य रात्रिर्भवति, मासस्य सन्ध्या मासस्य, प्रातर्भवति। तत्रोषसा प्रबोधो न युज्यते। मासचतुष्टयरात्रिव्यापिन्या निद्राया असंभवात्। तेन नोषसा तत्कार्यंकरणार्थं प्राणिप्रबोधनं संभवति।

एवमेव 'तानीदहानि बहुलान्यासन्या प्राचीनमुदिता सूर्य्यस्य यतः परिजार इवाचरन्त्युषो ददृक्षे न पुनर्यतीव' (ऋ.सं. ७।७६।३)

तिलकरीत्या मन्त्रार्थस्तु—हे उषः बहूनि अहानि आसन् सूर्य्योदयात् प्राक् यैर्युक्ता उषस आसन् तैः सह त्वं सूर्यं प्रति जारे पत्याविव त्वं दृश्यसे न पुनर्यतीव पतिं परित्यज्येतस्ततः चरन्ती व्यभिचारिणीव। एवं सूर्य्योदयात्प्रागनेन दिनव्यापिप्रभातकालः सिद्धयति। उषसोऽनेकदिनसंसर्गदर्शनात्।

परं सायणरीत्या अहानि इत्यस्य तेजांसि अर्थस्तानीत् तान्येव तव बहुलानि बहून्यहानि तेजांसि आसन्। उषः प्रकाशयुक्तस्य कालस्याहःशब्दव्यवहारात्। यानि सूर्य्यस्य उदिताः उदितौ उदये सति प्राचीनं तस्य प्राग्देशमुदयन्ति। यद्वा सूर्य्यस्य प्राचीने देशे यानि उदितानि तानि हे उषः यत् यैः तेजोभिः परिददृशे दृश्यसे त्वम् जार इव पत्याविव चरन्ती समीपे सञ्चरन्ती साध्वी नारीव रात्रेर्जरयितरि जारे सूर्य्ये सञ्चरन्ती त्वं दृश्यसे न यतीव व्यभिचारिणीव।

अन्ये तु तत 'प्राक्तने केतुरुषसः पुरस्तात् प्रतीच्यागादधि हर्म्येभ्यः' (ऋ. सं. ७।७६।२) इति मन्त्रे पुरस्तात् पूर्वस्यां दिशि उषसः केतुः प्रज्ञापकं तेजः अभूत् अत्रेति ज्ञायते। सोषाश्च प्रतीची प्रत्यगञ्चनादस्मदभिमुखी हर्म्येभ्य उन्नतप्रदेशेभ्य आगात् आगच्छति। यद्ययमुषः कालो ध्रुवप्रदेशस्थो भवेत्तदा तस्योदयो न पूर्वस्यां भवितुमर्हति किन्तु दक्षिणस्यामेव दिशि। तेन नात्र लम्बमानप्रभातवर्णनं, साधारणप्रभातस्यैव वर्णनसंभवात्।

एवमेव 'अव्युष्टा इन्नु भूयसीरुषासः (ऋ. सं. २।२८।९) इत्यादि मन्त्रेष्वपि अव्युष्टा इत्यनेन न लम्बप्रभातसूचनं किन्तु भाविजीवनसम्बन्धिनीनामुषसामेवाव्युष्टता असमाप्ततोच्यतेः। एवमेव यत् उषस इति बहुवचनप्रयोगेणापि लम्बप्रभातवर्णनं कल्प्यते तदपि न, क्वचिदादरार्थं बहुवचनं,

क्वचित्तत्सम्बन्धिदेवतादिसूचनार्थं, क्वचिच्च बहुदिनसम्बन्धित्वेन बहुवचनं युज्यते।

एवमेव तैत्तरीयसंहितायाश्चतुर्थकाण्डे तृतीयप्रपाठके एकादशानुवाके व्युष्टिसंज्ञकानामिष्टकानां सम्बन्धिषु मन्त्रेषु 'इयमेव सा या प्रथमा व्यौच्छदन्तरस्यां चरति प्रविष्टा वधूर्जजान नवगञ्जनित्री त्रय एनां महिमानः सचन्ते' ॥१॥

सेयमेवोषाया पूर्वं द्योतते या चास्यां प्रविष्टा क्षितिजे उपोन्तरेषु वा प्रविष्टा नवागतवधूरिव जनित्रीव च जायते। अग्निवायुसूर्य्यास्त्रयो वा अग्नय एनां सचन्ते अनुगच्छन्ति। गायत्र्यादिछन्दोयुक्ते शृङ्गारिते एकस्मिन्नेव गृहे अजरे सूर्य्यस्य पत्न्यौ रेतः पूर्णे केतुं दर्शयन्त्यौ विजानन्त्यौ चलतः।

'छन्दस्वती उषसा पेपिशाने समानं योनिमनुसञ्चरन्ती। सूर्य्यपत्नी विचरतः केतुं कृण्वाने अजरे भूरि रेतसा' ॥२॥

पेपिशाने समानं योनिमनुसञ्चरन्ती ऋतस्य पन्थामनुतिस्र आगुस्त्रयो घर्मासो अनुज्योतिषागुः। प्रजामेकां रक्षत्यूर्जमेका व्रतमेका रक्षति देवयूनाम्' ॥३॥

तिस्रः कुमार्य्यः ऋतस्य पन्थानमागच्छन्ति त्रयो घर्मास्ता अनुगच्छन्ति। एका प्रजां रक्षति, एका ऊर्जमेका व्रतं रक्षति चतुष्टोमोऽनवद्या तुरीया यज्ञस्य पक्षा वृषयो भवन्ती। गायत्रीं त्रिष्टुभं जगतीमनुष्टुभं बृहदर्कं युञ्जानाः सुवरामरन्निदम् ॥४॥

पञ्चभिर्धाता विदधाविदं यत्तासां स्वसृरजनयत् पञ्च पञ्च। तासामुयन्ति प्रयवेण पञ्च नानारूपाणि ऋतवो वसानाः ॥५॥

त्रिंशत् स्वसार उपयन्ति निष्कृतं समानं केतुं प्रतिमुञ्चमानाः। ऋतूँस्तन्वते कवयः प्रजानतीर्मध्ये छन्दसः परियन्ति भास्वतीः ॥६॥

ऋतस्य गर्भः प्रथमा व्यूषुष्यपामेका महिमानं बिभर्त्ति। सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका सवितैकां नियच्छति ॥१३॥

ऋतूनां पत्नी प्रथमेयमागा दह्नां नेत्री जनित्री प्रजानाम्। एका सती बहुधोषो व्युच्छस्य जीर्णा त्वं जरयसि सर्वमन्यत् ॥१५॥

न वा इदं दिवा न नक्तमासीदव्यावृत्तं ते देवा एताव्युष्टीरपश्यन्ता

उपादधत्, ततो वां इदं व्यौच्छद्यस्यैता उपधीयन्ते व्येवास्मा उच्छत्यथो तम एवापहते ( तै. सं. का. ५ प्र. ३ अनु ४ वर्ग ७ )

तदव्यावृत्तं न दिनं न नक्तं देवै व्युष्टयो इष्टकाः विकसिताः प्रभाताश्च दृष्टा ता उपादधत् तत उषाः प्रकाशमागता। तेन यस्मै इमा इष्टका उपधीयन्ते तस्मै उषा द्योतते अन्धकारमपनयति। एतैरपि मन्त्रैः ध्रुव-प्रदेशीयदीर्घप्रभातवर्णनं मन्यन्ते। परं वस्तुतोऽत्राग्निचयनप्रसङ्गे व्युष्टिसञ्ज्ञिकानामिष्टकानामेव प्रशंसनम्। तास्वेवोषसामभेदारोपेण तासां स्तवनम्।

'इन्द्राग्नी अपादियं पूर्वागात्पद्वतीभ्यः हित्वी शिरो जिह्वया वावदच्चरत् त्रिंशत्पदान्यक्रमीत्।' (ऋ. सं. ६।५९।६)

हे इन्द्राग्नी अपात् पादरहितेयमुषाः पद्वतीभ्यः पादयुक्ताभ्यः सुप्ताभ्यः प्रजाभ्यः पूर्वा प्रथमभाविनी सती आगात् आगच्छति। प्राणिनां शिरः हित्वी प्रेरयित्री।

यद्वा शिरो हित्वा स्वयमशिरस्का सती जिह्वया प्राणिस्थया तदीयेन वागिन्द्रियेण वावदत् भृशं शब्दं कुर्वती चरत चरन्ती उषा त्रिंशत्पदानि अवयवभूतान् त्रिंशन्मूहूर्तान् न्यक्रमीदेकेन दिवसेनातिक्रामति। एतच्च युवयोः कर्म को जानीयात्।

तिलकरीत्या ध्रुवप्रदेशीया ऋषयः इमान् मन्त्रान् दृष्टवन्तः। त्रिंशद्दिवसीयप्रभातकालस्य तत्रत्यस्यैवात्र संकेतः। त्रिंशत्स्वसार उषसस्तत्रत्या एव तत्रैव तासां भ्रमणमुक्तम्।

सायणरीत्या मासस्य त्रिंशत्संख्याका उषसोऽत्र वर्णिताः। उषसो यज्ञ सम्बन्धित्वेन तत्र पठनीयमन्त्रसम्बन्धाच्च छन्दोवत्त्वं तासां सम्पद्यते। द्वादशमासानन्तरं सूर्यपृथिव्योः पुनस्तत्रैवागमनादुषसां परिभ्राम्य तत्रैवागमनमपि युक्तमेव, उषसां सूर्यपत्नीत्वात्, ऋतुसर्जयितृत्वात्, ऋतुपत्नीत्वाच्च, न केवलं मासस्यैव। किन्तु संवत्सरीयसूर्यानुगामिनीत्वात् संवत्सरेणापि सम्बन्धः। मासेनैव ऋतुसम्बन्ध इति त्रिंशत्संख्यासम्बन्धो युज्यत एव। चैत्रमासप्रतिपदमारभ्य ऋतुषु भ्राम्यतीनामुषसां पुनश्चैत्रप्रतिपदि तत्रैवागमनं भवति। प्रतीच्यभिमुखीनामुषसां पुरस्तादुदयः पूर्वमुक्तः। स च ध्रुवप्रदेशे न संभवति। 'ऊर्ध्वा तिष्ठसि' (ऋ. ३।६१।३) उषस ऊर्ध्वाकाशस्थात्व-

मुक्तम्। तेन परियन्ति इत्यनेन ध्रुवप्रदेशीयक्षितिज उषसां परिभ्रमणं भवतीति कल्पनं न युक्तम्।

'सदृशीरद्यसदृशी ( ऋ. १।१२३-८ ) मन्त्रे उषसामद्यश्वश्च सादृश्यमुक्तम्। न च ध्रुवप्रदेशे तत्संभवति। तत्र प्रतिदिनं प्रकाशोत्कर्षतारतम्येन त्रिंशत्तमे दिवसे प्रकाशबाहुल्येन तत्समाप्तिः।

तथाहि 'सदृशीरद्यसदृशीरिदुश्वो दीर्घं सचन्ते वरुणस्य धाम। अनवद्यास्त्रिंशतं योजनान्येकैका क्रतुं परियन्ति सद्यः (ऋ.सं.१।१२३।८) अद्य सदृशीः परस्परं सदृश्य तथाश्वः परस्मिन्नन्यहनि सदृशीः परस्परं सदृश्य एव उ अप्यर्थः इत् एवार्थकः अद्यतन्योऽपि श्वस्तनीभिः सदृश्यः श्वस्तन्यश्च अद्यतनीभिः। एवमहरन्तरेण सादृश्यम्। यदा नक्षत्राणि न दृश्यन्ते सूर्यश्च नोदेति स उषः कालः। स चैकविंशतिघटिकाभिः षड्विंशतिपराभिश्च संमितः। सूर्यो हि प्रतिदिनं एकोनषष्ट्यधिकपञ्चसहस्रयोजनानि मेरुं प्रादक्षिण्येन परिभ्रमति। तथासति यत्र यत्र लङ्कादिभूप्रदेशे सूर्यो गच्छति तस्य तस्य पुरस्तात् त्रिंशत्योजनं उषाः अपि गच्छति। सूर्यो यत्र देशे याति तत्र त्रिंशद्योजनं पुरस्ताद्देशस्थितानामुदितो दृश्यते। एवं सर्वत्र। तथा उषाः अपि यत्र गच्छति ततः पुरस्तात् त्रिंशद्योजनभूभागवर्तिनामुदिता दृश्यते। एवं लङ्कादिसर्वप्रदेशस्थितानामप्युषसः उदयोऽवगन्तव्यः। एवञ्च एकस्मिन् भूभागे यावत्कालं यथोषाः प्रकाशयति। एवमेकस्मिन्नेव दिवसे सर्वप्रदेशवर्तिनामप्युषसः सदृश्यः।

किञ्च आसां मध्ये एकैका प्रत्येकं उषसा लङ्काद्येकैकभूभागवर्तिनां क्रतुं गमनागमनादिकं तद्विषयां वा प्रज्ञां सद्यः इदानीमेव स्वोदयकाले परियन्ति निर्वहन्ति। ज्योतिःशास्त्रे सूर्योदयकालभेद उक्तः।

उदयो यो लङ्कायां सोऽस्तमयः सवितुरेव सिद्धपुरे।

मध्याह्नो यवकोट्यां रोमकविषयेऽर्धरात्रः स्यात्॥ (आर्य ४।३)

'समानमर्थं चरणीयमाना चक्रमिव नव्यस्या ववृत्स्व'। (ऋ.सं. ३।६१।३ मन्त्रे चक्रमिवोषसो भ्रमणमुक्तम्। नव्यसिपदेन प्रत्युदयं नूतनता जायते।

तिलकरीत्या तु ध्रुवप्रदेशीयाया उषसः प्रलम्बमानाया एकत्वेऽपि प्रतिदिनदृष्ट्या नव्यसीत्वोपपत्तिः। सूर्यस्य पुरस्तादुषसो गमनं भवति। स एव

सर्वासां समानो भागः। परं तिलकरीत्या ध्रुवप्रदेशीयाया उषसः क्षितिजे परिभ्रमणम्। चक्रपदेन रथचक्रः कुलालचक्रश्च गृह्यते। तीलकरीत्या रथचक्रवदुषसोभ्रमणादर्शनात् क्षितिजे कुलालचक्रवदेव भ्रमणं युक्तम्। भवेदेतदेव यदि ऊर्ध्वा तिष्ठसीतिवचनेन तस्या ऊर्ध्वदेशस्थत्वोक्तिर्न स्यात्। तेन नात्र ध्रुवप्रदेशीयाया उषसो वर्णनम्, तस्या ऊर्ध्वत्वानुपपत्तेः। अत एव न कुलालचक्रवद् भ्रमणम् किन्तु 'ववृत्याद्रथ्येव चक्रा' (ऋ.सं.१०।८९।२) मन्त्रे सूर्य्येण तारकाणां रथचक्रवद् भ्रमणमुक्तम्। तारकाणामिव सूर्य्यस्यापि भ्रमणम्। तद्वदेव तत्पुरोगामिन्या उषसोऽपि रथचक्रवदेव भ्रमणं युक्तम्। सूर्य्यस्य भ्रमणमिव तत्पुरस्था उषसोऽपि भ्रमणं प्रत्यक्षमेव।

यद्यपि उषा अपात्तथापि इन्द्राग्नि कृपया त्रिंशत्पदानि अक्रमीत्। अहोरात्रव्यापि त्रिंशन्मुहूर्तं. चलति त्रिंशतं योजनान्यकैका क्रतुं परियन्ति (ऋ. सं. १।१२३।८)

अत्र सायणरीत्या मेरुपरिक्रमणे सूर्य्यः ५०५९ योजनानि प्रतिदिनं चलति उषा ततः त्रिंशद्योजनानि पुरस्ताच्चलति। यत्र सूर्य्योदयस्तत्र तत्र पूर्वमुषा दृश्यते। स्थानभेदाभिप्रायेणोषसामिति बहुवचनम्।

प्रदेशबाहुल्यमपेक्ष्य उषसां बहुत्वात् बहुवचनम्। एवमेकरूपा उषस अनवद्याः शुद्धाः तासामुदयात् सर्वे भावा अनवद्याः भवन्ति। किमु वक्तव्यं तासामनवद्यत्वे? दीर्घमुक्तरीत्या अत्यन्तमायतं वरुणस्य तमोनिवारकस्य कियद्दूरमिति तदुच्यते। त्रिंशत्योजनानि प्रातः सूर्यस्य धाम स्थानम्। मेरुवलये सचन्ते सदा सेवन्ते। कियद्दूरमिति तदुच्यते त्रिंशतं योजनानि पुरतः सूर्य्यो यत्र यत्रोदेति ततः त्रिंशद्योजनं पुरस्तादुद्यन्ति।

एवमेव 'मानो दीर्घा अभिनशत्तमिस्राः' (ऋ.सं. २।२७।१४) इति मन्त्रे दीर्घाभ्यस्तमिस्राभ्य उद्वेगो दृश्यते। ता ध्रुवप्रदेशीया एवेति मन्यन्ते। तदपि न, शिशिररात्रीणां कृतेऽपि तादृक् प्रयोगसंभवात्। 'तमसो मा ज्योतिर्गमये'तिवदन्धकारनिवारणे विदुषां स्वाभाविकप्रवृत्तिदर्शनेन तथोद्वेगस्य युक्तत्वात्।

यदुक्तमारण्यका अपि जानन्ति कतिचित्प्रहरानन्तरं रात्र्यपगमोऽवश्यंभावीति कुत उद्वेगावसर इति तन्न, ध्रुवप्रदेशीयानामपि तादृग् ज्ञानस्या-

वश्यं भावित्वेन पर्य्यनुयोगतुल्यत्वात् ।

सर्वे प्रसुप्ताः सपादा गवाश्वादयः पक्षिणः शीघ्रगामिनः श्येनाः शेरते वृकचौरादोनपसारयेति स्थितेर्ध्रुवप्रदेशीयरात्रिष्वसंभवात् । नहि सर्वे तत्र षण्मासान् शेरते । तस्मादत्र साधारणरात्रीणामेव वर्णनप्रसङ्गेन राज्यधिष्ठात्र्याः परदेवताया एव वर्णनम् ।

एवमेव 'रात्रिर्वै चित्रवसुरव्युष्ट्यैवा एतस्यै पुरा ब्राह्मणा अभैषुः' (तै. सं. १।५।७।५) इत्यत्रापि न ध्रुवप्रदेशीयदीर्घरात्रिनिमित्तकभयवर्णनम् । सायणरीत्या हेमन्तर्तौ रात्रेर्दीर्घत्वेन प्रभातं न भविष्यत्येवेति कदाचिद् ब्राह्मणा भीताः ।

वस्तुतस्तु यथा साधारणरात्रेर्भयं न युज्यते तथैव ध्रुवप्रदेशीयाया अपि, उभयोरप्यन्तस्यावश्यंभावित्वज्ञानात् । ब्राह्मणा एव कुतो भीता इति विचारे तु ब्राह्मणानां यज्ञादिकर्मनिष्ठत्वेन तदर्थमेव तेषां जागरूकतया कर्मलोपभयात् तेषां भयसंभवात् ।

एवमेव चतुर्विंशतिघण्टामयोऽहोरात्रोऽन्यः द्वादशमासाहोरात्रोऽन्य इति नानाविधाहोरात्रवर्णनम् । 'नाना चक्राते यम्या वपूंषि तयोरन्यद्रोचते कृष्णमन्यत् । श्यावी च यदरुषी च स्वसारौ महद्देवानामसुरात्वमेकम् ।' (ऋ. सं. ३।५५।११) इति मन्त्रे दृश्यत इत्यपि निर्मूलम् । मन्त्रे तादृगर्थस्याप्रतिपादनात् । एवं 'उषा सा नक्ता' (ऋक्सं. ४।५५।३) पदस्यापि अहोरात्रमेवार्थो न विलक्षणाहोरात्रम्, मानाभावात् ।

एवमेव 'वि सूर्य्यो मध्ये अमुचद्रथं दिवो विदद्दासाय प्रतिमानमार्य्यः । दृढ्हानि पिप्रोरसुरस्य मायिन इन्द्रो व्यास्यच्चकृवाँ ऋजिश्वना ।' (ऋ.सं १०।१३८।३) इत्यत्र सूर्य्यो दिवो मध्ये रथममुञ्चत् । आर्य्यो दासाया प्रतिमानं विदत् पिप्रोर्मायिनोऽसुरस्य दृढ़ानि दुर्गाणि ऋजिश्वना सह भेदयामास ।

अत्र तिलकरीत्या दिवो मध्ये रथमुक्त्या दीर्घषण्मासमितं दिनं जातम् । परं सायणरीत्या अश्वप्रग्रहशिथिलीकरणमेव रथमोकः, ध्रुवप्रदेशेऽपि सूर्य्यस्य गतिमत्त्वे नात्यन्तरथमोकासम्भवात् ।

यत्तु 'भिनद्वलमङ्गिरोभिर्गृणानो वि पर्वतस्य दृंहितान्यैरत् । रिणग्रो-

धांसि कृत्रिमाण्येषां सोमस्य ता मद इन्द्रश्चकार ॥' ( ऋ. सं. २।१५।८ )

अंगिरोभिर्गृणानः स्तूयमान इन्द्रः। बले तन्नामकमसुरं भिनत् अभिनत्। तथा गवां निरोधकस्य पर्वतस्य दृंहितानि शिलाभिर्दृढीकृतानि द्वाराणि वि ऐरत् उद्घाटितवान्। एषा पर्वतानां कृत्रिमाणि क्रियया निर्वृतानि रोधांसि रुद्धानि द्वाराणि रिणक् उद्घाटयत्।

'अहन् वृत्तमृचीषमं और्णवाभमहीशुवम्। हिमेनाविध्यदर्बुदम्' ॥ (ऋ.सं. ८।३२।२६) ऋचा दीप्त्या समः इन्द्रः वृत्रं शत्रुं अहन् जघान। तथा और्णवाभ तन्नामकम् अहीशवञ्च शत्रुमहन्। तथा हिमेन तुषारेणोदकेन वा अर्वुदं मेघमविध्यत्।

'यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत्। ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः ॥ (ऋ. सं २।१२।११) यः पर्वतेषु क्षियन्तमिन्द्रभिया बहून् संवत्सरान् प्रच्छन्नो भूत्वा पर्वतगुहासु निवसन्तं शम्बरं तन्नामकं मायिनमसुरं चत्वारिंश्यां शरदि वर्षे अन्वविन्दत् लब्ध्वा च यः ओजायमानं वलमाचरन्तं अहिं आहन्तारं दानुं दानवं शयानं शम्बरमसुरं जघान स इन्द्रः नाहम्। इत्यादिमन्त्रेषु नैरुक्तपद्धत्या पर्वतस्य मेघ एवार्थः। तथा च मेघेषु चत्वारिंशद्वर्षाणि शम्बरो गुप्तः आसीत्। परं तावत्कालं मेघस्थितिस्तु न संभाव्यते।

तिलकरीत्या तु भारतीया यूरोपियनाश्च विद्वांसः ध्रुवप्रदेश आर्य्याणां निवास आसीदिति न ज्ञातवन्तस्तेनैव यास्कप्रभृतयो निरुक्तकारा अपि तन्न जानन्तिस्म। ध्रुवप्रदेशीयदृश्या एव इन्द्रवृत्रादिकथा विषयः। तज्ज्ञानेनैव मन्त्रार्थज्ञानं संम्भवति। ध्रुवप्रदेशीया अन्धकारा बहुमासव्यापिनो भवन्ति। तस्य वधेन उषसः सूर्यस्य प्रकाशस्य च मुक्तयो भवन्ति। इदञ्च दृश्यमद्यापि दृश्यते। दीर्घाया ध्रुवनिशाया अन्ते सत्येवोषसो व्यक्तिः। तत्रैव हिमेनार्बुदवधोऽपि संभवति। तत्र बृहत्यां शीततमिस्रायामनेकमासव्यापिन्यां तुषारपातो भवति। तत्रैव हिमेनार्बुदस्य वधः संभवति। शम्बरस्य चत्वारिंश्यां शरदृतोश्चत्वरिंश्यां शरदि चत्वारिंशत्तमे दिने प्राप्तिः संगच्छते। वर्षारम्भो वसन्तकालादेव। वर्षे षड् ऋतवः। शरच्चतुर्थी। तथा च वर्षारम्भात् सप्तमासदशदिनानन्तरं मिलितः। तदानीं दिनान्तेऽन्धकार-

व्याप्तिः षण्मासमयं दिनं तत्रैव भवति । जलानां मुक्तिसम्बन्धेऽपि तिलक-दृष्ट्या न भौतिकजलोल्लेखः, किन्तु भूगोलस्य चतुर्दिक्षु सूक्ष्मजलकण-मण्डलस्योल्लेखः । तेनैत्र सूर्य्यादिगतयो भवन्ति । वृत्रशम्बरादिभिस्तस्यैवा-वरोधः । तद्गत्यवरोधेन सूर्य्यादिगतिरोधः । सूर्य्यस्य न बहून् मासान् यावद् दर्शनं तदानीं भवति । इन्द्रेण वृत्रे हते तादृग् जलगतौ प्रवृत्तायां सूर्य्योदयो भवति स्म । एतत्सम्बन्धे अवेस्तादिग्रन्थे प्रमाणमुपलभ्यते ।

वेदेऽपि 'या आपो दिव्या उत वा स्रवन्ति खनित्रिमा उत वा याः स्वय-ञ्जाः । समुद्रार्था याः शुचयः पावकास्ताः आपो देवीरिह मामवन्तु ॥' ( ऋ. सं. ७।४९।२ )

अत्र दिव्या आपोऽन्यजलेभ्यो भिन्नत्वेन निर्दिष्टाः 'गर्भं प्रथमं दध्र आपः' (ऋ. सं. १०।८२।५) नदीनां प्रवाहाः सप्तसिन्धूनां प्रवाहाश्चोन्मुक्ता इत्याद्यु-क्तिरपि तादृक् सूक्ष्मदिव्यजलप्रवाहविषयिण्येव ।

अन्ये तु तादृशी स्थितिः सप्तसिन्धोरप्यासीत् इतो दशसहस्रवर्षेभ्यः प्राक् समुद्रत्रयस्य संनिधानात् वर्षारम्भादेव शरत् पर्य्यन्तं मेघाच्छन्नं भवति स्म । षष्टिदिनानि शरदि च चत्वारिंशद्दिनानि आहत्य शतं दिनानि भवन्ति । रात्रिसत्रमविच्छिन्नं तत्र चलति । वर्षारम्भादेव युद्धमारभ्यते । शतदिनैः शतपुरभेदनं भवति । शरद्येव अवश्यायकणैर्हिमकणैश्च मेघनिवृत्तिर्भवति । अश्वनीमारभ्य नक्षत्रगणनया शरदमारभ्य वर्षगणनं युक्तम् । आश्विन-पूर्णिमाया अश्विनीसम्बन्धात् । वाष्पप्रायसूक्ष्मजलकणैः सृष्टिरन्येषां मतेन संभवति ।

भारतीयरीत्या तु 'आपः' इति प्राणिकर्मविशिष्टमव्याकृतं ब्रह्मैव निर्दिष्टम् । अप्समवायित्वेन कर्मणामेवाप्शब्दवाच्यत्वात् । सर्य्यचन्द्रादि-गतिस्तु परिवहवायुसापेक्षा, न तु जलकणगतिसापेक्षा । तथा च महा-कविप्रयोगः-

'त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति च प्रविभक्तरश्मि ।
तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम् ॥ (अभि.शा. ७।६)

किञ्च कयाचिच्छक्त्या वाष्पप्रवाहरोधेऽपि चन्द्रतारकादिगतिस्तु न रुद्धा दृश्यते। ध्रुवप्रदेशेऽपि चन्द्रवृद्धि-ह्रासयोरन्यत्रेव दर्शनात्। यदि चन्द्राद्यर्थं जलचलनं संभवति तर्हि सूर्याद्यर्थमपि तत्संभवत्येव।

'सोदञ्चं सिन्धुमरिणान्महित्वा' (ऋ. सं. २।१५।६) इत्यत्रापि सिन्धोर्गतिरुत्तराभिमुखी कृतेत्येवार्थः। अद्यापि तथा प्रत्यक्षदर्शनात्। 'सर्वं वेदात् प्रसिद्ध्यती'ति न्यायेन मेरौ सप्तसिंधुषु वा यत्र क्वापि तादृशी व्यवस्था यदा कदा वा भवेत्तामाश्रित्य नैरुक्तपद्धत्या तथार्थलापनं संगतं भवति। प्रकाशान्धकारयोर्युद्धस्यापीन्द्रवृत्रयुद्धरूपेण वर्णनं संगच्छते। अज्ञानरूपवृत्रहननेन ज्ञानमिन्द्रियरूपा गा मोचयति विषयपारवश्यात्। प्रकाशकिरणा अपि गोशब्दव्यपदेश्या भवन्ति। ज्ञानेनाविद्यानाशात् स्वयं ज्योतिरात्मसूर्य्यं उन्मुक्तो भवति। धर्मेणाधर्मविजये सत्येनासत्यविजये वेदवाचां गवामुद्धारः।

देवराजेनेन्द्रेण वृत्राख्यस्य वधस्तु पुराणेतिहासादिषु स्पष्ट एव।

मीमांसकनये तु 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि'ति रीत्या अक्रियार्थस्य मन्त्रार्थवादस्याप्रामाण्यप्रसक्त्या 'विधिना चैकवाक्यत्वात्, स्तुत्यर्थेन विधीनां स्युरि'ति न्यायादर्थवादानां विध्यर्थस्तावकत्ववत् मन्त्राणां द्रव्यदेवतास्मारकत्वमेवोक्तम्। स्तोत्रशस्त्रादिषु देवतास्तावकत्वमपि सम्मतमेव। प्रकृतमन्त्रेष्विन्द्रस्य वीर्य्यपराक्रमादिवर्णनेन स्तुतिरेव सम्पद्यते। यागाद्यनुष्ठानेनैहिकामुष्मिकफलप्राप्तिर्भवति। तावतैव वेदानां प्रामाण्यं साफल्यञ्च, प्राकृतभौतिकमात्रनिरूपणस्य निरर्थकत्वात्।

'ध्रुवप्रदेशमूलस्थानत्ववादिनाम् यथा मासमिताया उषसः साधनाय प्रयासस्तथैव ते सप्तमासमितस्य दिनस्यापि साधनाय प्रयतन्ते। 'सप्त त्वा हरितो रथे वहन्ति देवसूर्य। शोचिष्केशं विचक्षण। (ऋ.सं.१।५०।८) सूर्यरथे सप्ताश्वा भवन्तीत्युक्तम्। तत्रैव नवमे मन्त्रे सप्त बडवा उक्ताः। सप्त युञ्जन्ति रथमेकचक्रमेकोऽश्वो वहति सप्तनामा (ऋ. सं. १।१६४।२) इति मन्त्रे सूर्य्यस्यैकचक्रे रथे सप्ताश्वा युज्यन्ते। सप्तनामा एक एवाश्वो युज्यत इत्युक्तम्।

यद्यपि त्रीणि चक्राणि तथापि तेषामेकरूपत्वादेकचक्रमुक्तम्। एको

वायुः सप्तरूपाणि धृत्वा वहति, वायत्तीनत्वादन्तरिक्षसञ्चारस्य। 'सप्त-दिशो नाना सूर्य्याः सप्त होतार ऋत्विजः। देवा आदित्या ये सप्त तेभिः सोमाभि रक्ष न इन्द्रायेन्दो परि स्रव ॥ (ऋ. सं ९।११४।३) इत्यत्र सप्त आदित्या उक्ता सोमदिव्यतिरिक्ताः। सप्तदिशः नानालिङ्गत्वादृतूनां नानासूर्यत्वम् (तै. आ. १।७।८) तत्सम्बन्धान्नाना सूर्य्याः। सप्त ऋत्विजः वषट्कर्त्तारः। 'अष्टौ पुत्रासो अदितेर्ये जातास्तन्वस्परि। देवां उपप्रै-त्सप्तभिः परा मार्ताण्डमास्यत् ॥ (ऋ. सं. १०।७२।८)

अदितेः अष्टौ पुत्रास्तैत्तिरीयारण्यके उक्ताः। मित्रश्च वरुणश्च धाता-चार्यमा चांशश्च भगश्च विवस्वानादित्यश्च (तै. आ. १।१३।३)

तत्र विवस्वानेव मार्ताण्डः। अदितिं प्रस्तुत्यान्यत्रोक्तम्'तस्या उच्छेषण-मददुस्तत्प्राश्नात्। सा रेतोऽधत्त। तस्यै चत्वार आदित्या अजायन्त। सा द्वितीयमपचत्। (तै. सं. ६।५।६।१) इत्यादिनाष्टादित्यानामुत्पत्तय उक्ताः। सा सप्तभिः पुत्रैः देवानुपप्रैत् उपागच्छत्। अष्टमं मार्त्ताण्डं उपरि आस्यत् प्राक्षिपत्। मृतादण्डाज्जातत्वात्स मार्ताण्डः प्रजायै प्राणिना-मुत्पत्तये मृत्यवे तेषां मरणाय मार्ताण्डः पुनः आभरत् द्युलोकेऽधारयत्। सूर्य्योदयास्तमयाद्यायत्तया प्राणिजननमरणादीनां स्फुटैव। 'सप्तभिः पुत्रैरदितिरुप प्रैत् पूर्व्यं युगम्। प्रजायै मृत्यवे त्वत्पुनर्मार्ताण्डमाभरत्' ॥ (ऋ. क् सं १०।७२।९)

तत्र ध्रुवप्रदेशे सप्तमासमितदिनत्वादेव सप्त आदित्या गणिताः। तेषां प्रकाशे यज्ञयागादिप्रवृत्तेः। तेषां देवसामीप्यप्राप्तिः। अन्धकारसमयाधिष्ठा-तृत्वादष्टमः देवसमाजाद्दूरे क्षिप्तः सप्तमासदृष्ट्यैव सूर्यस्य सप्ताश्वा उक्ताः।

न्यूटनेन सप्तरश्मयो विश्लिष्टाः। सप्तानां योगादेव श्वेतरङ्गनिष्पत्तिः। न्यूटनात्पूर्वमार्य्याणामेतद्विज्ञानस्य कारणं न दृश्यते। अद्यापि द्वादशमासा-धारेण द्वादशादित्या व्यवह्रियन्ते। द्वादशमासा संवत्सरस्यैत आदित्याः (श. ब्रा. ११।६। ३।८) नवममण्डलस्य त्रिषष्टितमसूक्तस्य नवमे मन्त्रे दशाश्वा वर्णिताः। तेन कस्यचिदन्यदेशस्य स्मृतेः सूचना यत्र दशमासात्मकं दिनं भवतिस्मेति तदपि न, सायणभाष्यरीत्या सप्तानामश्वानां सप्तर-

श्मीनां हरित्पदव्यपदेश्यत्वेन तेषां सप्तमासात्मकदिनबोधकत्वे माना-भावात्। अतएव न्यूटनात् प्रागपि योगादिबलेन ऋषीणां सप्तरश्मि-विज्ञानमासीदित्यपि मन्तव्यम्।

एस. सी. दास महाशयेनापि रश्मिज्ञानमृषीणामासीदित्येवाङ्गीकृतम्। किञ्चाहोरात्रादिगणना सूर्य्येणैवासीदिति मार्तण्डस्वरूपनिरूपणावस-रेऽनुपदमेवोक्तम्। सूर्य्य एव ऋतुहेतुत्वादृतुलिङ्गभेदान्नानात्वेनोक्तः। अन्ये देवा मित्रवरुणधात्रादयः आदित्याः।

ते तस्माद्येन मार्तण्डेन दिनव्यवस्था स तु एक एव, न सप्त। ये चादित्याः सप्त, न तैर्दिनव्यवस्था। तस्मात्सर्वमेतद्विरुद्धाभिधानम्। एकस्मिन्नेव मन्त्रे नाना सूर्य्याः सप्त आदित्या इति ज्ञायते।

'चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य्य आत्मा जगतस्तस्थुषश्च' (ऋ. सं. १।११५।१) इति मन्त्रे सूर्य्यस्य रश्मीनां समूहत्वं देवजनानीकत्वं वा उक्तम्। मित्रस्य वरुणस्या-ग्नेश्च चक्षूरूपत्वं प्रकाशकत्वं वोक्तम्।

'तन्मित्रस्य वरुणस्माभिचक्षे सूर्य्यो रूपं कृणुते द्योरुपस्थे। (ऋ. सं. १।११५।५) 'यदद्य सूर्य्य ब्रवोऽनागाऽद्यम्मित्राय वरुणाय सत्यम्' (ऋ. सं. ७।६।०१) एभिर्मन्त्रैः सूर्य्यादित्यभेद एव प्रतीयते।

किञ्च 'उद्वां पृक्षासो मधुमन्तो अस्थुरासूर्य्यो अरुहच्छुक्रमर्णः। यस्मा आदित्या अध्वनो रदन्ति मित्रो अर्य्यमा वरुणः सजोषाः (ऋ. सं. ७।६०।४) इह आदित्यानां सूर्य्यमार्गनिर्मातृत्वमुक्तम्। तथाहि—हे मित्रावरुणौ वां युवयोरर्थाय पृक्षास अन्नानि चरुपुरोडाशादीनि मधुमन्तः माधुर्य्ये तानि संपादितानि सूर्य्यश्चान्तरिक्षमारोहति। यस्मै सूर्य्याय आदित्या अदितेः पुत्रा देवा अध्वनः मार्गान् रदन्ति विलिखन्ति साधयन्ति। के ते मित्रः अर्य्यमा वरुणः त्रयोऽपि सजोषाः समानप्रीतयः। तत्रैव पञ्चमे षष्ठे च मन्त्रे आदि-त्यानां मित्रादीनां माहात्म्यमुक्तम्। एते अनृतस्य हन्तारः ऋतस्य यज्ञस्य गृहे वर्धन्ते। अदब्धा अहिंसिताः इमे दलमासः अनभिभाव्याः। अचेतसं अज्ञानिनमपि सामर्थ्यैर्य्ये जयन्ति। सुचेतसं कर्मानुष्ठानवन्तं तद्दुष्कृतं नाशयन्तः सुपथा स्वर्गादिकं नयन्ति। प्रजायै मृत्यवे च मार्तण्डस्यापि

विधारणमुक्तम्। तेनैव तत्पुत्रो वैवस्वतो मनुः प्रजाः सृजति। अपरश्च वैवस्वतो यमः प्रजा संहरति। एवं दृश्यसूर्य्यादादित्यानां भेदसद्भेर्न सप्तसङ्ख्यया सप्तमासात्मकदिनानुमानं संगच्छते। किन्तु सप्तदिग्भिः सप्तलोकैर्वा सम्बन्धादादित्यानां सप्त सङ्ख्या युज्यते।

'उतत्या हरितो दश सूरो अयुक्त यातवे इन्दुरिन्द्र इति ब्रुवन्॥' (ऋ.सं ६।६३।८) इति मन्त्रे दश दिश एव दश हरितो गृहीताः नाश्वाः षड्भिः ऋतुभिः एकेनाधिकमासेन च सम्बन्धात् सप्तसङ्ख्या युज्यते। सूर्य्यस्याप्यदितेः पुत्रत्वादादित्यत्वमव्याहतमेव। तस्य द्वादशराशिभिर्द्वादशमासैश्च सम्बन्धाद् द्वादशादित्या इति व्यपदेशोऽपि नासंगतः।

यत्तु 'नवग्व-दशग्व-सप्तग्वादिवैदिकैः शब्दैः नवदशादिमाससमाप्ययज्ञैः नवदशमासमितदिनस्य साधनायोक्तम्। याज्ञिकैरनुष्ठीयमानसत्राणामुषसोषोभिः सम्बन्ध आसीत्। याज्ञिकैर्वर्षान्ते गवामुद्धाराय बलवधायेन्द्रस्य साहाय्यं क्रियतेस्म। गवामन्वेषणाय गतस्येन्द्रस्यान्धकारे सूर्य्योपलब्धिर्जाता। सर्वैरेतैस्तिलकेनेदं कल्प्यते यत् 'ध्रुवप्रदेशे क्वचित् सप्तमाससमाप्यानि, क्वचिन्नवमाससमाप्यानि, क्वचिद्दशमाससमाप्यानि दिनानि भवन्तिस्म। तावत्कालमेव तत्र तत्र सत्रानुष्ठानं भवति स्म। यत्र सप्तमासमितं दिनं तत्र सप्तमासरात्रम्, यत्र दशमासमितं तत्र दशाधिमाससत्रं भवतिस्म। अतएव कश्चित् सप्तगुः, कश्चिन्नवगुरन्यो दशगुर्भवतिस्म। क्वचिद्यत्र षाण्मासिकं दिनं भवतिस्म। तेनैव विरूपा अङ्गिरसः इत्युक्त्या नाना प्रकारा इत्युक्तम्।

निरुक्तानुसारेण क्वचित्सूर्यकिरणा गाव उक्ताः, क्वचिज्जलधारा उक्ताः। तेन मेघाडम्बरेण किरणानां, तिरोधानं वर्षणात्प्राग्जलधारावरोधश्च भवति। अयमेव गवामवरोधः अन्धकारमयो मेघ एव वृत्रवलाहिप्रभृति शब्दैरुच्यते। इन्द्रो वज्रप्रहारेण महारावेण गर्जनेन तुमुलघोषणासुरं हन्ति। प्रतिवर्षं तथैव प्रयत्नो भवति। एतत्सत्रप्रभावेणेन्द्रो बलवान् भवति। तदैव वृत्रं हन्ति, गां मोचयति। सूर्य्योऽपि मेघानां परस्ताद् गूढो लम्बते। अतः परिवत्सरान्ते बलवध उक्तः। परिवत्सरसत्रस्य वर्षस्यान्ते तद्वधो जायते। 'ते दशग्वाः प्रथमा यज्ञमूहिरे ते नो हिन्वन्तूषसो व्युष्टिषु-उषा

नरामीररुणैरपोर्णुते महो ज्योतिषा शुचतागोअर्णसा। ( ऋ.सं. २।३४।१२)

ते दशग्वा मरुद्गणाः प्रथमं यज्ञं कृतवन्तः ते प्रभातेषु नो बुद्धि प्रेरयन्तु। यथा उषसोऽन्धकारमपनयन्ति तथा सूर्य्यात्रकान् वृत्रादीनसुरानपसार्य्य जगत्प्रकाशयन्ति।

परं वस्तुतः नैतैर्मन्त्रैः ध्रुवसम्बन्धीनि प्रलम्बमानदिनानि बोध्यन्ते। अङ्गिरसांस्तवपाठेनेन्द्रो वज्रेण हत्वा वध्ने गा उद्धार। उषसः प्रकाशः प्रकीर्णस्तमोऽपसृतं सूर्य्येण मनुष्याणां द्वाराण्युन्मुक्तानि। 'विदा-विदो विदयन्नाद्रिमुक्थैरायत्या उषसो अर्चिनांशु। अवावृत व्रजिनीरुत्स्वर्गाद्विदुरो मानुषोर्देव आवः'। (ऋ. सं. ५।४५।१) इतिमन्त्रेऽयमर्थः प्रकाशितः। सूर्य्येण स्वीयः प्रकाशः सान्द्रपदार्थवत् प्रसारितः। किरणजनन्योषसा सूर्य्यस्यागमनं ज्ञात्वा विस्तीर्णेऽन्तरिक्षे समुदीयते। नद्यः कूलान्युत्साद्य प्रवहन्ति। द्यौः स्तम्भ इव दृढा। नवग्व दशग्व शब्दयोरर्थ। सायणेन 'ये अग्ने' रितिमन्त्रे प्रदर्शितः।

तथाहि—'ये अग्ने परिजज्ञिरे निरूपासो दिवस्परि। नवग्वो नु दशग्वो अङ्गिरस्तमः सचा देवेषु मंहते। ( ऋ. सं. १०।६२।६) विरूपासः विविधरूपा अङ्गिरसः द्युलोकात् अग्नेः परिजाताः। यद्वा स्वतेजसा दीप्यमानादग्नेर्जाताः। तेषां च मध्ये नवग्वो दशग्वश्च अङ्गिरसां वरिष्ठः सत्रमासीनानां मध्ये केचन नवसु मास्सु कर्म कृत्वोदतिष्ठन, केचन दशसु मास्तु इत्येवमाङ्गिरसामयनमुक्तम्। तेषामग्निः नवग्वो दशग्वश्चोक्तः। तादृशो देवेषु सहावस्थितोऽग्निः मंहते मह्यं धनं प्रयच्छति। ध्रुवप्रदेशीयदिनसम्बन्धेन तथात्वे षड्ग्वष्टगुचर्चापि स्यात्। तस्मान्निराधारैव तादृशी कल्पना।

वस्तुतः सर्वमेव वर्षासु इन्द्रोऽशनिना मेघ भिनत्ति। जलधारा मोचयति। मेघानां परस्तात्सूर्य्यं पश्यति। प्रकाशं विस्तारयति।

एवमेव 'दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे। अपामर्थपतीनां ब्रह्मा भवति सारथिः। (ऋ. सं. १।१५८।६) दशमे युगे दशमे मास इत्यर्थं कृत्वा ध्रुवप्रदेशीयलम्बमानदिवसस्मृतिं मन्यते दीर्घतमा। अयमप्यर्थः परस्परविरुद्धः। प्रकरणासम्बद्धश्च। सूर्य्यः दशमासान् प्रकाशं कृत्वा वृद्धो जातः। पश्चात् अन्तरिक्षस्थजलाधारया सार्धं समुद्रं गतः। पुनरुदयसमयेऽग्निना

तस्मै दृष्टिर्दत्ता । क्षितिजस्याधस्तात् सूर्य्यास्तमयः प्रसिद्ध एव । सर्वञ्चै-तत्क्लिष्टकल्पनमेव ।

सायणरीत्या त्वयमर्थः—दीर्घतमा एतन्नामा महर्षिः । स च मामतेयः ममतायाः पुत्रः । दशमे युगे जुजुर्वान् जीर्णो जातः, दशयुगपर्य्यन्तं महानुभावयोरश्विनोः प्रभावात् सर्वदुःखमुक्तोऽत्यन्तं सुखी पुत्रभार्य्यादि-सहितो जीवितवान् । अनन्तरं कर्मफलं स्वर्गं प्राप्नुवतीनां प्रजानां ब्रह्मसदृशः परिवृढो जातः ।

किञ्च सारथिः तद्वत्निर्वाहको देवो भवति । एवमस्य वृत्तान्तं मन्त्रोऽनुवदति । स्वयं वा स्वात्मानं पारोक्ष्येणाश्विनोर्माहात्म्यं प्रकटयितुं ब्रवीति ।

एवमेव गवामयनसत्रसम्बन्धिब्राह्मणेन तिलकरीत्याऽऽर्य्याणां ध्रुव-निवासः सूच्यते । 'गावो वै सत्रमासत । शफां छृङ्गाणि सिषासत्यस्तासां दशमे मासि शफाः शृङ्गाण्यजायन्त । ता अब्रुवन् यस्मै कामाया दीक्षा-मह्यापाम तमुत्तिष्ठामेति । ता या उदतिष्ठंस्ता एता शृङ्गिण्योऽथ याः समापयिष्यामः संवत्सरमित्यासत तासामश्रद्धया शृङ्गाणि प्रावर्तन्त । ता एतास्तूपरा ऊर्जंस्त्वसुन्वंस्तस्मादुताः सर्वान् ऋतून् प्रापोत्तरमु-त्तिष्ठन्त्यूर्जं ह्यसुन्वन् सर्वस्यप्तो वै गावः प्रेमाणं सर्वस्य चारुतां गताः । सर्वस्य प्रेमाणं सर्वस्य चारुतां गच्छति य एवं वेद । ( ऐ.ब्रा. ४।१७)

तद्रीत्या ध्रुवप्रदेशे दशमासान् दिनं भवति स्म । तेन तत्र दशमासान् सत्रानुष्ठानम् । सप्तसिन्ध्वादिप्रदेशे द्वादशमासान् सत्रानुष्ठानम् । सप्त-सिन्ध्वादिप्रदेशे द्वादशमासान् सत्रानुष्ठानमिति । अत्र गाव इति दशमासव्यापिनोऽहोरात्रा दशमासानन्तरं दिनसमाप्तौ सत्रसमाप्ति-र्भवति । एतदपि कल्पनामात्रम्, श्रुत्यक्षरविरुद्धत्वात् । गवा सत्रानुष्ठानं किञ्चिदुद्दिश्य जातम् । शृङ्गाणि शफाश्च तत्राहोरात्रेषु कानीत्येतत्सर्वं दुःसमाधानमेव । मासद्वयं यावद् घोरान्धकाराभिभूतिः सत्रफलमिति तु न युक्तम ।

वस्तुतस्तु गवामयनसत्रार्थवादवाक्यमिदम् । पशवोऽपि सत्रं कृत्वाभीष्टं प्राप्नुवन्तः, किमुत मनुष्याः । तस्मात्सत्रमवश्यमनुष्ठेयम् । गवामिव

चारुताप्राप्तिः। सर्वप्रेमास्पदता च फलम्। सत्रानुष्ठानात् गामुक्तम्। शृङ्गादिप्राप्तिकामनया सत्रानुष्ठानेन दशमासानन्तरमिष्टसिद्धिर्जाता। ये तु तदनन्तरमपि संवत्सरपर्य्यन्तं कृतवन्तस्तेषां शृङ्गादिनिवृत्तावपि ऊर्ज-(बल) प्राप्तिः फलम्।

एवमेव रात्रिसत्रेण दिनं कल्प्यते। सर्वाधिकं शतरात्रात्मकं रात्रिसत्रं भवति। तत्र तिलकरीत्या सप्तमासमितदिनस्य मासमिताया उषसश्च समाप्तौ ततः परम् किञ्चिदूना त्रिमासमिता रात्रिर्भवति। पञ्चषष्ट्यु-त्तरशतत्रयाहोरात्रयाहोरात्रैः संवत्सरः पूर्यते इति मतेन पञ्चनवति दिनानि रात्रिर्भवति। तदेव शतरात्रात्मकं रात्रिसत्रं भवति। इन्द्रार्थं-शतरात्रानुष्ठानादेव तस्य शतक्रतुत्वमपि। युद्धचमानस्येन्द्रस्य प्रोत्साह-नाय सोमसमर्पणं स्तवनञ्च युक्तमेवेति तदपि यत्किञ्चित् श्रौतसू-त्रकाराणां याज्ञिकानाम् मीमांसकानाञ्च रीत्या रात्रिशब्दोऽपि दिनपरः।

'समाप्ते वा संवत्सरे रात्रिसत्रेषु राजानं क्रणीयुः' इति लाट्यायनश्रौत-सूत्रानुसारेणापि वर्षासु तेषामनुष्ठानम्, तदानीमेव सोमक्रयणम्। ऋक्संहि-तायामाश्विनसम्बन्धीन्याख्यानानि दृश्यन्ते। अश्विभ्यां वृद्धाय च्यवनाय यौवनं दत्तम्। वृद्धाय कलये यौवनं दत्तम्। विमदाय रथेन तत्पत्नी प्रेषिता। शमोगौः दोग्ध्री कृता। वृद्धायै कुमार्यै घोषायै वरोऽन्विष्य दत्तः। कस्यचिन्न-पुंसकस्य पत्न्यै हिरण्यहस्ताख्यः पुत्रो दत्तः। भग्नपादाय विष्पालाय लौहमयः पादो निर्मितः। परावृजस्यान्ध्यं खञ्जता च दूरीकृता। कस्यश्चित् वर्तिकायाः प्रार्थनया वृकस्य मुखात्सा रक्षिता। ऋज्राश्वस्यान्ध्यं नाशितम्। केनचिद्दैत्येन प्रज्वलितकुण्डे निःक्षिप्तोऽत्रिस्तत उद्धतः। वन्दनाय चाकचिक्योपेतं स्वर्णं दत्तम्। दुष्टैर्बद्धहस्तपादस्य दशदिनानानि यावज्जले पतितस्य रेभस्य दुःखं नाशितम्। समुद्रमग्नस्य तुग्रपुत्रस्य भुज्योः शतारित्रया नावा समुद्धरणम् कृतम्। अन्तरिक्षगामिन्या नौकया सहस्रचक्रिकया षडश्वया गन्त्र्या तत्पितृ-सन्निधौ प्रेषणं कृतम्। दीर्घतमसे नेत्रं दत्तम्।

प्रायेणैतत्कथानकानामयमर्थः क्रियते यत् 'शीततौ सूर्य्यस्य शक्तिः क्षीयते, वसन्ते चीयते। तेन वसन्तोऽश्विनौ। शीतं वृकम्। सूर्य्यः एव च्यवनः। सूर्य्यः शीततौ वृद्धो भवति, वसन्तेन तस्मै यौवनम् दत्तम्।

तिलकेनोच्यते-अश्विनौ स्वकृपापात्रभूतानन्धकारादुद्धरतः । प्रकाशञ्च प्रयच्छतः । भुज्युरपि अनारम्भणे तमसि निमग्न आसीत्। वसन्तपक्षे नायं घटते । शीतेन सूर्यशक्तिः क्षीयते, प्रकाशः क्षीयते । तनैव स खञ्जः काणः रुग्णोऽपि भवति । परमन्धः स न वक्तुं शक्यते । आन्ध्यन्तु पूर्णान्धकारेण सार्धमेव तिष्ठति । यदि चाहोरात्रगतान्धकारप्रकाशावेव विवक्षितौ सायंकालं यावद्वृद्धो भूत्वा सूर्य्यो रात्रावन्धो जातः । प्रातः पुनः स्वस्थो जायते । तदा त्वहोरात्रमितमेवैतत् सर्वं स्यात् । दिनत्रयं भुज्युर्जलनिमग्नः, विपन्नरेभस्य दशरात्रयो नवदिनानि च व्यतीतानि । वसन्तपक्षे भुज्युरेकश्च सूर्य्य एव तत्र शीतकाले दक्षिणायनमार्गेण गच्छन् मकररेखां गत्वा तत उदीचीं प्रत्यावर्तते । तत्र मध्येऽतीव गतिमान्द्यं संपद्यते । तेन सूर्य्यस्तत्रावरुद्ध इव प्रतीयते । अतएव पञ्चाङ्गेषु द्वित्राणि पञ्चषाणि दिनानि यावत् दिनमानं समानमेव भवति ।

पाश्चात्यानामानुसारेण तदानीमार्य्याणां ज्यौतिषज्ञानमनुन्नतमिवासीत् । तत एव ते सूक्ष्मां गतिं द्रष्टुमसमर्था आसन् । तेनैव कश्चित् सूर्यस्य दिनत्रयमवरोधं, कश्चिद्दशदिनान्यवरोधं मन्यते । तत एव भुज्युर्दिनत्रयं विपन्नो, रेभो दशदिनानि विपन्न आसीदित्युच्यते । अस्मिन्पक्षेऽपि दीर्घतमसः कथा निरालम्बनैव स्यात् । यतस्तस्य दशमे युगे वार्धकम् । मासद्वयं सूर्य्योऽवरुद्ध इति न ग्रामीणोऽपि स्वीकर्तुं शक्नोति । मासत्रयेण सूर्य्यः मकररेखातो विषुवद्रेखामागच्छति ।

एवमेवाश्विनोः कृते 'सिन्धुमातरः' इति प्रयुक्तम् । तेन समुद्रोत्पन्नत्वं सूच्यते । भुज्योस्ताभ्यां जलादुद्धरणम् । 'परावतं नासत्या नुदेथा मुच्चाबुध्नं चक्रथुर्जिह्मवारम् । क्षरन्नापो पायनाय राये सहस्राय तृष्यते गोतमस्येति (ऋ. सं. १।११६।६) मन्त्रे

'गोतमस्य पिपासोपशान्तये नासत्याभ्यां दूरात्कूपमानीय तथान्युब्जं कृत्वा स्थापितं यथा तस्य जलसौलभ्यं स्यात् ।' ( ऋ. सं. ८।४०।५ ) मन्त्रेऽपि सप्तबुध्नसमुद्रस्य जिह्मबारत्वमुक्तम् ।

एवमेव 'अबुध्ने राजा वरुणो (ऋ. सं. १।२४।७ ) इति मन्त्रेऽपि अबुध्नप्रदेशस्थितेन वरुणेन तेजःस्तूपस्यापरिधारणमुक्तम् । जलस्यान्ध-

कारमर्थं मत्वा तत्र रेभस्य भुज्योर्वा सूर्य्यस्यान्धकाराद्रक्षणमित्यर्थ-करणेऽपि न निर्वाहः। यतो अहोरात्रत्रयमहोरात्रदशकं वा कथमन्धकारेण सूर्य्यस्य प्रावरणमुपपद्यते।

एवमेव ऋज्राश्वकथायामपि यदि दिनं मेषः, रात्रिर्वृकी तदा शतं दिनानि रात्रिभावापन्नानीत्यर्थः संपद्यते। वृकया मुखे शतम्मेष्यो निपतिताः। ऋज्राश्वोऽन्धः सञ्जातः इत्यस्य सूर्य्यस्तिरोहित इत्येवार्थः। अश्विभ्यां तस्मै दृष्टिर्दत्तेत्यस्य शतदिवसानन्तरं सूर्य्योदयो जात इत्यर्थः। परन्तु शतं दिनानि निरन्तरमन्धकारः कथं जातः?

एवमेवात्रेः 'हिमेनाग्निघ्रं समवारयेथां पितुमतीमूर्जमस्या अधत्तम्। ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥' (ऋ. सं. १।११६।८) इति मन्त्रवर्णितं शतद्वारपीडयन्त्रात्समुद्धरणं तस्य च तुषाग्नेर्दहनम् (ऋ. सं. ५।७८) सूक्ते तेनैवोच्यते। तदुद्धारः काष्ठमयेन पेटकेन कृतः।

यद्यत्र सूर्यस्य रात्रौ अन्धकारे वा क्वचित्प्रसञ्जनम् पुनः कालान्तरे तदुद्धारः। अत्र पक्षेऽपि कथमत्रेः सप्तवध्रित्वम्? रात्रौ पत्न्याः पृथक्स्थिति-कारणात्तत्त्वं चेत् तथा सप्तेति विशेषणं किमर्थम्? अन्यच्च 'यथा वातः पुष्करिणीं समिङ्गयति सर्वतः। एवाते गर्भ एजतु निरैतु दमामास्य ॥' (ऋ. सं. ५।७८।७) इति गर्भस्राविण्या उपनिषदः कात्र संगतिः?

तिलकेन तु ध्रुवप्रदेशनिवासेनैवेषां मन्त्राणां संगतिर्योज्यते। तत्रैव सूर्य्यः क्वचिदेकमहोरात्रं, क्वचिदहोरात्रयं, क्वचिदहोरात्रनवकं, क्वचित्तद्द-शकम्, क्वचित् शताहोरात्राणि निगूढस्तिष्ठति। सर्वा घटनास्तत्र घटन्ते। अन्तरिक्षस्थेन जलसमुद्रेण निमग्नत्वात्तद्दर्शनम्, तत एव तदुद्धारः अदर्शनकाले तदान्ध्यम् सूर्य्यस्यैव नाम-अत्रिरिति। सप्तकिरणा एव सूर्यस्य सप्ताश्वाः। सूर्यस्यैव वध्रिरूपकेण सप्तरश्मित्वात् सप्तविशेषणेन च सप्तव-ध्रित्वमपि संगच्छते। सप्तमासान्सूर्य्यो गर्भस्थो भवति। गर्भनिःसारणानन्तरं निऋतेरङ्कं गच्छति। अदृश्यो भवति। ध्रुवप्रदेशे सर्वमेतद्भवति। दशमासा-स्तत्रैव प्रकाशः। द्वौ मासौ तमः। पृथिव्याकाशयोर्मध्येऽन्तरिक्षे मातृकुक्षौ सूर्य्यस्य गर्भरूपेणावस्थानम्। ततो निःसृत्यैवादृश्यो भवति। तेन ये तं जानन्ति न तेऽद्य पश्यन्ति। यैः सदृष्टस्तैरद्य न दृश्यते।

'य ई चकार न सो अस्य वेद य ई ददर्श हिरुगिन्नु तस्मात्।
स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमाविवेश॥ ३२॥
द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवीमहीयम्।
उत्तानयोश्चम्बोर्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात्॥ ३३॥
(ऋ. सं. १।१६४)

युवतिर्माता आहतं कुमारं तिरोधाय रक्षति जनाः तस्य क्षीयमाणं मुखं न पश्यन्ति। किन्तु तमरमणीयस्थानस्थितं पश्यन्ति।

'कुमारं माता युवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे।
अनीकमस्य न मिनज्जनासः पुरः पश्यन्ति निहितमरतौ॥'
(ऋ. सं. ५।२।१)

वस्तुतस्तु सर्वमेतत्काल्पनिकमप्रामाणिकमेव। सुखावबोधायाख्यायिका भवति। अश्विमरुद्वरुणादिस्तुतिपराणां मन्त्राणां स्तवन एव तात्पर्य्यात्। प्रमाणान्तराविरोधे तत्तदाख्यायिकानुरोधिन्यः पुराणादिसिद्धा भवन्त्यो घटना अपि न वार्य्यन्ते। तावताऽपि लौकिकेतिहासवन्न वैदिकोल्लेखस्य घटनापूर्वकत्वम्। अन्यत्र विशिष्टघटनानां शब्दपूर्वकत्वस्य साधितत्वात्। क्लिष्टकल्पनाया अन्यय्यत्वात्। लोके ये शब्दा येष्वर्थेषु प्रसिद्धाः प्रायेण वेदेष्वपि तेष्वेवार्थेषु ते प्रयुज्यन्ते। नच रेभ-भुज्यु-प्रभृतिशब्दाः प्रसिद्धाः। सूर्ये नचान्धकारेण सूर्य्यस्यावरोधः संभवति, अन्धकारस्य सूर्य्यनाश्यत्वात्। रात्रेरपि न सूर्यावरोधकत्वं संभवति, सूर्य्ये तदभावरूपाया रात्रेरसंभवात्। न चैतैरपि प्रमाणैरार्य्याणां ध्रुवप्रदेशनिवासस्ततो वा भारते समागमनं सिद्धयति।

रेभभुज्युप्रभृतीनां जलनिमग्नत्वमश्विनोरनुग्रहेणोद्धारश्च नासंभवः। सर्वत्राख्यानानां रूपककल्पनयाऽर्थान्तरान्वेषणं नावश्यकम्। सप्तसिन्धुप्रदेशेऽपि समुद्रसान्निध्ये वर्षादिप्राचुर्य्यान्मेघान्धकाराच्छन्नताऽपि कतिचिद्दिनानि संभवत्येव। शतं दिनानि वर्षासमयः। तत्र शतदिनात्मकरात्रिसत्रानुष्ठनम्। तेन शम्बरस्य शतदुर्गविद्रावणम्। ध्रुवप्रदेशे दशमासमितं दिनं न भवत्येव। तत्रैव प्रातःसायसन्ध्ययोरप्यन्तर्भावात्। दशमास्यस्य सूर्य्यस्य मासद्वयं

वर्षास्वलक्ष्यता भवत्येव। अत्रेः कथावर्षायां सप्तसिन्धुष्वेव संगता भवति। न तिलकव्याख्यायाम्। यदि तद्रीत्यां दशमासीये दिनेऽन्तरिक्षे कुक्षौ स्थित्वा मृगुक्षया सूर्य्यस्य निर्ऋतिगमनेनादृश्यता, तमसावरणम् तदभीष्टं स्यात्। न तर्हि तद्युज्यते। संतमसप्रावरणस्य बन्धनरूपत्वात्।

अत एवेन्द्रेण तदुद्धरणम्। तथा च कथमत्र स्वबन्धनस्यैव स्वमुक्तित्वाभिमतिः स्यात्? वर्षापक्षे तु नायं दोषः दशमासान् वर्षाप्रतीक्षा। तदानीमेव गोभिस्तदनुसारिभिर्वा गवामयनानुष्ठानम्। दशग्वानां यज्ञानुष्ठानम्। मेघा आगताः। तैश्च प्रावृत्य सूर्य्यो निगृहीतः। स एव तस्य शतद्वारे पीडागृहे प्रविष्टः। कदा कदाचित्किरणदर्शनादस्माभिश्च ताप एव तुषदाहः। तत्रात्रिः सूर्य्योऽश्विनौ प्रार्थयते। दशमासेभ्यो या गर्भस्था वर्षा तां मोचय वृष्टिर्भवत्वित्यर्थः। वृष्टौ जातायां यत्र काष्ठमये पेटके गृहे वासोवरुध्द आसीत्। तस्य मुक्तिर्भवति। मेघक्षयात् तन्मुक्तिः। गर्भस्राविण्या उपनिषदोऽप्यर्थः संगतो भवति।

वेदेषु उषा सूर्य्यपत्नी प्रोक्ता, क्वचिन्मातापि। रात्रौ वर्षायां सा पत्युर्दूरे भवति। तदानीं सूर्य्यो वध्रितुल्यो भवति। अश्विनोः कृपया वध्रिपत्न्याः पुत्रलाभो जायते। पुत्रोऽपि सूर्य्य एव उषसोऽङ्के सूर्य्योदयात् सूर्य्यस्यैव हिरण्यकिरणत्वेन हिरण्यहस्तत्वम्। गोतमरूपः सूर्य्यः पिपासुः सञ्जातः। अश्विव्यां कूपमानीय ऊर्ध्वबुध्नमधोमुखं कृत्वा तत्पिपासोपशमिता। अर्थात्तयोरनुग्रहेण मेघा आगताः। जलवृष्ट्या पिपासापगता।

वस्तुतस्तु मेघस्योर्ध्वबुध्नत्वेऽपि न तेन सूर्यस्य पिपासोपशमः सम्भवति। तस्य मेघादुपरिस्थितत्वात्। सूर्यस्य पिपासापि केनापि न स्पष्टम्। कल्पनामयार्थापेक्षया स्तुत्यर्थास्वाख्यायिकासु तदनुसारिणीषु घटनासु च मन्त्राणामक्षराणि सुसंगतानि भवन्ति।

किञ्च सर्वत्र प्रायेणेन्द्रः सूर्य्यमित्रत्वेन प्रसिध्दस्तेनैव वृत्रादीनसुरान् हत्वा सूर्य्यं रक्षति। परमेन्द्रेण सूर्यरथस्य चक्रमपहृतम्। सूर्य्यरथे सप्तचक्राण्युक्तानि। बहुत्रत्वेकमेव चक्रम्। क्वचिद् द्वे चक्रे अपि। तत्रैकस्य चक्रस्यापहारेण रथगतिरेव भज्येत। यद्येकमेव चक्रं स्यात्तदा तु तदपहारेण

गमनमेवावरुद्धयेत । सूर्य्यरथचक्रेणासुरान् हतवानिन्द्र इत्यप्यायाति (ऋ. सं. ४।३०।४ )

'मुषाय इन्द्र सूर्यम् त्वं कुत्सेनाभिशुष्णमिन्द्राशुषं युध्य कुयवं गविष्टौ दश प्रपित्वे अद्य सूर्य्यस्य मुषायश्चक्रमविवे रपांसि ॥ (ऋ. सं. ६।३१।३)

हे इन्द्र ! त्वं कुत्सेन सह तत्सहायार्थम् अशुषं शोषयितुमशक्यं प्रबलं शुष्णं सर्वशोषकमसुरम् अभियुध्दयः युध्दं कृतवानसि । तथा गविष्ठौ सङ्ग्रामे कुयवं तन्नामकमसुरम् । दश अदशः हिंसितवानासि । अध अपि च । प्रपित्वे प्रयतने युध्दे । सूर्य्यस्य चक्रं रथावयवम् मुषायः अमुष्णाः । तदा प्रभृति सूर्यरथ एकचक्रो जातः । सप्त युञ्जन्ति रथमेकचक्रम् (ऋ. सं. १।१६४।२)

इतिमन्त्रवर्णात् एतदाख्यस्य ऋषेः सूर्य्येण सह युद्धे तत्साहाय्यार्थमागत इन्द्रः सूर्य्यस्य चक्रमपहृतवान् । रपांसि पापकारीणि रक्षःप्रभृतीनि । अविवेः अस्माल्लोकादगमयः अवधीः इति सायणः ।

परं तिलकरीत्या इन्द्रः शुष्णाद्यसुरविरोधिनः कुत्सस्य साहाय्यं कृतवान् । सूर्य्यरथचक्रं मुषित्वा दशमासान्ते आपदोऽपहृतवान् । दशशब्दो दशमासप्रमितत्वमित्यस्य बोधकः । क्वचित्सूर्य्यः, क्वचिद्रथ इत्युक्तम् । तस्माद्दशमासान्ते इन्द्रः सूर्य्यमपहृतवान् । एषा घटना ध्रुवप्रदेशीया । सर्वमेतदसंगतम् । दशशब्दस्य दशमासपरत्वे मानाभावात् । 'प्रपित्वे' इत्यस्य प्रपतने संग्रामे इत्येवार्थः । प्रपूर्वस्य पततेश्छन्दसि तद्रूपनिष्पत्तेः । प्रपतन्ति योद्धारो यत्र तत्प्रपतनम् ।गविष्टौ इत्यस्यापि गावो बाणा इष्यन्ति पतन्ति यत्र स संग्रामो गविष्टिः । नात्र गवां प्रसङ्गः 'ममत्वासूरः यम प्रपित्वे (ऋ. सं. ८।१।२९)

इत्यत्र तु दिवसस्यावसाने इत्यर्थः । संग्रामे जीवनस्यावसानसंभवात् । अपि च अत्र तु चक्रापहार उक्तो, न सूर्य्यस्य । न वा सूर्य्यापहारेण कुयवादिवधः आपन्निवृत्तिर्वा संभवति ।

'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपांसुरे ॥' ( ऋ. सं. १।२२।१७ )

'त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः अतो धर्माणि धारयन् ॥' ( ऋ सं. १।२२।१८ )

विष्णुस्त्रिविक्रमावतारधारी। इदं प्रतीयमानं सर्वं जगदुद्दिश्य। विचक्रमे विशेषेण क्रमणं कृतवान्। त्रिभिःप्रकारैः पद निदधे। स्वीयं पदं निदधे स्वीयं पादं निक्षिप्तवान्। अस्य पांसुरे धूलियुक्ते पादे समूढम् सम्यगन्तर्भूतम्। अदाभ्यः हिंसितुमशक्यः। गोपाःरक्षकः। विष्णुः त्रीणि पदानि विचक्रमे। पदानि पृथिव्यादिस्थानेषु त्रीणि पदानि विचक्रमे। किं कुर्वन् धर्माणि अग्निहोत्रादीनि धारयन् पोषयन्। तत्र कस्यचिन्मतेन पृथिव्यामन्तरिक्षे आकाशे त्रीणि पदानि रक्षितवान्। अन्यैस्तु प्रथममुदयाचले, द्वितीयं विष्णुपदे गयशिरसि, तृतीयमस्ताचले। अन्यैस्तु पृथिव्यामग्निरूपेणान्तरिक्षे, वायुरूपेणाकाशे, सूर्य्यरूपेण विष्णुः पदानि निदधे। सूर्य्य एव विष्णुः। पुराणेषु विष्णोर्द्वादशादित्येषु गणितत्वात्।

चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीं रवीविपत्।' (ऋ. सं. १।१५५।६)

मन्त्रे विष्णोश्चक्रभ्रामणमुक्तम्। चतुरुत्तरनवतिनामभिर् एकेन संवत्सरेण द्वाभ्यामयनाभ्यां पञ्चभिर्ऋतुभिः द्वादशाभिर्मासैश्चतुर्विंशतिभिः पक्षैः त्रिंशदहोरात्रैरष्टयामैः द्वादशभी राशिभिः वर्षरूपं चक्रं भ्रमयति सूर्य्यः।

तिलकस्तु चतुर्भिर्नामभिर्युक्तैः नवतिसंख्याकैरश्वैः षष्ठ्युत्तरत्रिशतैरश्वैः चक्रं भ्रमयतीत्युक्तवान्। तन्न सूर्य्यस्य तावत्संख्याकाश्वानामप्रसिद्धेः। सप्ताश्वास्तु श्रूयन्ते। किञ्च कानि चत्वारि नामानि इत्यादि वक्तव्यम्। एकैकस्य नामचतुष्टयेन किं विवक्षितम्। तथात्वेऽपि नवतिसंख्याकानामेव चतुर्नामवत्त्वमायाति।

तिलकरीत्या विष्णोः एकं पदं तत्र निक्षिप्तं यत्रेन्द्रस्यासुरैः संग्रामः प्रवृत्तः।

सायणरीत्या तु नामभिः स्वकीयनमनप्रकारैः प्रेरणाविशेषैरित्यर्थः। अयञ्च संग्रामः तिलकरीत्या भूमण्डलस्याधस्तात् यत्र ध्रुवप्रदेशात् सूर्यो दृश्यो भूत्वा तिरोहितो भवति तत्रैवान्धकारस्थानम्। इदञ्च तृतीयं स्थानम्। वर्षस्य तृतीयो भागः। द्वे पदे अष्टौ मासाः पृथिव्या उपरि ध्रुवप्रदेशीयमष्टमासीयदिनम्। चतुर्मासीया रात्रिः। पुराणानुसारेण विष्णुः क्षीरसागरे शेषशय्यामधिशेते वेदेषु वृत्रोऽहिरुच्यते।

अन्येषां रीत्या पृथिव्या अधस्तात् इन्द्रवृत्रयोर्युद्धे प्रमाणाभावात् तृतीयं पदं वर्षायां पतितम्। आषाढ़े हरिशयनम्, कार्तिक्याञ्च विष्णुप्रबोधः। तिलकरीत्या हेमन्ते हरिशयनम्, वसन्ते प्रबोधः। तद्रीत्या सप्तसिन्धुप्रदेशागमनानन्तरं आषाढ़शुक्लैकादश्यां शयनं प्रबोधश्च वसन्तमपहाय शरदि प्रवृत्तः।

वस्तुतस्तु मन्त्रसूचिताख्यानानामेव पुराणे विवरणं दृश्यते। सायणीयं व्याख्यानमेव मन्त्राणां युक्तं पुराणसंगतत्वात्, अन्याः कल्पनास्तु कल्पना एव। मौर्य्यकालीनकलाया अतिप्रौढत्वान्नानुभवशून्यानां नूत्नानां कलाकाराणां सा कृतिः संभवति, किन्त्वनेकसहस्रवर्षानुभवपरिणतिरेव सा। सिन्धुप्रदेशे महज्जोदरो निखातेषु क्रमेणैकैकस्याधस्तात् सप्तवसतयः प्राप्ताः। सर्वाधस्तादेकं नगरं प्राप्तं। तत्रेष्टकामयानि पक्वानि भवनानि, राजमार्गाः जलप्रवाहनलिकाश्चोपलभ्यन्ते। मन्दिराणि मूर्त्तयश्चोपलब्धाः। नामाङ्किताः मुद्राश्चोपलब्धाः शासकीयेषु व्यवहारपत्रेषु येषामुपयोगा भवन्ति स्म। हरप्पास्थानेऽपि खण्डगृहेषु तादृशान्येवातिप्राचीनानि वस्तून्युपलब्धानि। विशेषज्ञानां रीत्या सार्धपञ्चसहस्रवर्षेभ्योऽपि प्राचीना सा कला सहस्रवर्षप्राचीनानुभवपरिणतिरिति च वक्तुं शक्यते। मिश्रसभ्यताया अपि प्राचीना भारतीयसभ्यतेति स्पष्टं वक्तुं शक्यते।

सुमेर अक्काद सभ्यता प्राचीना। ततः चैल्डिया सभ्यता। ततो वैबलिमकालः समायाति। ततः यहूदीकालः, तत एव योरोपीयसभ्यता। सुमेरसभ्यता षट्सहस्रवर्षप्राचीना। सुमेरस्यैवेको भागः अक्कादः। महज्जोदरो स्थाने यानि चिह्नान्युपलभ्यन्ते तानि तानि सुमेरसभ्यतातुल्यान्येव। तादृशान्येव भवनानि, तादृश्य एव मूर्त्तयः, तादृश्यो मुद्रा अक्षराणि च, समाना भाषा, जनानां नामानि च समानि। केषाञ्चिन्मते द्राविड़ी भाषा सा। अन्येषां मते संस्कृतेनाधिकं साम्यम् तस्याः। तेषामुपास्य, 'इन्दुरु' देवो वैदिकस्येन्द्रस्य रूपान्तरमेव। सूर्य्यश्चोपास्यः। सोऽपि 'रामस' नाम्ना ख्यातः। एवं मातृनामिकाया देव्यास्तत्र मूर्तय उपलभ्यन्ते। शिवमूर्तयश्च योनिमुद्रारूपेणोपलभ्यन्ते। पशुपतिनामान्वर्थतायै हस्तिव्याघ्रमहिषादयस्तत्सविधे दृश्यन्ते। शिवलिङ्गान्यपि दृश्यन्ते। तेन विज्ञायते भारतीया सभ्यतैव महज्जोदरो हरप्पा आदि स्थानेषु दृश्यते।

## राज्योत्पत्तिविमर्शः

'यथा राज्यं समुत्पन्नमादौ कृतयुगेऽभवत्।'

इति शान्तिपर्वणि ५९ अध्याये कृतयुग एव राज्योत्पत्तिरुक्ता। ततः पूर्वं—

'न वै राज्यं न राजासीत् न दण्डो न चदाण्डिकः।
धर्मेणैव प्रजाः सर्वाः रक्षन्ति स्म परस्परम्॥' १४॥

राजराज्यदण्डाद्यभावेऽपि धर्मेणैव परस्परपालनमुक्तम्। कालक्रमेण ते मनुष्याः खेदमापन्ना मोहमुपजग्मुः।

'पाल्यमानास्तथाऽन्योऽन्यं नरा धर्मेण भारत।
खेदं परमुपाजग्मुस्ततस्तान् मोह आविशत्॥' १५॥

'मोहवशमापन्नानां कर्त्तव्याकर्त्तव्यविवेकशून्यत्वेन
तेषां धर्मो ह्यनीनशत्॥' १६॥

'नष्टायां प्रतिपत्तौ च मोहवश्या नरास्तदा।
लोभस्य वशमापन्ना सर्वे भरतसत्तम॥' १७॥

मोहवशमापन्नानां विवेकशून्यनाञ्च लोभाधीनता जाता। तत एवाप्राप्तवस्तु प्राप्तये प्रयतमानानां कामः समागतः।

'अप्राप्तस्याभिमर्शं तु कुर्वन्तो मनुजास्ततः।
कामो नामापरस्तत्र प्रत्यपद्यत वै प्रभो॥' १८॥

ततो रागो जातः, रक्ताश्च ते कार्य्याकार्य्ये अजानन्तः यथेष्टचेष्टा जाताः।

'तांस्तु कामवशं प्राप्तान् रागो नाम समस्पृशत्।
रक्ताश्च नाभ्यजानन्त कार्य्याकार्य्ये युधिष्ठिर॥' १९॥

'आगम्यागमनञ्चैव वाच्यावाच्यं तथैव च।
भक्ष्याभक्ष्यञ्च राजेन्द्र दोषादोषं च नात्यजन्॥' २०॥

एतावतेदं स्पष्टं ज्ञायते यत्तेषां ततः पूर्वं कर्त्तव्याकर्त्तव्यविवेकवदेव गम्यागम्यवाच्यावाच्यभक्ष्याभक्ष्यदोषादोषविवेकाः शास्त्रोक्ता आसन्नेव। अतएव धर्मेण परस्पररक्षणमपि पूर्वोक्तं संगच्छते। ततश्च कम्युनिस्टानां साम्यसंघे भक्ष्याभक्ष्यगम्यागम्यविवेको माभूत्। भीष्मवर्णितकृतयुगीय-

पुरुषेषु त्वगम्यागम्यादिविवेक आसीदेव। एतेन तदानीमनियतो यौनसम्बन्ध आसीत्, नरमांसादिभक्षणप्रथा चासीदित्यादिडाँगेमहाशयस्य जल्पनं निराधारमेव।

'विप्लुते नरलोके वै ब्रह्म चैव ननाश ह।
नाशाच्च ब्रह्मणो राजन् धर्मो नाशमथागमत् ॥'

अत्र डाँगेरीत्या ब्रह्म ननाश इत्यस्य आदिमसाम्यसङ्घो ननाश इत्यर्थः। स च पूर्वापरविरुद्धोऽर्थः। पूर्वत्र सङ्घस्याप्रकृतत्वात्। नरा मनुजा इत्येव तु प्रकृतम्। सिद्धान्ते तु प्रकृते ब्रह्मपदस्य वेद एवार्थः। व्याख्यातृभिस्तथैवाङ्गीकृतत्वात्। अतएव ब्रह्मणो वेदस्य नाशात् धर्मनाशोक्तिः संगच्छते, धर्मस्य वेदमूलकत्वात्। तथा नरलोके धर्मह्रासाल्लोभरागादिविस्तारात् वेदाभ्यासलोपाद्वेदलोपो जातः। तन्नाशाच्च तन्मूलकस्य धर्मस्यापि नाशो जातः। ततश्च ब्रह्मणि धर्मे च नष्टे देवानामपि त्रासः संजातः।

'नष्टे ब्रह्मणि धर्मे च देवांस्त्रासः समाविशत्।
ते त्रस्ताः कुरुशार्दूल! ब्रह्माणं शरणं ययुः ॥' २२ ॥

तैश्च प्रसाद्य ब्रह्मा उक्तः—

'भगवन्नरलोकस्थं ग्रस्तं ब्रह्मसनातनम्।
लोभमोहादिभिर्भावैस्ततो नो भयमाविशत् ॥
ब्रह्मणश्च प्रणाशेन धर्मो व्यनशदीश्वरः।
ततः स्म समतां याताः मर्त्यैस्त्रिभुवनेश्वर ॥' २५ ॥

अत्र स्पष्टं वेदात्मब्रह्मनाशेन यज्ञादिरूपधर्मविनाशात् यज्ञैर्देवानां यजनाद्यसंभवात् देवानां महत्त्वनाशात् देवेष्वपि मनुष्यसाम्यमापद्यते। एतेन मनुष्येभ्यो भिन्ना देवा इत्यपि सिद्ध्यति। तदुक्तम्—

'अधो हि वर्षमस्माकं नरास्तूर्ध्वप्रवर्षिणः।
क्रियाव्युपरमात्तेषां ततो गच्छाम संशयम् ॥'

यज्ञीयदुग्धाज्यसोमाद्याहुतिभिर्नरा ऊर्ध्ववर्षिणो भवन्ति, वयञ्च वृष्टिभिरधोवर्षिणो भवामः। वेदयज्ञविलोपाच्चास्माकं जीवनमपि

संकटग्रस्तं जातम्। त्वत्प्रभावोत्थो देवस्वभावोऽस्माकं यथा न नश्येत्तथा प्रयतितव्यमिति देवप्रार्थनया ब्रह्मणा—

'ततोऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम्।
यत्र धर्मस्तथैवार्थः कामश्चैवोपवर्णितः॥'
त्रिवर्ग इति विख्यातो गण एव स्वयंभुवा।

अत्र त्रिवर्गेऽपि गणपदप्रयोगान्न सर्वगणशासने गणपदप्रयोगः। चतुर्थो मोक्ष इत्येव पृथगर्थः, पृथग्गुण इति चतुर्थो मोक्षोऽपि तत्रैव वर्णितः। तत्र सत्वं रजस्तम इति मोक्षस्यापि त्रिवर्ग उक्तः। स्थानबृद्धिक्षयरूपेण दण्डजस्त्रिवर्ग उक्तः। दण्डेन धनिनां स्थितिः, धार्मिकाणां वृद्धिः, दुष्टानां क्षयो भवति। तत्रैव आत्मदेशकाला उपायाः कृत्यं सहायाः कारणञ्चेति षड्वर्गोऽपि निरूपितः। आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्चोपवर्णिता।

'त्रयी चान्वीक्षिकी चैव वार्त्ता च भरतर्षभ।
दण्डनीतिश्च विपुला विद्यास्तत्र प्रदर्शिताः॥' ३२ शा. प. ५९।

पुनश्च नीतिशास्त्रस्य कार्य्यान्वियनार्थं शासको विशिष्टो नरोऽपेक्षित इति देवप्रार्थनया भगवान् नारायणो विरजसं पुत्रं सृष्टवान्।

'अथ देवाः समागम्य विष्णमूचुः प्रजापतिम्।
एको योऽर्हति मर्त्येभ्यः श्रैष्ठ्यं वै तं समादिश॥ ८६॥
ततः संचिन्त्य भगवान् देवो नारायणः प्रभुः।
तैजसं वै विरजसं सोऽसृजन्मानसं सुतम्॥' ८८॥

विरजास्तु राज्यसिंहासनं नैच्छत्।

'विरजास्तु महाभागः प्रभुत्वं भुवि नैच्छत्।
न्यासायैवाभवद् बुद्धिः प्रणीता तस्य पाण्डव॥' ८९॥

तत्पुत्रोऽपि मोक्षाभिमुखो जातस्तत्पुत्रः कर्दमः त्वनङ्गो नाम वै सुतः दण्डनीतिविशारदः प्रजापालको जातः। अनङ्गपुत्रोऽतिबलो राज्यं प्रतिपेदे। स चेन्द्रियवशो जातः।

'अनङ्गपुत्रोऽतिबलो नीतिमानभिगम्य वै ।
प्रतिपेदे महाराज्यमथेन्द्रियवशोऽभवत् ॥' ९२ ॥

मृत्योस्तु मानसी दुहिता सुनीथा तस्य पत्नी जाता। सैव च वेनमजीजनत् ।

'तं प्रजासु विधर्माणं रागद्वेषवशानुगम् ।
मन्त्रपूतैः कुशैर्जघ्नुः ऋषयो ब्रह्मवादिनः ॥' ९४ ॥

तस्य दक्षिणोरुमथनान्निषादविशेषो जातः। दक्षिणपाणिमथनात्पृथुर्जज्ञे ।

'भूयोऽस्य दक्षिणं पाणि ममन्थुस्ते महर्षयः।
ततः पुरुष उत्पन्नो रूपेणेन्द्र इवापरः ॥ ९८ ॥
बद्धनिस्त्रिंशः सशरः सशरासनः ।
वेदवेदाङ्गविच्चैव धनुर्वेदे च पारगः ॥
तं दण्डनीतिं सकला श्रिता राजन्नरोत्तमम् ।
ततस्तु प्राञ्जलिर्वैन्यो महर्षीस्तानुवाच ह ॥
सुसूक्ष्मा मे समुत्पन्ना बुद्धिर्धर्मार्थदर्शिनी ।
अनया किं मया कार्य्यं तन्मे तत्त्वेन शंसत ॥
यन्मां भवन्तो वक्ष्यन्ति कार्यमर्थसमन्वितम् ।
तदहं वै करिष्यामि नात्र कार्य्या विचारणा ॥'

एवं महर्षीणां प्रभावेणाविर्भूय वेदवेदान्तविचक्षणो नीतिनिपुणो वैन्यः पृथुः तदाज्ञापालनाय सन्नद्धो जात इति युक्तमेव ।

'तमूचुस्तत्र देवास्ते ते चैव परमर्षयः ।
नियतो यत्र धर्मो वै तमशंकः समाचर ।
प्रियाप्रिये परित्यज्य समः सर्वेषु जन्तुषु ।
कामं क्रोधं च लोभं च मानं चोत्सृज्य दूरतः ॥ १०४ ॥
यश्च धर्मात्प्रविचलेल्लोके कश्चन मानवः ।
निग्राह्यस्ते स्वबाहूभ्यां शश्वद् धर्ममवेक्षता ॥'

किमतः परं सुन्दरम् । शश्वद्धर्मदृष्टयैव रागरोषशून्यस्य स्वार्थरहितस्य शासकस्य सर्वाः प्रवृत्तयः, प्रतिज्ञा च कारिता ।

'प्रतिज्ञाश्चाधिरोहस्व मनसा कर्मणा गिरा ।
पालयिष्याम्यहं भौमं ब्रह्म इत्येव चासकृत् ॥'

अत्र भूतलवर्त्तिनो ब्रह्मणो वेदस्य मनसा वाचा कर्मणा पालनं करिष्यामीति त्रिःप्रतिज्ञा कारिता ।

'यश्चात्र धर्मो नित्योक्तो दण्डनीतिव्यपाश्रयः ।
तमशंकः करिष्यामि स्ववशो न कदाचन ।' १०७ ।

पुनश्च—'अदण्ड्या मे द्विजाश्चेति प्रतिजानीहि हे विभो ।
लोकञ्च संकरात्कृत्स्नं त्रातास्मीति परंतप ॥ १०८ ॥
वैन्यस्ततस्तानुवाच देवानृषिपुरोगमान् ।
ब्राह्मणा मे महाभागा नमस्याः पुरुषर्षभाः ॥' १०९ ॥

बालखिल्यादीन्नृषीन् मन्त्रिणः कृत्वा सांवत्सरं कृत्वा शशास । तेनैव च राज्ञा कृषियोग्या वसुधा चक्रे । समतां वसुधायाश्च स समुदपादयत् ।

'वैषम्यं हि परं भूमेरासीदिति च नः श्रुतम् ।
मन्वन्तरेषु सर्वेषु विषमा जायते मही ॥
उज्जहार ततो वैन्यः शिलाजालान् सहस्रशः ।
धनुष्कोट्या महाराज तेन शैला विवर्धिता ॥
स विष्णुना च देवेन शक्रेण विविधैः सह ।
ऋषिभिश्च प्रजापालैः ब्राह्मणैश्चाभिषेचितः ॥ ११६ ॥
तं साक्षात्पृथिवी भेजे रत्नान्यादाय पाण्डव ।
सागरः सरितां भर्त्ता हिमवांश्चाचलोत्तमः ॥
शक्रश्च धनमक्षय्यं प्रादात्तस्मै युधिष्ठिर ।
रुक्मं चापि महामेरुः स्वयं कनकपर्वतः ॥
धर्मे चार्थे च कामे च समर्थं प्रददौ धनम् ।
हया रथाश्च नागाश्च कोटिशः पुरुषास्तथा ॥

प्रादुर्बभूवुः वैन्यस्य चिन्तनादेव पाण्डव ।
तस्य प्रभावातिशयान्न क्वापि कस्यचित्कुतश्चिद्भयम् ॥
न जरा न च दुर्भिक्षं नाधयो व्याधयस्तथा ।
सरीसृपेभ्यः स्तेनेभ्यः न चान्योऽन्यात्कदाचन ॥
भयमुत्पद्यते तत्र तस्य राज्ञोऽभिरक्षणात् ।
आपस्तस्तम्भिरे चास्य समुद्रमुपयास्यतः ॥
पर्वताश्च ददुर्मार्गं ध्वजभङ्गश्च नाभवत् ।
तेनेयं पृथिवी दुग्धा सस्यानि दश सप्त च ॥
यक्षराक्षसनागैश्चाभीप्सितं यस्य यस्य तत् ।
तेन धर्मोत्तरश्चायं कृती लोको महात्मना ॥
रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्द्यते ।'
( १२५ शा. प. ५९ )

'स्थापनं चाकरोद्विष्णुः स्वयमेव सनातनः ।
नातिवर्त्तिष्यते कश्चिद्राजंस्त्वामिति भारत ॥
तपसा भगवान् विष्णुराविवेश च भूमिपम् ।
देववन्नरदेवानां नमतेऽयं जगन्नृप ॥' १२८ ॥

तत्रैव शान्तिपर्वणि ६७ अध्याये प्रकारान्तरेण राज्यव्यस्थोक्ता । तथाहि—

'अनिन्द्रमबलं राज्यं दस्यवोऽभिभवन्त्युत ।'

इत्यादिभिः शान्तिपर्वणि ६७ अध्याये अराजकतानिन्दापूर्वकं राज्य-व्यवस्थापनमुक्तम् ।

'अराजकाणि राष्ट्राणि हतवीर्य्याणि वा पुनः ।
नहि पापात्परतरमस्ति किञ्चिदराजकात् ॥ ७ ॥
अराजकाः प्रजाः पूर्वं विनेशुरिति न श्रुतम् ।
परस्परं भक्षयन्तो मत्स्या इव जले कृशान् ॥' १७ ।

मात्स्यन्यायपीडितैर्मनुष्यैः संघीभूय सदाचारसम्बन्धिनः केचिन्नियमा निर्धारिताः ।

"वाक्शूरो दण्डपुरुषः यश्च स्यात्पारजायिकः।
यः परस्वमथादद्यात् त्याज्या नस्तादृशा इति।
समेत्य तास्ततः चक्रुः समयानिति नः श्रुतम् ॥'

भीष्मवर्णितमिदं समाजनिर्माणं सामाजिकानुबन्धाधृतम्। परन्तु नियामकाभावान्नियमपालनमशक्यं जातम्। यथेच्छं नियमोल्लंघनेन पुनरपि मात्स्यन्यायप्रवृत्तिर्जाता। ततः शासकप्राप्त्यर्थं ब्रह्माणमुपजग्मुः।

'सहितास्तास्तदा जग्मुरसुखार्त्ताः पितामहम्।
अनीश्वरा विनश्यामो भगवन्नीश्वरं दिश ॥
यं पूजयेम सम्भूय यश्च नः प्रतिपालयेत् ॥' ६७।२०-२१

ब्रह्मणा च प्रजापालनाय राजत्वेनाष्टलोकपालशक्तिनिर्मितो मनुर्नियुक्तः। स चोक्तवान्—

'बिभेमि कर्मणः पापाद्राज्यं हि भृशदुस्तरम्।
विशेषतो मनुष्येषु मिथ्यावृत्तेषु नित्यशः। २२।
तमब्रुवन् प्रजाः मा भैः कर्तृनेनो गमिष्यति।
पशूनामधिपञ्चाशद्धिरण्यस्य तथैव च ॥
धान्यस्य दशमं भागं दास्यामः कोशवर्धनम्।
कन्यां शुल्के चारुरूपां विवाहेषूद्यतासु च ॥ २३-२४
मुखेन शतपत्रेण ये मनुष्याः प्रधानतः।
भवन्तं तेऽनुयास्यन्ति महेन्द्रमिव देवताः ॥
यं च धर्मं चरिष्यन्ति प्रजा राज्ञा सुरक्षिताः।
चतुर्थं तस्य धर्मस्य त्वत्संस्थं वै भविष्यति। २७।
विजयाय हि निर्याहि प्रतपन् रश्मिवानिव।
मानं विधम शत्रूणां जयोऽस्तु तव सर्वदा ॥'

( २९ शान्तिपर्वणि ६७ अध्याये )

अत्रोभयोः समन्वयेनेदमेव निर्णेतुं शक्यते यत्पूर्वं कृतयुगे सत्त्वप्रधानाः प्रजा ज्ञानविज्ञानसम्पन्नधर्मनिष्ठा आसन्। धर्मप्रभावादेव परस्परपोषका एवासन्निति राज्यराजादिव्यवस्था नापेक्षितासीत्। कालक्रमेण सत्त्वह्रा-

सात्तमसो रजसश्चोद्भवे प्रतिपत्तिविमोहात् कामरागादिविस्ताराद्वेद-धर्मविनाशान्मात्स्यन्यायप्रवृत्तिस्ततः सामाजिकानुबन्धेन नियम-निर्माणम्। नियामकाभावान्नियमोल्लङ्घनम्। ततश्च ब्रह्मोपसदन तदनुग्रहेण मनुराजप्राप्तिः। तस्मिन्नेव मनुवंशे वैन्यपृथोराविर्भावः। विरजा अपि मनुरेव। ततोऽपि पूर्वतनः कश्चिदिति वा वेदितव्यम्।

यदपि—आर्याणां प्राचीनसाम्यसङ्घो असन्धेयैरात्मविरोधैः तीव्रगत्या छिन्नभिन्नतया भज्यते स्म। प्राच्योत्पादनपद्धत्यनुसारेण प्राच्यधर्मस्था-पनम्, प्राच्यकालिकाया उत्पादनपद्धत्या भङ्गेन तद्भङ्गोप्यनिवार्यः, उत्पादनसाधनविकासेनोत्पादनस्यानेकानि साधनान्यागतानि। प्राचीनेषु च येषु गणगोत्रेषु विरोधेन संघर्षः उदेतिस्म। स्वाधीनतां समतां चाधृत्य स्थिताः सामूहिकसम्पत्तयः दासव्यवस्थाघटितप्रातिस्विकसम्पत्ति-भिर्नाशयितुमिष्यन्ते स्म। परस्परं हिंसात्मकयुद्धेन गणभेदः प्रारब्धः। यत्सामूहिकयज्ञपरिश्रमेण साम्यसंघेन रचितम्। तस्याप्यायनम्, ततस्तद्-विभजनम्, यदेकं तदनेकतां गतम्। यत्पूर्वं लघु तद्विशालम्, प्रजापति-कामनया पशुभिरग्निप्राकट्येन तत्सम्पन्नम्। बहुभिः सह कथमेकः सम्बद्धः स्यादिति प्रश्नेनैवानेकसमस्यानामुत्पत्तिः। कृते स्थानात् स्थाना-न्तरेषु परिभ्रमणेन दुराद्दूरं तत्प्रसारः। त्रेतायां गणगोत्ररूपेण तद्-विकासः। उत्पादनैः संख्यावृद्ध्या अग्निकेन्द्रेण यज्ञात्मकैः सामूहिक-परिश्रमैः सामूहिकोपभोगैश्च प्राकृतिकनियमपालनैश्च गणगोत्रसाम्य-सङ्घस्य समस्या समाहिता। परिश्रमस्य धनस्य च वृद्ध्या श्रमविभाजन-स्यावश्यकतोद्भूता। गृहोद्योगैः खनिजधातुद्रावणैः कृषिकर्मभिश्च नूतन-समस्यानामुत्पत्तिः। गणसाम्यसङ्घेषु वर्णविभाजनं, वर्णानां वैविध्येन समूहस्यान्तरिकविभाजनम्।

एवं अखण्डस्य प्राचीनगणस्यार्थिकव्यवस्थाया गर्भात् खण्डशो विभक्तवर्णानामर्थव्यवस्था प्रवृत्ता। ततो गणाधिकारेण वर्णाधि-काराणां संघर्षः प्रारब्धः। केषुचिद् गणेषु विशिष्टप्राकृतिक-वस्तुभिर्विशिष्टरूपाणि च धनानि उत्पद्यन्ते, तद्द्वारा अन्यगणानां सम्बन्धः, तेषां चासाधारणानि स्वीयानि वस्तूनि धनानि चासन्। तेन

विनिमयः प्रारब्धः, तेन उपभोगोत्पादनापेक्षया विनिमयोत्पादनस्य महत्त्वं बृद्धिं गतम्, हवनार्थोत्पादनं पश्चात्पदं यातम्। हिरण्योत्पादनं च पुरस्कृतं सद् बृद्धिं गतम्, विनिमयाद्धेतोः सामूहिकोत्पादनं सामूहिकाधिकारश्च नष्टौ, ततो वैयक्तिकसम्पत्तिविस्तारः। तदानीमज्ञातचरा नूतना विभागा विरोधा गोत्राणां गणना च गर्भेष्वभिव्यक्ताः, धनिकानां निर्धनानां शोषकाणां शोषितानां चोत्पत्त्या गणो दुर्दशामुपगतः, भागान्तराप्राप्त्या धर्मनीतिप्रचारैः समस्या समाधानाय चेष्टितम्।

'तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्।'

'जातिजानपदान् धर्मान् श्रेणीधर्मांश्च धर्मवित्।

समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत्॥'(म० ८।४१)

इत्यादि रीत्या स्वार्थत्यागपरोपकारादिप्रोत्साहनमिति, तत्सर्वं पिष्टपेषणमेव, कृतसमाधानत्वात्। सामूहिकसम्पत्तेः प्रागेव वैयक्तिकसम्पत्तेः समर्थनात्। कृतसोमानामेव सत्रेष्वधिकार उक्तः। सत्रैरेव सामूहिकोत्पादनवितरणमयो यज्ञः सिषाधयिषितः आयुष्मता। तेन वैदिकमन्त्रब्राह्मणादि समाश्रयणेन तत् साधनम् दुर्घटमेव। आदिमसाम्यसंघोऽपि खपुष्पायित एव, न हि ब्रह्मशब्देन तत्सिद्धिः सम्भवतीत्यप्युक्तमेव।

श्रुत्यैव 'यतो वा इमानि भूतानि जायन्ते' तैत्तिरीय (उ० ३।१) 'सत्यं ज्ञानमनन्तं ब्रह्मेति' (तैत्तिरिय उ० २।१) तत्स्वरूपस्य निर्णीतत्वात्। सर्वसम्मतमितिवृत्तमपि तादृङ् नोपलभ्यते, येन भवत्समीहितं सिद्ध्येत्।

प्रत्यक्षानुमानयोस्तु तथोक्तेषु विषयेषु व्यतीतत्वेन लिङ्गाभावाच्च, प्रवृत्त्यभावः सुतराम्। न च धर्मस्थापनमुत्पादनप्रणालीसमाश्रितम् धर्मस्य वैदिकचोदनालक्षणत्वात्। अतएव न तद्भङ्गेन तद्भङ्गाप्रसक्तिरपि। समस्यामये संसारे प्रतिक्षणमनेकास्ताः समुद्यन्त्यः वञ्चयन्तीति न तच्चित्रम्। कृते चरन्नित्यस्य समाधानं जातमेव।

यद्यपि "प्राचीनरीत्या हवनदानादिनियमपालनपूर्वकोत्पादनोपभोगव्यवस्था चलिता। पालयित्र्याः शक्तेरभावात् तस्या नैष्फल्यम्।

ब्रह्मक्षत्रयोरेव तन्नियमोल्लंघनेन हवनदानादीनामात्मसात् करणे प्रवृत्तत्वात्। वर्णविभागानुरोधेन सम्पत्तीनां एकत्रीकरणम्।

यद्यपि सर्ववर्णेषु निर्धनसधनसत्ता आसीत्। तथापि ब्रह्मक्षत्रयौ वर्णदासान् स्ववशान् कृत्वा सम्पत्तिशालिवर्गरूपेण परिणतौ। विट्शूद्राणां श्रमफलशोषकौ संवृत्तौ। एवं बर्गभेदो वर्णभेदरूपेण व्यक्तः। एवम् आत्मविरोधः उत्थितः। सम्पत्तिश्रमभेदेनैकस्मिन्नेव गणे हितभेदः। तेनैव तत् सदस्यानां विरोधोऽङ्कुरितः। एवं ब्रह्मक्षत्रसम्पत्तिः विट्शूद्रलोकतंत्रप्रातिकूल्यमागता।

विनिमयाद् मुद्रोत्पन्ना, मुद्रारूपेण तेषां धनसंचयसौकर्य्यं जातम्। पारम्पर्याधिकारणे यैः शक्तिः शस्त्राणि चाधिगतानि, युद्धसंचालननैपुण्यं वार्त्ता विद्या कोशलं च येषामासीत् तेषां प्राधान्येन, गणसम्पत्तिवर्णसम्पत्योः संघर्षः। तदानीं धनं यज्ञाय, संचयाय, भोगाय वा भवति स्म।

उत्पादनस्य धनस्य च वृद्धया निगृहीतानां मृत्योर्मुक्तिः तेषां श्रमिकदासरूपेण परिणतिश्च। एवं आर्याणां साम्यसङ्घे शूद्रदासानां प्रवेशात् दासतत्स्वामिभेदेन समाजस्य द्विधा भेदनम्। साक्षात् सम्बन्धिनां रक्तसम्बन्धिनां गणेषु उत्पादकानां शूद्राणामन्यगणव्यापारिणम् तद्भिन्नानामपि सन्निवेशः। गणसङ्घस्य नियमे तेषामपरिचितानां शक्तीनां वर्गाणां सन्निवेशाय विधानं नासीत्। तेन तदर्थं नूतनानि विधानानि निर्मितानि। तैरेव तेषामार्थिकवैवाहिकसम्वन्धा निश्चिता संचालिताश्च। तेन प्राचीनगणनियमैर्नूत्ननियमानां विरोधः। नूत्ननियमानामाधारः विनिमयो वैयक्तिकसम्पत्तिश्च। प्राचीनानामाधारः सामूहिकता। गणगोत्रैः सद्धिमेव गणराष्ट्रस्याप्युत्पत्तिः। गोत्रानुसारेण रक्तसम्बन्धिनामेव मान्यता, राष्ट्रानुसारेण तत् प्रदेशनिवासिनामन्ये रक्तसम्बन्धिनामपि मान्यता भवति। वैयक्तिकसाम्यसङ्घस्य परिवारो गृहं च नाशितम्। तदन्तरेव तद्विरोधेन वैयक्तिकसम्पत्तिमुत्तराधिकारं चाधृत्य प्रातिस्विकपरिवारोत्पत्तिर्जाता। गणेन कुलस्य, प्रजापतिना गृहपतेश्च विरोधः। प्रातिस्विकपरिवारस्य गृह्याग्नेः समक्षं साम्यसङ्घस्य त्रेताग्निश्तुच्छः सन् पिङ्गलो बभूवे" ति,

तदपि तुच्छम्, निर्मूलत्वात्। तथाहि परमेशतच्छास्त्रतद्गम्यधर्माणामेव सर्वत्र नियामकत्वम्, तद्भिन्नानां तदसम्भवात्। सर्वनियामकं क्षत्रमपि-धर्मनियन्त्रितमेव भवति। अतएव धर्मस्य क्षत्रक्षत्रत्वश्रुतिः। 'क्षत्रस्यापि-क्षत्रम् यद्धर्मः, बृ० उ० १।४।१४।

अतएव धर्मनियन्त्रितं शासनमेव सुशासनं भवति। धर्मभीरुत्वाभावे शासकसंविधानयोरपि वञ्चनसम्भवात्। वर्णविभागश्च नागन्तुकः, चन्द्र-सूर्ययोरिव सृष्ट्यादावेव तदुत्पत्तिश्रवणात्। 'ब्राह्मणोऽस्य मुखमासी-दित्यादि (ऋ. सं. १०।९०।१२,) मन्त्रवर्णात्। सम्पत्तिशालिनस्तु प्राधान्येन वैदिकसंस्कृतौ वैश्या एवासन्।

ब्राह्मणा ज्ञानविज्ञानयुक्तास्तपोनिष्ठाः, क्षत्रिया बलशालिनः, शूद्रा-स्तु शिल्पधनाः। शोषकत्वं वैयक्तिकदोषमूलकं नाब्राह्मणादिधर्ममूलकं तस्य निन्दितत्वात्। सम्पत्तिश्रमयोः पोष्य पोषकं भाव एव, न विरोधः। आत्मविरोधेन वर्गभेदकल्पनन्तु मार्क्सीयबुद्धिप्रसूतं, न तात्त्विकम्। सत्त्वेऽपि तस्य दोषत्वेन निराकरणीयत्वमेव।

खलानां कृते सम्पत्तेर्मदादिहेतुत्वेऽपि सधूनां कृते दानादिहेतुत्वेन तद-दोषत्वात्। विनिमयसौकर्य्यायाय मुद्रा व्यवहारो युक्त एव। साम्यवादि-भिरद्यत्वेऽपि तदङ्गीकारात्। धनसञ्चयशस्त्रशक्तियुद्धनैपुण्यादिकमपि न दोषः, रक्षणादिषु तदुपयोगात्। विरोधिनामाक्रामकाणामाक्रानान्तु नास्ति-कानामनार्य्याणामेव शोभते। 'पद्भ्यां शूद्रोअजायत' (ऋ०सं०१०।९०।१२) इति मन्त्रवर्णेन तदुत्पत्तिश्रवणात्। कर्मभेदेनैव जातिभेद इति प्रतिपा-दितत्वाच्च।

अतएव न नूत्नविधाननिर्माणकल्पनं युक्तम्। मन्त्रब्राह्मणात्मकस्य वेदस्यैव नित्यविधानत्वाभ्युपगमात्। अतएव नाधारभेदो न वा तद्विरोधः।

राष्ट्रस्य गोत्रापेक्षया व्यापकत्वादेव तत्रानेकगोत्राणामगोत्राणाञ्च समावेशो युक्त एव। त्वदीयगोत्रकल्पनन्तु निर्मूलमेव। अतएव गोत्रस्य कुलेन, प्रजापतिना गृहपतेश्च विरोधकल्पनमपि निर्मूलमेव। वैदिकरीत्या गृह्याग्नेस्त्रेताग्नेरुभयोरपि वैयक्तिकत्वमेव। ज्योतिष्टोमेषु चयनेषु वाज-

पेयादिषु गृह्याग्नेः पिङ्गलत्वम् निर्वीर्य्यत्वं च, तत्र त्रेताग्नीनामेव प्राधान्यात्। सत्राग्नीनामेव सामूहिकत्वम्। तेन न तत्रापि विरोधो, न वा गृह्याग्निना त्रेताग्नेर्विरोधः:। उत्तराधिकारोऽपि नागन्तुकः, दायादि-शब्देन वेदे निरुक्ते धर्मशास्त्रेषु च तत्प्रतिपादनात्।

यदुक्तम्—सार्वजनिके हवनस्थाने वैयक्तिकभोजनपाचनमारब्धम्। गणानां देवानां च संतोषार्थं विश्वासार्थञ्च पाकयज्ञनाम्ना तद्व्यवहारः प्रवृत्तः।

महतां यज्ञानां स्थाने काम्या इष्टयो धनिकगृहिणां कामनापूर्त्यर्थ-मनुष्ठीयन्तेस्म। साम्यसङ्घस्याग्नेः परितो गणसदस्यानाम् श्रमार्थं भोजनार्थं चैकीकरणप्रथा समाप्ता। देवबलिरूपेण तत् चिह्नमवशिष्टम्। अतिथिभिक्षुकेभ्योपि किञ्चिद्भागो दीयतेस्म। मरणासन्नसङ्घाय-प्रतिनिधित्वेनैतावदेवावशिष्टम्। मरणासन्नगणस्य भिक्षुकातिथय एव प्रतिनिधयः। अतिथिसेवित्वगौरवप्राप्तये गृहस्थैस्तदङ्गीकृतम्। पितृ-सतया मातृसत्ताभिभूता। शक्तिशाली पुरुषः नारीणां शासकः। पत्नीनां पतिभिर्विरोधो मातृभिश्च पुत्राणां विरोधः। सामूहिकसम्पत्त्यधिकार-स्थाने वैयक्तिकसम्पत्त्यधिकारः। वेदसूत्राणां स्थाने गृह्यसूत्राणां प्रचारः। विधिमात्रावशिष्टानां वेदानां प्रगतिरवरुद्धा। यद्यपि श्रुत्यविरोधेन सौत्रा धर्मा आचरणीया इति व्यवस्थासीत्। तथापि व्यवहारात् तदुच्छेद एव। तथाहि—

'त्रेतादौ केवला वेदा यज्ञा वर्णाश्रमास्तथा।
संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे ॥ ४ ॥
द्वापरे विप्लवं यान्ति वेदाः कलियुगे तथा ॥' (शान्ति प० २३८)

नूतनशक्तयस्ततः शास्त्राणि प्राधान्यं लभन्ते। प्राचीनेषु गणेषु यानि पदानि चयनपद्धत्या निर्णीयन्ते स्म तानि पैतृकपारम्पर्येण निर्णीतानि। गणहितविरोधे व्यक्तिहितस्य प्राधान्यम्।

एङ्गेल्सरीत्या दासानां पुत्रा अपि दासाः। सम्पत्तिरेव सम्पत्त्युत्त-राधिकारिणी। दरिद्रतायै दरिद्रतैव प्राप्यतेस्म, तीव्रगत्या वर्द्धमानः संघर्षः तीव्रगत्या समाजं परिवर्तयतिस्म। शक्तिशालिवर्गस्येच्छया असंख्याः

कर्मठाः श्राम्यन्तोऽल्प-संख्यकस्वामिनां दासाः संजाताः। विट्-शूद्राः ब्रह्मक्षत्रयोः किङ्कराः संवृत्ताः। प्राचीनेषु गणेषु प्रजापशूनामेव महत्त्वमासीत्। परवर्तिकाले तु कृषिकर्मणामेव महत्त्वं प्रसृतम्। कृष्यर्थमरण्यानि छिन्नानि, तदर्थं लोहद्रावणेन कुठारादिनिर्माणपारम्पर्यं विततम्। विट्शूद्राणां साहाय्येन महत्या मात्रया कृषिकर्म प्रचलितम्। हस्तसाध्यगृहोद्योगाः कृषिकर्मभ्यो विभक्ताः। ग्रामा नगरेभ्यो विभक्ताः। योद्धृदलसंघटनेन शस्त्रहीनविट्शूद्रकृषि-क्षेत्राण्यपि ब्रह्मक्षत्राभ्यामपहृतानि। गणसङ्घस्याङ्गभूताः सैनिकाः गणशासकाः सम्पन्नाः' इति। तदपि कल्पनामात्रं निष्प्रमाणत्वात्। श्रौतसोमादियागसमयेऽपि पाकयज्ञस्य विधानदर्शनात्। अतएवाष्टचत्वारिंशत् संस्कारेषु सप्तपाकसंस्थानामपि परिगणनम्। महतां लघूनाञ्च यज्ञानां कामनया परमेश्वराराधनबुध्द्या चानुष्ठानं वेदेनैव विहितम्। 'स्वर्ग कामः पशुकामः पारमेष्ठ्यकामः यजते' 'यज्ञेन तपसाऽनाशकेन विविदिषन्ती' ति विधानभेददर्शनात्। न हि साम्यसंघस्याग्निर्भवति तस्य वैयक्तिकत्वात्। सत्रन्तु न साम्यसंघः सत्रस्य कादाचित्कत्वात् सत्रातिरिक्तकाले सत्रिणाम् प्रातिस्विकत्वमेवाग्नीनाम्। नवाग्नेः परितः श्रमो भोजनं वा भवति। न हि देवतोद्देशेन द्रव्यत्यागरूपो यज्ञ एव श्रमस्तस्य लौकिकोत्पादनानुपयोगित्वात्। न वा इडाभक्षणमेव भोजनम्, तस्य संस्कारार्थत्वेन नालौकिकत्वादतृप्तिकरत्वाच्च। देवबलिभिक्षुकातिथ्यादिसत्काराणामपि शाश्वतत्वमेव, तद्धान्या महतामपि कर्मणां नैष्फल्यश्रवणात्। अतएव खपुष्पायमाणस्य मरणासन्नस्य गणस्य न प्रतिनिधयो भिक्षुकादयः, विधानबलादेव तत्प्राप्तेः शाश्वतत्वात्। पितृसत्तया मातृसत्ता विरोधकल्पनमपि निर्मूलम्। वेदेनैव पतिपित्रनुवृत्तिविधानात्।

'अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः।

जाया पत्ये मधुमतीं वाचं वदतु शन्तिवाम् ॥' (अ०सं० ३।३०।२,)

इत्यादि मन्त्रेभ्यः। सूत्राणां वेदानुवर्त्तित्वमेव न तत्स्थानापन्नता वेदानामभ्यासपाटवमेव प्रगतिर्न नव्यमन्त्रनिर्माणम्पौरुषेयत्वेनाप्रामाण्यापत्तेः।

सत्रप्रवृत्तेः प्रागेव सोमादयो वैदिका यागा भवन्तिस्म। ते च प्रातिस्विका एव भवन्तिस्म, न सामूहिकाः। अतएव वैयक्तिकसम्पत्तेः सामूहिकसम्पत्तेरपि प्राचीनत्वेन पितृपारम्पर्य्येणैव दायादिप्राप्तिः। तत एव राज्यासनमपि पितृपारम्पर्य्येणैव प्राप्यतेस्म। निर्वाचनेन तच्चयन प्रणाल्या एव नवीनत्वमिति मन्तव्यम्।

गणहितविरोधे व्यक्तिहितस्य प्राधान्यन्तु भारतीयसंस्कृतौ नास्त्येव, समष्टिहितविरुद्धस्य वैयक्तिकहितस्य त्याज्यत्वोपदेशात्।

'त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥'

अत्रात्मशब्देन कार्यकारणातीतब्रह्मात्मा ग्राह्यः। तस्यैव सर्वशेषित्वात्, तदर्थं सर्वस्यैव त्याज्यत्वात्।

तथाकथितमार्क्सीयपरिकल्पितदासत्वप्रथा अन्या। आर्याणान्तु शूद्रो वर्णो धर्मबुद्धचा ब्राह्मणादीनां दास्यं स्ववर्णधर्मरूपेण तथा स्वीकरोति। यथा शिष्या गुरोर्दास्यं,वैष्णवा वा हरेर्दास्यं मुदा कुर्वन्ति। तथा च दास्यस्य जातिधर्ममूलकत्वेन दासपुत्रा दासा भवन्ति इत्यत्र किमाश्चर्यम्? यथा ब्राह्मणपुत्रस्य ब्राह्मणत्वं तथैव तदपीति मन्तव्यम्। सम्पत्तिरेव सम्पत्युत्तराधिकारिणीत्येवमादिकन्तु निर्मूलम् पुत्रादीनामेवोत्तराधिकारित्वात्।

सम्पत्तिसत्त्वे विविधोद्योगसम्भवेन सम्पत्तिवृद्धिः भवति। दारिद्रये तदभावात्तदलाभाद् दारिद्रयमेव वर्धते। अतएव दारिद्रयविनाशाय व्यक्तिभिः समाजेन च सदैव यतनीयम्। 'अनिर्वेदः श्रियो मूलम्' (वा.रा.सु.का.१२।१०)

नात्मानमवमन्येत, पूर्वाभिरसमृद्धिभिः।
आमृत्योः श्रियमन्विच्छेन्नैनांमन्येत दुर्लभाम्॥ (म. ४।१३७)

'उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु।' इति वचनेभ्यः।

यद्यपि संघर्षस्य प्रभावशालित्वे समाजः प्रभाव्यते तथापि वस्तुतत्त्वानुरोधिनो नियमाः स्थिरा एव भवन्ति। यथा चक्षुषा रूपग्रहः, घ्राणेन गन्धग्रहो वा। उद्योगपतीनां नव नव यन्त्रादिनिर्माणप्रयासात् बहुसंख्यकजनवर्गस्य निरुपयोगित्वनिर्जीविकत्वादिकं तु महायन्त्रप्रवर्तनफलम्। मन्वादिभिस्तु महायन्त्रप्रवर्तनस्योपपातकत्वेन

विरोध एवोक्तः। परं मार्क्सीयैस्तु तत्प्रोत्साहनमेव काम्यते।

निर्जीविकत्वादिनिराकरणायैव मनुनाऽसाधुधनापहारेणापि समेषां सक्षमत्वसम्पादनं समर्थितम्।

'योऽसाधुभ्योऽर्थमादाय साधुभ्यः सम्प्रयच्छति।
स कृत्वा प्लवमात्मानं सन्तारयति तावुभौ॥ (११।१९)

इति च तद्वचनात्। अतएव ब्रह्मक्षत्रयोः स्वामित्वं विट्शूद्रयोर्दासत्वमपि दूषणीयमेव। तस्य क्वाचित्कत्वेन निर्मूलनीयत्वात्। कृषिप्रवर्त्तनम् तदर्थमरण्यच्छेदः पशुपालनस्य गौणत्वं महता संरम्भेण कृषिविस्तारं लोहविद्रावणशिक्षणं नव-नवकृषियन्त्रादिनिर्माणञ्च यद्यपि सर्वसामञ्जस्येन सर्वहितबुध्यैव प्रवृत्तं तथापि केचित् दुरभिन्धिमूलकत्वमपि तस्य नासम्भावि, संसारस्य रजस्तमो बहुलत्वात्। तावतापि न तस्य समाजे वैधत्वम्। कार्य्यबाहुल्ये विभागो नियन्त्रणञ्च नास्वाभाविकम्। तत्र समष्टिहितवैमुख्यम् स्वार्थान्धाता च निन्द्य। एव। गणसंघस्य सैनिका एव शासकाः संवृत्ता इति तु निर्मूलमेव।

यदपि—'जनसंख्या वृद्धया निविडासु वसतिषु सम्बन्धिगणानामेकसूत्रतयैकीकरणं आवश्यकं भवति। तेन गणानां विविधानि क्षेत्राणि एकीभूय राष्ट्रपदेन व्यपदिश्यन्ते। तदानीं जनतायाः कृते युद्धसचालनाय च राज्ञोऽत्यपेक्षा भवति। तमन्तरा प्रगतिरेव न सम्भवति। स युद्धसंचालकः स्थिराधिकारी भवति। यत्र यत्र जनसभानामभावस् तत्र तासामुत्पत्तिर्भवति। युद्धसंचालको राजा जनतायाः लोकसभादयो ये गणसमाजस्याङ्गभूता आसन् तेषु सैनिकलोकतंत्ररूपेण परिवर्त्तितस्य गणसङ्घस्य सेनाप्रामुख्येनाङ्गम्, यतो युद्धं प्रत्यहमनिर्वार्यं जातं, धनप्राप्तिस्तेषां सैनिकानाम जीवनलक्ष्यं, पार्श्ववर्त्तिनाम् धनमालोक्य लोभः प्रवृद्धः। परिश्रमोत्पादितधनापेक्षया शौर्यवीर्य्याभ्यां वजित्य धनाहरणस्यात्र वन्यानां बुद्धौ महत्त्वमासीत्। यानि युद्धानि पूर्वं वैरनिर्यातनार्थान्यासन् तानि इदानीं योगक्षेमविस्तारार्थानि संवृत्तानि। अन्ते परधनाहरणार्थान्येव युद्धानि प्रवर्तन्ते स्म। ब्रह्मक्षत्राणि धनसमृद्धानि स्वरक्षार्थं नगराणि दुर्गाणि च निर्ममुः। बाह्याक्रमणभयात् विद्रोहिश्रीमकगणभयाच्च

तदावश्यकमासीत्। ब्रह्मक्षत्रवर्गस्य विट्शूद्रवर्गाद् विरोधः प्रसृतः। दरिद्रा भूत्वा ते वैश्या अपि विजितशूद्राणां नैकट्यमुपगच्छन्ति स्म। ये पूर्वं त्रिवर्णांशा शूद्राणां पराजयेन प्रसीदन्तिस्म। कदाचिदयं दृप्तो वैश्यवर्गः ब्रह्मणः साम्यसङ्घस्य रूपमासीत्। ततो ब्रह्मक्षत्रोत्पत्तिः। स एव दरिद्रो भूत्वा निगडितः सन् विक्रीयते स्म। तस्य विजेतुरार्यसङ्घस्यांगत्वाच्च विवाहादिषु वैवाहादिकाः संस्काराः भवन्ति। तथापि व्यवहारतस्ते शूद्रकोटिमुपगताः।

ते विक्रयार्हाः संवृत्ताः। लोकान्निराशाः पारलौकिकस्वर्गप्राप्त्यर्थं प्रयतमानास्ततोऽपि न चिराद् भ्रश्यन्ति स्म। ब्राह्मणानां नेतृत्वे च लग्नाः क्षत्रियाः तेष्वप्याधिपत्यं स्थापयामासुः। प्रथमं वैश्यलोकतन्त्रस्य भूमेरन्तः, पश्चात् स्वर्गस्य।

एङ्गेल्सरीत्या अपहरणयुद्धानां बाहुल्यात् प्रमुखसंचालकानां अंगसंचालकानां च शक्तय आप्यायिताः। पूर्वं चयनिकयोत्तराधिकारनिर्णयपारम्पर्यमासीत्। तच्च पितृसत्तया पैतृकाधिकाररूपेण परिवृत्ताम्। पश्चात् युद्धेन बलादधिकारप्राप्तिपारम्पर्यं प्रवृत्तम्। एवं पैतृकराजत्वं पैतृकमाभिजात्यं चाङ्कुरितम्। तेन गणविधानस्य यानि अंगमूलानि, जनसाधारणेषु, गणयूथेषु प्रसृतानि, तानि निर्भिद्य छिन्नानि। ततोऽसौ साम्यजनसङ्घस्यात्मविरोधिरूपेण परिवर्त्तितः।" इति

तदपि तुच्छम्, कपोलकल्पितत्वेन निर्मूलत्वात्। जनसंख्यावृद्ध्या वसतयो घनीभूता भवन्ति। ग्रामनगरपत्तनादिबाहुल्येन राज्यराष्ट्रादिनिर्माणन्तु स्वाभाविकम्। वेदेऽपि 'आराष्ट्रे राजन्य' (वा० सं० २२।२२।) इत्यादिरूपेण वर्णितमेव तत्। तत्तद्विविधानां वर्णानां जातिजानपदश्रेणीनां सन्निवेशोऽपि भवत्येव। व्यवस्थार्थं नियमास्तत्पालनार्थं नियन्तारोऽप्यपेक्ष्यन्त एव। न केवलं युद्धसञ्चालनार्थं किन्तु दुष्टनिग्रहशिष्टपरिपालनादिना राष्ट्रसुव्यवस्थार्थमपि नृपोपयोग आसीत्। युद्धसञ्चालकस्तु ततो भिन्नः सेनापतिरिदानीमिव पुराऽपि भवति स्म। वेदादिषु तथैव वर्णनात्। अमात्यमण्डलजनप्रतिनिधिमण्डलादिरूपेण सभासमित्यादयस्तु लोकवृत्तविवित्सया लोकप्रिप्रीषयाऽपेक्षिता इति

वेदसम्मतमेव । परन्तु गणसंघस्य सैनिकलोकतन्त्ररूपेण परिणतिस्तु प्रमाणशून्यैव । राष्ट्रेन सेनायाः प्रामुख्यं किन्तु राज्ञ एव । वेदेषु धर्मशास्त्रेषु राजधर्मविस्तरोपलम्भात् । युद्धस्य कदाचित् दैनन्दिनकार्य्यत्वेऽपि न तस्य सार्वकालिकत्वम् । धनप्राप्तिः परस्वापहारादिकं वा न युद्धोद्देश्यम् तस्य निन्दितत्वात्, शास्त्रनिषिद्धत्वाच्च ।

आक्रमणप्रतिरोधार्थं भीतजनत्राणायान्यायनिवारणार्थायैव युद्धानि वैधानि, वेदादिशास्त्रेषु तथैव विधानोपलम्भात् । अतथाविधानि युद्धान्यनार्य्यजुष्टान्येव । विद्रोहिश्रमिकगणकल्पना तु मार्क्सीयानां स्वसंस्कारसमुद्भूता । वैश्यशूद्रवर्गाभ्यां सह ब्रह्मक्षत्रयोर्विरोधकथनमपि कल्पनाप्रसूतमेव । वैश्यवर्गस्य साम्यसंघरूपता तस्य च ब्रह्मक्षत्रोत्पत्तिरति कल्पनमपि निर्मूलमेव ।

'यतो वा इमानि भूतानि जायन्ते ।

येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्ब्रह्म' (तै.उ.३।१)

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै०उ०२।१) इत्यादि श्रुतिभिर्जगदुत्पत्तिस्थितिलयलीलस्य अनन्तसत्यज्ञानानन्दात्मकस्य वस्तुनो ब्रह्मत्वावधारणात् । एतेनैव सर्वस्यैव त्वत्कल्पनाप्रासादस्यावसादः । अतएव वैश्या दरिद्रा भूत्वा शूद्रकोटिमनुप्रविष्टा इत्यपि निरस्तम्, तेषां रमणीयचरणत्वेन वेदाधिकारसम्पन्नानामद्यापि त्रैवर्णिकत्वेन परिगणनीयत्वात् । ते च लोके स्वर्गे चाद्याप्युत्साहवन्तः सन्ति ।

अनादिकालादेव वेदादिशास्त्रानुसारि दायादिविधिरत्रासीत् । आभिजात्यस्य पैतृकराजत्वस्य वैशिष्ट्यं वैदिकविधानानुकूलमेव । वैदिकविधानस्य सर्वदैव नास्तिक्येन शैथिल्यमास्तिक्येन च दार्ढ्यं भवति ।

यदप्युक्तम्—प्रथमतोऽयं वर्गः गणानां यूथानामेकं सङ्घटनमासीत् स्वातन्त्र्येण शास्तिस्म । पश्चात् तस्य पार्श्ववर्त्तिनां धनापहारकत्वे तदङ्गानां रूप विकृतम । तत एव स्वीयानेवाभिभूय प्रशास्य तान्यङ्गानि शासकानि जातानि । एवं ब्रह्मक्षत्रवर्गः शोषितैरिव स्वीयैरपि युयोध । पूर्वं रक्तमिश्रणात् साक्षात् रक्तसम्बन्धिसंसर्गजसंतानेभ्यो भयमासीत् । पश्चाद्

वर्णसांकर्याद् भयम्। कदाचिद् शूद्रा दरिद्रा वैश्याश्च संसृज्य शोषकाणां सम्पत्तीः पितृसत्ताः राजसत्ताश्च समूलमुन्मूल्य प्राचीनगणतंत्रं स्थापयेयुस्तदा महान् विप्लवः स्यादिति भयम् शासकवर्गस्यासीत्। वर्गयुद्धभयाच्छाशकाः कम्पन्तेस्म। समूहवादस्य प्रथा श्रमिकनिधिरूपेण तदापि वर्तमानासीत्। तदुन्मूलनाय शासकानां प्रलयः, शोषिताश्च वैयक्तिकैर्धनैरस्त्रशस्त्रैश्च राजसत्तया बहुसंख्यकानां श्रमिकाणां दास्यं बद्धमूलं न भवेदिति प्रयतमाना आसन्। महाभारतात् पूर्वमेव गणा विकसिताः देवानामिवासुराणामपि साम्यसङ्घ आसीत्। पूर्वं कृषिकर्मद्वारा व्रीहियवादिविकासः कृतः। देवा भयात् पलायिता इति देवासुरसंग्रामात् विज्ञायते। देवगणाः शिल्पादिषु, शस्त्रास्त्रनैपुण्येष्वसुरानपेक्ष्य पश्चात्पदा आसन्। असुरेभ्य एव सेनानेतृत्वं शिक्षितम्। मातृसत्तात्मकगणसाम्यसङ्घस्य यज्ञप्रणाली तैरसुरैरङ्गीकृता।" इति,

यदपि च—"आर्यैः खृस्तीयकालात् त्रिसहस्त्रवर्षेभ्यः प्राक् सिन्धोस्तटेषु मूलनिवासिषु विजयः, वर्णव्यवस्था दासप्रथा च समासादिता। तदनन्तरं सैनिकलोकतंत्रव्यवस्था। वर्गहीनसामाजिकविधानभङ्गः। राज्यव्यवस्था स्थापिता। परशुरामहैहयादिगणेषु वर्णयुद्धं च प्रवृत्तम्। ततो गङ्गातटम् यावत् क्षेत्रविस्तारः। तदानीमेव महाभारतयुद्धं प्रवृत्तम्। भीषणध्वंसात्मकभारतयुद्धानन्तरं गणानां पुनः प्रसरावसरः समागतः। तथापि सामन्तराज्यविस्तारैः तत्साफल्यमवरुद्धम्। वैराजगणस्य वर्णनमुपलभ्यते कौटलीयेऽर्थशास्त्रे। राजतंत्रीयप्रमुखपुरुषैर्निन्दित्वेन गणाश्चर्चिताः। अराजकतावादोपि तथैव प्रख्यापितः। गणसमाजे स्वपरेति प्रश्नो नोदेतिस्म। महाभारते उक्तं प्रथमं सर्वे अराजके गणे न्यूषुः। परस्परमुपघ्नन्तो नेशुः। ततः सावशिष्टाः पितामहं ब्रह्माणमुपजग्मुः। तत् सम्मत्या राजतत्रं स्थापयामासुः।' इत्यादि

तदपि तुच्छम्, निर्मूलत्वादेव। सर्वत्रै वशास्त्रसदाचारसंस्कारशून्यानां शासनसविधाननियन्त्रणरहितानां परस्परापहारादौ प्रवृत्तिर्भवति। इह तु उत्तमाः शास्त्राचार्य्योपदेशसंस्कारनियन्त्रिता; मध्यमा राजनियन्त्रिताः, अधमा एव उच्छृङ्खलाचारत्वेन वैवस्वतयम-नियन्त्रिता भवन्ति।

'गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम्,
इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥' इत्युक्तेः।
( म. भा. उ. प. ३५/७१ )

महाभारतानुसारेण सामाजिकानुबन्धेन राज्यव्यवस्था स्थापिता, न स्वीयाभिभवेन बलात्कारेण वा। सत्त्वाधिक्यात् कृतयुगे सर्वे ज्ञान-विज्ञाननिष्ठा ब्रह्मनिष्ठा सर्वभूतहितैषिणः राजराज्यधनपेक्षा धर्मेणैव नियन्त्रिता आसन्। सत्त्वाभिभवे रजस्तमसोरुद्भवे च मात्स्यन्याय-प्रवृत्तिर्जाता। ततो ब्रह्मप्रार्थनया तत्संमत्या च राज्यव्यवस्था—

"न वै राज्यं न राजासीन्न च दण्डो न दाण्डिकः।
धर्मेणैव प्रजाः सर्वा रक्षन्तिस्म परस्परम् ॥"
( म. भा. शा. प. ५९।१४ )

इत्यादि बचनेभ्यः। परस्परयुद्धादिकं तु मात्स्यन्यायं नातिशेते। सगोत्र-विवाहस्येवासवर्णविवाहस्यापि निषिद्धत्वादुभाभ्यां भीतिरपि युक्तैव, धर्महीनशासकानां सर्वतोभये सत्यपि धर्मनियन्त्रितानां पुत्रनिर्विशेषं प्रजापालनतत्पराणां न कुतोऽपि भीतिः। संघर्षे सति राज्ञां बद्धमूलकत्व-शक्तिशालित्वाभ्यां प्रजानां भीतिः, प्रजानां सैनिकानाञ्च संहतिभ्यो राज्ञां भीतिर्भवत्येव। तत एव राज्ञा न संहता नैव च भिन्नवृत्तयः प्रजाः सैनिकाश्च निर्मातव्याः। अनादौ संसारे महाभारतात्पूर्वं पश्चाच्च गणानां विकासो जातो भविष्यति च।

धर्मनियन्त्रितं राजतन्त्रं शासनं धर्मानुगुणम्, वेदादिशास्त्रसंमतं, धर्मार्थकाममोक्षफलकं सर्वत्र संसारे समादृतम्। अन्यानि शासनतन्त्राणि प्रयोगावस्थान्येव। कानिचित् परीक्षितानि वैफल्यमुपगतानि; कानिचिन्ना-चिराद्वैफल्यमुपयास्यन्ति। धर्मनियन्त्रितंराजतन्त्रं तु सृष्टिमारभ्य प्रलयं यावत् स्थास्णु, धर्महीनन्तु तदन्यतन्त्रवदनेकदूषणोपप्लुतम्।

तेनैव शोषणोन्मूलकमपि तच्छोषणहेतुत्वं प्रतिपद्यते। रामराज्यन्तु तदादर्शभूतं शासनं यत्र रामचन्द्रेण प्रतिज्ञातं—

'स्नेहं दयाञ्च सौख्यञ्च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा।' (उ०रा०च०१।१२)

राजतन्त्रविरुद्धानि कानिचिद् गणतन्त्रशासनानि कदाचिदमोघानि संभाव्यन्ते। परं न रामराज्यादिवत्तेषामुल्लेखनीयता।

एतेन 'कैश्चिद् गणैरेवमुक्तं यद् राजतंत्रव्यवस्था त्वया स्वान्तिके रक्षणीया। गणा अराजकतायां तुष्टाः सन्ति। जैनसूत्रेषु आर्याणी, गणाय्याणी, जुआर्याणी, दोरज्जणी, वीरज्जणी, विरुद्धरज्जणी षण्णां गणानां वर्णनम्। तत्रसमाजव्यवस्थायां दासप्रथा शोषणादिकं नासीदेव। महाभारते कौटलीये चैते घृणास्पदत्वेन दृश्यन्ते। परमथर्ववेदे तत्समर्थनं लभ्यते। 'ज्यायस्वन्तश्चित्तिनो मावियौष्टसंराधयन्तः साधुराश्वस्तः अन्योऽन्यस्मै वल्गुवदन्तः,

'एत सध्रीचीनान् वः संमनसस्कृणोमि ॥

समानीप्रपा सह वोन्नभागः समाने योक्त्रे सह वो युनज्मि।

( अथर्व० ३।३०।५-६ )

इति रीत्या यूयं अन्योन्योपोद्वलिता एकयष्टिश्रयेणचलन्तोन्योन्यशुभमाचरथ। युष्माकं पेयं भोजनं च समानमस्तु। युष्मानेकस्मिन्नेव मार्गे युनज्मि। यणविधानमुपलभ्यते।

यूनानीलेखकैरपि गणाश्चर्चिताः। अन्यादृशेषु गणेषु वैराज्यविधानप्रचलनमासीत्। राजतंत्रविकासो नासीत् तथाप्यत्र वर्णरूपेण श्रमविभाजनं सम्पत्तिवैषम्यं पितृसत्ता दासता च विकासमुपगता। उत्तरभारते उत्तरकुरुमद्रहिमवन्नाम्ना प्रसिद्धाः गणाः। तत्र लोकतंत्रानुसारि शासनमासीत्। तत्र चतुर्थोऽपि वर्णो विकसितः। शासनवैभवेन ते विराट्पदं प्राप्ताः। पुरुषसूक्तं तदानीमार्यगीतमासीत्। शूद्राणां च स्वामिनः आर्याः। लोकसभया तत्र शासने व्यवस्था क्रियते स्म। परं तत्र शूद्राणां निवेशो नासीत्। पश्चात् तु दरिद्रा वैश्या अपि ततो निष्कासिताः। पश्चिमभारते स्वाराज्यसंघटनप्रणाल्या शासनमासीत्। कुलानां समूहस्तु गणः संपरि-कीर्त्तितः। वीरमित्रोये 'एतस्याम् प्रतीच्यां दिशि ये के च नीच्यानां राजानो येऽपच्यानां स्वाराज्यायैव तेऽभिषिच्यन्ते स्वरालित्येनान अभिषिक्तानाचक्षते।' ( ऐ०ब्रा०३८।३ ) य एवं विद्वान् वाजपेयेन यजते गच्छति स्वाराज्यं। तिष्ठन्तेऽस्मै ज्येष्ठाय' (तै० ब्रा० १।३।२।२)

गणानां क्रियाशीलता संचालनार्थं येऽभिषिच्यन्ते ते ज्येष्ठशब्देनाख्यायन्ते स्म। लघुकायेषु गणेषु विश (वैश्या) एव व्यवस्थापकाः। युद्धसंचालनार्थं कश्चिन्नेता सर्वैर्व्रियतेस्म। अनन्तरं युद्धस्य जीविकार्थत्वेन तन्नेतृत्वं च स्थायीभावमुपगतं विशाम्भवनं पूर्वं समितिनरिष्ठंवासीत्। पश्चात् तत् स्थानापन्ना सभा जाता। तदानीं निर्वाचितनेतृत्वं पैतृकराजत्वं च विशेषाधिकारप्राप्ताभिजातीयतामुपागतम्।' इत्यप्यमास्तम,

वचनच्छायैर्वचनाभासैस्तात्त्विकार्थासिद्धेः। महाभारतं कौटलीयार्थशास्त्रञ्च वेदमूलकं वेदानुप्राणितं तदनुगुणमेवार्थं प्रतिपादयतः। तस्मादथर्वोक्ता ऋग्वेदीयाश्च यादृशा मन्त्राः सांमनस्यसूक्तत्वेन प्रख्याताः सर्वत्र सामनस्यं सांमञ्जस्यञ्चोपदिशन्ति, जपानुष्ठानादिभिः सम्पादयन्ति च तत्, न गण एव सांमनस्यमपेक्षितम्। कुटुम्बेषु कुलेषु जातिषु ग्रामेषु राज्येषु किं बहुना विश्वस्मिन् जगत्यपि तदपेक्षितमेव। तेन सांमनस्यप्रतिपादकसूक्तेन गणतन्त्रशासनं समर्थ्यते इति निर्मूलमेव।

किञ्च नहि गणसमूहादिशब्देन सर्वत्र पारिभाषिकगणशासनमेव विवक्षितं भवति। विश्वेदेवगणा मरुद्गणाः सुरगणा दैत्यगणा इत्यादौ समूहविशेषबोधनार्थमेव गणशब्दप्रयोगात्। एवमेव मातृनामसंकेतितदैत्यदानवकाद्रवेयमानववैनतेयादिनामभिः मातृसत्तात्मकं शासनं न विवक्ष्यते। सर्वेषां तेषां प्राजापत्यत्वेन परस्परव्यावृत्त्यर्थमेव मातृनामसंकेतसार्थक्यात्। प्राजापत्या अपि, दितेः पुत्रा दैतेया, कद्रवाः काद्रवेया, विनताया वैतनेया इत्यादिरूपैस्तेषां भिद्यमानत्वात्। त्वदभिमतेषु गणेष्वपि राजव्यवस्था दर्शनान्न सर्वत्र गणतन्त्रशासननिर्देशाभिप्रायेण गणनामोल्लेखः। तदभिप्रायेणैवोद्धृतैः ऐतरेयतैत्तिरीयवचनैस्तेषां तेषां समूहशासकानामभिषेकादिविधानं संगच्छते। तत्रापि वर्णविवेको भवत्येव त्रैवर्णिकानां वैदिकाभिषेकनिषेधात्। राजसूये क्षत्रियवर्णस्यैवाधिकाराच्च। उत्तर-कुरु-मद्र-हिमवदादिशब्दास्तु देशमूलकतन्निवासिजनसमूहमात्तद् बोधका न गणतन्त्रशासनबोधकाः। पुरुषसूक्तन्त्वपौरुषेयवेदान्तर्गतत्वादनाद्येव न कादाचित्कं केषाञ्चिदेव गीतम्। तत एव प्राक्तनकर्मानुसारेण जातिभेदो मन्त्रैर्ब्राह्मणैः पुराणेतिहासैश्च साधित

एव । राजतन्त्रे लोकसभायाः परामर्शविशेषेष्वेवोपयोगः न संविधान-निर्माणे, राजकीयनियमनिर्माणे वा, वेदादिशास्त्रलक्षणस्य विधानस्य नित्यसिद्धत्वात्। परामर्शसभासु तु न वैश्यशूद्राणामेव किन्तु सर्वेषां वर्णानां सर्वासाञ्च श्रेणीनां प्रवेशो वाल्मीकीयरामायणादौ स्पष्टम्। श्रीरामस्य यौवराज्यार्थं चक्रवर्त्तिना दशरथेन तत्प्रतिनिधींश्चाहूय तेभ्यः संमतिर्गृहीतैव।

अत एव लोकसभया शासनव्यवस्था क्रियते स्म। तत्र शूद्राणां प्रवेशो नासीत् वैश्याश्च तत्राश्च्याविता इति निरर्थकं वचः।

पश्चिमे भारतेऽपि वेदादिशास्त्रानुकूलमेव शासनमासीत्। नीचग्रावाच्यशब्दैरपि तन्निवासिन एवाभिप्रेयन्ते। तेषाञ्च राजानः क्षत्रिया एवाभिषिच्यन्ते स्म। वैदिकाभिषेकेषु तन्नियमात् वाजपेयस्यापि ब्रह्मक्षत्रकर्त्तृकत्वेन तत्राप्यन्यनधिकारात्।

प्रजासु जातिषु गणेषु सर्वत्रैवाभिषकेण ज्यैष्ठ्यप्राप्तिर्न गणेष्वेवेति तेनापि न त्वदभिमतगणशासनसिद्धिः। युद्धसञ्चालनार्थं कश्चिन्नेता व्रियते। नेतृत्वस्य स्थायित्वं जातमित्यप्यनुमानमेव। तदपि सत्तर्कशून्यम विश्वभर्त्तुः परमेश्वरस्येव तत्तज्जातिषु देशेषु शासकस्य राज्ञः प्रमाण-सिद्धत्वात।

विशां भवनं समितिर्नरिष्ठं वासीत्। तत्स्थानापन्ना सभा जाता इत्यपि प्रमाणशून्यम। ब्राह्मणक्षत्रियाणामिव विशामपि भवनं प्रातिस्विकमेव भवतिस्म, न तु समितिरूपम्। समितिसभयोरेकार्थत्वमेव।

पैतृकराजत्वं तु पुराणेतिहासेषु स्पष्टं वर्णितम्। गणतन्त्रस्य परिणामभतं तदिति तु निराधारमेव। वेदपुराणेतिहासविरुद्धत्वात्। त्वत्कालिपस्येतिहासस्य मिथ्यात्वेनाप्रमाणत्वाञ्च। विश्वोत्पादयितु-रीश्वरस्य स्वधर्मपालनबलेनानुग्रहमवाप्य शासनाधिकारप्राप्तिश्रवण-स्मरणेभ्यः।

देवेषु दैत्येषु च यज्ञसत्त्वं न चित्रम्, समष्टिव्यष्टि भावस्य सार्वत्रिक-त्वात्। वैधर्म्येण पार्थक्यम् साधर्म्येणैक्यं च सर्वत्रानुभूयते। मनुष्यविशेषा

एव देवा दैत्या वा इति युष्मदादीनां सुधारकाणां मतम्। मनुष्येभ्यो विशिष्ट-शाक्त्यैश्वर्यवीर्य्यशालित्वेन विलक्षणत्वात्तद्भिन्ना एव त इत्यास्तिकाः। तेष्वपि परस्परं वैलक्षण्यम्, सत्त्वबाहुल्येन देवत्वं रजोबाहुल्येनासुरत्वम् च। प्राजापत्यत्वेनोभयेषामपि यज्ञाधिकारात् यज्ञे प्रवृत्तिः। उभयेऽपि दानवा दैत्या आदित्या आदि शब्दैः मातृनाम्ना प्रसिद्धाः। तेन दैत्यैः मातृ-सत्तात्मकसाम्यसंघः स्थापित इति रिक्तं वचः। तत्रापि न तत्संघाना-मादिमसाम्यसंघत्वं न वा ब्रह्मत्वं, न वा तेषां यज्ञवस्त्वदभिमतसामूहिको-त्पादनवितरणप्रणालीरूपो वा। तेषां कालकल्पनमपि पाश्चात्य-मतानुसरणमेव। भारतीयदृष्ट्या तु किञ्चिदूनार्बुदद्वयकालकलिते-यं सृष्टिः। सृष्ट्यादावेव देवासुराविर्भावः। परशुरामादीनां दीर्घायु-ष्ट्वेन रामावतारपूर्वभावित्वेऽपि भीष्मकर्णकौरवसभा सम्बन्धो ज्ञायते। परशुरामेण स्वपितृहन्तुः कार्तवीर्य्यस्य तद्वंश्यानाञ्च वैरनिर्य्यात-नार्थमेव वधः कृतः, न सर्वक्षत्रियाणाम्। ते न न तद्वर्णयुद्धं वक्तुं शक्यम्। अन्ये ब्राह्मणास्तु क्षत्रियाणामनुग्रहीतार एवासन्। रक्षिताश्च तैरनेकाः क्षत्रियसन्ततयः। तेन तदप्यर्थहीनं वचः। ब्रह्मणोऽनुमत्या मात्स्यन्याय-पीडिताः प्रजाः राजतन्त्रं प्रतिष्ठापयामासुरिति तूक्तमेव।

"तदर्थमेव महाभारतं युद्धं प्रवृत्तम्। मनुरन्ये च हिन्दूशासनव्यवस्था-विधायकाः ब्रह्मावर्त्तार्य्यावर्त्तादिप्रदेशान् वर्णयन्ति। आधुनिकं भारतं त्वाधुनिकसभ्यताया एव फलम्।

सर्वैरेतदभ्युपगम्यते यद् महाभारतयुद्धमितिहासस्य तादशी घटना यया विकासमार्गः परिवर्त्तितः। अत एव महाभारतपूर्वस्येतिहासः महा-भारतस्येतिहासः इति विभागः प्रसिद्धः महाभारतयुद्धानन्तरं कलि-प्रारम्भ इति परम्परावादिनां मतम्। रामरावणयुद्धं महाभारत-युद्धात् पञ्चशतवर्षेभ्यः पूर्वं वृत्ताम्, तथापि तस्य युगस्यैतिहासिक-तथ्यविवरणं तथा नोपलभ्यते महाभारते यथा स्पष्टं विवरणम्। वाल्मी-किरामायणरचना तस्याश्च काव्यशैली अर्वाचीना प्रतीयते। महाभारत परवर्त्तिकालस्य प्रतिनिधित्वं तत्र लक्ष्यते। मन्ये रामायणकवेः विचार-धारायाः प्रतिकूलो महाभारतनायकः, अतएव तेन तादृङ्नायको वृतः

यत्संबन्धे सर्वसाधारणस्मृतेरविषयत्वात् स्वेच्छया किमपि वक्तुं शक्यं स्यात्। अत एव वाल्मीकिना आदर्शवादिनायको राजा रामचन्द्रः परमेश्वर-रूपेण परिणमयितुमिष्टः। परन्तेन साफल्यं नाधिगतम्। किन्तु प्रियदर्शि-रूपेणैव स्थितः। येन दमनद्वारा राज्यं स्थापितम्। छद्मना बालिवधेन तस्य सत्यप्रियता, शम्बूकबधेन च मानवता मिथ्यैव जाता। तस्यादर्शैक-निष्ठभावनाऽपि परम्परया साशंकं दृष्टा।

जैनसूत्रेषूक्तं-रामस्तस्मिन्नादिमयुगे प्रादुर्भूतो यदा भ्रातृभगिन्यो-र्विवाहपरम्परासीत्। सीताऽपि रामस्य भगिन्येवासीत्। वाल्मीकिनाऽपीदं तथ्यं रामायणे गोपयितुमशक्नुवताऽयोनिजा सीता गृहे नोत्पन्नेत्युक्तम्। दशरथस्य काले प्राचीनगणलोकतन्त्रस्यान्तो जातः। रामस्य यौवराज्याय रघूणां सम्मतिरपेक्षितासीत्। अस्मिन् विधौ पैतृकराजवंशस्य राज-तन्त्रवादस्य चाभासः प्रास्फुरत्। रघूणां शासने शूद्रदासानां कठोरदमन-मासीत्। गणानामान्तरिकविरोधमुपजीव्यैव रामस्य गणशासनविरुद्धं परितोऽभियानम्। रामस्य राज्यं महाभारतप्राक्कालिकेषु दासशासन-तन्त्रेष्वन्यतममासीत्।

यद्यपि बहुकालं रामकुलपारम्पर्यं विततं, तथापि पुरूणां कुलवृद्धया धूमधूसरितं जातम्। तदा काशीमगधविदेहमथुरादिषु विख्यातानि राजकुलानि प्रसृतानि। निरंकुशं साम्राज्यं परिपक्तुमारब्धम्। कृष्ण-सनाथोऽन्धकवृष्णिसंघोऽपि युद्धक्षेत्रमवतीर्य्य पराजयम्प्राप्य समुद्र-द्वीपेऽवसत्। प्राचीनगणतन्त्रदृष्ट्या जघन्यतमपातकं युद्धं राजकुलेषु सर्वत्र प्रसृतम्" इत्यादि जल्पितम्,

तदपि दुःसाहसम्। श्रीकृष्णानुप्राणितधर्मराजयुधिष्ठिरस्य धर्मदृष्ट्यैव वैधस्वस्वत्वप्रत्यावृत्तय एव महाभारतयुद्धं प्रवृत्तम् पञ्च-ग्रामाप्राप्त्याऽपि। डांगेमहाशस्य सर्वाऽपि कल्पना सन्निपातपरिभाषा ग्रस्तत्वेनोपजीव्यविरुद्धा। महाभारतादि समाश्रिताऽपि कल्पना महाभारत-विरुद्धा चेत् कथं सा श्रद्धेया स्यात्?

मन्वादयश्च 'धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः।' (२।१३) 'वेदाद्धर्मो हि निर्बभौ', (२।१०) इति मनुस्मृतिरीत्या वेदानुयायिन एव न

स्वातन्त्र्येण व्यवस्था विधायकाः। वर्त्तमानभारतादपि प्राचीनं भारतमतिविस्तृतमासीत्। दक्षिणसमुद्रं हिमाद्रिञ्चाभिव्याप्य पश्चिमपूर्वसमुद्रौ चाभिव्याप्य वर्तमानो देशो भारतमिति प्रमाणसिद्धम्। अतः आधुनिकभारतमाधुनिकसभ्यतायाः फलमित्यप्यपास्तम्।

महाभारतानुसारेणैव महाभारतयुद्धस्यैतिहासिकत्वं वक्तुं शक्यते न तु त्वदभिमतप्रमाणैः। आधुनिकैस्तु खिस्तीयपूर्वं खिस्तीयोत्तरमित्येव विभागोऽभ्युपेयते। महाभारताभ्युपगमे तु महाभारतरीत्या वैदिकसभ्यतायाः स्वरूपं गौरवञ्चाभ्युपतेव्यम्। न तत्रार्धजरतीयं युज्यते। रामरावणकथा म. भा. वनपर्वणि वर्णिता। अन्यपद्मादिपुराणेष्वपि सा कथा वितता। अस्मिन् कल्पे चतुर्विंशे त्रेतायुगे रामस्य प्रादुर्भावः। विगतत्रेतायुगेऽपि तदवताराभ्युगमे नवलक्षवर्षेभ्यः पूर्वं रामरावणं युद्धं प्रवृत्तम्। तस्मात् पञ्चशतवर्षेभ्यः पूर्वं तत्प्रवृत्तमित्युक्तिर्भ्रान्तिमूलिकैव। भारतरामायणादिप्रामाण्याभ्युपगन्तॄणां कृष्णयुधिष्ठिरादिचरितस्याप्यैतिहासिकतथ्यविवरणं नोपलब्धुं शक्यम्। वाल्मीकिरामायणस्यादिकाव्यत्वादेव तत्र विविधालङ्कारादिविशिष्टश्लोकसार्गादिव्यवस्था, तदनुसारेणाद्यापि काव्येषु सैव शैली समाद्रियते। महाभारतपुराणानि धर्मशास्त्राणि तु विशिष्टेतिवृत्तसर्गविसर्गादिवर्णनपराणि। अतस्तेषां भिन्ना शैली।

वस्तुतस्तु महाभारते रामायणे च स्पष्टमुक्तं यत् योगनिष्पन्नेन दिव्यचक्षुषा व्यासेन व्यासप्रसादात् सञ्जयेन च तथैव ब्रह्मवरेण तपसा च वाल्मीकिना करतलगतामलकवत् सर्वाणि चरित्राण्यपरोक्षीकृत्यैव लिखितमुक्तञ्च। आधुनिकन्तिवर्जितवृत्तं भ्रमविप्रलिप्सादिदोषदूषितमितीहैवान्यत्रोक्तमेव। रामायणकथायाः भारते दर्शनादेव ज्ञायते यत् रामायणं महाभारतरचनायाः बहोः कालात् पूर्वमेव रचितम्। तस्माद्रामायणं महाभारतादर्वाचीनमिति कल्पनं निष्प्रमाणं दुरभिसन्धिफलकञ्च। महाभारतस्य नायकौ युधिष्ठरः श्रीकृष्णो वा रामायणानुगामिनावेवेति तव प्रातिकूल्यकथनमपि मूढजनजल्पितम्। अत एवातिप्राचीनायाः अपि रामकथाया महाभारतकथातोप्यधिकप्रसिद्धिः। रामो

यथा सर्वसाधारणस्मृतिगोचरस्तथा महाभारतकथानायको युधिष्ठिर-स्तत्पूज्यः कृष्णोऽपि न सर्वसाधारणस्मृतिगोचरः। बहवो ग्राम्या वन्याश्च ये कृष्णं जानन्ति तेऽपि रामं जानन्तीति प्रत्यक्षमेव। त्वद्रीत्यापि पञ्चशत-वर्षेभ्यः पूर्वमेव रामस्याविर्भावः। न च सोऽधिकः कालो येन रामो विस्मर्य्येत। यदि विक्रमः यीशू मुहम्मद प्रभृतयो द्विसहस्रसार्द्धसहस्रकालव्यवहिता अपि स्मर्य्यन्ते। भारतकालीनः कृष्णोऽपि परमेश्वररूपेणैव वर्णितः। 'देवः कृष्णः प्रजापतिः'। (वा० रा० यु० का०) (११७।२७)

इति कृष्णेन रामाभेदोऽप्युक्तः। महाभारतकारेणापि कृष्णः परमेश्वरत्वेनैव वर्णित:॥

गीता विष्णुसहस्रनामादिकं कृष्णमाहात्म्यपरमेव। समस्ते भारतेऽपि कृष्ण एव महातात्पर्यविषयत्वेन वर्णितः।

रामस्यामोघा कथाऽमोघं जीवनममोघास्तद्भक्ता काकभुशुण्यादयः सनकादयश्च यस्यानुग्रहेण खगा मृगा वानरा भल्लुकाः किराता भिल्लाः किं बहुना सर्वेऽपि तदानीन्तनाः प्राणिनस्तेन सार्धमेव साकेतधामभागिनो याताः।

'स यैः स्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा।
कौशलास्ते ययुः स्थानं यत्र गच्छन्ति योगिनः (श्री०भा० ९।११।२२)

इति महाभारतनिर्माता व्यासोऽपि वक्ति। तस्माद्रामेण सायुज्यं नाधिगतमिति मूढजनजल्पितमेव। दुर्वृत्तदमनं राज्ञां भूषणमेव न दूषणम्। 'विनाशाय च दुष्कृताम्'िति गीतयापि दुष्कृतिदमनाय परेशाव-तरणवर्णनात्। वालिवधो दण्डविधानं न युद्धम्। तेन तत्र युद्धन्यायानव-तरणान्न परोक्षेण वधोऽपि दूषणम्। वालिनाऽपि तादृक् तथ्यस्यान्तेऽङ्गी कृतत्वात् किष्किन्धाकाण्डेऽष्टादशे सर्गे।

इक्ष्वाकूणामियं भूमिः सशैलवनकानना।
मृगपक्षि-मनुष्याणां निग्रहानुग्रहेष्वपि॥ ६॥'

'तदेतत्कारणं पश्य यदर्थं त्वं मया हतः।
भ्रातुर्वर्तसि भार्यायां त्यक्त्वा धर्मं सनातनम्॥ १८॥

'अस्य त्वं धरमाणस्य सुग्रीवस्य महात्मनः ।
रुमायां वर्त्तसे कामात्स्नुषायां पापकर्मकृत् ।। १९ ।।
'दण्डोऽयं प्रतिपादितः ··· ··· ··· ।। २० ।।
'औरसीं भगिनीं वापि भार्य्यां वा अनुजस्य यः ।।२२।।
प्रचरेत नरः कामात् तस्य दण्डो वधः स्मृतः ।
'सुग्रीवेण च मे सख्यं ··· ··· ।।
दारराज्यनिमित्तं च निःश्रेयसकरः स मे ।२६।
प्रतिज्ञा च मया दत्ता तदा वानरसन्निधौ ।
प्रतिज्ञा च कथं शक्या मद्विधो नानवेक्षितुम् ।।२७।।
सर्वथा धर्म इत्येव द्रष्टव्यस्तव निग्रहः ।२९।
राजभिः कृतदण्डाश्च कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ।।३१।।'

एतेन कल्याणकर एव दण्डः ।

'शासनाद्वापि मोक्षाद्वा स्तेनः पापत् प्रमुच्यते ।
राजा त्वशासन् पापस्य तदवाप्नोति किल्विषम् ।।३२।।'
'वागुराभिश्च पाशैश्च कूटैश्च विविधैर्नरा ।।३७।।'
'प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति सुबहून् मृगान् ।
प्रधावितान् वा वित्रस्तान् विस्त्रब्धानतिविष्ठितान् ।।३८।।'
प्रमत्तानप्रमत्तान् वा नरा मांसाशिनो भृशम् ।
विध्यन्ति विमुखांश्चापि न च दोषोऽत्र विद्यते ।।३९।।
यान्ति राजर्षयश्चात्र मृगयां धर्मकोविदाः ।
तस्मात्त्वं निहतो युद्धे मया बाणेन वानर ।
अयुध्यन् प्रतियुध्यन् वा यास्माच्छाखामृगो ह्यसि ।।४०।।
'एवमुक्तस्तु रामेण बाली प्रव्यथितो भृशम् ।
न दोषं राघवे दध्यौ धर्मेऽधिगतनिश्चयः ।।४४।।

एतेनादर्शनपूर्वकं वधोऽधर्म इति यदुक्तं तदपास्तम् । शाखामृगत्वेऽपि छन्नवधे न दोषः, मृगयादौ तादृशवधस्यादोषत्वात् । धर्मबाधकनिग्रहार्थं शस्त्रसंन्धाननैपुण्याधिगमार्थं धर्मकोविदै नृपैरपि तदादृतत्वात् ।

ननु 'भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम् ।

धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ।। श्र* कि० का० ५५।३)

इति सुग्रीवस्यापि तथा दण्डयत्वापत्तिः स्यादि चेन्न, जीवतः सुग्रीवस्य पत्न्यां रुमायां वालिप्रवृत्तेः सुग्रीवप्रवृत्तिवैलक्षण्यात् ।

सुग्रीवस्य तु वालिमरणनिश्चयात् तारायां प्राक् पश्चाच्च प्रवृत्तिः । तत एव 'अस्यत्वं धरमाणस्य (कि०का० १८।१९) इत्युक्तम् ।

किञ्च त्रैर्वाणकेष्वपि देवरस्य मृतभ्रातृस्त्रियामपुत्रायां प्रवृत्तिदर्शनात् तिर्य्यग्योनिषु प्रजावत्यां [ज्येष्ठभातृवध्वां] वृत्तिर्न दोषः : अनुजवध्वां ज्येष्ठस्य तु वृत्तिर्दोषायैव । त्रैर्वाणकेतरस्त्रीणां मृतभर्तृकाणां तरुणीनां स्वजातीयपुरुषाङ्गीकारो नाधर्म इत्यपि सूचितम् । शूद्रजातौ व्यवहारदर्शनात् ।

यदुक्तम् 'मनुष्याधिकारस्य निषेधशास्त्रस्य कुतस्तिर्य्यक्षु प्रवृत्तिरिति, तन्मन्दम् । मनुष्यवद्राजादिव्यवहारदर्शनेन मनुष्यतुल्यज्ञानबलेन च तत्प्रवृत्तौ बाधाभावात् । अत एवेन्द्रादीनां धर्मेऽनधिकारिणामपि वृत्रवधादौ ब्रह्महत्यादिदोषस्मरणेन निषेधेषु तदविक्रमप्रायश्चित्तादौ देवानामधिकारवदेषामप्यधिकारे बाधाभावात् । देवानामिन्द्रादिदेवतान्तराभावान्न तदपेक्षि धर्माधिकारः । ब्रह्मविद्यायां दानादिधर्मेषु तेषामधिकारोऽस्त्येव ।

'रघूणां शासने शूद्रदासानां कठोरदमनमासी' दितिकथनं निष्प्रमाणत्वाद्दशहस्ताहरीतकी, इति-उक्तिमेवानुसरति । तथैव गणशासनविरुद्धं श्रीरामस्य परितोऽभियानमित्यपि । सोमवंशीयाः पुरुवंशीया वा राजानोऽपि सूर्यवंशीयराज्ञां सम्बन्धिन एवेति कुतस्तद्वृद्धया रामकुलस्य धूमधूसरितत्वकल्पनापि । न चैषां शासनं निरङ्कुशं, धर्मनियन्त्रितत्वात् । धर्महीना एव तु निरङ्कुशा भवन्ति । श्रीकृष्णनेतृकस्य वृष्णिकुलस्य न क्वापि पराजयः । समुद्रद्वीपनिवासस्तु दुर्गरूपेण तेनोररीकृतः । दुर्गाश्रयात् पराक्रमात् नीतिविशेषाच्च तेन सर्व एव विपक्षाः क्षपिताः । तदाश्रयेणैव पाण्डवा अपि दुरत्ययं कौरवसैन्यसागरं तीर्णाः । भारतीयेषु वैदिकेषु केषुचिच्छासनेषु नियतं युद्धं धर्मयुद्धमेव, न पातकम् ।

'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ।'

इतिगीतावचनात् ।

स्वधर्मातिवृत्तस्य रावणस्य वधो यथा न दूषणं तथैव स्वधर्मविमुखस्य परधर्मपरायणस्य शम्बूकस्य वधोऽपि न दोषाय ।

'ये व्यपेताः स्वधर्माच्च परधर्मे व्यवस्थिताः ।

तेषां शास्तिकरो राजा स्वर्गे लोके महीयते ॥'

इति धर्मशास्त्रवचनात् ।

एवमेव रामस्य भगिनी सीतेति नास्तिकजनजल्पनम् दुरभिसन्धिमूलकमेव । श्रीमद्वाल्मीकीयरामायणे सीतायाः सोमवंशीयविदेहतनयात्वप्रतिपादनात्, रामस्य सूर्यवंशीयदशरथतनयत्वप्रतिपादनाच्च । तस्या लक्ष्मीरूपाया लाङ्गलपद्धत्यां यज्ञप्रसङ्गे हलाग्रादाविर्भूतत्वादयोनिजात्वमपि नानुपपन्नम्, सीतोपनिषदादिभिस्तत्प्रतिपादितत्वात् ।

किञ्च यदि रामकथा जनसाधारणस्मृत्यगोचरी तर्हि सीतायास्तद्भगिनीत्वमपि नास्तिकैः कुतो ज्ञातम्? यदि रामायणस्य प्रामाण्यं नाभ्युपेयेत तर्हि जैनसूत्राणामेव प्रामाण्ये का विनिगमना? श्रीमहाराजदशरथकाले त्वभिप्रेततथाकथितगणाभावेऽपि समूहरूपेण भिन्नभिन्नगणानां स्थितिरासीदेव। अतएव चक्रवर्तिना नरेन्द्रेण दशरथेन सर्वा अपि प्रजानां श्रेणीराहूय तासामनुमतिर्गृहीता । रामयौवराज्याय न केवलं रघूणामेव सम्मतिस्तत्र गृहीतासीत् । तथाहि—

'नानानगरवास्तव्यान् पृथग्जानपदानपि ।
समानिनाय मेदिन्यां प्रधानान् पृथ्वीपतिः ॥'
( वा. रा. अ. का. १।४६ )

न तु केकयराजानं जनकं वा नराधिपः ।
त्वरया चानयामास पश्चात्तौ श्रोष्यतः प्रियम् ॥'
( वा. अ. का. १।४८ )

अतः श्रीरामयौवराज्यस्य प्रदाननिमित्तपरामर्शाय नानानगरवास्तव्यान् तत्राधिकृतान् जानपदान् जनपदस्वामिनश्च मन्त्रिद्वारा आनिनाय ।

'स लब्धमानैर्विनयान्वितैर्नृपैः पुरालयैः जानपदैश्च मानवैः ।
उपोपविष्टैर्नृपतिर्वृतो बभौ सहस्रचक्षुर्भगवानिवामरैः ॥'

(वा. रा. अ. का. १।५१)

अत्र नृपैः सार्द्धं पुरालयानां जानपदानाञ्चोपवेशनम् वर्णितम् । श्रीदशरथेन च स्पष्टमुक्तम्—

यद्यप्येषा मम प्रीतिर्हितमन्यद्विचिन्त्यताम् ।
अन्या मध्यस्थचिन्ता तु विमर्दाभ्यधिकोदया ॥ (अ.का.२।१६)

अत्र भयातङ्कैरपेक्ष्येण जनतामतं जिज्ञासितम् । प्रजाभिश्च तथैव परामृश्य श्रीरामस्य यौवराज्यमभिनन्दितम् ।

'तस्य धर्मार्थविदुषो भावमाज्ञाय सर्वशः ।
ब्राह्मणा बलमुख्याश्च पौरजानपदैः सह ॥१६॥
समेत्य ते मन्त्रयितुं समतागतबुद्धयः ।
ऊचुश्च मनसा ज्ञात्वा वृद्धं दशरथं नृपम् ॥२०॥
इच्छामो हि महाबाहुं रघुवीरं महाबलम् ।
राजेन महता व्याप्तं रामं छत्रावृताननम् ॥२२॥

पुनश्च भावयाथात्म्यजिज्ञासया राज्ञा पृष्टम्—

कथं नु मयि धर्मेण पृथिवीमनुशासति ।
भवन्तो द्रष्टुमिच्छन्ति युवराजं महाबलम् ॥२५॥

ततश्च पुनः रामस्य माहात्म्यातिशयमुक्त्वा यौवराज्यं समर्थितम् ।

रामः सत्पुरुषो लोके सत्यः सत्यपरायणः;
साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रिया सह ॥२६॥

यद्यपि 'मथुरायाः कंसः, मगधस्य जरासन्धः, हस्तिनापुरस्य कौरवाः महत्साम्राज्यनिर्माणे संलग्ना आसन् । ते प्राचीनगणसैनिकलोकतंत्र-चिह्नानि समूलमुन्मूल्य पैतृकपारम्पर्यव्यवस्थास्थापनाय विपुलधनभूमि-दासप्राप्तिपर्य्यवसायिषु गृहयुद्धेषु प्रवृत्ताः । मूलनिवासिगणसंघानां, दास-स्वामिकुलानां शूद्रवैश्यानाञ्च धनभूम्यादिसामग्रीप्राप्त्यर्थं गृहयुद्धा-नामन्ते महाभारतयुद्धे जातम् । कौरवेषु पूर्वमेव लोकतंत्रशासनं समाप्त-मासीत् । पुरुषसुक्तवर्णिताः कुरवः पैतृकदासत्वप्रतिष्ठापकेष्वन्यतमाः । गण-

सदस्यानां लोकतन्त्रं धनिज्येष्ठकुलप्राधान्येन संकुचितम्। निरङ्कुशराज-तंत्रेण तन्नाश एव संभावितः। कौरवज्येष्ठसभायां श्रीकृष्णेन ज्येष्ठा नूतनशासकानां निरोधे शक्तीरप्रयुञ्जाना उपालब्धाः।

प्राचीनगणसंघीयलोकतन्त्रस्य तदानीं रक्षणमशक्यमसीत्। ते स्वयं धनदासभूम्यर्थमनुधावन्ति स्म। युद्धं तेषां जीविका जाता धन-सञ्चयप्रतिस्पर्द्धा वृद्धिमुपागता। युद्धविद्यायाः परमनिपुणो गुरुः द्रोणोऽतीव दरिद्रो जातः, तत्पुत्रोऽश्वत्थामा दुग्धाय रुदन्, तण्डुलपिष्टमयकल्पित-पयसा तोषितः। अतो यदि धनार्थं गुरुद्रोणः कस्यचिद्दासस्वामिनो हस्ते स्वात्मानं विक्रेतुं प्रस्तुतो भवेत्तदा किमाश्चर्य्यम्। दासस्वामिनो येभ्योऽ-पराजितगणेभ्यो दासाः प्राप्ता तेभ्यो बिभ्यति स्म। तत एव शस्त्रधार-णाय मानवोचिताधिकार प्राप्तयेऽपि प्रयतमानास्तीक्ष्णदण्डैर्दण्डयन्ते स्म।

यदि निषादपुत्र एकलव्यः स्वामिनां विचारधारानुसारिण्याः श्रद्धया आखेटो नाभविष्यत्तदा द्रोणो दक्षिणारूपेण तदङ्गुष्ठं छेत्तुं समर्थो ना-भविष्यत्। शूद्रः सन्नपि सोऽस्त्रविधायामर्जुनप्रतिद्वन्द्वी भवितुं समर्थ आसीत्। लोभग्रस्तत्वाद्दासस्वामिनः भीषणनरसंहारकादि महाभारतयुद्धं भावितवन्तः सिन्धुगंगादिक्षेत्रेष्वधिकारप्राप्त्यनन्तरं शासकानां तत् युद्ध-नैपुण्यं शौर्य्यञ्च शिथिलं जातम् यदधिकारप्राप्तिसमयेऽर्जितम्। गणसंघरूपेण तत्र तत्र स्थितानां मूलनिवासनां राक्षसनिषादनागद्रविणानां विजयाय अश्वा, आयशफलोपेता वाणाश्च तै प्रयुक्ताः। मूलनिवासिनां सविधे तानि युद्धसाधनानि नासन्। ते नैव ते योद्धुं न समर्था आसन्। लोभग्रस्ताः सर्वे दासस्वामिनः परस्परं युयुधुः। साम्यसंघस्यादिमयुगे कयाचिन्मात्रा न तादृक् सुन्दरः पुत्रस्त्यक्तो यथा कुन्त्या कानीनः कर्णस्त्यक्तः। तस्या अवैध-पुत्रस्य पालनं दासैः कृतम्। कर्णस्तेषु वैधेषु बन्धुष्वधिको वीर उदारश्चा-सीत्। पाण्डोरर्धवैधानिकः पुत्रोऽर्जुनो राजपितृकत्वाभिमानेन क्रीडायुद्धेषु विजयी जातः। पितृनामानभिज्ञत्वात् तत्प्रतिद्वन्द्वी कर्णोन्यग्भूतः। प्राचीन-गणसाम्यसङ्घस्य मानवता दासस्वामिनां धनगर्वलोभयोः समक्षं स्वात्म-समर्पणं कृतवती'। इति

तदपि तुच्छम्, विपरीतग्राहित्वात् सोमवंशीया राजानोऽपि

सूर्य्यवंशीयराजवदेव पारम्पर्य्येणैव राजानः तेषां तेषां तत्तत्प्रदेशेषु पैतृकाण्येव राज्यान्यासन्। चक्रवर्त्तिराज्ये राज्यानि नोन्मूल्यन्ते। राजसूये बहूनां राज्ञां सत्त्वमभ्युपेत्यैव तेषां सम्मानं क्रियते। नाममात्रवल्युपहारादिक-मङ्गीकृत्य तेषां स्वातन्त्र्यमव्याहतमेवाभ्युपेयते। सामञ्जस्येन तेषामव-स्थापनमेव चक्रवर्त्तिराज्यस्थापनादृश्यम्। पुरुषसूक्तनामोल्लेखस्तु व्यर्थ एव। तत्र कुरूणां पैतृकदासत्वप्रतिष्ठापकानामवर्णनात्। वस्तुस्थित्य-नुरोधेन तु पुरुषसूक्ते ब्रह्मक्षत्रविशामित्र शूद्राणामपि वर्णनम्। तेन सृष्ट्यादावेव तत्सत्त्वं ज्ञायते। कौरवसभायां तु कृष्णेन कौरवपाण्डव-सामञ्जस्याय कुरुवृद्धा भीष्मद्रोणधृतराष्ट्रादयः पुनः पुनः प्रोत्साहिताः, पर्यनुयुक्ताश्च। न तावतापि त्वत्पक्षसिद्धिः।

महाभारते श्रीकृष्णनेतृत्वे पाण्डवानां न्यायपूर्णस्वत्वप्राप्तये युद्धं प्रवृत्तम्। तत्र धर्मबुद्ध्यौ क्षत्रियाणां वीराणामप्रवृत्तिरासित्। भीष्म-द्रोणादयो धर्मज्ञा हृदयेन पाण्डवानां जयमाकाङ्क्षमाणा अपि दुर्योधन-सेवावशंवदत्वात् तदीयपक्षे युद्धं कृतवन्तः। उभयपक्षेषु जीविकाबुद्ध्या योद्धारो नासन्नेव।

युद्धनिपुणो गुरुद्रोणो महातपा ब्रह्मविदामग्रणीः वैराग्यवसादेव नैर-पेक्ष्येण निर्धनः, अरण्यवासिनामृषीणां तद्भूषणत्वात्। पुत्रस्नेहकातराया अश्वत्थाममातुराग्रहेणैव स स्वमित्रस्य 'त्वं मम राज्यार्धभागी मित्रमि'ति प्रतिज्ञां स्मृत्वा मित्रदर्शनाय गोलोभाय च तत्पुरमुपगतस्ततोऽवमानितो विमनाः प्रत्यावृत्तः। मार्गे क्रीडमानानां राजपुत्राणां कूपे निपतितं कन्दुकं लीलयैव बाणविद्याकौशलेन निष्काश्य श्रद्धाकौतुहलास्पदतां गतः। भीष्मेण दृष्टः संमानितः पूजितश्चाग्रहेण तदाचार्य्यत्वमङ्गीकृतवान्। कौरवसभायां भीष्मवदेव निर्भयं निःसंकोचं धृतराष्ट्रदुर्योधनयोः समक्षं पाण्डवपक्षे स्वसम्मतिं दत्तवान्। सेवावशंवदतया सोऽपि तत्पक्षे युयोध। पाण्डवे-भ्यश्चाशिषः प्रयुयोज।

अर्जुनः स्वस्मिन्नत्यनुरक्तो भक्तस्तद्वचनैः स वशीकृतोऽर्जुनेन धनादिना। स्वपुत्रायाश्वत्थाम्नेऽपि सोपसंहारं ब्रह्मास्त्रं यन्न दत्तवान् तद-प्यर्जुनाय दत्तवान्। युद्धे त्वत्प्रतिभटो न कोऽपि भविष्यतीति वरदानञ्च

तस्मै दत्तवान्। तत्पूर्तिकामनयैव दक्षिणारूपेण स्वशिष्यभूतस्य एकलव्य-स्याङ्गुष्ठं गृहीतवान्। तावतापि नैकलव्यस्य बाणविद्यावैकल्यम् योद्धृणा-मग्रणीत्वेन तस्य प्रसिद्धेः।

अन्यत्तु यत्किञ्चित् ब्राह्मणाः, सोमसूर्य्यवंशीया राजानः क्षत्रियाः, वैश्याः, शूद्रा एव भारतीया मूलनिवासिनः तत्पार्थक्येन मूलनिवासकल्पनं तु डाङ्गेमहाशयस्य पाश्चात्यगुरूणां प्रभावजनितम्। सर्वत्रैव समेषां समानि बलानि शस्त्रादीनि च न भवन्ति, प्रकृतिवैचित्र्यविलोपापत्तेः। अश्वस्त्वश्वमेधप्रसङ्गे मुच्यते न केवलं युद्धार्थम्। युधिष्ठिरेण भारतसंग्रा-मान्ते प्रायश्चित्तरूपेण तस्यानुष्ठितत्वात्।

कुन्त्या तु दुर्वाससा दत्तस्य मन्त्रस्य परोक्षणार्थं भगवान् सूर्य आहू-तस्तत्कृपया दिव्यः पुत्रो लब्धः। लोकमर्यादाविरुद्धत्वात् तं पालयितुं न शशाक। तथापि च तस्यास्तस्य वा निन्दितत्वं दिव्यत्वेन लोकन्यायमति-क्रान्तत्वात्। तथाकथितत्वदीयसाम्यसंघे तु पशूनामिव गम्यागम्यविवे-काभावादेव न तादृक पुत्रत्यागावसरः सम्भवति। युधिष्ठरादयोऽपि धर्म-पवनेन्द्राश्विजातत्वेन दिव्या एव। पाण्डोरनुमत्या ते जातास्तेन तेषां लोक-दृष्ट्यापि सवथा वैधत्वमेव।

धार्मिकलोकेषु कुलोनत्वाकुलोनत्वाभ्यां गौरवागौरवे भवत एव न तत्र चित्रम्। तेनैव कर्णस्य न्यग्भावो युक्तः। अन्ते कुन्त्या सूर्य्येण कृष्णेन च कर्णस्य कौन्तेयत्वं सूर्य्यप्रभवत्वञ्च विस्पष्टमेवोक्तम् इति न तिरोहितं महाभारताध्येतॄणाम्। तत्र मानवतापराजयकल्पना दुष्कल्पनैव।

यत्तु— सर्वैरपीतिवृत्तज्ञैरिदं स्पष्टं दृश्यते यदर्जुनस्य खिन्नता न भोजनसम्बद्धा, न वा दर्शनविशेषचिचीषया जातजन्मा किन्तु तस्याय-मेव साधारणः प्रश्नो यः समेषां मस्तिष्केष्वासीत्। गणसम्बन्धानां विचारे नैतिकतायां च श्रद्धावशिष्टासीत्। पाण्डवैः राज्ये स्वाधिकारो याचितः। पञ्च ग्रामप्राप्त्याऽपि संतोष्टुमुद्यतास्ते तस्याप्यनभ्युगमे योद्धुं प्रवृत्ताः। तत्राचार्य्याः पितरः पुत्रा भ्रातरः पितामहाः मातुलाः श्वसुरास्तथाऽन्येपि संबन्धिनो युद्धे हन्तव्याः, येषां वधो नैतिकताविरुद्धं पातकञ्च।

प्राचीने लोकतन्त्रे तदतीव निषिद्धम्। गणसंघविधानानुसारी मार्गः संन्यास एवावशिष्टः। सम्पत्त्यधिकारंलोभञ्च त्यक्त्वा सम्बधिघातनपातकादात्मरक्षणं कार्य्यम्। कात्र सा नैतिकता समाजिकप्रतिष्ठा च या संम्बन्धिहत्यां निष्पापां प्रमाणयितुं शक्नोति। गीतासिद्धान्तकारेणास्य प्रश्नस्य यदुत्तरं दत्तम् तेन समाजो दुःसमाधेयात्मविरोधे निषक्तः इति स्पष्टम्। तेनैव प्रारब्धमथवाभाग्यमिदं, वर्गकर्त्तव्यमिदम्, विश्वासं कुरु, आदेशं पालय नैतस्मादधिकं सुन्दरं उत्तरमुपलब्धम्। तर्काभावादेव नूतनवर्गस्य नूतननियमानां स्थापनाय विराट्स्वरूपप्रदर्शने न भयातङ्कादिसृष्टिः समुद्भाविता, या विराड्रूपे संपूर्णं प्रारब्धमेव प्रदर्शितम्। अर्जुनस्य मुखं पिहितम्। सन्तुष्टोऽस्मीत्युक्तमर्जुनेन वागाडम्बरे मानवताया मुखं मुद्रितम्। विमूढतातङ्कितोन्मत्ता मानवता तस्या हत्याया अपवित्रक्षेत्रेऽवतीर्णा, यस्याः नव्यैः सामाजिकसम्बन्धैर्दर्शनैर्नियमैः पावित्र्यमुद्घोषितम्।

यदपि च— हस्तिनापुरराज्यशासककुमाराणां स्वसम्बन्धिनां गृहयुद्धरूपेण महाभारतयुद्धं प्रारब्धम्। यज्ञगणतंत्रविरुद्धं तत्। तत्र सात्वतादिगणा अपि संसृष्ठा अनेकेऽन्यराजकुलकुमारश्च, अनेके राक्षसनागद्रविडा गणा राजतंत्रवादान्मुक्त्यर्थमस्मिन् गृहयुद्धे संसृष्टाः।

यद्यपि सा वैफल्यमुपगता मुक्त्याशा। यादवमुख्या बहुभिः संबद्धत्वात्ततः पृथगेव स्थिताः। कृष्णस्य नेतृत्वे मध्यस्थता कार्य्यं तैश्चिकीर्षितम्। कृष्णेन वैयत्तिकरूपेण पाण्डवानां पक्षो गृहीतः। सात्वतसेनाभिः कौरवाणां पक्षे युद्धं कृतम्।

एतेन वृष्ण्यन्धकगणेष्वपि मतभेदः आसीत्। एवं महाभारतसंग्रामस्य भयङ्करे नरसंहारे प्रायेणोत्तरभारतस्य सर्वे योद्धारः गणसंघस्य प्राचीनसंसारः सैनिकलोकतन्त्रमभिजातकुलसंघो दासराज्यमन्येपि विनाशमुपगताः। गणानां प्राचीनसंसारस्थाने लोभमयोमूलः संसारः तिष्ठासति स्म। यत्र दासस्वामिनां केन्द्रिता शक्तिः शूद्रान् वैश्यांश्च वशयितुं प्रयतमानासीत्

भगवद्गीतायामस्य भीषणसंकटस्याभासः प्रस्फुरति। गणानां सामूहिकसंबन्धान् सिद्धान्तांश्च स्वपदात् प्रच्याव्य तत्स्थाने मानवद्वेषिणी वैयक्तिकसंपत्तिनैतिकता वर्गसम्बन्धानामुच्चता स्थापिता।

वस्तुतस्तु नव्यसम्बन्धाः पूर्वमेव साकारतामागताः। गीतया तु तेभ्यः सिद्धान्तवाणी समर्पिता। प्राचीन-गणतन्त्रदृष्ट्या नूतनयथार्थस्य समालोचकानाम्मुखमुद्रणाय च चेष्टितम्। नूतनावतारस्य कलेश्च नाम्ना तया गणानां सामूहिकलोकतन्त्रसमाप्तिः शोषणयुगस्य आगमनञ्चोद्घुष्टम्। गणानामाचारविचारापक्षेया वर्गसमाजस्याचारव्यवहाराणां नैतिकतायाश्च प्रतिष्ठा सर्वोत्कृष्टेत्यपि गीतया प्रतिपादितम्। अष्टादशाध्यायिनी कृष्णार्जुनसंवादरूपा गीता युद्धभूमौ नोद्भूता किन्तु महाभारतसिद्धान्तकारेण क्वचिदेकान्ते शान्तस्थाने समास्थाय सा रचिता। तथापि परवर्तिविचारात्सा नोत्पन्ना। तत्रैवान्येषामपि प्रश्नानां समाधानां कृतम्। महाभारतयुद्धे भागग्रहणार्थमागतानामन्येषाञ्च विचारकाणां मस्तिष्केषु समुत्थिता ये प्रश्नास्तेषां समाधानार्थं गीताकारेण यतितम्। संन्यासः कर्मयोगो वा न तत्संबद्धः। गीतादर्शनेन सत्तायाश्चेतनायाश्च संबन्धो विचारितः। भोजनविचाराचारसंबन्धोऽपि विचारित इत्यादि।

तदपि तुच्छम्, भारतगीतादितात्पर्यानवबोधात्, दुरभिसन्धिमूलकत्वाच्च। महाभारते बहूनां संहारो जात इति तु सत्यं, परन्तु राक्षसानागाराजतन्त्रान्मुक्तयर्थं युयुधुरित्यपार्थकमेव वचनम्, निष्प्रमाणत्वात्। उभयपक्षेषु राजतन्त्रस्य समादृतत्वात्। यस्याशैव न स्यात्तत्राशावैफल्यकथनं वृथैव। वृष्णिसंघे श्रीकृष्णस्यैव सर्वार्थकारित्वमासीत्। श्रीकृष्णस्य धर्मपक्षपातित्वेन पाण्डवपक्षे निष्ठता। "यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः' इति भारतोक्तेः।

श्रीकृष्णस्यैव नारायणी सेना दुर्योधनाय प्रत्ता। दुर्योधनेनार्जुनेन च युद्धाय श्रीकृष्णो निमन्त्रितः। तेन चोभयोरामन्त्रणमूरीकृतम्। एकस्मै निःशस्त्रेण मया बुद्धिसाहाय्यं दास्यतेऽपरस्मै च नारायणी सेनेति स्वीयो निर्णयः श्रावितः। अर्जुनेन निःशस्त्रः कृष्णो याचितो दुर्योधनेन सेना ग्रहीता। शूद्रान् वैश्यांश्च वशयितुं केन्द्रिता शक्तिः प्रयतमानासीदिति त्वसकृत् खण्डितम्। प्राचीना गणाः सिद्धान्ता वैदिका एवासन्। तानपसार्य नवीनसिद्धान्तानां स्थापनकथाप्यपार्थैव, वैयक्तिकसम्पत्तिसिद्धान्तस्य पूर्वमेव समर्थितत्वात्। सर्वोऽपि प्रातिस्वि-

कैर्दैवादिभिः विविधानि कर्माणि करोति। फलानि च प्रातिस्विकान्येवानुभवति। व्याधयो जन्मानि मरणानि च वैयक्तिकान्येव भवन्ति। गीता न कञ्चिन्नवीनं सिद्धान्तं समर्थयते, तस्या वेदसारभूतोपनिषन्मूलकत्वात्। तेनैव नूतनयाथार्थ्यं समालोचकानां मुखमुद्रणम् गीतयैव कृतमित्यपि निरस्तम्। 'तस्माच्छास्त्रं प्रमाणं ते कार्य्याकार्य्य व्यवस्थितौ' वेदादिशास्त्रप्रमाण्यस्यैव गीतया समर्थनात्।

गीता संग्रामावसरे न निर्मिता क्वचिदकान्ते निर्मितेति तु गीताविरुद्धमेव। 'प्रवृत्ते शस्त्रसम्पाते' 'सेनयोरुभयोर्मध्ये' 'विषीदन्निदमब्रवीत्' इत्यादि वचनेभ्योऽन्यथा तात्कालिकविचारधारामीमांसार्थं युद्धभूमिकानपेक्षणात्। शान्तिपर्वण्येव तत्स्थितिर्युक्ता स्यात्।

वस्तुतस्तु—वेदान्, उपनिषदः, महाभारतं, रामायणं, गीता, सूत्राणि चाश्रित्य वदन्नपि तत्सर्वविरुद्धमेवायं डाङ्गेमहाशयो वदति। अक्षराणि पदानि वाक्यानि वाक्यार्थंतात्पर्य्यार्थञ्चाननुरुद्धय वदन् तदीयैरेव ग्रन्थैः कश्चित्त्वादृशोऽधिनायकवादं, साम्राज्यवादं, पूञ्जीवादञ्च साधयेत्तदा तव किमुत्तरं स्यात्?

भगवदाराधनबुद्धया स्वधर्मानुष्ठानपरधर्मवर्जनाभ्यां विशुद्धस्वान्तः संसारादुपरम्य श्रवणमनननिदिध्यासनादिभिः प्रत्यक्चैतन्याभिन्नपरात्मतत्त्वसाक्षात्कारेण सर्वानर्थनिवृत्तिपूर्वकपरमानन्दलक्षणां मुक्तिमवाप्नोति। शोकमोहाभिभूतविवेकविज्ञानोऽर्जुनो युद्धलक्षणात् स्वाधर्माद्विमुखो भूत्वा परधर्मं भिक्षुचर्य्यां चर्त्तुमियेष। शोकमोहनिवारणञ्च तत्त्वज्ञानमन्तरा न सम्भवतीति भगवता तत्त्वनिरूपणं कृतम्। तत्प्रसङ्गेनैव विचारकाणां बुद्धिस्थ'प्रश्न'समाधानमपि जातम्। न तत्त्वज्ञानमाचारमन्तरा शोभते। आचारोऽपि तत्त्वज्ञानहीनो निःसरो भवति। तत एव वेदादिशास्त्रनियन्त्रिता आचारा अप्यादरणीया इत्युक्तं गीतायाम्। गीतोक्ता आचारतत्त्वज्ञानसंबद्धा सर्वेऽपि सिद्धान्ता वैदिका एव। गणाश्च तदानीं सर्वेवैदिका एव। तेन प्राचीनश्रद्धाया नैतिकताया एव समर्थनं गीताशास्त्रे कृतम्। श्रीकृष्णरीत्या भीष्मदृष्टया अन्येषाञ्चर्षीणां विचारकाणाञ्च दृष्टया युधिष्ठिरस्य युद्धप्रवृत्तिर्धर्मैव। युद्धाकरणे—

'अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्तिञ्च हित्वा पापमवाप्स्यसि।'

इति गतीयैव प्रत्यवाय उक्तः। न किञ्चन प्रामाणिकगणसंघविधाने गणो वा प्रामाणिकः सिद्ध्यति, येन तस्यावस्थायां युद्धं भीष्मादिस्वजनवधश्च पातकं निषिद्धं वा सिद्ध्येत, संन्यासश्च कर्त्तव्यः स्यात्। न केवलया प्रतिज्ञया वस्तुसिद्धिः। वैदिकसिद्धान्ते यथा वेदविहितत्वात् वैदिकयागादिगताहिंसाप्यहिंसैव भवति। तथैव कर्त्तव्यपालनबुद्ध्या स्वस्थराष्ट्रस्य च स्वत्वरक्षणार्थं धर्मरक्षणार्थं स्त्रीसंमानरक्षणार्थञ्च युद्ध्यमानस्य निरहङ्कारस्य निर्लेपस्य सर्वलोकवधेऽपि न दोषः। 'हत्वापि स इमांल्लोकान् न हन्ति, न निबद्ध्यते।' इति गीतोक्तेः।

शास्त्रप्रामाण्यानभ्युगमे का च सा नैतिकता? किं प्रमाणिका च सा? त्वदीये साम्यसंघे सत्यमप्येकरूपं न भवति। न्यायो नैतिकता च शतधा परिवर्त्तते।

परान्नं परद्रव्यं वा वने वा यदि वा गृहे।
अदत्तं नैव गृह्णीयात्‥‥ ‥‥ ‥‥ ‥‥ ‥‥। ‥‥ ‥‥ ‥‥ ‥‥॥

इति हि समेषां हिन्दूमुसलमानक्रिश्चियनबौद्धजैनानां नैतिकता। परं कम्युनिष्टानां तु सिद्धान्तस्थितिरेव परस्वापहारमूलिका। त्वदीये आदिमेऽपि साम्यसंघे भगिनीदुहित्रादिभिः यौनसम्बन्धः प्रवर्ततेस्म। इयमेव नैतिकता चेद्दीयतां जलाञ्जलिरस्यै।

किञ्च वेदानाधृत्यैव त्वयाऽदिमसाम्यसंघः, सामूहिकोत्पादनवितरणपद्धतिश्च ब्रह्मयज्ञशब्दाभ्यां सिषाधयिषिते। ये वैदिका स्वेषां वेदानामध्ययनाध्यापनतदर्थानुष्ठानेषु संल्लग्नास्तदभ्यासपरायणास्तैरेव नैतिकता धर्मो वा निर्धारयितुं शक्यते, न तदप्रामाण्यवादिना तद्वार्त्ताऽपि कर्त्तुं शक्या। किं संबन्धिहत्यैव पातकं, निरपराधपरकीयहत्या पातकम्? स्वैरस्थिमयैः पाषाणमयैश्च शस्त्रास्त्रैः साम्यसंघीया अपि त्वद्रीत्या युद्ध्यन्ते स्म, न वा? किं युद्धेन वधक्रमआसीन्नवा? न चेत्कथं भीष्मादिवधेऽपि पातकं स्यात्? आसीच्चेत् कथं तत्क्रियते स्म? स्वकीयत्वाद्भीष्मादिवधः पातकं चेत्, किं

स्वकीयं पुत्रं मित्रं वा परस्वापहरणहत्यादिकं कुर्वाणमपि पूजयेदित्ये-वादिमसाम्यसंघस्य नैतिकतासीत्? भारतीयसम्यतायान्त्वनादि-कालादेव सन्मार्गस्थः शत्रुपुत्रोऽपि संवर्धनीयः, विमार्गस्थस्तु स्वपुत्रोऽपि दण्डनीयः। प्रारब्धभाग्यादिपुरस्कारेणान्धविश्वासमात्रेण वा त्वया योद्धव्यमिति भगवताऽर्जुनायोक्तम्। प्रमाणेषु विश्वासस्तु सर्वेऽपि क्रियते कर्तव्यश्च निर्दोषनेत्रेण रूपं इत्यादिवचनेभ्यः।

नूतनवर्गस्य तर्काभाव इत्युपहासास्पदमेव। वैदिकानां न तर्काभावो न वा नूतनत्वं, तेषामेव सर्वप्राचीनतमत्वात्।

विराट्स्वरूपप्रदर्शनमर्जुनस्य प्रार्थनया तदनुग्रहायैव कृतं भगवता। नातङ्कभयादिजननाय, नवार्जुनस्य मुखमुद्रणाय—

'मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम्।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम॥'
'द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम।
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो॥'
'योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम्'॥

इति गीतावचनेभ्यः। त्वदुक्तिस्तु प्रमाणशून्या तद्विरुद्धा च। विश्वरूपदर्शनानन्तरमप्यर्जुनेनानेके प्रश्नाः समुत्थापिताः। वागाडम्बरेण मानवताया मुखं मुद्रितमिति त्वादृशस्यैव शोभते। विश्वविचारकास्तु गीतामृतमेव मन्यन्ते। त्वादृशास्तु—

'अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते।'

अत एव गीताज्ञानाञ्जनशलाकया दिङ्मूढाया मानवताया नेत्र-मुन्मीलितमेव। यतो हि कार्पण्यपूर्णक्लैब्योपप्लुतमिथ्याऽहिंसाद्यधर्मस्य निसारता विवृता। वस्तुभूता हिंसासत्यादिश्रुतिस्मृतिलक्षणस्य धर्मस्य रहस्यमुद्घाटितम्।

यत्तु 'धार्मिकपूर्वाग्रहमपहाय सर्वावस्थायां ऐतिहासिकनैतिकदृष्ट्या पर्य्यालोचने गीताया इदमेव सारतन्त्रम् यत् सामूहिकमुपभोगशीलेषु प्राचीनसाम्यसंघेषूत्पादनान्तक्रियाणाञ्च विभेदे बिकासमुपगते श्रम-विभागमूलिका वर्णसृष्टिरुत्पन्ना, वर्णकर्तव्यानि निर्धारितानि।

तथापि तत्रोत्पादनं फलभागश्च सामाजिकावेव न प्रातिस्विकौ। साम्य-संघीयसदस्यस्य कस्यचिद् वर्णकर्त्तव्यं द्वारीकृत्य निश्चितपारितोषिकं फलं विशिष्टसम्पत्त्यधिकारो वा न प्राप्यते स्म। वर्णैः श्रमविशेष-नैपुण्याधिगमे नोत्पादनेषु गुणवृद्धिः सामाजिकसंघटनरूपेषून्नतिश्च क्रियेते। किन्तु विनिमयव्यापारप्रातिस्विकसम्पतिसिद्धान्तोत्पत्तौ वर्णस्थित्यनुसारेण तैः स्वैः परिवारैः वैयक्तिसम्पत्तितदधिकारौ निर्मितौ। येषां वर्णानां सम्बन्धो युद्धविनिमयोत्पादनसञ्चालनैरासीत्। ते समाजे आर्थिकदृष्ट्या प्रभुत्वशालिनो जाताः।' इति,

तदपि तुच्छम्, तादृक् राजतन्त्रस्य त्वन्मस्तिष्कविकारत्वात्। त्वद्रीत्यैव साम्यसंघस्तु मन्विक्ष्वाकुप्रभृतिसमाहितराजतन्त्रात्प्रागेव समूलमुन्मूलितः। 'ब्रह्म ननाश' इत्यत्र त्वया ब्रह्मपदेन साम्यसंघस्यैव विवक्षितत्वात्। वेनकाले कथञ्चित् स शिर उत्थापयितुमियेषापि परं तदानीमेव पृथुना पुनस्तस्य शिरस्त्रोटितम्। श्रीरामस्य पूरोश्च वंशीयैः तद्विरुद्धाभियानेन स नामशेषं नीतः। महाभारतकाले कुतस्तदवशेषः कल्पयितुं शक्यः?

श्रमविभागस्तु वैदिकेषु यज्ञेषु सुतरां द्रष्टुं शक्यः। अध्वर्य्युगणानां, होतृ-गणानामुद्गातृगणानां, ब्रह्मगणानाञ्च श्रमविभागः। तेषु गणेषु अर्धिनः, पादिनः, अर्ध्यर्धिन इति रीत्या श्रमफलभेदोऽपि दृश्यते।

अयञ्च विभागो दक्षिणास्वेव न यज्ञफलेषु दक्षिणापरिक्रीतत्वेन तेषां तत्रानधिकारात्। यज्ञफले तु यजमानस्यैव, सत्रेष्वेव बहुयजमानकर्तृकत्वं समफलभागित्वञ्च। ततः पूर्वतनेषु सोमादिषु तदभावात्। वर्णभेदोऽपि सृष्ट्यादावेवोत्पन्न इत्युक्तमेव।

अतः श्रमविभागमूलिका वर्णसृष्टिरित्यादिकं सर्वमपि निष्प्रमाणं कपोलकल्पितमेव। प्रातिस्विकसम्पत्तिसिद्धान्तोऽपि पूर्वोक्तयुक्त्या सर्वकालोपलक्षितत्वदभिमतसाम्यसङ्घात् पूर्वमेवोत्पन्न इति दक्षिणाभि-र्ऋत्विक् क्रयणाद्दक्षिणासु विभागवैचित्र्याच्च स्पष्टं ज्ञायते।

अत एव युद्धविनिमयोत्पादनं सञ्चालनसम्बन्धेन ब्राह्मणक्षत्रियाणां प्रभुत्वशालित्वकल्पनापि निर्मूलैव। सति कुड्ये तत्र चित्रोल्लेखः। तदभावे तदभावस्य सुतरां सिद्धत्वात्।

दायस्यैवार्थागममूलेषु प्रधानत्वात्। 'दायो लाभः क्रयो जयः कर्मयोगश्चेति मनुना तथैव वर्णनात्। (म. १०।११५)

'मनुः पुत्रेभ्यो दायं व्यभजत्' इति श्रुतिः बौधायनधर्मसूत्रे (२।३।२) उद्धृता। उत्पादनसाधुनेषु भूमिखन्यादयश्च प्रधानभूताः। कौटिल्यदृष्ट्या 'मनुष्यवती भूमिः' एवार्थः। ईश्वरचेतनपूर्विकायां सृष्टावभ्युपगम्यमानायां परमेश्वर एव तत्प्रभुः। परमेशपुत्रो ब्रह्मा तदुत्तराधिकारी। ततो ब्रह्मपुत्रा दायादास्तेष्वेव मनुरपि। मनुपुत्राश्च तद्दायादाः। एवं पृथ्वादयः। जातिभेदेन दायेषु तारतम्यमपि। 'नानावर्णस्त्रीपुत्रसमवाये दायस्य दशांशान् कृत्वा चतुरस्त्रीन् द्वावेकमिति यथाक्रमं विभजेरन्' इति बौधायनधर्मसूत्रे (२।३।१) तथोपलम्भात्। अन्ये तु अमुख्या एव धनागमहेतवः।

यदपि क्षत्रियेष्वपि, ये दरिद्रा आसन्, ते श्रमिकवर्गेष्ववतार्य्यन्ते स्म। वर्णा एव वर्गाः संञ्जाताः। वर्णसम्बन्धश्रद्धाकर्त्तव्यपरिणतयो वर्गीयसम्बन्धादिरूपेण परिणताः। ब्राह्मणक्षत्रियौ शोषकौ, विट्शूद्रौ शोषितौ। शूद्रव्यतिरिक्ताः सर्वेऽपि वर्णा वर्णं परिवर्त्तयितुं शक्ताः। क्षत्रियाणां वर्णानुसारि धर्मः युद्धमासीत्, परं साम्यसंघेषु सदा बाह्यैः शत्रुभिर्युद्धमादृतम्। गणेषु वर्णविरोधाभावात् गणसदस्यैः साकं युद्धप्रसंग एव नासीत्। गणसदस्या रक्तसम्बद्धा भवन्ति स्म। तत्र वैयक्तिकसम्पत्तिदासत्वप्रवेशानन्तरमेव तत्र शोषकशोषितवर्गपरिणतिः। नव्यवर्गवर्णानुसारेण धनयशोभूमिदासराज्यादिप्राप्तिरक्षाद्यर्थं सम्बन्धिनामसम्बन्धिनाञ्च युद्धेन वधो ब्राह्मणानां क्षत्रियाणाञ्च कर्त्तव्यो धर्मश्च संपन्नः। गीतयाऽयमेव पाठोऽर्जुनाय पाठितः। अस्याः शिक्षाधाराया वर्णवर्गविरोधोत्पन्ननव्येन समाजेन सम्बन्धो न प्राचीनधर्मोऽयम्। 'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्' अयमेव शासकवर्गस्य सर्वोत्तम आदर्शः। वैश्यानां शूद्राणां शोषणार्थं गणान्तराणां दासत्वसंपादनार्थं क्षत्रियाणां शिरःपाणी च पणनीयान्येव।

सामूहिकजीवनधर्मान् कर्त्तव्यांश्च प्रविलाप्य वर्गान्तर्हिंसाधृतवर्गशासनस्थापनात् सुसामञ्जस्यपूर्णवर्गसमाजस्थापनाऽऽश्वासनदाने साफल्यं

नाधिगतं गीतया । यत्र शोषणव्यवस्थायामपि शोषकशोषितयोः समन्वयात् जीवनजीविका विश्वासः स्यात्, यत्र च पौनःपुन्येन विप्लवो न स्यात् । यथा साम्यसंघे निर्धनतायां सत्यामपि सामूहिकोत्पादनात् समेषां स्वभागप्राप्तिविश्वास आसीत् । तत्र साम्यसंघे उपयोगार्थ-मुत्पादनप्रथासीन्न लाभार्थम् । उपयोगार्थं साम्यसंघः सर्वेभ्यो भागं प्रायच्छत् । वर्गसमाजे तूत्पादनं स्वरूपपरिवर्त्तनेन मुद्रा हिरण्यादिरूपेण समस्ते संसारे भ्राम्यति । य उपयोगार्थमानन्दोपभोगार्थं वस्तूनि निर्माति, सोऽपि रहस्यमयीं हिरण्यमुद्रामन्तरा नोपभोक्तुमर्हति । दासाः श्राम्यन्ति, स्वामिनो मोदन्ते । केचिद् व्यापारेण लाभमर्जयन्ति, केचिच्च रिक्ता भवन्ति । जीवनकाले मनुष्यस्य सविधे कश्चित्तादृशो नियम आसीद्येन जीवद्-शायामपि (न मरणप्राप्यस्वर्गे) निर्व्यलीकश्रमानन्तरं निर्व्यलीकफलमु-पलभ्यते स्म । हा हन्त ! ईश्वरोऽपि मन्ये हिरण्यस्य गर्भादुत्पन्नः हिरण्य-गर्भो जातः' इति, तदपि तुच्छम्, वैदिकशासनव्यवस्थानवबोधात् ।

तथाहि—

महाभारते सभापर्वणि त्रयोदशेऽध्याये—

'भूयश्चाद्भुतवीर्यौजा धर्ममेवानुचिन्तयन् ।
किं हितं सर्वलोकानां भवेदिति मनो दधे ॥ ६ ॥
एवं गते ततस्तस्मिन् पितरीवाश्वसन् जनाः ।
न तस्य विद्यते द्वेष्टा ततोऽस्याजातशत्रुता ॥ ८ ॥
वार्धुषी यज्ञसत्त्वानि गोरक्षं कर्षणं वणिक् ।
विशेषात् सर्वमेवैतत् संजज्ञे राजकर्मणा ॥ १२ ॥

वार्धुषी वृद्ध्युपजीविका, यज्ञसत्त्वानि क्रतूनां सामर्थ्यानि सद्यः पुष्कलफलप्रदत्वादिविषयाणि ।

'अनुकर्षञ्च निकर्षं व्याधिपावकमूर्छनम् ॥ १३ ॥
सर्वमेव न तत्रासीद् धर्मनित्ये युधिष्ठिरे ।
दस्युभ्यो वञ्चकेभ्यश्च राज्ञः प्रति परस्परम् ॥१०॥
राजवल्लभतश्चैव नाश्रूयत मृषाकृतम् ।
प्रियं कर्तुमुपस्थातुं बलिकर्म स्वकर्मजम् ॥११॥

अभिहर्तुं नृपाः षट्सु पृथक्जात्यैश्च नैगमैः ।
ववृधे विषयस्तत्र धर्मनित्ये युधिष्ठिरे ॥१२॥'

दारिद्र्यात् अतीतवर्षस्य राजकीयद्रव्यस्य ऋणत्वेन धारणम् अनुकर्षः। करार्थं प्रजापीडनं निकर्षः। मूर्च्छनं वृद्धिः।

षट्सु सन्धिविग्रहादिषु यस्य प्रियादिकं कर्तुं नैगमैर्वणिग्भिः सह आसन् इति शेषः। इतरे नृपा वणिग्वत् येन करदीकृता इत्यर्थः। तत्र तस्मिन् इत्यादिरीत्या युधिष्ठिरादिशासनानां सर्वकल्याणकारित्वमेव ज्ञायते। तथापि दारिद्र्यमैश्वर्यञ्च पापपुण्यहेतुके एव। केचिद् ब्रह्मणाः क्षत्रिया वैश्याश्च दरिद्रा अपि भवन्त्येव। श्रमं विना निर्वाहासम्भवात्तेषां श्रमोऽप्यनिवार्य्य एव भवति। ब्राह्मणक्षत्रियौ शोषकौ विट्शूद्रौ शोषितौ इति भेदस्तु-मार्क्सवादिमस्तिष्कविकार एव। भारतीयसंस्कृतौ विशां वाणिज्याश्रयत्वेन शूद्राणाञ्च राष्ट्रधर्मस्वत्वादिरक्षणार्थं युद्धं धर्म इति तु शास्त्रसिद्धम्। गणेषु बाह्यैः शत्रुभिरेव युद्धं भवति स्म। गणसदस्यैः सार्द्धं युद्धप्रसङ्ग नासीदित्यपि, मृषैव। त्वदभिमतगणसदस्यानामिव पशूनां शुनाञ्चापि व्यक्तिगतसम्पत्तिदासप्रथादयो न सन्ति। तद्वदेव एव गम्यागम्यविचारोऽपि नास्ति तेषां मातृदुहितृभगिन्यादिगमनदर्शनात्, तथा परस्परं युद्धं तेषां भवति। तस्माद्विवेकविज्ञानाभावेन सत्त्वोद्रेकाभावे तमसउद्रेकेण कामक्रोधादिवृद्धया आदिमसाम्यसंघेष्विव सर्वत्रैव संघर्षो युद्धञ्चानिवार्य्यमेव भवति। तस्माद् दुर्वृत्तानां सम्बन्धिनामसम्बन्धिनाञ्च समेषां युद्धे वधो धर्म एवेति नात्र तर्काभावः। प्रत्युत दुर्वृत्तानामपि स्वीयानामनुग्रहः सुवृत्तैरपि परकीयैर्युद्धे वध इत्यत्रैव समुचितस्तर्को नोपलभ्यते।

वैश्यानां शूद्राणां शोषणार्थं युद्धप्रवृत्तिरिति कल्पनन्तु मौढ्यमूलकमेव, दुर्वृत्तवृत्तशमनादीनामेव युद्धोद्देश्यस्योक्तत्वात्। गीतया न किमपि नव्यधर्मस्थापनाय यतितम्। वेदादिशास्त्राणामेव तत्र सङ्क्रान्तामदर्शनात्। युधिष्ठिरस्य शासने शोषणकथापि नासीत्। सर्वजनसुखाय सर्वजनहितायैव तत्र प्रयासदर्शनात्। अत एव वैदिकानां—

"सर्वेऽपि सुखिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चित् दुःखभाग् भवेत् ॥"

इत्युद्घोषः—

'अधनाः सधनाः सन्तु जीवन्तु शरदां शतम्'।

अत्र नास्तिकानामपि नानिष्टं काम्यते, तत एवोदयनाच्चार्येणोक्तं—

'इत्येवं श्रुतिनीतिसम्प्लवजलैर्भूयोभिराक्षालिते।
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः॥
किन्तु प्रस्तुतविप्रतीपविधयाऽप्युच्चैर्भवच्चिन्तकाः।
काले कारुणिक त्वयैव कृपया ते तारणीया नराः'॥

प्रह्लादेन च—

'स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया'।

इति सर्वभूतसामञ्जस्यमेव कामितम्। गीतया च—

'विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि'।

इति सर्वत्रैव ब्रह्मदृष्टिर्विहिता—

'आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन।
सुखं वा यदि वा दुःखं स योगी परमो मतः'॥

इति सर्वभूतसाम्यदर्शनानुरोधेनैव धर्मस्य गौरवमुक्तम्।

'श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्य्यताम्'। भारतीयदण्डविधानेऽपि न वैरनिर्यातनमुद्देश्यम् किन्तु दुर्वृत्तता निवृत्त्याऽपराधिपातकनिवृत्त्यात्मशुद्धिरेवोद्देश्यम्।

भोगार्थपर्य्याप्त्या विनिमयार्थमन्यलाभार्थमुत्पादनपारम्पर्य्यं नापराद्धः। तस्य सामान्यगृहस्थैरप्यादृत्वात्। हिरण्यरत्नादिकं परेशसृष्टौ विद्यमानं दुर्वृत्तानामनर्थकरमपि न सद्वृत्तानामनर्थकरम् एवं श्रमेऽपि नैकविधो भवति तदनुरोधेनैव फलवैविध्यमपि।

अत एवेष्टकावाहकानां विधिविशेषज्ञानम् न्यायवादिनां शिल्पादिविशेषज्ञानां (इञ्जीनियर प्रभृतीनाम्) श्रमिकाणां यथायोग्यं फलप्राप्तये तु वैदिकेषु वाङ्मयेषु विपुला व्यवस्था विद्यत एव। श्रम एव विनिमयमूल्यस्याधार इति तु मार्क्सीयानामेव मतं, न वैदिकानाम्। लिप्सा तत्पूर्त्तिश्च तदाधार इति रिकार्डो प्रभृतयः।

यस्य लोके लिप्साबाहुल्यं पूर्त्यल्पता च तस्य मूल्यं वर्धते, वैपरीत्ये ह्रसति । प्राकृतसाधनानि तद्गुणाः श्रमाश्चोभयसमुच्चय एव तदाधार इति वैदिकाः। यथा दातृग्रहीतॄणां परस्परसम्मत्या वस्तुमूल्यमापणे निश्चीयते, तथैव श्रममूल्यमपि परस्परसम्मत्यैव निर्धार्यते। अनिश्चये तु न्यायाधीशैः धर्मशास्त्रेषु निर्णीयते।

अत एव यागादिश्रममूल्यभूता दक्षिणा शास्त्रेणैव निर्णीयते। यद्यपि स्वायत्तेन केनचिच्छ्रमिकेण सूत्राणि क्रीत्वा वस्त्रं निर्माय तद्विक्रयेण यन्मूल्यं लभ्यते ततः सूत्रमूल्यातिरिक्तं सर्वं श्रमफलमेव तथापि यत्र श्रमो वेतनेन क्रीयते मुद्राभिर्यन्त्राणि प्रकृतिद्रव्याणि (कच्चा माल) च क्रीयन्ते तत्र संबद्धव्ययोपयुक्तमूल्यातिरिक्तं क्रेतुरेव फलं लभ्यते। साधनश्रम-समुच्चयेनैव वस्तूत्पादनसम्भवात्। यद्यपि चेतनश्रममन्तरा प्राकृतवस्तूनि-यन्त्राणि मुद्राश्च शवोपमान्येव। परमुपर्युक्तसाधनान्यन्तरा श्रमोऽपि निरर्थको भवति। तेनैव प्रजासु निरुद्योगत्वनिष्कार्य्यत्वनिरर्थकत्वादयो दोषा भवन्ति।

किञ्च यन्त्राणान्तूत्पादने माहात्म्यातिशयः सुतरां स्फुटः। लक्षसंख्याकैः श्रमिकैर्यदुत्पाद्यते तद्यन्त्रसाहाय्येन द्विसहस्त्र-संख्याकैरेवोत्पादयितुं शक्यते। यन्त्राणि च धनवद्भिरेव निर्माप्यन्ते क्रीयन्ते च। तथापि शेषाणां निष्कार्यत्वापत्त्या क्रयशक्तिहान्योत्पादित-वस्तूनामापणे विक्रयासम्भवेन नैरर्थक्येन गतिरोधसम्भावना भवति। तदर्थं शक्तिरक्षणाय निष्कार्य्यत्वावरोधाय कार्य्यसमयनियत्या प्राकृतो-त्पादनकेन्द्रेषु वस्त्वन्तरोत्पादनकेन्द्रेषु च बहूनां श्रमिकाणामुपयोगो युक्तः। 'अष्टागवं धर्महलम्' इति रीत्या यथा द्विगवेन दशघण्टानिर्वर्त्ये कार्य्ये अष्टानां गवामुपयोगस्तथैव प्रकृतेऽपि कर्त्तव्यम्। प्रत्यतिरिक्तायं पञ्चधा विभक्त्या ज्योतिष्टोमानुष्ठित्याऽसाधुसम्पत्तेः साधुषु वितरणेन चासंतुलित-वैषम्यनिवारणं सर्वथा सम्पद्यते।

यदुक्तं—'आदिमसाम्यसंघेषु नैवंविधाः प्रश्नाः, न वा विरोधिमानव-सम्बन्धसामञ्जस्याय कस्यचिद्दर्शनस्यापेक्षा। प्रचीनसाम्यसंघस्य वैदिक-साहित्ये स्तवननर्त्तनमन्त्रोच्चारणपरायणता ज्ञायते। गावः कथं प्रभूतं

क्षीरं दधुरिदं ते विचारयन्ति । हरिद्वर्णघासं जग्ध्वा कथं शशिवर्णधवलं दुग्धं स्रवन्ति गावः ! भूमावुप्तं बीजं कथमुपरोहति शुष्कनालस्कन्धपत्रादि-रूपेणेत्यालोच्य सातङ्कं चित्रीयन्ते । प्रकृतिः कथं चेष्टते, कथञ्च वस्तूनि गतिमन्ति करोति । वृक्षं छित्वा कथं शरनिर्मितिः ? कथं तेन हरिणं—मृग घ्नन्ति, हत्वा च खादन्ति । कथं कदाचिन्मृगो लभ्यते नान्यदा । एव प्रकृति-विज्ञाने तदधिकारसम्पादनादिना जीवनानन्दवृद्धिरेव तस्य संघस्य समस्याऽसीत् ।

अहं यज्ञभवनेऽग्नेः परितः शयानः स्वप्ने स्वात्मानमुत्पतन्तं विचित्रप्रदेशानामुपरि भ्राम्यन्तञ्च दृष्टवान्, किमेतेषु किञ्चित्तादृङ् नास्ति यत्सर्वातीतं स्यात् । विविधा योजना बिचारयन् परितः प्रेतानात्म-नश्च कल्पितवान् । सूर्य-चन्द्र-भूमि-पर्जन्यादिषु सर्वत्र स्वसदृशं जीवनं पश्यन्ति स्म । विशेषणेभ्यः सामान्याभिमुखः । विश्वप्रक्रिया अधिजिगमिषुः तर्कप्रमाणचिन्ताभावनाभिश्चेतनानां सत्तासम्बन्धपरीक्षणे अन्तस्तलं प्रवेष्टुं प्रयतमान आसीत् । अस्यामवस्थायामेव दार्शनिकं नासदीय-सूक्तमुत्पन्नम् । ततः परं यज्ञसाम्यसंघस्य न प्रगतिः ।

एवमेवोपनिषदां दर्शनपन्थाः प्रादुर्बभूव । तदानीं मनुष्यो निज-निर्मिताभिः सामाजिकशक्तिभिर्योद्धुं न प्रवृत्तः । तदानीं तादृगात्मविरोधो नासीत् । अतएव तत्समाधानमपि नावश्यकमासीत् । स्वार्जितैर्भोजनै-र्बुभुक्षोपशान्त्या प्रससाद । तद्वस्त्रैस्तस्मै औष्ण्यं प्रत्तम्, तावतैव स तुतोष । आत्मविरोधप्रधाने शोषणसमाजे तदर्जितैर्भोजनैर्वस्त्रैश्च तमपहाय धनिनामुद्योगपतीनामुदरपूर्त्तिशीतापनयनयोर्व्यापृतम् । स स्वयं ? क्षुत्क्षामः शीतातुरोऽवेपत । कथमेवमिति तत् प्रश्ने तदादृतिः श्रमानभ्यु-पगमे समाजहिंसा तच्छिरस्याप्रतितोत्पादनश्रमाय तमबाधत । उत्पादनं तत्कर्त्तव्यमिति तस्मा उपदिष्टम् । ततो जीवितरक्षणार्थं यथेष्टभाग-प्रेप्सायां तल्लोभः सेत्स्यति । सदा नम्रेण भाव्यमिति रीत्या गीतोपनिषत्सिद्धान्तप्रसूतिः । त्वया तदेव कर्त्तव्यं यज्जीवनावस्थायाः पदस्य वानुसारेण निर्धारितम् । कर्मण्येवाधिकारस्ते फलेषु तव स्वाधीनताधिकारो वा नास्ति, फलमनुद्दिश्य सदैव कर्म कर्त्तव्यम् ।

विश्वविख्यातेयं शिक्षाऽर्जुनाय महाभारतयुद्धमारभ्यानेकशतीर्या-वदन्येभ्यो मनुष्येभ्यश्च दीयते। तस्य वर्गसमाजदर्शनस्येदं सारतत्त्वम्। यदात्मविरोधेषु अराजकतायां संकटपूर्णेषु व्यतिकोर्णम्। सामाजिक-जीवनार्थं योजनानुसरि फलदानाश्वासनं दातुमसमर्थमिति, तदपि, तुच्छम्, वेदगीताऽभिप्रायविरुद्धत्वात्।

तथाहि—वैदिकसाहित्यस्याभिप्रायबोधनार्थमेव षडङ्गानां पूर्वोत्तर-मीमांसयोश्च प्रवृत्तिः। वर्णाश्रमानुसारि धर्मेषु ब्रह्मणि वेदानां तात्पर्य्यं धर्मरूपेणैव स्तवनस्तोत्रशस्त्ररूपमन्त्रोच्चारणं भवति, न स्वैरितया आनुषङ्गिकरूपेण भोजनपानोपयोग्यन्नदुग्धादिवृद्धिचिन्तापि धर्माङ्गत्वे-नैवोपयुज्यते। हरिद्वर्णघासेन शशिधवलदुग्धोपभोगेण लोहितं रक्तं जायते। तादृशानां बहूनां प्रश्नोत्तराणामपि धर्मब्रह्मबोधनाभ्या-मेवोपयोगः, न केवलं तदानीमिदानीमपि जीवनानन्दवृद्धिरेव सर्वैरेव काम्यते। मन्त्रेषु ये विषयाः सूक्ष्मरूपेणोपदिष्टास्त एवोपनिषत्सु विवेचिताः। जाग्रत्स्वप्नसुषुप्तिषु सर्वत्र साक्षित्वेनावस्थितस्य शुद्ध-चिदात्मनोऽवगमनायानेकाः प्रक्रियास्तत्र कीर्तिताः। परं त्वया तु स्वगुरूणां पाश्चात्त्यानां वेदव्याख्यातॄणामनुसारेण आरण्यानाम-संस्कृतानामसभ्यप्रायाणामार्य्याणां स्तवननर्त्तनगीतादिप्राकृतचेष्टानामेव वर्णनं वेदेष्वन्विष्यते। यथा नैष वेदार्थस्तथैहैवान्यत्र विशदमुक्तम्। संस्कारशून्या भीता बालाः प्रेतान् परितः पश्यन्ति। सूर्य्यचन्द्रपर्जन्या-दिषु वैदिकास्तु न स्वात्मसदृशमेव जीवनं पश्यन्ति। किन्तु तेषु तेष्वभिमानि-भूतान् जीवान् तत्तदन्तर्य्यामिभूतं परमेश्वरं तेषां प्रतिस्विकं भौतिकञ्च रूपं पश्यन्ति स्म। नासदीयसूक्तस्योपनिषदाञ्च तात्पर्य्याभिभूतं परमेश्वरं सर्वातीतं सर्वमयं ब्रह्मात्मतत्त्वञ्च सम्यक् पश्यति स्म। तस्मान्न तत्सत्यं यद्वेदेषु साम्यसंगस्येतिवृत्तवर्णनम्। मनूक्त्यनुसारेण तु 'भूतं भव्यं भविष्यञ्च सर्वं वेदात् प्रसिद्धयति'।

अतएव येप्याधुनिका वैज्ञानिका आविष्कारास्ते सर्वेऽपि वेदपरि-चिता एव सन्ति। अनादिकालिकस्य प्रपञ्चपारम्पर्य्यस्यानेकेषु पर्य्यायेषु नैकविधा घटना अविष्कारश्चावर्त्तन्त एव। शोषणन्तु

मात्स्यन्यायमूलकमेव। तदपाकरणमेव प्रधानतो राजकृत्यम्। स्वायत्तश्रमोपार्जितभोजनैर्वस्त्रैश्चाद्यापि श्रमिकायत्त एवोपयोगः कर्त्तुं शक्यते। वेतनक्रीतश्रमिकोपार्जितैर्वस्तुभिस्तु वेतनदातॄणामिच्छानुसारेणैवोपयोगो युक्तः। एवं पूर्वोक्तरीत्यायेषु पञ्चधा विभक्तनियमैरसाधुसम्पत्तिवितरणैः सोमादियज्ञानुष्ठितिभिर्लघूद्योगादिभिरुत्पादनसाधनानां विकेन्द्रीकरणैः सर्वसामञ्जस्यं सम्पद्यते।

उत्पादनतदनुबन्धिव्ययादिसामञ्जस्यानुसारमेव श्रमिकवेतनादिनिर्धारणं युक्तं येन श्रमसाधनस्वामिनां समुचितं सामञ्जस्यं स्यात्। तदेतत् सर्वं शास्त्रानुसारेणैव युक्तं 'ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्त्तुमिहार्हसि'। इत्युक्त्यैव गीतया समाहितम्। 'अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः। या वृत्तिस्तां समास्थाय' (म. ४।२) इत्यादिवचनान्यत्रानुकूलानि। 'अभयं सत्त्वसंशुद्धिरि'ति गीतया स्पष्टं निर्भयतोपदिश्यते। न केवलं स्वस्वत्वरक्षणायैव क्षत्रियैर्युद्ध्यते किन्तु प्रजायाः, येषां केषांञ्चिदपि स्वत्व-संस्कृति-धर्म-स्त्रीसम्मानरक्षणार्थं क्षत्रियेतरैरपि योद्धुं शक्यते। न्यायालयेषु च निष्पक्षाः न्यायाधीशा धार्मिकास्तिष्ठन्ति। सर्वथापि शोषणनिराकरणप्रकारानेकशः शास्त्रोक्ताः सन्ति।

यत्तु 'उत्पादनं श्रमिकाणां कर्त्तव्यम्। लाभलोभं त्यक्त्वा कर्तव्यबुद्ध्या चोत्पादनं कर्त्तव्यम्। फले तवाधिकारो नास्ति। फलमनुद्दिश्यैवोत्पादनं कर्तव्यमित्येव गीतया श्रमिकेभ्य उपदिष्ट' मिति जल्पितं तत्सर्वं मूढजनप्रतारणमेव, गीतातात्पर्यविरुद्धत्वात्।

तथाहि—लौकिकानि शास्त्रीयाणि च द्विविधानि कर्माणि। तत्र लोकप्रमाणगम्यानि लौकिकानि, शास्त्रैकगम्यानि शास्त्रीयाणि। यथा चाक्षुषं रूपं चक्षुषैव गम्यं न तदतिरिक्तश्रोत्रादिभिस्तथैव शास्त्रगम्यान्यग्निहोत्रादीनि शास्त्रेणैव ज्ञायन्ते न प्रत्यक्षादिभिः। भोजनं लौकिकमेव क्षुन्निवृत्तिकामनयैव तत्र समेषां प्रवृत्तिः। तत्प्रकारविशेषेषु तु विधिनिषेधावुपसङ्क्रामतः। शुचिना शुद्धस्थले शुद्धनिर्मित्तं शुद्धान्नं भोक्तव्यम् नाशुद्धमशुद्धपुरुषस्पृष्टञ्च। यथैतत् तथैव युद्धमपि स्वस्वत्वरक्षणाद्यर्थं लौकिकं भवति। तथापि नान्यार्थं योद्धव्यम्, अस्त्रहीनः

भग्नास्त्रः भीतः पलायमानो न हन्तव्यः, कक्षाधोभागे न हन्तव्यम् इत्येवमादिषु प्रकारांशेषु विधिनिषेधाः प्रवर्त्तन्ते। लौकिकप्रमाणैरेवं प्राप्तांशेष्वेव विधानम्, तदंशेष्वेव धर्मयोगः।

तत एवं धर्म्यं युद्धं, धर्म्यं भोजनमित्युच्यते। शास्त्रगम्येषु कर्मसु तत्फलेषु तेऽधिकारिणो भवन्ति ये 'अविद्यया मृत्युं तीर्त्वा' इति वेदवचनानुसारेण वैदिककामकर्मज्ञानलक्षणया अविद्यया पाशविककामकर्मज्ञानलक्षणं मृत्युं न तितरीतुमिच्छन्ति। 'विषमौषधं' 'कण्टकेन कण्कोद्धारः' इत्यादिन्यायैः वैदिककामकर्मज्ञानपरायणतायां दृढायाम् पाशविकलौकिककामकर्मज्ञानानि स्वतः प्रविलीयन्ते। ततोप्युच्चस्तरीयास्तु-कामरहितानि (फलकामनारहितानि) कर्मज्ञानान्येवानुष्ठेयानि मन्यन्ते। ततोप्युच्चतमास्तु-ब्रह्मसमाध्यभ्यासप्रभावेण सर्वाणि कर्माणि ज्ञानानि च परित्यज्य ब्रह्मनिष्ठा एव भवन्ति। ये धर्मविरुद्धैर्लौकिकैरन्याययुक्तैर्मार्गैरभीष्टधनरत्नादिभोगसाधनान्युपार्जयन्ति ते निन्द्या भवन्ति। ये तु शास्त्राविरुद्धैर्न्यायोपेतैर्मार्गैरभीष्टं साधयन्ति तेऽनिन्द्या भवन्ति। ये खलु शास्त्रोक्तैर्मार्गैरभीष्टं साधयन्ति ते प्रशस्ताः। निष्कामकर्मानुष्ठायिनोऽतिप्रशस्ताः। सर्वकर्म तत्फलत्यागिनो ब्रह्मनिष्ठास्तु प्रशस्ततमाः।

न च फलकामनाराहित्ये किमर्थं कर्मानुष्ठेयमिति वाच्यम्, तादृक्-कर्मानुष्ठानस्य चित्तशुद्धिक्रमेण नैष्कर्म्यज्ञानहेतुत्वेन महाफलत्वात्।

यावानर्थ उदपाने सर्वतः सम्प्लुतोदके।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥

इति गीतावचनात्। न च प्रथमत एव कर्मत्यागेन तत्संभवति विकर्मगर्ते विनिपातसम्भवात्।

'नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः।
विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः'॥

इत्युक्तेः। निष्कामकर्मानुष्ठानेन तु बुद्धिशुद्धया तत्त्वज्ञानं जायते।

'वेदोक्तमेव कुर्वाणो निःसङ्गेऽर्पितमीश्वरे।
नैष्कर्म्यसिद्धिं लभते रोचनार्था फलश्रुतिः'॥

इति वचनात् । 'कु कर्मैव तस्मात्त्वम्' 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।' इत्याद्युपदेशो न श्रमिकाणां कर्मकराणां कृते, न वाऽविद्यया मृत्युमतितितीर्षूणां सकामानां कर्मिणाम् कृते, किन्तु अर्जुनस्तादृशोऽन्ये वा ये पाशविककामकर्मज्ञानमृत्युमविद्ययाऽतितीर्णास्तान् प्रति, ततोऽप्युच्चब्रह्मनिष्ठाप्राप्त्यर्थमयमुपदेशः ।

भो अर्जुन ? त्वं न ब्रह्मनिष्ठो, न वा पूर्णविरक्तोऽतः कर्मत्यागानधिकारित्वात् कर्मैव कुरु। पाशविककामकर्मातिक्रान्तत्वात् फलकामनैरपेक्ष्येण तव कर्मण्येवाधिकारो न कर्मफले। फलकामनाराहित्येऽपि- ते अकर्मणि कर्माकरणे संगो मास्तु। तथात्वे पूर्णसंयम-तत्त्वज्ञानाप्राप्त्या विकर्मभ्रंशसम्भवात् । 'मा ते सङ्गोऽस्त्वकर्मणि' इति वचनात् । धैर्य्येण विवेकेन समाजघटकानां समेषामपि स्वधर्मपरायणतायामन्याप्रतिरोधपूर्विका न्यायनिष्ठता जागर्ति । तत एव संकटपूर्णेषु सर्वेष्वपि क्षणेषु समाश्वासनं जायते। न सर्वापहारप्रचारेण तत्संभवति, संघर्षपारम्पर्य्यस्यैव ततो वृद्धिसम्भवात् ?

यदपि च—'उत्पादनाराजकता, उत्पादकस्योत्पादनानि यन्त्रणाद्दूरीकरणम्, वैयक्तिकसंपत्तिश्चेत्येवमादयोऽनर्था नासन् प्राचीने साम्यसंघे, भविष्यति च समाजवादिसमाजे न भविष्यन्ति। सर्वैरेतैः कारणैरुत्पादकस्य दासत्वापादनानुगुणस्य शासकवर्गकर्तृकशोषणदमनादेरौचित्यसिद्धये वर्गधर्मानुसारिणी शिक्षा तदनुगुणोद्घोषश्च तदानीमावश्यक आसीत्। कर्त्तव्यलोकसंग्रहसम्बन्धी विशालतर्कश्च बन्धुवधायार्जुनं प्रवर्त्तयितुं न शेकतुः। अर्जुनस्य मनसि भावना अनुभूतयश्च प्रबुद्धाः, सकृन्मरणानन्तरम् स स्वयमन्ये च सर्वे समाप्तिं यास्यन्ति। तादृगुत्थिततर्कशमनाय गीतया सर्वमानवानां साररूप आत्मा पृथक्कृतः। यद्यपि स आत्मा शरीरे गूढस्तथापि ततो भिन्नः ततः पृथग्भूतः स नानुभवति, न विचारयति, न जीवति, न म्रियते। चेतनाभावनादयः शरीरस्य क्षणिका गुणा यस्याः शक्तेः समुत्पद्यन्ते साधिकर्त्तुमशक्या, तत्राविकारप्राप्तौ स्थितप्रज्ञता प्रथते। ततः कर्मलोपो न भवति। तस्यां दशायां हत्वापि न लिप्यते, यतो हन्तुर्हतस्य चात्मा

तटस्थोऽमरश्च तादृगात्मवित् शीतोष्णसुखदुःखादिभिर्न संश्लिष्यते, जीवन्नपि मुच्यते, कर्मफलभोगार्थं पुनर्न जायते।

एवं महाभारतस्य भीषणसंहारो मायायां भ्रमे वा प्रविलापितः। भविष्येऽपि बहुकालं यावत् श्रमिकलोकस्य विद्रोहभावनां शयमितुं क्रोधसंघर्षादिकमपि भवितुमयमुपदेशः। प्रचलितप्रायमेव सिद्धान्तमाश्रित्य जनकस्य तत्सदृशानामन्येषामप्यनेकाः कथाः प्रकल्पिताः, यासु स्वादिष्टं भोजनं कुर्वाणा अपि राजानो न किञ्चत् खादन्ति, नानाविधानि सुखान्यनुभवन्तोऽपि नानुभवन्तीत्यादि प्रवादः। एवमेव श्रमिकदासस्येदं कर्त्तव्यम् यत् बुभुक्षायामपि सुखं मन्येरन्, स्वभावन्नियम्य निर्धारितानि कर्माणि कुर्य्युः, स्वशरीरं चेतनाशून्ययन्त्ररूपेण परिवर्त्तनीयम्। अस्यामवस्थायां दारिद्र्यकष्टे विलीयते। तथा सति धनादिभिर्न किञ्चित्प्रयोजनम्। एवं विचारकलाकौतुकेन सुखप्राप्तौ शाषणस्य, दासतायाः, यथायोग्योत्पादनविभागस्य, शासनतन्त्रस्य, हिंसायश्च सम्बन्धे प्रश्ना एव नोत्थास्यन्ति।

एवं सत्यपि वर्गसमाजसिद्धान्तकाराणां तर्केण मानवबुद्धिः संतुष्यति। मानवाचारविचारव्यवहारेषु नेतृत्वञ्च स्थास्यतीति विश्वासो नासीत्, यतः मानवभावनाप्रतिकूलोऽयं तर्कः, तत एव जनताया बौद्धिकव्यक्तित्वापहारेण शासकवर्गस्यान्धभक्तत्वसंपादनाय "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज" इत्युपदिष्टवन्तः। तदर्थं तु प्रत्येकं धर्मं, प्रत्येकमादर्शञ्च भाग्याश्रितं कृतं 'मां शरणं व्रज'। परमराजकतायाः संकटानाञ्चापसारणसंबन्धे गीतायाः लेखकः पाठकानां समक्षे कस्याश्चनाशायाः सकेतं न करोति। संकटनिवारणार्थं युगे युगे परमेश्वरोऽवतरतीति सान्त्वयित्वा केवलं त्यजति। एवं दुर्बलमानवताया हस्तादिमं विषयमनाच्छिद्य मानवेन योजनानिर्माणमशक्यम्। एवमार्य्याणां समाजो यदा स्वात्मविरोधैः संघर्षैः युद्धैश्च विच्छिन्नस्तस्मिन् युगे पूर्वोक्ता वेदान्तविचारधारोत्पन्ना, शासकवर्गैश्च सा स्वानुकूल्येन योज्यते।

इदमप्यवधेयम्—यत्तस्मिन् युगे सर्वाः सामाजिकचिन्ताः, सर्वे च नियमा धार्मिकसिद्धान्तेषु व्यक्तिगताः, तथैव शोषितवर्गस्य स्वातन्त्र्यप्राप्तिचेष्टाऽपि तेषु तेषु धर्मेषु दार्शनिकविचारधारासु च व्यक्ता, तेन तत्त-

युगस्थवर्गसंघर्षपृष्ठभूमिपरिचयेनैव तत्तत्सम्प्रदायभूमिका शक्यावगमा। आदर्शवादिसिद्धान्तानुसारेणैव सिद्धान्तकारा शोषितसंबन्धेषु किञ्चिदपि परिवर्त्तनमकृत्वैव दासतायाः कटुतां कठोरताञ्च मधुरां कोमलां विधातुं प्रयतन्ते। तद्विषयिणी गीताया भक्तिवादविचारधारा' इत्यादिकं तदपि गीतावचनदुरुपयोगदुरभिसन्धिमूलकम्। श्रमिका अन्ये च सर्वत्र प्रायेणेश्वरवादिनोऽध्यात्मवादिनः शास्त्रप्रामाण्यवादिनश्च। बम्बई अहमदावादादि महोद्योगादिसंस्थानेषु श्रमिका अपि सत्यनारायण-कथाः शृण्वन्ति, हनुमत्पूजनादिकं कुर्वन्ति। तत एव मार्क्सीया अपि स्वीयं नास्तिक्यं सर्वापहारकत्वञ्च प्रच्छादयितुमध्यात्मवादस्य धर्मस्य चान्यथा त्वमुपवर्ण्य भ्रान्तिमुत्पादयन्ति।

वस्तुतस्तु न वैदिकेषु धर्मेषूत्पादकाराजकता, न वा स्वतन्त्रोत्पाद-कानामुत्पादननियन्त्रणाद् दूरीकरणम्। सर्वव्यापाराणां धर्मनियन्त्रितत्वात्।

वैयक्तिकसम्पत्तिस्तु दायमूलिका नापलापमर्हति। आदिमसाम्य-संघस्तु निष्प्रमाण एव। तत एव त्वत्कल्पिता व्यवहारा अपि निष्प्रमाणा एव। भाविसमाजवादिसमाजोऽपि भविष्यगर्भस्थ एव। शास्त्रं न शासक-वर्गस्य दमनादेरौचित्यसिद्धये प्रवर्तते। वेदस्यापौरुषेयत्वेन पुरुषनिर्मितत्वा-भावेन पुरुषाश्रितभ्रमप्रमादविप्रलिप्सादिमूलकत्वासम्भवात्। त्वयाऽपि वैदिकसत्राश्रयेणैवादिमसाम्यसंघः सिषाधयिषितः। अर्जुनस्तु 'स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव' इतिरीत्या भगवदुपदेशेनैव स्वधर्मयुद्धं कर्तुं प्रवृत्तः। आत्मोपदेशस्तु शोकमोहापचिकीर्षयैवेति पूर्वमुक्तमेव। गीतोपदिष्ट आत्मा तु न केवलमुपनिषत्सिद्धः किन्तु मन्त्रसिद्धोऽपि। 'सत्यं ज्ञानमनन्तं ब्रह्म' 'ईशावास्यमिदं सर्वं' इत्यादि मन्त्रैरपि स प्रतिपाद्यते। तज्ज्ञानेन मोक्षोऽपि भवति। यद्ययं सिद्धान्तः प्रामाणिकश्चेत् तदा कैश्चिद् दुरुपयोगे कृतेपि न स सिद्धान्तदोष, 'नत्वेष स्थाणोरपराधो यदेनमन्धो न पश्यति।' मरणा-नन्तरं सर्वे समाप्स्यन्तीति यस्यापि निश्चयस्तस्य भ्रान्तिरेव। विस्तरो 'मार्क्सवाद और रामराज्य' पुस्तके द्रष्टव्यः।

भावनादयस्तु न शरीरस्थगुणाः, किन्तु मनोगुणाः। 'स्थितप्रज्ञतायां कर्मलोपो न भवति' इत्यपि सत्यमेव चित्तैकाग्र्येण निष्प्रपञ्चस्वप्रकाश-

चिदात्मब्रह्मसाक्षात्कारेण पुनर्जन्म न भवतीति युक्तमेव। परन्तु मार्क्सीयानां मते तु देहादिभिन्नोऽभौतिकः कश्चिदात्मैव न विद्यते। तेन तस्य जन्मापि न सिद्धयति। मोक्षकथा तु दूरापास्ता। तत एव तेषां शासकवर्गहितायैव शोषितानां विद्रोहशमनायैव वेदानां वादः प्रवृत्त इति भाति। न केवलं महाभारतस्य भीषणसंहार एव किन्तु सर्वमपि वस्तु मायिकमेव, तथापि भोजनपानादिवत्तत्समानसत्ताकं सर्वमपि व्यावहारिकमत एव व्यवहारे नापलापमर्हति।

जनकस्यान्येषां वा राज्ञां वसिष्ठादिमहर्षीणाञ्च निर्लेपत्वबोधिकाः कथा अपि युक्ता एव। ते यथा नानाविधानि सुखान्यनुभवन्तोऽपि नानुभवन्ति तथैव दुःखान्यनुभवन्तोपि नानुभवन्ति। चन्दनानुलेपनं कण्टकतोदनञ्चानुभवन्तोऽपि नानुभवन्ति।

दाम्भिकास्तु—सुखकाले निर्लेपत्वमात्मनो व्यञ्जयन्ति। दुःखकाले तु विलपन्ति रुदन्ति च।

वस्तुतस्तु यथा लोहितकुसुमादिसन्निधाने स्वच्छेऽपि स्फटिके लौहित्यमाभाति, तत्राज्ञः स्फटिकं लोहितं मनुते। विज्ञस्तु लौहित्यमतात्त्विकं मत्वा स्वच्छमेव स्फटिकं मन्यते, तथैव दर्शनस्पर्शनघ्राणादिव्यापारवतां देहेन्द्रियादीनां सन्निधानेन निर्व्यापारोप्यात्मा व्यापारवानिवाभाति। अज्ञस्त्वात्मानं दर्शनभोजनादिव्यापारवन्तं मनुते। तत्त्वज्ञस्तु निर्व्यापारमेवात्मानं मनुते। तदुक्तं गीतायाम्—

पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन्।
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि॥
नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्।

तत्त्वसाधनवान्निर्धनो वा ज्ञानप्रभावात् शोकमोहातीतो निर्द्वन्द्वो भवति। मिथ्याज्ञानाभिमानस्तु सदित्येव तत्त्वज्ञो न तत्त्वज्ञत्वं ज्ञापयति, न कञ्चिन्मोहयति, नवा कर्तव्यं ध्यायति तेनैव तत्त्वज्ञोऽपि ब्रह्मा सृष्टिं रचयति, विष्णुः पालयति, संहरति च तत्त्वज्ञोऽपि शिवः, युद्धयन्ते च नल-राम युधिष्ठिरादयः। अत एवान्यायप्रतीकारायार्जुनोऽपि भगवता प्रोत्साहितः,

तथैव तत्त्वज्ञा अपि श्रमिका दारिद्र्यचक्रवारणाय शोषणस्य दास्यस्य च शासनतन्त्रस्य विरोधाय कथं नोत्थातुं शिक्षयन्ति ?

यथा रावणस्यात्याचाररोधार्थं श्रीरामस्य, दैत्यानामनयनिवारणार्थं देवानां, कौरवाणामन्यायशोषणादिप्रतीकाराय पाण्डवानां प्रवृत्तिर्जाता, तथैव श्रमिकाणां शोषकशोषणादिप्रतीकारार्थं प्रवृत्तिः सर्वथापि सम्भवत्येव। यो भगवानर्जुनाय 'साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते' इत्युपदिशति स एव।

'अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्तिञ्च हित्वा पापमवाप्स्यसि॥'

इत्युपदिशति। तस्मात् गीतया दुक्तब्रह्मात्मज्ञानेन न व्यमोहो, न वा कर्तव्यच्युतिर्न वा समुपस्थितसमस्याभ्यो वैराग्यं जन्यते इति मृषैव तद्विरुद्धारोपप्रयासः। 'सर्वधर्मान् परित्यज्य' इत्यस्यापि न बौद्धिकव्यक्तित्वापहारेण शासकशरणागत्युपदेशे तात्पर्य्यं किन्तु सर्वव्यापारत्यागपूर्वकब्रह्मात्मतत्त्वसाक्षात्कारेण ब्रह्मात्मनिष्ठायामेव तात्पर्य्यम्।

श्लोकार्थस्तु—सर्वधर्मान् देहादिव्यापारानपरित्यज्य ज्ञानदृष्टया मां प्रत्यक्चैतन्याभिन्नं परमात्मानम् एकं सजातीयादित्रिविधभेदशून्यम् शरणमाश्रयं रक्षितारं वा व्रज अवगच्छ।

'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।
बुद्धिश्च न विचेष्टते तामाहुः गतिम्॥'

इत्युपनिषद्वचनात् बौद्धविकासफलमिदं ज्ञानं न बोद्धव्यमुक्तित्वापहारमूलकम्। बुद्धिहीनैः संकुचितबुद्धिभिस्तदवगमासंभवात्। नहि गीतायां भाग्याश्रयं किञ्चिद्विधीयते तथात्वे—

'तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः।'

'मा ते सङ्गोऽस्त्वकर्मणि।' 'शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः' इत्युपदेशानुपपत्तेः। नवात्र शासकशरणागतिविधिः, निर्गुणस्य सगुणस्य वा परमात्मन एव मां पदव्यपदेश्यत्वात्। नात्रार्जुनः शोषितो, न वा कृष्णस्तच्छासकः तयोरभिन्नहृदयमित्रत्वात्। महाभारतपर्य्यालोचनया न तदानीं श्रमिकाणां साम्यसंधानां गणानां वा काचित् समस्यासीत्। राजकुलेष्वेव

स्वत्वापहारतद्रक्षणसंबन्धिविवादस्य दर्शनात्। प्रजासंतोषार्थन्तूभयपक्षीयाणामहमहमिकया प्रवृत्तिरासीत्। धार्मिकसिद्धान्तेष्वपि वर्गभेदवर्गसंघर्षवर्गविध्वसानां संकेतो नोपलभ्यते, न वा तेषु कटुताप्रसङ्गः। स्वाम्यूहितन्तु मार्क्सीयैस्तदारोप्यते। अत एव न कटुतां कोमलां मधुरां वा विधातुं भक्तियोगः, किन्तु 'भक्त्यामामभिजानाति' 'भक्तिं मयि परां कृत्वा' 'मामेवैष्यसि' इत्यादि वचनैर्भगवत्तत्त्वज्ञानार्थमेव। तत्प्राप्त्यर्थमेव तु भक्तिवादः प्रवृत्तः। भक्तौ च सर्वेषामविशेषं प्रवृत्तौ राज्ञां प्रजानाञ्च अकिञ्चनानामन्येषां भक्तिपरायणता दृश्यते।

स्वयं विनाश्य पृथ्वीं यज्ञार्थं द्विजसत्तम।

संघशोकपरायणः ॥ (म.भा. अश्वमेधपर्व)

एतेन शासकवर्गस्य शक्तिक्षयः कल्पयितुं शक्यः। अश्वमेधयज्ञरूपे विजयमहोत्सवे जनताया उत्साहो नासीत्। पाण्डवानामुत्सवभूमौ कश्चित्स्वर्णिमार्धकायां मूषकः प्रविष्ट इतस्ततो परिभ्राम्याघ्राय कस्मिंश्चित्पृच्छति जगाद—'केनचिद्दरिद्रेण यत्र क्षुधिताय सक्तुमात्र दत्तम्, तद्भूमिस्पर्शेन मम शरीरार्धं स्वर्णमयं जातम्, परमत्र दासस्वामिनां महति यज्ञे सर्वशरीरं स्वर्णमयं विधातुमहमागतः। परमत्र तादृशी शक्तिर्नास्ति। विजेतॄणां पुण्येष्विदं साधारणानां भाष्यम्। शासकवर्गीयवर्णा दारिद्र्याभिभूता हरिश्चन्द्रादयः कस्यापि हस्ते स्वात्मानं विक्रेतुं सन्नद्धाः। अनावृष्ट्याऽकालेन पीडिता ब्राह्मणाः विश्वामित्रादयः पलाय्यारण्येषु श्वमांसार्थं चाण्डालानां शरण गताः। पराजितानां दास्यं गतानां तेषामयमवसरः प्राप्तः, यैर्विजयिनामार्य्याणां पुण्यतमाय विश्वामित्राय जीवनरक्षार्थं श्वमांसभक्षणं नोचितमित्युपदिष्टम्। महतां राज्यानामातङ्के दौर्बल्यमुपगते शासकवर्गस्य वैभवलोभः सर्वसमक्षमुपागतः।

तदप्युन्मादविलसितम्, विशृङ्खलत्वात्। पराजिता राजानो राजवश्या राजन्या वा क्षीणा इति सत्यं परं दासस्वामित्वादिकं तु निष्प्रमाणम् क्षितीशत्वतद्विशेषणवैयर्थ्यात्। दासाः कर्मकराश्चाल्पीयां स एव–तदपेक्षयाऽन्येषामाधिक्यात्। नागानां निषादानाञ्च सुखश्वासावसरो लब्ध इति तु दुरभिसंधिमूलिका कल्पना। नागनाम्ना प्रसिद्धस्य मनुष्यगणस्या-

प्रामाणिकत्वात् । काद्रवेया नागास्तु सर्पजातीया एव । दिव्यत्वात्तु ते स्वेच्छया मनुष्यरूपमपि निर्माय कदाचिद्व्यवहरन्ति स्म । तेषां राजकुलैराय्यैर्वा कश्चन संघर्षो नासीत् । मुनिशापवशात्तु तक्षकेण नागेन परीक्षिद् दष्टः । जनमेजयेन च सर्पसत्रयज्ञे बहवो नागाः सर्पाश्च दग्धाः । वासुकिभागिनेयेनास्तीकब्राह्मणेनैवावशिष्टा नागा सत्तावरोधेन रक्षिताः । न ततः प्राक् क्षत्रियैर्ब्राह्मणैराय्र्य-जातीयैर्वा तेषां संघर्ष इति तेषां सुखश्वासावसरलाभकथा मृषैव ।

एवं निषादैरपि न वा तेषाम् संघर्षो न कश्चिद् गणः प्रसिद्धः । जातिमात्रेण तु ब्राह्मणक्षत्रियादिगणा अपि भवन्त्येव । निषादेन केनचिद्भ्रान्त्या निर्याणकाले कृष्णाय बाणः प्रहित इति तैरपि न संघर्षः । तस्मात्कुशकाशापलम्बनमेव तत् । युद्धेन धनजनक्षयो भवतीत्यत्र को विप्रतिपद्यते ? अधार्मिकाणां निहतशत्रुसम्पत्तिलाभेन तत्पूर्तिर्भवति । धार्मिकाणान्तु तत्सर्वं तदुत्तराधिकारिणामेव भवति । तत्रैव श्रीकृष्णेन यज्ञोपयोगिधनलाभार्थमुपायोऽप्युक्तः । यज्ञश्च सम्पन्नः अश्वमेधस्तु न विजयमहोत्सवरूपेण कृतः, किन्तु प्रायश्चित्तरूपेणैव कृतः । 'तरति ब्रह्महत्याम्', तरति वीरहत्याम्, य उ अश्वमेधेन यजते, य उ चैनं वेद' इत्यादि वचनेभ्यः । तत्रैव अर्धस्वर्णिमकायस्य नकुलस्य (न मूषकस्य) नैराश्यं जातम्' । सर्वत्रैव च शास्त्रेषु अकिञ्चनानां माहात्म्यातिशयो भवतीति न विस्मर्त्तव्यम् । न्यायशीलानां राज्ञामपि धनाभावः स्मर्य्यते, यतस्तेषामायव्ययौ समावेव भवतः । यतो हि तावदेवादीयते धनं कररूपेण प्रजाभ्यो यावत्तासां पालन उपयुज्येत । शिलोञ्छवृत्तिलभ्यसक्तुदानापेक्षया कृषिवाणिज्यादिलभ्यधनस्य निकृष्टता सर्वविदितैव ।

तथाहि—भगवता व्यासेन पावनो वाजिमेधः क्रतुः प्रायश्चित्तरूपेण कर्त्तव्यतया उक्तः । तत्र युधिष्ठरो वक्ति धनसापेक्षः क्रतुः ।

दानमल्पं न शक्नोमि दातुं वित्तं च नास्ति मे ॥१२॥

न तु बालानिमान् दीनानुत्सहे वसु याचितुम् ।

तथैवार्द्रव्रणान् कृच्छ्रे वर्त्तमानान् नृपात्मजान् ॥१३॥

स्वयं विनाश्य पृथिवीं यज्ञार्थं द्विजसत्तम।
करमाहारयिष्यामि कथं शोकपरायणः॥ १४॥

एवमुक्तवचनै राज्ञो हृदयमार्दवम्, करादिग्रहणादिभिरपि यज्ञं कर्तुमनीहा च व्यज्यते। सामग्रीणामभावादवैधो यज्ञो भविष्यति इत्यादि तद्वचः श्रुत्वा भगवान् व्यासो धनप्राप्त्युपायमुक्तवान्।

कोशश्चापि विशीर्णोऽयं परिपूर्णो भविष्यति।
विद्यते द्रविणं पार्थ गिरौ हिमवति स्थितम्॥ २०॥
उत्सृष्टं ब्राह्मणैर्यज्ञे मरुत्तस्य महात्मनः।
तदानयस्व कौन्तेय पर्य्याप्तं तद् भविष्यति॥ २१॥

(अश्वमेध पर्व ३ अध्याये)

एतेन ब्राह्मणानां त्यागशालित्वं व्यज्यते। तैः केवलं यज्ञपूर्त्यर्थमेव स्वर्णादिदक्षिणा गृह्यते निरपेक्षत्वात्तु त्यज्यते। तत एव मरुत्तयज्ञे दक्षिणां गृहीत्वा यज्ञपूर्तिं विधाय स्वर्णराशिं व्यक्त्वा गता ब्राह्मणाः। महाभारतानुसारेण युधिष्ठिरस्याश्वमेधो यथाविधि साङ्गोपाङ्गः सम्पन्नः। राज्ञा च दक्षिणा अपि सम्यक् दत्ताः। धनं न प्रजानां राज्ञां वा परपीडया प्राप्तं किन्तु ऋषीणामाज्ञया शिवाराधनेनावाप्तम्। पृथिव्या जयेन पृथ्वीस्थितस्य सर्वस्यैव धनस्य राजा धर्मत ईश्वरो भवति।

युधिष्ठिरस्तु धनं सर्वां च पृथ्वीं दानरूपेण ब्राह्मणेभ्यो दत्तवान्।

'ततो युधिष्ठिरः प्रादात् ब्राह्मणेभ्यो यथाविधि।
कोटीः सहस्रं निष्काणां व्यासाय तु वसुन्धराम्॥'

(अश्वमेध प. ८९ अ. ७)

व्यासेन धरां प्रतिगृह्य यज्ञपूर्तिं सम्पाद्य धरा प्रत्यावर्तिता।

प्रतिगृह्य धरां राजन् व्यासः सत्यवतीसुतः॥ ८॥
अब्रवीद् भरतश्रेष्ठं धर्मराजं युधिष्ठिरम्।
वसुधा भवतस्त्वेषा सन्यस्ता राजसत्तम॥ ९॥
निष्क्रयो दीयतां मह्यं ब्राह्मणा हि धनार्थिनः।

(अश्वमेध पर्व ८९)

युधिष्ठिरेणोक्तम्—

नाहमादातुमिच्छामि ब्रह्मस्वं द्विजसत्तमाः ॥ १३ ॥

वासुदेवाज्ञया व्यासाज्ञया चापारस्वर्णराशिं दत्त्वा युधिष्ठिरेण पृथ्वी स्वीकृता। तत्रैव यज्ञस्योत्कर्ष उक्तः।

'न करिष्यति तल्लोके कश्चिदन्यो नराधिपः।
यत्कृतं कुरुराजेन मरुत्तास्यानुकुर्वता ॥ २० ॥
(अश्व. ८९)

न केवलं ब्राह्मणेभ्योऽपि तु सर्वेषामेव तत्र महाधनलाभः।

'अनन्तरं द्विजातिभ्यो: क्षत्रिया जह्रिरे वसु।
तथा विट्शूद्रसंघाश्च तथान्ये म्लेच्छजातयः ॥ २६ ॥'
(अश्व. प. ८९)

तस्मात् डांगे महाशयस्य संग्रामोत्तरकालिकदारिद्र्यवर्णनमतिरञ्जितमेव।

'वर्षित्वा घनधाराभिः कामै रत्नैः रसैस्तथा।
विपाप्मा भरतश्रेष्ठः कृतार्थः प्राविशत् पुरीम् ॥ ४४ ॥
(अश्व. प. ८९)

इतिवचनचयविरुद्धत्वात्।

अर्धस्वर्णिमकायमूषककथापि डांगे महाशयेन सम्यङ् नाधीता। वस्तुतो नकुलकथास्ति, न मूषक कथा। तत्रैव अश्व. ९० अध्याये।

'तर्पितेषु द्विजाग्र्येषु ज्ञातिसंबन्धिबन्धुषु।
दीनान्धकृपणे वापि तदा भरतसत्तम ॥ ३ ॥
घुष्यमाणे महादाने दिक्षु सर्वासु भारत।
पतत्सु पुष्पवर्षेषु धर्मराजस्य मूर्धनि ॥ ४ ॥
नीलाक्षस्तत्र नकुलो रुक्मपार्श्वस्तदानघ।
वज्राशनिसमं नादममुञ्चद् वसुधाधिप ॥ ५ ॥
सकृदुत्सृज्य तन्नादं त्रासयानो मृगद्विजान्।
मानुषं वचनं प्राह धृष्टो विलशयो महान् ॥ ६ ॥
सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो नराधिपाः।
उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः ॥ ७ ॥

तद्वचनं श्रुत्वा विस्मिता ब्राह्मणाः पप्रच्छुः—

किं बलं परमं तुभ्यं किं श्रुतं किं परायणम् ।
भवन्तं कं च विद्यामो यो नो यज्ञं विगर्हसे ॥ १० ॥

अयं यज्ञो यथागमं यथान्यायं निर्वर्तितः ।

'अविलुप्यागमं कृत्स्नं विविधैर्यज्ञियैः कृतम् ।
यथागमं यथान्यायं कर्तव्यश्च तथा कृतम् ॥ ११ ॥

अत्र सर्वेऽपि संमानिताः ।

'पूजार्हाः पूजिताश्चात्र विधिवच्छास्त्रदर्शनात् ।
मन्त्राहुति हुतश्चाग्निर्दत्तं देयममत्सरम् ॥ १२ ॥
तुष्टा द्विजातयश्चात्र दानैर्बहुविधैरपि ।
क्षत्रियाश्च सुयुद्धेन श्राद्धैश्चापि पितामहाः ॥ १३ ॥
पालनेन विशस्तुष्टाः कामैस्तुष्टाः वरस्त्रियः ।
अनुक्रोशैस्तथा शूद्रा दानशेषैः पृथग्जनाः ॥ १४ ॥
ज्ञातिसम्बन्धिनस्तुष्टाः शौचेन च नृपस्य नः ।
देवा हविर्भिः पुण्यैश्च रक्षणैः शरणागताः ॥ १५ ॥

नकुलेन च स्वानुभूता विप्राग्र्यस्योञ्छवृत्तेः कथा कथिता । सोऽपि ब्राह्मण एव । त्वदीयदृष्ट्या तु ब्राह्मणक्षत्रियावुभावपि शोषकावेव ।

'हन्त वो वर्तयिष्यामि दानस्य फलमुत्तमम् ।
न्यायलब्धस्य सूक्ष्मस्य विप्रदत्तस्य च द्विजाः ॥ २३ ॥
उञ्छवृत्तिर्द्विजः कश्चित् कापोतिरभवत्तदा ॥ २४ ॥

कपोतवृत्त्याऽनिःस्वामिकानन्नकणानाचित्य कुटुम्बं पालयति स्म । स प्रतिदिनं षष्ठे काले भुंक्ते स्म । तदानीमाहारालाभे पुनः षष्ठे काले तृतीयेऽह्नि भुंक्ते स्म ।

कदाचिद् दारुणे दुर्भिक्षे क्षीणौषधिसमावेशेऽन्नहीनो जातः । उञ्छाप्राप्त्या सकुटुम्बः क्षुत्क्षामः सञ्जातः ।

कदाचिदुञ्छवृत्त्यैव प्रस्थमितं यवं प्राप्य सक्तून् निर्माय आह्निकं जपादिकं विधायाग्निं हुत्वा विभज्य सकुटुम्बो भोक्तुं प्रवृत्तस्तदानीमेव कश्चिदतिथिरागतः । तं दृष्ट्वा सर्वे प्रहृष्टमनसो विशुद्धमनसः

विक्रोधा वीतमत्सराः अतिथिमर्घ्यपाद्यादिभिः संपूज्य भोजयामासुः। यदैकांशभक्षणेनापि स न तृप्तस्तदा क्रमेण तस्य भार्य्या पुत्रः पुत्रवधूश्च निर्व्यलीकमतीव श्रद्धया स्वं स्वं भागं तस्मै ददुः। तृप्तः सन्नतिथिराह- स तु धर्म एव मनुष्यविग्रहो भूत्वा तस्य सकुटुम्बस्य धैर्य्यपरीक्षार्थ- मागत आसीत्।

प्रीतात्मा स तु तं वाक्यमिदमाह द्विजर्षभम्।
वाग्मी तदा द्विजश्रेष्ठो धर्मः पुरुषविग्रहः॥ ८२॥
शुद्धेन तव दानेन न्यायोपात्तेन धर्मतः।
यथाशक्ति विसृष्टेन प्रीतोस्मि द्विजसत्तम॥ ८३॥
अहो दानं घुष्यते ते स्वर्गे स्वर्गनिवासिभिः॥ ८४॥
श्रद्धया परया यस्त्वं तपश्चरसि सुव्रत॥ ८८॥
तस्मात् देवाश्च दानेन प्रीता ब्राह्मणसत्तम।
सर्वमेतद्धि यस्मात्ते दत्तं शुद्धेन चेतसा॥ ८९॥
कृच्छ्रकाले ततः स्वर्गो विजितः कर्मणा त्वया।
क्षुधा निर्णुदति प्रज्ञां धर्मबुद्धिं व्यपोहति॥ ९०॥
क्षुधा परिगतज्ञानो धृतिं त्यजति चैव ह।
"बुभुक्षां जयते यस्तु स स्वर्गं जयते ध्रुवम्"॥ ९१॥
"यदा दानरुचिः स्याद्वै तदा धर्मो न सीदति"।
अनवेक्ष्य सुतस्नेहं कलत्रस्नेहमेव च॥ ९२॥
धर्ममेव गुरुं ज्ञात्वा न तृष्णा गणिता त्वया।
"स्वर्गार्गलं लोभबीजं रागगुप्तं दुरासदम्।
तं तु पश्यन्ति पुरुषा जितक्रोधा जितेन्द्रियाः॥ ९५॥
ब्राह्मणास्तपसा युक्ता यथाशक्ति प्रदायिनः"।
रन्तिदेवो हि नृपतिरपः प्रादादकिञ्चनः॥ ९७॥
शुद्धेन मनसा विप्र नाकपृष्ठं ततो गतः।
न धर्मः प्रीयते तात दानैर्दत्तैर्महाफलैः॥ ९८॥
न्यायलब्धैर्यथासूक्ष्मैः श्रद्धापूतैः स तुष्यति॥
गोप्रदानसहस्राणि द्विजेभ्योऽदान्नृगो नृपः॥ ९९॥

एकां दत्त्वा स पारक्यां नरकं समपद्यत ।
आत्ममांसप्रदानेन शिबिरौशीनरो नृपः ॥ १०० ॥
प्राप्य पुण्यकृतांल्लोकान् मोदते दिवि सुव्रतः ।
न राजसूयैर्बहुभिरिष्ट्वा विपुलदक्षिणैः ॥ १०३ ॥
न चाश्वमेधैर्बहुभिः फलं समभिदं तव ।
सक्तुप्रस्थेन विजितो ब्रह्मलोकस्त्वयाक्षयः ॥ १०४ ॥
विरजो ब्रह्मसदनं गच्छ विप्र यथासुखम् ।
सर्वेषां वो द्विजश्रेष्ठ दिव्यं यानमुपस्थितम् ॥ १०५ ॥
आरोहत यथाकामं धर्मोऽस्मि द्विज पश्य माम् ।
तारितो हि त्वया देहो लोके कीर्तिः स्थिरा च ते ॥ १०६ ॥
ततस्तु सक्तुगन्धेन क्लेदेन सलिलस्य च ॥ ९ ॥
दिव्यपुष्पविमर्दाच्च साधोर्दानलवैश्च तः ।
विप्रस्य तपसा तस्य शिरो मे कांञ्चनी कृतम् ॥ ११० ॥
तस्य सत्याभिसन्धस्य सक्तुदानेन चैव ह ।
शरीरार्धं च मे विप्राः शातकुम्भमयं कृतम् ॥ १११ ॥
कथमेवंविधं स्याद्वै पार्श्वमन्यदिति द्विजाः ॥ ११२ ॥
तपोवनानि यज्ञांश्च हृष्टोऽभ्येमि पुनः पुनः ।
यज्ञं त्वहमिमं श्रुत्वा कुरुराजस्य धीमतः ॥ ११३ ॥
आशया परया प्राप्तो न चाहं काञ्चनीकृतः ।
ततो मयोक्तं तद्वाक्यं प्रहस्य ब्राह्मणर्षभाः ॥ ११४ ॥
सक्तुप्रस्थेन यज्ञोऽयं सम्मितो नेति सर्वथा ।

यज्ञैर्विना तपोभिरेव ऋषिकोटिसहस्राणि दिवं गतानि । यतः—

अद्रोहः सर्वभूतेषु संतोषः शीलमार्जवम् ।
तपो दमश्च सत्यञ्च प्रदानं चेति सम्मितम् ॥ १२० ॥

एतावता वैदिकशास्त्रं शोषकाणां धनिनां शासकानामेवोपकारकं तैरेवादृतमित्याद्युक्तिस्तु द्वेषमूलिकैव; यज्ञैरपि धनवितरणादिना भूतहितमेव सम्पद्यते। तत एव बहवो राजानो यज्ञैरिष्ट्वा स्वर्गं ययुः। यज्ञैरेव शतक्रतुपदं लभ्यते। तत्रैव जनमेजयस्य शंका—

'अथ कस्मात् स नकुलो गर्हयामास तं क्रतुम् ।
अश्वमेधं महायज्ञं राज्ञस्तस्य महात्मनः ॥ ६ ॥'

( अश्व प० ९१ )

तत्र समाधानरूपेणोक्तं यत्-हिंसयाऽन्यायेन च लब्धैर्धनैः कृतो महानपि यज्ञो न धर्मो न वा महत्त्वमुपगच्छति । अगस्त्यस्य महर्षेर्यज्ञस्तु त्यागतपोमयत्वादतीव महत्त्वपूर्णः संवृत्तः । यदा तस्य द्वादशवार्षिके यज्ञे देवो न ववर्ष ऋषयश्चिन्तातुरा जाताः । अगस्त्येन तपोबलेन सर्वं समाहितम् । तेनोक्तम्—अहं चिन्तया स्पर्शेन ध्यानेन बीजैर्वा यज्ञं करिष्यामि । तथापीन्द्रो न वर्षिष्यति चेत्तदा स्वयमेव इन्द्रो भूत्वा प्रजा जीवयिष्यामि । तत्संकल्पेनैव तदानीं स्वर्णरत्नादीनि दिव्यानि समुपागतानि । इन्द्रश्च समागत्य तं प्रसादयामास । नकुलस्तु शापग्रस्तो धर्म एवासीत् । पुरा भार्गवस्य जमदग्नेः श्राद्धकर्मणि होमधेनुर्दुग्धं दत्तवती । मुनिश्च तन्नवे सुदृढे भाण्डे दुग्धं स्थापितवान् । धर्मः क्रोधरूपेण तत्र प्रविष्टः मुनिं परीक्षितुम् स्पर्शेण दूषितवान् । मुनिश्च क्रोधरूपं तं विज्ञाय कोपं न चकार । ततः स ब्राह्मणो भूत्वा भृगुश्रेष्ठमाह-त्वयाहं जितः, 'भृगवो ह्यतिरोषणाः' इत्ययं प्रवादस्त्वया मिथ्याभूतो जातः ।

'वशे स्थितोहं त्वय्यद्य क्षमावति महात्मनि ।
बिभेमि तपसा साधो प्रसादं कुरु मे प्रभो ॥ ४६ ॥

जमदग्निना प्रोक्तं त्वया मे नापकृतं विगतज्वरो गच्छ । अस्य दुग्धस्य स्वामिनस्तु पितरो भवन्ति, यानुद्दिश्येदं स्थापितम् । इत्युक्तस्ततो धर्मोऽन्तर्धानं गतः । पितृभिरेवोक्तम्—

'तैश्चाप्युक्तः क्षिपन् धर्मं शापस्यान्तमवाप्स्यसि ॥ ५० ॥
धर्मपुत्रमथाक्षिप्य सक्तुप्रस्थेन तेन सः ।
मुक्तः शापात् ततः क्रोधो धर्मो ह्यासीद्युधिष्ठिर ॥ ५२ ॥

( अश्व प० ९२ )

भारतीया राजानः कदाचिदपि शोषका नासन् । प्रजापालनापेक्षि-धनातिरक्तधनग्रहणनिरपेक्षा आसन् । तथाहि—

लोमश उवाच

ततो जगाम कौरव्य सोऽगस्त्यो भिक्षितुं वसु।
श्रुतर्वाणं महीपालं यं वेदाभ्यधिकं नृपैः॥ १॥

(म० भा० व० प० ९८)

अगस्त्य उवाच

वित्तार्थिनमनुप्राप्तं विद्धि मां पृथिवीपते।
यथाशक्त्यविहिंस्यान्यान् संविभागं प्रयच्छ मे॥ ४॥

लोमश उवाच

तत आयव्ययौ पूर्णौ तस्मै राजा न्यवेदयत्।
अतो विद्वन्नुपादत्स्व यदत्र वसु मन्यसे॥ ५॥
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः।
सर्वथा प्राणिनां पीडामुपादानादमन्यत॥ ६॥
स श्रुतर्वाणमादाय ब्रध्नश्वमगमत्ततः।

(म० भा० व० प० ९८)

अत्र धर्मनिष्ठेषु सर्वेषु नृपेषु शोषणकथापि कल्पयितुं न शक्यते। मदालसया च स्वपुत्राय राज्ञे यदुपदिष्टं तेनापि राज्ञामपि त्यागप्रधानो धर्मो ज्ञायते—

'धरामरान् पर्वसु तर्पयेथाः समीहितं बन्धुषु पूरयेथाः।
हितं परस्मै धृतिचिन्तयेथाः मनःपरस्त्रीषु निवर्तयेथाः॥
सदा मुरारिं हृदि चिन्तयेथास्तद्ध्यानतोऽन्तःषडरीन् जयेथाः।
मायां प्रबोधेन निवारयेथा ह्यनित्यतामेव विचिन्तयेथाः॥
अर्थागमाय क्षितिपाञ्जयेथा यशोर्जनायार्थमपि व्ययेथाः।
परापवादश्रवणाद्बिभीथा विपत्समुद्राज्जनमुद्धरेथाः॥
राज्यं कुर्वन् सुहृदो नन्दयेथाः साधून् रक्षंस्तात यज्ञैर्यजेथाः।
दुष्टान्निघ्नन् वैरिणश्चाजिमध्ये गोविप्रार्थे वत्स मृत्युं भजेथाः॥'

हरिश्चन्द्रादयस्तु—भिन्नकालिका महाभारतसंग्रामकालात्तेषामनेकलक्षवर्षप्राचीनत्वात्। न च ते दारिद्र्याभिभूताः किन्तु स्वेच्छया समृद्धस्य राज्यस्य ब्राह्मणाय दाने कृते तत्साङ्गता सिद्ध्यर्थमपेक्षितधनलाभायैव स्वात्मा

चण्डालाय विक्रीतः। स्पृहणीयं खल्वेतादृशं दारिद्र्यं स्वात्मविक्रयणञ्च।

विश्वामित्रकथापि न महाभारतकालिकी। अनावृष्टिकृतं दारिद्र्यन्तु सर्वस्यैव कृते तदानीमासीन्न विश्वामित्रस्यैव। विपन्नानामापद्धर्मेण निर्वाहस्तु शास्त्रीयः पन्थाः। न तत्रार्य्यानार्य्यसंघर्षो न वा शोषितशोषक-संघर्षः।

पराजितानामेव दास्य—चण्डालत्वादिकमिति तु पाश्चात्यानां मतम्। भारतीयदृष्ट्या तु विजेतारोऽपि यवना आङ्ग्लाश्च तद्वदेवास्पृश्या भवन्ति। व्यभिचारविशेषजत्वेन तु चण्डालादयो भवन्ति। शूद्राद् ब्राह्मण्यां जातः, सगोत्रविवाहाज्जातः, परिव्राजकाज्जातश्च चण्डाला भवन्ति। तेन नात्रापि शोषितशोषकसंघर्षकल्पना।

महाभारतकालिकेनेतिहासेन हरिश्चन्द्रविश्वामित्रादीनां सम्बन्धयोजनं नहुषस्येव मार्क्सेन बलात्कारितमेव।

यदपि च—'नैतिकताया धर्मस्य च सर्वाः कथाः, अन्यश्रमोपार्जितभूमि-धनाद्यानन्दाहरणार्थम्। प्रावरणजवनिका प्रायाः। मुखरभौतिकवादस्तेषां समक्ष-मुपस्थितः। स्ववर्गहितम्प्रति सत्यनिष्ठाः पाण्डवा भौतिकवादिवधे प्रवृत्ताः, तथाप्युत्थानशीलानां जातीनां प्रगतिरशक्यप्रतीकारैवासीत्। जीवितगण-संघेष्वपि गृहयुद्धं प्रवृत्तम्। मौसलपर्वणि यादवानां गणसंघेऽपि संघर्षः प्राबल्यमुपागतः।

यद्यपि महाभारतयुद्धात् स तटस्थ एवासीत्। स च शिशुपाल-जरासन्धादि कृताक्रमणपरिक्रान्तः सौराष्ट्रे द्वारवतीं प्रस्थितः। तत्रापि प्रमुखधनिककुलेषु भीषणं वैमनस्यं प्रवृत्तम्। निर्वाचितगणपतिना श्रीकृष्णेन नारदम्प्रत्युक्तम्। यादवानां स्वपक्षे रक्षणं दुःशकं। नारदेन कृष्णे अनम्रकटुभाषित्वसहभोजोपहारादावव्ययित्वादिदोष आरोपितः।

वस्तुतो वर्गविभाजनभारेण गणसंघटनं छिन्नं भिन्नमासीत्। मौसलानुसारेण प्रभासे भुक्त्वा पीत्वा वादविवादानन्तरं युद्धमारब्धम्। अभिजातकुलेषु गूढं वैमनस्यं सार्वजनिकसंहाररूपेण व्यक्तम्। गृहयुद्ध-समये नागजातीयैः गणसंघनगरमाक्रान्तम्। तस्मिन्नेवाक्रमणे कृष्णोऽपि स्वधामोपगतः। सर्वेऽपि प्रमुखाः प्रायेण तत्र युद्धे हताः। परवर्त्तिकाले गृहयुद्धं यादवी नाम्ना प्रसिद्धम्, इत्यादि।

द्वाभ्यां निवारितो नित्यं वृणोम्येकतरं न च ॥ ९ ॥
स्यातां यस्याहुकाक्रूरौ किन्तु दुःखतरं ततः ।
यस्य चापि न तौ स्यातां किन्तु दुःखतरं ततः ॥ १० ॥
योऽहं कितव मातेव द्वयोरपि महामते ।
एकस्य जयमाशंसे द्वितीयस्य पराजयम् ॥ ११ ॥
ममैवं क्लिश्यमानस्य नारदोभयतः सदा ।
वक्तुमर्हसि यच्छ्रेयो ज्ञानिनामात्मनस्तथा ॥ १२ ॥

एतेन गणेषु संघेषु काचित् समस्या न भवति तेषां परस्परयुद्धस्यावसर एव न भवति, बाह्यैरेव तत्र युद्धं भवति इत्येतदुक्तिरपास्ता ।

गणेषु संघर्षो मतभेदाभ्यां बहूनां शोषणं विनाशश्च भवतः, बहूनां पोषणञ्च जायते । गणमुख्यस्य कृष्णस्यापि कृते तच्छिरःशूलमेवासीत् गणशासनम् । नारदेन तु बाह्याभ्यन्तरापद्द्वैविध्येनास्याः स्ववंशप्रभवत्वादाभ्यन्तरत्वं स्वकर्मजत्वञ्चोक्तम् ।

'सेयमाभ्यन्तरा तुभ्यमापत् कृच्छ्रा स्वकर्मजा ।
अक्रूरभोजप्रभवा सर्वे ह्येते त्वदन्वयाः ॥ १४ ॥

नात्र भगवानुपालभ्यते किन्तु भवतैव पूर्वमुग्रसेनः सिंहासनारूढः कृतः । बद्धमूलश्चेदानीं महान्तं धनक्षयं ज्ञातिक्षयं वाऽन्तराऽशक्योन्मूलनः तदेवोच्यते ।

'अर्थहेतोर्हि कामाद्वा वाचा बीभत्सयाऽपि वा ।
आत्मना प्राप्तमैश्वर्य्यमन्यत्र प्रतिपादितम् ॥
कृतमूलमिदानीं तज्ज्ञातिशब्दं सहायवान् ।
न शक्यं पुनरादातुं वान्तमन्नमिव त्वया ॥' १४-१५-१६
बभ्रूग्रसेनयो राज्यं नाप्तुं शक्यं कथञ्चन ।
ज्ञातिभेदभयात् कृष्ण त्वया चापि विशेषतः ।
तच्च सिद्ध्येत् प्रयत्नेन कृत्वा कर्म सुदुष्करम् ।
महाक्षोभोव्ययो वा स्यात् विनाशो वा पुनर्भवेत् ॥ १७-१८ ॥

तस्मात्—

'अनायासेन शस्त्रेण मृदुना हृदयच्छिदा ।
जिह्वामुद्धर सर्वेषां परिमृज्यानुमृज्य च ॥ १९ ॥

तदपि मन्दम् निर्मूलत्वात्। आर्य्येषु ब्राह्मणास्तपःपरायणाः शिलोञ्छवृत्तयः निर्व्यलीकधर्मनिष्ठा आसन्। राजर्षयश्च त्यागशीला प्रजाहिताय स्वात्मोत्सर्गाय सदैव सन्नद्धा आसन्निति नहुषययातिहरिश्चन्द्र-पृथुप्रभृतिकथाभिः स्पष्टम्। तस्य काल्पनिकत्वे त्वत्कल्पितानां गणसंघर्षादिकथानां सुतरां मस्तिष्कविकारमात्रत्वम्।

एञ्जेल्स मार्क्सादिविश्लेषणानामपि सैव गतिः। युधिष्ठिरस्याजातशत्रुत्वन्तु महाभारत एवोक्तम्। तस्याप्रामाण्ये तत्सत्त्वमपि कुतः सेत्स्यति? शिशुपाल-जरासन्धादयस्तु कृष्णेन पराजिता समूलघातं घातिताः। वृष्ण्यन्धकानां तु राजा उग्रसेन आसीत्। कृष्णस्तु भगवानेवासीद्यद्यपि तथापि तत्सहायक एवासीत्। नारदेन कृष्णे दोषा नारोपिताः किन्तु संघरक्षणाय भिन्नसंधानाय चोपाय एवोपदिष्टाः। यादवानां परस्परयुद्धेन संहारेणापीदमेव ज्ञायते यत् शास्त्रीयनियमपालननिष्ठाशैथिल्येन गणतन्त्रशासनेषु राजतन्त्रशासनेषु वा सर्वत्रैवानर्थपारम्पर्य्यमापद्यते। राज्यराजादिशून्ये कृतयुगीयसमाजेऽपि तत एवानर्थपारम्पर्य्यमायातम्। तस्माच्छास्त्रदृष्टिभिरेव भाव्यमिति तु सर्वसारः।

नागजातीयानामाक्रमणन्तु निष्प्रमाणमेव। वासुदेवनारदसंवादे गण-चर्चा स्पष्टमुपलभ्यते। श्रीकृष्णेनोक्तम्—

'नासुहृत्परमं मन्त्रं नारदार्हति वेदितुम्।
अपण्डितो वापि सुहृत् पण्डितो वाप्यनात्मवान्॥

(शान्तिपर्व राजधर्मानुशासने ८१ अध्याये ३)

'स ते सौहृदमास्थाय किञ्चिद्वक्ष्यामि नारद।
कृत्स्नं बुद्धिबलं प्रेक्ष्य सम्पृच्छे त्रिदिवङ्गमः॥ ४॥
दास्यमैश्वर्यवादेन ज्ञातीनां न करोम्यहम्।
अर्धं भोक्तास्मि भोगानां वाग्दुरुक्तानि च क्षमे॥ ५॥
बलं संकर्षणे नित्यं सौकुमार्य्यं पुनर्गदे।
रूपेण मत्तः प्रद्युम्नः सोऽसहायोस्मि नारद॥ ६॥
अन्ये च सुमहाभागाः बलवन्तो दुरुत्सहाः।
नित्योत्थानेन सम्पन्नाः नारदान्धकवृष्णयः॥ ८॥

यस्य न स्युर्न वै स स्यात् यस्य स्युः कृत्स्नमेव तत् ।
तत्रादाने न भिद्यन्ते गणाः संघातवृत्तयः ।
भिन्ना विमनसः सर्वे गच्छन्त्यरिवशं भयात् ॥ १३ ॥

तद्व्याख्यानञ्च तेनैव कृतम्—

'शक्त्यान्नदानं सततं तितिक्षार्जवमार्दवम् ।
यथार्हं प्रतिपूजा च शस्त्रमतेदनायसम् ॥ २१ ॥
ज्ञातीनां वक्तुकामानां कटुकानि लघूनि च ।
गिरात्वं हृदयं वाचं शमयस्व मनांसि च ॥ २२ ॥

गणरक्षाधुरं भवानेव वोढुं शक्नोति ।

'नामहापुरुषः कश्चिन्नानात्मा नासहायवान् ।
महतीं धुरमाधत्ते वागुद्यम्य रसावहं ॥ २३ ॥
सर्व एव गुरुं भारमनड्वान् वहते स मे ।
दुर्गे प्रतीकः सुगवो भारं वहति दुर्वहम् ॥ २४ ॥
भेदाद्विनाशः संघानां संघमुख्योसि केशव ।
यथा त्वां प्राप्य नोत्सीदेदयं संघस्तथा कुरु ॥ २५ ॥
नान्यत्र बुद्धिक्षान्तिभ्यां नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र धनसन्त्यागात् गणः प्राज्ञेऽवतिष्ठते ॥ २६ ॥

एतावता प्राज्ञस्य गणमुख्यस्यापि बुद्धिक्षान्तीन्द्रियनिग्रहधनसन्त्यागैरेव गणानुकूल्यं भवति ।

धन्यं यशस्यमायुष्यं स्वपक्षोद्भावनं सदा ।
सतीनामविनाशः स्यात् यथा कृष्ण तथा कुरु ॥२७॥
आयत्यां च तदात्वे च न तेऽस्त्यविदितं प्रभो ।
षाड्गुण्यस्य विधानेन यात्रायानविधौ तथा ॥ २८ ॥

श्रीकृष्णस्य तु लीलयैव प्रश्नः । स तु सर्वेश्वरः सर्वं कर्त्तुं समर्थ इत्यपि तत्रैव ।

यादवाः कुकुरा भोजाः सर्वे चान्धककृष्णयः ।
त्वय्यासक्ता महाबाहो लोकालोकेश्वराश्च ये ॥
उपासन्ते हि त्वद्बुद्धिमृषयश्चापि माधव ।

त्वं गुरुः सर्वभूतानां जानीषे त्वं गतागतम् ।
त्वामासाद्य यदुश्रेष्ठमेधन्ते यादवाः सुखम् ॥३१॥

शा० प० ८१ अध्यायेऽपि गणानां संबन्धे भीष्मेणोक्तम्—

गणानाञ्च कुलानाञ्च राज्ञां भरतसत्तम ।
वैरसंदीपनावेतौ लोभामर्षौ नराधिप ॥ १० ॥

लोभामर्षाभ्यां गणनाशो जायते ।

लोभमेको हि वृणुते ततोऽमर्षमनन्तरम् ।
तौ क्षयव्ययसंयुक्तावन्योऽन्यञ्च विनाशिनौ ॥ ११ ॥
चारमन्त्रबलादानैः सामदामविभेदनैः ।
क्षयव्ययभयोपायैः प्रकर्षन्तीतरेतरम् ॥ १२ ॥
तेषामन्योऽन्यभिन्नानां स्वशक्तिमनुतिष्ठताम् ॥२६॥
निग्रहः पण्डितैः कार्य्यः क्षिप्रमेव प्रधानतः ।
कुलेषु कुलहा जाताः कुलवृद्धैरुपेक्षिताः ॥ २७ ॥
गोत्रस्य नाशं कुर्वन्ति गणभेदस्य कारकम् ।
आभ्यन्तरं भयं रक्ष्यमसारं बाह्यतो भयम् ॥ २८ ॥
आभ्यन्तरं भयं राजन् सद्यो मूलानि कृन्तति ।
अकस्मात् क्रोधमोहाभ्यां लोभाद्वापि स्वभावतः ॥२९॥
अन्योऽन्यं नाभिभाषन्ते तत्पराभवलक्षणम् ।
जात्या च सदृशाः सर्वे कुलेन सदृशास्तथा ॥ ३० ॥
न चोद्योगेन बुद्ध्या वा रूपद्रव्येण वा पुनः ।
भेदाच्चैव प्रदानाच्च भिद्यन्ते रिपुभिगणाः ॥ ३१ ॥
तस्मात् संघातमेवाहुः गणानां शरणं महत् ॥ ३२ ॥

वस्तुतस्तु डांगे महाशयो अभिसन्धिवशात् कञ्चिदपि ग्रन्थं सम्यगधीत्य तदीयतात्पर्य्यमधिगन्तुं न प्रयतते। किन्तु ग्रन्थचुम्बको भूत्वा कुतश्चित् किञ्चित् गृहीत्वा विपरीतमेवावगच्छन्ति। गणाः श्रेणयो जातयः कुलानि च प्राचीनकालेप्यासन्, अर्वाचीनकालेपि सन्ति । सर्वत्र शास्त्राणि धर्मा अध्यात्मवादाश्च भवन्ति। सामान्येषु गणेषु मुख्या ( मुखिया ) विशिष्टेषु राजानो राज्यव्यवस्थाश्च भवन्ति स्म । गणा राजाश्रयाश्च भवन्ति स्म ।

यथाकालं वेतनाद्यदानेन सैनिका अपि भिद्यन्ते विमनसश्च विपक्षं यान्ति—

भेदे गणा विनश्येयुर्भिन्नास्तु सुजयाः परैः ।
तस्मात् संघानयोगेन प्रयतेरन् गणाः सदा ॥ १४ ॥
अर्थाश्चैवाभिगम्यन्ते संघातबलपौरुषैः ।
बाह्याश्च मैत्रीं कुर्वन्ति तेषु संघातवृत्तिषु ॥ १५ ॥
ज्ञानवृद्धाः प्रशंसन्ति शुश्रूषन्तः परस्परम् ।
विनिवृत्ताभिसंधानाः सुखमेधन्ति सर्वशः ॥ १६ ॥

गणेष्वपि शास्त्रप्रामाण्यं वर्णाश्च मर्य्यादाश्च भवन्ति स्म । एतेन शास्त्रं राजतन्त्रोपकारकं तत्रैवोद्भूतमिति तदप्यपास्तम् । तदुक्तं तत्रैव ।

धर्मिष्ठान् व्यवहारांश्च स्थापयन्तश्च शास्त्रतः ।
यथावत् प्रतिपश्यन्तः विवर्धन्ते गणोत्तमाः ॥ १७ ॥

अतएव गणमुख्येनैव कृष्णेन गीतायां 'तस्माच्छास्त्रं प्रमाणन्ते कार्य्याकार्य्यव्यवस्थितौ ।' इत्युक्तम् । गणेष्वपि धनवन्तो भवन्ति तेष्वपि निग्रहानुग्रहावश्यकता भवति ।

पुत्रान् भ्रातॄन् निगृह्णन्तो विनयन्तश्च तान् सदा ।
विनीतांश्च प्रगृह्णन्तो विवर्धन्ते गणोत्तमाः ॥ १८ ॥

तेष्वपि चारमन्त्रादयोऽपेक्ष्यन्ते—

चारमन्त्रविधानेषु कोशसन्निचयेषु च ।
नित्ययुक्ता महाबाहो वर्धन्ते सर्वतो गणाः ॥ १९ ॥
प्राज्ञान् शूरान् महोत्साहान् कर्मसु स्थिरपौरुषान् ।
मानयन्तः सदा युक्ता विवर्धन्ते गणा नृप ॥ २० ॥
द्रव्यवन्तश्च शूराश्च शस्त्रज्ञाः शास्त्रपारगाः ।
कृच्छ्रास्वापत्सु सम्मूढान् गणाः सन्तारयन्ति ते ॥ २१ ॥
क्रोधो भेदो भयं दण्डः कर्षणं निग्रहो वधः ।
नयत्यरिवशं सद्यो गणान् भरतसत्तम ॥ २२ ॥
गणमुख्यैस्तु सम्भूय कार्यं गणहितं मिथः ।
पृथग्गणस्य भिन्नस्य विततस्य ततोऽन्यथा ॥ २५ ॥

अर्थाः प्रत्यवसीदन्ति तथानर्था भवन्ति च।

यत्तु—वृष्णीनां सहाय्यार्थं पाण्डवास्तत्र गताः। तथापि तेषां रक्षां कर्तुं न समर्था जाताः। गङ्गाक्षेत्रीयराज्यशक्तीनां कुरूणां पुरुषाणाञ्च सातङ्कमहत्त्वं समाप्तम्। अर्जुनस्तत् कथनानुसारेण नागैः सार्द्धं योद्धं तस्य विख्यातानि शस्त्रास्त्राणि हीनशक्तिकानि जातानि। नागैर्यदुस्त्रियोपहृताः अवशिष्टा हस्तिनापुरमानीता अर्जुनेन। हस्तिनापुरमपि नेदानीं शक्ति केन्द्रभूतमासीत्। किञ्चित् कालानन्तरं पाण्डवा स्वर्गं गताः। तत्पौत्रः परीक्षित् नागैर्निहतः। ब्राह्मणनेता कश्यपः परीक्षिदुपर्य्याक्रमणयोजनां ज्ञात्वापि नागजातीयप्रमुखेन तक्षकेण स्वर्णक्रीतत्वात् समर्थोऽपि न प्रतिचकार। पारीक्षितेन जनमेजयेन नागानामुपर्य्याक्रमणं कृत्वा सामञ्जस्यं कर्त्तुं नागा बाधिताः। ततः किञ्चिद्विश्रान्तिर्जाता।

महाभारतानन्तरं अन्धकारमयः शून्यप्रायो युगो लक्ष्यते। ततो नव्यराज्योदयो जातः। परं तदानीमाकर्षणबिन्दुः हस्तिनापुरं नासीत्। किन्तु मगधस्य पाटलिपुत्र आसीत्। दासताया ह्रासः प्रारब्धः। अर्धदासा नगरेषूद्योगवन्तो व्यापारिणश्च गतिशीला जाताः। सर्वेषामुपरि सर्वशक्तिमान् कश्चिद्राजा संवृत्तः। दासाःस्वामिनां गृहेस्वर्धस्वतन्त्राः सम्पन्नाः। भौमिकैर्व्यापारिभिश्च युवकैः सार्द्धं दर्शनलोकं प्रविष्टाः बुद्धस्य शिष्याः भक्ताश्च जाताः। यद्यपि दासस्वामिनां राज्यसंघटनं पुनरपि सम्पन्नं, तत्र वृद्धिरपि जाता। तथापि परस्परनिरोधान्नागानां निषादानाञ्च विद्रोहात् प्रगतिः शिथिलैवासीत्। दासप्रथायाः कठोरतमरूपस्य तदा स्थितिसंभावनापि नासीत्। पलायितानामसमर्थानाञ्च दासानां स्थानपूर्तिरशक्या जाता। विजितप्रदेशा अपि शक्तिक्षयादशक्यशासनाः स्वातन्त्र्यमुपजग्मुः। प्रजाः दारिद्र्याभिभूताः। उत्पादनविनिमयादिवृद्धयाऽर्थव्यवस्थायामेकः स्वतन्त्रशक्तिरूपो व्यापारिवर्गः समायातः, येन पलायितदासेभ्यः प्रश्रयं दत्त्वा लघुहस्तोद्योगं प्रशिक्ष्य लाभोऽर्जितः। एते व्यापारिका हस्तोद्योगिनश्च सबलसक्षमशासने स्थिताः। ते च राजानः पौराणां जानपदानां कृषिकाराणां व्यापारिणाञ्च विरोधिहितसामञ्जस्यसम्पादनेन स्वार्थं पूरयन्ति स्म। विशालमात्रया कृषिविकासेन तत्र वैयक्तिकाधिकारप्रश्नोऽपि गंभीरो जातः। दासप्रथाधारेण कृषिकर्मचालने काठिन्यमप्या-

गतम्। औद्योगिकोत्पादनवृद्धावपीदमेव काठिन्यमासीत्। दासप्रथासमाप्ति-पूर्वकार्धदासप्रथा स्थापनस्यावस्था परिपाकमुपागता। महाभारतयुद्धेने-तत्सामजिकप्रक्रियावेगेन तीव्रतां गतम्। तस्यामेव दशायां शोषकवर्गीय-शास्त्रकारैर्दार्शनिकैश्च दासप्रथायामन्यादृष्टिरप्युपक्षिप्ता।

गीतायां कृष्णेनोक्तं—"स्त्रीवैश्यशूद्र दास्यार्थमेवोत्पन्नास्तथापि तेऽपि मद्भक्ता भवेयुस्तदा स्वर्गे तेषामपि स्वातन्त्र्यमुपलभ्यते।

एवं स्त्रियो वैश्या आर्य्या अपि तस्मिन् युगे दास्यभावं प्रापिताः। यद्यपि ते पूर्वगणसाम्यसंघस्य स्वाभिमानि विश आसन् दासस्वामिनां राज्येषु तेषां मोक्षः स्वर्गश्च दुर्लभ आसीत्। यद्यपि पितृसत्तात्मकदासत्वप्रारम्भ-काले दासस्वामिनो ब्राह्मणाः क्षत्रिया दासस्त्रीभिः विवाहं कुर्वन्ति स्म, तदुत्पन्नसंततयश्च समानाधिकारा भवन्ति स्म, तथापि दासानां स्वातन्त्र्यं कल्पनातीतमेव। आर्य्यगणेषु संपत्तिभेदेऽतितरां वृद्धिं गते वैश्येषु च दास-श्रेणीमुपगतेषु गृहयुद्धाय आह्वानं जातम्। विजयिदासस्वामिनां ऐकाधिप-त्यस्थापनेन दारिद्रान् वैश्यान् तत्सहकारिणो निषादान् नागांश्च चूर्णयित्वा महातङ्कपूर्णं राज्यं स्थापितम्। तदैव दासस्त्रीसम्बन्धस्तन्महत्त्वञ्च नष्टम्। पितृसत्ताकाले विद्यमानदासस्त्रीजातसन्ततीनां समानाधिकारः समाप्तः। मातृवर्णाधिकार एवावशिष्टः। तदपि पराजितानामर्धपराजितानां, संख्या-वृद्ध्या दासस्वामिना शान्तिर्दुर्लभा जाता। वर्णभेदतैक्ष्ण्यात् आर्य्या वैश्या अपि दासतायां निपतिताः। उत्पादने शक्तीनां वृद्धिरपि तीव्रगतया प्रारब्धा। तेन नूतनसम्बन्धस्यापेक्षोत्थिता। विनिमयव्यापारहस्तोद्योगव्यापारि-वर्गैस्तदीयाभिनूतनाभिः सामाजिकशक्तिभिश्च दास्यापनयनापेक्षोत्थापिता। गीतायाः कृष्णस्य नाम्ना तथोद्घोषः कृतः। कृष्णस्य नाम तदर्थं सर्वोत्तम आसीत्। यत् सर्वश्रेष्ठगणसंघस्य स प्रियः प्रतिनिधिरासीत्। महाभारत-युद्धानन्तरमपि तन्नाम जीवितमासीत्। स्वर्गलोके स्वातन्त्र्यं प्राप्स्यते इत्युद्-घोषस्य वाहकत्वे स एव प्रकल्पयितुं शक्य आसीत्। येन शोषकवर्गस्य शान्तिभङ्गमन्तरा शोषिताः फल ( पारिश्रमिक ) नैरपेक्ष्येण स्वर्गे वा फल-प्राप्त्याशया तात्पर्य्येण श्रमलग्नाः सम्पादयितुं शक्यन्ते स्म। स्वर्गे स्वामिभिः समकक्षं स्वतन्त्रपदप्राप्तये तेभ्य आश्वासनं दत्तम्।

यद्यप्येतच्छ्रवणवैचित्र्यं प्रतीयते, परं वस्तुभूतमेतत् । अर्धदाससामन्त-प्रथाभिमुखीभिः शक्तिभिः सार्द्धं दासस्वामिनामिदमेव सन्धानम् । प्रथमं दासताप्रथायाः शोषणकालः । मध्यकाले अर्धदासतायाः शोषणकालः । आधुनिककाले श्रमिकशोषणमिति दासताया रूपत्रयम् । त्रीण्येतानि प्रमुखानि रूपाणि ।

प्राचीने काले निरावरणरूपेण दास्यमासीदिदानीं सावरणं तत् । एवमावश्यकतानुसारेण मनुष्यः प्रकृतिविकासक्रमेण विशालाभिरुत्पादशक्तिभिः आत्मानं वन्यावस्थातोऽर्धवन्यावस्थां ततः सभ्यावस्थाभिमुखं पुरश्चक्रे । युद्धशान्तिकला-साहित्यविकासप्रकृतिनियमरहस्याध्ययनविश्लेषणादिभिः कोटिकोटिभूतप्रेत देवी-देवताविचारक्रमेणाद्वैतब्रह्मविज्ञानं शिक्षितवान् । विशेषेभ्यः सामान्यं, व्यष्टेः समष्टिम्, बाह्यादन्तश्चिन्तयन् प्रगतिं कृतवान् । प्रगत्या सार्द्धमेव पतनं तत्प्रतिक्रिया वा।

अर्धवन्यानां प्राचीनेषु साम्यसंघेषु वर्गसंघर्षः दासतालोभः सम्पत्तिस्तथा सम्बन्धिनामन्योन्यहिंसा नासीत् । सभ्ययुगे तत्सर्वमति मात्रया विततम् । यतः एकवर्गस्य वर्गान्तरशोषणमेव सभ्यताया आधारः । अतएव सभ्यतायाः सर्वोऽपि विकास आत्मविरोधात्मैव उत्पादनस्य वर्धमानं प्रत्येकं पदं शोषित-वर्गदशायाः पतनोन्मुखं पश्चाद्गामि पदमपि, तेनैव मुष्टिमेयशोषकाणां हितावहमपि बहुसंख्याकानां शोषितानां दुर्दशावहमेव । केषाञ्चित् लाभो भवति बहूनां हानिर्भवति । एकवर्गस्य स्वातन्त्र्यमन्यस्य वर्गस्य दमनहेतुर्भवति । यथा अर्धवन्येष्वधिकारकर्त्तव्ययोर्विभागरेखा नासीत् । सभ्यतायां तद्विभागो भेदश्च स्फुटतामुपागतौ । मन्दबुद्धिरप्येतत्स्पष्टं प्रत्येति यत् कस्यचिद्वर्गस्य सर्वोऽधिकारः कस्मैचित्सर्वकर्त्तव्यभारोऽर्पितः ।

यच्छाशकवर्गस्य कल्याणकारि तेन सर्वसमाजहितकारिणाऽपि भाव्यमेव । येन तयोस्तादात्म्यम् । अत एव यथा यथा सभ्यता वर्धते तथा तथाऽनिवार्यरूपेणोपस्थितदोषप्रावरणार्थं प्रेमदानादि जवनिका स्थाप्यते ।

शोषितवर्गस्य शोषणं तेषां कल्याणार्थं शोषितैस्तद्विरुद्धं विद्रोहः कृतः । उद्घोषः मिथ्याचारस्य पराकाष्ठा । राज्यादिव्यवस्थामन्तराऽपि प्राचीनसाम्यसंघीया व्यवस्थासीत् । आर्थिकविकासस्यैकविशेषावस्थाय समाजस्यावश्यकवर्गरूपेण समाजो विभक्तः । तत एव राजशक्तेरावश्यकता । इतः परमुत्पादनविकासस्यैतादृशीमेकामवस्थां तीव्रगत्याऽभिसरामो यत्र

वर्गविभागो नानुपयुक्त एव किन्तु उत्पादनवृद्धौ घातकोऽपि । तेन यथाऽनिवार्य्यरूपेण वर्गोत्पत्तिस्तथैव तन्नाशोऽप्यनिवार्यतावशादेव । तेन सार्द्धमेव राज्यव्यवस्थापि नंक्ष्यति। पुनश्च नूतनसमाजव्यवस्था स्थास्यति, यत्रो त्पादकानां स्वातन्त्र्यं साम्यञ्चाधृत्योत्पादनव्यवस्था चलिष्यति, इत्यादि ।

अस्त्राणि मे प्रणष्टानि विविधानि महामुने ॥ १८ ॥
गुणाश्च क्षयमापन्नाः क्षणेनैव समन्ततः ॥
( मौ० प० अ० ८ )

व्यासेनोक्तम्—

ब्रह्मशापविनिर्दग्धा वृष्ण्यन्धकमहारथाः ॥ २६ ॥
विनष्टाः कुरुशार्दूल न तान् शोचितुमर्हसि ।
भवितव्यं तथा तच्च दिष्टमेतन्महात्मनाम् ॥ २७ ॥
उपेक्षितञ्च कृष्णेन शक्तेनापि व्यपोहितुम् ।
त्रैलोक्यमपि गोविन्दः कृत्स्नं स्थावरजङ्गमम् ।
प्रसहेदन्यथा कर्तुं कुतः शापं महात्मनाम् ॥ २८ ॥

परीक्षित्तु मुनिशापवशात्तक्षकेण दष्टो न तत्र नागानामाक्रमणं, न वा योजनाज्ञानं ब्राह्मणस्य किन्तु स ब्राह्मणः काश्यपस्तु विषवैद्यो गारुडिको नागदष्टं चिकित्सितुं समर्थ आसीत् । तक्षकेण दष्टं शुष्कं वृक्षमपि स्वमन्त्र-बलेन पुनः पल्लवितं फलितञ्च चकार । तस्य तादृक् सामर्थ्यातिशयं ज्ञात्वा स्वकीर्तिभङ्गभिया स्वर्णदानेन तं तोषयित्वा तक्षकः परावर्तितवान् । तस्य तद्दौरात्म्यश्रवणेनैव जनमेजयः सर्पसत्रेण नागकुलं नाशयितुमियेष । ऐतिहासिकं तथ्यं प्रच्छाद्य स्वभौतिकवादिकल्पितेतिहासे संगतिं योजयितुं यत्किञ्चिदालपति डांगे महाशयः ।

तथाहि—तक्षकस्तत्रैकं वनस्पतिमदशत्—

स दष्टमात्रो नागेन भस्मीभूतो भवन्नगः ।
कश्यपश्च ततो राजन्नजीवयत तं नगम् ॥ २३ ॥
( आ० प० ५० )

तक्षकेन च बहु धनं दत्त्वा स निवर्तितः।

लब्ध्वा वित्तं निववृते तक्षकाद् यावदीप्सितम् ॥ २७ ॥

( आ० प० ५० )

'तस्मिन् प्रतिगते विप्रे छद्मनोपेत्य तक्षकः ॥ २८ ॥'

( आ० प० ५० )

प्रासादस्थं यत्तमपि दग्धवान् विषवह्निना ॥ २९ ॥

( आ० प० ५० )

एवं तक्षकस्य जिह्मतां ज्ञात्वैव तक्षकं तत्सम्बन्धिनश्च दग्धुं सर्पसत्रे जनमेजयो मतिं चक्रे।

अत्र न नागजातीया मनुष्या नागा नागगणा वा। स्पष्टं महाभारते सर्पदंदशूकनागादिनामभिस्तेषां निर्देशात्। तदपि तुच्छम् महाभारतादि ग्रन्थानामनुसारेण श्रीकृष्णस्य परमेश्वरावतारत्वेन भूभारावतारायैव वृष्णिकुले जातस्य तस्येच्छयैव दुर्वासःशापेन वृष्ण्यन्धकादिकुलसंहारो जातः। यस्यानुग्रहेणैवार्जुनो दुरत्ययकौरवसैन्यसागरं तीर्णः तस्य पाण्डव-कर्तृकसाहाय्यानपेक्षणात्। तदुक्तम्–परीक्षिता–दुरत्ययं कौरवसैन्यसागरं कृत्वाऽतरन् वत्सपदं स्म यत्प्लवाः। भगवता संदिष्टोऽर्जुनः तत्रत्यसंहारलीलामालोक्य राजकुलाङ्गना आदाय हस्तिनापुरं प्रस्थितः। मध्येमार्गं तत्र पञ्चनदीयैराभीरैराक्रम्य ता हृताः। तत्र कालमहिम्ना श्रीकृष्णसाहचर्याभावाच्चार्जुनस्य पराजयो जातो न त्वाभीराणां पराक्रमात्। तदुक्तं भागवते तेनैव—

"तद्वै धनुस्त इषवः स रथो हयास्ते सोऽहं रथी नृपतयो यत आमनन्ति।
सर्वं क्षणेन तदभूदसदीशरिक्तं भस्मन् हुतं कुहकराद्धमिवोप्तमूष्याम्।

महाभारते तद्वर्णनं यथा—

ततो लोभः समभवद्दस्यूनां निहतेश्वराः।

दृष्ट्वा स्त्रियो नीयमानाः पार्थेनैकेन भारत ॥ ४६ ॥

ततस्ते पापकर्माणो लोभोपहतचेतसः।

आभीरा मन्त्रयामासुः सामात्याः शुभदर्शनाः ॥ ४७ ॥

( मौसल पर्व अ० ७ )

ततो यष्टिप्रहरणाः दस्यवस्ते सहस्रशः।

अभ्यधावन्त वृष्णीनां तं जनं लोप्त्रहारिणः ॥ ४९ ॥

चकार सज्जं कृच्छ्रेण संभ्रमे तुमुले सति।
चिन्तयामास शस्त्राणि न च सस्मार तान्यपि ॥ ५५ ॥
वैकृत्यं तन्महद् दृष्ट्वा भुजवीर्यं तथा युधि।
दिव्यानां च महास्त्राणां विनाशाद् व्रीडितोऽभवत् ॥ ५६ ॥

अर्जुनेन व्यासं प्रत्युक्तम्—

पश्यतो वृष्णिदाराश्च मम ब्रह्मन् सहस्रशः ॥ १६ ॥
आभीरैरनुसृत्याजौ हृता पञ्चनदालयैः।

( मौ० प० अ० ८ )

पुरुषश्चाप्रमेयात्मा शंखचक्रगदाधरः ॥ १९ ॥
चतुर्भुजः पीतवासाः श्यामः पद्मदलेक्षणः।
यश्च याति पुरस्तान्मे रथस्य सुमहाद्युतिः ॥ २० ॥
प्रदहन् रिपुसैन्यानि न पश्याम्यहमच्युतम्।

( मौ० प० अ० ८ )

यदुक्तम्-'महाभारतानन्तरमन्धकारमयं युगं लक्ष्यते' तन्मन्दम्, परीक्षिज्जनमेजयादीनां प्रभावशालिनां धार्मिकाणां शासनश्रवणात्। वर्तमान-युगमपेक्ष्योदयन-नवनन्द-विक्रम-चन्द्रगुप्ताशोकादीनामपि युगमुत्तममेवासीत्। दासार्धदासदारिद्र्यादिकथापि नाद्यत्वेऽप्यल्पीयसी। अस्मद्देशीया धनिका निर्धनाश्च दर्शनलोकं बहोः कालात् प्रविष्टाः। विदुरः शूद्रोऽपि धर्म-ब्रह्मविद्या-निष्णात आसीत्। सञ्जयस्यापि सैव स्थितिरासीत्। धर्मव्याधप्रभृतयोऽन्त्यजा अपि धर्मब्रह्मतत्त्वनिष्णाता आसन्। बुद्धयुगे तु नास्तिक्यमेव प्रवृत्तम्।

व्यापारिवर्गोऽपि न नव्यः। कृषि विकाशोऽपि नाधुनिकः, दुर्योधनादि-शासनकालेष्वपि कुल्यादिनिर्माणैः प्रजा अदेवमातृकाः सम्पन्ना आसन्। सम्भूयसमुत्थाननाम्ना कृषिव्यापाराणाञ्च सामूहिकोऽपि विकासो धर्मशास्त्रेषु वर्णितो व्यवहारे च प्रवृत्त आसीत्।

बृहस्पतिस्मृत्यादिषु भृतिनिर्णयादिभिः श्रमिकाणां कर्मकराणाञ्चाभ्युद-यानुगुणाः सुव्यवस्था विहिताः।

स्त्रियो वैश्याः शूद्राश्च दास्यभावार्थमेव सृष्टाः इत्येवं विधा तदानीं शिक्षासीदिति कथनमपि निर्मूलमेव। गीतायां तु भगवता शास्त्रीयमेव मतं

प्रकटितं न नवीनम्। वर्णाश्रमव्यवस्थानुसारेण वेदेषु धर्मशास्त्रेषु सर्वत्रैव व्यावहारिको भेद उत्कर्षापकर्षव्यवस्था च विद्यत एव। स्वर्गो मोक्षश्च न व्यक्तिविशेषसमाजस्वीकृतिलभ्यौ किन्तु कर्मोपासनज्ञानलभ्यौ। धर्मशास्त्रेषु तु स्वधर्मनिष्ठस्य शूद्रस्यापि स्वर्गप्राप्तिरुक्तैव।

'स्वधर्मे संस्थितः सम्यक् शूद्रोऽपि स्वर्गमश्नुते' [ अत्रि० स्मृ० ]

इति वचनात्। पारतन्त्र्यं स्वातन्त्र्यञ्च कस्यापि निरपेक्षं नास्ति। ब्राह्मणादयोऽपि शास्त्रानुसारेण पित्रोर्गुरोश्च पराधीना एव भवन्ति।

'जुह्वत्स्वृत्विक्ष्वथ तदा सर्पसत्रे महाक्रतौ।
अहयः प्रपतंस्तत्र घोराः प्राणिभयावहाः॥ ११॥
वसामेदोवहाः कुल्या नागानां संप्रवर्त्तिताः।
ववौ गन्धश्च तुमुलो दह्यतामनिशं तदा॥ १२॥
पततां चैव नागानां धिष्ठितानां तथाम्बरे।
अश्रूयतानिशं शब्दः पच्यतां चाग्निना भृशम्॥ १३॥

( म० भा० आ० प० ५३ )

तक्षकस्तु महेन्द्रलोकं गत्वा महेन्द्रं शरणङ्गतः। महेन्द्रस्तस्मै रक्षणाय वचनं दत्तवान्। जनमेजयेन समहेन्द्रस्तक्षको होतव्यमित्युक्ते—

होता जुहाव तत्रस्थं तक्षकं पन्नगं तथा॥ १२॥
हूयमाने तथा चैव तक्षकः सपुरन्दरः।
आकाशे ददृशे चैव क्षणेन व्यथितस्तदा॥ १३॥
पुरन्दरस्तु तं यज्ञं दृष्ट्वोरुभयमाविशत्।
हित्वा तु तक्षकं त्रस्तः स्वमेव भवनं ययौ॥ १४॥
इन्द्रे गते तु नागेन्द्रस्तक्षको भयमोहितः।
मन्त्रशक्त्या पावकार्च्चिसमीपमवशो गतः॥ १५॥
नूनं मुक्तो वज्रभृता स नागो भ्रष्टो नाकान् मन्त्रविस्रस्तकायः।
घूर्णन्नाकाशे नष्टसंज्ञोऽभ्युपैति तीव्रान्निश्वासान् निःश्वसन् पन्नगेन्द्रः॥१९॥

( आ० प० ५६ )

तदानीमेव आस्तीकेन वरो याचितः—

'सत्रं ते विरमत्वेतन्न पतेयुरिहोरगाः॥'

( आदिपर्व ५६।२१ )

पूर्वं तु स्तुत्या राजा ऋत्विजश्च सर्वे ते संतुषिता। ततः सत्रविरामे शिष्टाः सर्पा मुक्ताः। तत्रैव ५७ अध्याये विस्तरेण विशिष्टनागानां दग्धानां नामानि चोक्तानि।

'सहस्राणि बहून्यस्मिन् प्रयुतान्यर्बुदानि च।
न शक्यं परिसंख्यातुं बहुत्वाद् द्विजसत्तम॥'(आ० प० ५७।२)

पतमान एव तक्षकः आस्तीकेन तिष्ठेत्युक्तो न पपात।

'तमिन्द्रहस्ताद् विस्रस्तं विसंज्ञं पन्नगोत्तमम्।
आस्तीकस्तिष्ठ तिष्ठेति वाचस्तिस्रोऽभ्युदैरयत्॥ ५॥
वितस्थे सोऽन्तरिक्षे च हृदयेन विदूयता।
यथा तिष्ठति वै कश्चित् खं च गाश्चान्तरा नरः॥ ६॥'
(भा० प० ५८)

शूद्राश्चापि शास्त्रपरतन्त्रा एव द्विजशुश्रूषवो भवन्ति न सर्वे।

एवमेव गृहयुद्धादि कल्पनापि अभिसन्धिमूलिका। पितृसत्ता-मातृसत्तादि-भेदकल्पनापि सारशून्या। क्वचित् देशे समाजविशेषे चाद्यापि मातृप्राधान्येन मातृसत्ता विद्यते। तत्र तदपनोदनाय नास्ति कश्चित् संघर्षोऽपि। तथैव क्वचित् पुरापि मातृसत्ताप्राधान्यं नासंभाव्यम्। मात्स्यन्यायापनोदनसर्वहित-सामञ्जस्यसम्पादनमेव धर्मनियन्त्रितस्य शासनस्य कृत्यमिति तद्भूषणमेव।

कृष्णस्तु परमेश्वरावतारत्वेनाद्यापि पूज्यते। सर्वाधिपतेर्गणपतित्वमपि युक्तमेव। केवलं गणपतिः स्याच्चेत्तदा स्वर्गे स्वातन्त्र्यं लप्स्यते इति तद्घोषणायां कः श्रद्दध्यात्? अपि च स्वर्गे स्वामिभिः साम्यं प्राप्स्यते इत्याशया न-कोऽपि कार्य्यसंलग्नो भवन् दृश्यते।

वन्यावस्था-अर्धवन्यावस्था-नागरिकावस्थादिकल्पनमपि निर्मूलमेव। अनादिवेदेष्वेवाधुनिकतमावस्थाया दर्शनात्। आधुनिकधर्मनिरपेक्ष-शासनतन्त्रेष्वेव पक्षपातो वर्गविशेषस्य शोषणमन्यस्य च वर्गस्य पोषणं भवति। न हि दानं शोषणजवनिकारूपेणाद्रियते। मरुत्तस्य युधिष्ठिरस्य सक्तुप्रस्थदातुर्विप्रर्षेरौशीनरस्य शिवे रन्तिदेवस्य च विशुद्धदानानां तदसम्भवात्। विश्वस्य वैचित्र्यादेवात्र नानाविधानि परिवर्तनानि भवन्ति प्रकृतेर्गुणानां विमर्दवैचित्र्येण। सुस्थिरशास्त्रोक्तधर्म-

नियन्त्रितजीवनेषु श्रद्धाह्रासविकासतारतम्यो विकारभूतानां परिवर्त्तनानां सम्भवात् ।

यदपि च "निर्वाचनद्वारा तत्र राजसु शक्तिराधीयते । गणेनाभिषेकः गणेषु वैयक्तिकसम्पत्तिवर्णदासविकासेन राज्यं वृत्तम् । शासनाय वृतो राजशब्दवाच्यो जातः । अभिजातकुलानि राजकुलानि जातानि । समितौ गणसम्बन्धिसम्पूर्णलोकतन्त्रस्य क्रियाशीलतासीत् । सभायां लघुसमूहस्यैव क्रियाशीलता । तत्र च सम्पत्तिशालिकुलेष्वेव कश्चिद् व्रियते स्म । ग्रामनगरादि-विभागेनोत्पादनविनिमयादिवृद्धया जनपदपौरविभागः प्रवृत्तः । कृषि-सम्पत्तिकेन्द्रो जनपदः, । उद्योगव्यापारप्रधानव्यापारिधनिकादिकेन्द्रो नगरपौरादिकम् । तत्र शोषकाणां हितावहा शासनसत्ता सम्पूर्णरूपेण शासनाधिकारिणी ।

महाभारतरीत्या पाणिनिरीत्या च ज्ञायते यत् सम्पत्तिशालिनः स्वप्रामुख्याय लोकतंत्रविघाताय तुमुलं युद्धयन्ते स्म । पाणिनीये ग्रन्थे द्विविधा गणा दृश्यन्ते । प्रथमे आयुधजीविसङ्घाः । कौटल्ये शस्त्रोपजीविनाम्ना ते व्यपदिश्यन्ते । अन्ये राजशब्दोपजीविनः । एतेषां भेदः संकेतश्च कैश्चिदपि सम्यङ् न व्याख्यातः । आयुधजीविसङ्घशब्देन समाजस्य सावस्था सूच्यते यस्यां सर्वेऽपि सशस्त्रा आसन् । सशस्त्राणां धनिनां निरस्त्राणामुपरि नियंत्रण-मासीत् !

यद्यपि आदिमसाम्यसङ्घ इव वर्गसत्ताया अभावो नासीत् । तत्र वर्गसत्ता सम्पत्तिभेदः कृषिः व्यापारो मुद्रा दासता विकसिता आसीत् । तथापि स्वात्मविरोधस्य तीव्रता नासीत् । तस्माद्विशां नाशाय तेषां निःशस्त्रीकरणादिकं नासीत् । गणेषु सर्वे श्राम्यन्ति स्म । शूद्रातिरिक्ताः सर्वे सशस्त्रा आसन् । सम्पत्तिशालिषु कश्चिन्नेतृत्वाय व्रियते स्म । त्रिगर्त्तानां षण्मण्डलानि कौण्डो-परथदाण्डकि क्रौष्टुकि जालमानि ब्रह्मगुप्त जालकि-इति । यौधेयतया अन्ये पार्श्वतया अन्ये क्षुद्रक-मालव-कठ-सौभूति-शिवि-पाटल-मांगल-कम्बौज-सुराष्ट्र-क्षत्रियाः-श्रेणी-ब्राह्मणकः-अम्बष्ट इति सर्वे गणाः प्रसिद्धाः ।

गङ्गायाः प्रदेशेषु शक्तिशालिगणराज्यानां विकासः । तत्र कृषिव्यापार-रक्षा युद्धादीनां विकासः । आर्याणां दासस्वामिनां हस्तैः तेषां शासनव्यवस्था-

या ध्वंसो जातः। पाणिनिरीत्या वाहीकप्रदेशेषु एते गणाः आसन्। सिन्धुनद-प्रदेशेषु पञ्चनदमारभ्य सिन्धुदक्षिणम् यावदेते प्रसृताः। क्षुद्रा मालवाश्च सिन्धु-समीपे "त्रिगर्ता जम्बूप्रदेशं स्थिता" इत्यादि। तदपि मन्दम्, राजतन्त्रे निर्वा-चनाभावादेव तेन शक्त्याधानमसंगतम्। जनप्रतिनिधिभिस्तत्समर्थनन्तु न निर्वाचनम्। अभिषेके विभिन्नश्रेणीप्रतिनिधीनान्तूपयोगस्तत्समर्थनायैव। अन्यत्तु कृतसमाधानम्।

यत्तु सभासमित्योः क्षेत्रभेदकल्पनं तत्स्वसंस्कारमूलकं न प्रामा-णिकम्। सम्पत्तिशालिषु यः कोऽपि राजत्वेन न वरीतुं शक्यः, राज्ञो ज्येष्ठ-पुत्रस्यैव राजसिंहासनाधिकारदर्शनात्। ग्रामनगरपत्तनादिकल्पनमपि वर्षलक्षेभ्यः प्रागेव वैन्यपृथुशासनकाल एव प्रवृत्तमित्यपि प्रदर्शितमिहैव। तत्र शोषकाणां हितावहा शासनसत्तेत्यपि प्रमाणविरुद्धम्। वेदा हि शासनविधानस्य सर्वजनहिताय सर्वजनसुखाय प्रवृत्तत्वात्। शिबिरन्तिदेवादीनां साधारणप्राणीनां कृतेऽपि स्वात्मोत्सर्गस्मरणात्। लोकतन्त्रविधानाय स्वप्रामुख्याय सम्पत्ति-शालिनां युद्धमिति न व्यासपाणिनिसंमतम्, तेषां तादृशवचनानुपलम्भात्।

किञ्च राजसाः सात्त्विका नीतिनिष्ठा अनीतिनिष्ठाश्च केचन सदैव भवन्ति, देवासुर-रामरावण-कौरवपाण्डवसंघर्षदर्शनात्। तावताऽपि नासुर-प्रवृत्तेरादरणीयता तस्याहेयत्वोपदेशात्। अत एव 'रामादिवद्वर्त्तितव्यं न रावणादिवत्' इति रामायणश्रवणनिष्कर्षवर्णनम्।

आयुधजीविसंघशब्देन सैनिका एव गृह्यन्ते योद्धृजातीया वा? येषां युद्धमेव जीविका ते प्रायेण राजकीयसेनासु सैनिका भूत्वा धनमु-पार्जयन्ति। सर्वेषां सशस्त्रत्वे आयुधजीवीतिविशेषणव्यावृत्त्यभावाद्व्यर्थ-विशेषणतापत्तेः। सति संघर्षे सशस्त्राणां नियन्त्रणमप्यावश्यकम्। वर्ण-सत्तादिकमपि वेदादिप्रमाणसिद्धमतिप्राचीनमेव। यथायोग्यं सर्वदैव सर्वेऽपि श्राम्यन्ति। शूद्रा अपि सशस्त्राः किरातादिष्वपि तत्प्रावीण्य-स्मरणात्। प्रायेण सर्वदैव तत्तद्वर्गीय एव तेषां नेतृत्वाय व्रियते।

आरण्यकेषु ग्रामादिषु च तत्र-तत्र अग्रणीः कश्चिदेव भवति। अगुवा सरदार आदि शब्दैस्तद्व्यपदेशः। साधर्म्यवैधर्म्याभ्यां समूहभेदाः सर्वदा भवन्ति। केचिद्देशविशेषनाम्ना। यथा 'त्रिगर्त्ताः'। केचिद्युद्धादि जीविका

सम्बन्धात् , कठशाखाध्येतृत्वेन कठादयः प्रसिद्धाः। न पूर्वोक्तसर्वसमूहेषु गणतन्त्रशासनकल्पनं युक्तम् । वेदानुसारिणां मन्वादिधर्मशास्त्राणां शुक्रबृहस्पत्यादिनीतिशास्त्राणामनुसारेणैव मन्विक्ष्वाकुप्रियव्रतर्षभभरतपृथु-मान्धातृदिलीपरघु-अजदशरथरामयुधिष्ठिरादिसूर्य्यसोमवंशीयराजवंशपारम्पर्यं प्रचलितम् । धर्मनियन्त्रितशासनतन्त्रस्यैव सर्वकल्याणहेतुत्वेन अन्याः शासनपद्धतयस्तत्रैवान्तर्भवन्ति । न तद्ध्वंसायास्तिकानां प्रयत्नः।

दास्यमप्यत्र न शोषणमूलकं किन्तु धर्ममूलकम् । न केवलं शूद्रा किन्तु ब्राह्मणा अपि गुरूणां दास्यं श्रद्धयाऽङ्गीकुर्वन्ति । हरिदासस्य राजर्षे-रिति युधिष्ठिरादावपि तत्प्रयोगदर्शनात् । वेदादौ साम्राज्यपारमेष्ठ्य-स्वाराज्यादिशब्ददर्शनादत्रत्यानामखण्डभूमण्डलशासनं हस्तगतमासीत् । अवान्तरशासनानि विविधानि यत्र तत्र सन्त्यपि न विरोधीनि ।

यत्तु यद्यपि सम्पत्तिभेददासप्रथादिभिः क्षीणशक्तिकाः गणास्तथाप्यैक्यो-पेतैर्दृढैः सङ्घटनैः गणाः सिन्धुतटे सिकन्दरस्य शक्तिशालिनीं वाहनीं परा-जेतुं समर्था बभूवुः। गणानां पराजयकारणं तु धनिकवर्गः समासीत् । येन युद्धस्थाने शान्तिः काम्यते स्म । यद्यपि गणेषु स्वास्थ्यरक्षकाणामादे-शानुसारेण शिशुपालनप्रथासीत् । सदोषाणां विकलाङ्गानां शिशूनां समाप्तिरेव क्रियते स्म । वैयक्तिकसम्पत्त्यधिकारपरिवारोत्तराधिकारादयो गणकल्याणापेक्षया नगण्या एवासन् । सङ्घर्षैनैरन्तर्येण योधृनिर्माणेऽति-जागरुकताऽसीत् । पाणिनिकौटल्यादिसम्बन्धिगणविवरणैर्गणेषु सम्पत्तिभेदवर्गभेदप्रभुत्वमुद्भूतमासीदिति ज्ञायते । तत एव मल्लानां स्वतंत्रनागरिका मालवाः शूद्राः कर्मकरा मालव्या उच्यन्ते स्म ।

यौधेयानां गणव्यवस्थासंचालनार्थं पंचसहस्रसंख्याकानां प्रतिनिधीनां सभा निर्मिता । तस्यां यो निर्वाचनानन्तरं गणायैकं गजं समर्पयेत् स एव प्रतिनिधिर्भवति स्म । येन तत्र निर्धनधनिकभेदसत्ता ज्ञायते । अम्बष्ठानां अपि तादृग् भेद आसीत् । येषां धनज्येष्ठानां सामान्यगणेन सिकन्दरायात्म-समर्पणं कृतम् । जनसाधारणानां तद्विरुद्धत्वेऽपि वैयक्तिकसम्पत्तिस्वार्थ-वशात् सर्वदैव वर्गहितार्थं राष्ट्रम् स्वार्थिभिराक्रमणकारिणां हस्ते समर्प्य-ते स्म । राजशब्दोपजीविनाम्ना प्रसिद्धेषु गणेषु सम्पत्तिभेदाधिक्यात्

लोकतन्त्रशैथिल्यमासीत् । वृता नेतारः पैतृकाभिजाताः संजाताः । शासनसभायै एत एव प्रतिनिधीन्निर्णयन्ते स्म। एताः सभा एव गणसङ्घस्य राजसंज्ञया भवन्ति स्म। सेनानां प्रमुखनायकाः सेनापतय एव राजसंज्ञका इति नियमो नासीत् । लिच्छवि-मल्ल-शालक्य-मौर्य-कुकुर-कुरु-पञ्चालप्रभृतयः प्रसिद्धाः तादृशा एव राजन्यगणा आसन् । महाभारतकालिकस्य कृष्णस्य, वृष्ण्यन्धक गणा अपि तादृशा एव । विख्यातानां कुरुमद्रगणानां काचिच्छाखायाभिर्वैराज्यविधानद्वारा दाससूत्रव्यवस्था समारब्धा । राजन्यगणसङ्घरूपे पारवर्तिताः।

प्रथमं पैतृकपरम्परया अभिजातीयता विकासमुपनीता। पश्चाद्राजतांत्रिकदासशासनव्यवस्था निर्णीता । महाभारतयुद्धे तत्समाप्तिः। काचिच्छाखा अप्रगतिशीलत्वात् प्रमुखसम्पत्ति वर्गभेदविकासाक्षमत्वे निन्दिता जाता। तत एव स्मृतिकारैः प्रतिष्ठितब्राह्मणानां कृते मद्रवाह्लीकदेशगमनं निषिद्धम्। ( शान्तिपर्व )

यथाकालं वर्णपरिवर्तनमेव तेषां दोषः। कश्चिद् ब्राह्मणोऽन्यस्मिन् दिने क्षत्रियो दिनान्तरे वैश्यः शूद्रो वा पुनरन्यदा ब्राह्मणो भवति स्म। तेषां स्त्रियः स्वैराचारविहारिण्यः। दासस्वामिनां संस्कृत्या पातकमासीत्। यतस्तेषामेव स्वातन्त्र्येणानन्दोपभोगो युज्यते, ये दासपृष्ठारोहिणः।

एवमप्युदाहरणं लभ्यते यत् गणः देशस्यान्यनिवासिप्रातिकूल्येन कलंकिताभिजातीयतामुपगतः। यथा लिच्छवीगणः। तत्र देशे सप्तोत्तरसप्तशतसंख्याका राजन्या आसन्। त एव शासनसभातन्नायकादिनिर्वाचका भवन्ति स्म । अष्टषष्टिसहस्रोत्तरलक्षसंख्यानां तन्निवासिनां बाह्यनागरिकातिरिक्तनागरिकरूपेण विभागद्वयमासीत् । वैशालीयनाम्नापि द्वितीयस्य व्यवहारः।

एतेन वर्गविकास-वर्गविरोध-तत्सिद्धान्तादिकमैतिहासिकतथ्यं न कपोलकल्पितमात्रम्।' इति तदेतत् सर्वं कपोलकल्पितमेव। सृष्ट्यादावेव ब्राह्मणक्षत्रियादिरूपेण वर्गभेदस्य सत्त्वेन तद्विकासानुपपत्तेः। व्यक्तीनामेव तत्तद्देशादिनाम्ना साधर्म्यवैधर्म्याभ्याञ्च समूहविशेषनाम्ना व्यवहारः। व्यक्तीनामिव समूहानामपि विरोधोऽधुनेव सर्वदैवासीत् । यथाद्यत्वे हिन्दू–मुसलमानानां विरोधः । हिन्दूषु शैव-वैष्णव-जैन-बौद्धादिभेदव्यवहारः, मुसलमानेषु सिया

सुन्नी प्रभृति भेदाः, इसाईमतानुगेषु कैथोलिक प्रोटेस्टेण्ड प्रभृति भेदाश्च भवन्ति । नात्र मार्क्सीयकल्पितवर्गभेदवर्गविरोधादिकल्पनाप्रसरावसरस्तथैव पूर्वोक्तगणेष्वप्यूहनीयम् । स्वातन्त्र्यं पारतन्त्र्याश्चापेक्षिकं सर्वदैव सर्वत्रैव च भवति ।

अद्यत्वेऽपि ये कृषिव्यापारादिकं स्वातन्त्र्येण कुर्वन्ति ते स्वतन्त्रा उच्यन्ते । भृतिपराः पराधीना उच्यन्ते । शास्त्रेषु तु श्ववृत्तिरेव उक्ता । भृतकाध्यापकानां ब्राह्मणानामपि निन्द्यत्वमेवोक्तम् । निर्धनधनिकसत्ता प्राचीनैव । लौकिकप्रयत्नानामिव प्राक्तनधर्माधर्मादीनामपि तत्र हेतुत्वात् । "शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते" इत्यादि वचनैस्तदवगमात् ।

सिकन्दरस्य तु पराजयो महामात्यचाणक्यविनीतचन्द्रगुप्तपराक्रमेण जातः । येन पुरुणा सिकन्दरस्य प्रत्यक्षः संघर्षो जातः । सोऽपि राजैवासीत् । चन्द्रगुप्तसम्राजानुगृहीतः तस्याजेयवाहिन्याः पुरतः स्थातुं सिकन्दरस्य सैनिका न प्रतिभटा बभूवुः । छद्मना निगृहीतस्य तस्य शौर्येण प्रभावितः सिकन्दरस्तस्य राज्यं परावर्तितम् । ततः परं सिकन्दरस्य सैनिकाः पुरःसर्तुं प्रेरिता अपि भारतीयानां भीषणां शक्तिं युद्धसामर्थ्यञ्चावलोक्य न दधृषुः । तेनैवाकामोऽपि सिकन्दरः प्रत्यावृत्तः । पश्चात् तदीयप्रधानपुरुषः सेल्युकसस्तु चन्द्रगुप्तस्य वीर्य्येण तुष्टः स्वकीयां कन्यां तस्मै समर्प्य सन्धिं कृतवानिति निश्चप्रचमितिवृत्तवेतॄणाम् । न तत्र केनचिद्गणेन युद्धं न वा तत्कृतात्मसमर्पणम् । त्वदुक्तेराधुनिकेतिवृत्तविरुद्धत्वात् ।

स्वार्थिभिरदीर्घदर्शिभिराक्रमणकारिणां हस्तेषु राष्ट्रं समर्प्यते इति तु सार्वत्रिकं सत्यम् । सम्पत्तिभेदाधिक्यादद्यपि लोकतन्त्रशासनं तदाभासमेव भवति । विधायका लोकसभासदस्याश्च धनिनां धनेन निर्वाचने विजयिनो भूत्वाऽपि तद्धस्तदारुयन्त्रप्राया एव भवन्ति, नेयं तादात्विकी विशेषता । वृष्ण्यन्धकगणनामपि कुलभेदेनैव गणव्यवहारः, समेषां तेषां राजतन्त्रान्तर्गतत्वात् । उग्रसेनकंसादयस्तेषां राजानः सम्मता एवासन् । न च काचिद्दासशूद्रव्यवस्था केनचित्प्रवर्तिता, तादृश्याःकस्याश्चिद्व्यवस्थायाः खपुष्पायमाणत्वात् ।

शूद्रजातिस्तद्धर्मव्यवस्थात्वनादिकालादेव वेदादिशास्त्रबोधिता भारते प्रवर्तते। गणसंघस्य राजतन्त्रशासनरूपेण परिणतिरित्यपि प्रमाणशून्यम्। "एष वोऽमी राजा सोमोस्माकं ब्राह्मणानां राजा" (वा. सं. १०।१८) इत्यादिरूपेण राजतन्त्रव्यवस्थायाः सर्वप्राचीनत्वावगमात्। स्मृतिकाराणां पुण्यापुण्यव्यस्थाप्यनादिश्रुतिमूलिकैव। ततो वस्तुस्थित्यैव केषाञ्चिदाचाराणां पातकजनकत्वं, केषाञ्चिच्च पुण्यजनकत्वम्, केषाञ्चिद्देशानामपावनत्वञ्च। 'न जनमियान्नान्त्यमियात् (१।३।१०) इति बृहदारण्यकश्रुत्या अन्त्यजनाध्युषितप्रदेशगमननिषेधात्। यथाऽयोध्यामथुरा माया काशी काञ्च्यादिपुरीणां तेषां तेषां तीर्थानां च पावनत्वं तथैव वाह्लीकादिदेशानामपावनत्वमपि नासंभवि। स्वैरचारिजनाध्युषितत्वेन तु तत्सुतरां संगच्छते। दासपृष्ठारोहित्वन्तूच्छृङ्खलानामशक्तानां वा सम्भवति इति न तदुदाहरणमर्हति। विजातीयानां भिन्नदेशीयानां प्रभावातिशयात्तद्देशनिवासिनां निन्द्यत्वं तादृगेव ज्ञेयं यथाऽङ्ग्लशासनकाले, मुगलशासनकाले वा भारतीयानां निन्द्यता।

अपि च शोषकशोषितवर्गभेदोऽभ्युपेयते मार्क्सीयैः। परं न स उपपद्यते, शोषकेष्वपि शोषितत्वदर्शनात् शोषितेष्वपि शोषकत्वदर्शनाच्च। वेतनजीविनः श्रमिकाः शोषिता उपेयन्ते भूमिसम्पत्तियन्त्राधिपतीनां शोषकत्वञ्चोपेयते। परमुद्योगपतिनियुक्तकार्यचालकानां वेतनभोगित्वेऽपि श्रमिकशोषकत्वमेव दृश्यते। क्वचिच्च भूमिपतीनामपि कर्मकरकर्तृकं शोषणं दृश्यते। धनित्वनिर्धनत्वेऽपि सहस्रपत्यपेक्षया धनित्वव्यवहारात्। अत एव धनित्वनिर्धनत्वाभ्यामपि न शोषकशोषितकल्पना सम्भवति।

किञ्च शोषकशोषितभावो भारतीयमात्स्यन्यायान्नातिरिच्यते। यथा मत्स्येष्वेव दुर्बलानां प्रबला भक्षका भवन्ति तथैव नरेष्वपि। तत्र यथा दौर्बल्यप्राबल्यतारतम्यं तथैवात्रापि मण्डूको मशकानां भक्षणाय, मार्जारं श्वा, श्वानं वृको, वृकं सिंहः, सिंहं शार्दूलो जिघांसते। अस्यैव मात्स्यन्यायस्यापाकरणाय राज्यव्यवस्थापेक्षिता। हाब्स, लाक प्रभृतिभिरपि तदेवाङ्गीकृतम्।

यदुक्तम्—"वैयक्तिकसम्पत्तिर्हिंसात्मकसङ्घर्षेण शासकवर्गप्रसवाय यतते। देवसत्रीयविष्णुदेवयुद्धप्रसङ्गेन तदुक्तम्। यद्यपि स सङ्घर्षो अनिर्णयपर्यवसायी जातः तथाप्युत्पादकशक्तीनां द्वन्द्वात्मिका गतिरधिकं कालं

तामवस्थां न सहते। भीष्मरीत्या प्राचीने साम्यसङ्घे वैयक्तिकसम्पत्ति-विनिमय-सम्पत्ति-संचय लोभादिभिर्बुद्धिभेदाद् युद्धम् प्रवृत्तम्। देवा मर्त्याः सन्तोऽपि अन्यमर्त्यसाम्यापत्तिभयात् क्षुब्धाः ब्रह्माणमुपजग्मुः। इदमिह चित्रम्। तेनैव भीष्मेण विरोधकारणादेव ब्रह्म ननाश इत्युक्तम्। तेनैव च कतिचिद् पंक्त्यनन्तरं मार्गान्वेषणार्थं देवानां चतुर्मुखब्रह्मोपसदनमुच्यते। तेन लोकव्यवस्थार्थं नूतनं विधानं दत्तम्। पूर्वस्मिन् कृतयुगीयविधाने राज्यराजादिकं नासीत्। परमत्र विधाने दण्डशब्दवाच्यया हिंसाशक्त्या आर्थिकपारिवारिकसम्बन्धस्थापना। अर्थो धर्मः कामश्चेति त्रिवर्गसंचालनं दण्डाधीनमासीत्।

ततोऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजं।
यत्र धर्मस्तथैवार्थः कामश्चैवाभिवर्णितः॥

त्रिवर्ग इति विख्यातो गण एव स्वयंभुवा।' 'त्रिवर्गश्चैव दण्डजः।'

भारते दासव्यवस्थाया सर्वप्रथममिदं विधानं विशालाक्षनाम्ना प्रसिद्धम्। बृहस्पत्यादिभिस्तस्यैव शोधनादिकं कृतम्। दण्डहिंसाघृतमपि तद् ब्रह्माशीर्भिः सनाथितमपि बद्धमूलं नाभवत्। पंचषपुरुषपर्यन्तं काठिन्येन लब्धपदम्। तत एव नूतनो विरोध उद्भूतः। क्षत्रब्रह्मविरोधेन लोकतंत्रपक्षे वेननामको राजैव समुत्थितः। बुद्धिमत्या तन्मात्रा सुनीथया तत् साहचर्यं कृतम्। मातृसत्ताया विनाशात् साऽपि मन्ये संक्षुब्धा। परं कथंचिदपि महतामपि प्रभावात् समाजस्य नूतनाः शक्तयः सर्वथा समाप्तं साम्यसङ्घस्यातीतयुगं प्रापयितुं न शक्नुवन्ति स्म। केवलं बेनादयः शासकवर्गाणाम् निर्दयतां शिथिलयामासुः। यावदुत्पादनशक्तयः क्रान्त्यन्तरायं परिपच्यन्ते। वनोच्छेद-क्षेत्रनिर्माण गृहोद्योग-विकास-विनिमय-व्यापारादि-कार्याणि उत्तरोत्तरं दासानुपजीव्यैव वृद्धिं गतानि। बेनः पराजितः सन् ब्राह्मणैर्निहतः। तत् सहचारिणां गणानामपि पराजयो जातः। वेनस्याङ्ग-निर्मथनेन निषादा जाताः। दक्षिणहस्तात् पृथोरुत्पत्तिः। वैन्यो पृथुरभिषिक्तो ब्राह्मणानामाज्ञानुसारेण राज्यं चकार।

अदण्ड्या मे द्विजाश्चेति प्रतिजानीहि हे विभो।
लोकं च संकरात् कृत्स्नं त्रातास्मीति परंतप॥ (शान्ति प० ५९।१०८)

इति ब्राह्मणाज्ञानुसारं ब्राह्मणा अदण्ड्या भविष्यन्ति। वर्गभेदो न कदाचिदपि नङ्क्ष्यतीति पृथुना प्रतिज्ञातम्।" इति, तदप्यविचारितरमणीयम्

विपरीतार्थग्रहात् । चित्रमिदं, यद्विपरीतमेवार्थं स्वार्थवशंवदतया गृह्णाति डांगे महाशयः ।

उक्तमेतद्यत्खलानां वैयक्तिकसम्पत्तिर्हि हिंसां प्रोत्साहयति ।

"विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय ।

खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥" इत्युक्तेः ।

विष्णुदेवयुद्धप्रसङ्गस्तु प्रवर्ग्यरूपयज्ञशिरःप्राशस्त्यार्थमर्थवाद एव, तस्य स्वार्थे तात्पर्य्याभावात् ।

'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' ।

'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' ॥

इति जैमिनिसूत्राभ्यां तथैव निर्णयात् ।

अन्यथा कथं साधारणपुरुषस्य हस्ताभ्यामेव धनुष इषूणाञ्च प्रादुर्भावः सम्भवति । सम्भवे कथं वाऽन्यैर्देवैः तथा कर्तुं न पारितम् । एकेन बहूनां पराभवे विष्णोर्गर्वः सञ्जातस्तेनैव प्रयत्नशैथिल्यं जातम् । तस्मात्स्मयो ( गर्वो ) न कार्य्य इत्यपि तत्र विधित्सितम् । विस्तरस्त्वन्यत्रैव द्रष्टव्यः ।

अत एव न स संघर्षः शोषकशोषितसंघर्षः । देवानामैश्वर्य्यशालित्वेन शोषित्वाभावात् । सत्रे-समानसूत्रशाखीयानां व्यक्तिगतसम्पत्तिमतां सोमयाजिनामेवाधिकारात् ।

भीष्मरीत्यापि कृतयुगे साम्यसंघो न सिद्ध्यति । राज्यराजव्यवस्थाया इव सङ्घसङ्घटनस्याप्यनपेक्षणात् । सत्त्वबाहुल्याद्रागाद्यभावाज्ज्ञानविज्ञानसम्पन्नत्वेन धर्मब्रह्मनिष्ठत्वात् सर्वत्र समं निर्दोषमद्वितीयं सच्चिदानन्दलक्षणं ब्रह्मैव पश्यतां शोषणप्रवृत्त्यभावाद्दण्डविधानाद्यपेक्षैव नासीत् । कालक्रमेण यदा तेषु रजस्तमसोरुद्रेकस्तदा सत्त्वाभिभवात् रागरोषादिविततेर्मात्स्यन्यायः प्रवृत्तः । सत्यं; देवा अपि मर्त्यास्तथापि तेषां प्रलयकालपर्यन्तावस्थायित्वेनामृतपायित्वेन चामरत्वमेव प्रसिद्धम् । क्षणभङ्गजीवनानां प्राणिनां तत्साम्यापत्त्या तेषां तत एव क्षोभः । ब्रह्म ननाश इति भीष्मोक्तेर्नहि साम्यसंघनाशोऽर्थः । क्वापि साहित्येषु ब्रह्मशब्दस्य तदर्थत्वाप्रसिद्धेः । किन्तु तत्र ब्रह्मपदेन वेदोऽभिप्रेतः । लोभरागद्वेषादिजनितमोहेन तद्विभ्रंशस्य युक्तत्वात् । पूर्वं राज्यराजाद्यभावेऽपि धर्मेणैव सर्वाः प्रजाः

परस्परं रक्षन्ति स्म। धर्मस्य वेदैकसमधिगम्यत्वेन वेदनाशेन धर्मनाशो धर्मनाशात् रक्षणस्थाने भक्षणं प्रवृत्तम्।

"न वै राज्यं न राजासीन्न च दण्डो न दाण्डिकः।

धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम्" (शा० प० ५९।१४)

इति तत्रत्यवचनात्।

'कर्मब्रह्मोद्भवं विद्धि ब्रह्माक्षर समुद्भवमि'त्यादौ ब्रह्मशब्देन वेदस्योक्तत्वात्। 'ब्रह्म ननाश' इत्यत्रापि स एवार्थो ग्राह्यस्तस्यैव श्लिष्टत्वात्। पूर्वस्य वैदिकविधानस्य विस्मृतत्वादेव ब्रह्मणा नूतनं तद्व्याख्यानभूतं नीतिशास्त्रमयं विधानं दत्तम्। तदायत्तमेव त्रिवर्गसाधनम्। सर्वेषामेव कृते चतुर्वर्गसाधनमेव तद्विधानं न दासव्यवस्थाया विधानम्। रजस्तमोव्याप्तानां दण्डविधानमन्तरा व्यवस्थाया असम्भवात्। दण्डाभावे वर्ण-धर्म-लोक-सांकार्यापत्तेः। न केवलं तद्विधानं किञ्चित् कालमेव लब्धपदम्। युधिष्ठिरपर्य्यन्तं तस्य सुप्रतिष्ठितत्वात्। वेनादिकृताः क्षुद्रोपद्रवास्तु मध्ये-मध्ये बहवः समायान्ति यान्ति च। सुस्थिता व्यवस्था तु ब्रह्म-विशालाक्ष-बृहस्पत्यादिविहितैव।

अतएव वेनकृतो विरोधस्तु नास्तिक्यमूलको न लोकतान्त्रिकः। राज्ञो नास्तिक्यादेव प्रजासु तत्प्रसारः। न स विरोधो ब्रह्मक्षत्रविरोधो न वा मातृसत्तालोपात् कुपितया सुनीथया तत्साहाय्य-प्रदानं वा विहितं प्रमाणाभावात्। यैः ग्रन्थैः तद्वृत्तं सिद्धयति न तैस्तत् सिद्धयति। तद्ग्रन्थैरेव वेनदुर्वृत्तत्वं मिथ्याभिमानित्वञ्च ज्ञायते। वेनस्तु स्वमेवेश्वरं मनुते स्म। स्वमेव पूजयितुं साधूनपि प्रेरयति स्म। किमिदमेव लोकतन्त्रस्वरूपम्। ऋषिभिः स वेनः पूर्वशास्त्रीयमार्गानुसारेणानुनीतस्तदस्वीकृतौ धिक्कृतो नष्टः।

शासनवर्गाणां निर्दयता शिथलीकृता वेनादिभिरिति निर्मूलम्। धर्मनियन्त्रितशासकेषु निर्दयताया एवाभावात्। वेनस्तु दुर्वृत्तः शासक एव। क्रान्त्यन्तरप्रतीक्षाऽपि भवन्मस्तिष्कविकृतिरेव। तस्या अनैतिहासिकत्वात्। वैन्यः पृथस्तु धार्मिकः शास्त्रानुगामी, द्विजा अदण्ड्याः, सांकर्य्याच्च प्रजारक्षणमित्यादिकेषु गुणेष्वपि दोषबुद्धिरधार्मिकाणां नास्तिकानामेव शोभते। सांकर्य्यस्य सर्वैर्धर्मशास्त्रकारैर्नीतिकारैश्च निन्दि-

तत्वात्। 'संकरो नरकायैव' इति भगवता, मनुना, कौटल्येन च तस्यानर्थ-हेतुत्वमुक्तम्। ततो नानेन वर्गभेदः शोषणं वा सिद्धयति। तस्योच्छृङ्खलता-निवारणसदाचारसंस्थापनरक्तशुद्धिरक्षणहेतुत्वाद्।

यदप्युक्तम्—तदारभ्य दासव्यवस्थयापि लोकतन्त्रदमनेन पश्चात् भीषणं शोषणमार्थिकविकासश्च प्रारब्धम्। विशालभूखण्डनिर्माणादिभिः प्रादेशिक-राज्यव्यवस्थापनम्। तत्र आर्या, निषादा अन्ये च न्यूषुः। पृथुना विशाल-मात्रया कृषिव्यवस्था नूतनाश्चान्नजातयः आविष्कृताः। एवं नूतनोत्पादक-शक्तिभिः कृषिभूमिभिर्दासैश्च प्रत्नाः प्रजापश्वात्मिका उत्पादन-शक्तयः निष्काशिताः। हिंसात्मकशोषणाधारया राजतान्त्रिकशासन-व्यवस्थया शान्तिपूर्णसहयोगिताधारिता गणसाम्यसङ्घशासनव्यवस्था समापिता। ततो ब्रह्मक्षत्रप्रधानया राज्यव्यवस्थया विट्शूद्राः निःशस्त्राः कृताः। दैवी व्यवस्था नाम्ना धिग्दण्डस्थाने विट्शूद्राणां शासनं प्रवृत्तम्। राज्योत्पत्यनन्तरमेव हिन्दूसाहित्येषु दण्डमाहात्म्यगीतं प्रारब्धम्। दण्ड-मंशे राज्यभ्रंशेनाराजकता विततिः, सम्पत्तिनाशः, परिवारलोपस्ततो लोकनाशश्च भविष्यतीति प्रचारितम्।

युद्धविद्या सेनासङ्घटननायकत्वशासकत्वादिकं ब्राह्मणायत्तं संवृत्तम्। ब्राह्मणैः क्षत्रियैः विट्शूद्रनिर्मितासु भूमिसु पश्वादिषु च बलादधिकारः स्थापितः। तावत् पर्यन्तं दीर्घकालिकैर्युद्धैः पराजिता क्षुद्रमानवता संनमिता बलान्निरस्त्रा च कृता। पुनः पुनर्विद्रोहमाचरन्ती दासतां नीता। यावन्नूतनानामुत्पादनशक्तीनां उदयो न जातः। ततः श्रमिकसंघर्षैः सार्द्धमेव ब्रह्मक्षत्रेष्वपि शोषणप्राप्तधनाधिकारार्थं संघर्षः प्रारब्धः। परशु-रामेण साकं हैहयसहस्रार्जुनवैतहव्यसृञ्जयनहुषादीनां युद्धकथा प्रसिद्धा।

ब्राह्मणानां वितता भूमिरासीत्। तदीयाः शिष्याः भूत्वा वैश्या शूद्राश्च कर्मकराः। तेन ब्राह्मणानां धार्मिकत्वतपोवैराग्यादिकथा मिथ्यैव। क्षत्रियाणां शोषणकथा तु प्रसिद्धैव। तदपि तुच्छम्, विप्रतिषिद्धत्वात्। आधुनिकसाम्यवादिरूसप्रभृतिभी राष्ट्रैर्नूत्ना उत्पादनशक्तयः परमाण्व-

स्त्रादयश्चन्द्रलोकगमनसाधनानि च विकासन्नीयन्ते किं तत्सर्वं शोषण-मूलकमेव ? ओमिति चेदन्यस्यापर्य्यनुयोज्यत्वमेव ।

'यत्रोभयोः समो दोषः परिहारश्च तादृशाः ।
नैकः पर्य्यनुयोक्तव्यस्तादृगर्थविचारणे ॥'

इति न्यायात् । न चेत्तयैव पृथुकर्त्तृके विकासेऽपि किं न प्रतिपद्यते । न हि सर्वा उन्नतयो विकासाश्च शोषणमूलका एव, प्रमाणाभावात् । बृहद्भूमिनिर्माणं, विशालमात्रया कृषिव्यवस्था, नूत्नान्नजातिविकासश्च न दूषणं किन्तु भूषणमेव । तादृशविकासस्य सर्वोपकारत्वात् , सर्वसुखहेतुत्वाच्च ।

न वा विनाशोऽवश्यंभावी तस्य तदहेतुत्वात् । अद्यत्वे कृषिभूम्यादि-सत्त्वेऽपि यथा प्रजापश्वादिपालनं भवति तथा तदापीति मन्तव्यम् । कृषिभूम्यादीनां पश्वादिपोषकत्वमेव भवति, दुग्धदधिघृतादीनां स्वास्थ्या-रोग्ययज्ञेभ्यो हितकरत्वात् । दक्षिणारूपेणापि गवादिपशूनां तदा महान् उपयोग आसीत् ।

एतेन राजतन्त्रशासनव्यवस्थाया हिंसाधारत्वमप्यपास्तम् , दुष्टनिग्रहशिष्टपरिपालनयोरेव तदुद्देश्यत्वात् । धर्माधारितपृथु-शासनेन सहयोगिताधारिता साम्यसंघशासनव्यवस्था समापितेत्यपि मुधैव जल्पितम् , उभयोरप्रामाणिकत्वात् , त्वदुक्तिविरोधाच्च । त्वयैवोक्तम् लक्षाध्यायात्मकनूत्नविधानप्रवृत्तेः प्रागेव ब्रह्मापरनामा साम्यसंघो ननाश । वेनस्य दुर्वृत्तस्य धर्मविरुद्धे शासने कुतः शान्तिपूर्णा सहयोगिता, कुतो वा तदाधारा शासनव्यवस्था ।

शूद्राणां सेवापरायणत्वेन, वैश्यानां व्यापारपरायणत्वेनैव क्षत्रियाणां तेषां रक्षणे जागरुकत्वाच्च तेषां निःशस्त्रता तदिच्छाकृतैव न बलात् कृता, निःप्रमाणत्वात् । वन्यानां किरातादीनां शस्त्रवत्त्वस्मरणादर्शनाच्च । ब्राह्मणा-नामपि तपःपराणां निःशस्त्रतैवासीत् । ब्राह्मणानां सर्वविद्याऽचार्यत्वादेव धनुर्वेदादिशिक्षकाणां सशस्त्रता, उत्तमप्रकृतीनां धिग्दण्ड एव पर्य्याप्त आसीत् । रजसोपप्लुतत्वादेव तव तथोक्तः साम्यसंघो नष्टः । रजसावृतानां तु देहादि-दण्डोऽपि मात्स्यन्यायापचिकीर्षया युक्त एव ।

धर्मब्रह्मनिष्ठताद्यभावे अराजकतावश्यं लोकनाशकरीति तदपाकरणाय युक्त एव प्रयत्नः। शूद्रवैश्यादिभूमिषु ब्रह्मक्षत्रैर्बलादधिकारः कृत इत्येतत्तु निर्मूलम्। प्राणिमात्रक्षतत्राणकारणादेव क्षत्रशब्दस्य भुवनेषु प्रवृत्तत्वात्। तत एव दिलीपशिबिरन्तिदेवादिभिः प्राणिपरित्राणाय स्वात्मोत्सर्गः कृतः। अत एव मानवता दासतां नीता इत्यादि मिथ्यैव। आधुनिकसाम्यवादेष्वेव तादृग्व्यवस्थायाः सत्त्वात्। यथा चैतत्तथा—श्वेतलाना पुस्तके स्टालिनपुत्र्यैव—प्रदर्शितम्। परशुराम-हैहयवंशीयक्षत्रिय-संघर्षेण श्रमिकसंघर्षसद्भाववर्णनमपि मिथ्यैव, प्रमाणगन्धशून्यत्वात्। न वा तत्रार्थिकशोषणं कारणं, जमदग्नौ कार्त्तवीर्यदुर्व्यवहारमूलकत्वात्तस्य। ब्राह्मणानां तपोवैराग्यादिकथा तु शास्त्रप्रसिद्धा।

यदपि च "गणविधानं निःसहायं जातम्। गणविधाननियमानुसारेणान्यसंसर्गराहित्येनैव गणसदस्यानां संहतानामेकत्र निवासो योग्यः। राजतंत्रविकासे तु सर्वत्र प्रदेशेषु दासानां सुशिक्षितानां व्यापारिणाञ्चान्य-गणसदस्यानामपि निवासव्यवस्था प्रवृत्ता। व्यापारविनिमयादिभिर्जीविका-परिवर्तनेन भूमिस्वामित्वपरिवृत्या च जीवनस्य स्थिरव्यवस्था भग्ना। तस्मात् आरट्टान् कारस्करान् पुण्ड्रान् सौवीरान् बङ्गान् कलिङ्गान् च गत्वा पुनष्टोमेन यजेत सर्वपृष्ठ्या वा। बोधायन० (१।२-१४) इत्यादिना संसर्गान्तरे जाते प्रायश्चितम् विहितम्। पूर्वं सभायाम् नरिष्टे वा गणसदस्याः सम्मिलन्ति स्म। नेदानीं तत् सम्भवः। धार्मिकसमारोहेष्वेव तेषां समवायः संभवी। गणानां हितस्यावश्यकतायाश्च पूर्तये गणनिर्माणमासीत्। तत्पूर्तिक्षमता तत्रासीत्। उत्पादनसंबन्धव्यत्यासेन सामाजिकस्वरूपनूतनानामावश्य-कतानामुत्पत्तिः। ताश्च न केवलं गणस्यापरिचिताः किन्तु प्रतिपदं विरोधिन्योपि, श्रमविभाजनेन लघुगृहोद्योगिसमूहस्यापि कृते हितमुपस्थापितम्। जनपदपौरादिसङ्घटनमपि गणसदस्यैरेव संपन्नम्।

न चान्येषामपि संनिवेशाद् गणविधानानुसारि तत् सङ्घटनं संभवति। तेनैव गणविरोधतत्सङ्घटनमपि संभवि। हितानां संघर्षः सर्वत्र गणेषु वर्तमान आसीत्। गणसंस्थाभ्यो बहिरपि वितता जनसंख्यासीत्। तस्याः गणेष्वन्तर्भावनमशक्यमासीत्। पूर्वं यत्र समाजेऽन्तर्विरोधो नासीत्

तत्र च गणसङ्घटनस्य जन्म। न पुनरन्तर्विरोधे जाते गणः स्थितिपदः संभावी। प्राचीनसमाजस्य विधाने लोकतंत्रव्यतिरिक्ता काचिच्छक्तिर्नासीत्। पश्चात् तादृक्समाजो लब्धपदो जातो यत्राल्पनियमनायविरोधेन वर्गभेदोत्पत्तिः, तत्र सामञ्जस्यासंभवेन विरोध एव वृद्धि गतः। ततः संघर्षरतयोर्वर्गयोर्नियंत्रणाय तृतीया शक्तिरागता। बाह्यरूपेणेयं शक्तिर्वर्गाभ्याम् उपरि स्थिता। परं प्रत्यक्षवर्गसंघर्षमभिभूय वैधानिकनियमेनार्थिकक्षेत्रेषु अधिकाधिकवर्गसंघर्षं प्रोत्साहयति स्म। गणविधानसमाप्त्या समाजस्य द्वाभ्यां वर्गाभ्यां विभक्तत्वात् गणो विकीर्णः। तस्य स्थानं राज्येन स्वायत्तीकृतम्। तेन भीष्महीगेलकल्पनानुसारेण शासनतन्त्रं, राज्यव्यवस्था वा नोपरिष्टादागता। न वा दैवी चमत्कृतिः, न तत्र नैतिकयाथार्थ्यम्, न वा बौद्धिकयाथार्थ्यम् चित्रितम्। किन्तु राज्यविकासस्य विशिष्टावस्थायां समाजेनैवोत्पादिता। सा च समाजस्यासन्धेयान्तर्विरोधं प्रमाणयति" इति,

तदपि तुच्छम्, सर्वस्य कल्पनामात्रप्रसूतत्वात्। त्वदभिमतगणसंविधानस्य प्रामाणिकं रूपन्त्वनुपलम्भपराहतम्। अन्यसंसर्गराहित्येन गणैः संहतैरेकत्रावस्थेयमिति नियमस्तु निष्प्रमाण एव। भारते सृष्ट्यादि समयमारभ्यैव वर्णाश्रमव्यवस्था तन्नियमप्रवृत्तेः।

तदनुसारेण मातुरसपिण्डया पितुरसगोत्रया कन्यया विवाहो विहितः। गणा अपि वर्णाश्रमानुसारिणो वैदिका एव। तेषु विजातीयनिषिद्धरक्तसंसर्गाभावेऽपि अनिषिद्धविहितरक्तान्तरसंसर्गोऽनिवार्य्य एव। किञ्च समानसूत्रशाखीयानामेव सत्रेऽधिकारश्रवणादेव तत्कल्पनम्। परं सत्रानुष्ठानानि कादाचित्कान्येव भवन्ति स्म। वृष्ण्यन्धकादयो गणाः समानकुलाभिजनादि संसर्गाद् गणपदाभिधेया भवन्ति स्म। तेष्वपि कन्यका यथायथमन्यकुलेभ्य आयान्ति। तेषाञ्च कन्यका अन्यकुलेषु यान्ति स्म। तथापि न यथेष्टं दासैर्व्यापारिभिर्वैश्यैरन्यगणसदस्यैश्च सत्त्वेऽपि सहावस्थानं तेषां रक्तसम्बन्धः। अद्यत्वेऽपि कस्मिंश्चिन्नगरे पत्तने ग्रामेषु च विभिन्नजातीयानां निवाससत्त्वेऽपि न तैः सर्वैः सह भोजनविवाहादिसम्बन्धः सम्भवति, तथैव तदानीमपि कल्पयितुं शक्यम्, नियामिकाया मर्यादायास्तदानीमपि विद्यमानत्वात्।

आरट्टान् कारस्करान् पुण्ड्रादीन् गत्वा प्रायश्चित्तमाचरेदिति विधानं तु तत्तद्देशगमननिमित्तम्। यथेदानीमपि प्रत्यन्तगमनं निषिद्धमास्तिका मन्यन्ते, न गणान्तरसंसर्गनिमित्तं तत्प्रायश्चित्तम्। शिविपञ्चालकठादि-संसर्गनिमित्तकप्रायश्चितादर्शनात्। अङ्गबङ्गादिष्वपि तीर्थयात्रादि-निमित्तं गमनं न निषिद्धम्।

'अङ्गबङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च।
तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति' ॥ इति स्मरणात्"

यथा व्यवहारे गोमूत्रस्य पवित्रत्वमन्यमूत्राणामशुचित्वम्, गङ्गाजल-स्पर्शे पापनाशः, कर्मनाशाजलस्पर्शे पुण्यनाशः, वाराणस्यां मरणे मोक्षः, मगधे मरणाद् दुर्गतिः, तदेतत्सर्वं शुद्ध्यशुद्धितारतम्यवशादेव मन्तव्यम्। बोधयनधर्मसूत्रे अथाप्यत्र भाल्लविनो मायामुदाहरन्ति (१।११)। पश्चात् सिन्धुर्विहरणी सूर्य्यस्योदयनं पुरः यावत् कृष्णो विधावति तावद्धि ब्रह्मवर्चसम् (१।१३) इति बौधायनोद्धृतश्रुतिबलात्

आसमुद्रात्तु वै पूर्वादासमुद्राच्च पश्चिमात्।
तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ॥'
'उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥'

विष्णुपुराणे भारतवर्षं आदिशब्दैः पुण्यदेशानां वर्णनं दृश्यते तत्रापि

'अवन्तयोऽङ्गमगधाः सुराष्ट्राः दक्षिणापथाः।
उपावृत्तिसिन्धुसौवीरा एते संकीर्णयोनयः ॥
(बौ. ध. सू. १।१४)

आरट्टान् कारस्करान् पुण्ड्रान् सौवीरान् बङ्गान् कलिङ्गान् प्रानूनानिति च गत्वा पुनःस्तोमेन यजेत सर्वपृष्ठया वा' (१।१५ बौ. ध; सू.) इदं प्रायश्चित्तमाहिताग्नेः कृतसोमस्यैव, तस्यैव पुनस्तोमे अधिकारः। एकसुत्याकः सोमयागः, एकाहः पुनस्तोमः। यावत्पर्यन्तं समूहस्य गणस्य वा लघुरूपं भवति तावत्पर्य्यन्तं समितौ नरिष्टे वा सम्मेलनं नियमेन सम्भाव्यते।

समूहबृहत्वे तु यदा कदैव समारोहविशेषेष्वेव संमेलनं सम्भवतीति युक्तमेव। त्वदभिमतपारिभाषिके गणानां विलोपेऽपि। वस्तुतोऽद्यापि गणाः

समूहाः जातिगोत्रकुलग्रामनगरराष्ट्रादिरूपेण सन्त्येव। विकासस्तु कालक्रमेण जनसंख्यावृद्धया शिक्षाविशेषैश्च वृद्धिमुपगच्छति। सौविध्यातिशय-प्रेप्सया विविधान्वेषणप्रयासादिभिरुत्पादनसाधनविशेषाविष्कारः। पूर्वतनानां कृते नवाविभावशीलाः शक्तयोऽपरिचिता भवन्तीति किं चित्रम्। उत्कृष्टा उत्पादनशक्तयः पूर्वापकृष्टशक्तीनां स्थानानि गृह्णन्तीति विरोधप्रतीता-वप्युन्नत्याधायिका एव भवन्ति।

वैदिकानामपौरुषेयाणां विधानानां नित्यत्वेप्यन्यविधानानां देशकाल-परिस्थित्यनुसारिपरिवर्त्तनं न दुर्घटम्। पूर्वसाम्यसंघे गणेषु वा वर्गभेदो नासीदन्तर्विरोधाभावात्। पश्चात्तु तादृगन्तर्विरोधात् वर्गभेदो जात इति कल्पनं निर्मूलमित्यप्युक्तमेव। धर्मनिष्ठानां ब्रह्मविदां वेदैकचक्षुषां परस्परो-पकारपरायणानां कदाचिदपि क्वापि कश्चिदपि विरोधो न भवति, तद्भि-न्नानां तु पदे पदे विरोध एव। 'धर्मः तेषामनीनशत्' इत्येव सर्वत्र संघर्ष मूलम्। शासनतन्त्र—राजशक्ति-वर्गसिद्धान्तदृष्ट्यापि सर्वसामञ्जस्या-योपयुज्यते। नायमपि न्यायः सर्वत्रानिवार्य्यः। हीगलेन वाद-प्रतिवाद संवाद-रूपेण संघर्षपारम्पर्य्यस्य राष्ट्रियराजतन्त्रशासने पर्य्यवसानमुक्तम्।

मार्क्सेन तु तेनैव न्यायेन साम्यवादे तस्य पर्य्यवसानमप्युपेतम्। परमन्तिमसंवादो वादो न भविष्यति, तत्प्रतिवादश्च नान्य उदेष्यतीति को वा वक्तुं शक्नोति ? तथा च संवादान्तरमपि सम्भाव्यत एव। तथैव सिद्धान्ताना-मपि सम्बन्धे वक्तुं शक्यते।

वस्तुतोऽर्थतथात्वम्प्राप्य सर्वेऽपि वादा विरमन्ति । नहि तत्त्वं वादप्रतिवादसंवादसहस्रैरपि परिवर्त्तते। चक्षुषारूपोपलम्भः, श्रोत्रेण शब्दोपलम्भो यथा तथैव आनाद्यपौरुषेयवेदादिशास्त्राश्रिताः सिद्धान्ता अपि नित्या एवेति न कदाचिदपि परिवर्त्तनमर्हन्ति। सैव दैवी व्यवस्था। अत एव नैतिकं बौद्धिकञ्च महत्त्वं नापलापार्हम्। सिद्धान्तेऽपि विशिष्टा-वस्थायामेव समाजस्यापेक्षायां सत्यामेव प्रजापतिना राजव्यवस्था प्रत्ता। असन्धेयान्तर्बाह्यसर्वविधविरोधसमाधानमेव तदाविर्भावयोजनम्। तापताऽपि न तन्माहात्म्यापकर्षः, सत्यामाकाङ्क्षायामेव परमेशप्रत्त वृष्टेर्महत्त्वदर्शनात्।

यदुक्तम्—राज्यव्यवस्थायां चतुरङ्गसेना राजपुरुषाश्च प्रस्तुताः। तत्र ब्राह्मणानां क्षत्रियाणां च शस्त्रधारणविशेषाधिकारः। सेनानायकत्वमपि तेष्वेव स्थितम्। लोकशक्तिनिर्माणे पारतन्त्र्यमापाद्य बलाद्दास्यसंपादनाय न केवलं सेनाया अपितु कारागारन्यायालयाद्यनेकसंस्थानामप्युपयोगः कृतः। प्राचीन-गणसमाजे वर्गविरोधाभावाच्छस्त्रैः सेनादिभिश्च पारतन्त्र्यापादनदास्य-संपादनाद्यावश्यकता नासीत्। वर्गमयसमाज एव शस्त्रोत्पत्तिः। लोकशक्तेः संस्थापनाय संचालनाय नागरिकेभ्यः करग्रहणमावश्यकम्। ततः पूर्वं केनापि तन्नामापि नार्कणितम्। गणेषु गणपतयः स्वातन्त्र्येण वस्तुवितरणात्मकं दानं कुर्वन्ति स्म। अर्थशास्त्रेषु करभारनाम्ना तद्व्यवहारः महाभारते शिक्षितम्।

'यथा शल्यकवानाखुः पदं धूनयते सदा'।
अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समा पिबेत्॥
(शा० प० ८८। ६)

यथाखुः शयानस्य कस्यचिद्रक्तं शनैः शनैः पिबति तथैव पीड़ासहितैर-तीक्ष्णैरुपायैस्तथा करं गृह्णीयात्। उत्पादनस्य षष्ठे भागे राजतन्त्रस्याधिकारो निश्चितः। पदाधिकारिणश्च लोकशक्तेः प्रतिनिधित्वं कुर्वन्ति स्म। विशेषादेशैः तेषां समाजसंमानं कारितम्। तेनैव तेषां चित्रोच्चताऽलंङ्घ्यता अबाध्यता च प्राप्यते स्म। सम्पत्त्यनुसारेणैव श्रेणीविभागः संमानश्च। तेन स्पष्टं धनहीन-शोषितवर्गविरुद्धमेव शासनतन्त्रं संपत्तिशालिनां संघटनमिति प्रतीयते। तेषामेव सुरक्षासाधनम् तत्। अतएव पौरजनपदसभासु सम्पत्तिमद्वर्गीया एवासन्। दासराज्यशासनप्रौढतायां धनिनः पूजयेन्नित्यमिति राज्ञां कर्त्तव्येषूपदिष्टम्।

एवमुत्पादनशक्तिभिरेवोत्पादनसंबन्धः परिवर्त्तितः। ताभिरेव वैय-क्तिकसंपत्तिवर्गभेदो वर्गविरोधश्चोत्पादितः। ताभिरेव मानवसमाजे विपत्स्वरूपं शासनतन्त्रमुत्पन्नम्। यत् सुरक्षामिषेण शोषितवर्गस्य दमनाय शोषकवर्गस्य हस्तेऽस्त्ररूपमासीत्।

महाभारते–दासस्वामिनां गणसंघानाञ्च गृहयुद्धम् वर्णितम्। सिन्धु-नदमारभ्य पाटलिपुत्रं यावद्धिमालयमारभ्य विन्ध्यावन्तिकां यावत् विस्तृत-भूखण्डेऽनेकानि राज्यानि स्थापितानि। तत्र केचित् राजवंशनाम्नाऽपि

प्रसिद्धगणनामभिरेव प्रसिद्धाः प्रदेशाः। सिन्धनाम्ना, हिन्दुस्थाननाम्ना दुष्यन्तपुत्रभरतनाम्ना च भारत नाम तस्यैव देशस्य प्रसिद्धम्।

पुरुणा सैनिकलोकतन्त्रैर्गणसंघान् विनाश्य बृहत् साम्राज्यं स्थापितम्।" इति, तदपि तुच्छम्, कल्पनाप्रासादमात्रत्वात्। राज्यसञ्चालनार्थं परकृताक्रमणादि निरोधार्थञ्च सेनायाः संघटनम् युक्तमेव। वर्णाश्रमव्यवस्था अनादिवेदसम्मता। तदनुरोधेनैव क्षत्रियाणां हस्तेषु सेनानायकत्वम्, नयानयज्ञत्वाद् ब्राह्मणानां तु व्यवस्थापकत्वमेव प्रधानम्। न तत्र पक्षपातस्य मनागप्यवकाशः। प्रतिक्रियावादिनस्तु तथोक्ताः साम्यवादिन एव। ते यत उत्तिष्ठन्ते तानेव समापयन्ति। येषां मते धर्मन्यायसत्यानामपि स्वेच्छया परिवर्तनमिष्यते।

सेनाकारागारादिभिः पारतन्त्र्यदास्यादिप्रदानन्तु निष्प्रमाणमेव। दुष्टनिग्रहशिष्टपरिपालनार्थं सेनाकारागारादि सदुपयोगस्यैव प्रामाणिकत्वात्। न्यायालयस्य तु सर्वजनसुखाय सर्वजनहितायैव स्थापनम्। रामराज्ये शुनोऽपि महत्त्वपूर्णन्यायप्राप्तिस्मरणात्। मनुरामायणभारतादिवर्णितराजधर्मस्य सर्वकल्याणकरत्वं गुणैकपक्षपातिभिः सर्वैरप्यनुमन्यते। प्राचीने समाजेऽपि शास्त्रं शस्त्रञ्चासीदिति निश्चप्रचम्।

ब्रह्मेति वेदरूपं शास्त्रमेवासीत्, यन्नाशेन साम्यसंघनाशभ्रमस्तव। समब्रह्मदर्शित्वादेव तु मात्स्यन्यायानवतारः। रजस्तमोविस्ताराच्छास्त्रं शोषणाय प्रवृत्तम् साम्यवादिभिरपि समाजस्यादिमावस्थायामस्थिमयानां पाषाणमयानामन्ते च धातुमयानां शस्त्रास्त्राणां सत्त्वं समर्थितम्। भौतिक—विकासवादेऽचेतनप्रकृतिपरमाणुभूतादिमूलिका सृष्टिस्तेन तत्र क्रमेण ज्ञानक्रियाशक्तानां विकासाभ्युपगमेन पूर्वपूर्वपुरुषेषु जाड्याधिक्यमुत्तरोत्तरेषु ज्ञानविज्ञानाधिक्यम्। चेतनब्रह्ममूलकत्वं सृष्टेरभ्युपगच्छतां तु पूर्वं पूर्वं विधिवसिष्ठमनुप्रभृतिषु ज्ञानवैशिष्ट्यमुत्तरेषु तु तद्ध्रास एव तेन शास्त्रं राज्यव्यवस्था च सर्वज्ञपरमेशसृष्टौ सर्वप्रथममाविर्भूतम्।

करग्रहणमपि सर्वजनकल्याणोपयोगिव्यवस्थार्थं सर्वाप्यायनार्थञ्च। यथा सविता तीक्ष्णै रश्मिभिः पृथिव्या रसं कर्षति। यथाकालं

वृष्ट्या तदाप्यायनायैव तथैव प्रजापोषणार्थमेव। ततः करादानमिति राज-धर्मेषु सुस्पष्टं विवृतम्। शल्यकवदाखुदृष्टान्तोऽपि तत्रैव चरितार्थः। त्वदभिमतगणेषु तु दानस्य न किमपि वैशिष्ट्यम्, अर्जकार्जितवस्तूना-मर्जकेभ्यस्तद्भागविभाजनमेव तत्।

परमत्र तु सवितृदृष्टान्ते किञ्चिन्मात्रमादाय प्रभूतं जलं यथा प्रत्य-र्पयति सविता तथैव स्तोकं स्तोकं करमादाय प्रजाभ्यः प्रभूतं प्रार्पयन्ति धार्मिका राजानः।

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः॥ (रघुवंशे)

धर्महीना उच्छृङ्खलास्तु भौतिकवादिन एव शोषका भवन्ति। देवाः किञ्चिदेव चरुपुरोडाशादिकं गृहीत्वा बहुतरानभीष्टान् भोगान् ददति। परमेश्वरस्तु पत्रपुष्पादिकमेव गृहीत्वा सर्वस्वं प्रयच्छति। परं तत् सर्वं भौतिक-वादिबुद्ध्यगम्यमेव। सुभिक्षता समृद्धिश्च राज्यव्यवस्थायां निर्विशेषं वितायते। तेनान्त्यजादीनामपि दारिद्र्यं नेष्यते। तत एव प्रसिद्धो हरिश्चन्द्रो राजा भृत्यो भूत्वा श्मशानकार्य्यकरः संवृत्तः। कोटिस्वर्णमुद्राभिस्तेन क्रीतः स काशीस्थस्यान्त्यजस्य राजा। दारिद्र्यं कथं तत्स्यात्। तुलसीदासेनाप्युक्तम्—

"जो संपदा नीच गृह सोहा। सो विलोकि सुरनायक मोहा।"

अधिकारास्तु शास्त्रानुसारिणो न स्वेच्छया। तैः सार्धं कठोरकर्त्तव्या-नामपि संबन्धोऽनिवार्य्यः।

ब्राह्मणप्राप्यानधिकारान् वाञ्छन्त्याधुनिकाः, परं तदीयकठिनत्याग-तपस्यादिभ्यो बिभ्यति। सर्वेऽपि क्षत्रियाणां साम्राज्याद्यधिकारं कामयन्ती-तरेऽपि जनाः, परं तदुचितशौर्य्यं त्यागञ्च कर्त्तुं न प्रभवन्ति। स्वीयभूमि-सम्पत्त्यादिस्वत्वं कलत्रपुत्रादिरक्षणार्थमपि रक्तं पातयितुं शिरश्छेदयितुं च न पारयन्तीतरे, क्षत्रियास्तु महामहाभागाः प्रजाजनस्वत्वकलत्रादि-रक्षणार्थमनायासेन स्वसर्वस्वं रक्तं प्राणं शिरश्च हस्ते गृहीत्वैव भ्रमन्ति। तथैव रामेण प्रतिज्ञातम्—

'स्नेहं दयाञ्च सौख्यञ्च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा॥'

व्यवहृतञ्च तथैव। 'शिष्याः खलु विगतमत्सराः निरहङ्काराः कुम्भी-धान्या अलोलुपा दम्भदर्पलोभमोहक्रोधवर्जिताः' (१।५ बौ० ध० सू०) इति वचनेन मात्सर्य्याहंकारदम्भदर्पलोभक्रोधशून्याः कुम्भमात्रधान्य-परिग्रहा निस्पृहा एव शिष्टा भवन्ति। तेषामेव प्रशंसा वैदिकधर्मे।

"कुशूलधान्यको वा स्यात् कुम्भीधान्यक एव वा।
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा॥"
(म० ४।७)

"ज्यायान् परः परो ज्ञेयो" (मनु. ४।८)

इत्यादि रीत्या ब्राह्मणानां तपःप्रधानानां अब्भक्षाणां वायुभक्षाणां कंदमूलाशिनां शोषकत्वकल्पनं नास्तिकानामेव शोभते। कुसूलधान्यको ब्राह्मणो निकृष्ट एव परिगण्यते। कुम्भीधान्यः शिष्टो भवति। स शिलवृत्त्या भूतानभि-द्रोहेणैव वृत्तिं चिनोति। ततोऽपि श्रेष्ठ उच्छवृत्तिर्यस्य दिनत्रय-भोजननिर्वाहार्थं भोजनसामग्री स्यात्। ततोऽपि श्रेष्ठः स ब्राह्मणो यो ह्यश्वस्तनिको भवति। यस्य श्वःकृते न किमप्यवशिष्येत। एतादृशाणां तेषां शोषकत्वं किं सम्भवति। भारतीयवैदिकपद्धत्या वैधेष्वायेषूद्योगादिस्वरूपनिर्वर्तकव्यय-राजकीयकरादि भागाद् पृथक्कृत्य अवशिष्टेषु सर्वेष्वायेषु धर्माय यशसेऽर्थाय कामाय स्वजनाय च पञ्चधा विभागः उक्तः। स्वात्मकामार्थे भागेऽपि।

'यस्य त्रैवार्षिकं भक्तं पर्य्याप्तं भृत्यवृत्तये।
अधिकं वापि विद्येत स सोमं पातुमर्हति॥' (११।७)

मनुरीत्या तस्य सोमयागप्रसङ्गेन सर्ववितरणमुक्तम्। तत्रापि

'यावद् भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम्।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति॥
(श्री. भा. ७।१४।८)

इति रीत्या यादवर्थतोक्ता। सतां धनहीनानां जीविकानिर्वाहार्थं दण्डरूपेणासाधुपुरुषधनापहारे राज्ञां पुण्यमेवोक्तम्।

'योऽसाधुभ्योऽर्थमादाय साधुभ्यः सम्प्रयच्छति।
स कृत्वा प्लवमात्मानं सन्तारयति तावुभौ॥
(११।१९ मनुस्मृतिः)

तादृग्व्यवस्थायाः शोषकत्वोक्तिरज्ञानमूलिकैवेति मन्तव्यम्। रन्तिदेवेन पुल्कसादिनिम्नजातीयजनरक्षणाय स्वात्मोत्सर्गः कृतः। शिबिना च राज्ञैव कपोतरक्षणार्थमपि स्वात्मा श्येनकवलीकृतः

न च मन्वादिभिर्विधायकैः शूद्राणां निर्धनत्वापादनमावश्यकमुक्तमिति वाच्यम्, तदुक्तेर्दुर्वृत्तशूद्रपरत्वात्। ब्राह्मणादिसेवापरायणानां धनानपेक्षणाच्च। महाभारते केनचिन्मुनिना स्वपार्श्ववर्ती भक्तः श्वा वृकाद्भीतः तपोवलाद्वृकः सम्पादितः। स एव व्याघ्राद्भीतो व्याघ्रो निर्मितः। एवं सिंहत्वं नीतो मुनिमेव भक्षयितुं प्रवृत्तो यदा मुनिना स श्वैव निर्मितः। तथैव कुलहीनो दुर्वृत्तः साधून् बाधते। धनं लब्ध्वा दुर्वृत्ता शूद्रा अपि विप्रादीन् बाधन्ते।

महाभारते एव कश्चिच्छूद्रो दस्यूनां शासक आसीत्। तन्नियमिता दस्यवोऽपि धर्मपरायणा जाताः। तदाज्ञया ब्राह्मणाः साधवः तपस्विनः स्त्रियो दीनाश्च सर्वदा तैः पाल्यन्ते स्म। तस्य चैश्वर्य्यमुत्तरोत्तरं वृद्धिमुपगतम्। पैजवन संज्ञकशूद्रश्च स्वधर्मानुसारेण बहून् पाकयज्ञान् कृतवान्। प्रसिद्धो हरिश्चन्द्रो राजा यस्य काशीमहाश्मशानाधिपतेश्चाण्डालस्य हस्ते विक्रीतः सोऽपि बहुधन आसीत्।

तथाहि "व्यास उवाच—

"एवमुक्ते तदा तेन श्वपचो हृष्टमानसः॥ २८॥
आगत्य सन्निधौ तूर्णं विश्वामित्रमभाषत"।

चाण्डाल उवाच

"दशयोजनविस्तीर्णे प्रयागस्य च मण्डले॥ २९॥
भूमीं रत्नमयीं कृत्वा दास्ये तेऽहं द्विजोत्तम।

व्यास उवाच

ततो रत्नसहस्राणि सुवर्णमणिमौक्तिकैः।
चाण्डालेन प्रदत्तानि जग्राह द्विजसत्तमः॥ ३१॥
( देवीभागवते स्कन्ध ७ अध्याय २३ )

उपर्य्युक्तवचनैस्तस्य बहुधनरत्नमुक्तादिसम्पन्नत्वं विज्ञायते। मिथिलायां सीताविवाहप्रसङ्गे स्पष्टमुक्तम्—

"जो सम्पदा नीच गृह सोहा। सो बिलोकि सुरनायक मोहा"
जनक भवन की शोभा जैसी। गृह गृह प्रति पुर देखिय तैसी।
—बालकाण्डे तुलसीरामचरितमानसे।

किंच अदत्तानामनादानमनादिकालाद्भारतीयपारम्पर्य्यमासीत्। पथि पतितानां रत्नादीनामप्यदत्तानामनादानं सार्वजनिको धर्म आसीत्। तथात्वे शूद्राणां वैश्यानां धनापहारेण निर्धनत्वापादनमित्यारोपो द्वेषमूलक एव।

परान्नं परद्रव्यं वा पथि वा यदि वा गृहे।
अदत्तं नैव गृह्णीयादेतद् ब्राह्मणलक्षणम्॥'

ब्राह्मणशब्दोऽत्र सद्वृत्तपरः। दण्डरूपेणासाधुधनापहारस्तु लोकहितौपयिकत्वेनापवाद एव।

यत्तु मार्क्सीयानां वन्याऽर्धवन्यावस्थादिकल्पनम् तदप्यविचारितरमणीयम्, विपरीतस्यैव सुवचत्वात्। तथाहि-वन्यावस्था अर्धवन्यावस्थादिकल्पनापि निराधारैव। पूर्वं प्रायेण ज्ञानविज्ञानसम्पन्ना सकलकलानिष्णाता अपि महर्षयो वनवासिन एवासन्। प्रसिद्धो महर्षिः वाल्मीकिः वेदादिशास्त्रपारङ्गतः काव्यकलायाः प्रसवभूमिः। स च न केवलं तन्त्रीवादनसंगीतादिशिक्षण एव कुशलवयोर्गुरुः किन्तु शस्त्रास्त्रनैपुण्येऽपि स एव गुरुः। नागरिकशिरोमणीनामपि यः शिक्षकः स किं वन्यावस्थोऽर्धवन्यावस्थो वा? विविधकलानिपुणो व्यासोऽपि कौरवान् पाण्डवांश्च शिक्षयन्नपि वनवास्येवासीत्।

स्त्रीपुरुषयोः समानाधिकार वार्त्तापि निष्प्रमाणिकैव। प्रकृत्येव वृक्षमाश्रित्य स्त्रीणामवस्थानसिद्धेः प्रामाणिकत्वात् लताया इव पुरुषमाश्रित्य। यागादिषु तु दम्पत्योः सहाधिकारः शास्त्र सिद्ध एव।

गृहभूमिसम्पत्यादिषु तदानीमपीदानीमिव पुंसामेवाधिकारः समासीत्। मन्वादिभिस्तथैव व्यवस्थापनात्। अत एव स्त्रीधनस्य पृथग्व्यवस्था, स्त्रियोऽपि प्रतिग्राह्याः पाणिग्रहीतुः स्वा एव। अत एव ता अधना इव यस्य तास्तद्धनमपि तस्यैव। प्रेमरीत्या तु हृदयेश्वरीत्वात्पत्युरपि धनस्वामिन्य एव। न केवलं वन्यावस्थायामद्यापि गृहे नार्य्याः प्रमुखसत्ताऽभ्युपगम्यत एव। तस्मान्मातृसत्तामपसार्य्य पुरुषस्यैव बहिरन्तश्चाधिपत्यं स्थापितमित्यपि कल्पना

निःसारा, वेदमन्त्रादिषु दुहितॄणां दायानधिकारस्योक्तत्वात्। न जामये तान्वो रिक्थमारैक् चकार गर्भं सनितुर्निधानम्। यदी मातरो जनयन्त वह्निमन्यः कर्त्ता सुकृतोरन्यक्रन्धन्—ऋ० सं० ३।२।

तदर्थस्तु—जामये भगिन्यै तान्वः तन्वाभवः आत्मजः रिक्थं पैतृकं धनं न अरैक् प्रादात् न प्रददौ किं तर्हि तस्या करोत्युच्यते चकार गर्भं सनितुर्निधानम्। पाणिग्राहस्य भगिनी भर्त्तुः प्रसवसमर्थां करोति पुष्णातीत्यर्थः। यदी मातर यत्पुत्रद्वयमिह मातरो जनयन्ति वह्निं वध्वा वोढारं पुत्रमवह्निं अवोढ्रीं स्त्रियं तयोर्द्वयोरपि वोढृवोढ्रोः पुत्रयोरन्यतर एकतरः कर्त्ता भवति सन्तानकर्मणः कतमः, यः पुमान्, स एव दायाद्यर्हो नेतरः कन्याख्यः; तयोरुभयोरपि सुकृतयोरेकेनापि प्रयत्नेन कृतयोरुत्पादितयोरन्यक्रन्धन् अन्यतरोऽर्धयित्वा सुकृतोऽपि सुपुष्टोऽपि सन् जाम्याख्य भगिन्याख्यः प्रदीयते परस्मै न कस्याञ्चिदवस्थायामसावात्मीयो भवतीत्यभिप्रायः। न दुहितरो रिक्थभागिन्यो भवन्ति, नैताः सन्तानकर्मणि पितुरुपतिष्ठन्ते, वर्धयित्वा ह्येताः परस्मै दीयन्ते। तस्मादभागा एता इति मन्त्रार्थः।

यद्यपि—

> "अङ्गादङ्गात् संभवसि हृदयादधि जायसे।
> आत्मा वै पुत्र नामासि त्वं जीव शरदः शतम्॥"

इत्याभ्यां श्रुतिश्लोकाभ्यां मिथुना पुत्राः पुत्र्यश्चाविशेषेण समाना एव प्रतीयन्ते। यथैव पुत्रजन्मने प्रजननयज्ञस्तन्यते तथैव दुहितृजन्मनेऽपि। यैरेव मन्त्रैर्येन च विधानेन पुत्रगर्भ आधीयते तैरेव दुहितृगर्भोऽपि। तथापि अभ्रातृमतीवादे तानि वचनानि समन्वितानि। अभ्रातृमती पित्र्यं धनमर्हति न सभ्रातृका। पुरुषेषु पिण्डदातृषु सत्सु न स्त्रीधनमर्हति। "पिण्डं दत्वा धनं हरेत्" इति नियमात्।

सा हि परकीयं वंशं वर्धयति न स्वमभ्रातृका। पितुरन्यः पुत्रो नास्तीति दौहित्रः पिण्डदानादिकार्य्येष्वधिक्रियते।

अन्यत्र तु तस्मात्पुमान् दायादः स्त्र्यदायादेति ह इत्यर्थे ब्राह्मणम्। "तस्मात्पुमान् दायादोऽदायादा स्त्रीति विज्ञायते।" मैत्रायणी सं० ४।६।४।

तस्मात्कारणात् स्त्रियं जातां परास्यन्ति परस्मै प्रयच्छन्ति । स्त्रीणां दान विक्रयातिसर्गा विद्यन्ते ।

क्रीत: सत्पथान्यैश्चरन्ति । ( मै. सं. १।१० ११ )

शुल्केन कन्यादानं विक्रय: । परित्यज्यते च कन्या स्वबन्धुभि: स्वयंवरे यो बलिष्ठ: स गृह्णात्विति यो वा तुभ्यं रोचते तं वृणीष्वेति ।

यद्यपि शौन:शेपे पुंसोऽपि दानविक्रयविसर्गा भवन्ति । एवं ह्युक्तं दत्तक्रीतकृत्रिमक्षेत्रजौरसा: पुत्रा उक्ता: । विक्रीतं मध्यमं मन्ये । विश्वामित्रेण मधुच्छद आदीनां परित्याग: कृत: । (ऐ० ब्रा० ३३।४) तथापि क्वाचित्कत्वेनानैकान्तिकत्वमेव पुंसां दानातिसर्गादय: । कन्यानां पुन: स्वाभाविकान्येव । "शासद्वह्निर्दुहितुर्नप्त्यं गाद्विद्वां ऋतस्य दीधितिं सपर्य्यन् पिता यत्र दुहितु: सेकमृञ्जन् संशग्म्येन मनसा दधन् ( वै० ऋ० सं० ३।३१।११ )

इतीइयमृग् भ्रातृमत्यै कन्यायै दायं समर्थयते ।

तदर्थस्तु—शासद्वह्नि: प्रशास्ति प्रख्यापयति क: प्रशास्ति किं वा प्रशास्ति वोढा य उ वोढा स्त्रिया भवति स तस्यां या जायते दुहिता तस्या: पुत्रभावं प्रशास्ति संतानकर्मणोऽर्थाय । कथमेतद् गम्यत इत्याह—इतो यस्मात् नप्त्यं गात् नप्तारमुपागमदुपगच्छति चेतसा दौहित्रं पौत्रो ममायमित्येवमुपगच्छति । स चापुत्रस्य पुत्र: पौत्र: स्यात् । तस्माद्दुहिताऽपि पुत्र एव । यस्या: पुत्र: पौत्रो ममायमित्येव चेतसोपगम्यते । विद्वां ऋतस्य दीधितिं सपर्य्यन् विधानं सपर्य्ययन् पूजयन् यथैव पुत्रजन्मने प्रजननयज्ञो वितन्यते तथैव दुहितृजन्मनेऽपीत्यविशेषं जानन् अङ्गादङ्गात्संभवति "·······आत्मा वै पुत्र नामासि इत्यृक्श्लोकाभ्यामविशेषेण मिथुनानां दाय: प्रतीयते ।

अभ्रातृमती पित्रा दत्ता भर्त्रे पितृनेव पितृवंशमेवाभिमुखी एति सन्तानकर्मणे । तस्मादभातृका पैतृकं दायमर्हति । अत एव नाभ्रातृकामुपयच्छेत तोकं ह्यस्य तद्भवति इति अभ्रातृकाया उपयमननिषेध: । अभ्रातृमत्या: पुत्रमेव पुत्रिकाविधानेन कृताभिसन्धित्वात् पौत्रो ममायमित्यपुत्र: सन्मातामह उपगच्छति नेतरान्भ्रातृमतीपुत्रान् । अन्यथा सर्वे एव वोढारोऽपुत्रा: स्यु: । सर्व एव लोको द्व्यामुष्यायणो वा स्यात् । अत इदमुच्यते—

मन्त्रोत्तरार्धेन यत्र दुहितुः पिता यस्मिन्काले दुहितुरप्रत्तायाः प्राक्प्रदानात् रेतः सेकं रेतसः सेक्तारं जामातरं प्रार्जयति प्रसाधयति प्रकल्पयति उपावर्तयति तदा तस्मै तां दुहितरं ददत् विकरोतीति। संशग्म्येन मनसा दधत् वै संदग्धात्मानं यदत्रापत्यमुत्पत्स्यते तन्ममेति कथं पुनरभिसंदधाति। संगमेन मनसा विगतापुत्रत्वसंतापेन चेतसा नाहमपुत्र इयमेव पुत्रिका मम पुत्रः। "यो ह्यस्यामुत्पत्स्यते स पुत्रो मम भविष्यति" इत्येवं सुखेन मनसा संदधात्यात्मानम्। तस्यां पुत्रिकायां यो दौहित्र उत्पद्यते तमेव नप्ता ममायमित्युपगच्छति मातामहः। तस्मादङ्गादङ्गात्संभवसीति गौणं दुहितुः पुत्रत्वमुच्यते। यदि दुहिता पुत्रेणाविशिष्टैव स्यात्तदा दुहितेति विशेषसमाख्या न स्यात्। अस्ति च समाख्या तस्माद्विशिष्टतरः पुत्रो दुहितुः सकाशात् अविशेषेण पुत्राणां (मिथुनानाम्) दायो भवतीत्यपि अभ्रातृमतीपक्ष एव योज्यम्। अत एव स्पष्टं न जामये तान्वोऽरैक् इत्यस्यामृचि दुहितुर्दायानधिकार उक्तः।

पातिव्रत्य-पतिभक्त्यादिकं वेदादिशास्त्रेषु विहितमेव। ततो यूथविवाहस्य प्रसङ्ग एव नास्ति। यथैकस्मिन्यूपेऽनेका रशना वद्धयन्ते नैका रशना अनेकेषु यपेषु संबद्धयते तथैव अनेकाःस्त्रिय एकस्य पुरुषस्य संभवन्ति। नैका स्त्री अनेकैः पुरुषैः संबद्धयते इति वेदमन्त्रे प्रतिपादितमेव।

यदुक्तं-समाजविकासेन सार्द्धं लघुगोत्रविकासो जातः। परिचयाभावेऽपि छत्रे मधुमक्षिकातुल्यसम्बन्धेन विवाहयोग्यनारीषु गणगोत्रसदस्यानामधिकारः समासीत् तदपि न, सगोत्रविवाहस्य भारतीयशास्त्रेषु निषेधात्।

यूथविवाहकथाऽपि कपोलकल्पनैव, यूथविवाहस्य निष्प्रमाणत्वात्। आदित्यदैत्यवैनतेयकाद्रवेयादिनामभिस्तु स्त्रीशासनरूपा मातृसत्ता न सिद्धयति। यतः कश्यपस्य प्रजापतेरनेकाः भार्य्या आसन्। प्राजापत्यत्वेन समेषां समानत्वेऽप्यदितिदितिदनुकद्रूविनतादिभेदेन तत्संततीनां भेदव्यवहारोपपत्तेः। सर्वाश्चैताः कश्यपस्य प्रजापतेरेकस्यैव भार्य्या आसन्। तेन तासामन्यासां वा गणपत्नीत्वं न सिद्धयत्येव। आदित्यादीनां समूहरूपत्वेन तेषां युद्धं गणयुद्धम्। एकस्य प्रजापतेः पुत्रत्वेन तद्युद्धं गृहयुद्धमपि वक्तुं शक्यम्। व्यक्तिगतपरिवारसत्त्वेऽपि गणसत्ता न विरुद्धयते। अत एव वृष्ण्यन्धकादिषु पृथक्परि-

वारसत्त्वेऽपि गणसदस्यत्वाद् गणसंघटनमविच्छिन्नमेव। वेदानामनादित्वेन ततः प्राचीनस्य ग्रन्थस्याभावाद्वेदेनापुत्राणामत्राभाव एव, दुहितॄणां दायाधिकारोक्तेः पुत्रेषु गोत्रव्यवहारस्य स्वाभाविकः, पुत्रीषु विवाहेन गोत्रपरिवर्त्तनम्। यूथविवाहस्याप्रामाणिकत्वेन विवाहस्य व्यक्तिगतत्वेऽनापि व्यक्तिगतपरिवार-प्रथावत् संयुक्तपरिवारप्रथाप्यासीदेव। एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया इति मनूक्तेः।

दासा अन्ये च गणगोत्रे प्रविष्टा इत्यपि निर्मूलम्। कस्यचिच्छुनःशेपादे-रन्यगोत्रप्रवेशस्तु समर्थमहर्षिवरप्रभावादपवाद एव। न युद्धविकासेना-पूर्वं किमप्युत्पन्नम्। युद्धादिषु विजयार्थं सहयोगोऽपेक्षितो भवति। तत्र चान्तरङ्गाणां बहिरङ्गापेक्षाऽन्तरङ्गत्वेन सन्निहितत्वादेव सहयोगः संभाव्यते।

"परस्पर विरोधे तु वयं पञ्च शतञ्च ते।

परैः सह विरोधे तु वयं पञ्चोत्तरशतम्॥" इत्यादि न्यायस्य प्रसिद्धत्वात्।

एवं कार्य्यानुरोधेन विकीर्णा अपि संहन्यन्ते संहता अपि विकीर्य्यन्ते, आर्य्याणां संघेऽनार्य्याणामपि प्रवेशात्। सम्बन्धिनामसम्बन्धिभ्यो व्यवच्छेदात् प्रवरकल्पनमित्यपि निर्मूलम्। प्रवरानुमन्त्रणस्य मन्त्रसिद्धत्वेन तस्य वस्तुस्थितिमूलकत्वेन विरोधात्।

वेदादिशास्त्रप्रमाणकस्य धर्मस्यानादिसिद्धत्वेन तत्र च यथाधिकारं शूद्राणामपि प्रवेश आसीदेव। राज्यसंघटनेऽपि सुतरां तेषां सम्बन्धो युक्त एव।

प्राचीनकालेऽतिथये स्त्रीसमर्पणप्रथाप्यासीत्। यूथविवाहप्रथया तज्जन्म। मातृसत्तासमाप्त्या नारीपराजयः। नारीपदभ्रष्टा भूत्वा पुरुष वासनाया दासी पुत्रोत्पादनयन्त्ररूपा जाता।

दासतायुगे धनमुत्पादनादिकार्य्यं कारयित्वा दासा विक्रीयन्ते स्म। तथैव पुत्रोत्पादनाय समानीताया नार्या विक्रयोऽपि क्रियते स्म। पुत्राः क्षेत्रिणो वीजिनो वा इति विवादे—

"भर्त्तुः पुत्रं विजानन्ति श्रुतिद्वैधं तु कर्त्तरि।
आहुरुत्पादकं केचिदपरे क्षेत्रिणां विदुः॥"

(मनु० ९।३२)

सर्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता । ३५
ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति ।
क्षेत्रिकस्यैव तद्बीजं न वप्ता लभते फलम् ॥ '५४ ॥

( इति स्पष्टम् )

समूहवादे पितृत्यागानन्तरं सन्ततिर्मातुर्भवति । यथा युधिष्ठिरादयः । दासतायुगे तु पशूनामिव नारीणां क्रयविक्रयादिकं भवति स्म । भाटकेन वा दीयन्ते स्म ।

महाभारते गालवकथायामुद्योगपर्वणि गुरुदक्षिणार्थं गालवेन ययातेः साहाय्यं याचितम् । तेन च माधवी स्वकन्या दत्ता । गालवेन सा कन्या क्रमेण त्रिभ्यो राजभ्यो द्विशतैश्यामिकर्णाश्वैर्दत्ता । एकैकं पुत्रं जनयामास । तानश्वान् गुरवे विश्वामित्राय दत्त्वा द्विशताश्वार्थं वर्षाय सा कन्या च दत्ता । विश्वा मित्रोपि तस्यामेकं पुत्रमुत्पादितवान् । पश्चात्सा कन्या पित्रे ययातये प्रत्यर्पिता । तेनैव च स्वयम्बरायोक्ता सती सा पुरुषस्य दासीभावादुद्विग्ना वनं वव्रे । तत एव दासीत्वान्मुक्ता । स्वामिनो दासान् पुत्रान् दुहित्रींश्च विक्रेतुं प्राणानाहर्त्तुंञ्च प्रभवन्ति स्म । साम्ययुगे नारीजीवनदायिनी गणस्यमातासीत् । तद्वधो जघन्यापराधकोटौ परिगण्यते स्म । परमुत्तरयुगे तस्यास्तन्माहात्म्यं लुण्ठितम् ।

'पितुराज्ञा परो धर्मः स्वधर्मो मातृरक्षणम् ।
अस्वतन्त्रं च पुत्रत्वं किन्तु मां नानुपीडयेत् ॥ ११ ॥
स्त्रियं हत्वा मातरं च को हि जातु सुखी भवेत् ।
पितरं चाप्यवज्ञाय कः प्रतिष्ठामवाप्नुयात् ॥ १२ ॥'

( शा० प० २६६ )

पितुराज्ञापालानमन्योपदिष्टो धर्मः मातृरक्षणं स्वाभाविको धर्मः । दासयुगे च पुत्रस्वातन्त्र्यं नास्ति । मातुर्वधेन पारम्पर्य्यप्राप्तो मातृघातः । परं पितृसत्तायुगे पितुराज्ञोल्लङ्घने प्रतिष्ठानाशः । स्वाधिकाररक्षणार्थं नारीभिः संघर्षोऽपि कृतः । परं स्वामिभिनिर्दयतया तन्मर्दितम् । कथात्रयेणैतज्ज्ञायते ।

सुदर्शनस्यानुपस्थितौ तदाश्रमे कश्चिद् ब्राह्मणोऽतिथिरागतः । तत्पत्न्यौघवत्या स सम्यक् सत्कृतः । गणगोत्रपरम्परानुसारेण सात्मानमपि तस्मै

समर्पितवती। प्रत्यागत्य सुदर्शनः पत्नीव्यवहारेणातीव संतुष्टः। यतस्तयातिथ्य-धर्मः सम्यक्पालितः। घटनेयं तस्मिन्युगे वृत्ता यदा दूराद् दूरेषु प्रदेशेषु गणानां प्रचारः प्रसृतः साम्यसङ्घभङ्गः प्रारब्धः। यूथसंघविवाहं विरुणद्धि स्म। नारी युग्मरूपेण परिवारेषु निवसन्ती स्वतन्त्रकुटुम्बनिर्माणपरायणासीत्। तत एव सुदर्शनस्य शङ्कासीत्। तत्पत्नी सम्यगातिथ्यं करिष्यति न वा। तत एव तद्वृत्तान्तश्रवणेन स मुमुदे।

तद्युगपरिवृत्तौ गौतमस्याश्रमेऽतिथिरूपेणेन्द्र आगतः। तेन च तत्पत्नी भुक्ता। गौतम आगत्य क्रुद्धः स्वपुत्राय चिरकारिणे तां हन्तुमादिदेश। प्राचीनपरम्पराप्राप्तो धर्मो मात्रा पालितः। मातृवधे महापातकम्। परन्तु नव्ययुगानुरोधेन वर्गशास्त्ररीत्या पित्राज्ञापालनं तस्य धर्म इत्यादि विचारेषु निमग्न आसीत्। गौतमः प्रत्यावृत्तः सन् क्रोधस्य शान्तत्वात् पुत्रव्यवहारेण तुतोष। तदानीं नव्यधर्मस्यादृढत्वेनात्र मातृ-पुत्रयोर्विजयः।

तृतीयस्यां कथायां रेणुकया प्रेम्णा चित्ररथगन्धर्वोऽवलोकितस्तेनैव तत्पतिना जमदग्निना तद्वधाय नियुक्तः परशुरामस्तां जघान। अत्र युगे नार्य्याः सम्पूर्णे जीवने पितृसत्तायाः पूर्णाधिकारः। तस्या व्यक्तित्वं स्वातन्त्र्यम् निर्दयतया—तत्स्वाधीनता तिरस्कृता, न केवलया पुरुषनिष्ठ-हिंसावृत्त्या किन्तु शास्त्रतद्धर्मसहकृतया तया तादृश्या नार्य्या कुटुम्ब-निर्माणम्। वैयक्तिकसम्पत्त्युदयेन शूद्रदासैः सार्द्धं नारीभिरपि स्व-स्वातन्त्र्यं नाशितम्। दासानां व्यक्तिगतदासत्वप्रथासमाप्तौ भौमिका-स्तेषां स्वामिनः। भौमिकप्रथासमाप्तौ पूँजीवादिनां वैयक्तिकसम्पत्त्युदये तेषां स्वामित्वं स्थापितम्।

तथैव नार्य्या अपि दशा परिवर्तिता। सापि पूर्वं दासी ततः किंकरी ततोऽकिञ्चना सर्वहारा सम्पन्ना। तेन नारी स्वातन्त्र्यप्रश्नोनाध्यात्मिक आचारशास्त्रीयो वा किन्तु वर्गशासनस्यायं प्रश्नः। तेन नारी स्वातन्त्र्याय वैयक्तिकपारिवारिकश्रमसीमानमतिक्रम्य सामाजिकोत्पादनश्रमप्रयोगो-ऽनिवार्य्यः। तमन्तरा न तत्स्वान्त्र्यं संभवि। अभिमन्युयुगे महत्या संख्ययाऽधु-निकेषु महोद्योगेषु नारीणां योगः। महायन्त्रद्वारा पारिवारिककठोर-

श्रमाणां सार्वजनिकोद्योगौपयिककार्य्यरूपेण परिवर्त्तनं जायते। विशालया मात्रयोद्योगानां सामाजिकत्वापादनवर्गध्वंसाद्युपायैरेव तासामुद्धारः।

तदेतत्सर्वमपि शास्त्रतात्पर्य्याज्ञानविजृम्भितम्।

यदपि मातृसत्ता समाप्त्या नारी पदभ्रष्टा सती पुरुषवासनादासी जातेति तदपि निरर्थकम्, 'साम्राज्ञी श्वसुरकुलमेति' इत्यादिभिर्मन्त्रैः तस्याः संमानातिशयदर्शनात्।

दासतायुगे दासविक्रयवन्नारी विक्रयोऽपि प्रचलित इति कथनमपि निर्मूलं निष्प्रमाणत्वात्। यत्र निश्चितशुल्कग्रहणपूर्वकं कन्यादानं भवति तत्र तु विहितत्वादेव न दोषः।

क्षेत्रिवीजिविवादेनापि यूथविवाहो न सिद्ध्यति। रागप्राप्तबहुसम्बन्धेऽपि क्षेत्रिवीजिविवादसंभवात्। सर्वदैव शास्त्रीयप्रवृत्यपेक्षया कामजप्रवृत्तेः प्राबल्यं भवति। स्वाभाविककामकर्मप्रवृत्तिवारणायैव शास्त्रीयप्रवृत्तेरिष्टत्वात्। युधिष्ठिरप्रभृतीनामुत्पत्तेर्दिव्यत्वेनानुदाहरणीयत्वात्। धर्मपवनेन्द्राश्विसम्बन्धस्यासाधारणत्वात्तस्याप्रामाणिकत्वे युधिष्ठिरादिकथानामप्यप्रामाणिकत्वापत्तेः। नचार्धजरतीयं युक्तम्।

गालबकथापि नोदाहरणमर्हति। द्रौपद्या इव माधव्या अपि दिव्यत्वेन पूर्वपूर्वसंसर्गानन्तरमक्षतद्योनित्वकन्यात्वापत्याऽदोषत्वात्। नहि सर्वस्त्रीसाधारणी सा अनितरसाधारणी सा लोकोत्तर विशिष्टा शिविप्रतर्दनादीन् विश्वेतिहासप्रसिद्धान् पुत्रानुत्पादितवती–पश्चाद्विषयेभ्यो विरम्यारण्यं वृतवती। वैराग्यविज्ञानादिकमेव जीवनफलम्। देवहूत्यादिभिरप्यन्ते तदेवाश्रितम्। पत्यौ गुरौ च दास्यम् कल्याणकरमेव। विषयदास्यमेवानिष्टकरं, तन्निवृत्तये च तद्दास्यम् अङ्गीक्रियते। श्रीहरिदास्यस्याश्रयेण विश्वदास्यनिवृत्तिवत्।

परायत्तो विश्वे यावत्स्वरूपसाक्षात्कारं दास्यमेव। सति दास्ये दासस्य सर्वमपि स्वाम्यायत्तमेव। नारी सर्वदैव माता सती जीवनदायिनी भवति। पत्नी अपि भवति। तत्र नारीणामेकपतिनिष्ठत्वाभावात्। मातृवधस्तु शास्त्रीयदृष्ट्याऽस्त्येव जघन्यापराधः। यत्र शास्त्रतदुक्तधर्मसंमानं भवति। तत्रैव

मातृमाहात्म्यं परां कोटिमाटीकते। यत्र मातुरपि पत्नीत्वं संभवति तत्र कियत्तन्माहात्म्यम्।

एवमेव स्वाधिकाररक्षार्थं नारीभिः संघर्षोऽपि कृतः स्वामिभिर्निर्दयतया तन्मर्दितमित्यपि निराधारम्।

सुदर्शनस्य पत्न्या पतिव्रतयौघवत्या पत्युरातिथ्यधर्मपालनप्राधान्यस्य प्रीत्यै तथा व्यवहारेण धर्म एव पालितः, न तस्याः भोगादिबुद्धिरासीत्। ओघवत्या व्यवहारेणातिथ्यसत्कारः स्तुतः। तत्स्तुतावेवाख्यानस्य तात्पर्य्यान्न तावतापि सर्वसाधारण्येनातिथ्यसत्कारे स्त्रीसमर्पणम् विहितं, न वा प्रचलितम्।

गौतमेन्द्राख्यानेन तु पातिव्रत्यभङ्गदूषणनिन्दार्थवादेन पातिव्रत्यं स्तूयते। यथा विधिमन्तरा 'न हिंस्यात् सर्वा भूतानी'ति निषेधानुरोधेन पिपीलिकावधोऽपि पातकाय भवति। अग्नीषोमीयं 'पशुमालभेत' इत्यादिशास्त्रविधानेन तु बहुपशुवधोऽपि पुण्यायैव भवति। विशिष्टोपासनासु विशिष्टेष्वातिथ्यादिषु तथा व्यवहारस्यादोषत्वेऽपि तदन्यत्र प्रभूतदोषस्य जागरुकत्वात्। गोतमपत्न्याः सदोषत्वेऽपि स्त्रियः सर्वथा आवध्या इत्यस्यार्थस्य बोधनाय चिरकारित्व-विचार्य्यकारित्वप्रशंसनाय च गोतमाख्यायिका।

महाभारते शान्तिपर्वणि मोक्षधर्मप्रसङ्गे २६६ अध्याये "कथं कार्य्यं परीक्षेत शीघ्रं वाथचिरेण वा" इति युधिष्ठिरप्रश्नस्य समाधानप्रसङ्गे भीष्मपितामहेन चिरकारिदृष्टान्त उपन्यस्तः। गौतमपुत्रेण चिरकारिणा मातृवधायाज्ञप्तेन यच्चिन्तितम् तदित्थम्—

"पितुराज्ञां कथं कुर्य्यां, न हन्यां मातरं कथम्।
कथं धर्मच्छले नास्मिन् मिमज्जेयमसाधुवत्॥ १०॥
पितुराज्ञा परो धर्मः स्वधर्मो मातृरक्षणम्।
अस्वतन्त्रञ्च पुत्रत्वं किन्नु मां नानुपीडयेत्॥ ११॥'

यदुक्तमत्र "पितुराज्ञा परो धर्मः" पश्चात् पितृसत्तायामन्यैः कल्पितो धर्मः "स्वधर्मो मातृरक्षणम्" इति मातृसत्तायां स्वाभाविको धर्म इति तन्न, 'परो धर्मः'

इत्यत्र परशब्दस्योत्कृष्टपरत्वात्। स्वधर्मस्यैवोत्कृष्टधर्मस्यापि परमादरणीयत्वात्। पित्राज्ञायाः अन्यधर्मत्वे स्वधर्मापेक्षया त्याज्यत्वमेवेति कुतः धर्मसंकटः। यत्रापरित्याज्यानां विरुद्धानां धर्माणां समवायस्तत्रैव धर्मसंकटो भवति। किं कार्य्यं, किं त्याज्यम्। "स्वधर्मे निधनं श्रेयः परधर्मो भयावहः" इत्यादौ परधर्मशब्देन नान्यधर्मग्रहणम्, तत्रापि धर्मस्य नारोपितत्वं सर्वत्र-चोदनालक्षणस्यैव धर्मस्यादरणीयत्वम्।

'स्त्रियं हत्वा मातरं च को हि जातु सुखी भवेत्।
पितरं चाप्यवज्ञाय कः प्रतिष्ठामवाप्नुयात्॥ १२॥
अनवज्ञा पितुर्युक्ता धारणं मातृरक्षणम्।
युक्तक्षमावुभावेतौ नातिवर्त्तेत मां कथम्?॥ १३॥
एवं स कौशिकी तीरे वाले राजानमीक्षतीम्।
विमृश्य चिरकालं हि चिन्तान्तं नाभ्यपद्यते॥
एतस्मिन्नन्तरे शक्रो ब्राह्मणं रूपमास्थितः।
गायन् गाथामुपायातः पितुस्तस्याश्रमान्तिके
अनृता हि स्त्रियः सर्वाः सूत्रकारो यदब्रवीत्
अतस्ताभ्यः फलं ग्राह्यं न स्याद्दोषेक्षणः क्वचित्।
इति श्रुत्वा तमानर्च मेधातिथिरुदारधीः।

(स्कन्दपुराण माहेश्वरखण्ड १·८।९–१०।११)

रेणुकाख्यानस्य तु पित्राज्ञापालनमाहात्म्यवर्णन एव तात्पर्य्यम्, पितुराज्ञया मातृवधरूपे पातकेऽपि परशुरामस्य निर्दोषत्ववर्णनात्। मनसाऽपि भर्त्तुरतीचारे वधार्हता नार्य्या इत्यस्य चार्थस्य तेन बोधः। शास्त्रसंस्कारेणैव मनुष्यत्वं व्यज्यते। प्राकृतानां शास्त्रसंस्कारविधुराणां तु पशुप्रायत्वेन विधि-निषेधातीत्वमेव। वैयक्तिकसम्पत्त्युदयेन स्त्र्यादिपारतन्त्र्येण च न कोऽपि सम्बन्धः, कर्मणां वैयक्तिकत्वेन तत्फलभूतायाः सम्पत्तेः वैयक्तिकत्वस्वाभाव्यात्। स्त्रीणां शूद्राणाञ्च पुत्राणामनुजानाञ्च धर्ममूलकं पारतन्त्र्यम्। शिष्या गुरु-पराधीना एव यथा पुरुषार्थभागिनो भवन्ति तथैव शूद्रा द्विजातिशुश्रूषया, स्त्रियः पातिव्रत्येन, पुत्रा अनुजाश्च पितृज्येष्ठानुवर्त्तित्वेनोन्नतिभागिनो भवन्ति।

भौमिकानां सामन्तानां राज्ञाञ्च स्वामित्वं स्वीयैर्लौकिकैरलौकिकैश्च कर्मभिरेव, कर्मणां तारतम्यस्यापि प्रसिद्धत्वात् ।

प्राधान्यमप्राधान्यशेषित्वशेषत्वमङ्गित्वमङ्गत्वञ्च सर्वत्र लोके दृश्यते। तदाश्रयेणैव दास्यस्वामित्वादिकल्पनम् । समाजवादे साम्यवादे चापि तादृक्-प्राधान्यभेदस्य स्पष्टं दर्शनं भवति। यथा नारी पत्नीरूपेण दासी सत्यपि मातृरूपेण पितुरपि बहुगुणा पूज्या भवति। यथा श्वसुरकुले सम्राज्ञी सत्यपि पतिभक्त्या किंकरी सम्पद्यते । नार्य्याः पत्युर्हृदयेश्वरीत्वेन तत्-सर्वस्वस्वामिनी। सा पृथक्सम्पत्तिं नार्हत्येव तथापि स्त्रीधनरूपेण सम्पत्ति-भाक्त्वमपि। यत्रैव व्यवहारो भविष्यति तत्रैवाङ्गाङ्गिभावापेक्षा। यत्राङ्गाङ्गी-भावस्तत्रैव प्रकारान्तरेण स्वामिसेवकभावोऽनिवार्य्य एव । नहि सम्पत्ति-मूलकं स्वातन्त्र्यं, वैयक्तिकसम्पत्तिमतामपि पारतन्त्र्यदर्शनात् । सम्पत्ति-हीनानामपि बलवतां क्षत्रियाणां स्वातन्त्र्यदर्शनादकिञ्चनानाञ्च स्वातन्त्र्य-दर्शनात् ।

वस्तुतस्तु वासनावन्तः पराधीनास्तद्धीनाश्च स्वतन्त्रा एव। आधुनिकेषु महोद्योगेषु धनार्जनाय पुंसां सम्मत्यैव नारीणां प्रवृत्तिः। महोद्योगानां सामाजिकत्वेऽपि न स्वातन्त्र्यलाभः। तदानीं जडयन्त्राणां शासकानां नेतॄणां वा प्राधान्यं भविष्यति तथात्वेऽपि तासां तेषाञ्चाङ्गत्वेन पारतन्त्र्यमेव भविष्यति।

किञ्च न केवलं तथाकथितः प्राचीनसाम्यसङ्घः किन्त्वाधुनिका अपि सङ्घा कामक्रोधादिप्रभावाद् भज्यन्ते। सद्भावनासहिष्णुत्वादिभिः विकीर्णा अपि संहत्यन्ते तेषां दृष्ट्या न कश्चनापि विरोधोऽसंधेयः। अहिंसादिविशिष्ट-साधनप्रभावात्-मूषकमार्जाराहिनकुलादिविरोधस्यापि प्रशमयितुं शक्यत्वा-न्नहि धर्म उत्पादनपद्धत्यायत्तः येन तद्भङ्गे भज्येत। धर्मस्यापौरुषेय-वेदमूलकत्वात् । अत एवोत्पादनपद्धतीनां परिवर्त्तनेऽपि नाग्निहोत्रादिधर्माणां परिवर्त्तनं दृश्यते । यन्त्रादिनिर्माणकौशलेनानायासेन प्रभूततरसुन्दरवस्तू-त्पादनं संभवति। तद्विस्तारेण प्रभूततरधनलाभोऽपि संभवति।

यद्यपि च भूतानां भौतिकानां तदीयघटनानाञ्च मनस्सु बुद्धिषु प्रभावः प्रतिफलति। विचाराश्च धारणाश्च परिवर्त्तन्ते, भङ्गादिसेवनजनित-प्रभावस्य प्रत्यक्षदर्शनात् ।

दरिद्रस्य क्षुत्क्षामस्य विविधसुखसाधनविहीनस्यान्यादृशा विचाराः, विविधसाधनसम्पन्नस्य हृष्टपुष्टस्यान्यादृशा एवोपलभ्यन्ते तथापि प्रमाणजनितासु प्रमावृत्तिषु क्वापि मनागपि भेदो न भासते। चक्षुषा निर्दोषेणावहितस्य समानमेव रूपदर्शनम्, घ्राणेन गन्धावगमः, श्रोत्रेण शब्दावगमः, नात्र दारिद्र्यादारिद्र्यपरिस्थितिभेदस्य प्रभावः प्रभवति।

धार्मिका आध्यात्मिकाश्च सिद्धान्ताः प्रमाणाश्रिता न वाह्यपरिस्थितिभावनादिसमाश्रिताः। तस्मात्प्राचीननवीनोत्पादनानां भेदेनौत्पादनोत्पादनीयवस्तुभेदे तज्जनितसम्पत्तिभूयस्त्वादिभेदेऽपि न धार्मिकाध्यात्मिकादिसिद्धान्तभेदः संभवति। स्वतन्त्रतां समानताञ्चाश्रित्य न काश्चन सम्पत्तयो विघटनहेतवो भवन्ति। आधुनिकतमसाधनाश्रितसम्पत्तिषु समानता स्वतन्त्रताभावस्य साम्यवादिभिरिष्टत्वात्। संघटनहेतुभिः सद्गुणैः संहतिर्वर्धते। विघटनहेतुभिर्दुर्गुणैः लघु वा बृहद्वा संघटनं विशीर्य्यते। 'एकोऽहं बहुस्यामि'ति ब्रह्मकामनयैकस्य ब्रह्मणो निखिलविश्वकारणस्य विविधकार्य्याकारपरिणत्या वहुभवनं जायते।

यत्र तु मते आदिमसाम्यसङ्घ एव ब्रह्म, तत्र कथं तस्य बहुभवनात्मकविघटनकामना संभवति। भेदकं तदनेकं तु विघटनेन संभवति तथापि कारणापेक्षया कार्य्यस्य लघुतैव भवति, न विशालता। कारणस्यापरिच्छिन्नत्वात्कार्य्याणाञ्च परिच्छिन्नत्वात्।

यदा च गणभेदो गणनाश एव। तदा गणनाशाय गण एव कथं कामयेत? तस्मान्मिथ्यैव प्राचीनसाम्यसङ्घस्य ब्रह्मत्वकल्पना। एवमेव सामूहिकोत्पादनवितरणादेर्यज्ञत्वकल्पनाऽपि निराधारैव। यज्ञस्वरूपस्य मन्त्रब्राह्मणसूत्रपद्धत्यादिभिरन्यथानिरूपितत्वात्। एक अनेकैः संबद्धयते इति लोके प्रसिद्धमेव। एकं कारणमनेकैः कार्य्यैः सम्बद्धयते। एको गुरुरनेकैः शिष्यैः सेव्यते। एकं केन्द्रशासनमनेकैः राज्यशासनैः संबद्धयते।

आदिमसाम्यसंघः कृते स्थानात्स्थानान्तरं भ्राम्यति तस्यैव त्रेतायां गणगोत्ररूपेण विकासः। तत उत्पादनैः संख्यावृद्धया चाग्निकेन्द्रेण यज्ञात्मकैः सामूहिकैः परिश्रमैरुपभोगैश्च साम्यसङ्घसदस्य व्यवस्थानमित्यादिकमपि कल्पनामात्रमेव, निष्प्रमाणत्वात्।

किञ्चाखण्डस्य साम्यसङ्घस्य खण्डशस्ताद्दग्विभाजनं न दूषणम् किन्तु-भूषणमेव । यथा वीजस्य विनाशेनैवांकुरवृक्षाद्युत्पत्तिस्तथैव तदर्थं तस्या-निवार्य्यत्वात् । जगद्वैचित्र्यं त्विष्टमेव । संसारवैचित्र्यस्य कर्मवैचित्र्यमूलकस्य सर्वैरिष्यमाणत्वात् । विचित्रे संसारे विचित्राणि वस्तूनि देशकालभेदभाञ्जि भवन्ति । यत्र यन्न भवति तदन्यत आनीयते । यद्यत्राधिक्येन भवति तत्ततोऽन्यत्र प्रेष्यते । तेन विनिमयप्रथा स्वभावत एव सम्पद्यते । उपभोगार्थोत्पादने विनि-मयार्थोत्पादने च न प्रयत्नभेदो भवति । एकेनैव प्रयत्नेनोभयसम्पत्तेः । स्वल्पोत्पादने भोगायोपयुज्यते तदाधिक्ये तु विनिमयायापि । वस्त्वन्तरस्य मुद्रायाश्च प्रापणाय विनिमयो भवति, तयोरुभयोरपि भोगपर्य्यवसानमेव भवति । कुङ्कुमकस्तूरिका सितावृतपट्टमृदूर्णावस्त्रादिप्राप्तये वस्तूनि मुद्राश्चापेक्ष्यन्ते, नहि मुद्राणां स्वातन्त्र्येण पुरुषार्थता ।

वर्णविभागानुरोधेन तु वैश्यस्यैव प्राधान्येन धनाधिपतित्वम् । ब्राह्मणस्य बुद्धिप्राधान्ये विद्यापतित्वं, क्षत्रियस्य तु शौर्य्यवीर्य्यशालित्वेन वलाधिपतित्व-मेव । कदाचित्क्वचित्तद्वैपरीत्यं तु नियमोल्लङ्घनमूलकमेव । सृष्टिविकासकाले भेदो वैविध्यमुपगच्छति । प्रलयकाले कार्य्याणां कारणभेदः सञ्जायते । भेदवृद्धौ विरोधबृद्धिरपि स्वाभाविक्येव । बृहदारण्यकादौ स्पष्टमुक्तम्—पूर्वं ब्रह्मै-वासीत्तच्छ्रेयोऽभिवृद्ध्यै क्षत्रमसृजत । क्रमेणैवं विटच्छूद्रयोर्निष्पत्तिरुक्ता । वर्णानामुत्पत्तयस्तात्कालिकीभिर्घटनाभिस्तात्कालिकैश्च हेतुभिरेव संपद्यते । तथापि ताः प्राणिनां प्राक्तनकर्महेतुकाश्च भवन्ति । सहवासिनां कुटुम्बिना-मन्यादृशः स्वार्थो भवति, पृथक्स्थितानामन्यादृशः । विधानद्वयस्यापि दर्शनात्, 'एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया' इति मनुस्मृतेः ।

यद्यपि गणवर्णसम्पत्योः संघर्षः संभाव्यते तथापि समष्ट्यविरोधेन व्यष्टिहितमेवादरणीयम्, न तद्विरोधेनेति नियमे सति विरोधो नानिवार्य्यः । शक्तिः शस्त्राणि युद्धकौशलञ्च, वार्त्ता विद्या नैपुण्यञ्च गणानां वर्णानाञ्चापेक्षित-मेव । उत्पादनस्य पर्य्यवसानमपि यज्ञे भोगे च भवति । सञ्चयस्तु केवलो न पुरुषार्थः । निगृहीतानां श्रमिकरूपेण परिणमनं क्वचित्संभावयितुं शक्यम् ।

भारते तु धर्मनियन्त्रितेऽध्यात्मवादमाधृत्य प्रवर्त्तमाने शासने न दण्डार्हाणां मुक्तिर्न वाऽदण्ड्यानां दण्डनं संभवति । सर्वत्रैवाङ्गाङ्गिभावस्य सत्त्वेन तन्मूलकदासस्वामिभावोऽप्यनिवार्य्य एव ।

गणेषु पूर्वमन्यगणसदस्यानां प्रवेशो न भवति स्म । रक्तसम्बन्धिनामेव तत्र सत्त्वात् । पश्चात् शूद्राणामन्यगणसदस्यानाञ्च प्रवेशः सम्पन्न इत्यप्य-प्रामाणिकमेव । गोत्रेषु वर्णेषु यद्यप्यन्यप्रवेशः कदापि नानुमतः । विवाहे-कन्यानां, दत्तकादिविधाने च पुत्राणां गोत्रपरिवर्त्तनमपवाद एव । साधारणानां नियमानां यद्यपि परिस्थितिभेदानुरोधेन परिवर्त्तनं संभवति तथापि शास्त्रैकगम्यानां नियमानां न परिवर्त्तनं संभवति । दायविवाहादिव्यवस्थाश्च शास्त्रीया एवेति न तत्र परिवर्त्तनं संभवति । राष्ट्रसंघटने सर्वप्रवेशस्तु सर्वविदित एव । विनिमयो वैयक्तिकसम्पत्तिः सामूहिकता वा विप्रकर्षेण व्यावहारिकनियमानां हेतुत्वं प्रतिपद्यन्ते न धार्मिकनियमानाम् । व्यक्तिगत-सम्पत्तिः परिवारप्रथा च प्राचीनैव । तत एवाग्निहोत्रादिकर्मकलापः सर्वदा प्रातिस्विक एवासीत् ।

सामूहिकयागस्तु सत्रात्मकोऽनन्तरभाव्येव । सत्राणां सोमप्रकृति-कत्वात् । सर्वथाऽपि महान्तोऽपि यज्ञा वैयक्तिका एवासन् । यद्यपि ते विविधर्त्विगादिसम्पाद्या भवन्ति तथापि दक्षिणाक्रीतत्वात् यजमानार्थमेव कर्म निवर्त्तयन्ति ते ।

यज्ञा नित्या नैमित्तिकाः काम्याश्च भवन्ति । तेनकामनापूर्त्यर्थमपि तेषामनुष्ठानमिष्यत एव । अग्नेः परितः श्रमार्थं भोजनार्थञ्च गणसदस्याना-मेकत्रीकरणन्त्वाप्रामाणिकमेव । ऋत्विजां तत्सहकारिणां केषाञ्चिदेव तत्र प्रवेशनियमात् । सत्रेऽपि नियतसंख्याका यजमानाः सत्रे संनिविशन्ते । देवातिथिभिक्षुकेभ्यो भागदानन्तु सार्वदिकमेव, न त्वाधुनिकम् । न तत्तथाकथितमरणासन्नस्य साम्यसङ्घस्य प्रतिनिधित्वेनानुष्ठीयते ।

एवमेव पत्नीनां पतिभिर्मातृभिश्च पुत्राणां विरोध इत्यादिकन्तु वर्गवादभूतावेशप्रलाप एव । गृह्यसूत्राणि न वैदिकसूक्तस्थानीयानि-श्रौतसूत्रैः श्रौतकर्मसूचनस्येव, गृह्यसूत्रैः स्मार्त्तकर्मसूचकत्वात् ।

त्रेतायां संहता वेदा इति महाभारतवचनन्तु द्वापरकलिकालयोरायुषः क्षयेण शक्तिह्रासेन वेदतत्कर्मह्रासबोधनपरम् । तच्च वर्गवादि-सिद्धान्तविरुद्धमेव । तेषां रीत्या प्राचीनसाम्यसङ्घस्याविकसित-रूपत्वमेव । प्रतिषेधप्रतिषेधस्य प्रथमापेक्षयाधिकोत्कर्षहेतुत्वाभ्युपगमात् । यथा यवबीजप्रतिषेधोऽङ्कुरस्तत्प्रतिषेधस्तद्वल्लरी निर्वृत्तयवराशिः स्वरूपेण संख्या चाधिक्यमुपयाति तद्वत् । गणहितविरोधे व्यक्तिहितप्राधान्य-मविवेकिनामेव भवति । विवेकिनां तु समष्टिहिताविरोधेनैव व्यष्टिहित-स्यादरणीयत्वात् । समष्टिव्यवहारे चयनप्राधान्यं व्यष्टिव्यवहारे तु पित्रादिपारम्पर्यं युज्यत एव । 'पिण्डं दत्वा धनं हरेदि'त्यादि न्यायस्य तत्र जागरुकत्वात् ।

परिवर्तिनि संसारे परिवर्त्तनस्यावश्यंभावित्वात् शिष्टाः शास्त्रीयैर्नि-यमैः परिवर्त्तनानि नियमयन्ति । अशिष्टास्तु प्रवाहपतिता इव परिवर्त्तन-मनुवर्त्तन्ते । ऐश्वर्य्यानैश्वर्याणि धर्माधर्मलक्षणकर्महेतुकानि । तेन भूमि-सम्पत्तियन्त्रादिमन्तः नैसर्गिकरीत्या सौवर्णरौप्यादिमुद्रादिभिः श्रम-मर्जयन्ति । क्रीताः श्रमिकाः तदर्थं वस्तून्युत्पादयन्ति । श्रमिका वेतनं गृह्णन्ति । सहकारिणस्तु मूलभागानुसारेण लाभांशं लभन्ते । पुण्या-त्मानोऽल्पीयांसो भवन्ति । तत एव धनाद्यैश्वर्य्यशालिनोऽल्पीयांसः । श्रमिकाः श्रमेण जीविकामुपार्जयन्ति । तदन्ये पशवः पक्षिणः कर्मानुसारिजन्मानो वहुपरिश्रम्यापि तृणधान्यादिकमेव प्राप्नुवन्ति नान्नम् । तेष्वपि केचित्पुण्य-कर्माणः राजनिर्विशेषं सुखभोगमुपलभन्ते । कर्ममूलकमेव केषाञ्चित्कैङ्कर्य्यं, केषाञ्चित्स्वामित्वम् । प्रमादान्यायादिजनितो व्यत्यासोऽपि क्वचिद्भवत्येव । वर्णानुसारेण तु शूद्रा शिल्पाद्यधिकारिणो वैश्यास्तु धनाधिकारिण विद्याः वलार्जनप्राधान्यं ब्रह्मक्षत्रयोः कदाचित्पशुपालनप्राधान्यं कदाचिच्च कृषि-प्राधान्यमिति तु नासंभावितम् ।

कृष्यर्थमरण्यच्छेदनलोहद्रावणकुठारादिनिर्मादिकं प्रचलितम् । परमेतत्सर्वमनादि संसारेऽनेकवारमाविर्भवति तिरोदधाति च । अनादिसिद्ध-वेदव्यवहारेषु तु शस्त्रभूषणरथनौकादिप्रयोगदर्शनात् । लोहद्रावणादि कलाविज्ञानं नाधुनिकम् ।

सृष्टिविकासक्रमे ब्रह्मक्षत्रविट्शूद्रादिविभागा युक्ता एव । हस्त-साध्यगृहोद्योगकृषिकर्मभ्यो विभक्ता महोद्योगा लघूद्योगेभ्यो विभज्यन्ते। योद्धारः कर्षकेभ्यो विभज्यन्त इति स्वाभाविकम् । साजात्यवैजात्याभ्यां तद्विभागस्य व्यवहारसौकर्य्यार्थमपेक्षितत्वात् । ब्रह्मक्षत्राभ्यां विट्शूद्राणां क्षेत्राण्यपहृतानीति तु धर्मविरुद्धमेव । कस्याञ्चिदपि शासनव्यवस्थायां तन्न क्षम्यते। अतः वेदप्रामाण्याश्रयेण न तत्साधयितुं शक्यम्। काचित्क-माकस्मिकं तद्भवेत्तदा तन्न वार्य्यते । तस्य वेदैकगम्यत्वाभावात्साम्यवाद-वर्गवादसाधारणत्वाच्च ।

गणसंघस्य सैनिका गणसङ्घशासकाः सम्पन्ना इत्यपि नासंभवं, क्वचिदद्यापि राष्ट्रसैनिका राष्ट्रशासकाः संपद्यन्त एव। परं वेदवचनेभ्यस्तु तत्सिद्धिर्न भवति, तथार्थेऽक्षराननुगमात् ।

यथा ग्रामनगरमण्डलराज्यानां सङ्कलनयाऽद्यत्वे राष्ट्रनिर्माणं भवति तथैव जनसंख्यावृद्ध्या समस्तगणानामेकसूत्रतयैकीकरणेन राष्ट्रनिर्माणम् । ततः युद्धसञ्चालनार्थं राज्यनिर्माणमपि सङ्गतमेव । परं तन्न केवलं युद्धसञ्चालनार्थं, किन्तु भीष्मोक्तरीत्या शासनेन दुष्टनिग्रहशिष्टपालनार्थमेव राज्यव्यवस्थायाः प्रामाणिकत्वात्। एञ्जेल्सोक्तेस्तु कल्पनाप्रसूतत्वेनाप्रामा-णिकत्वात् । जनतन्त्रशासनानि यत्र भवन्ति—तत्रैव जनसभा लोकसभा-दिनाम्न्यो व्यवस्थापिकाः संस्थाः प्रादुर्भवन्ति । राजतन्त्रे तु सभा पर्षदादयो राज्यसञ्चालनार्थं धर्मन्यायादिनिर्णयार्थं राज्ञोऽङ्गभूता एव भवन्ति स्म ।

सैनिकलोकतन्त्रादिनामानि तद्व्यवस्थाश्च वैदिकव्यवस्थापेक्षयाधुनि-कान्येव। राजतन्त्रव्यवस्थाया एव वेदप्रमाणसिद्धत्वात्। सेनायास्तु सर्वत्रैव राज्याङ्गेषु प्रामुख्यं भवति किमुत यत्र युद्धं सर्वदैवानिवार्य्यम् । धनप्राप्त्यर्थं लोभादिभिर्युद्धप्रवृत्तिरपि तत्रैव संभाव्यते, यत्र धार्मिकाध्यात्मिकजागरणं न भवेत्। भारते तु सृष्ट्यारम्भकालादेव पारमैश्वर्य्यज्ञानविज्ञानप्राकट्यमासीत्। तत्र लोभादिमूलकं युद्धं क्वाचित्कमेव। अवश्यं क्षत्रियाणां युद्धेन धनाहरणं जीविकासीत् । तेषां कृतेऽन्यधनापेक्षया शौर्य्यवीर्य्याहृतधनस्य महत्त्वं भवति।

परन्तु तत्र युद्धपदेन वैधयुद्धस्यैव संग्रहो न्याय्यः, नावैधयुद्धस्य। वैध-युद्धं तु राष्ट्रराष्ट्रीयसम्मानसमृद्धिरक्षणार्थं राज्याङ्गसेनाङ्गविधाने-नैव भवति, तस्य सुखाभ्युदयार्थत्वात् । परकीयक्षेत्रधनाहरणार्थानि युद्धानि निन्द्यान्येव। तथाविधावस्था च न वेदाक्षरानुगुणा। अत एव तादृ-गितिवृत्तं कल्पनाप्रसूतमेव, न वेदादिप्रमाणसिद्धम्। बाह्यान्तरिकविद्रोहि-गणाक्रमणादिभ्यो रक्षणार्थं दुर्गादिनिर्माणञ्च युक्तमेव।

एवमेव वैश्यवर्गस्य ब्रह्मक्षत्रवर्गैर्विरोधकल्पनमपि निराधारमेव। वैश्यानां त्रिवर्णान्तर्गतत्वाद्वैदिककर्मसु समानाधिकारत्वेन तादृक्कल्प-नानास्पदत्वात् । ब्राह्मणानां नेतृत्वे यथा क्षत्रियाणां बलराज्यसैन्याधि-पत्यं तथैव वैश्यानां धनाधिपत्यमप्यासीदेव। भूमेराधिपत्यं यद्यपि भूपते-रेवासीत्तथापि कृषिप्रधानानां विशां किञ्चित्करदानेन भूमिः सुलभै-वासीत्। स्वर्गाद्यधिकारस्तु कर्माधिकारमूलकः, कर्माधिकारोऽपि—शास्त्रा-यत्तः। तत्र विशामाधिकारिकत्वात्तत्प्रच्युतिशङ्कैव नास्ति।

समष्टिकार्य्येषु निर्वाचनेन नियमिताधिकारप्राप्तिः। वैयक्तिकेषु तु पितृपारम्पर्य्येणैवाधिकारप्राप्तिः। युद्धेन तु क्षत्रियाणामेव दुर्वृत्तदमना-दिभिरधिकारप्राप्तिरुक्ता न समेषाम्। न केवलं प्राचीनकाले तथोक्तेषु साम्यसंघेष्वेव परकीयैः स्वकीयैश्च युद्धं प्रवर्त्तते स्म। लोभमोहरागद्वेषा-दिभिरिदानीमपि तथाभूतप्रवृत्तिर्दृश्यत एव।

कौरवपाण्डववालिसुग्रीवादिरक्तसम्बन्धिनामपि रामायणभारता-दिषु वैमनस्यवर्णनात्। शोषकशोषितवर्गभेदतद्विद्वेषकल्पनायां तद्विध्वंस-कल्पनाऽपि यद्यपि स्वाभाविकी तथापि वेदप्रामाण्याश्रयेण तत्साधनं गगन-कमलिनीकल्पनमेव। यद्यपि वेदेषु पुराणेतिहासेषु देवासुरसंग्रामवर्णनमुपलभ्यते तथापि ब्रह्मक्षत्रप्रधानाः शोषका, विटच्छूद्राः शोषिता इति ततो न ज्ञायते, प्रत्युत देवा असुराश्चोभयेऽपि न केवलं सजातीया अपि तु प्रजापतेः कश्यपस्यैव ते पुत्रा आसन्। दित्यादित्यादिमातृभेदेनैव तेषां भेदो विज्ञायते। यद्यपि देवापेक्षयासुराणां क्वचित्प्राबल्यमस्त्रशस्त्रशिल्पादिकलाकौशलमपि वर्णितम् तथापि देवानामेवान्ते विजय उक्तः। तत्र हेतुस्त्वाध्यात्मिकभाव-

प्रदर्शनार्थमेव, अनृतस्य घटाटोपेन प्राबल्यमिव दृश्यते, तथापि सत्यस्यैवान्ते विजयो बुद्धेस्तत्त्वपक्षपातित्वात् । तदुक्तनिरुपद्रवभूतार्थस्वभावस्य विपर्ययेनं बाधो यत्नवत्वेऽपि बुद्धेस्तत्पक्षपातत: । मनो बुद्धीन्द्रियाणां स्वाभाविक्य: प्रवृत्तय: प्रवला एव भवन्ति । ता एवासुरा शास्त्रीयनियमनियन्त्रितास्तु सात्विक्य: प्रवृत्तय: प्रयत्नसाध्यत्वाद् दुर्बलास्ता एव देवा उच्यन्ते । चिरप्रवृत्तत्वाद्दृढमूलत्वान्निविडमपि गिरिकन्दरादिवर्त्ति तमो यथा प्रथमप्रदीपप्रभयैवास्तमेति तथैव प्रमाणमूलविज्ञानप्रादुर्भावात् स्वाभाविकतामसद्वेषरागादिमूलकं तमोबहुलं मायामयं जगदस्तमेति ।

सिन्धोस्तटेषु के मूलनिवासिनस्तत्राक्रमणकारिण: के, तत्र वर्णव्यवस्था दासप्रथा चासीत्तत आर्य्यैर्वर्णव्यवस्था प्राप्ता इत्यादिकमपि निष्प्रमाणमेव, स्थानान्तरे इहैव तदितिवृत्ताकथावर्णनमप्यस्ति । देवानामसुराणां मनुष्याणां पशूनाञ्च संघो भवत्येव । अरण्ये गवां मृगाणां कपोतादिपक्षिणाञ्च संघो भवति । परं न तैस्तथाकथितवर्गवादिकपोलकल्पितैरादिमसाम्यसंघसम्बन्ध: । तत्रापि केचित्संघ गणा राजतन्त्रविरोधिनो भवन्ति, केचित्तत्समर्थका एव भवन्ति । कौटलीयेऽर्थशास्त्रे राजतन्त्रविरोधिनां गणानां चर्चा विरोधिगणानादायैव युज्यते । धर्मनियन्त्रितराजतन्त्रापेक्षया धर्महीना भौतिकवादिनो गणा महाभारतेऽपि निन्द्यत्वेनोक्ता । अत एव पितामहसम्मत्या धर्मनियन्त्रितराजतन्त्रस्थापना जाता । अराजकतायामपि गणस्थिति: संभाव्यते । परं सत्त्वोद्रेकदशायां कृतयुगादावेव यत्र सर्वेऽपि ब्रह्मनिष्ठा धर्मनियन्त्रिता: भवन्ति । तदपि तत्रैव महाभारते प्रोक्तम्—

"न वै राज्यं न राजासीन्न दण्डो न च दाण्डिक: ।
धर्मेणैव प्रजा: सर्वा रक्षन्ति स्म परस्परम् ॥"

सत्त्वोद्रेकाभावे ज्ञानविज्ञानाभावस्तदभावे लोभमोहाभिभववान् मात्स्यन्यायेन शोष्यशोषकभावोऽनिवार्य्य एव ।

जैनसूत्रोक्तगणेष्वपि सैव व्यवस्था ज्ञेया । दासप्रथा त्वङ्गाङ्गीभावमूलिकैव । क्वचित्तदतिरेकस्तु दोष एव । शोषणमपि सर्वत्रैव निन्द्यमेव ।

गणव्यवस्था चालनार्थमपि गुणप्रधानभावोऽपेक्षित एव। न कैवलमथर्ववेदे किन्तु ऋग्वेदेऽपि सांमनस्यसूक्तेऽपि—'संगच्छध्वं संवदध्वं सं वो मनांसि जानताम् देवा भागं यथा पूर्वे संजानाना उपासते' इत्यादि सांमनस्यमुक्तम्। नहि राजतन्त्रेऽपि तदुपेक्षणीयं तत्रापि सेनामात्यादिषु सांमनस्यापेक्षासत्वात्। एवंविधा मन्त्रा यज्ञेषु यज्ञाङ्गत्वेन पठ्यन्ते। तत्र ऋत्विजां सांमनस्येन यज्ञसंपादनार्थमैकमत्यमपेक्षितम्।

नेमे मन्त्रा गण एव संगच्छन्ते, कुटुम्बे ग्राम्ये नगरे राज्ये राष्ट्रे गणे च संगता भवन्त्येव। धर्मनिष्ठानां ब्रह्मविदां गणे राज्यराजदण्डदाण्डिकाद्यभावेऽपि कामक्रोधाद्यनुभवेन मात्स्यन्यायानुदयाद्वैराजत्वेन व्यवस्था प्रचलति स्म। अन्यत्र वैराजगणस्य निन्दितत्वमेव। त्वद्रीत्याऽपि तेषु गणेषु वर्णाश्रमविभाजनम्। पितृसत्तादाससत्ताविकासो जात एव। उत्तरकुरुप्रभृतिशब्दैस्तु देशसम्बन्धेन तत्रत्याः सर्वेऽपि जना व्यपदिश्यन्ते, न गणविशेषा एव। यथा आन्ध्रादिशब्देन देशसम्बन्धेन तत्रत्या जना उच्यन्ते। चतुर्थो वर्णस्तु ब्राह्मणादिवत् परमेश्वराङ्गसंभूतत्वात्तद्वदेव प्राचीनः।

वीरमित्रोदयेऽन्यत्र वा गणा वर्णिता इत्यत्र न विप्रतिपत्तिः। तथाकथितभवदभिमतः साम्यसङ्घरूपः इति तु न सिद्ध्यति। ऐतरेये तु—अभिषेकविधिशेषतयोक्तेष्वर्थवादेषु विध्यर्थस्तुतिरेवोक्ता। न केवलं गणानां क्रियाशीलतासञ्चालनार्थमेव राज्याभिषेकः किन्तु—अराजकतामूलकमात्स्यन्यायनिषेधपूर्वकसुव्यवस्थासंपादनायापि तदपेक्षा।

एवमेव न केवलं लघुकायेषु गणेषु विश एव व्यवस्थापकाः किन्तु लघुषु ग्रामेषु तेषु तेषु संघटनेषु सर्वत्र प्रायेण तज्जातीया एव व्यवस्थापका भवन्ति। युद्धादिकार्य्यचालनार्थमन्योपद्रवप्रशान्त्यर्थमेव राजानोऽन्ये वा शासका अपेक्ष्यन्ते।

निर्वाचनजनितं नेतृत्वं पृथग्भवति, पैतृकं पृथगेव। अत एव पूर्वं गणा पश्चाद्राज्यं राजा वेति कल्पनं निःसारमेव। पौर्वापर्य्यकल्पनमपि निःसारमेव।

समितिसभादिविभागोऽपि नापूर्वः। ग्रामनगरपुरजनपदादिविकासेन सार्द्धं शासनसत्ता स्थापितेत्यभ्युपगमेऽपि शोषकाणामेव हितावहा सेति न युक्तम्। पूर्वं धार्मिकाणां निष्पक्षन्यायशीलानां राज्ञामेवाविर्भा-

वात् । अत एव महाभारतादिष्वितिहासेषु सूर्य्यचन्द्रेन्द्रादिलोकपालसार-निर्मितस्यादिराजस्य चर्चा उक्ता । तेषां धर्मपरायणानां मात्स्यन्याय-निराकरणार्थमेवाविर्भावस्तेषां प्रभावेण सर्वे सर्वेषां पोषका एव भवन्ति, न शोषकाः ।

लोकतन्त्ररक्षणायाप्यायुधजीविनां सैनिकानां तद्गणानाञ्चापेक्षा भवति। अत एवायुधजीविशब्देन सशस्त्राणां धनिनां निरस्त्रनियन्त्रणेच्छा-वतां बोधः इत्यादिकमपास्तम्, निष्प्रमाणत्वात्, परस्परविरोधाच्च। यदि शूद्रातिरिक्ताः सर्वे सशस्त्रास्तदा सशस्त्रा धनिन इत्युक्तिरपास्ता, निर्धन-ब्राह्मणक्षत्रियाणामपि निरस्त्रत्वसंभवात् । आयुधजीविशब्दमात्रेण तादृ-गवस्थाऽसिद्धेश्च विशां नाशाय तेषां निरस्त्रत्वसंपिपादयिषाऽपि प्रमाणशून्यैव, धार्मिकशासने विशां शूद्राणाञ्च चातुवर्ण्यान्तर्गतत्वात् तेषां नाशस्या-नभीष्टत्वात् । पाणिनीया अन्येऽपि गणाः समूहबोधका एव। तत्र मालवस्तु देशविशेषनाम्ना समूहविशेषो बोधितः ।

कठशब्दोऽपि वेदशाखाविशेषानुयायिसमूहबोधकः । शिबिशब्दे शिबि वेश्या एवोक्ता । कम्बोजपाटलभागलादिशब्दा अपि देशविशेषवासिन उच्यन्ते । क्षत्रियब्राह्मणाम्बष्ठशब्दा जातिविशेषवाचकाः । तेषु कृषि-व्यापारादिविकासोऽपि जात एव । परन्तु दासस्वामिनामार्य्याणां हस्तेन तेषां नाशकल्पना त्वप्रामाणिकी ।

वस्तुतस्तु चक्रवर्तिनां शासनान्तर्गता अनेके गणा गणराज्यानि भवन्ति स्म । सिकन्दरसैलूकस्प्रभृतयः पुरुचन्द्रगुप्तप्रभृतिभी राजभिरेव पराजिताः तदन्तर्गता एव गणास्तत्र सहायका आसन्नित्यन्यदेतत् ।

गणेषु धनिकवर्गशान्तिकामो गणपराजयकारणमासीदित्यपि निर्मूलम् । राजतन्त्रेष्वपि धनिकवर्गस्य शान्तिकामस्य सत्त्वाविशेषात् ।

पशुपालनस्य राजतन्त्रेषु गणतन्त्रेषु सर्वत्रैव दर्शनात् ! गणतन्त्रस्यैव तद्वैशेष्यम् । सदोषाणां शिशूनां समापनं जडवादिनां सर्वत्रैव संभवति। भारतीयेषु वैदिकेषु तु धर्मभीरुषु सर्वदैव रुग्णदीनानाथादि-दुःखनिवारणायैव प्रयत्नो भवति, न तत्समापनाय । धार्मिकेषु राजतन्त्रेष्वपि समष्टिकल्याणापेक्षया व्यष्टिहितं नगण्यमेव भवति तथापि

तदविरोधेन व्यष्टिसमुन्नतिरपि काम्यते क्रियते च, व्यष्टिसमुदायस्यैव समष्टिरूपत्वात् ।

यथा तन्तुगुणैरेव पटो गुणवान् भवति तथैव व्यष्टिदौर्बल्यप्राबल्याभ्यामेव समष्टिदौर्बल्यप्राबल्यसम्भवात् ।

संघर्षनैरन्तर्य्येण सर्वत्रैव योद्धृनिर्माणे शस्त्रास्त्रनिर्माणे च जागरुकता भवति ।

सनातनकालादेव ब्राह्मणादयो वर्णा आसन् । निर्वाचनानन्तरं गजदान-नियमेनेदमेव विज्ञायते–यन्निर्वाचने साफल्येनैव सदस्यत्वं भवतिस्म, न गजदान-मात्रेण । गजदानं तु सदस्यतानन्तरमेवापेक्षितम् । तेन न सधननिर्धनभेदाधृतं निर्वाचनम् । गजदानमपि नं व्यक्तिधनिकज्येष्ठानां सम्मतया जनसाधारणानां विरोधेऽपि सिकन्दरायात्मसमर्पणमपि चिन्तनीयम् इति प्रसिद्धैरितिहासैः पुरुसंज्ञकस्य राज्ञां धीरवीरस्य परमविक्रान्तस्य मूर्च्छादशायां छलेन पराजयो जातस्तथापि तत्पराक्रमं दृष्ट्वा जये निराशः सिकन्दरस्ततः परावृत्तः । तत्सेनापतिः सेल्यूक्यसस्तु चन्द्रगुप्तस्य सम्राजः पराक्रमेण पराक्रान्तस्तस्मै कन्यां दत्वा परावृत्तः । स्वार्थपरायणा जना गणतन्त्रे राजतन्त्रे सर्वत्रैवानिष्ट-कारिणो भवन्ति ।

वस्तुतस्तु भारतीयसंस्कृतिप्रसिद्धव्यवस्थैव वैदिकी व्यवस्था । तथाहि—यथा जगदुत्पत्तेः प्राक् जगदभावः, पृथिव्युत्पत्तेः प्राक् पृथिव्यभावो वा व्यपदिश्यते तथैव राजतन्त्रशासनप्रादुर्भावात्प्राक् तदभावोऽपि व्यप-दिश्यते । नैतावता जगदादेरनादित्वं भज्यते । प्रतिकल्पं सूर्यचन्द्रादीनामिव जगतः प्रादुर्भावाभ्युपगमेन प्रवाहानादित्वे बाधाभावात् । अत एव 'पूर्वं श्रमविभाजनं नासीत् । परवर्तिकाले तत्प्रवृत्तम्' इत्यपि निर्मूलम्, सोम-सत्रयोः प्रकृति-विकृति-भावाज्ञाननिबन्धनत्वात् । यदा सत्रप्रकृतिभूते सोमे आध्वर्यवं, हौत्रमौद्गात्रं विभक्तमासीत् तदा परवर्तिकाले तत्प्रवृत्तमिति विरुद्धाभिधानमेव । सत्रेषु समेषां यजमानानामपि गृहपतित्वेन अध्वर्युत्वादिना दीक्षा भवति । तां विना तदनुपपत्तेः । विधिप्राधान्येनैव वचनात्प्रवृत्ति-र्वचनान्निवृत्तिरिति स्थितिः । तत एव एक पात्रेण सोमपानम् । अत एव न

प्रतिदिनमनुष्ठीयमानक्रियासमूहस्य सत्रेति व्यपदेशः । लौकिकीनां क्रियाणां लौकिकफलसाधकत्वाभावात् न सत्रपदव्यपदेश्यता । न च लौकिकमेव फलं तस्येति वाच्यम्, तथात्वे विधानासम्भवात् । नहि प्राप्तस्य कर्मणस्तत्कार्यकारणभावस्य वा विधानं सम्भवति, विधेरप्राप्तप्राप्तिफलकत्वात् वैयर्थ्याच्च । 'साकं सत्रा' इत्यभिधानन्तु सत्रस्यानेकयजमानकर्तृकसहानुष्ठानमात्रापेक्षम् ।

यदपि त्रिरात्रकृत्वाख्यायिकयादिमसाम्यसङ्घसाधनं तदपि पौर्वापर्याननुसन्धानमूलकम् । अर्थवादभूतानामाख्यायिकानां 'विधिना त्वेकवाक्यत्वात् स्त्युत्यर्थेन विधीनां स्युः' इति न्यायात्स्तुतिपूर्वकतत्तद्विधान एव पर्यवसानात् । यजनभूमेः पृथिव्या देवानां यजनदक्षिणाभूताया गोश्चोत्पत्तिं गोसाहस्र्यसम्पत्तिप्रकारप्रशंसार्थमन्यांश्चार्थानुपवर्ण्य त्रिरात्रविधानं महते फलायेति तत्रैवाख्यायिकायास्तात्पर्यम् । प्रजापतिश्चात्र परमेश्वरः स्रष्टा उक्तः, न निर्वाचनसिद्धः, स्तथाभूतस्य स्रष्टृत्वासम्भवात् । वस्वादयस्तु गणदेवा एव । तेषां विभिन्नकार्यकरत्वेन भिन्नरूपत्वेऽपि केनचिदेकेन निमित्तेन समानैकाभिधानाभिधेयत्वम्, यथा चक्षुरादीनां भिन्नकार्यकरत्वेन विभिन्नरूपत्वेऽपि इन्द्रियेति समानाभिधानाभिधेयत्वम्, दशेन्द्रियाणि मनश्चैकमेकादशरुद्रशब्देनाभिधीयन्ते । द्वादशमासा भिन्नरूपा भिन्नकार्यकरा अप्यादित्यशब्देनाभिधीयन्ते । एवं वसवोऽपि ज्ञेयाः । तदुपार्जिता गावस्तद्दक्षिणादिजितलोकाश्च तेषां भिन्ना एव । तैरनुष्ठीयमानाद्द्वादशस्तोत्राग्निष्टोमपञ्चदशस्तोमोक्थैकोनत्रिंशत्स्तोत्रातिरात्राख्या यज्ञा अपि भिन्ना एव । फलान्यपि विभिन्नान्येव ।

नैतैर्वचनैस्तद्भाष्यैश्चादिमसाम्यसङ्घस्तत्सामूहिकोत्पादनप्रणाली सहयोजनप्रणाली च सिद्ध्यति, कर्मभेदेन फलभेदसिद्धेः । न हि सर्वत्र समाजे ग्रामे वा सप्तदश संख्याकानियतसंख्याका एव जना भवन्ति स्म, न वा तेषामेवोत्पादनेषु प्रयोगो नान्येषाम् तथार्थे मानाभावात् ।

किञ्चानयाख्यायिकया या घटना प्रकाश्यते सा त्वन्मतरीत्या किमैतिहासिकी सम्भवति ? किं कैश्चिन्मनुष्यैः केनचिद्वा पुरुषेण वा पृथिव्यनुत्पत्तिदशा सलिलमात्रसाराऽनुभूता ? वराहरूपश्च धृतः ? वराहरूपेण सलिलमग्ना धरित्री परिचिता तत उद्धृता च ?

पुनश्च विश्वकर्मा भूत्वा स एव पृथिवीं रचयितुमशक्नोत् ? स एव च तस्यां विश्रम्य वसुरुद्रादिदेवान् निर्मातुं समर्थोऽभवत्। तेभ्यश्चाग्नि तपश्चरणार्थं दत्तवान्। ते चाग्निनायतनेन तपसा श्राम्यन्त। तत एकां गामसृजन्त। किं बहवोऽपि मनुष्या मिलित्वाग्निना तपसा वा गां निर्मातुं प्रभवन्ति ? न चात्र श्रमार्जितधनेन गामेकामक्रीणन्तेत्येवार्थो युक्तः, 'असृजन्ते'ति धात्वर्थविरोधात्। तथात्वे च गोसहस्रवर्धनाय सा गौरेव किमर्थं वस्वादिभ्यो दत्ता ? श्रमार्जितधनेन गोसहस्रस्यापि क्रेतुं शक्यत्वात्।

किञ्च सामूहिकोत्पादनप्रणाल्या गोसहस्रसम्पत्तिरेवापेक्षिता चेत् वसुरुद्रादित्येभ्यो मिलितेभ्य एव कथं न दत्ता ? प्रथमं वसुभ्यो दत्त्वा तैर्गवां शतत्रयं त्रिंशच्चोत्पाद्य सैवैका पुना रुद्रेभ्यः, पुनश्चादित्येभ्यः किमर्थं दत्ता ? मिलितानां तेषां देवानां रक्षणोद्योगे यावता कालेन एकस्याः शतत्रयं त्रिंशच्च गवामुत्पादितं स्यात् ततोऽल्पीयसैवानेहसा त्रयस्त्रिंशदधिकात् गवां शतत्रयात् गोसहस्रोत्पत्तिः सम्भवति।

किञ्चोत्पादनस्य फलस्य च सामूहिकत्वे एकस्या एव गोः सकाशात् विभिन्नैर्गणैः किमर्थं त्रयस्त्रिंशदुत्तरं गवां शतत्रयमुत्पादितम् ? तथात्वे कथं वस्वादिभिः अग्निष्टोमोक्थातिरात्राख्यैर्भिन्नैर्यज्ञैर्भिन्नानि फलानि सम्पादितानि ?

न च होमयागपाठजपादिव्यतिरिक्तस्तेषां व्यापारः श्रूयते। न च तैर्व्यापारैः प्रत्यक्षे भोजनाच्छादनादिसामग्र्यो भाव्यमाना दृश्यन्ते, श्रूयन्ते वा। अत एव यागार्थं धनार्जनोपायाः पृथगेवोक्ताः। धनार्जनोपयोगिनी याज्ञिकानां यात्रावनीवाहननाम्ना प्रसिद्धा।

प्रतिग्रहेण जपादिना धनानि सङ्गृह्यन्ते। भोजनमपि यागबहिर्भूतमेव। न चेडाभक्षणमेव भोजनम्, तस्य संस्कारमात्रार्थत्वेन तृप्तयेऽपर्याप्तत्वात्। अत एव यजमानदम्पत्योः पयःपाननियमोदृष्टः।

यदपि श्रमाः के भवन्तीति प्रश्नमुत्थाप्य पश्वादिरक्षणोपयिकाश्मव्रजादिनिर्माणं काष्ठमयमण्डपनिर्माणादिकं निरूपितम्' तदप्यसत्, मन्त्रेषु

मण्डपादिनिर्माणविधानानुपलम्भात् । ब्राह्मण-सूत्रादिरीत्या मण्डपनिर्माणं भवति। आवासभवनानि मण्डपादिभिन्नान्येव भवन्ति । नहि समेषां ग्रामीणानां यज्ञनिविष्टानां तत्र वासः सम्भवति। मण्डप-स्थण्डिल-वेदि-खरा-आहवनीय-गार्हपत्य-दक्षिणाग्नीनां न वा जीवनोपयोगमात्रं प्रयोजनम्, तथात्वे नियमानपेक्षणात् । भोजनादिनिर्माणमेव यद्यग्निप्रयोजनं तदैकेनैव तत्सम्भवति पुनस्तन्नामभेदः स्वरूपभेदश्च किं निबन्धनः ? यागेषु तिष्ठताध्वर्युणा चरुपुरोडाशादेराहवनीय एव निःक्षेपः, होत्रेषूपविशता निःक्षेपः। स च किमर्थकः ? होतृसदने चोपविशता होत्रा शस्त्रमन्त्राः किमर्थं पठनीयाः ? मित्रावरुणेन दण्डिना प्रैषाः किमर्थमुच्चारणीयाः ? कृताकृतावेक्षणं कुर्वता ब्रह्मणा दोषगुणौ गदित्वा तैस्तैः कर्तृभिरेव तस्यै वसुधारादिकं करणीयं न च तथा क्रियते । स्वेनैव प्रणवपुरःसरेण मन्त्रविशेषेण दृष्टिविशेषेण प्रायश्चित्तविशेषेण वा कथं तत्साङ्गता सम्पत्तिः ? 'किञ्च भिन्ने जुहोति' 'स्कन्ने जुहोति' इति पात्रे भिन्ने स्कन्ने पात्रपरिवर्तनं तत्सुधारणं वा लौकिकं समाधानं, होमस्य किं प्रयोजनम् ?

अपि च सदोमण्डपात् बहिष्पवमानस्तोत्रार्थं परस्परमविच्छेदेन किमर्थमृत्विजां निःसरणम् ? उद्गात्रपच्छेदे किमर्थमारब्धस्य यागस्यादक्षिणतासमाप्तिं कृत्वा पुनर्यागानुष्ठानम् ? अपच्छेदे पुनः प्रतिसन्धानमेव पर्याप्तं स्यात् ।

क्रमेण विच्छेदे च किमर्थमुद्गात्रपच्छेदनिमित्तिका दक्षिणयागेन परेण प्रतिहर्त्रपच्छेदनिमित्तकस्य सर्वस्वदक्षिणस्य पूर्वस्य बाधः ?

किञ्च नहि निष्फलः श्रमो भवति। तेन समेषां श्रमिणां भिन्नैः संहतैर्वा प्रयोजनैर्भाव्यम् । अदृष्टानभ्युपगमे सर्वं दृष्टं प्रयोजनं वक्तव्यम्। न च होमयागादेः वायुशुद्धिः फलं वक्तुं शक्यम्, तथात्वे सुगन्धिद्रव्याणामेव हवनं युक्तं स्यात्। यदि नाम चरुपुरोडाशवपादीनां वायुशुद्धिमात्रफले निर्बन्धस्तर्हि चरुपरोडाशादिनिर्माणे विशिष्टविधानस्य कपालतत्संख्याभेद-मन्त्र-भेद-क्रियाभेदादीनां प्रयोजनमपि वक्तव्यम्। समेषामर्वाचीनत्वे प्राचीनरूपं किमिति सप्रमाणं वक्तव्यम्। न च तद्वक्तुं शक्यम्। कस्यचिदेव प्राचीनत्व-

मित्यत्र न शपथमन्तरा किमपि प्रमाणम्। धर्मेश्वरानभ्युपगन्तृकर्तृकाणां शपथादीनामपि किं मूल्यम् ?

किञ्च साम्यसङ्घे समेषां स्त्रीपुंसां साम्यमेव भाव्यम्। परं सोमादि-प्रकृतियागेषु विकृतिभूतेषु सत्रयागेषु चरुपुरोडाशादिहविःशेषभक्षणेषु सोमपाने च नियतसंख्याकानामेव प्रवेशः। ब्रह्मादिसप्तदशसंख्याकानां पुंसां यजमानपत्न्याश्चैकस्या एव स्त्रिया यागादिप्रवेशः। तत्रापि हविःशेष-भक्षणे स्त्रिया नाधिकारः। सत्रेष्वपि प्रतिकुटुम्बमेकस्यैव पुरुषस्य तत्रापि सोमपायिन एवाधिकारो नान्येषाम्।

न च सोमानयनाय स्वाच्छन्द्येन केषाञ्चिद् गमनम्, तदाहरणक्रयणा-दिषु विशिष्टानामेवाधिकारो न सर्वेषाम्, 'अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाती'त्यादिविधानवैयर्थ्यापत्तेः। एवमेव यूपादिनिर्माणतत्प्रथ-माघाताच्छिन्नकाष्ठखण्डरूपस्वरोः किमर्थं ग्रहणम् ? तद्धोमस्य किं प्रयोजनम् ?

तच्च किमर्थमन्ते कर्त्तव्यम् ? उपवेशनार्थैव चेन्महावेदिः, किमर्थं तर्हि तस्या मानविशेषो निर्माणविधानविशेषश्च ? एवमेव यदि घासरूपेणोप-वेशनार्थमेव कुशास्तरणम् तर्हि कुशानामेव किमर्थमादानम् व्रीहिपलाल-काशादिभिरपि तन्निर्वाहसम्भवात्। नहि गोदोहनार्थमेव दुहितरो भवन्ति, 'दुह प्रपूरणे' इति धातोः नहि गोदोहनार्थमेव प्रयोगः, 'दोग्धि कामानि'त्यादौ तथा प्रयोगदर्शनात्।

यदुक्तम्—'तदानीं धातुद्रावणविज्ञानाभावात् मृन्मयपात्रपाकादि-कम्' इति तन्न, स्वर्ण-रुक्म-स्वधिति-वाण-हिरण्य-कांसादिषु धातुद्रावण-दर्शनात्। सत्रादिषु यद्यपि गृहपतिर्निर्धार्यते तथापि तत्राध्वर्यवोऽनेके भवन्तीति न प्रामाणिकम्, षोडशानामेवार्त्विज्यत्वेन विनियोगात्।

ब्रह्मा कृताकृतमवेक्षते। परं तन्न लौकिकं कृताकृतमित्युक्तमेव। उद्गातृ-गीतमपि तत्तद्देवतास्तुतिरूपम्, न लौकिककार्योत्साहवृद्धिप्रयोजनकम्।

'तदानीं पेषणी नासीदि'त्यपि निष्प्रमाणकम्। दृषदुपलादिभिस्तु विशेषविधानमदृष्टार्थमेव। एवमश्वपार्श्वास्थिभिरेव तीक्ष्णीकृतैर्घासच्छेदनम्। 'पशुविशसनार्थं खङ्गादिकं नासीदि'त्यपि निष्प्रमाणं पश्वङ्गानां निष्कासनार्थं

स्वधित्यादिप्रयोगस्य स्पष्टं दर्शनात्। नहि कचिदपि पशुपाश्र्वास्थि विधीयते, नवोपयुज्यते।

डांगे महाशयस्य कम्यूनिस्टवेदस्तद्विहितो यागस्तथा प्रयोगः काल्पनिक एव। एवमेव-'यदुत्पद्यते तत्सर्वं महावेद्यामानीयते, तादृशी धर्माज्ञासी' दित्यपि निर्मूलम्, तादृश्या आज्ञाया अनुपलम्भात्। समुत्पादितवस्तूनि बहुविधानि भवन्ति, कानिचिद्यज्ञियानि, कानिचिच्चायज्ञियानि भवन्ति।

'उत्पादनवितरणप्रणालीव्यतिरिक्तं होमादिकं नासीत्' इत्यपि निर्मूलम्, यागादिहविःशेषभक्षणस्य संस्कारार्थत्वात्। भोजनादिप्रबन्धस्य ततः पार्थक्येनोक्तत्वात्। प्रतिदिनं कर्त्तव्यमग्निहोत्रमेव। तच्च सायं प्रातरेव-भवति। नहि पुरोडाशादिकं प्रतिदिनं निर्मीयते, न वा हूयते, केवलं श्रुत्वा तथाकल्पितमेव डांगे महाशयेन। तत्तद्देवतोद्देश्येन विभिन्नसंख्याककपाल-संस्कृतपुरोडाशानां विशिष्टकालेषु विधानात्।

न वा सोमरसपानं प्रतिदिनं भवति। सोमयागादिष्वेव तद्विधानात्। सहभोजनमपि निर्मूलमेव, ऋत्विजामेवेडाभक्षणादौ सन्निवेशात्। अग्नेश्चतुर्दिक्षु सर्वे शेरते।

'सम्भोगप्रथाप्यनियतैवासीदि'त्यपि निर्मूलम्, विवाहसम्बन्धमन्तरा पत्नीत्वासम्भवेन यागाद्यसम्भवापातात्।

सत्रेषु ब्राह्मणानामेवाधिकारो यतस्तेष्वेवार्त्विक्त्वं नियतम्। तेषाञ्च सुरापानं सर्वथा निषिद्धम्। सौत्रामण्यामपि क्षत्रियस्तदर्थं द्रव्यं दत्त्वाऽऽनीयते, तदलाभे सुरायाः स्थलविशेषे निःक्षेपविधानात्।

एवं सर्वविधमांसोपयोगोऽपि निष्प्रामाणिकः, तत्तद्देवतोद्देश्येन पशुविशेषाणामेव विधानात्। युग्मविवाहप्रथा कदा प्रचलितेत्यपि न साधयितुं शक्यम्, वेदानामनादित्वेन तत्प्रथाया अप्यनादित्वात्।

तादृशैरेव पाश्चात्यैस्तदनुयायिभिश्च भारतीय इतिहासो निर्मितः। श्रीपाद अमृत डांगे महाशयस्य 'भारत पुस्तके' भूमिकायामेव लिखितम्—'भारतीयेतिवृत्तिकाराः एतत्प्रामाणिकत्वव्यवस्थापनायोन्मत्ततायाः पराकाष्ठामुपजग्मुः। वयं न केवलं प्राचीनाम् किन्तु संस्कृतीनामंशान् यान् पश्यामः विज्ञान-दर्शनराजनीत्यादीन् ते सर्वेऽपि भारते विद्यमाना आसन्। यदि पाश्चात्यानां कान्टसदृशो महान् दार्शनिक आसीत्तदात्र शङ्कराचार्यस्ततोऽपि-

श्रेष्ठ आसीत्। यदि तत्र शेक्सपियर महाशयः साहित्यिक आसीत्ततोऽपि युक्ततरोऽत्र कालिदासः। यदि तत्र सोशलकन्ट्राक्टनिर्माता आसीत्तदात्रापि शुक्रनीतिकौटलीयार्थशास्त्रादयो दिव्यग्रन्था आसन्। किं बहुना-भारते प्राक्काले वायुयान-धूमशकटादीनि विस्फोटकान्यस्त्रशस्त्राणि च तदानीमासन्यदा पाश्चात्त्या ऋक्षचर्मभिः स्वशरीरमाच्छादयन्ति स्म।'

इङ्गलिशशासकाः भारतीयजनान्दोलनस्य समूलोन्मूलनाय तेजोवधाय च विश्वेतिहासापेक्षया भारतस्य गौरवापकर्षाय विपरीतमितिहासमारच्य प्रचारयन्ति स्म। कैम्ब्रिज इतिहासस्यान्येषाञ्चेतिहासानां गंभीरैरुत्तरदायित्वपूर्णपदप्रतिष्ठितैरपि लेखकैरेतन्मतमेव प्रचार्य्यते स्म। तादृगसन्मतखण्डनाय भारतीयैरितिहासकारैरेतत्साधयितुं प्रयतितम् यत् भारतीयेतिहासादेव मानवजातेरितिहासः प्रारब्धः। भारतीयैः यानि यान्युत्तमवस्तूनि निर्मितानि अन्यत्रत्यैः न तानि कृतानि, न वा भविष्यत्कालेऽपि कर्त्तुं शक्यन्ते। एतादृगितिहासोल्लेखो यद्यपि तदानीमुपयुक्तः साहसप्रदश्चासीत्तथापि प्राचीनतायाः सम्बन्धे मिथ्यामूल्याङ्कनभावनाप्युद्भाविता। तेनैव प्रत्येकं प्राचीनं वस्तु समादरणीयं श्रद्धेयञ्च मन्यन्ते स्म, यदिदानीमहितकरं प्रगतिविरोधि च।

यद्यपि भारतीयेतिहासकारैः विविधैस्ताम्रपत्रैः, शिलालेखैरशोकस्तंभैः, ज्यौतिषग्रन्थैश्च भारतीयेतिहासस्मृतयः पञ्चसहस्रवर्षेभ्योऽपि प्राचीनाः साधिताः तथापि पूर्वं नेतिहासविश्वासास्पदतां ता जग्मुः। किन्तु सिन्धुप्रदेशस्य मोहञ्जोदड़ो नामकस्य प्राचीनतमनगरस्य प्राप्त्या तत्सर्वं प्रामाणिकं संवृत्तम्।

तिलक, राजवाडे, रानाडे, जायसवाल, पाओगी, कुन्ते, भाण्डारकर, केतकर प्रभृतिभिर्भारतीयैः पाश्चात्त्यैश्चात्र विषये बहुपरिभ्रान्तम्। प्रायेण योरोपीयेतिहासकाराणां मतखण्डनायैव क्रमबद्ध इतिहासः प्रकाशितः, तथा च राष्ट्रियसंघर्षेऽन्यतमच्छस्त्ररूपमेवात्रत्यमितिवृत्तम्। इतिहासस्यार्थोऽत्र निरपेक्षयथार्थसत्यान्वेषणं नासीत्। यदि स्यात् सत्यमन्वेषणं तथापि तत्प्रयोगोऽन्यथैव प्रवर्तितः। युद्धभूमौ शत्रोः संघर्षे यथा शस्त्राणि प्रयुज्यन्ते तथैवान्विष्य सत्यांशानामपि प्रयोगः।

यद्यपि वैदेशिकानामाक्रमणकारिणां पराजयाय भारतीयानां नैतिकसाहसस्यात्मविश्वासस्य जननाय च तादृगितिवृत्तमतीवोपयुक्तमासीत्, परमितिहासदृष्ट्या तदतिरिक्तं न किञ्चिदासीत्। तदनन्तरमपि साम्राज्यवादविरुद्धसङ्घर्षरतार्थपति ( पूञ्जीपति ) दलीयहितमनुलक्ष्यैकोऽदृष्टिकोणः, राज-सामन्तार्थपति ( पूञ्जीपति ) प्रभृतिदेशीयविदेशीयशोषकवर्गविरुद्धशोषितवर्गहितावहश्चापर ऐतिहासिको दृष्टिकोणः प्रवृत्तः। ततस्तद्दृष्टिभेदेनेतिहासनिर्मितिः प्रवृत्ता।

एवमेव डांगे महाशयस्यापि वर्गवादसाधनाभिप्रायेणैवेतिवृत्तगवेषणा, नतु नैरपेक्ष्येण तत्त्वान्वेषणेच्छयेत्यपि वक्तुं शक्नुमः। डांगे महाशय एवं मनुते-यत् "यथामध्यवर्गीयबुद्धिजीविनां राष्ट्रियार्थपती ( पूञ्जीपती ) नाञ्च तदानींतनानि शिलालेखताम्रपत्रादीनि प्रथमदृष्टिकोणे नैतिहासिकाध्ययनमुपस्थापयामासुः। तथापरदृष्टिकोणानुसारिणां कृते तथाविधसामग्र्यभावादतीव काठिन्यमासीत्। राजानः सामन्ता भौमिकाश्च भीत्या स्वविरुद्धाश्चेतिहाससामग्रीर्गोपयन्ति स्म। सर्वतः प्रथमं तु बृटिशजातीयैः स्वविजयकाले याः सामग्र्य उपलब्धास्तदनुसारेण एल्फिस्टन्, ग्राँट, डफ, ब्रिग्स, टॉड, मोरलैण्ड प्रभृतिरितिहासग्रन्था प्रणीताः। तत एवान्येऽपि भारतीयेतिहासं समधिजग्मुः। भारतीयैरितिहासकारैर्यद्यपि पूर्वेषां मतानि खण्डितानि तथापि स्वीयदृष्टिकोणप्रचाराय तैरपि यत्कृतं तदप्यजटिलम् प्रशंसनीयञ्च नासीदेव।

एतेन डांगे रीत्या पाश्चात्त्येषु पौरस्त्येषु च तत्तत्प्रयोजनवशादेवेतिहासनिर्माणप्रवृत्तिर्न तु तत्त्वविजिज्ञापयिषया।

पुनश्च स एव वक्ति यत्–महादेव रानाडे महाशयो मरहट्टासमुत्थानस्य मूलं षोडश्यां सप्तदश्यां च शत्यां समुद्भूतान् तान् ( ज्ञानदेव तुकाराम एकनाथ रामदास प्रभृतीन् ) साधून् मन्यन्ते, येषां सम्प्रदायप्रचारेण धार्मिकान्दोलनेन भ्रष्टः पौरोहित्यवादः समूलमुन्मूलितः। तन्मतेन धर्म एवेतिहासमूलशक्तिप्रेरकः। तात्कालिकभक्तिसम्प्रदायस्य तेन यूरोपीयसुधारान्दोलनेन तुलना कृता, यत्कैथोलिकवादविरुद्धं प्रवर्तितम्। यत्फलस्वरूपम् यूरोपे अभिनवानि राज्यानि नूतनाश्च समाजा आरचिताः। परन्तु तत्राङ्ग्लेभ्यो मराठा पराजयस्य किं मूलमिति गवेषणायां धार्मिकपतनस्य तद्धेतुत्वं नाभिमन्यते।

केतकर—महाशयः देशप्रेमलक्षणाया एकताया अभावात् व्यक्तिगत-पृथक्तालक्षणां महाराष्ट्रियविशेषतां प्रति परमानुरागाच्च पराजयमभ्युपगतवान्। आङ्ग्लानां तद्वैपरीत्येन विजयः। सप्तदश्यामष्टादश्यां शत्यामेते गुणास्तेषु कुत आगतास्ततः प्रागेतेषु नैते गुणा प्रसिद्धाः।

श्रीवसुमहोदयस्तु स्वग्रन्थे "आङ्ग्लानां विजयकारणमसत्यछलछद्मादिकमेव मन्यते। भारतीयशासकास्तदभावात्प्रतिबले तत्प्रतिभटा न बभूवुः। अत्रेतिहासस्य पूर्णा गतिर्मनुष्यविचारैर्नेतॄणां पुण्यपापभावनया प्रतिरुद्धा। असंख्यश्रमिकाणां तत्सामाजिकसाधनानामसंख्ययुगव्यापिनी गतिः महापुरुषाणां गुरूणामवताराणां धार्मिकविश्वासैर्नैतिकविचारैः पूर्वाग्रहैः स्वैरतया च परायत्तीकृता। कैश्चिदितिहासस्यैतत्प्रेरिका शक्तिरसाधारणपुरुषाणां व्यक्तिगतप्रतिभायां, कैश्चिच्च जातिविशेषे समार्पिता। तेषां विचाराणां मान्यतानां नैतिकमूल्यानां विश्वासानाञ्च कथमुद्भवः, कथं वा देशान्तरीयैस्तैर्देशान्तरीयास्ते पराजिता इत्यस्योत्तरम् घटनाविशेषे भाग्ये वा निःक्षिप्य त्यज्यते।"

वस्तुतस्तु भारतीया इतिहासकाराः कार्लाईल, वर्कवेन्थम, ग्रीन, हीगेल प्रभृतीन् वैदेशिकान् गुरूनेवानुकुर्वन्ति। तैर्यथा भाग्यवादिदृष्टिकोणमादर्शवादिदृष्टिकोणं वाश्रित्येतिवृत्तं स्वदेशीयं निरमायि तथैव भारतीयैरपि तदनुकृतम्। इतिहासद्वारा जातीयसंघटनानां द्वेषसंघर्षयोरप्यौचित्यं साधितम्। तत्राब्राह्मणा एतत्प्रमाणयितुं प्रयतितवन्तो यत् विजयिनां मराठानां पराजयकारणं ब्राह्मणनेतृत्वमेव। ब्राह्मणानां पेशवाजातीयानां हस्तगतं नेतृत्वं यदासीत्तदैव मराठापराजयो जातः। तादृशस्य सर्वस्यैवान्दोलनस्य साफल्यं संदिह्यते—यस्य नेतृत्वं ब्राह्मणहस्तगतं स्यात्। उपर्युक्तरीत्यैव कायस्थानां ब्राह्मणानामन्त्यजानाञ्च सङ्घर्षोऽपि प्रचलितः।

तेषां रीत्या "यद्यपि पूञ्जीवादपोषकैः प्राचीनैरितिहासकारैर्भाविनामुद्दिष्यमाणवर्गसङ्घर्षवादिनां प्रतिबलाय विविधा विचाराः समुपस्थापितास्तथापि नवनवानि जनान्दोलनानीतिहासेऽप्यभिनवान्येव, प्रभूतोत्पादनक्षमाणि वाष्पविद्युदादिचालितानि यन्त्राणि, दूरश्रवणदर्शनगमनसंहरणक्षमाणि तन्त्री टेलीविजन रेडियो वायुयान राकेट परमाणुबम हाईड्रोजनबम

प्रभृतीनि वस्तूनि, तत्प्रतिफलानि गतिरोधजनकानि नानाविधान्यर्थव्यति-करणि, आपणदारिद्र्यकार्य्यविरोधान्दोलनानि नवीनान्येव ।

कार्लमार्क्स—ऐंगेल्स महाशयाभ्यामेव "सामाजिकप्रगतिसंबद्धमिति-वृत्तं विश्लिष्य तादृङ् नियमा अन्विष्टा यैरितिहासो विकासमुपयाति । अयमे-वैतिहासिक-भौतिकवादस्य प्रसिद्धो नियमो यो द्वन्द्वात्मको भौतिकवादः । सावस्था महापुरुषाणामवताराणां प्राकृतिकभौगोलिकवातावरणनामीश्व-रेच्छायाः प्रभावेण नोत्पद्यते । इतिहासगतिर्न पूर्वनियन्त्रिता, यान्त्रिकगतिर्न वा मानवानामुपरि बलादारोपिता । किन्तु भौतिकप्रकृत्या मानवविकासः संवृत्तः । जीवनरक्षणाय मानवः प्रकृतिसङ्घर्षे रज्यते । भोजनाच्छादनाश्र-यादिलाभाय तस्य प्रथमः प्रकृतिसङ्घर्षः । तस्यामवस्थायां उत्पादनशक्तिभिः समुत्पादनसाधनैश्च तेनैव विकासं नीतः ।

एवं क्रमेण सामाजिकरूपविकासक्रमिकसाधनविकासोऽपि जायते । उत्पादनप्रणाली वैशेष्यादेव समाजे राजनीतिसच्चारित्र्यदर्शनभावनाकलादीनां रूपाणि निश्चीयन्ते । तादृक्समुदीयमानश्रमिकशक्तिप्रतिरोधाय मिथ्या-भूतस्येतिहासस्य प्रचारः साम्राज्यवादिभिः क्रियते । तैनेव पूञ्जीवादिशासन-तन्त्रस्यानिवार्य्यता शाश्वतता चिरन्तनेश्वरप्रत्तता च प्रचार्य्यते ।"

एतेन तन्मतरीत्या न पाश्चात्यानामितिहासः तत्त्वनिर्णये प्रमाणम्, न वा भारतीयानां यत्र तन्मताननुकूलम् ।

अन्यमतरीत्या मार्क्सीयानामपीतिहासोऽप्रमाणमेव । यथान्येषां विचाराः स्वपरिस्थित्यनुरोधिनस्तथैव क्षुत्क्षामस्य मार्क्सस्य स्वपरिस्थिति-प्रतिक्रियानुरोधिन एव तद्विचारा अपि ।

डांगेमहोदय एवार्य्याणां मूलस्थाननामकेऽध्याये कथयति यद् "आर्य्याः प्रदेशान्तराद् भारतमागता इत्येव बहूनामितिहासकाराणां मतम् । आर्य्याणां काश्चिच्छाखाः पश्चिमस्यां दिशि यूरोपे, काश्चिच्च एशियामायनर-प्रदेशमागताः । काश्चित्पञ्चनदकाश्मीरमार्गात् हिमालयमुल्लङ्घ्य भारत-मागताः । तेषां मूलस्थानसम्बन्धेऽपि मतभेदो जागर्ति ।" उत्तर ध्रुवस्यान्तिके साइबेरिया स्थानम् केषाञ्चिद्बालगङ्गाधरतिलकप्रभृतीनां रीत्या मूलस्थानम्, अन्येषां रीत्या वोलगानदी तटे तत् । क्वचित् कैशपियनसागरस्यान्तिके तन्मूल-

स्थानम्। परं भारतीयपुराणेतिहासानां वेदानाञ्च रीत्या भारतमेवार्य्याणां मूलस्थानम्।

डा० सम्पूर्णानन्दस्य 'आर्य्याणामादिदेश'पुस्तके महता समारोहेण चेतत्साधितम् "यत् आर्य्याणामेष भ्रमणवृत्तान्तः ख्रिस्तीयपूर्वषट्सहस्रवर्षेभ्यः प्राक्कालिकः।" केषाञ्चिद्रीत्या चतुःसहस्रवर्षेभ्यः प्राचीनोऽयं वृत्तान्तः। मोहञ्जोदड़ोहरप्पा खण्डगृहाणामुत्खननेन प्राप्तानां वस्तूनामार्य्यागमनपूर्ववर्तिता निश्चीयते। केषाञ्चिद्रीत्या तेषामार्य्यसभ्यतापरिचायकत्वमेव। द्रविड़तामिलमलयालमकन्नडादीनामार्य्यपूर्ववर्तीतिहासोऽन्यैरुपगम्यते। द्रविडेभ्योऽपि पूर्वं काचिज्जातिरासीदित्यपि केषाञ्चिन्मतम्। मध्यप्रदेशस्थिता मोनखमेरजातीयाः तेषामेव वंशजाः मुंडा नागा संथालीत्यादयः। नृतत्त्ववेत्तृभिः पोलीनेशियन जनसमूहनाम्ना ते स्मर्य्यन्ते। एतेषामेव मलाया इन्डोनेशिया हिन्दचीन आस्ट्रेलियादिदेशेषु प्रसारः। दृढप्रमाणाभावादेवैतेषु विषयेषु नानाविधा मतभेदाः प्रचलन्ति।

वस्तुतस्तु वेदादिशास्त्ररीत्या प्रतिकल्पं भारते ब्रह्मावर्त एव सृष्ट्यारम्भः। आर्य्याणामयमेवादिदेशः। वैदिकसभ्यताया एव परिचायकान्यनेकानि मोहञ्जदड़ो हरप्पादि खण्डगृहोत्खननलब्धवस्तूनि। डाङ्गे महाशयोऽपि पाश्चात्यानां रीत्यैव वेदादिशास्त्राणां तात्पर्य्यं निर्धारयितुं यतते। भारतीयानां गौरवापकर्षायैव पाश्चात्यानां तदितिहासनिर्माणप्रवृत्तिरिति पूर्वं तेनाङ्गीकृतम्। तथापि स्वानुकूला तदीया पद्धतिस्तेनोरीकृता।

मैक्समूलरेण स्वमित्रमुद्दिश्य लिखिते पत्रे स्वयमेव स्पष्टमुक्तम् यत्— "वेदस्य सुबोधसंस्करणप्रकाशने ख्रिस्तीयमतप्रचारोपयोगीति हेतोरेव मया तत्प्रकाश्यते।" वस्तुतस्तु यथा बाइबिल कुरानादिग्रन्थानां तात्पर्य्यावधारणपद्धतिस्तदनुयायिनां विदुषां सम्मतैवाद्रियते तथैव वेदार्थावधारणपद्धतिरपि वेदविदुषां मीमांसकानां सम्मतैवादरणीया। यथाकथञ्चिदर्थावधारणप्रवृत्तौ तु तद्विपरीतार्थाधिगतिरेव संभाव्यते, दृश्यते च। पाश्चात्यरीत्यैव स ऋग्यजुःसाम्नामथर्ववेदस्य च रूपं परिचाययति। अथर्वणश्च वेदेषु पश्चात्काले प्रवेशः। साम्नश्च ऋचां संगीतरूपादतिरिक्तं न रूपान्तरमित्यादिकं वैदिकानां रीत्योपहासास्पदमेव। सम्प्रदायाविच्छेदे सत्यस्मर्य्यमाणकर्तृक-

त्वेन समेषां वेदानां तद्विशेषाणां मन्त्राणां ब्राह्मणानाञ्चापौरुषेयत्वाविशेषात् तत्र पौर्वापर्य्यं नास्त्येव। साममन्त्राणामृगात्मकत्वेऽपि सामब्राह्मणानां सर्वथा तद्भिन्नत्वमेव। बहूनां साममन्त्राणामपि बह्वृचसंहितायामनुपलम्भात्तद्दृष्ट्याऽपि सामवेदस्य स्वातन्त्र्यमेव।

इदं तु तेनापि मन्यते "यत्पृथिव्यां कश्चिदपि जनसमूहो नास्त्येतादृशो यस्यैतावती ऐतिहासिकसामग्री स्यात् यादृशी–आर्याणां विद्यते। या जातिरादिमसंस्कृतिमारभ्याधुनिकसभ्यतां यावाद्विद्यमाना सती चलति, प्राचीनतमसमाजस्य सम्यक् स्मृतिं वर्तमानयुगेऽपि रक्षति, सा आर्य्यजातिरेव। तादृशी जातिरन्या न विद्यते। यूनानीजातेः कथञ्चित् किञ्चित् तत्सादृश्यं संभाव्यते। मिश्रदेशस्य सम्राज्ञां समाधयोऽतिप्राचीनाः। सुमेरी-असीरी-चीन-एशियादेशस्य मध्यपूर्वदेशीयक्षेत्राणाञ्च समुत्खननेन प्राचीनसंस्कृतीनां ज्ञानं जातम्। तत्र काश्चिन्मृन्मय्यः सूक्ष्मशिलाः प्राप्ताः, यासु विलक्षणैरक्षरैरुल्लेखः। यूनानसम्बद्धप्राचीनेतिहासः ख्रिस्तीयपूर्वसहस्रवर्षेभ्यः प्राक् होमरमहोदयेन लिखितः। परन्तु भारतीयैरार्य्यैर्वेदमन्त्रैः ऋग्भिः सामाजिकजीवनस्य प्राचीनतमाः स्मृतयः सुरक्षिताः। वेदसंबद्धैरन्यैश्च साहित्यैः महाकाव्यैः सूत्रैः स्मृतिभिश्च ताः सुरक्षिताः। न्यूनात् न्यूनं चतुःसहस्रवर्षेभ्यो वैदिका मन्त्राः स्वरपाठविधानेन ब्राह्मणेषु गुरुशिष्यपारम्पर्य्येण कण्ठस्थाः सुरक्षिताश्चायाताः। पश्चादिदं वैदिकसाहित्यं लिपिबद्धमपि जातम्॥" सर्वमपीदं पाश्चात्यगुरुभ्यो डांगे महाशयेनापि सम्प्राप्य स्वग्रन्थे निबद्धम्।

तिलकप्रभृतिभिर्विद्वद्भिस्तु ततोऽप्यतिप्राचीनता वेदानां साधिता। वेदैस्तदनुयायिभिरार्षैर्ग्रन्थैस्तु वेदानामनादिनिधनत्वं सर्वकल्याणकरत्वञ्चोक्तमेव। वेदग्रन्था नेतिहासग्रन्थाः, न वा स्मृतिग्रन्थाः किन्तु ब्रह्मधर्मग्रन्थाः। 'सर्वे वेदा यत्पदमामनन्ति' (कठोप० १।२।१५) 'वेदैश्च सर्वैरहमेव वेद्यः' (श्री० भ० गी० १५।१५) 'यज्ञो मन्त्रब्राह्मणानां विषय' इति (४।१।६२) इत्यत्र वात्स्यायनोक्तेः, 'अग्निहोत्रफला वेदा' इति भारतोक्तेश्च। तत्रानुषङ्गिकरूपेण चान्यविषयप्रतिपादनम्।

पुनश्च स डांगे महाशय आह—"यीशुपूर्वीयसार्धसहस्रवर्षेभ्यः पूर्वं ब्राह्मणानां जीविकासाधनभूताः वेदाः संवृत्तास्तेनैव तद्रक्षणम् सुकरम्। यद्यपि सामाजिकदृष्ट्या वेदानां न कश्चिदर्थ आसीत्। हिन्दूनां सौभाग्यमिदं यत्तेषां समाजव्यवस्था सहस्रद्वयवर्षेभ्यः सामाजिकसंघटनस्याविच्छिन्नां परम्परामाधृत्य स्थिता। तदीया धार्मिकविधयः संस्काराः प्राचीनाः क्रान्तीरुज्जीवयन्ति स्म। परमत्र प्राचीनरूपेण तन्नाशोऽनिवार्य्य एव। इदानीं त्वितिहासज्ञैः केवलं प्राचीनस्मृतिलेखरूपेण लिखित्वा वेदाः संग्रहालये रक्षितुं शक्यन्ते। नान्यस्तेषामुपयोगो यतो यासां जातीनां समाजस्य च स्वार्था हितानि वा तेषां पठनपाठनादिभी रक्ष्यन्ते। ते तु समाजवादिसमुच्चतरावस्थामुपगन्तुं प्रवृत्ताः।"

वस्तुतस्तु समुन्नता रामयुधिष्ठिरविक्रमादित्यादयो वेदनिष्ठा एवासन्। आधुनिकाः समाजवादिनस्तु विपरीतबुद्धयोऽवनतिमेवोन्नतिं मन्यमाना नास्तिका एव भवन्ति। सर्वा अपि समृद्धयो नियन्त्रिता एव हितकारिण्यः। अल्पज्ञनिर्मितानित्यनियमापेक्षया परमेशप्रत्तनित्यनियमनियन्त्रणमेव कल्याणतमम्।

वेदानां किं तात्पर्य्यं कश्चतेषामुपयोग इत्यस्यार्थस्य ज्ञानं डाङ्गे महाशयस्य दृष्ट्या नगण्यम्। किन्तु स्वोपयोगीतिहाससाधनाय तदन्वेषणमिष्यते। तेन 'यज्ञविधिषु काष्ठद्वयनिघर्षेणाग्निरभिव्यज्यते स्म। लौहशून्यैः काष्ठमयैर्यज्ञमण्डपनिर्माणम्, गोदोहनं, दधिनिर्माणम्, पाषाणखण्डैरन्नपेषणम्, पशून्हत्वा चर्मोष्कृन्तनम्, मांसपाचनम्, नृत्यगानादिभिर्विनोदः, युद्धं, विजयः एवमादिभिर्विषयैः प्राचीनसमाजस्य जीवनपद्धतिर्ज्ञायते इत्येव तस्याध्ययनफलम्। मनुष्यपश्वाद्युत्पत्तिवर्णनम्, उषसः सौन्दर्य्यवर्णनम्, महाघनस्वनवर्णनम्, दानं, मन्त्रोद्घोषेण भूतप्रेताद्युत्सारणम्, प्राचीनसमाजप्रतिबिम्बज्ञानमेतैः सुकरम्। केचिन्मन्त्राः प्राचीनाः, केचिन्नवीनास्तेषां परिगणननिर्धारणादिकं प्राचीनैर्वेदैर्ब्राह्मणानामारण्यकानामुपनिषदां सम्बन्धाः। उपनिषदस्तदपेक्षयाऽर्वाचीनाः, सूत्रग्रन्थास्ततोऽप्यर्वाचीनाः इत्यादिकं सर्वमेव पाश्चात्यगुरूणामनुकरणमात्रमेवानेन विहितम्।

वस्तुतस्तु—वृक्षस्य शाखोपशाखापल्लवादिवद्वेदवृक्षस्यावान्तरभेदा एव मन्त्रब्राह्मणोपनिषदादयः सर्वेऽप्यपौरुषेया एव। कल्पनिरुक्तादयोऽपि

प्रवाहरूपेण नित्या एव। वेदा नियतानुपूर्वीका तद्भिन्नाः कल्पसूत्रादयोऽनियतानुपूर्वीका इति तेषां भेदः।

डाङ्गे महाशयोऽभ्युपैति यत् "पाश्चात्यैरप्येतत्कार्य्यं कृतं परन्तु साम्यसङ्घान्वेषणकार्य्यं तैर्न कृतमिति मया तदर्थं प्रयत्यते।" तत एव मार्क्साद्यनुसारेण साम्यसङ्घानुसारीतिहासान्वेषणाय तस्य च प्राचीनत्वसाधनाय वेदानुपयुनक्ति सः। तद्रीत्या तेषां सविधे ऐतिहासिकभौतिकवादसिद्धान्तस्य ज्ञानाय पाश्चात्यैर्भारतीयैर्वा प्राचीनैरितिहासकारैस्तत्सामर्थ्यं नासादितम्। यज्ञस्य यथार्थज्ञानमावश्यकम्। तेनैव वेदानां ब्राह्मणानां तदीयरहस्यमयीनां कथानां तात्पर्यं ज्ञातुं शक्यते। तद्रीत्या सामाजिकस्मृतयः पारम्पर्य्यं, धार्मिकविधयो ब्रह्मयज्ञयुग्मेन सार्धमेव प्रवर्त्तन्ते। आर्य्याणां विचारधारानुसारेण सृष्टिस्थितिप्रलयादयस्तदन्तर्गता एव। यज्ञज्ञानेन ब्रह्ममनुष्ययोः सम्बन्धोऽपि ज्ञातुं शक्यते। वेदानां ब्राह्मणानां महाभारतस्य साहाय्येन तत्प्राप्तुं शक्यम्। येन यज्ञं ब्रह्म च ज्ञातुं तत् प्रयत्नः।

तद्रीत्या सर्वदैव मानवानां समक्षे जीवनोपयोगिनामन्नवस्त्राश्रयाणां लाभाय प्रकृतिसङ्घर्षश्चलति। तदर्थमेवोत्पादनसाधनानामुत्पादनशक्तीनाञ्चान्वेषणसम्पादनञ्चावश्यकं भवति। तदर्थमेव सङ्घटनम्, योग्यता, कुशलता, निपुणतादिसम्पादनम्, तत्रैव भौगोलिकप्राकृतिकवातावरणादीनामुपयोगः। उत्पादनशक्त्यनुसारेणैव सामाजिकसंघटनं भवति। प्राक्कालिकः पाषाणकुठारहस्तः मृगया परायणो मानवः पूँजीवादसमाजं निर्मातुं समर्थो न भवति। वाष्पवैद्युतयन्त्रसम्पन्न आधुनिकः श्रमिको यन्त्राधिपतिश्च प्राचीनसमाजनिर्माणसमर्थ एव।

सर्वमेतदर्धसत्यमेव। धार्मिकाध्यात्मिकतत्त्वानां कालत्रयाबाध्यत्वेनाद्यापि तदुपयोगसम्भवात्। प्राचीनतमकालेऽपि महायन्त्रनिर्माणस्य सत्त्वेनैव तन्निषेधस्य मन्वादिभिरुक्तत्वात्। पुष्पकयानब्रह्मास्त्रपाशुपतास्त्रादिनिर्माणस्य च शास्त्रसिद्धत्वात्। अद्यापि यथा परमाण्वस्त्रादिपरीक्षणप्रतिबन्धोऽभ्युपगतः, काम्यते च सर्वैस्तन्निर्माणप्रतिबन्धः। यथा च देहेन्द्रियमनोबुद्ध्यादीनामात्मनियन्त्रणमभ्युपगम्यते तथैव सर्वस्यापि वैज्ञानिकाविष्कारस्य धार्मिकाध्यात्मिकनियमनियन्त्रणमप्यभ्युपेयमेव।

किञ्च धर्मब्रह्मतत्त्वज्ञानतदनुष्ठानसाक्षात्कारादिकमेव मानवजीवनस्य लक्ष्यम्, नहि भोजनवस्त्रादिसाधनोपसंग्रहादिकमेव लक्ष्यम् । यदुद्देश्येन यन्त्रादिनिर्माणं तदेव तत्प्रयोजनम् । नहि इङ्गालजलादिसमाहरणमेव तत्प्रयोजनम्, तच्चालपनाय तु तदपेक्षितम्, नहि तदेव तत्प्रयोजनमपि ।

वस्तुतस्तु 'यत्परः शब्दः स शब्दार्थः' इति न्यायेन मीमांसादिनिर्धारितमेव वेदतात्पर्य्यमभ्युपेयम् । शब्दमात्रश्रवणमात्रेण तात्पर्य्यावधारणन्तूपहासास्पदम् । 'विषं भुङ्क्ष्वे'ति वाक्यस्य वाच्यार्थं तु विषभक्षणप्रेरणमेव परं पुत्रं प्रति मातुस्तथा प्रेरणानुपपत्त्या शत्रुगृहभोजनं विषभोजनसदृशं, तस्माच्छत्रुगृहे भोजनं न कर्तव्यमित्येवार्थः तात्पर्य्यानुरोधेनेति मन्तव्यम् ।

आधुनिकास्तु-महाभाष्यस्याक्षरार्थतात्पर्य्यन्तु नावगन्तुं प्रभवन्ति तथापि नगरनदीनराधिपादिनाममात्रमाधृत्येतिवृत्तप्रपञ्चकल्पनं कुर्वन्ति ।

केचिन्मुस्लिमबन्धवश्च 'अहमन्नादोऽहमन्नाद' इति शब्दश्रवणमात्रेण वेदे स्वाभिमतस्य अहमदशब्दस्य सत्त्वं साधयन्ति । तथैव मार्क्सानुयायिनो यज्ञब्रह्मादिशब्दश्रवणमात्रेण किञ्चित्स्वाभ्यूहितं कल्पयन्ति, यत्सर्वथा वेदतात्पर्य्यविरुद्धं, वाच्यार्थविरुद्धञ्च ।

किञ्चाधुनिकदृष्ट्यातिप्राचीनेष्वपि मन्त्रेषु पूर्वं चरुपुरोडाशादिना यजनम् । पाश्चात्त्येषु ज्योतिष्टोमादिषु पश्वादिना पुरोडाशादिना च यजनम् ।

परमाधुनिकानामैतिहासिकानां दृष्ट्या पूर्वमार्य्याणां मांसादिकं जीवनसाधनमासीत् पश्चाद् व्रीहियवादिनिर्माणशिक्षणं जातम्, तदेतत्पौर्वापर्य्यव्यत्याससमाधानं कथमिव तैः करिष्यते ।

भारतीयशास्त्रदृष्ट्या कृतयुगे ज्ञानविज्ञानबाहुल्यमासीत् । आधुनिकानां दृष्ट्या तु तदानीं मानवज्ञानशैशवमेवासीत् । यस्मिन् कलौ ज्ञानविज्ञानबाहुल्यमाधुनिकैरभ्युपेयते तदा भारतीयशास्त्रदृष्ट्या ज्ञानविज्ञानशक्त्यादिह्रास एव ।

> जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः ।
> ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥
>
> ( न्यायकुसुमाञ्जलिः )

पाषाणदिभिः पुरोडाशप्रकृतिव्रीहियवादिपेषणम्, काष्ठसंघर्षेणाग्निप्रकटनम्, काष्ठतृणादिमयमण्डपनिर्माणं प्राचीनयुग इवाद्यापि वैदिकाः कुर्वन्ति। महामहावैभवशालिनामिन्द्रादिदेवानां मान्धात्रादिसम्राजामपि यज्ञे सैव यज्ञपद्धतिराद्रियते स्म। नहि तदानीमन्यासां सामग्रीणामसत्त्वात्तादृग्विधानम्, किन्तु पुण्याद्यदृष्टनिर्माणहेतुत्वात्तथा विधानम्। न च लौहाद्यभावा-त्तथाकरणं तेषु यज्ञेषु स्वधितिबाणभूषणादिषु लौहसुवर्णादिप्रयोग-विधानात्।

यदप्युक्तं तेन—"उत्पादनसाधनानामुत्पादनशक्तीनां परिवर्तनमेव क्रान्तिकारि भवति। मनुष्यसमाजस्य क्रियाशीलत्वादावश्यकतानाम्, परिवर्त्तनाच्च परिवर्त्तनमग्रेसरं भवति।" एतदपि निष्प्रमाणम्। उत्पादनानां, परिवर्त्तनानां सीमितत्वात्कालस्य निरवधिकत्वाच्च। तथाहि—हीगेलरीत्या राष्ट्रवादपर्य्यन्तं, मार्क्सरीत्या समाजवादपर्य्यन्तं तत्परिवर्त्तनम्। आधु-निकानां दृष्ट्या मार्क्सवादोऽपि जीर्णः संवृत्तः। मार्क्सानुयायिनोऽपि तत्र परि-वर्त्तनमिच्छन्ति। मार्क्सनिष्ठास्तु तन्न क्षमन्ते। तद्रीत्या समाजवादस्यैव परिवर्त्तनशीलत्वात्।

पुनः स एङ्गेल्स रीत्यैव कथयति यत् "निम्नयुगे मनुष्यस्य वन्याव-स्थासीत्। उष्णकटिबन्धे तदीयवनप्रदेशेषु वा समुत्पन्नो मनुष्यो वृक्षेषु निव-सन् हिंसकवन्यपशुभ्यः स्वात्मरक्षां विदधानः कन्दफलमूलादिना जीवन-निर्वाहं कुर्वाणः जीवति स्म। तदानीं तस्य भाषणशक्तिप्राप्तिरेव तदीयं मुख्यं साफल्यम्।" तदपि तुच्छम्—सृष्ट्यारम्भ एव ज्ञानभाषाप्राप्तेरुक्तत्वात्।

अत एव 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।' (श्वे० उ० ६।१८) इति श्रुत्या परमेश्वरकर्तृकमेव ब्रह्मनिर्माणं वेदप्रदान-ञ्चोक्तम्। यथाद्यत्वे पितरौ भाषां ज्ञानञ्च प्रयच्छतस्तथैव पूर्वमपीति मन्तव्यम्। भाषासंसर्गमन्तरा भाषाज्ञानं स्वतो न विकसतीति भृशं परीक्षिता बालाः।

यदपि—"चानेकसहस्रवर्षानन्तरं मध्ययुगमाविश्य मत्स्यादिजलजन्तु-भक्षणादिना तदानीन्तनो मनुष्यः जीवनं यापितवान्। बहोः कालादग्नि-प्रयोगोऽपि तेन ज्ञातः। ततः प्रभृत्यग्निपक्वमांसभक्षणेन जीवनं प्रवृत्तम्। प्राकृतजलवायुस्थानादिप्रभावयुक्तः संवृत्तः। वन्यावस्थायामेव नदीनां

समुद्रस्य च तटेषु भ्राम्यन् विस्तृतभूमिप्रदेशं प्राप्तः। एतत्प्रसारप्रमाणन्तु पाषाणमयानां निर्मसृणानां सरलानामायुधानां सर्वत्र प्रदेशे प्राप्तिरेव।

प्रस्तरयुगप्रारम्भे तन्निर्माणम्, ततः कन्दादिसमन्वेषणम्, ततो मृगयोपलब्धपशुमांसपाचनकलादिकं ज्ञातम्। तदर्थं गदाभल्लादिनिर्माणकौशलम्। भोजनस्यानिश्चितप्राप्त्यैव नरमांसभक्षणमपि प्रचलितम्। उन्नतयुगे-धनुर्बाणादिनिर्माणकौशलम्, पशुवधस्तन्मांसभक्षणस्य तदानीं प्राधान्यं संवृत्तम्। तदानीमेव मृन्मय-काष्ठमयपात्रनिर्माणम्, ग्रामादिषु सामूहिकरूपेणावासादिकञ्च प्रवृत्तम्। अङ्गुलिभिरेव सूत्रादिनिर्माणं, वेत्रादिमयपात्रनिर्माणं, पाषाणमयकुठारादिभिः नौनिर्माणम्। यथा अर्धवन्यावस्थायां लौहमयखड्गकौशलं, सभ्यदशायामग्निमयभुशुण्डीशतघ्न्यादिनिर्माणकौशलं तथैव धनुर्बाणादीनामेव युद्धे निर्णायकास्त्रत्वम् तदानीम्। अर्धवन्यावस्थायां पशुपालनवृक्षारोपणादिज्ञानं सम्पन्नम्। मध्ययुगे क्षेत्रादिसेचनकला, भवननिर्माणार्थमिष्टिकानिर्माणम्, पाषाणादिप्रयोगोऽप्यवगतः। एतद्विकासक्रमे मिश्र अमरीकादिदेशभेदेन कालभेदोऽपि ज्ञातव्यः।

सामूहिकपशुरक्षणार्थं घासादिपूर्णविस्तृतक्षेत्रनिर्माणमपि प्रवृत्तम्। येषामार्य्याणां सेमाइटजातीयानाञ्च सविधे भोजनार्थं दुग्धमांसादिकं पर्याप्तमासीत्, तेषां स्वास्थ्यादिकं शोभनमासीत्। तत एव तेषां विकासोऽप्युच्चस्तरीयः। मेक्सिको निवासिनां निरामिषभोजिनां मस्तिष्कं मांसादिभोजिनामार्य्याणामपेक्षया लघुभूतमासीत्। उन्नतयुग एव लौहद्रावणपद्धतिर्विकसिता। तदैवाक्षरलेखनकला प्रवृत्ता। तदानीमुक्तादेव साधनसौकर्य्यबाहुल्यात्प्रभूतभोजनसामग्री संगृहीता। तदैव हलादिनिर्माणेन व्यवस्थितकृषिव्यवस्था प्रचलिता। कुठारादिभिररण्यच्छेदनेन गवादिपशुचरक्षेत्रनिर्माणम्।

होमरस्य काव्येषु विशेषतः इलियाग्रन्थे उन्नतयुगस्योत्कृष्टावस्थोपलभ्यते। यत्रायतानि शस्त्राणि, भस्त्रा, कुलालचक्रं, नौः, सुरा, तैलं, धातुशिल्पं, रथो भवनानि च वर्णितानि। सीजर टैस्टिटस प्रभृतिनिर्मितकाव्येषु जर्मनीवास्तव्यानां यद्वर्णनारम्भकालेन तुलयितुं शक्यते। तदानीं होमरवर्णिता यूनानजना तद्युगशिखरमारूढा लक्ष्यन्ते। मारगनरीत्या—वन्ययुगे प्रकृतिनिर्मितैव

भोजनसामग्री, कानिचिदेव पाषाणमयान्यस्त्राणि । अर्धवन्ययुगे पशुपालनं कृषिज्ञानं सम्पन्नम् । मानवपरिश्रमक्रियाशीलताभ्याञ्चोत्पादनवर्धनम् । सभ्ययुगे रूपान्तरेणोत्पादनं परिवर्त्तनं विविधकलाकौशलप्रादुर्भावश्च ।

सभ्यावस्थायाः प्रवेशकाले आदिमसाम्यसमाजस्यान्तः संवृत्तः । तदानीमेव श्रमविभाजनम्, विविधवस्तुनिर्माणं, तद्विनियमप्रथा, व्यक्तिगत-सम्पत्तिः, समाजे निर्धनधनिकादिवर्गभेदः, वर्गशोषणं, दासत्वं, नारीणामुपरि नरशासनम्, नगरग्रामादिषु विरोधः, शासनसत्ताजन्म, शासनसत्तया शोषक-वर्गस्य साहाय्यम्, शोषितवर्गस्य शोषणम्, वासनाकामनादीनां प्रवर्धनेनैव सभ्यतोत्पत्तिः । सभ्यतायाः जन्मारभ्याद्ययावन्नग्नलोभ एव तदात्मा भूत्वा वर्धते । तत्र व्यक्तिगतधनसामग्री वर्धते । यत्र सम्पूर्णसमाजस्य नाधिकारः, यस्य च तुच्छं व्यक्तितर्पणं फलम्, कलाविज्ञानादिवृद्धिरपि तदङ्गत्वेनैव भवति ।'' सर्वमेतद्वेदादिशास्त्रविरुद्धम् । तद्रीत्या सृष्टेरीश्वरज्ञानकार्य्यत्वात् ।

सर्वज्ञः सर्वशक्तिरीश्वरः-सृष्टिं निर्माय तद्रक्षणसञ्चालनाभ्यामेव-सर्वज्ञानकरं वेदादिशास्त्रं ब्रह्मणे समुपदिशति । स च स्वसृष्टपुत्रपौत्रादिभ्यस्त-देवोपदिशति । ह्रासकाले ज्ञानक्रियाशक्तिह्रासविकासादिभ्योऽनेकावस्था अवान्तराः समुद्भवन्ति, धर्माधर्मतारतम्येन तन्मूलकह्रासविकासतारतम्य-स्यावश्यम्भावित्वात् । न च वेदशास्त्रप्रामाण्यं नास्ति, तेन भवतोऽपि तदाश्रित्यैव प्रागुक्तप्रपञ्चस्य सिषाधयिषितत्वात् ।

तथाहि—''वेदेषु विविधाः कल्पनाश्च स्वप्नांश्च हित्वा पूर्वजानां वन्यावस्था जीवनप्रणाली च वर्णिता । तत्र तेषां क्रियाकलापानां प्रगतीनां स्मृतयो रक्षिताः । तज्ज्ञानमेवार्य्यैर्युगमन्वन्तरादिकल्पना कृता । तदानीं मानवाः प्रतिवस्तूनि प्रतिघटनाश्च चेतनानि जीवितानि च स्वानुरूपाण्येकप्रकल्पा व्यवहरन्ति स्म । प्राकृतिकसम्बन्धस्तेषां तदानीं यावदविच्छिन्न एवासीत् । तेनैव सूर्य्यचन्द्र-नक्षत्र-ऋतु-वृक्ष-पर्वत-नदी भूमि-प्रभृतीनि वस्तूनि चेतनानि व्यक्तित्वान्वितानि-देवान् देवीश्च मत्वा व्यवहरन्ति स्म । मृतान्यपि जीविता-न्येव मन्यन्ते स्म । विज्ञानाभावात् स्वैरं कल्पनाः प्रभवन्ति स्म । न केवलमेकत्रैव किन्तु सर्वत्रैव तादृक् समानाः कल्पनाः प्रसुवते स्म । ता एव पौराणिककथाः । सामाजिकसम्बन्धाभिव्यक्तिरेव तासां तत्त्वम्''

इत्यादि वेदादिप्रामाण्यमाश्रित्यैव भवता व्याहृतम्। वेदादीनामप्रामाण्ये तदाश्रितभवन्मतस्याप्यप्रामाण्यमेव, तेषां प्रामाण्ये तु वेदाङ्गव्याकरण-निरुक्तकल्पमीमांसादिनिर्धारितस्य वेदार्थस्य कथमपलापः संभवति। तदङ्गीकारे सर्वा अपि भवतः कल्पना निराधाराः प्रमाणबहिर्भूता एव भवन्ति।

आर्य्यसाम्यसंघस्य सामूहिकोत्पादनपद्धतिनामके तृतीयेऽध्याये तल्लेखको महाभारतं वैदिकसाहित्यञ्च तत्र प्रमाणयति। परं तत्रापि स्वाभ्यूहितसिद्धान्तानुगुणभागं गृहीत्वा स्वविरुद्धांशं परित्यजति। ईश्वर-वादं धर्माधर्मवादञ्चान्धविश्वासमूलकं मन्यते। अयमेवार्धकुक्कुटीन्यायो-ऽर्धजरतीयन्यायो वा। नहि कुकुट्या अर्धो भागः पाकायान्यश्च प्रसवाय-कल्पते। परमेतद्विरोधं लेखको नानुसंदधाति। तद्रीत्या वेदादिशास्त्रेषु सर्वोपीतिहासः परिवर्त्तनशीलः। परिवर्त्तनेन सार्धमेव निर्माणं निर्वाणञ्च, संघर्षो ध्वंसश्च प्रवर्त्तते। तदेतत्सर्वं नवीनव्यवस्थोत्पत्ति यावत्प्रचालति। नवीनव्यवस्थोत्पत्तौ कञ्चित्कालं स्थैर्य्यं भवति। एतानि परिवर्त्तनानि मनुष्यं तत्समाजञ्च प्रभावयन्ति। तेनैवैकयुगस्य विशेषताऽन्ययुगविशेषता-विरोधिनी भवति। शास्त्रेषु कृत--( सत्य ) त्रेता-द्वापर-कलिभेदेन युग-चतुष्टयव्यवस्था विद्यते। कृतयुगे मानवसमाजारम्भः, ततो युगद्वयमतीत्य महाभारतयुद्धान्ते कलिप्रवेशः। इदानीं यावन्न तदन्तः। एतेन प्रतियुगं सम्पत्तिसमुत्पादनवितरणसामाजिकसम्बन्धविवाहपरिवारविचाराचारादिनियमा भिद्यन्ते।

यद्यपि संसारस्य प्राकृतत्वेन प्रकृतेश्च क्षणपरिणामित्वेन परिवर्त्तन-शीलत्वं नासङ्गतम्, तथापि प्रकृतिनियामकस्य परमेश्वरस्य कूटस्थत्वेना-परिवर्त्तित्वमेव। अत एव तदीयसंविधानस्य वेदादिशास्त्रस्य तदुक्त-धर्माधर्मादेश्च नानिश्चितरूपत्वम्। अत एव प्रतियुगं धर्मः परिवर्त्तते। धर्मश्च-मानवजीवनप्रकारविशेषः। सच तन्नियम एव, धारयतेर्धातोरर्थानुगमात्। तेन धनोत्पादनं यौनसम्बन्धेन सन्तानोत्पादनं धर्म इत्यपास्तम्।

नहि भारते वेदे वा अर्थकामयोरेव धर्मत्वमुक्तम्। मनुना—

"अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते।

धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥" ( २।१३ )
इति श्रुतिगम्यस्य धर्मस्यार्थकामभिन्नत्वोक्तेः ।

धर्मस्य वैदिकचोदनालक्षणत्वेनापरिवर्त्तित्वाभ्युपगमात् । त्वदुक्त-धर्मस्यार्थकामान्तर्गतत्वेन तद्भिन्नत्वात् । तत्तद्देशकालादिनिमित्तसापेक्षा-नपेक्षधर्मस्वरूपस्य वेदैकगम्यत्वेन वेदस्यैकरूपत्वेन धर्मस्यैकरूपत्वमेव ।

'कलिः शयानो भवति सञ्जिहानस्तु द्वापरः ।
उत्तिष्ठंस्त्रेता भवति कृतं सम्पद्यते चरन् ॥' (ऐ० ब्रा० ७।१५)

इति ब्राह्मणवचनेनापि सत्त्वादि तारतम्यमेवोच्यते। त्वद्रीत्या तु कृते ज्ञानविज्ञानापकर्षः। कथमिदं वचनं त्वदिष्टसाधनमिति तु त्वयैव ज्ञायताम् ।

वस्तुतः एवमेव शिलाशकलमुद्रादिसमाश्रयणेन कल्पनाप्रासादाव-चितिरैतिहासिकानामिति न तेन तत्त्वविज्ञानसंभावनाऽपि । केवलं चरन्निति शब्देनार्य्याणां भ्रमणशीलत्वमाश्रित्य तादृक् निर्मूलकल्पनाप्रासाद-निर्माणम्। महाभारतादिषु कृतयुगस्य सर्वश्रेष्ठत्वमुक्तम्। ज्ञानविज्ञानधर्म-प्राधान्येन राज्यादिनैरपेक्ष्येण धर्मैकनियन्त्रितमेव तदानींतनानां प्रजानां जीवनमासीत् ।

"न वै राज्यं न राजासीन्न च दण्डो न दाण्डिकः ।
धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम् ॥" इत्युक्तेः ।
( म० भा० १२।५९।१४ )

तदनन्तरं सत्त्वोत्कर्षस्य ह्रासाद्रजस्तमसोरुत्कर्षतारतम्यात् धर्म-ब्रह्मनिष्ठाया अपकर्षात्; कामक्रोधादिप्राखर्य्यात्; प्रजासु मात्स्यन्यायो-पजनितपीडितत्वेन राज्यादिनिर्माणप्रयोजनम् वृत्तम्। पाश्चात्त्येषु युगेषु तानि तानि वर्णनान्यनादृत्यापि समुद्धृतब्राह्मणवचनस्याक्षराणि सम्यगवलोक्य तादृगर्थोऽवगतुं शक्यते ।

तथाहि—रोहितस्यारण्ये संवत्सरचरणानन्तरं भाविनं हरिश्चन्द्रादीनां वृत्तान्तं दर्शयति—

"अथ हैक्ष्वाकं वरुणो जग्राह। तस्य होदरं जज्ञे। तदुह रोहितः शुश्राव। सोऽरण्याद् ग्राममेयाम। तमिन्द्रः पुरुषरूपेण पर्येत्योवाच। नाना-

श्रान्ताय श्रीरस्तीति रोहित शुश्रुम। पापो नृषद्वरोजन इन्द्र इच्चरतः सखा चरैवेति। इति।" ( ऐ. ब्रा. ७।१५ )

अथ रोहितस्यारण्ये संवत्सरवासानन्तरमैक्ष्वाकमिक्ष्वाकुवंशोत्पन्नं हरिश्चन्द्रं वरुणो देवो रोगरूपेण जग्राह। वरुणेन गृहीतस्य हरिश्चन्द्रस्योदरं जज्ञे। जलेन पूरितमुच्छूनं महोदरनामकं रोगस्वरूपमुत्पन्नम्। तदुह तदपि सर्वमरण्ये स्थितो रोहितः पुत्रो मनुष्यमुखाच्छुश्राव। श्रुत्वा च स रोहितः पितरं द्रष्टुमरण्याद् ग्रामं प्रत्याजगाम। आगच्छन्तं रोहितं मार्गमध्ये इन्द्रः केनचिद् ब्राह्मणपुरुषरूपेण प्राप्येदमुक्तवान्। आसमन्ताच्छ्रान्तः सर्वत्र पर्यटनेन श्रान्तिं प्राप्तस्तद्विपरीतोऽनाश्रान्त एकत्रैव निवासशीलस्तादृशाय तथाविधस्य पुरुषस्य श्रीर्बहुविधा सम्पन्नास्ति।

यद्वा नानेति पदच्छेदः। श्रान्ताय सर्वत्र पर्यटनेन श्रान्तस्य नाना-श्रीर्बहुविधा सम्पदस्तीत्यनेन प्रकारेण रोहित वयं नीतिकुशलानां पुरुषाणां मुखाच्छुश्रुम। वरो जनो विद्यादिभिः श्रेष्ठोऽपि पुरुषो नृषत्पापो नृषु मनुष्येषु सीदतीतिनृषत्। श्रेष्ठोऽपि बन्धुगृहेषु सर्वदावस्थितस्तैरवज्ञातः पापस्तुच्छो भवेत्। अतस्तव पितृगृहे वासो न युक्तः। न चारण्ये चरतो मम सहायो नास्तीति शङ्कनीयम्। इन्द्र एव परमेश्वर एव चरतस्तव सखा भविष्यति। तस्माच्चरैव सर्वथाऽरण्ये चरस्वेत्येवमुवाच। एवं बहुष्वपि पर्यायेषु द्रष्टव्यम्।

तत्रेन्द्ररोहितयोः संवादे प्रथमं पर्यायं दर्शयित्वा द्वितीयं पर्यायं दर्शयति—

"चरैवेति वै मा ब्राह्मणोऽवोचदिति ह द्वितीयं संवत्सरमरण्ये चचार। सोऽरण्याद् ग्राममेयाय। तमिन्द्रः पुरुषरूपेण पर्येत्योवाच—

पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलग्रहिः।

शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हतश्चरैवेति। इति।" (ए. ब्रा ७।१५)

ब्राह्मणरूपस्येन्द्रस्य वाक्यं श्रुत्वा ब्राह्मणोऽयमरण्ये चरैवेत्येवं मामुक्तवानिति मनसि ब्राह्मणवाक्ये महान्तमादरं कृत्वा पुनरप्येकं संवत्सरमरण्ये चरित्वा पश्चात्पितरं द्रष्टुं ग्राममागच्छन्तं तं पुनरपीन्द्रो ब्राह्मणरूपेणागत्यैवमुवाच। चरतः पर्यटनं कुर्वतः पुरुषस्य जङ्घे पुष्पिण्यौ भवतः। यथा पुष्पयुक्तो वृक्षः शाखा लता वाऽथवा सुगन्धोपेता सेव्या भवति।

एवं चरतो जङ्घे श्रमजयेन सेव्ये भवतः। तथैवात्मा मध्यदेहो भूष्णु-र्वर्धिष्णुः फलग्रहिरारोग्यरूपफलयुक्तो भवति।

यथा वर्धमानो वृक्षः कालेन फलानि गृह्णात्येवं चरतः पुरुषस्य बीजादिदीपनादिपाटवेन मध्यदेह आरोग्यरूपं फलं गृह्णाति। तथैवास्य चरतः पुरुषस्य सर्वे पाप्मानः सर्वपापानि प्रपथे प्रकृष्टे तीर्थक्षेत्रादिमार्गे श्रमेण तत्तद्देवतादिदर्शने तीर्थयात्रादि प्रयासेन हता विनाशिताः सन्तः शेरे शेरते शयाना इव भवन्ति। यथा शयानाः पुरुषाः स्वकार्यं कृषि-वाणिज्यादिकं कर्तुमशक्ता एवं पुण्येन विनष्टाः पाप्मानो नरकं दातुम-समर्था इत्यर्थः। तस्मात्सर्वथाऽरण्ये चर, न पितुर्गृहेऽवतिष्ठस्व।

तृतीयं पर्यायं दर्शयति—

'चरैवेति वै मा ब्राह्मणोऽवोचदिति ह तृतीयं संवत्सरमरण्ये चचार। सोऽरण्याद् ग्राममेयाय। तमिन्द्रः पुरुषरूपेण पर्येत्योवाच—

आस्ते भग आसीनस्योर्ध्वस्तिष्ठति तिष्ठतः।
शेते निपद्यमानस्य चराति चरतो भगश्चरैवेति॥ इति।"

(ऐ० ब्रा० ७।१५)

भगः सौभाग्यमासीनस्योपविष्टस्यास्ते तथैव तिष्ठति न तु वर्धते, अभि-वृद्धिहेतोरुद्योगस्याभावात्। तिष्ठत उपवेशनं परित्यज्योत्थापनं कुर्वतः पुरुषस्य भग ऊर्ध्वोऽभिवृद्धेरुन्मुखस्तिष्ठति। कृषिवाणिज्याद्युद्योगस्य सम्भा-वितत्वात्। निपद्यमानस्य भूयो शयानस्य भगः शेते निद्रां करोति। विद्यमानधनरक्षादिचिन्ताया अप्यभावात्सर्वथैव विनश्यति। चरतस्तेषु तेषु देशेष्वर्जनार्थं पर्यटनं कुर्वतः पुरुषस्य भगः सौभाग्यं चरति दिने दिने वर्धते। तस्मात्त्वं चरैवेति न त्वेकत्र तिष्ठ।

चतुर्थं पर्यायं दर्शयति—

"चरैवेति वै मा ब्राह्मणोऽवोचदिति ह चतुर्थं संवत्सरमरण्ये चचार। सोऽरण्यात् ग्राममेयाय। तमिन्द्रः पुरुषरूपेण पर्येत्योवाच—

कलिः शयानो भवति सञ्जिहानस्तु द्वापरः।
उत्तिष्ठंस्त्रेता भवति कृतं सम्पद्यते चरंश्चरैवेति। इति" (ऐ० ब्रा० )

चतस्रः पुरुषस्यावस्थाः। निद्रा, तत्परित्यागः, उत्थानं सञ्चरणञ्चेति। ताश्चोत्तरोत्तरश्रेष्ठत्वात्कलिद्वापरत्रेताकृतयुगैः समानाः। ततश्चरणस्य सर्वोत्तमत्वात् चरैवेति।

पञ्चमं पर्यायं दर्शयति—

"चरैवेति वै मा ब्राह्मणोऽवोचदिति ह पञ्चमं संवत्सरमरण्ये चचार। सोऽरण्याद् ग्राममेयाय। तमिन्द्रः पुरुषरूपेण पर्येत्योवाच—

चरन्वै मधुविन्दति, चरन्स्वादुमुदुम्बरम्।

सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरंश्चरैवेति। इति।"

( ऐ० ब्रा० ७।१५ )

चरन्नेव पुरुषः क्वचिद् वृक्षाग्रे मधु माक्षिकं लभते। क्वचित्स्वादु मधुरमुदुम्बरादिफलविशेषं लभते। एतदुभयमुपलक्षणम्। तत्र तत्र विद्यमानं भोगविशेषं लभते। तत्र सूर्यो दृष्टान्तः। यः सूर्यः सर्वत्र चरन्नपि न तन्द्रयते कदाचिदप्यलसो न भवति तस्य सूर्यस्य श्रेमाणं श्रेष्ठत्वं जगद्वन्द्यत्वं पश्य। तस्माच्चरेव।

इत्थमिन्द्रकृतेन रोहितोपदेशेन चरतो रोहितस्य स्वजीवने पितुरारोग्ये च कारणभूतं श्रेयो लाभं दर्शयति—

'चरैवेति वै मा ब्राह्मणोऽवोचदिति ह षष्ठं संवत्सरमरण्ये चचार।

सोऽजीगर्तं सौयवसिमृषिमशनयापरीतमरण्य उपेयाय। इति।"

( ऐ० ब्रा० ७।१५ )

षष्ठे संवत्सरे पूर्ववदरण्यसंचारी स रोहितः कञ्चिदृषिं तस्मिन्नरण्य उपेयाय प्राप्तवान्। कीदृशमृषिमजीगर्तनामकं सूयवसस्य पुत्रमशनया परीतमन्नालाभेन क्षुत्पीडितम्।

अथाजीगर्तरोहितयोः संवादं दर्शयति—

'तस्य ह त्रयः पुत्रा आसुः। शुनःपुच्छः, शुनःशेपः, शुनोलाङ्गूल इति। तं होवाच। ऋषेऽहन्ते शतं ददाम्यहमेषामेकेनात्मानं निष्क्रीणा इति। स ज्येष्ठं पुत्रं निगृह्णान उवाच नन्विममिति। नो एवेममिति कनिष्ठं माता। तौ ह मध्यमे सम्पादयाञ्चक्रतुः शुनःशेपे। तस्य ह शतं दत्त्वा। स तमादाय। सोऽरण्याद् ग्राममेयाय। इति।" ( ऐ० ब्रा० ३३।३ )

तस्याजीगर्तस्य शुनःपुच्छादिनामकास्त्रयः पुत्रा आसुः। पुत्रवन्तमृषिं रोहित उवाच। हे ऋषे ते तुभ्यमहं गवां शतं ददामि। (दत्त्वा चाहमेषां पुत्राणां मध्य एकेन केनचित्पुत्रेणात्मानं मद्देहं वरुणान्निष्क्रीणे मूल्यं दत्त्वाऽऽत्मानं मोचयामीति। एवमुक्तः सोऽजीगर्तो) ज्येष्ठं पुत्रं शुनःपुच्छनामकं हस्तेन निगृह्णानः स्वसमीपे समाकर्षन् रोहितं प्रत्येवमुवाच। तुभ्यमेकः पुत्रोदीयत इमं तु शुनःपुच्छं तु न ददामि। मम प्रियत्वादिति। ततो माता कनिष्ठं हस्तेन गृहीत्वैवमुवाच। इमं शुनोलाङ्गूलं मम प्रियं नो एव, सर्वथा न ददामीति। ततस्ता उभौ मातापितरौ मध्यमे पुत्रे शुनःशेपे दानं सम्पादयाञ्चक्रतुरङ्गीकृतवन्तौ। ततस्तस्याजीगर्तस्य स रोहितो गवां शतं दत्त्वा तं शुनःशेपमादायावस्थितः। ततः स रोहितस्तेन शुनःशेपेन सहारण्यात् स्वकीयं ग्रामं प्रत्याजगाम।

तदागमनादूर्ध्वकालीनं वृत्तान्तं दर्शयति—

"स पितरमेत्योवाच। तत हन्ताहमनेनात्मानं निष्क्रीणा इति। स वरुणं राजानमुपससारानेन त्वा यजा इति। तथेति। भूयान् वै ब्राह्मणः क्षत्रियादिति वरुण उवाच। तस्मा एतं राजसूयं यज्ञक्रतुं प्रोवाच। तमेतमभिषेचनीये पुरुषं पशुमालेभे। इति"। (ऐ० ब्रा० ७।१५)

स रोहितः पितरमागत्यैवमुवाच। हे तत पितर्हन्तावयोर्हर्षः सम्पन्नः। अहमनेन शुनःशेपरूपेण मूल्येनात्मानं मद्देहं वरुणान्निष्क्रीणै। मूल्यं दत्त्वात्मानं मोचयामीत्यर्थः। तथोक्ते स हरिश्चन्द्रो वरुणमुपेत्यानेने शुनःशेपेन ब्राह्मणेन त्वा त्वां यक्ष्यामीत्युक्तवान्। स वरुणोऽपि तथेत्यङ्गीकृत्यैवमुवाच। क्षत्रियात्तवपुत्रात् रोहितादप्ययं ब्राह्मणो भूयानभ्यधिक एव मम प्रिय इति। उक्त्वा तस्मै हरिश्चन्द्राय कर्त्तव्यत्वेन राजसूयमुपदिदेश च। स हरिश्चन्द्रो राजसूयं प्रक्रम्य तस्य मध्ये योयमभिषेचनीयाख्य एकाहः सोमयागस्तस्मिंस्तमेतं शुनःशेपं पुरुषं पशुमालेभे सवनीयपशुत्वेनालब्धुं निश्चितवान्।

अत्र प्रसङ्गे 'कृतं सम्पद्यते चरन्नि'तीन्द्रेण चरणलक्षणस्य कृतस्य प्रशंसोक्ता, न शयानत्वादिलक्षणानां कल्यादीनाम्। तच्छ्रुत्वैव पञ्चमेऽपि संवत्सरे रोहितोऽरण्ये चचार। इन्द्रोपदेशेनारण्येषु चरणप्रसङ्गेनैव कालयापनात् कालान्तरे शुनःशेपोपहारेण वरुणमाराध्य रोहितः स्वं पितरञ्च मोचितवान्।

हरिश्चन्द्रस्य राजसूयानुष्ठानं दर्शयति—

"तस्य ह विश्वामित्रो होतासीज्जमदग्निरध्वर्युर्वसिष्ठो ब्रह्माऽयास्य उद्गाता। तस्मा उपाकृताय। नियोक्तारं न विविदुः। स होवाचाजीगर्तः सौयवसिर्मह्यमपरं शतं दत्ताहमेनं नियोक्ष्यामीति। तस्मा अपरं शतं ददुस्तं स निनियोज। इति" ( ऐ० ब्रा० ७।१६ )

विश्वामित्रादयो महर्षयस्तस्य हरिश्चन्द्रस्य यागे राजसूये होत्रादयश्चत्वारो महर्त्विज आसन्। तत्र जमदग्निरध्वर्युरभिषेचनीये सोमयागे तं शुनःशेपं सवनीयपशुत्वेनोपाकृतवान्। बर्हिर्युक्तया प्लक्षशाखया मन्त्रपुरःसरं समुपस्पृश्य स्वीचकार उपाकरणम्। तत ऊर्ध्वं यूपबन्धनं नियोजनम्। तस्य क्रूरकर्मत्वादध्वर्युर्न नियोजने प्रवृत्तः। तत उपाकृतायास्मा उपाकरणेन संस्कृतस्य शौनःशेपस्य नियोक्तारं यूपे बन्धनकर्तारं क्रूरं कञ्चिदपि पुरुषं न विविदुर्न लेभिरे। तदानीं सूयवसस्य पुत्रः शुनःशेपस्य पिता सोऽजीगर्त ( उवाच ) मह्यं पूर्वस्माच्छतादपरं गोशतं हे यजमानर्त्विजो दत्त ततोऽहमेनं शुनःशेपं यूपे नियोक्ष्यामि। रशनया कट्यां शिरसि पादयोर्बध्वा रशनाग्रस्य यूपे बन्धनं नियोजनं तदहं करिष्यामीति। तस्मा अजीगर्तायापरं गोशतं ददुः। तं च शुनःशेपं सोऽजीगर्तो निनियोज। धातोर्द्विर्भावं परित्यज्योपसर्गस्य द्विर्भावश्छान्दसः।

अथ विशसनप्रवृत्तिं दर्शयति—

'तस्मा उपाकृताय नियुक्तायाऽऽप्रीताय पर्यग्निकृताय विशसितारं न विविदुः। सहोवाचाजीगर्तः सौयवसिर्मह्यमपरं शतं दत्ताहमेनं विशसिष्यामीति। तस्मा अपरं शतं ददुः। सोऽसिं निःशान एयाय। इति।" ( ऐ० ब्रा० ७।१६ )

उपाकरणनियोजने पूर्वमुक्ते। आप्रीसंज्ञिताभिरेकादशभिः प्रयाज याज्याभिर्यद्यजनं तदा प्रीणनम्। दर्भरूपेणोल्मुकेन त्रिःप्रदक्षिणीकरणम् तत्पर्यग्निकरणम्। तथाविधसंस्कारचतुष्टययुक्ताय तस्मै तस्य शुनःशेपस्य विशसितारं हिंसितारं पुरुषं क्रूरात्मानं कञ्चिदपि पुरुषं न लेभिरे। ततोऽजीगर्तः पूर्ववदपरं गोशतं गृहीत्वा मारयितुमसिं खड्गं निःशानो निशितं तीक्ष्णं कुर्वन्नेवेयाय जगाम।

तथाचेष्टं मारणायोद्यतं पितरं वीक्ष्य शुनःशेपः हा कष्टमेतत्सम्पन्नम्। एते मां मनुष्यव्यतिरिक्तमजादिपशुमिव मारयिष्यन्तीति शुशोच। ततो विश्वामित्रसङ्केतेन देवानां मध्ये मुख्यं प्रजापतिं स्तुतवान्। प्रजापतेर्निर्देशेनाग्निम्, तस्य निर्देशेन सवितारम्, सवितुर्निर्देशेन वरुणम्, वरुणस्य निर्देशेन पुनरप्यग्निम्, अग्नेर्निर्देशेन विश्वान् देवान्, तेषां निर्देशेनेन्द्रं तुष्टाव। इन्द्रः प्रीतः सन् शुनःशेपाय स्वमनसा सुवर्णमयं रथं दत्तवान्। अश्विनोरुपासनञ्चादिष्टवान्। सोऽश्विनौ स्तुत्वा तयोर्निर्देशेनोषसं तुष्टाव। उक्तानां सर्वासां देवतानामनुग्रहेण शुनःशेपः सर्वात्मना पाशमुक्तोऽभूत्। देवैर्दत्तत्वात्तस्य देवरातेति नाम सम्पन्नम्। हरिश्चन्द्रश्च निःशेषेण रोगरहितो जातः। देवतानुगृहीतं तं शुनःशेपं विश्वामित्रादयः सर्व एवर्त्विजः अभिषेचनीयाख्यस्याह्नः समाप्तिमधिगन्तुम् ( अनुष्ठातुम् ) अन्वरुन्धन्। तदनन्तरं शुनःशेप एतमभिषेचनीयाख्यं सोमयागमञ्जःसवं ददर्श। इष्टिपशुसाङ्कर्यमन्तरेणाञ्जसर्जुमार्गेणानुष्ठापितवान्।

हरिश्चन्द्रसहितेष्वृत्विक्षु विस्मितेषु शुनःशेपोऽधुनाकस्य पुत्र इति विचारे प्रवृत्ते शुनःशेपो विश्वामित्रपुत्रत्वमङ्गीकृत्य सहसा तदीयमङ्कमाससाद। तदानीं सूयवसपुत्रोऽजीगर्तो विश्वामित्रमुवाच—'महर्षे मम पुत्रं मह्यं देहीति। प्रजापत्यादयो देवा शुनःशेपं मह्यं दत्तवन्तस्तस्मात्तुभ्यं न दास्यामीति विश्वामित्रो न्यषेधीत्। देवैर्दत्तत्वात् शुनःशेपो देवरातनामधारी बभूव। विश्वामित्रेण निराकृतः सोऽजीगर्तः शुनःशेपं प्रत्येवमुवाच—"हे पुत्र त्वं विश्वामित्रादपगतः सन्नस्मद् गृहे गच्छ। तव माताहञ्च उभावपि विशेषेण तवाह्वानं करवावहै। त्वं जन्मनाङ्गिरोगोत्रोत्पन्नः अजीगर्तस्य पुत्रः कविर्विद्वानित्येवं सर्वत्र प्रसिद्धः प्रजापतिना सम्पादितादङ्गिरोगोत्रादपगतो मा भवेति। शुनःशेपश्च 'नीचतमेष्वपि पुरुषेषु यन्न दृश्यते तथाविधं क्रूरं कर्म त्वं कृतवानसि। मन्निमित्तञ्च गवां त्रीणि शतानि वृतवानसि। कथं पुनर्मां स्वगृहं नेतुमभिलषसीत्युत्तरयति स्म।

शुनःशेपेनोपालब्धोऽजीगर्तः प्रत्युवाच—हे तात मदनुष्ठितं पापं मां बहुसन्तापयति। गवां शतत्रयञ्च तवैव भविष्यति, नेतरयोः पुत्रयोः, पुन-

मंद्गृहमेव गच्छेति। असन्धेयं पापं त्वया विहितमिति शुनःशेपः प्रत्य-वोचत्। विश्वामित्रश्च युक्तिभिः शुनःशेपोक्ति समर्थितवान्।

शुनःशेपश्च पुनर्विश्वामित्रमवोचत्—अहमिदानीमङ्गिरोगोत्रः सन् तव पुत्रो यथा भवेयम् तथानुगृहाणे'ति। विश्वामित्रोऽपि तदुक्तिमङ्गीकृत्य ज्येष्ठपुत्रत्वेन व्यवाहरत्। स्वकार्यदाढर्यार्थं तव पुत्रा अपि एवमेवाङ्गी-कुर्युरिति विश्वामित्रं शुनःशेपः प्रार्थितवान्। विश्वामित्रः मधुच्छन्दसम्, ऋषभम्, रेणुम्, अष्टकम् पुत्रमुख्यान् आहूय युष्माकं सर्वेषां मध्ये ज्यैष्ठ्यं शुनःशेपो भजतामित्याज्ञापितवान्। विश्वामित्रपुत्राणामेकोत्तरं शतमासीत्। मधुच्छन्दा मध्यमः पञ्चाशत् ततो ज्येष्ठाः पञ्चाशच्च कनिष्ठाः। ये ज्येष्ठाः पञ्चाशत् ते शुनःशेपस्य ज्येष्ठभ्रातृत्वं नाङ्गीकृतवन्तः। विश्वा-मित्रः पञ्चाशतस्तान् शशाप। ममाज्ञोल्लङ्घिनां युष्माकं प्रजाः नीच-जातिविशेषान् यजतामिति। त एते शप्ताः सन्तोऽन्ध्राः पुण्ड्राः शबराः पुलिन्दाः मूतिवा तस्कराणां मध्ये भूयिष्ठाः संवृत्ताः। पञ्चाशता कनिष्ठैः साधं मधुच्छन्दाः पितुराज्ञां शिरसा सङ्गृह्य शुनःशेपमवोचत् सर्वे वयं त्वां ज्येष्ठं कृत्वा वर्तामहे। विश्वामित्रश्च तेषु प्रासीदत्, वरञ्च-दत्तवान् यत् शुनःशेपसहिता यूयं पुरुषेषु पूज्या भविष्यथेति। यच्चा-स्माकं धनं, वेदादिशास्त्रज्ञानं तदपि युष्मान् सर्वान् प्राप्स्यतीति।

योऽयं शुनःशेपो देवरातः स चाजीगर्त-विश्वामित्रयोः रिक्थे अर्हति। तथाजीगर्तस्य कूटस्थ ऋषिर्जुह्नुर्नामा। तद्वंशे जाताः सर्वे जह्नवः। तेषाञ्चाधिपत्ये देवरातो योग्यः, अस्मत्पितृवंशोत्पन्नानामपि सर्वेषामाधि-पत्येऽयं योग्यः, यागादिकर्मणि वेदे च समर्थ इति विश्वामित्रवरदानं शुनःशेपाय शास्त्रेषु स्मर्यते।

तदेतत्परऋक्शतगाथं शौनःशेपमाख्यानम्। राजसूयेऽभिषिक्ताय राज्ञे सुवर्णनिर्मितसूत्रैर्निष्पादिते कशिपा उपविष्टो होता कथयेत्।

एतेन 'चरन्नि'ति ब्राह्मणवचनस्य तात्पर्यं स्पष्टमुद्घाटितम्। तत्र रोहितस्य रक्षणार्थमिन्द्रेण तस्य वने चरणं विहरणमेव श्रेयस्करमुक्तम्।

ब्राह्मणाभिप्रायस्तु निम्नोक्तो वेदितव्यः—

सत्कर्मपराङ्मुखः शयानः पुरुषः कलिरित्युच्यते । अधर्मं हातुमिच्छन् सञ्जिहानो द्वापरः। धर्ममनुष्ठातुमुद्युक्त उत्तिष्ठं स्त्रेता। धर्मं चरन् कृतं भवति। तथा च श्रुतिः—

'कलिः शयानो भवति सञ्जिहानस्तु द्वापरः ।
उत्तिष्ठं स्त्रेता भवति कृतं सम्पद्यते चरन् ॥'

( ऐ० ब्रा० ७।१५ )

इतिमहाभारते शान्तिपर्वणि २३८।१९ स्थले भारतभावदीपे नीलकण्ठः ।

तमसोऽवष्टम्भात्मकत्वेन निर्विचेष्टत्वेन स्थिरत्वमुच्यते, तदेव कलेः शयानत्वम् । तमोऽपकर्षसत्त्वोत्कर्षयोस्तारतम्येन द्वापरे सञ्जिगमिषोत्पद्यते, तदेव तस्योज्जिहानता । ततोऽपि तमसोऽपचये सत्त्वोत्कर्षे त्रेतायां समुत्थानं भवति। तदेतत् त्रेतायुगस्योत्थितिः। ततोऽपि सत्त्वोऽत्कर्षे सञ्चरणप्रकाशादिकं भवति। तदेव सत्त्वात्मकस्य कृतस्य सञ्चरणम्।

एवमेव श्रीभागवते—पार्थिवस्य दारुणो निश्चलत्वेन रजस्त्वं तदनन्तरोद्भूतस्याग्नेः सत्त्वात्मकत्वमुक्तम् ।

"पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः ।" ( १।२।२४ )

ब्राह्मणवचने सर्वप्रथमं शयानत्वेन कलेर्वर्णनम्। ततः सञ्जिहानत्वेन द्वापरवर्णनम्। ततः उत्थानेन त्रेतावर्णनम्। सञ्चरणेन कृतस्य वर्णनम्। तमःप्राये कलौ निर्विचेष्टतालक्षणशयानतैव भवति। किञ्चिदुत्कृष्टसत्त्वात्मके द्वापरे जिगमिषामात्रमुत्पद्यते, नोत्थानं, न वा गमनम् । यतोऽप्युत्कृष्टसत्त्वमये त्रेतायुग उत्थानमेव भवति, न गमनम्। पूर्णोत्कृष्टसत्त्वे कृते तु सञ्चरणं सम्यग् ज्ञानक्रियादिप्रकाशः सम्पद्यते । एतद्विपरीतार्थकल्पनं तु बलादेवारोपणं मार्क्सीयमतस्य वेदप्रमाणसिद्धत्वसिषाधयिषया। अनयैव रीत्या सर्वत्रापि वेदमन्त्रेषु यज्ञब्रह्मादिषु च अक्षरार्थतात्पर्य्यार्थविरुद्धं कतिचिच्छब्दसाम्यं मात्रयाश्रित्य स्वाभ्यूहितार्थकल्पनम् ।

डांगे महाशयोद्धृतसंख्याकोऽयं मन्त्रः, नात्र प्रजापतेः गर्भपातादि चर्चाप्यस्ति ।

"साखायस्त्वा ववृमहे देवं मर्तास ऊतये ।
अपां नपातं सुभगं सुदीदितिं सुप्रतूर्तिमनेहसम् ॥"

( ऋ. सं. ३।९।१ )

मन्त्रार्थस्तु—विश्वामित्रः स्तौति। हे अग्ने सखायः सोमाज्यादि हविष्प्रदानेनोपकारकत्वात् मित्राणि। मर्तासः मनुष्याः। ऋत्विजो वयम्। अपां नपातं अपां नप्तारम्। सुभगं शोभनधनयुक्तम्। सुदीदितिं शोभनदीप्तिम्। सुप्रतूर्तिम् शोभनप्रतरणं कर्मानुष्ठातृभिः सुखेन गन्तव्यम्। अनेहसम् उपद्रवरहितम्। देवं त्वा त्वां ऊतये रक्षणाय ववृमहे वृणीमहे।

"सोऽर्चन् श्राम्यन् प्रजापतिरीक्षाञ्चक्रे। कथं नु मे प्रजाः सृष्टाः पराभवन्तीति। सहैतदेव ददर्श अनशनतया वै मे प्रजाः पराभवन्तीति। स आत्मन एवाग्रे स्तनयोः पय आप्याययाञ्चक्रे। स प्रजा असृजत। ता अस्य प्रजाः सृष्टाः स्तनावेवाभिपद्यतास्ततः सम्बभूवुः। ता इमा अपराभूताः।"

शतपथ ब्राह्मण काण्ड २ प्रपाठक अध्याय ५ ब्राह्मण १–३ सायणभाष्यम्—स चोदाहरिष्यते—सोऽर्चन्नित्यादि। त्रिवारं सृष्टानां प्रजानां पराभवकारणं किमिति विचार्य सः खलु एतदेव कारणं ददर्श एतच्छब्दनिर्दिष्टं दर्शयति–अनशनतयेति। उत्पन्नानां प्रजानामशनराहित्यं पराभवकारणमित्यर्थः। उत्पत्स्यमानानां प्रजानामपि अनशनत्वं माभूत् इति प्रजापतिना कल्पितमशनमाह—स आत्मनः स्वशरीरस्य एव सम्बन्धिनोः स्तनयोः पयः आप्याययाञ्चक्रे—आप्यायितं पूरितं कृतवान्। एवमशनं प्रकल्प्य अनन्तरं याः प्रजाः असृजत् अस्य प्रजापतेः ताः सृष्टाः प्रजाः पयसा पूर्णौस्तनौ अभिपद्य जीवनवत्योऽभवन्। ततः अनन्तरं ताः प्रजाः सम्बभूवुः। सम्यगुत्पन्नाः सम्यगात्मानोऽभवन्। पूर्वोत्पन्नप्रजावत् पराभवं न प्राप्ता इत्यर्थः।

अत्र ब्राह्मणग्रन्थे पयःपूर्णस्तनप्रादुर्भावकथा वर्णिता। अन्नाभावनिबन्धनप्रजापराभवापचिकीर्षया प्रजापतेरनुध्यानेन पय उत्पत्तौ प्रजानां जीवनमभिवर्धनञ्च प्रवृत्तम्।

वस्तुतः सूचितमन्त्रेषु गर्भपातदुग्धं प्रति चर्चा नास्त्येव। यदिचार्य्याणां देवाः स्रष्टा प्रजापतिश्च दिव्याः शक्तय ईश्वरश्च तदा तत्समक्षे कथमन्नाद्यभावरूपा दरिद्रता? यदि लौकिका नेतारः नेतृमुख्या एव वा ते तदापि गौणार्थकल्पनम्। तथा गौणार्थकल्पने तु मार्क्सीयग्रन्थानामपि—गौणार्थकल्पनया तेषामधिनायकवादसमर्थन एव तात्पर्यं कल्पयितुं शक्यते।

एवमेव लेखको लिखति "सर्वेष्वपि वेदेषु धनं प्रार्थ्यते। धनञ्च द्विविधम्, अन्नरूपं प्रजारूपञ्च। तदानीमन्नप्राप्तिर्दुष्करासीत्। पाषाणमयान्येव साधनान्यासन्। तामवस्थामनुस्मृत्याप्यार्य्याः प्रकम्पन्ते स्म। जीवनरक्षणार्थं भोजनप्राप्त्यर्थमितस्ततो भ्राम्यन्ति स्म। भोजनान्यनिश्चितानि। गृहाण्यपि नासन् अग्निरपि नासीत्। तत्रत्यहिंस्रपशुभ्यः स्वात्मत्राणार्थं साधनञ्च-नासीत्। भोजनार्थमेव समाजस्य कानिचित् दलानि संघर्षे विनश्यन्ति स्म। अनेकधर्ममनुष्यजातिनाशसंभावनया पूर्वजा उद्विजन्ते स्म। भोजनार्थं स्वसत्तारक्षणार्थञ्चार्य्या यच्छ्राम्यन्ति तदेव स्रष्टुः प्रजापतेस्तपःश्रमो वा।" काल्पनिकमेवात्र स्रष्टृत्वं प्रजापतित्वञ्च। तेन मुख्यार्थत्यागो गौणार्थसमाश्रयणं दोषः। ( ऋग्वेद ३-९-१।१।२।५ )

"आर्य्याणां प्रजापतेः समक्षं स एव संघर्षः प्रजापतेरनेकधा गर्भपातः। अन्नालाभादनेकधा स्वात्मनाशभयञ्च तस्यासीत्। तदानीं दुग्धमुत्पन्नम्। तत्पानेन प्रजापतेर्जीवनलाभः। ततश्चैकादश सांख्याकान् मुख्यान् पशूनग्निना परिपाच्य स भुक्तवान्। जीवस्रष्टुः परमेश्वरस्य यदैवं दशा। तदा मनुष्याणां कीदृशी दशेति कल्पयितुं शक्यते।" बाढं; किन्तु ईश्वरसत्त्वाभ्युपगन्तुरेव सम्भवत्येतच्चोद्यम्, नानीश्वरानभ्युपगन्तुर्मनुष्य नेतृष्वेव प्रजापतित्वभावनावतो वा तत्सम्भवति।

यत्तु 'तत एवार्य्याणां देवैरिन्द्रः प्रार्थितः पाषाणैरस्थिमयैरस्त्रैर्वज्रेण युद्धस्वेति तथा च दधीच ऋषेस्तीक्ष्णैरस्थिभिर्वृत्रस्य वधः इन्द्रेण कृतः। विश्वरूपस्य विरोधे तादृशैरस्त्रैर्योद्धुमिन्द्रो देवैरभ्यर्थितः' इति, तदपि तुच्छम्, यतो नहि तत्सामान्यमस्थि, किन्तु तपोयुक्तं दिव्यास्त्रसारसमन्वितम् पुराणे चैवमाख्यायिका प्रसिद्धा—कदाचिद्देवा दिव्यान्यस्त्राणि न्यासरूपेण दधीचः सविधे रक्षितवन्तः। रक्षोभ्यो रक्षणार्थं अभिमन्त्रितजलेन तत्सारमाचम्य स्वशरीरे तेन सारो रक्षितः। दैत्याक्रान्तैर्देवैरभ्यर्थितः दैत्यानामभिभवायास्त्रसारं यदस्थि देवेभ्यो दत्तवान्। तदस्थिनिर्मितैर्वज्रादिभिरस्त्रैर्देवा दैत्यान् जघ्नुः।

एतेन पूर्वं लौहमयमस्त्रादिकं नासीत्, तत एवास्थ्यादिमयैरस्त्रैर्युद्धप्रथासीत् इत्यपास्तम्।

"कृतयुगस्य वन्यावस्थायामनेकसहस्रवर्षाणि मनुष्यजातिर्धरित्र्यां पर्य्यटति स्म। कुतश्चित्प्रदेशादन्नालाभात् कुतश्चिद्रोगाधिक्यात् कुतश्चिच्छत्रुसंघर्षात्पलायिता। तादृक् षोडशप्रदेशाः परिगणिताः।" कस्याञ्चित्परिस्थितौ देशाद्देशान्तरभ्रमणसंभवेऽपि तस्यादिमत्वे प्रमाणाभावात्।

यदुक्तं "तदानीं व्यक्तिगतसम्पत्तिकथाऽपि नासीत्। दासप्रथा-शासनसत्तानिर्माण-शोषणमूलकवर्गभेदकल्पनादीनामवकाश एव नासीत्। सामूहिकरूपेणैव तदानीमुत्पादनं तद्रूपेणैवोपभोगः। प्रकृतिसंघर्षाय जीवनरक्षणाय च वैयक्तिकसत्त्वमहत्त्वं सर्वथा दुर्बलमेवासीत्। विकासस्य द्वितीयावस्थायामग्निप्रकटनपशुपालनकलाऽविष्कृता मनुष्येण। तदैव क्रान्तिकारिपरिवर्त्तनम्। ( ऋग्वेद १।१४२।५।१।६५।८ ) अग्निज्ञानमवश्यमरण्ये सम्पन्नम्। मेघसंघर्षादुद्भूय विद्युदग्निर्वृक्षान् नाशयति स्म। तन्नाशकारि भीषणमग्निरूपमालोक्य कथं मनुष्यनियन्त्रिताऽग्निशक्तिर्महते श्रेयसे स्यादिति विचार्य्य मनुष्यजातिहितायाङ्गिरसा तन्नामकेन तद्गोत्रेण वार्य्यजातीयेनाग्निराविष्कृतः। "त्वामग्ने अङ्गिरसो गुहाहितम्। अन्वविदन् शिशिक्षणं वने वने सजायसे मथ्यमानः स नो महत्तमाहुः।"

अग्नेराविर्भावादार्य्याणां जीवनप्रणाली तीव्रगत्या परिवर्तिता। तया महाक्रान्त्याऽऽर्य्याणां सम्पूर्णजीवनमेवाग्नेराविर्भूतम्। तेषां सृष्टिः सत्ता समुन्नतिः धनं सुखं सर्वाणि वस्तूनि तत एवोद्भूतानि ( ऋ० ५।२।८।१०।३-२।६।५५।११।६ ऋ० ३।१५।१ ) तत एव पशुप्रजारूपेण द्विविधधनोत्पत्तिः। अग्निनैव पशवो मत्स्याश्च परिपाच्य भुज्यन्ते स्म। तेनैवाग्नेरमेध्यत्वं क्रव्यादत्वञ्च हिंस्रपाशुभ्यो भूतप्रेतादिपशुभ्यश्च त्राणमग्निना साधनेन प्रज्वलितैरुल्मुकैस्तादृक्पशुशत्र्वादिविद्रावणं सुखेन कर्त्तुं प्राभवन्नार्य्याः। शार्वरात्तमसः शीताद्वातावरणाच्च तेनैव त्राणम्। तेनैव यत्र शीताधिक्यं बृहती च रात्रिर्भवति। साइबेरिया प्रदेशेषु तत्रापि तेषां गतिरप्रतिहता। पशुपालनप्रथया च पशुमत्स्याद्यन्वेषणादिकष्टमन्तरापि पालितपशुमांसदुग्धादिना पर्य्याप्तभोजनसौलभ्यं संवृत्तम्। तच्चर्मलोमादिभिर्वस्त्रकार्यमपि सम्पन्नम्। शृङ्गास्थिभिः शस्त्रास्त्रनिर्माणम्।

ततःसमुन्नतयुगप्रवेशः सर्वेषां परिवर्त्तनानां नेताग्निरेव । ऋ० ६।९।५।२९।७।१·५८।५ तस्मादग्नेरेवायसो द्रावणम् । तेनायसकुठारकरवालादिशस्त्रनिर्माणादिरूपा नवीना क्रान्तिः । तदानीमग्निरेव नेता विशांपतिः । विश्पदस्य ग्रामाद्यावासस्थानमर्थः । मनुष्याणामग्निरेव प्राचीनो नेता सखा च । देवतानामपि भोजनमग्निमुखेनैव ।

काष्ठादिनिघर्षणेनाग्निप्रकटनम् । तच्च यान्त्रिकगतेस्तापरूपेण परिणमनमेव । सर्वप्रथमेनानेनाविष्कारेण मनुष्यजातेर्मस्तिष्कमतिप्रभावितम् । तेनैव लोहाविष्कारानन्तरमपि यथा पाषाणमयानां शस्त्राणां बलिदानादिषु प्रयोगः ।

केल्ट जर्मन प्रभृतीनां नरबलिषु पाषाणक्षुरिकाप्रयोगः । तथैवाग्नि प्राकट्यस्यानेकान्योपायज्ञानेषु सत्स्वपि जर्मन्यादिप्रदेशे रोगनिवारणस्य पूजादिषु काष्ठनिघर्षजोऽग्निरेव प्रयुज्यते । तेन प्राथमिकप्रकृतिविजयप्रभाव एवात्र लक्ष्यते ।

एवमार्याणामुच्चस्तरीयाभिरुत्पादनशक्तिभिः विशिष्टा या उत्पादनप्रणाली समुद्भूता तया पूर्वयुगापेक्षया प्रभूता धनसम्पत्तयः प्रवृद्धाः । तेन मानवजातिर्वन्यावस्थायाअर्धवन्यावस्थायामुपगता । ततश्च कृतयुगात्त्रेतायुगमागताः । तदानीमार्यजातिः भ्रमणावस्थां परित्यज्य ग्रामादिषु वासं कृतवती । नरमांसादिभक्षणमपहाय नियमितभोजनाच्छादनावासादिकमुपलभ्य शक्तिसम्पन्ना जाता ।

कृतयुगे भ्राम्यन्ती श्रान्ता दीर्घमुच्छ्वसन्ती त्रेतायुगे सविश्वासं सानन्दं सस्मितं गायन्ती तस्थौ । उत्पादनस्येयं नव्यप्रणाली नव्यं संघटनमभिनवकलोपलब्धिर्वैदिकपरम्परायां यज्ञनाम्ना व्यपदिश्यते । अत एव त्रेतायुगे-ब्रह्मणा मनुष्येभ्यो यज्ञः प्रत्तः । ( शान्ति पर्व २३८।१०१ ) त्रेतादौ यज्ञाः ( २४, १४ । ) सह यज्ञाः प्रजाः सृष्ट्वा ब्रह्मप्रत्तेषु वस्तुषु यज्ञः श्रेष्ठतमः । यतो यज्ञो नैव मनुष्यजातिर्वन्ययुगादर्धवन्ययुगं नीता । अग्न्यन्वेषणेनैव यज्ञरूपा नूत्नोत्पादनप्रणाली प्रवृत्ता । तस्यां नूत्नरीत्या व्यवहरन् मानवो ब्रह्म ( आदिमसाम्यसंघम् ) विकासवैभवाभिमुखमुन्नयति । यज्ञमन्तरा न तद् ब्रह्म तिष्ठति, न वा तद्बहिस्तिष्ठति, यज्ञरूपेणैव तदस्तित्वम् ।

तस्मात्साम्यसङ्घ एव ब्रह्म। समाजस्थ सामूहिकोत्पादनप्रणाली यज्ञः। तदुभयज्ञानमेव वेदः। हिन्दूपरम्परायामयमेवेतिहासोल्लेखः।

आदिमसाम्यवादिव्यवस्थायां सामूहिकरूपेणैवोत्पादनं तद्रूपेणैवोपभोगः, न प्रातिस्विकरूपेण। उत्पादनावश्यकतानुरोधेनैव मानवानां परस्परसंबंधो नियम्यते। आरम्भे श्रमविभाजनं नासीत्। परमुत्पादनशक्तिवृद्धया तद् व्यज्यते। वर्गभेदस्तु नासीत्। मातृसत्तानुरोधेन गणाः संहन्यते स्म। तत्सदस्याः परस्परं समवयन्ति। व्यक्तिगतकुटुम्बनिर्माणं तदानीं नासीद्' इति।

अत्रेदमुच्यते—यद्यपि मार्क्सीया व्यक्तिगतसम्पत्तिप्रथां शासन-सत्ताञ्च शोषणमूलिकाम् मत्वा निन्दन्ति। आदिमयुगे च तदभावं मन्यन्ते। पूर्वेषां लोभरागक्रोधेर्ष्यादिराहित्यमुत्तरोत्तरेषाञ्च तत्साहित्य-मूरीकुर्वन्ति तथापि व्यक्तिगतसम्पत्तिमूलकं पूञ्जीवादमेव महायन्त्र-बहुलाया परमोन्नतिरूपाया औद्योगिकक्रान्तेः कारणं वदन्ति। पूर्वयुग-मनुन्नतयुगमुत्तरयुगञ्चोन्नतयुगं वदन्ति।

पूञ्जीवादं महायन्त्रप्रवर्तनञ्च श्रमजीविनां दुर्गतिनिमित्तं स्वातन्त्र्या-पहारकं शोषकञ्च वदन्ति तथापि महायन्त्रावरोधं नेच्छन्ति। किन्तु तदपहारेण समाजीकरणनाम्ना स्वात्मसात्कर्त्तुमीहन्ते। परं व्यक्तिगता-धिकारनिवृत्त्यैव तस्य दुर्गतिहेतुत्वं कथं निवर्त्स्यति।

किञ्च व्यक्तयश्चेद्रागद्वेषविमुक्तास्तदा तत्समुदाये ते दोषाः कथं न भवेयुः? कारणगुणानामेव कार्य्यगुणारम्भकत्वात्।

किञ्च यदि कलियुगमेवोन्नतयुगं तदा कथमिव तत्र लोभराग-द्वेषादि-बाहुल्यम्। कृतादियुकं यद्यवनतियुगं तदा कथं तत्र लोभरागादि-राहित्याम्।

वस्तुतस्तु तदुक्तिविपरीतमेव सुवचम्। तत एव कलिशब्दस्य प्रथमनिर्देशः। तस्योन्नतियुगत्वे पाश्चात्त्येन तन्निर्देशेन भाव्यम्। तस्मात्पूर्वोक्तमस्मद्व्याख्यानमेव युक्तम्।

अङ्गिरसां न भौतिकाग्न्यान्वेषणेन ख्यातिः। तस्य वने सर्व-सुलभत्वात्। न वैद्युताग्नेरेव तत्र दर्शनम् किन्तु ग्रीष्मे कीचकादि-

निघर्षजाग्नेः काष्ठादिसंसर्गेण वृद्धेर्जलादिवृष्ट्या तत्प्रशान्तेश्च दर्शनात्। स्वातन्त्र्येण तदादानं तदुपयोगश्च सर्वदैव सुलभ आसीत्। अन्यथा वेदस्य दृष्टार्थत्वेऽनुवादकत्वेनाप्राण्यापत्तिः स्यात्।

यज्ञाङ्गत्वेनाग्न्यादिदेवतास्तावकत्वेन द्रव्यदेवतास्मारकत्वेनैव मन्त्राणां प्रामाण्याभ्युपगमात्। यस्मात्स्वाभ्यूहितमिथ्यावेदार्थकल्पना सर्वथानोपपद्यते। यज्ञार्थत्वेन चरुपुरोडाशादिवत् क्वचित्पशूनामप्युपयोगः। अणिमादिसिद्धस्येश्वरात्मनः प्रजापतेर्न गर्भपातो, न वाऽन्नं दुर्लभम्। तत्प्रापकयज्ञोपासनाद्यर्थवादत्वेन तत्प्रशंसापर्य्यवसायित्वात्। 'नहि निन्दा निन्द्यं निन्दितुं प्रवर्ततेऽपि तु विधेयं स्तोतुमि'ति मीमांसासिद्धान्तात्।

किञ्च वेदादिशास्त्रेण याज्ञिकपद्धत्या वा न व्यक्तिगतसम्पत्त्यपलापः सम्भवति, सर्वस्यैव विश्वस्य कर्मफलत्वात्।

यद्यपि विश्वमपि समष्टिकर्मफलमेव तथापि समष्टेर्व्यष्टिसमुदाय-रूपत्वेन व्यष्ट्यभावे समष्ट्यभावापत्तिः। न हीह प्रातिस्विक-सैनिकनाशे सेनावशिष्यते, न वा प्रति वृक्षनाशे वनमवशिष्यते। कर्माणि च प्रायेण व्यक्तिगतान्येव विहितानि। सत्रात्मकेऽपि व्यक्तिगतानि कर्माणि भवन्ति। ततोऽन्यत्र तु यजमानस्यैव फलभाक्त्वं नत्वृत्विजामपि, तेषां दक्षिणापरिक्रीतत्वात्। सोमयजिनामेव सत्राधिका-रात्। सोमे च वैयक्तिकधनवतो यजमानस्यैवाधिकारः। ऋषयस्तु देवता रूपस्याग्नेः स्तावकानां मन्त्राणां द्रष्टारस्तत्स्तुतदेवतोपासकाश्चासन्। तदनुगणा एव मन्त्राक्षरार्थाः।

यद्यपि वह्नेरतीवमाहात्म्यमुपयोगश्च तथापि वायोरिवाकाशस्येव च वह्नेरपि नान्वेषणापेक्षा आसीत्।

जाठरस्येवाग्नेरायत्तमेव यद्यपि जीवनम् तथापि प्राणिजीवनेन सार्धमेव तद्भावस्तथैव बाह्याग्नेरपीति मन्तव्यम्।

यज्ञब्रह्मणयोर्वेदेषु बाहुल्येन वर्णनं दृश्यते। तथापि न ताभ्यां सामूहिकोत्पादनप्रक्रियादिमसाभ्यसङ्घौ विवक्षितौ, तयोर्लोकसमधिगम्य-त्वेन वेदैकसमधिगम्यत्वाभावात्। तत्तद्देवतोद्देशेन तत्तद्विधानानुरूपस्य द्रव्यविशेषत्यागरूपस्यैव यज्ञत्वात्। यजतेर्देवपूजाद्यर्थकत्वात्।

नच सामूहिकफलं यज्ञस्य कर्मणः प्रातिस्विकत्वेन, फलानामपि प्रातिस्विकत्वात् ।

वस्तुतस्तु मन्त्रैर्ब्राह्मणैः सूत्रैः पद्धतिभिराचारैश्च यादृशो यज्ञः सिद्ध्यति स एव यज्ञशब्दार्थः । न भौतिकवादिस्वाभ्यूहितसामूहिकोत्पादनात्मको यज्ञः, सामूहिकोत्पादनार्थं यज्ञमण्डपस्य मन्त्रपाठस्य देवतोद्देश्येनाग्नौ चरुपुरोडाशादिप्रक्षेपरूपस्य यागहोमादेरनपेक्षणात् ।

किञ्च त्वन्मतरीत्या विशिष्टा मनुष्या एव देवाश्चेत्तदा तेषामेव भोजनादिदानं युक्तं स्यान्नाग्नौ निक्षेपो युक्तः। भवति यज्ञेऽग्नौ द्रव्यनिक्षेपः। अपि च यज्ञे त्विडाभक्षण प्रसङ्गे किञ्चिदेव यागीयहविर्ग्रहणम्, तदपि संस्कारार्थं गृह्यते न भोजनार्थम्, भोजनार्थं पृथग्व्यवस्थादर्शनात् । हविःशेषोऽपि केवलं ब्राह्मणानामेव तत्राप्यृत्विजामेवाधिकारो क्षत्रियवैश्यादीनामित्यन्यत्र स्पष्टमेव ।

ततः कथं यज्ञः सामूहिकोत्पादनप्रणालीति वक्तुं शक्यते? सत्रेऽपि ब्राह्मणानामेव तत्रापि समानगोत्राणां नियतसंख्यानामेवाधिकारो नान्येषाम् । सत्रे तावतीनामेव पत्नीभूतानां स्त्रीणामेवाधिकारोऽन्ययज्ञेषु तु यजमानपत्न्या एवाधिकारः । ग्रामेषु सङ्घेषु तावन्त एव निवासिनो भवन्ति स्मेति न वक्तुं शक्यते । एवमेव ब्रह्मशब्देन बृहतेर्धातोरर्थानुगमात् अनन्तपदसमभिहारेण च सर्वाधिधिष्ठानभूतस्यानन्तस्वप्रकाशनित्यज्ञानानन्दात्मकस्य वस्तुनो ग्रहणं तथापि सगुणे विराजि हिरण्यगर्भेऽव्याकृते तत्प्रापके वेदे अग्नौ वायौ ऋत्विग्विशेषे च तत्तत्प्रसङ्गेन भक्त्या ब्रह्मशब्दः प्रवर्त्तते, न सङ्घविशेषे, न वादिमसङ्घे कथमपि प्रवर्त्तते मानाभावात् ।

'नयो वराय मरुतामिव स्वनः सेनेव सृष्टा दिव्या यथाशनिः ।
अग्निर्जम्भैस्तिगितैरत्तिभर्वति योधोन शत्रून्सवनान्यृञ्जते ॥'

( ऋ. सं. १।१४३।५ )

यः अग्निः वराय वरणाय निग्रहाय न शक्यो भवति । तत्र दृष्टान्तत्रयमुच्यते । मरुतां स्वन इव स यथा अग्राह्यस्तद्वत् । तथा-दिव्यादिविभवा अशनिः यथा पतत्येव न निवार्यते तद्वत् । अयम्

अग्निः । तिगितैः निशितैः जम्भैर्दन्तैः दन्तस्थानीयज्वालाभिः अत्ति अस्मद्विरोधिनो भक्षयति तथा भर्वति हिनस्ति योधो न संप्रहर्त्ता शूर इव शत्रन् भर्वति भक्षयति तद्वत् किं च सः अग्निः वना वनानि वृक्षादिसमूहान् । न्यृञ्जते नितरां प्रसाधयति दहतीत्यर्थः ।

वर्धन्तीमापः पन्वा सुशिखिमृतस्य योना गर्भे सुजातम् ॥

( ऋक्० सं० १।६५।४ )

आपः अब्देवताः । ईम् एनम् । उदके प्रविष्टमग्निम् वर्धन्ति प्रवर्धयन्ति । यथा देवा न पश्यन्ति तथा रक्षन्नित्यर्थः । पन्वा स्तोत्रेण सुशिखि सुष्ठु प्रवर्धितम् ऋतस्य यज्ञस्यान्नस्य वा योना योनौ करणभूते जले गर्भे गर्भस्थाने मध्ये सुजातं सुष्ठु प्रादुर्भूतम् । अत्राग्नेः प्रादुर्भावोऽद्भ्य उक्तस्तत एव वृद्धिश्चोक्ता । अग्निप्रादुर्भावादिमन्त्राणां याः संख्या उद्धृतास्ताश्चाशुद्धाः । तत्सम्बन्धिनश्च ये मन्त्राः सम्भवन्ति तैरपि न तदभीष्टसिद्धिः ।

'त्वामग्ने अङ्गिरसो गुहाहितमन्वविन्दञ्छिश्रियाणं वने वने ।
स जायसे मथ्यमानः सहो महत्त्वामाहुः सहस्पुत्रमङ्गिरः ॥

( ऋ० सं० ५।११।६ )

हे अग्ने अङ्गिरसः ऋषयः गुहा गुहायां निहितं निगूढं वने वने वृक्षे वृक्षे शिश्रियाणम् आश्रितं त्वाम् अन्वविन्दन् अलभन्त । महत् महता सहस् सहसा बलेन युक्तः स त्वं मथ्यमानः जायसे । हे अङ्गिरः अङ्गिरसां प्रकृतिभूत त्वां सहसः पुत्रमाहुः ।

अनेन मन्त्रेणाग्नेर्वृक्षादिष्वव्यक्तरूपेणावस्थितिरङ्गिरोभिर्दृष्टेत्युक्तम् । सर्वाणि भूतानि सर्वाणि सुखान्यग्नेर्भवन्तीति साधनाय निम्नोक्ता मन्त्रा उक्ता । परं नैभिरपि तत्सिद्ध्यति ।

'हृणीयमानो अपहि मदैयेः प्र मे देवानां व्रतपा उवाच ।
इन्द्रो विद्वां अनुहित्वा चचक्ष तेनाहमग्ने अनुशिष्ट आगाम् ॥'

( ऋ० सं० ५।२।८ )

मन्त्रार्थस्तु—हे अग्ने हृणीयमानः क्रुध्यंस्त्वं मत् मत्तः अप ऐयेः हि अपागाः खलु । मे मह्यं देवानां व्रतपाः कर्मणः पालकः इन्द्रः प्र उवाच ।

हि। स एव विद्वान् त्वा अनुचचक्ष त्वां ददर्श। तेन अनुशिष्टः अहं हे अग्ने त्वाम् आगाम् इति। एवं वृश आह।

'निधीयमानमपगूलहमप्सु प्र मे देवानां व्रतपा उवाच।
इन्द्रो विद्वां अनुहित्वा चचक्ष तेनाहमग्ने अनुशिष्ट आगाम्॥

( ऋ० सं० १०।३२।६ )

कुरुश्रवणस्य यज्ञे निधीयमानोग्निरभिधीयती निधीयमानम् अध्वर्युणा-हवनीयाग्नौ अप्सु मातृभूतासु अपगूलहम् अन्तर्हितं त्वाम्, नानेनापि तदभीष्टं सिद्ध्यति। किन्त्वग्नेर्व्यापकत्वादिकमेवोक्तम्। तच्चाग्नेरापेक्षिककारणत्वमेव वक्तुं शक्यते, परन्तु नौपचारिकमग्निनिबन्धनोन्नतिमूलकत्वम्।

'वि पाजसा पृथुना शोशुचानो बाधस्वद्विषो रक्षसो अमीवाः।
सुशर्मणो बृहतः शर्माणि स्यामग्नेरहं सुहनस्य प्रणीतौ॥'

( ऋ० सं० ३।१५।१ )

उत्कीलः स्तौति। हे अग्ने पृथुना विस्तीर्णेन पाजसा तेजसा शोशुचानः अत्यर्थं दीप्यमानस्त्वम् द्विषः कर्मानुष्ठानविघ्नकारणः शत्रून् विबाधस्व विशेषेण नाशय। अमीवाः रोगराहित्येन सामर्थ्योपेतानि रक्षसः बाधस्व। यद्वा अमीवाः आभिमुख्येनागमनपरागमनपराः पिशाचिकाश्च बाधस्व। सुशर्मणः स्वर्गादिलक्षणा शोभनसुखहेतोः बृहतः महतः शत्रु-विजयेन प्राप्तमहिम्नः सुहवस्य सुष्ठ्वाह्वानोपेतस्य अग्नेः शर्मणि अस्माकं सुखहेतौ प्रणीतौ उत्तरवेद्यादि स्थानेषु प्रणयने अहं स्याम् अग्निप्रणयन-पूर्वके क्रत्वनुष्ठाने भवेयम्। नानेनापि तदभीष्टसिद्धिः, किन्त्वग्नि-देवतारूपस्तत्तदभीष्टसिद्धये प्रार्थ्यते।

बलित्था महिमा वामिन्द्राग्नी पनिष्ठ आ।
समानो वां जनिता भ्रातरा युवं यमाविवेह मातरा॥

(ऋ०स० ६।५९।२ )

हे इन्द्राग्नी वां युवयोः महिमा महत्त्वं इत्था इत्थं बल सत्यम्। पनिष्ठ आ स्तुत्यतमः प्रजापतिः समान एक एव वां युवयोः जनिता जनयिता। अतः युवं युवां भ्रातरा भ्रातरौ स्वः। अपि च यमौ यमलौ सहोत्पन्नौ।

इहेह मातरा इह च इह च सर्वत्र माता ययोस्तादृशौ स्थः। अदितिर्हि तयोर्माता सैव विस्तीर्णा भूमिः।

अनेन मन्त्रेणेन्द्राग्न्योः देवतारूपयोः स्तवनम्।

"सखा सख्ये अपचत्तूयमग्निरस्य कृत्वा महिषा त्रीशतानि।
त्रीसाकमिन्द्रो मनुषः सरांसि सुतं पिबद् वृत्रहत्याय सोमम्॥"

(५।२९।७)

सखा इन्द्रस्य मित्रभूतः अग्निः महिषा महिषाणां त्रीणि शतानि सख्ये सख्युर्मित्रभूतस्य अस्य इन्द्रस्य कृत्वा कर्मण निमित्तभूतेन तूर्पं क्षिप्रम् अपचत्। इन्द्रः परमैश्वर्य्ययुक्तः मनुषः मनोः सम्बन्धीनि त्रीणि सरांसि पात्राणि तेषु स्थितं सुतं अभिषुतं सोमं साकं युगपदेव वृत्रहत्याय वृत्रहननाय पिबत् अपिबत्।

अनेन मन्त्रेणेन्द्रस्य माहात्म्यमुक्तम्। नानेन समेषां जनानां मांसादिभक्षणं समर्थ्यते, देवतारूपस्येन्द्रस्याचिन्त्यशक्तित्वात्। किञ्च नहि साम्यसङ्घीयमनुष्यमात्रस्येन्द्रस्य त्रीणि सरांसि पात्राणि भवन्ति। न वा तेषु स्थितः अभिषुतसोमः पानार्हो भवति। न वा तादृश इन्द्र महिषाणां त्रीणि शतानि खादितुं शक्नोति। ततोऽवश्यमचिन्त्यशक्तिर्देव एवेन्द्र इति मन्तव्यम्।

अवोचाम रहूगणा अग्नये मधुमद्वचः।
द्युम्नैरभि प्रणोनुमः॥ (ऋ०सं० १।७८।५)

ऋषिः कृतं स्तोत्रमनयोपसंहरति। रहूगणा रहूगणस्य पुत्रा वयं गोतमाः अग्नये अङ्गनादिगुणयुक्ताय देवाय मधुमद्वचः माधुर्योपेतं वचनं अवोचाम। तद्वचनरूपैः द्युम्नैः द्योतमानैः स्तोत्रैः पुनः पुनरग्निं वयम् अभिप्रणोनुमः अभिमुख्येन प्रकर्षेण स्तुमः।

अत्रापि देवतारूपस्याग्नेः संस्तवनम्।

यदप्युक्तम्—"विवाहव्यवस्थाचोत्तरयुग इव तदानीं नासीत्" तदपि तुच्छम्, विवाहव्यवस्थामन्तरा यज्ञस्यैवासंभवात्। दम्पत्योः सहैवाधिकारो यागेषु। 'पत्युर्नो यज्ञसंयोगे' इति रीत्या यज्ञसम्बन्धेनैव पत्नीत्वसंपत्तिः। ततः श्रुतिस्मृत्यनुसारिणी विवाहव्यवस्था सर्वदैवासीदिति मन्तव्यम्।

यदप्युक्तं "सर्वा अपि क्रियाशीलताः साम्यसङ्घमतानुसारिण्यो भवन्ति स्म। तत्रोत्पादनसम्बन्धेषु सम्पत्तिसम्बन्धेषु च नियामिका

काचित्सैन्यादिशक्तिसम्पन्ना विधात्री च शासनसत्ता नासीत्। यदैव शासनसत्तायाः शासनयन्त्रं सक्रियं भवति तदैव सङ्घो भज्यते।

आर्य्याणां वेदानां संहितासु च तादृग्युगस्मृतितत्त्वानि संकलितानि। यदा देवा यज्ञैरयजन् यज्ञेष्वेवावतिष्ठन्ते स्म। यज्ञैरेव जीवन्ति स्म। तदानीं सम्पूर्णस्यैव जीवनस्य नियन्त्रणं यज्ञाधीनमेवासीत्। तत्रैव वेदे विधिमयानामपि यज्ञानां वर्णनम्। येषामनुष्ठानं ब्राह्मणपुरोहितसाहाय्येन राजभिर्धनिभिरन्यैश्च दरिद्रैरपि मनःकामनापूरकत्वेनानुक्रियते स्म।

प्राचीनतमेषु यज्ञेषु पुरातनजीवनप्रणालीरूपेण याथार्थ्यमासीत्। पाश्चात्येषु विधिप्रायेषु तदनुकृतिरेव। प्राचीनतमा यज्ञा एत्र देवैरनुष्ठीयन्ते स्म। ते सत्यभूता रहस्यमया आसन्। विधियज्ञवर्णनकाले तेषां सत्त्वं नासीत्। तत एव सत्रक्रतुशब्दैराख्यायन्ते।

आर्य्याणां धर्मकथासु देवास्तेषां पूर्वजाः पृथिव्यग्न्यादिप्रकृतिशक्तिरूपा अपि देवाः। देवैरनुष्ठितः कोऽयं सत्राख्यो यज्ञ इति जिज्ञासायां प्राचामार्य्याणां सामूहिकरूपेण कृतः परिश्रम एवेत्युत्तरम्। सत्रयागेषु सर्वं एवर्त्विजो यजमानाश्च। अन्यत्र विधियज्ञेसु ऋत्विजो यजमानस्य कृते यष्टारः। दक्षिणाश्च तेभ्यो दीयन्ते, सत्रेसु नैतत्सर्वम्। सत्रयज्ञरूपेण सामूहिकमायोजनं क्रियते स्म। तत्र सामूहिकपरिश्रमरूपेण सर्वे भागिनो भवन्ति स्म। तत्र श्रमविभाजनं नासीत्। परवर्त्तिकालेषु षोडशधा ऋत्विजां यो विभागः स पूर्वं नासीत्। यज्ञे कृतस्य सामूहिकश्रमस्य यत्फलं तत्समानरूपेण विभज्यते स्म। समाख्या विधानमस्य समानोपभोगस्य प्रतीकभूतम्। एकपात्रेण समेषां सोमपानं समाख्यापदार्थः। अग्निष्टोमाख्ये सोमयागे एवेयं समाख्या नान्यत्रेति तस्य गभीरोऽर्थः। अत्र च समानगोत्रा एव भागिनो भवन्ति। समानरक्तसम्बन्ध एव समानगोत्रत्वम्।

अन्ययज्ञेषु नायं नियमः। तेन साम्यसङ्घस्य सदस्या एकरक्तसम्बन्धिनो भवन्ति स्म। तद्भिन्नो बाह्यस्तत्र न भागी भवति स्म। सत्रे सामाजिकश्रमारम्भात्पूर्वं सर्वे वेदिषु प्रतिजानन्ति स्म। वयं सर्वे निष्पापाः समानमनसः सहयोगं दास्यामः तानूनप्त्रे प्रचारनाम्ना प्रसिद्धोऽयं विधिः। प्रतिसाम्यसाङ्घिकपरिश्रमं कश्चिद् योजनाबद्धश्रमस्य युक्तायुक्तकृताकृतावेक्षको भवति

स्म। यथा मार्गप्रवर्तको निर्वाचनेन निर्धार्य्यते। उत्पादकशक्तीनां समुन्नत्या कार्य्याणामनेकरूपतायामस्य प्रवरणविधेः निर्वाचनस्य वा प्रादुर्भावः समजनि। कार्य्यपूर्तौ साम्यसङ्घस्य समतायां सर्वे प्रमुखकार्यकर्त्तार एकीभवन्ति। तत्र स्त्रियश्च भगिन्यो भवन्ति, नान्यविधियागेषु। सत्र-यज्ञविधानेन प्राचीनस्य आदिमसाम्यसङ्घस्य सत्ता सिद्ध्यति।

तिलकप्रभृतिभिः इमे यज्ञा अतिप्राचीना इत्युपगम्यते स्म। एते तेषां यज्ञानां समूहरूपा येषां मासेष्वनेकवारं कतिचिद्दिनान्यनुष्ठानं भवति स्म। सामाजिकदृष्टिकोणेन ये यज्ञान् विचारयन्ति ते स्पष्टमभ्युप-गच्छन्ति। साम्यसङ्घेः प्रतिदिनमनुष्ठीयमाना याः क्रियास्तासां समूह एव सत्रनाम्ना प्रसिद्धः। अतएव 'साकं सत्रा सह' इत्यमराभिधान-रीत्यापि सम्मिलितसमूहः सत्रशब्दार्थः।

उदाहरणार्थम्—त्रिरात्र-क्रत्वनुष्ठानेन देवा बहुधनं लेभिरे। तदाख्या-यिकायामुक्तं प्रजापतिर्वसुरुद्रादित्यान् त्रीन् गणान् (साम्यसङ्घान्) उत्पाद्य तेभ्य एकमग्निं ददौ त्रिभिरपि गणैर्मिलित्वा वर्षं यावदग्निमाराध्यैका गौरुत्पादिता। तेषां परिश्रमेण प्रजापतिः प्रसन्नो बभूव। गां वसुगणाय प्रायच्छत्। तथा तैस्त्रयस्त्रिंशदधिकशतत्रयसंख्याका गावः उत्पादिताः। ततस्तां तेभ्य आदाय रुद्रगणाय दत्तवान्। तेनापि गणेन तावत्य एव गाव उत्पादिताः। ततस्तस्मादप्यादायादित्यगणाय दत्तवान्। तेनापि ततस्तावत्य एव गाव उत्पादिताः। ततस्तेभ्यस्तास्ताश्चादाय प्रजापतिर्गोसहस्रेणायजत्। तेभ्य एव सहस्रं गाः दक्षिणा दत्तवान्। अर्थात् दक्षिणारूपेणोपहारं ददौ।

एतेनार्य्यगणानां सामूहिकी समुत्पादनप्रणाली विज्ञायते। अस्य क्रतोरिदं वैशेष्यम्। यदस्यानुष्ठातार एव गणसंघस्य देवताः। तेन ते देवाः प्राचीनस्य जनवादिसाम्यसङ्घस्य जनसंघटनस्य वा सदस्या एवेति सिद्ध्यति।

अन्यच्च वैशेष्यम्। ते अग्नित्रयमेकीकृत्य सामूहिकं श्रमं कृतवन्तः। तेन तदानीं व्यक्तिगतं वितरणमधिकारश्च नासीदित्यपि सिद्ध्यति। कथायां गौर्धनकारणमुक्तम्। तस्माद्धनमुत्पिपादयिषवस्त-द्विभागं कर्त्तुं प्रभवन्ति। अन्यच्च उत्पादितानां गवां समानया संख्यया धनस्य समानताऽपि सिद्ध्यति।

अपरमपि वैशेष्यम् । उत्पादितानां गवां पुनरेकीकरणेन यज्ञानुष्ठानं, तदेवोत्पादकानां संमिलितोपभोगः । तेन सामूहिकोत्पादनवितरणप्रणाली स्पष्टं सिद्धयति । यज्ञप्रणाल्या साम्यसङ्घस्य प्रतिदिनं निर्वर्त्याः श्रमाः के के भवन्ति । तदेतत्सर्वं सोमयागस्याग्निष्टोमे षडङ्गक्रतौ देवसत्रे च ज्ञातुं शक्यते ।

प्रारम्भे साम्यसङ्घानां प्रातिस्विकं लघुभूतं रूपमासीत् । यथाद्यापि लघुग्रामेषु लघीयस्यो वसतय उपलभ्यन्ते । तेषां पशुधनमेव प्रमुखं धनम् । तेन प्राधान्येन तत्सुरक्षाप्रबन्ध आवश्यक आसीत् । तदर्थमेव पाषाणमयैरश्मव्रजाख्यैः प्राचीरैर्ग्रामा अवार्य्यन्ते स्म । समिन्नामधेयैः काष्ठैः प्रज्वलितोऽग्निस्तेषां जीवनमूलमिवासीत् । काष्ठमये चतुर्भुजाकारे द्वात्रिंशद्धस्ते दीर्घे चतुर्विंशद्धस्त-परिणाहे तृणाच्छादिते मण्डपे सोऽग्निराधीयते स्म । तस्मिन्मण्डपगृहे सर्वस्य साम्यसङ्घस्य महानसगृहकार्यं निर्वहति स्म । तत्समीप एव साम्य-सङ्घस्यापरमपि गृहम्, यत्र दुग्धदधिघृतानि रक्ष्यन्ते स्म । तत्रैवैकमपरमपि संस्थानं यत्र सोमरसः सूयते । सोमपानार्थं ग्रहाख्यानि विशिष्टपात्राणि भवन्ति स्म । तेषां सहोपवेशनार्थं पृथक्स्थानम् । तेषामुपवेशनार्थं मृन्मयानि लघूनि चत्वराणि निर्मीयन्ते स्म । तत्रैव घासाः, कुशा आस्तीर्यन्ते स्म । तत्रैव सर्वे समवेतास्तिष्ठन्ति स्म । सर्वा भूमिः सा महावेदिनाम्ना प्रसिद्धा । तत्रैव स्थित्वा यावद्दिनं परिश्राम्यन्ति । अग्निप्रसादेन यदुप-लभ्यते तदुपभुञ्जन्ते स्म । जनसंख्याबाहुल्येन विस्तृता भूमिस्तदर्थम-पेक्षितासीत् । प्राचीमारभ्य प्रतीचीं यावत् द्वासप्ततिहस्त ( अष्टोत्तर-शतफीट ) मानमिता, पूर्वस्मिन्कोणे दक्षिणोत्तरयोः अष्टाचत्वारिंशत्हस्त-( ७२ फीट ) परिणाहः, पश्चिमे कोणे षष्ठिहस्त ( ९० फीट ) परिणाहः ।

तत्रैव समीपे तदुपयुक्तवस्तुनिक्षेपार्थं चत्वालो भवति स्म । प्रातरेव होत्रा देवा मनुष्या आहूयन्ते स्म । ततः सर्वेभ्यः कार्य्यवितरणम् । केचित् सोमानय-नाय, केचित्सोमाभिषवाय, केचिदास्तरणाय घासा (कुशा) नयनाय, केचित्पशु-बन्धनोपयोगिरज्जुनिर्माणाय नियुज्यन्ते स्म । ग्रहाच्छादनार्थमपि घासापेक्षा । केचिदग्न्यर्थं काष्ठच्छेदनाय गोदोहनार्थं दुहितरो नियुज्यन्ते स्म । शमिता पशूनां विशसनं करोति । चर्माण्युत्कृन्तति । मांसं पचति । पाषाणैरन्नं पिनष्टि । मृन्मयानि पात्राणि पाचयति । तदानीं धातुद्रावणविज्ञानं नासीत् ।

काष्ठमयानि वेत्रमयानि च पात्राणि निर्मीयन्ते स्म । तेष्वेव कश्चिद् गृहपति-र्निरुच्यते । स एव नरान् नारीश्च तेषु तेषु कर्मसु नियोजयति । अनेके अध्वर्यवः कर्माण्यवेक्षन्ते । किं कार्य्यं कथमनुष्ठेयमित्यादि निर्दिशन्ति । ब्रह्मा सर्वाणि कार्य्याणि निरीक्षते । त्रुटिं निरीक्ष्य बोधयति समादधाति । उद्‌गाता गीतं गायति, तेनोत्साहयति सर्वान् । तेन लयतालपूर्वकं सामूहिकः श्रमः प्रवर्त्त्यते । परिश्रमः कठिनोऽपि नीरसतां नोपयाति । तदानीं पेषणार्थं पेषणी ( चक्रिका ) नासीत्, तथाप्यन्नपेषणसाधनं दृषदुपलादिकमासीत् । अश्वपार्श्वास्थिभिरेव तीक्ष्णीकृतैर्घासच्छेदनम् । पशुविशसनार्थमपि खड्गादिकं नासीत् । पशु-चर्मोत्कृत्तनार्थं क्षुरिकादिकमपि नासीत् । लौहद्रावणकलापि नासीत् । तेन यज्ञपरिश्रमेण आदिमसाम्यसङ्घस्यापुरोगामितैव प्रतीयते ।

तत्र यदुत्पद्यते तत्सर्वमुपभोगार्थं महावेद्यामानीयते । तादृशी धर्माज्ञा-सीत् । देवेभ्यः पितृभ्यस्तद्भागसमर्पणानन्तरं हुतशेषं सर्वैरुपभुज्यते स्म । प्रतिदिनं हवनमपि भोजनवितरणप्रणालीव्यतिरिक्तं नान्यत् । सर्वं कार्य्यम् परमानन्दप्रदेन सोमरसपानेन समाप्यते । तेन साकं व्रीहियवमयपुरोडाशं दुग्धदधिमिश्रं चर्वादिकं भुज्यते स्म । मांसादिकमपि सहभोजने उपभुज्यते स्म । सर्वविधमांसोपभोगश्चलति स्म । भुक्त्वा पीत्वाग्नेश्चतुर्दिक्षु शेरते स्म ।

पूर्वं संभोगप्रथाऽप्यनियमितैवासीत् । पश्चाद्विवाहादिप्रथोत्पत्त्यनन्तरम् कुटीरेषु स्त्रीपुरुषयुगलानि शयनार्थं प्रविशन्ति स्म । एवं साम्यसङ्घरूपस्य ब्रह्मणः कार्य्यं चलति स्म ॥"

यदुक्तम् "साम्यसङ्घकाले शासनसत्तानासीत् । शासनयन्त्रस्य सक्रियत्वे सङ्घस्य भङ्गापत्ते" रिति तदपि तुच्छम् । सृष्टेः परमेशहेतुकत्वेन तन्नियन्त्रणानपायात् । सर्वं जगन्नियमितं दृश्यते, नियमाश्च न नियन्तार-मन्तरा संभवन्ति । आदिमसाम्यसङ्घस्य खपुष्पायितत्वेन तन्नियन्त्रणस्य सुतरामसंभवः । नियममन्तरा सङ्घोऽपि न चलति । नियमश्चेन्नियन्त्रापि भाव्यमेव । लघौ सङ्घे सैन्यशक्तेरपेक्षैव न भवति, महति तु सङ्घे सेदानी-मिवापेक्षितैव ।

यदप्युक्तम् "पूर्वजानां देवानां यज्ञाधीनमेव जीवनमासी" दिति तदपि निष्प्रमाणमेव । पूर्वजेभ्यो मनुष्यभ्यो देवानां भिन्नत्वात् । देवतोद्देश्येन द्रव्य-

त्यागलक्षणस्य यागस्यैव प्रामाणिकत्वात्। यदा सृष्टेः प्राक्तन्यामवस्थायां यज्ञादिसामग्री नासीत्तदानीं भावनामयो मानस एव यज्ञः प्रवर्तते स्म। यज्ञादिसामग्र्यां जातायान्तु क्रियामयो यज्ञः प्रवृत्तः। यज्ञस्तु सर्वोऽपि वैध एव। पशुजीवनप्रणालीवदवैधी मानवजीवनप्रणाल्यपि न वेदविषयः। तस्याः प्रत्यक्षादिविषयत्वेनाज्ञातज्ञापकवेदविषयत्वानुपपत्तेः।

अत एव 'पुरातनजीवनप्रणालीरूपो यज्ञ एव यथार्थभूतो यज्ञ आसीत्। पाश्चात्यो विधिमयस्तु तदनुकृतिरेवे'ति जल्पनमपि—निराधारमेव, प्रतिज्ञामात्रेणार्थसिद्ध्यसंभवात्। अपि चाद्यापि यज्ञाधीनमेव जीवनम्।

"अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः।
यज्ञाद्भवति पर्जन्यः यज्ञः कर्मसमुद्भवः॥

इति यज्ञोद्भूतान्नजीवनत्वेन समेषां यज्ञजीवनत्वं स्पष्टमेव।

यदुक्तम् "यज्ञशब्दो नैकं पदं किन्तु वाक्यम्, यजने य इत्यस्य वागमत्वम्, ग इत्यस्योत्पादनं न इत्यस्यन्तोऽर्थः। तेन ते यान्ति परस्परं मिलन्ति गत्वा चोत्पादयन्त्यपेक्षितानि वस्तूनि सन्ततीश्च। यजुर्वेदशब्दे यजुःशब्दोऽपि वाक्यम्। तस्याप्ययमेवार्थः। पश्चाद् यजुःशब्दः संज्ञामात्रपरः संवृत्तः। तथा च सामूहिकरूपेण वस्तुसन्तानोत्पादनप्रणाली यज्ञसंज्ञया बोध्यते। वैयक्तिकसम्पत्तिवर्गशासनसत्तास्थापनानन्तरं सत्रयज्ञक्रत्वादिसत्ता लुप्ता। तदा यज्ञः शुद्धविधिरूपेण सामाजिकस्मृतिरूपेणावशिष्यते स्म। यज्ञप्रणाल्या तेषामभिवृद्धिप्राप्त्यै यज्ञं प्रति तेषामार्य्याणामतीव विश्वासः। यज्ञब्रह्मानन्तरमेव समाजस्योत्पत्तिस्तदैव वर्गजातयश्च विकासिताः। तेन यज्ञविश्वासः सामाजिकपरम्परायां विधिकर्मसंस्कारादिरूपेणाङ्गतामुपगतः। यथार्थताया—अभावेऽपि पश्चात्शासकवर्गस्य स एवास्त्रतामुपगतः। येन शोषितवर्गस्य शोषणं प्रवृत्तम्। जनसाधारणानां विश्वास उत्पादितः यत्पूर्वजानामनुष्ठितयज्ञानुकरणेन धनादिकं लभ्यते" इति तन्न, त्वदुक्तकल्पनाया निष्प्रमाणकत्वाद्वेदविरुद्धत्वाच्च।

वस्तुतस्त्वयं डांगेमहाशयो न वेदस्याक्षरार्थतात्पर्य्यान्वेषणाय प्रवृत्तः, किन्तु कथञ्चिदपि वेदेषु कम्यूनिज्मतत्त्वसाधनायैव प्रवृत्तः। अत एवैतेन

पूजाद्यर्थकयजधातोर्निष्पन्नोऽपि यज्ञशब्दोऽन्यथा साधयितुमिष्यते । तथा-विधार्थकरणे किं बीजमिति तु न शक्यते दर्शयितुम् ।

यूरोपीया भारतीयाश्चेतिहासकारास्तु तादृशं विरुद्धमर्थं कल्पयितुं न शक्नुवन्ति । तदेतत्तेषां नैर्बल्यं कम्यूनिजमाज्ञानमूलकमभ्युपैति ।

सत्रक्रतुयज्ञशब्दानामर्थस्तु मन्त्रैर्ब्राह्मणैः सूत्रैश्च देवयजनरूपो विहित इत्युक्तमेव । यथा चक्षुर्भिन्नैरिन्द्रियै रूपस्याज्ञातत्वादेवाज्ञातज्ञापकत्वेनाज्ञात-रूपज्ञापकत्वाच्चक्षुषः प्रामाण्यम् । तथाविधस्याज्ञातशब्दस्य ज्ञापकत्वेनैव श्रोत्रस्य प्रामाण्यमेवं प्रत्यक्षानुमानाभ्यामज्ञातस्य धर्मस्य ब्रह्मणश्च ज्ञाप-कत्वेनैव वैदिकशब्दस्य प्रामाण्यम् ।

पौरुषेयाणां शब्दानां पुरुषाश्रितभ्रमप्रमादविप्रलिप्साकरणपाटवादिदोष-दूषितत्वेनाप्रामाण्यसंभवेऽपि तद्विपरीतापौरुषेयवेदस्य तदभावादनपेक्षमेव प्रामाण्यम् सिद्ध्यति । प्रत्यक्षानुमानासिद्धधर्मब्रह्मबोधकत्वमेव वेदत्वम् ।

अयञ्च शब्दो योगरुढः । अतो धर्मब्रह्मबोधकानाम्पौरुषेयधर्मब्रह्म-शास्त्राणां न वेदत्वम् । तथाकथितसाम्यसङ्कृतदुत्पादनप्रणालीबोधकत्वेन त्वदीयग्रन्थानामिव वेदानामपि वेदत्वं प्रामाण्यञ्च न स्यादेव पाषाणैरन्नपेषणादिकं तु विधिप्रयुक्तमेव । अप्राप्तप्रापकविधेरेवापूर्वविधित्वम् । पक्षान्तराप्राप्तिप्राप्तफलकस्य विधेस्तु नियमविधित्वमेव ।

अत एव "आयसशस्त्रादेरनाविर्भावात्पाषाणमयैः क्षुरादिभिरेव कार्य्यं क्रियते स्मेति" कल्पनापि निरर्थिकैव । सर्वज्ञस्य परमेश्वरस्य सर्वज्ञकल्पवेद-स्याज्ञानकल्पनाऽसंभवात्, सौवर्णायसस्वधितिवाणभूषणादिवस्तुप्रयोगस्य यज्ञेषु दर्शनाच्च । अत एवाग्नेः पशुपालनस्याविर्भावेन क्रान्तिकारिपरिवर्त-नमिति तैर्न ज्ञातमि" त्युक्तिरपि मुधैव । अलौकिककार्य्यकारणभावस्य मिथ्यात्वकल्पनमपि पलायनमेव ।

यदुक्तं—स्वप्नप्रायाः कल्पना अपहाय वस्तुतत्त्वान्वेषणेनोत्पादन-प्रणाल्येव यज्ञः सिद्ध्यति" तदपि निरर्थकम् । शब्दार्थनिर्णये शब्द-पारतन्त्र्यावश्यंभावित्वेन स्वाभ्यूहितकल्पनायाः शब्दार्थत्वासंभवात् ।

यजिधातोरेव यज्ञशब्दो निष्पद्यते, न तु य इ इतिविभिन्नधातुभ्यस्त-दुत्पत्तिस्तत्र प्रमाणाभावात्। यजधातोस्तु सत्त्वे पाणिनिधातुपाठ एव प्रमाणम् ।

संगतिकरणादिकन्तु यजधातोरर्थं एव। यज देवपूजासंगतिकरणदानाद्यर्थेषु तत्प्रसिद्धेः।

किञ्च शब्दानां व्यवहारादेव संगतिग्रहो भवति। शक्तिग्रहणकारणेषु व्यवहारस्यैव मूर्धन्यत्वात्, व्यवहारे चादृष्टार्थं देवयजनरूपकार्यकलापेष्वेव यज्ञशब्दः प्रवर्तते।

किञ्च न इति नाशार्थक उक्तस्तस्य प्रकृते कथं संगतिः। अतः यजुः शब्दस्याप्ययमेवार्थ इत्यपास्तम्। तथा च सामूहिक वस्तुसन्तानोत्पादनप्रणाली यज्ञशब्दव्यपदेश्येत्यप्युपहासास्पदम्। सामूहिक-सन्तानोत्पादनप्रणाली तु कम्युनिस्टनामेव शोभते। तेषां रीत्या विवाह-प्रथायाः पूर्वं दायभागनिर्धारौपायिकत्वेऽपि साम्प्रतं व्यक्तिगतसम्पत्तीनां राष्ट्रायत्तत्वसंपादनेन संपत्त्यभावेन दायभागानुपयोगित्वेन विवाहस्यान-वश्यकत्वात्। अत एव लेनिन प्रभृतिभिरुक्तं किञ्चिज्जलपानार्थं यथा जल-धानी ( बालटी ) वहनं नावश्यकम्। यत्रैवेष्यते तत्रैव तल्लाभसंभवात्। तथैव कस्याश्चिदैहिक्या आवश्यकतायाः पूर्तये विवाहेन नार्य्या वहनमपि नावश्यकं सर्वत्र तल्लाभसंभवात्।

एवमेव "वैयक्तिकसत्तास्थापनानन्तरम् सत्रक्रत्वादिसत्तालोपः" इत्युक्तिरपि निरर्थिकैव। त्वदभिमतसत्रात्मकसाम्यसङ्घसत्तापेक्षया अपि पूर्वं सत्रप्रकृतिरूपसोममूलकवैयक्तिकसत्तायाः साधितत्वात्।

वस्तुतस्तु क्रतुयज्ञादिशब्दानां पर्य्यायवाचकत्वं सत्राणान्तद्विशेष-रूपत्वमेव। विधिवलादेव यज्ञाद्यनुष्ठानम्, नतु सामूहिकश्रमकरणरूपेण तदनुष्ठानं विधिमन्तरा-तद्वैयर्थ्यात्। गतो मार्गोऽनुगम्यते इतिरीत्या शास्त्रा-विरुद्धमेव देवानां पूर्वजानां वानुकरणं क्रियते। 'तदेव चरितं चरेत्' इति शास्त्रविरुद्धानुकरणस्य निषेधात्।

यदपि "वेदकालीनार्य्याणां ब्रह्मन् शब्दोऽपि नौपनिषददार्शनिक-ब्रह्मपदार्थः। तथाहि—मौलिकबुद्धिचेतनादिशब्दित आत्मैव ब्रह्म, विश्व-सृष्टिस्तदाभासमात्रं, ब्रह्म तु निर्गुणं गुणातीतं वा। अर्धवन्यावस्थायां वर्त्तमाना वैदिकाः समाजस्यान्तर्विरोधं वर्गसंघर्षशोषणञ्च न जानन्ति स्म। तेन निःसारदार्शनिकब्रह्मकल्पना तैर्न कर्त्तुं शक्यते स्म। औपनिषद्ब्रह्मणः

साक्षात्कारो ध्यानमात्रसाध्यः। वैदिकानां तु ब्रह्मयथार्थभूतं बाह्यसत्यमासीत्। मानवा भौतिकश्रमद्वारा यस्यानन्दमनुभवितुं शक्ताः। आदिमसाम्यसङ्घरूपं तद्ब्रह्मानन्दमनुभवति, खादति, पिबति, नृत्यति समुन्नमति। औपनिषदे ब्रह्मणि तत्सर्वं न संभवति, तस्य मनोवचनातीतत्वात्। स्वस्थे जीवनेऽभिवर्धमाना वैदिका आर्य्या अस्तित्वशून्येऽर्थहीने उदासीने ब्रह्मणि सर्वथा निरपेक्षाः। अतः साम्यसंङ्घस्तत्सदस्याश्च ब्रह्मपदार्थः। वन्यावस्थायां वर्तमानत्वात्तेनापि-चन्द्रसूर्य्याकाशपृथिव्यादीनां सम्बन्धः साम्यसंघेन संस्थापितः। आदर्शवादि-दर्शनप्रभावेण विद्वद्भिर्नैतदवबुद्धम्।

ह्याग, एर्गलिंग, हिले ब्राट, केतकर, तिलक प्रभृतिभिर्ब्रह्मतत्त्वं परिश्राम्यद्भिरपि यथावत्तन्नावबुद्धं तथैव यज्ञोपि। ह्यांग महाशयेन सायणोक्ता अनेके अर्था गृहीताः। तत्तुच्छम्, भावानवबोधात्। यद्यपि बृहतेर्धातोरर्थानुगमात् अनन्तपदसमभिव्याहाराच्च 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति निरतिशयानन्दज्ञानात्मकमेव ब्रह्म, तथापि--प्रकरणानुरोधेन ब्रह्म-शब्दस्यानेके अर्थाः संभवन्त्येव। कचिन्निर्गुणं ब्रह्म, कचित्सगुणं, कचित्तदव-द्योतको वेदोऽपि ब्रह्म शब्दव्यपदेश्यो भवत्येव। 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यत्र निर्गुणं ब्रह्म, 'ब्रह्म देवेभ्यो विजिग्ये' इत्यत्र सगुणं ब्रह्म, 'कर्म ब्रह्मोद्भवं विद्धि' अत्र ब्रह्म वेदः, 'मम योनिर्महद् ब्रह्म' प्रकृतिरेव महद्ब्रह्म पदार्थः। विराट् हिरण्यगर्भ चतुर्मुखप्रभृतयोऽपि ब्रह्मपदव्यपदेश्याः। मन्त्रा ब्राह्मणानि आरण्यकानि उपनिषदश्च वेदा एव। न तत्र पौर्वापर्य्यं कालभेदो वा वक्तुं शक्यम्। ऋक्-संहितायामपि वेदचतुष्टयसम्बन्धिनामृत्विजां वर्णनस्योक्तत्वात्।

ऋत्विग्विशेषोऽपि ब्रह्मपदार्थः।

"ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उत्त्वः॥"

(ऋ० सं० १०।७१।११)

'मन्त्रा अर्धवन्यावस्थायां ज्ञानविज्ञानविशेषविकासेभ्यः पूर्वमारचिता-स्तत्रापि केचिन्मन्त्रा पश्चान्निर्मिता' इत्येतत्सर्वं निर्मूलमेव। वेदमन्त्रेष्वेव वेदलक्षणाया वाचो नित्यत्वश्रवणात्। 'वाचा विरूपनित्यया' इति मन्त्र-वर्णात्। ब्रह्मणो विधात्राऽपि वेदा न निर्मीयन्ते किन्तु वेदा ब्रह्मणो हृदि

प्रतीयन्ते। 'यो वै वेदांश्च प्रहिणोति तस्मै' ब्राह्मणभागेषु अस्य महतो भूतस्य ब्रह्मणः सगुणस्य निःश्वासरूपत्वमुक्तं वेदानाम्। सर्वमेतत् त्वत्कल्पनया विरुद्ध्यते।

यदुक्तम् 'अन्नस्वामी स्तुतिस्वामी वा ब्रह्मणस्पतिशब्दस्य नार्थः किन्तु ब्राह्मणानां नेतॄणां नेता इति राजवाडे महाशयः। वयं तु यज्ञसाम्यसंघ-(कम्यून)स्य नेता ब्रह्मपदार्थ इति ब्रूमः। ऋ० ८।३७।१।७६।६।५२।३, ९६।२३।५, २।४७।२, ७।२९।९।

यद्यपि ब्रह्म, ब्रह्मणस्पति शब्दप्रदर्शनार्थं डाङ्गे महाशयेन उपर्युद्धृतं स्थलं निक्षिप्तम् तथापि न तत्र सर्वत्र ब्रह्म ब्रह्मणस्पति-शब्दः उपलभ्यते। यत्र चोपलभ्यते न तत्रादिमसाम्यसङ्घपरः किन्तु क्वचिन्मन्त्रपरः, क्वचिद् ब्राह्मणजातिपरः।

हिस्वे ब्राटरीत्या ब्रह्मन्शब्दस्य नवीना सत्ता अर्थः। इदानीं यावद्यस्य सत्ता नासीत्, पूर्वजेभ्यो यज्जन्यते, यज्ञध्वनेः सोमाभिष-वाद्वेदपाठाच्च तस्य सत्त्वं वस्तुभूतं भवति। तच्चान्यदेवैः साकं युद्ध्यतेऽपि। सोमस्तद्रक्षकः। ब्रह्मन्पदवाच्या काचिद् रहस्यमयी शक्तिः। विधिकर्मभिस्तदाह्वानं शक्यम्। हागस्वीकृतामिमां परिभाषां हिलेब्राटः समर्थयते। मन्त्रपाठे दक्षिणाभिः सा शक्तिराहूयते। सा साम्य-संघसत्तारूपैव भवितुमर्हति। तामेवार्य्या परिश्राम्यन्तो गायन्तः सोमं पिबन्तः विराड्ब्रह्मरूपेण चिन्तयन्ति स्म। यस्यां विकासावस्थायां ते जीवन्ति-स्म। तस्यां साम्यसंघरूपायां शक्तौ रहस्यमय्यां (या यज्ञाज्जनित्वात्तत्रैव निवसति यज्ञेनैवाहूता गच्छति) सामूहिकपरिश्रमे पशुचेतनाया (भौतिकचेतनाया) उत्थानं जागरणमर्धवन्यावस्थायां रहस्यात्मकश्चमत्कार इवानुभूयते स्म।

अग्निप्रादुर्भाव-पशुपालन-सामूहिकोत्पादनश्रमतदुपभोगप्रणालीरूपेण— यज्ञेनैव साम्यसंघरूपं ब्रह्मोत्पद्यते। धनधान्यसमृद्धं वैभवशक्ति च सम्पद्यते रक्ष्यते च। तेनैवार्य्याणां सर्वमग्नौ तदाधारिते यज्ञे केन्द्रितम्। तेनैव प्रगतिपथमारुह्याग्रेसरन्तः लोहद्रावणादिना दात्री कुठारादि निर्माणा-दिभिरुन्नता भूत्वापि पूर्वजानामिव देवप्रीत्यर्थं नूत्नयज्ञमनुकुर्वन्ति स्म। तेऽपि

तान्येव छन्दांसि गायन्तः सोमादि घासान् दात्र्यादिभिस्तच्छेदनमकृत्वाऽश्वास्थिभिरेव छिन्दन्ति ।

यद्यपि तदानीमादिमसाम्यसंघो नासीत्, नवा वस्तुभूतः सामूहिकोत्पादनप्रणालीरूपो यज्ञ आसीत् तथापि प्रतीकरूपेण तत्कृत्यानि समावर्त्तयन्ति ।

वस्तुभूतस्य प्राचीनस्य साम्यसङ्घस्य ब्रह्मणो जीवनं न पुनरावृत्तम् । यस्य समाजस्य यज्ञो यथार्थं वस्तुरूपो यज्ञ आसीत् तस्यैवोत्तराधिकारिभिरस्तित्वहीना मिथ्याभूता यज्ञाः प्राप्ताः । तेनैवातीतानि अनेकानि व्यवहारचिह्नान्यवशिष्यते । "विधिरूपेणैव यज्ञानाचरन्तः छन्दांसि फलाशया पठन्ति " इति, तदपि तुच्छम्, निष्प्रमाणत्वात् ।

निम्नोक्तसंख्याका मन्त्राः प्रमाणत्वेनोपन्यस्ताः । तेषु ये मन्त्रा उपलभ्यन्ते तेनैव तत्समीहितसिद्धिः । केचित्त्वनुपलम्भपराहता एव । तथाहि—

'प्रेदं ब्रह्म वृत्रतूर्येष्वाविथ-प्रसुन्वतः शचीपत इन्द्र विश्वाभिरूतिभिः ।
माध्यन्दिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥
(ऋ० सं० ८।३७।१)

हे शचीपते ! इन्द्र त्वं वृत्रतूर्येषु सङ्ग्रामेषु इदं ब्रह्म इमान् ब्राह्मणान् विश्वाभिः सर्वाभिः अतिभिः रक्षाभिः प्र आविथ प्र रक्ष । सुन्वथः सोमाभिषवं कुर्वन्तो यजमानांश्च प्र आविथ । अपि च हे अनेद्य अनिन्द्य वज्रिवः वज्रिन् वृत्रहन् इन्द्र माध्यन्दिनस्य सवनस्य सम्बन्धिनं सोमस्य सोमं पिब ।

अत्र ब्रह्मशब्दस्य ब्राह्मण एवार्थः । ब्रह्मशब्देन साम्यसङ्घस्य ग्रहे तत्रैव समेषामन्तर्भावः । पुनः सुन्वतः इति यजमानानां सोमाभिषवं कुर्वतां पृथग्ग्रहणं—व्यर्थमेव स्यात् ।(ऋ०सं० ७।६९।९) एतत्संख्याको मन्त्रो नास्त्येव । तस्माद् ब्रह्मपदेन ऋत्विग्भूता ब्राह्मणाः सुन्वत इति च यजमानग्रहणं सर्वथा श्लिष्टम् ।

"अस्मै वयं यद्वावान तद्विविष्म इन्द्राय यो नः प्रदिवो अयस्कः ।
सुते सोमे स्तुमसि शंसदुक्थेन्द्राय ब्रह्म वर्धनं यथासत् ॥"
(ऋ०सं० ६।२३।५)

प्र दिवः पुराणः यः इन्द्रः नः अस्मदर्थं अपः पोषणादिकं कर्म कः करोति अयमिन्द्रः। यत् स्तोत्रादिकं वा न कामयते अस्मै इन्द्राय वयं तद्विविष्मः

व्याप्नुमः कुर्म इत्यर्थः । सोमे सुते अभिषुते सति स्तुमः इन्द्राय स्तोत्राणि कुर्मः । उक्था उक्थानि शस्त्राणि शंसन्तः । ब्रह्महविर्लक्षणमन्नम् इन्द्राय इन्द्रार्थं वर्धनं यथावृद्धिकरं असत् स्यात् तथा कुर्मः इत्यर्थः ।

अत्रापि ब्रह्मशब्दस्य हविर्लक्षणान्नमेवार्थो युक्तः, बृंहणहेतुत्वात् । यद्यत्र ब्रह्मसाम्यसङ्घः स्यात्तदा त्वद्रीत्येन्द्र एव संघार्थो भवति, नतु संघ इन्द्रार्थो युज्यते । किञ्च सुते सोमे हविरेवापेक्षितम् । तत्र साम्यसङ्घस्य प्रसङ्ग एव नास्ति । सोमे अभिषुते इन्द्राय स्तोत्राणि क्रियन्ते, उक्थानि शस्त्राणि च शस्यन्ते । तैर्ब्रह्मलक्षणस्य हविषो बर्धनं भवति । (ऋ०सं० ७। २९।९ ) अयमपि मन्त्र; नास्ति ।

"त्रिबन्धुरेण त्रिवृता सुपेशसा रथेनायातमश्विना ।
कण्वासो वा ब्रह्मकृण्वन्त्यध्वरे तेषां सु श्रृणुतं हवम् ॥"

( ऋ०सं० १।४७।२ )

हे अश्विना त्रिबन्धुरेण उन्नतानतरूपत्रिविधबन्धनकाष्ठयुक्तेन त्रिवृता अप्रतिहतगतितया लोकत्रये वर्तमानेन सुपेशसा शोभनसुवर्णयुक्तेन रथेन आयातम् इहागच्छतम् । कण्वासः कण्वपुत्राः मेधाविन ऋत्विजो वा वां युवयोः अध्वरे यागे ब्रह्मस्तोत्ररूपम् मन्त्रं हविर्लक्षणमन्त्रं वा कृण्वन्ति कुर्वन्ति । तेषां कण्वानां हवम् आह्वानम् सुशृणुतं सुष्ठु आदरेण शृणुतम् ।

यागे सोमाभिषवः स्तोत्रं शस्त्रं हविर्दानञ्च भवति । न चात्र साम्यसंघः प्रकृतः प्रसक्तो वा ।

"किमङ्ग त्वा ब्रह्मणः सोमगोपां किमङ्ग त्वाहुरभिशस्तिपां नः ।
किमङ्ग नः पश्यसि निन्द्यमानान् ब्रह्मद्विषे तपुर्षि हेतिमस्य ॥"

( ऋ० सं० ६।५२।३ )

किमङ्गेति प्रसिद्धिद्योतकौ निपातौ । हे सोम त्वा त्वां खलु ब्रह्मणः मन्त्रस्य कर्मणो वा ब्रह्मजातेर्वा गोपां गोपायितारं आहुः कथयन्ति पुराविदः । तथा नः अस्माकम् अभिशस्तियाम् अभिशंसकेभ्यः शत्रुभ्यः पालयितारं त्वामेव खल्वाहुः । यद्वा अङ्गेत्यभिमुखीकरणे अङ्ग हे सोम कि कारणम् त्वां ब्रह्मणो गोपामाहुः । कि करणं त्वामस्काममभिशस्ति-

पामाहुः। निन्द्यमानान् परैर्दूष्यमाणान् नः अस्मान् अङ्ग हे सोम किं कारणं पश्यसि। त्वामेव सर्वे ब्रह्मणे रक्षकं शत्रुभ्यः पालकञ्च कथयन्ति। अतोऽस्मासु परैर्निन्द्यमानेष्वौदासीन्यं तवानुचितम्। अतः ब्रह्मद्विषे ब्राह्मण-द्वेष्ट्रे तस्मै तपूंषि तापुकं हेतिम् आयुधम् अस्य क्षिप प्रेरय।

अत्रापि मन्त्रे ब्रह्मशब्देन साम्यसंघो न ग्रहीतुं शक्यस्तस्य संगति-ग्रहाभावात्, प्रमाणाभावाच्च। किन्तु सोमस्तुतिप्रसङ्गे मन्त्रादय एव विवक्ष्यन्ते। मन्त्रे देवबृंहण हेतुत्वाद् ब्रह्मत्वं कर्मण्यपि तेनैव हेतुना ब्रह्मत्वं संभवति। साम्यसङ्घस्य पालकः कथं वा जडरूपः संस्तूयते। घासरूपः सोमः कथं वा तेषां पालयिता भवति ? देवरूपश्च सोमस्त्वया नाभ्युपेयते। ब्राह्मण-जातावपि ब्रह्मशब्दो युक्तः, मुख्यब्रह्मसाक्षात्कारे प्राधान्येनाधिकृतत्वात्।

किञ्च कया वृत्त्या ब्रह्मशब्दः साम्यसंघे वर्तते इति तु नोक्तम्, व्याकरण-कोषादिषु व्यवहारेषु वा न ब्रह्मशब्दस्य साम्यसङ्घोऽर्थ उक्त। गौण्या चेत्कै-र्गुणैः साम्यमस्त्युभयोः। शक्यार्थः क इति पूर्वं वक्तव्यम्, तेन च साम्यसंघस्य संबन्धो वाच्यः। शक्यार्थसम्बन्धिन्येव लक्षणा संभवति। अतो न लक्षणा पत्तिरपि। अन्वयानुपपत्त्या तात्पर्य्यानुपपत्त्या वा लक्षण। तात्पर्यं कथं ज्ञायते, कथञ्च तदनुपपत्तिः, कथञ्च लक्षणायां तदुपपत्तिः। प्रायः ब्राह्मणेषु मन्त्रा बहुत्र व्याख्यायन्ते, उपनिषदपि ब्राह्मणान्तर्गतैव। तेनोपनिषदुक्ता ब्रह्मपदव्याख्या नोररीक्रियते। निष्प्रमाणं किमपि कल्प्यत इति चित्रम्।

उपनिषदि तु स्पष्टमुक्तम्—'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभि संविशन्ति। तद्विजिज्ञासस्व तद् ब्रह्म, (तै. उप.), उत्तरमीमांसायाम् 'अतो ब्रह्मजिज्ञासे' ति वेदरहस्यज्ञेन भगवता व्यासेन ब्रह्मविचारं प्रकृत्य तल्लक्षणं सूत्रितम् 'जन्माद्यस्य' इति। ब्रह्मणस्त-टस्थमेतल्लक्षणमुक्त्वा 'प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधा' दिति सूत्रानुरोधेन प्रपञ्चस्याभिन्ननिमित्तोपादानकत्वं ब्रह्मणो लक्षणं पर्य्यवस्यति। तदेव च पारम्पर्य्यानुरोधेनाचार्य्यैरङ्गीक्रियते।

''सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' इत्युपनिषदनुरोधेन च ब्रह्मणः स्वरूपलक्षणमुच्यते।

'वैदिका अर्धवन्यावस्थायां वर्त्तमाना वेदं रचयामासुस्तेन दार्शनिकं ब्रह्म तेषां बुद्धौ नासी' दिति यदुक्तं तदपि तुच्छम्। यतो अर्धवन्यावस्थायां विविधविज्ञानोपबृंहितवेदमन्त्राणामपि निर्माणासंभव एव। कैः कदा वेद-मन्त्रा निर्मिता इत्यत्र प्रमाणाभावादेव सर्वमेतत्कल्पनामात्रम्। वेदवचनैस्तु वेदानां नित्यत्वमेवावगम्यत इत्युक्तमेव।

"ब्रह्मध्यानसाध्यमि"ति जल्पनमपि मौर्ख्यनिबन्धनमेव, ब्रह्मणो नित्यत्वे-नासाध्यत्वात्। वस्तुतस्तु साम्यसंघ एव काल्पनिकस्तत्सत्त्वे प्रमारणाभा-वात्, समूहरूपस्य संघस्य समूहिव्यतिरेकेणासत्त्वाच्च। यथा व्यष्टि-वृक्षव्यतिरेकेण वनं न भवति, सैनिकव्यतिरेकेण सेना न भवति तथैव समूहि-व्यतिरेकेण समूहोऽपि न संभवत्येव। तथा च स्वयमसत् संघः कथं खादितुं पातुमानन्दमनुभवितुं शक्नोति।

उपनिषदुक्तं तु ब्रह्म न केवलं निर्गुणमेव किन्तु सगुणमपि तद्भवत्येव, प्रपञ्चोत्पादयितृत्वस्य निर्गुणोऽसंभवात्। हिरण्यगर्भरूपेण जीवरूपेण च ब्रह्मैव तत्तद्व्यवहारभाग्भवतीति ब्रह्मविदो जानन्त्येव। प्रमाणहीनकल्पनायां मार्क्सीया एव निगुणाः।

विद्वांसस्तु प्रमाणपरतन्त्रा न साम्यसंघं ब्रह्म वक्तुं प्रभवन्ति, न वेमाम् सामूहिकोत्पादनप्रणालीं यज्ञपदेन व्यवहर्त्तुं प्रभवन्ति। नहि साम्यसङ्घो विराडपि संभवति। सत्रलक्षितसङ्घस्य सप्तदश संख्याकाः, पञ्चविंशति-संख्याका वा जना न विराट्पदव्यपदेश्या भवितुमर्हन्ति। कथञ्च तस्याचिन्त्य-रहस्यमयशक्तिरूपत्वं वक्तुं शक्यम्। सा शक्तिर्यज्ञेनैवाहूयते यज्ञे तिष्ठतीत्यादि सर्वमपि बालजनजल्पितमेव।

वास्तविकयज्ञस्वरूपं तु मन्त्रब्राह्मणसूत्राद्यनुसार्य्येव। तस्य च सर्वदैवादृष्ट-द्वाराभ्युदयहेतुत्वम्। अग्नेरपि देवरूपेण सर्वाभ्युदयहेतुत्वम्। लोहद्रावणादि-हेतुत्वेन याज्ञिकायाज्ञिकसाधारणनामेवोपकारकत्वम्। उत्तरे मनुष्याः पूर्वजा-नामनुकर्त्तारः सर्वत्रैव भवन्ति तथापि प्रगतौ सत्यां तद्विपरीतमप्याचरन्तो दृश्यन्त एव।

पूर्वं लौहमयानि शस्त्राणि नासन्। पश्वस्थिभिरेव घासछेदनादि-कार्य्यं चलति स्मेति तु मिथ्यैव, 'स्वधिते मैनं हिंसीः' 'सुवर्णं भार्यम्' 'हिरण्य-

कशिपा आसीनो होता जल्पेत् इत्यादिवचनैः यज्ञपद्धतिषु सुवर्णलोहादिप्रयोगस्य सम्मतत्वात्। अत एव नव्यसामाजिकक्रान्त्याऽदिमसाम्यङ्घस्य मरणमुत्तरेषां तदनुकरणेनापि तदनुज्जीवनादिकल्पनमपि निर्भित्ति चित्रकल्पनायितमेव।

यदुक्तं 'सगोत्रत्वे समानरक्तसम्बन्धः सिद्ध्यति। तेन साम्यसङ्घसदस्या एकरक्तसम्बन्धिनोऽभूवन्निति तदतीव मन्दम्, सगोत्रविवाहस्य निषिद्धत्वेनासगोत्राया एव कन्याया विवाहसंभवेनान्यरक्तसम्बन्धस्यानिवार्य्यत्वात्। विवाहानन्तरं तु—कन्यायाः पितृगोत्रनिवृत्तिः पतिगोत्रप्राप्तिरित्यन्यदेतत्। किंतु त्वद्रीत्या तु न केवलं सगोत्राणामेव भगिनीदुहित्रादीनामपि विवाहो भवत्येव। तच्च सर्वथा लोकवेदविरुद्धमेव।

यदुक्तं 'पूर्वजा मनुष्या एव देवा' इति तदपि न, वेदादिशास्त्रविरुद्धत्वात्। निरुक्ते तु दैवतकाण्डे मन्त्रस्तुतिभाजामेव देवतात्वमुक्तम्। तत्र कास्ता देवता इत्यपि—सप्तमेऽध्याये पञ्चमे खण्डे प्रपञ्चितम्।

'अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वा अन्तरिक्षस्थानो सूर्य्योद्युस्थानस्तासां महाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति, कर्मपृथक्त्वात्। यथा होताध्वर्य्युर्ब्रह्मोद्गातेत्यप्येकस्य सतोऽपि वा पृथगेव स्युः॥' तत्रापि पुरुषविधा अपुरुषविधाश्चेत्यपि विचारः। तत्रैव च अपि वोभयविधाः स्युरपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युर्यथा यज्ञो यजमानस्यैष चाख्यानसमय इति उभयविधप्रामाण्यात्। पुरुषविधानामेव सतां पृथिव्यादीनामपुरुषविधानामिति जलादयोऽपरे तदधिष्ठातारः पुरुषविधाः। यथा यज्ञो यजमानस्य कर्मात्मा यज्ञोऽपुरुषविधो भवति तद्वत्। अतएव पृथ्वी-स्त्रीरूपेण भारावतरणाय ब्रह्माणं ययाचे ( म० भा० आदिप० ६४ ) अग्निश्च ब्राह्मणरूपेण वासुदेवार्जुनौ खाण्डवं दग्धुं ययाचे। ( भारते आदि २२४।२२५) महाभाष्ये 'सत्यैश्वर्य्यात् देवता मूर्ता अमूर्ता एकधा बहुधा च संपद्यन्ते। यथादर्शनं मन्त्रदृशो वर्णयन्ति। इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः संसुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः॥'

( ऋ० सं० १।१६४।४६ )

'एष उ ह्येव सर्वे देवाः' ( बृहदारण्यके १।४६ ) एवमादिभिरेकैकस्यानेकरूपताऽप्युक्ता। "रूपं रूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परिस्वाम् त्रिर्यद्दिवः परिमुहूर्तमागात् स्वैर्मन्त्रैरनृतुपा ऋता वा ॥" ( ऋ० सं० ३।५३।८ ) विश्वामित्रोऽस्य द्रष्टा। यावन्ति रूपाणि मघवा इन्द्रो भवितुमिच्छति तानि सर्वाण्यप्रतिबन्धेन बोभवीति पुनः पुनर्भवति। कथं मायाः कृत्वा इदं भवामीत्येवं तन्वं परिस्वां स्वां तनुं तत्तदाकृत्याऽनेकविधां विकुर्वाणः। दिवः परि दिवोधि। द्युलोकान्मुहूर्तकालं प्रति यस्त्रिरगान् आगच्छति। स्वैर्मन्त्रैर्हूयमानः स्तूयमानो वा युगपज्जनानां यज्ञेषु अ नृतुपाः अनियतसोमकालः सर्वदा यागोपवत्तेः। ऋता वा ऋतवान् यज्ञवान् यस्मादिन्द्र आत्मानं विविधं करोति। दिवः मुहूर्तं त्रिरागच्छति तस्मादचिन्त्यप्रभावः।

'इन्द्रो मायाभिः पुरुरूप ईयते' ( ऋ० सं० ६।४७।१८ ) इति मन्त्रसंहितायामुपनिषदि च। 'स एष महानात्मा सत्तालक्षणस्तत्पदं ब्रह्म स भूतात्मा सैषा भूतप्रकृतिः' ( नि० १४।३ ) इत्यादि रीत्या घटादीनां मृदेव देवानां परमात्मनैक्यमेव।

देवताधर्मो मनुष्यधर्माद्विपरीतः, देवानामैश्वर्य्ययोगात्तद्राहित्याच्च मनुष्याणाम्। तेन ते इतरेतरप्रकृतय इतरेतरजन्मानश्च भवन्ति। देवता लोककल्याणार्थमेव जायन्ते, क कर्मफलभोगार्थमिति सप्तमाध्याये चतुर्थखण्डे निरुक्ततद्भाष्यादौ स्पष्टम्। विदग्धशाकल्यस्य कति देवा इति प्रश्ने 'त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति' याज्ञवल्क्येनोत्तरितम् ( बृ० उ० ३।९।१ ) तत्रैव अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशत् संख्यायां नामतो देवा निर्दिष्टाः। अग्निपृथ्वीवायुरन्तरिक्षादित्यद्युचन्द्रनक्षत्राणीत्यष्टौ वसवः। दशेन्द्रियाणि मनश्चेत्येकादश रुद्राः। संवत्सरस्य द्वादशमासा द्वादशादित्या उक्ताः। स्तनयित्नुर्यज्ञश्चेन्द्रप्रजापती संक्षेपात् पृथिव्यग्निवाय्यान्तरिक्षौन्द्रिरादित्यो भवति पादयोः। संक्षेपस्तु त्रयो लोकाश्च। संक्षेपः अन्यापि संक्षेपे प्रसिद्धा।

'त्रयस्त्रिंशत्सहस्रसंख्याका देवा' 'अनन्ता वै विश्वेदेवा' इति श्रुतिरीत्या देवानामानन्त्यमपि। सङ्कोचापेक्षया तु एक एवेत्युक्तम्।

'अग्निर्देवता सूर्य्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवता आदित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता॥' (यजु: सं० १४।२०) इत्यादिप्रामाण्याद् बहवो देवा ज्ञायन्ते। विग्रहवन्तश्च ते—

'भावं तु बादरायणोऽस्ति हि' (१।३।३३ ब्र० सू०) 'इन्द्रो ह वै देवानामभि प्रवव्राज' (छा० ८।७।२) एवमादिवचने विग्रहवतामिन्द्रादिदेवानां सत्त्वं प्रतिपादितम्। यद्यपि—आदित्यादिज्योतिरादिविषया देवताशब्दाः तथापि चेतनावन्तमैश्वर्य्याद्युपेतं तं तं देवतात्मानं समर्पयन्ति। मन्त्रार्थवादादिषु तथाव्यवहारात्।

सुब्रह्मण्यार्थवादे 'मेधातिथिं ह काण्वायनमिन्द्रो मेषो भूत्वा जहार' (षड्विंशब्राह्मण: १।१) 'आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम ह।' (भारते)। 'मृदब्रवीत्' 'आपोऽब्रुवन्' इत्यादयोऽपि तत्तदभिमानिव्यपदेशा उपपद्यन्ते। यद्यपि मन्त्रार्थवादानां विध्यर्थत्वेन स्वार्थे मुख्यं तात्पर्य्यं न भवति तथापि प्रमाणान्तराविरोधे प्रमाणान्तरसिद्धौ च स्वार्थस्यापि प्रतिपादकत्वमवान्तरतात्पर्य्यं स्वार्थे भवति। यद्यपि आदित्यादिपदानां ज्योतिरादिषु व्युत्पत्तिग्रहस्तथापि सुखसाधारणवाचकस्य स्वर्गशब्दस्य 'यन्न-दुःखेन संभिन्न'मिति लक्षणलक्षिते विशिष्टे स्वर्गे यथावृत्तिर्लक्षणया तथैव मन्त्रार्थवादानुरोधेन विग्रहवत्सु चेतनावत्स्वपि लाक्षणिकः प्रयोगो युज्यते।

'शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्'। (ब्र. सू. १।३।२८) देवादीनां विग्रहवत्त्वे कर्मणि विरोधाभावेऽपि शब्दे विरोधः। औत्पत्तिकं हि शब्दस्यार्थेन सम्बन्धमाश्रित्यानपेक्षत्वाद्वेदस्य प्रामाण्यं स्थापितम्। तत्र देवताया विग्रहवत्त्वे ह्यैश्वर्यवत्त्वेन युगपदनेकत्र हविर्भोक्तृत्वेऽपि सावयवत्वेनानित्यत्वादनित्येनार्थेन सम्बन्धान्नित्येनार्थेन नित्यस्य शब्दस्य नित्ये शब्द-सम्बन्धे यद्वेदस्य प्रामाण्यं व्यवस्थापितं तत्र शब्दे विरोध इति चेन्नातः प्रभवात् वैदिकाच्छब्दाद्देवादिकं जगत् प्रभवति। लोके यथा कुलालश्चिकीर्षितं घटादिकमनुतिष्ठन् तस्य वाचकं शब्दं पूर्वं स्मृत्वा पश्चात्तमर्थमनुतिष्ठति

तथैव परमेश्वरोऽपि जानाति इच्छति करोतीति रीत्या कृतेर्ज्ञानजन्यत्वेन ज्ञाने च 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते'। ( वा. प. ब्र. का १२३ ) इत्यनुसारेण शब्दानुवेधावश्यम्भावित्वेन तैस्तैः शब्दैस्तांस्तानर्थान् संस्मृत्य शब्दानुविद्धज्ञानेन वा जगत् विरचयति ।

ननु कथमेतावता विरोधः परिहृतः ? देवदत्तस्य पुत्र उत्पन्ने तन्नामकरणं भवति । देवादीनामनित्यत्वे तद्वाचिनां वैदिकशब्दानामप्यनित्यत्वं भविष्यत्येवेति कथन्तद् विरोधः ? इति चेन्न, गवादिशब्दार्थसम्बन्धनित्यत्वदशनात् । यथा गवादिव्यक्तीनामनित्यत्वेऽपि गोत्वादिजातीनां नित्यत्वेन शब्दार्थसम्बन्धनित्यत्वविरोधस्तथैव प्रकृतेऽपि बोध्यम् । सैनापत्यादिशब्दवत्स्थानविशेषसम्बन्धनिमित्तश्चेन्द्रादिशब्दे सम्बन्धः संभवति। शब्दाज्जगत्प्रभवतीति कथमवगम्यते इत्यत आह—प्रत्यक्षानुमानाभ्यां प्रत्यक्षं श्रुतिः प्रामाण्यं प्रत्यनपेक्षत्वात् । अनुमानं स्मृतिः प्रामाण्यं प्रति सापेक्षत्वात् । ते हि शब्दपूर्वां सृष्टिं दर्शयतः । एत इति वै प्रजापतिर्देवानसृजता सृग्रमिति मनुष्यानिन्दव इति पितृन् इत्याद्याः श्रुतयः । 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।'

सावयवत्वेन जननमरणवत्त्वेन नित्यत्वाच्छब्दार्थसम्बन्धनित्यत्वेनानपेक्षत्वाद्वेदस्य यत्प्रामाण्यं व्यवस्थापितं तत्र शब्दे विरोधः स्यात् । लोके पुत्रोत्पत्त्यनन्तरं नामकरणं क्रियते । तेन येषां देवादीनां नामानि वेदे श्रूयन्ते तेषामुत्पत्त्यनन्तरमेव तद्वाचिनां शब्दानां संभवाच्छन्दार्थं संबन्धानामौत्पत्तिकत्वे भावेन नित्यत्वं भज्येत, इति चेन्न, अतः वैदिकशब्दादेव देवादिजगतः प्रभवति । यद्यपि स्थूलदृष्ट्या अर्थपूर्विका शब्दसृष्टिस्तथापि सिद्धान्ते शब्दपूर्विका अर्थसृष्टिः, प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामेतदवगम्यते । 'स भूरिति व्याहरत् स भूमिमसृजत्' । ( तै. ब्रा. २।२।४।२ )

> नामरूपञ्च भूतानां कर्मणाञ्च प्रवर्त्तनम् ।
> वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥ ( मनुः )

लोकेपि कुलालादयस्तैस्तैः शब्दैः शब्दानुविद्धैः ज्ञानैर्जानन्ति इच्छन्ति अथ घटादिकं रचयन्ति । तथैव परमेश्वरोऽपि वैदिकैः शब्दैस्तदनुविद्धैर्ज्ञानैस्तांस्तानर्थान् ज्ञात्वैव सृजति । तेन नात्र वस्वादिदेवानामनित्यत्वेन

वैदिकशब्दानामनित्यत्वं भविष्यति, तदुपपत्तेः प्रागपि तेषां सत्त्वात्। न चार्थानित्यत्वे कथं शब्दार्थसम्बन्धनित्यत्वमिति वाच्यम्, व्यक्तीनामनित्यत्वेपि तज्जातीनां नित्यत्वेन तदुपपत्तेः। सेनापत्यादिवत् स्थानवाचित्वेनापि इन्द्रादिशब्दानां स्थाननिमित्तत्वेन तन्नित्यत्वं भविष्यति। तस्मान्न वेद-प्रामाण्यविरोधः। वशिष्ठारुन्धत्योर्दिव्यत्वं ज्ञायते।

'देवानामायतनम्' (शतपथे १४।३।२।८) 'देवगृहा वै नक्षत्राणि' (तैत्तिरीये १।३।३।२) 'तद्यदतस्मिन्नाके स्वर्गे लोके देवा असीदेस्तस्माद्देवा नाकसाः' (शतपथे ८।६।१।१) इत्यादि प्रामाण्यान्मनुष्येभ्यो भिन्ना द्युलोकादिवासिनो महैश्वर्य्यवन्त एव देवा भवन्ति। तेषां सार्वज्ञ्यञ्चावगम्यते। 'देवा वै नृक्षरतो' (श. ८।४।२।५) 'मनो ह वै देवा मनुष्यस्य जानन्ति' (शतपथे २।१।४।१)।

'मनुष्याणां परोक्षं तद्देवानां प्रत्यक्षम्' (ताण्ड्य ब्राह्मण० २२।१०।३) इति प्रामाण्यान्मनुष्यमनोवेत्तृत्वं परोक्षज्ञत्वञ्च देवानां ज्ञायते। 'विद्वांसो हि देवाः' (शतपथ २२।१२।३) इत्यनेन देवानां 'विद्वत्त्वमुक्तम्। न विदुषां देवत्वम्। 'अमृता देवा' (श० २।१।३।४) 'द्राघीयो हि देवायुषम्' (श० ७।६।१।१०) 'अमृतत्वं प्रायच्छत् देवेभ्यः' (ताण्ड्य ब्रा० २२।१२।१) इति देवानाममृतत्वं कल्पपर्यन्तावस्थायित्वं दीर्घायुष्ट्वञ्च सिद्ध्यति।

'न वै देवाः स्वपन्ति' (श० ३।२।२।२२) 'अपहतपाप्मानो देवाः' (श० २।१।२।४) 'आनन्दात्मानो ह वै सर्वे देवाः' (श० १०।३।५।१३) 'तिर इव वै देवा मनुष्येभ्यः' (श० ३।३।१।८) 'सत्यमेव देवा अनृतं मनुष्याः' (श० ३।९।४।१) इत्यादिप्रमाणैरपि मनुष्यविलक्षणत्वं देवानां सिद्ध्यति। 'परोक्षं ह वै देवाः' (श० ३।१।३।२५) 'नहि वै अव्रतस्य देवा हविरश्नन्ति' (ऐतरेय ७।११) इति देवानां परोक्षत्वं पूतहविर्भोक्तृत्वञ्च ज्ञायते। न केवलं देवाः किन्तु पितरोऽपि मनुष्येभ्यो भिन्ना भिन्नलोकवासिनो भवन्ति। 'पितॄणां लोकमपि गच्छन्तु ये मृताः' (अथर्व १२।२।४५) 'तृतीया ह प्र द्यौः यस्यां पितर आसते। अन्तर्हितः पितृलोको मनुष्यलोकात्' (तैत्तरीय १।६।८।६) 'तृतीये ह वा इतो लोके पितरः' (तै० १।३।१०।५) 'पितॄणां वा एवादिग् दक्षिणा' (षड्विंशब्राह्मणे ३।१) इति श्रुतिभ्यः। भौतिकसाम्यवादिनां

स्वर्गनरकदेवपित्रादयो न सन्त्येव। तदेव ते वेदेऽपि साधयितुमिच्छन्ति। परन्तु वेदे स्वर्गादयः सन्ति। तप आदि धर्मनिष्ठाः स्वर्गं यान्ति।

तपसा य अनाधृष्या स तपसा ये स्वर्ययुः।
तपो ये चक्रिरे महास्तांश्चिदेवापि गच्छतात् ॥ १६ ॥
ये युध्यन्ते प्रधनेषु शूरा सो ये तनूत्यजः।
ये वा सहस्रदक्षिणास्तांश्चिदेवाहि गच्छताम्' ॥ १७ ॥

( अथर्व १८।२।१६-१७ )

'पितृलोकं गमयज्जातवेदाः। स्वाङ्गाः स्वर्गे पितरो मादयध्वम्'

( अथर्व १८।४।६४ )

'पितृणां लोकमपि गच्छन्तु ये मृताः' ( अ० १२।२।४५ )

'तृतीये ह वा इतो लोके पितरः' ( तै० १।३।१०।५ )

'त्वमग्न ईडितो जायवेदोऽवा इड कानि सुरभीणि कृत्वा। प्रादाः पितृभ्यः'। ( अ० १९।३।४२ )

'वैवस्वतेन प्रहितान् यमदूतान्' ( अ० ८।२।११ )

'पाशे स बद्धो दुरिते नियुज्यताम्' ( अ० २।१२।२ )

'योऽन्तरिक्षेण पतति दिवं यश्चातिसर्णति। भूमिं यो मन्यते नार्थं तं प्रदर्शय। ( अथर्व ४।२०।९ )

'अणिमा महिमा चैव लघिमा गरिमा तथा।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वञ्चाष्टसिद्धयः ॥'

इत्यादिसिद्धयो देवादिषु स्वाभाविक्यो भवन्ति। नहि वेदस्यैव कश्चिदेशो मान्योऽपरश्चामान्यः।

न केवलं देवा एव मनुष्यविलक्षणा भवन्ति। किन्तु प्रेतपिशाचाद्रयोऽपि विलक्षणा भवन्ति।

'योऽन्तरिक्षेण पतति दिवं यश्चातिसर्पति।
भूमिं यो मन्यते नार्थं तं पिशाचं प्रदर्शय ॥'

( अथर्व सं० ४।२०।९ )

यः अन्तरिक्षमार्गेण पतति यश्च दिवं द्युलोकं अति सर्पति यथेच्छं भ्राम्यति।

यश्च भूमिं नार्थमात्मानं मन्यते तं पिशाचं प्रदर्शय।
'येषां पश्चात् प्रपदानि पुरः पार्ष्णीः पुरो मुखा।
खलजाः शकधूमनाः उरुंडा ये च भटभटाः। कुम्भमुष्का अयाशवः।
तानस्या ब्राह्मणस्पते प्रतिबोधेन नाशय।'

(अथर्व सं० ८।६।१५)

येषां पश्चात् प्रपदानि पुरश्च पार्ष्णी पुरः पार्ष्णयो भवन्ति पुरो मुखा भवन्ति। ते च खलजाः शकधूमनाः गोमयधूमाभ्यामुत्पद्यन्ते। उरुंडा शिरोहीना भट्भट्शब्दं कुर्वन्ति। कुम्भमुष्काः। वायुवच्छीघ्रगामिनो भवन्ति हे ब्रह्मणस्पते रक्षोघ्नमन्त्रपते तान् अस्या मन्त्रशक्तेः प्रतिबोधेनोद्बोधनेन नाशय।

'उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुतकोकयातुम्।
सुपर्णयातुमुत गृध्रयातुं हृषदेव प्रमृणा इन्द्र रक्ष।'

(अथर्व सं० ८।४।२२)

हे इन्द्र उलूकवद् भ्रमणशीलं शुशुलुकमिव वृकमिव भ्रमणशीलम् जहि नाशय। श्वयातुं श्ववद्गमनशीलं कोकवच्च भ्रमणशीलं गरुड-गृद्धवदुत्पतनशीलं राक्षसञ्च हृषदेवप्रमृणपाषाणवदुग्रो भूत्वा मादय। माञ्च रक्ष एतावता विविधरूपा राक्षसा भवन्तीति वेदमन्त्रैरेव सिद्ध्यति।

'याः क्लन्दास्तमिषीचयोक्षकामा मनोमुहः।
ताभ्यो गन्धर्वपत्नीभ्योऽप्सरोभ्योऽकरं नमः॥'

(अ० वे० म० २।२।५)

याः क्लंदाः समाह्वानशीलाः, तमिषीचयो बलवत्यश्च। अक्षकामा द्यूतक्रीड़ासक्ताः, मनोमुहः प्राणिनां मनांसि मोहयन्ति, ताभ्यो गन्धर्वपत्नीभ्योऽप्सरोभ्यः नमस्कारं अकरं करोमि। एतेन गन्धर्वाप्सरसो वेदसिद्धा एव। तदभिप्रेत्यैव—

'विद्याधराप्सरो यक्षरक्षोगन्धर्वकिन्नराः।
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः॥

तस्मात् मनुष्या एव देवेति सर्वथाऽपास्तम्। ननु इज्या एव देवा न यष्टार इति चेन्न, यष्टृणामपि भविष्यद्वृत्त्या ओदनः पच्यते इतिवद्देवत्वव्यपदेशसंभवात्। अतएव देवानां वैविध्यम् तैत्तिरीयके—

'यूनः साधु यूनो वेदज्ञस्याशिष्टस्य द्रढिष्ठस्य बलिष्ठस्य वित्तपूर्णं समस्तभूमण्डलाधिपतेर्य आनन्दः समानुषानन्दमर्य्यादा उक्ता। मनुष्यगन्धर्वानन्दापेक्षया शतगुणितानन्दा देवगन्धर्वा उक्ताः। देवगन्धर्वापेक्षयाऽपि शतगुणिताधिकानन्दा पितॄणामग्निष्वात्तादीनामानन्दाः। तादृक् पित्रानन्दापेक्षयाऽपि शतगुणाधिकानन्दः आजानजानां देवानामानन्दः। आजानो देवलोकः। तत्र स्मार्त्तकर्मानुष्ठानेन—जाता देवा आजानजा देवा देवयोनिं गताः। तेषां ये शतमानन्दाः स एको मिलित्वा एकत्वसंख्यामापन्नः कर्म देवानामानन्दो भवति। ये श्रौतकर्मणा देवभावं गतास्ते कर्मदेवाः। अष्टौ वसव एकादश रुद्रा द्वादशादित्याः इन्द्रः प्रजापतिश्च कर्मदेवापेक्षयापि शतगुणितानन्दा देवा भवन्ति। त एव त्रयस्त्रिंशत्संख्याकाः। ततः शतगुणितो बृहस्पतेरानन्दस्ततोऽपि शतगुणितः प्रजापतेरानन्दः। ये शतकर्म देवानामानन्दाः स एको देवानामानन्दः। (तै० उ० अनुवाक ८)

किञ्च सत्रानुष्ठानावष्टम्भेन साम्यसङ्घव्यवस्था सिद्धयति चेत्तदा ततोऽपि प्राक् सत्रप्रकृतिसोमानुष्ठानावष्टम्भेन वैयक्तिकधनोद्योगोपभोगादयः सिद्धयन्ति। असोमयाजिनां सत्रानधिकारस्योक्तत्वात्।

यदुक्तम् 'सत्राणां यजमानो निर्वाचनेन क्रियते स्म' तदपि तुच्छम्। वर्गवादिनां तदनिष्टत्वात्। नहि वर्गवादिनो निर्वाचनं मन्यन्ते, धनादिप्रभावेणायोग्यानां शोषकाणाञ्च प्रभुत्वापत्तेः। अतएव लोकतन्त्रवादे निर्वाचनं सिद्धान्तो न साम्यतन्त्रे। सोमयाजिनां व्यक्तिगतास्तारतम्योपेताः सम्पत्तयश्च भवन्ति। तत्र सत्राधीननिष्पत्तिकादिमसाम्यसङ्घादपि प्राचीनो वैयक्तिकधनोद्योगादिवादः, सत्रस्य वैयक्तिकस्वत्वसापेक्षसोममूलकत्वात्। तथात्वे तस्यादिमत्वभङ्गः स्पष्ट एव। वेदेषु 'राजा स्वाराज्यकामो राजसूयेन यजेत'। 'साम्राज्यम्'... इति राजसम्राट्शब्दानां प्रत्यक्षप्रयोगेण धर्मनियन्त्रितराजतन्त्रशासनमेवादिममिति वक्तुं सुशकत्वात्।

कृतयुगे सर्वेषामेव सत्त्वप्राधान्येन सर्वेषां सर्वहितैषित्वपोषकत्वाभ्यां शोषणाद्यभावो शास्तृशिष्यशासनाद्यभावात् ।

'न वै राज्यं न राजासीन्न च दण्डो न दाण्डिकः ।
धर्मेणैव प्रजाः सर्वाः रक्षन्ति स्म परस्परम् ॥'

तत्र धर्मशासनं भवति । रजस्तमोबाहुल्ये तु—( म० भा० शा० प० ५९।१४ )

भौतिकसाम्यवादिनस्त्वीश्वरं नाङ्गीकुर्वन्ति । तन्मतरीत्या भूतानामेव गुणात्मकः परिणामश्चैतन्यम् । यथा अङ्कुरादिः मधुराम्ररसोऽप्याम्रयष्टेरेव परिणामो यथा वा कण्टकपत्रादिरिव पुष्पमपि पाटलकाण्डस्यैव परिणामस्तथैव मस्तिष्कादिरिव चैतन्यमपि शुक्रशोणितयोरेव परिणामः । यथा जलस्य शीताधिक्ये हिमरूपेणोष्मातिशये वाष्परूपेण परिणतिस्तथैवावस्थाभूतानामपि चैतन्यरूपेण परिणामः । ईदृशा एव गुणात्मका परिणामा भवन्ति । मार्क्सीयरीत्यैतदेव प्रकृतेरुत्फालनम् । परं वेदे तु पदे पदे परमेश्वरः प्रतिपादितः । 'ईशावास्यमिदं सर्वं' 'कविर्मनीषी परिभूः स्वयम्भूः' ( शु० य० ४० अध्याये ) ।

'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेवावदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' ॥
( शु० य० ३१।१८ )

'तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः' ॥

'एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वोह जातः स उगर्भे अन्तः स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतो मुखः । ( ७३२।४ ) 'यस्माज्जातं न पुरा किञ्च' 'येन द्यौरुग्रा पृथ्वी च हृढायेन स्वरस्तम्भितम् । येन नाकः' । ( शु० य० ३२ अध्याये ) 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' ( तै० उ० ) प्रतीचः आत्मनोऽपि नित्यज्ञानरूपत्वं तत्र तत्रोक्तम् । न केवलं निराकारनिर्गुणत्वमेव किन्तु साकारत्वमवतारधारित्वमपि तत्र तत्र स्पष्टम् ।

तथाहि 'मनवे हि वै प्राप्तः मत्स्यः थाणीमापेदे सहास्मै वाचमुवाच बिभृहि मारयिष्यामि त्वे'ति ( शव० १।८।१।१ ) अर्घ्य-

दानायोद्यतस्य मनोर्हस्तयोर्मत्स्य आपेदे। स एव विवृद्धिमुपगतो महामत्स्यः सम्पन्नः। तस्य श्रृङ्गेनावमाबद्ध्य मनुः स्वात्मानं ओषधीश्च ररक्ष। इति मत्स्यावतारः।

'अन्वरतः कूर्मभूतः तमब्रवीत्। नम वै त्वङ्मासात् समभूः नेत्यब्रवीत्। पूर्वमेवाहमिहासमिति। तत्पुरुषस्य पुरुषत्वम्। सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपाद् भूत्वोदतिष्ठत् (तैत्तिरीयारण्यके १।२।१।१) अत्र प्रजापतिः कूर्मभूतं दृष्ट्वा स्वत्वगादि समुत्पन्नं मेने। सोऽब्रवीदहे पूर्वमेनेहासम् तत स्व मम पुरुषत्वं पुरोषितत्वात् सहस्रशीर्षा भूत्वोदतिष्ठत् कूर्मावतारः।

'वराहेणा पृथ्वी संविदाना' (अ० १२।१।४८) 'उद्भूतासि वराहेण कृष्णेन शतबाहुना' (तै० १।१।३०) इति वराहावतारः।

'वज्रनखाय विद्महे तीक्ष्णदंष्ट्राय धीमहि नरसिंहप्रचोदयात्' (तै १। १।३१) इति नृसिंहावतारः।

'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढमस्य पांसुरे' (ऋ० १।२२।१७) इति वामनावतारः।

'अष्टचक्रा नवद्वारा देवानां पूरयोध्या। तेषां हिरण्मयः कोशः स्वर्गो ज्योतिषावृतः'। 'अग्निः प्रियेषु धामसु कामो भूतस्य भव्यस्य सम्राडेको विराजति'। (यजु० १२।११७) भूतस्य भव्यरूपैकः सम्राट् प्रियेसु धामसु कामः काम्यः सर्वानुरागविषयः अग्निरग्रणीः अग्निवत्तेजस्वी वाजिराजति इति रामावतारः।

'नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदया' दिति वासुदेवः कृष्णावतारे वर्णितो दृश्यते।

धर्मादेः धर्मशास्त्रैकसमधिगम्यता 'चोदनालक्षणोऽर्थो धर्मः' 'यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः। न स सिद्धिमवाप्नोती'त्यादि वचन-सिद्धा युक्तिर्नामानुमानम्। तच्चानुपश्चाज्जातं प्रमाणम् मानान्तरापेक्ष-मेवात्मानं लभते। तच्च युक्त्यनपेक्षं प्रत्यक्षमागमो वा? ययोर्दण्डघटयोः कार्य्यकारणभावोऽनुमानगम्यस्तयोः स्वरूपतः प्रत्यक्षगम्यतैव। गुरुत्वाद्यनु-मानस्थलेऽप्याद्यपतनं कार्य्यं स्वरूपतः प्रत्यक्षगम्यमेव। चक्षुराद्यतीन्द्रियानु-मानस्थले रूपाद्युपलब्ध्या तदनुमानं भवति, रूपोपलब्धेस्तु प्रत्यक्षगम्यतैव।

यागस्वर्गयोस्तु यागस्य प्रत्यक्षत्वेऽपि स्वर्गस्याप्रत्यक्षत्वान्न तयोः कार्य्य-कारणभावो दण्डघटयोरिवानुमानगम्यः संभवति, न वा गुरुत्वाद्यपतनयोरिव। नहि नित्यपरोक्षस्य गुरुत्वस्येव स्वर्गस्यानुमानं संभवति। कार्य्येण यद्यपि कारणमनुमीयते तथापि न कारणेन कार्य्यमवश्यमनुमीयते। नहीदानीं स्वर्गस्य किमपि कारणमवगम्यमानं दृश्यते।

यत्तु गोतमसूत्रे मेघोन्नत्या वृष्टेरनुमानमिति कारणलिङ्गकानुमानं तत्रापि सजातीययोः सम्बन्धः प्रत्यक्षगम्य एव।

तथा च स्वर्गादेः प्रमाणान्तरेणाप्रसिद्धत्वात् यागेन तस्य कार्य्यकारण-भावोऽपि नानुमातुं शक्यः। तस्मान्नित्यापरोक्षातीन्द्रियफलसाधनत्वं यद्वेदे क्रियाविशेषाणामुक्तं तन्नानुमानादिगम्यं न वा प्रत्यक्षगम्यम्। तत एव वेदैक-समधिगम्यत्वं धर्मस्य—चोदनयैव धर्मो गम्यते, न मानान्तरैः उपक्रमोपसंहारा-दिभिर्लिङ्गैर्विचार्य्यमाणया विदितपदतदर्थशाब्दन्यायेन धर्मोऽधिगम्यत एव न नाधिगम्यत इत्ययोगान्ययोगव्यावृत्त्या चक्षूरूपयोरिव धर्मचोदनयोरसा-धारणः सम्बन्धो बोध्यते।

एवमेव 'न हिंस्यात्सर्वा भूतानी'त्यादि निषेधानामपि न प्रत्यक्षादिभिर-नर्थहेतुत्वज्ञानं संभवति। न च हिंस्यमानस्य दुःखित्वदर्शनात्तत्कर्त्तुर्दुःखानुमानं संभवति, गुरुस्त्रीगमनादौ व्यभिचारात्। यदि हिंस्यमानस्य दुःखदातृत्वेन हिंसकस्य दुःखित्वं स्यात्तदा गुरुस्त्रीसुखदातृत्वेन गुरुस्त्रीगन्तुरपि परलोके सुखानुमानं स्यात्। शास्त्रेण त्वनर्थहेतुत्वमेव विज्ञायते। एतावता सम्प्रदानस्य यादृक् फलं दातुस्तादृक्फलावाप्तिर्न सिद्ध्यत्येव। न वा जपहोमादिषु परपीडासुखादिवर्जितेषु पुण्यजनकत्वं ज्ञातुं शक्यम्।

तस्माद्वेदविहितत्वात् क्रियाविशेषाणां धर्मत्वं निषिद्धत्वादेव च क्रिया-विशेषाणामधर्मत्वम्। एतेनानुग्रहाद्धर्मत्वं परपीडातोऽधर्मत्वमित्यप्यपास्तम्, जपसीध्वादौ तदुभयाभावेन पुण्यापुण्याभावप्रसङ्गात्। गुरुदारादिगामिनाम् धार्मिकत्वप्रसङ्गाच्च। तदुक्तं भट्टपादैः—

'अनुग्रहाच्च धर्मत्वं पीडातश्चाप्यधर्मता।
वदतो जपसीध्वादिपानादौ नोभयं भवेत्॥

क्रोशता हृदयेनापि गुरुदाराभिगामिनाम् ।
भूयान्धर्मः प्रसज्येत भूयसी ह्युपकारिता ॥'

किञ्च प्रतिषेधानपेक्षिणोऽनुमानप्रभानस्य दृष्टां पीडामपश्यतो हृदयाक्रोशनमपि कुतः स्यात् । शास्त्रानुपेक्षिणो मते पीडातोऽधर्मत्वमधर्मतश्च पीडेत्यन्योऽन्याश्रयता च स्यात् । अतएव शास्त्रसंस्कारशून्यो म्लेच्छादिर्हिंसादिभ्यो नोद्विजते । तस्माद्धर्माधर्मादिजिज्ञासुभिर्विधिनिषेधावेवाश्रयणीयौ । तदुक्तं मनुनापि—

'धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ।'

तत्रापि शास्त्रानुसारेणैवानुष्ठितयोः विहितप्रतिषिद्धयोर्धर्माधर्मजनकत्वं न स्वातन्त्र्येण । तत एवाग्नीषोमीयपशुहिंसनेऽपि नाधर्मत्वम् । अतएव सुरापानादिभिः शूद्रस्य तादृगनिष्टं न भवति, यादृग्ब्राह्मणस्य । वैश्यस्तोमेन विप्रराजन्ययोर्न फलं भवति । पञ्चम्यां दर्शादीष्टिकरणात् मध्याह्नेऽग्निहोत्रकरणात् शास्त्रोक्तं फलं न सिद्ध्यत्येव । तस्माद्यादृशं कर्म यत्फलोत्पत्तिशक्तिकं शास्त्रेण गम्यते तादृशस्यैव तत्फलमिति मन्तव्यम् । शास्त्रं नाकृतकर्तृ किन्त्वधिनगन्त्रेव । यथाभुजिक्रियाया अभिन्नत्वेऽपि स्वस्थातुरयोः फलभेदो दृश्यते, तथैव हिंसायाः समानत्वेऽपि विहिताग्नीषोमादौ पुण्यजनकताऽन्यत्रापुण्यजनकतैव, हिंसात्वाविशेषात् । सर्वत्र समानफलत्वे क्रियात्वाविशेषात्सर्वक्रियाणामपि समानफलत्वं स्यात्, यजित्वाविशेषाच्च चित्रादियागानां समानफलत्वमेव स्यात् । यदि तत्र भेदाद्व्यवस्था स्यात्तदा हिंसायामपि व्यवस्थैव युक्ता । तस्मात्केनचिदपि युक्तिवादेन धर्माधर्मनिर्णयो न कर्त्तुं शक्यते ।

यदुक्तम् 'कपिलादिसिद्धानामप्रतिहतज्ञानत्वाच्छ्रुतिमन्तरेणापि धर्मादिज्ञानं संभवत्येवे'ति, तदपि तुच्छम्, सिद्धेरपि धर्मानुष्ठानापेक्षत्वात् । स च धर्मश्चोदनालक्षण एव मन्तव्यः । तथा च पूर्वसिद्धचोदनाया अर्थो न पश्चिमसिद्धपुरुषवचनेनातिशङ्कितुं शक्यते । एतेन पूर्वाचार्य्याः स्वानुभवानुसारेणैव धर्माधर्मादिकं व्यवस्थापयामासुरिति कथनमप्यपास्तम् ।

'यस्तर्केणानुसंधत्ते' इति मनुवचनन्तु सन्न्यायानुग्रहेण शास्त्रतात्पर्य्यमुन्नेयमित्येव वक्ति, न तु धर्माधर्मनिर्णये तर्कस्वातन्त्र्यम् । तथा च मीमांसा-

रीत्यैव विरुद्धानामिव वेदवाक्यानां तात्पर्यावधारणं युक्तम् । अथवानुसंधानं तर्केण कर्तव्यमित्युक्तम् । अनुसन्धानन्तु ज्ञानस्यैव । तच्च सर्वसंक्षयनिरासेना-प्रामाण्यशङ्कानिरासेन च प्रामाण्यव्यवस्थापनमेव । अतएव वेदशास्त्राविरोधिना तर्केणेत्येव प्रतिपत्तव्यम् । तदुक्तं मनुना--

'प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितं कार्य्यं धर्मशुद्धिमभीप्सता ॥
आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥' इति

नित्यपरोक्षस्य परमाण्वादेरप्यनुमानमात्रेण साधनं न संभवति । तत एवाद्यापि तत्र वादिनो विप्रतिपद्यन्ते । युक्तिवादानुसारेण कारणस्वरूपं विवेचयितुं प्रवृत्तानां शाक्योलूक्याक्षपादक्षपणककपिलपतञ्जलीनां भिन्न-वाक्यता दृश्यते । तदुक्तं 'तर्काप्रतिष्ठाना' दिति सूत्रे शङ्करभगवत्पादैः--

'न शक्यन्तेऽतीतानागतवर्त्तमानास्तार्किकाः एकस्मिन्देशे काले च समाहर्त्तुम्, येन तन्मतिरेकरूपैकार्थविषया सम्यङ्मतिरिति स्यात् । वेदस्य तु नित्यत्वे विज्ञानोत्पत्तिहेतुत्वे च सति व्यवस्थितार्थविषयत्वोपपत्तेस्तज्जनितं ज्ञानमतीतानागतवर्तमानैः सर्वैरपि तार्किकैरपह्नोतुमशक्य' मिति ।

यथाभूते सिद्धे वस्तुनि केवलयुक्तिवादस्येदृशी गतिस्तदा भाविनि धर्मे युक्तिवादस्य प्रवेशः कथं कल्पयितुमपि शक्यः ।

यदप्युक्तम् 'तत्तद्देशकालपरिस्थितिरेव धर्मविशेषाणां प्रवर्त्तने निमित्त' मिति तदप्यपास्तम्, देशकालभेदेन-धर्मस्य फलभेद इत्यस्यापि शास्त्रभिन्नैः प्रमाणैर्ज्ञातुमशक्यत्वात् । नचान्वयव्यतिरेकाभ्यां तज्ज्ञानसंभवः, तद्ग्रहीतु-रेकस्यैकेन नाम्ना चैकेन शरीरेण स्थित्यसंभवात् । दृष्टविषये चेष्टानिष्टप्राप्ति-परिहारोपायज्ञानस्य प्रत्यक्षानुमानगम्यत्वाद्यद्यपि नागमान्वेषणा तथापि यत्र जन्मान्तरसंबंध्यात्मास्तित्वज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारोपायज्ञाने च प्रत्यक्षादिकं न प्रवर्त्तते तत्रैव वेदादिशास्त्रं प्रवर्त्तते । नानुमानेन जन्मान्तर-सम्बन्धग्रहणम् । तेनैव नानुमानेनात्मास्तित्वमपि सिद्ध्यति । मन्वादीनामपि धर्मापरोक्षज्ञानं न संभवतीति न्यायकुसुमाञ्जलावुक्तम् । अतीन्द्रियार्थ-दर्शनोपायो भावनेत्यभ्युपगमेऽपि नासौ सत्यमेव साक्षात्कारमुत्पादयति,

मृतपुत्रसाक्षात्कारे, विधुरपरिभावितभामिनीसाक्षात्कारे च व्यभिचार-दर्शनात् । प्रमाणान्तरादिति चेन्न, अहिंसादिहिताहितसाधनमित्यत्र तदभावात् । आगमादिति चेन्न, भावनामात्रमूलकत्वे तस्याप्यनाश्वास-विषयत्वात् । न चैकदेशसंवादेनापि प्रवृत्तिरिति वाच्यम्, स्वप्नाख्यानादि-वदन्यथापि संभवात् । न चानुपलब्धे भावनापि । चोरसर्पादयो ह्युपलब्धा एव भीरुभिर्भाव्यन्ते । न च कर्मयोगयोर्हितसाधनत्वं क्वचिदुपलब्धम् । न चैतयोः स्वरूपेणोपलम्भः । न वा भावनया तज्ज्ञान उपलब्धे भावना, भावनया चोपलम्भ इत्यन्योन्याश्रयात् । नचान्वयव्यतिरेको देहान्तरभोग्यत्वात्, तदनुष्ठाने फलाप्रतीतेश्च । न ह्यस्य कर्मणः फलमनुभवामीति प्रतिसन्धानं भवति । तदुक्तम्--'

> 'धर्मे प्रमीयमाणे तु वेदेन करणात्मना ।
> इति कर्त्तव्यताभागं मीमांसा पूरयिष्यति ॥'
>
> ( श्लोक० वा० )

तस्माद्यथा 'नरशिरःकपालं शुचि प्राण्यङ्गत्वाच्छंखशुक्त्यादिवत्' 'नृमूत्रं शुचि मूत्रत्वाद् गोमूत्रवत्' इत्यादि युक्तयः शास्त्रविरुद्धा युक्त्याभासमात्रा एव । तथैवान्या अपि शास्त्रविरुद्धा युक्तय ऊह्याः ।

एवमेव स्वपत्नी नोपभोग्या स्त्रीत्वात्, मातृवत् । शुनीस्तन्यपानमपूर्व-साधनम् द्रवपानत्वात् गङ्गाम्भःपानवत्, इत्यपि तथैव ज्ञेयम् ।

केचित्तु--'शास्त्रस्य बुद्धिनिर्मितत्वेन शास्त्रतात्पर्य्यनिर्णयस्य च बुद्धिपरा-धीनत्वात् बुद्धिशास्त्रविरोधे बुद्ध्यनुसारेणैव शास्त्रं नेय' मित्याहुः, तदपि न क्षोदक्षमम्, शास्त्रस्य चक्षुरादिवत्स्वतन्त्रप्रमाणत्वेन चक्षुषो रूप इव, श्रोत्रस्य शब्द इव, धर्मब्रह्मप्रतिपादने स्वतन्त्रत्वात् । बुद्धिस्तु प्रमात्मिका भ्रमात्मिका च भवति । तत्र पूर्वैव ग्राह्या; हेयैव च द्वितीया । प्रमात्मिका च बुद्धिः;प्रमाणा-पेक्षैव भवति न स्वतन्त्रा । नहि प्रज्ञामूर्तिरपि कश्चिच्चक्षुरन्तरा रूपमवगन्तुं शक्नोति । न वा घ्राणमन्तरा गन्धं गन्धविशेषं वा, न वा श्रोत्रमन्तरा शब्दं शब्दविशेषं वावधारयितुं शक्नोति, केवलाया बुद्धेर्बहिरस्वातन्त्र्यात् । एवञ्च शास्त्रानुसारिण्यैव बुद्ध्या शास्त्रार्थोऽवगन्तुं शक्यो न स्वातन्त्र्येण ।

नहि बुद्धया वेदादिशास्त्रं निर्मीयते, तस्य सर्वज्ञेश्वरबुद्धिनिर्मितत्वात् । मन्वादयोऽपि सर्वज्ञेश्वरनिर्मितवेदानुसारिणो न स्वातन्त्र्येण शास्त्र-प्रणेतार इत्युक्तमेव। पूर्वोत्तरमीमांसा दृष्ट्या त्वपौरुषेया एव, वेदनित्यत्व श्रवणात् । तस्मादनादिशिष्टपरम्परासमादृतवेदादिशास्त्रानुसारिण्यैव बुद्धया भाव्यम् ।

यदुक्तम् 'लाभपूजाख्यात्याद्यर्थमेव तत्र प्रवृत्तिः' तत्तुच्छम्, यतो नहि धर्मप्रवृत्तिः स्वरूपतो लाभादिहेतुः ।

यदुक्तम् 'दातरि मानयितरि जनोऽनुरज्यते। 'जनानुरागप्रभवा हि संपत्' इति, तदपि न 'नीतिनर्मसचिवेष्वेवे' ति तदर्थं दानादिव्यवस्थापनात् । दम्भार्थं चेत्तदपि तुच्छम्, दृष्टसम्पदप्रत्यनुयोगात् । सुखार्थश्चेद्धर्मानुष्ठानं तदा नास्तिकैरपि तत्करणापातात् । विप्रलम्भार्थमपि न तत्संभवति, स्वात्मानं प्रति तदसंभवात् । कश्चिद्विप्रलिप्सुः स्वयमनुष्ठाय परमनुष्ठापयति इत्यपि न, असंभवात् । 'कोऽयं सर्वलोकोत्तरो यः सर्वस्वदक्षिणाया सर्वबन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्य्येण तपसा श्रद्धया केवलपरवञ्चनकुतूहली यावज्जीवमात्मानमवसादयति। कथञ्चैनं प्रेक्षापूर्वकारिणोऽनुविदध्युः। कथञ्चायं प्रतारकः केन हेतुना त्वया ज्ञातः ?' निर्बीजः संशयोऽपि नोचितः । तदुक्तम्—

'उत्प्रेक्षेत हि यो मोहादजातमपि बाधनम् ।
स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत् ॥'

अन्यथा अहं चेतनोऽचेतनो वा ? श्वपचो न वा ? चौरो वा ? विशुद्ध-मातापितृजन्यो न वा ? मन्माता स्वैरिणी न वा ? अहं चाडालजो न वा ? इत्यादि संदेहेषु कथं लौकिकवैदिकव्यवहारः सेत्स्यति ? ।

यत्तूक्तम् "यद्यपीतिहासः शास्त्रादिवन्न सर्वाङ्गपूर्णः प्रामाण्यं भजते तथापि नेतिहास उपेक्षणीयः। ब्राह्मणग्रन्थेष्वपीतिहासदर्शनात् । तत एव छान्दोग्ये जानश्रुतेः कथामवलम्ब्य ब्रह्मसूत्रेऽपशूद्राधिकरणं प्रवृत्तम् । 'सोऽरोदी' दित्याद्यर्थवादानां विधिनैकवाक्यता मीमांसकैरप्युक्ता । राजकीयपरिस्थितिपरिवर्त्तनस्य फलं समाजेऽवश्यं भवति । तत ऐतिहासिक-पद्धतेरपि समन्वयो युक्त" इति तत्सत्यम् । श्रुत्यविरोधेन युक्तीतिहासादी-नामप्यादरो युक्त एव । युक्तिभिरेव युक्तिः प्रमाणमुत शास्त्रं, युक्तिः प्रबलोत:

शास्त्रं बलीय इति निर्णयः कर्तव्यः। युक्तेः स्वातन्त्र्येण न प्रामाण्यमित्युक्तमेव। युक्तेश्च सहकारितया प्रामाण्यं वेदार्थनिरायि इत्युक्तमेव। वेदसूत्रयोर्विरोधे गुणे त्वन्न्यायकल्पनमिति सिद्धान्तोऽपि युक्त एव। इतिहासान्नमपि न सर्वथाऽप्रामाण्यं—

यदुक्त 'मैतिहासिकदृष्टचा यथा क्रियया सुखं जातं सैव सुखसाधिकेति निर्णीयते। तद्रीत्यैव इदं कर्तव्यमिदमकर्त्तव्यमिति व्यवस्था भवती'ति, तदपि तुच्छम्, वर्त्तमानजन्मनि संभावितक्रियाफलविषये ऐतिहासिकान्ययव्यतिरेकसंभवेऽपि जन्मान्तरीयक्रियाफलविषये तदप्रवृत्तेः। जन्मान्तरस्य केनापि साक्षात्कर्त्तुमशक्यत्वात्। इतिहासस्य सञ्जातप्रत्यक्षविषयसापेक्षत्वेन भविष्यत्यप्रवृत्तेः। अनेन जन्मान्तर इदं कर्म कृतं तस्य जन्मान्तर इदं फलं जातमिति निर्णयस्तु न संभवत्येवैतिहासिकशैल्या।

यदुक्तम् "भाषाशास्त्रशीर्षमापनशास्त्रप्रामाण्यात् सर्वेऽपि मानवा एक जातीया एव। भाषा संस्कृतिश्च तेषामेकैवासीत्। प्रकृतिगुणकर्मभेदात्तत्र चातुर्विध्यं जातम्। भाषा चाविस्पष्टैवासीत्। बहोः कालादनन्तरं संस्कृता जाता।

भ्रमणाच्च परस्परमसंव्यवहारः, असंव्यवहारात् परिस्थितिभेदाच्च ज्ञानतारम्यमाचारभेदश्च। ताभ्याञ्च धर्मभेदस्वपरभावश्च। ज्ञानवृद्धयाऽन्योन्यं संव्यवहारकाले भेदः। सर्वेषां स्वत्वाभिमानात् परेषु नीचत्वबुद्धिः। तेन एव देव-असुरदेवप्रिय-काफर-देवदूत-शैतान इत्यादि शब्दप्रयोगः। म्लेच्छादिशब्दा अपि परत्वनीचत्वज्ञापनार्थमार्य्यैः प्रयुज्यन्ते स्म। तथा च सर्वेऽपि चातुर्वर्ण्यान्तर्गता न तेषां तात्त्विकी भेदः। तेषामाचाराणामपि वैदिकविच्छिन्नग्रन्थानामप्यपौरुषेयत्वं संभवत्येव। न च कर्त्तृस्मरणं तद्बाधकम् काक्षकादि—समाख्यावत् प्रवचननिमित्तत्वेन तदुपपत्तेः। ईश्वराज्ञैव मन्त्रवन्मया साक्षात्कृत्योच्चते इति मुहम्मदादिभिरुक्तत्वात्। विगानन्तु यथास्माभिस्तेषां तथा तैरस्माकमपि। सुन्दोपसुन्दन्यायेन समेषामप्रामाण्यापेक्षया प्रकृतिगुणविचारो युज्यते। तदुक्तम्—

'न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्।"

(म० भारत वनपर्व)

एतेन स्वाभिमानात्काल्पनिक एव जातिभेदो न तु प्रकृत्या ।

तत्र वेदो नाम ज्ञानम् । तत्साधनीभूता ग्रन्थाश्च लक्षणया वेद-पदव्यपदेश्याः । एतेनान्येऽपि ग्रन्था ज्ञानसाधनीभूता वेदशब्दवाच्याः संभवन्त्येव । आपस्तम्बादि सूत्रेषु तु--

'मन्त्रब्राह्मणयोर्वेदनामधेय' मित्युक्तम् । पुराणादिषु पुराणस्मृति-भिन्नेषु ग्रन्थविशेषेषु वेदशब्दप्रयोगः। 'यः समिधाय आहुतीयो वेदेन ददाश मर्तो अग्नये। योनमसास्वध्वरः'। ( ऋ० ८।१९।५ ) वेदेन वेदाध्ययनेन ब्रह्म यज्ञेनेति सायणाचार्य्यः ।

यस्मिन्वेदा निहिता विश्वरूपा' ( अथर्व० ४।३५।६ ) ऋचं साम यद-प्राक्ष' हविरोजो यजुर्बलम्। एषमा तस्मान् मा हिंसीद् वेदः पृष्टः शचीपते' ॥ ( अथर्व ७।५४।२ )

'ये अर्वाङ् मध्य उतवा पुराणं वेदं विद्वांसमभितो वदन्ति'। ( अथर्व १०।८।१७ )

ताभ्यामुद्धृत्य वेदमथ कर्माणि कृण्महे'-( अथर्व १९।६८।१ )

'ऋग्वेदं भगवोध्येमि' ( छा० ७।१।२ ) 'वेदा अवेदा' ( बृहदारण्यक ४।३।२२ ) अत्र सर्वत्र विभिन्नेषु अर्थेषु वेदशब्दः प्रयुज्यते । अतः वेद-शब्दार्थोऽन्य एव । पूर्वं तु एक एव वेदः । एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः। देवोनारायणोनान्य एकोऽग्निर्वर्ण एव च ।

'पुरुरवस एवासीत्त्रयी त्रेतामुखे नृप ।
अग्निना प्रजया राजा लोकं गान्धर्वमेयिवान्' ॥
( श्री० भा० म० पु० ९।१४।४८ ४९ )

इतिहास एवं परस्परं व्याघातान्न वेदार्थः संभवति। रूढ्यनुसारेण वेदार्थकरणे प्राकृतभाषामया ग्रन्था एव वेदाः सन्तु, फलसाधनत्वं तु बौद्ध-यवनादिमन्त्राणामपि दृश्यत एव। सिद्धयोऽपि तदभ्यासिनां भवन्त्येव।

मन्त्राणामेव वेदत्वं तु व्याहन्यते। ताभ्यामुद्धृत्य वेदमथ कर्म कृण्महे इत्यादिषु मन्त्रेषु वेदमुद्धृत्य कर्मणः क्रियमाणत्वप्रतिपादनात्। एतन्मन्त्राति-रिक्तस्यैव वेदत्वश्रवणात् । मन्त्रभागस्यैव वेदत्वे तद्विनियोजकस्यान्यस्य प्रमाणस्यास्वीकारे शब्दानामनेकार्थत्वेन व्याख्यातृबुद्ध्यनुसारेणानेकधा-व्याख्यानसंभवात् नार्थप्रकाशनसामर्थ्यरूपं लिङ्गमपि विनियोजकं संभवति

"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥" इति,

तदेतत्सर्वं शास्त्रतात्पर्य्याज्ञानविजृम्भितम् । पारम्पर्य्येणोपक्रमादिभिश्च—तद्विपरीतस्यैव सुवचत्वात् । प्रत्यक्षानुमानानधिगताधिगमनायैव मन्त्रब्राह्मणात्मकमपौरुषेयं शास्त्रमिष्यते, तर्काप्रतिष्ठानाद्युक्त्यादिभिर्धर्मज्ञानासंभवस्योक्तत्वात् ।

ननु 'ऋषयो मन्त्रद्रष्टार' इति प्राचीनैरपि पौरुषेयत्वं वेदस्याङ्गीक्रियते इति चेन्न, ऋषीणां मन्त्रद्रष्टृत्वोक्तावपि प्रमाणान्तरेणार्थमुपलभ्य मन्त्रनिर्मातृत्वानुक्तेः । न चात्र मन्त्रार्थद्रष्टत्वमुक्तम्, तेन न मन्त्रार्थभूतधर्माधर्मादिसाक्षात्कार ऋषीणामपि सिद्धयतीति वाच्यम्, मन्त्रशब्दस्य मन्त्रार्थपरत्वे मानाभावात् । नित्यपरोक्षातीन्द्रियार्थलौकिकसाक्षात्कारे योगिनामपि सामर्थ्यासिद्धेश्च । न च ज्ञानलक्षणप्रत्यासत्ति निबन्धनं धर्माधर्मविषयकमलौकिकं प्रत्यक्षं संभवति । प्रमाणान्तरेण धर्माधर्मज्ञानमन्तरा तदसंभवात् । योगजसन्निकर्षोऽपि तत्र न संभवति । धर्मानुष्ठानमन्तरा योगित्वासिद्धेः । योगसिद्धेः प्राग्धर्मज्ञानाय चोदनाप्रामाण्यमुपगतञ्चेत्कृतं योगजतत्साक्षात्कारेण, तथा च 'पूर्वसिद्धायाश्चोदनाया अर्थो न पश्चिमसिद्धपुरुषवचनेनातिशङ्कितुं शक्यते' इति भगवत्पादोक्तेः ।

मन्त्राणां दर्शनमपि शब्दरूपत्वात्तच्छ्रवणमेव प्रतीयते । तस्य च प्राथमिकत्वे विश्वामित्रादिभ्यः प्रागध्यनाध्यापनपरम्परा विषयत्वाभावापत्त्या नित्यत्वोक्तिर्व्याहन्येत ।

'प्रपाठकचतुःषष्टिनियतस्वरकैः पदैः ।
लोकेष्वप्यश्रुतप्रायैः ऋग्वेदं कः करिष्यति ॥'

इति भट्टवार्तिकविरोधश्च ।

तस्मान्मन्त्रविशेषसाधनेनैव तदृषित्वमिति मन्तव्यम् । मन्त्रसिद्धश्च मन्त्रर्षिर्भवति । मन्त्रसाधने तु गुरुपरम्परया मन्त्रश्रवणमत्यन्तमुपयुज्यते । विश्वामित्रादीनां तपोविशेषान्तरमेव तत्तद्देवतानुग्रहादेव मन्त्रविशेषसाधनाधिकारो जातः । अतएवाद्वैतसिद्धयादौ स्वप्नोपलब्धमन्त्रविशेषस्य साध्यमानस्य फलविशेषसाधनत्वमुक्तम् । जन्मान्तरसाधितमन्त्रस्यैव जन्मान्तरेऽपि देवता-

नुग्रहवशात् स्मरणमुपपद्यते । तदुक्तम् निरुक्ते—'यो यस्यार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्देवताकः स मन्त्रो भवति । यस्येन्द्रादेर्यो हि येन मन्त्रेण स्तुतिं प्रयुङ्क्ते स तद्देवताको मन्त्रो भवति ।' तथाचेन्द्रमन्त्राणामग्निप्रभृतिस्तुता-वपि विनियोगः संगच्छते । 'कदाचनस्तरीरसि' इति मन्त्रेण हि स्तुतोऽग्नि-रेवार्थपतित्वं संपादयामास । तत एव 'ऐन्द्रया गार्हपत्यमुपतिष्ठत' इति विधानम् । एवमेव—

'शन्नो देवीरभिष्टय' इत्यादिमन्त्राणां शनैश्चरादिस्तुतौ स्मार्त्तो विनियोगो दृश्यते । यद्यपि बहवोऽन्येऽपि साधका मन्त्रसिद्धा भवन्ति । तथा तत्तत्कल्पे प्रथमसाधकानामेवर्षित्वव्यवहारः । अत एव भिन्नभिन्नमण्डलेषु चैकर्षिकाणां मन्त्राणां पाठो दृश्यते । मन्त्राणामेकेनैव क्रमेण साधनानुष्ठाने नियमानपेक्षणात् । अतएव न विश्वामित्रादिभ्यः पूर्वं मन्त्राणाम्पारम्पर्य्या-सत्त्वं सिद्धयति ।

'अविदित्वा ऋषिच्छन्दो दैवतं योगमेव च ।
योऽध्यापयेद्यजेद्वापि पापीयान् जायते तु सः ॥'

इति बृहद्देवतायाम् ।

'मन्त्राणां देवताविद्यः प्रयुङ्क्ते कर्म कर्हिचित् ।
जुषन्ते तस्य देवासो हविर्नादेवताविदः ॥'

इत्यादिभिर्देवतावित्प्रयुक्तमन्त्राणामेव साफल्यमुक्तम् ।

देवीरहस्ये तु—

'षष्ठिकल्पसहस्राणि येनैव विहितो जपः ।
तथाब्दषष्ठिलक्षाणि षष्ठिजन्मान्तरेषु च ॥'
पुरश्चर्य्याकरो देवि सर्षिरित्यभिधीयते ।'

इत्युक्तम् ।

ननु वेददृष्ट्या सर्वस्यैव भावित्वमेवेति कथमतीतानामितिहासानां वेदेषु ग्रथनमिति चेन्न, नैयायिकरीत्या तत्तत्कल्पदृष्ट्या भाविनामपि पूर्वतनकल्पदृष्ट्यातीतत्वस्यापि संभवात् । पौराणिकदृष्ट्यापीदमेव समा-धानम्, तत्रापि सृष्टिप्रलययोरङ्गीकारात् । मीमांसकनये तु 'न कदा-चिदनीदृशं जग' दिति रीत्या सृष्टिप्रलयानङ्गीकारेण संसारस्याना-

दित्वेन भावित्वमतीतत्वं वा न नियतमेकस्य वक्तुं पार्य्यते। अतएव वेदे लिङ्लुडादीनां कालसामान्यवाचित्वमेव । सुखावबोधार्थां चाख्यायिका भवति नेतिहासपर्य्यवसायिनीति न घटनापूर्वका वैदिकाः शब्दाः। वैदिक-शब्दपूर्विकास्तदनुसारिण्यो भवन्त्यश्च घटना न वार्य्यन्ते । प्रमाणान्तरा-विरोधे प्रमाणान्तराप्राप्तौ चार्थवादानां धर्मे प्रामाण्यं भवति । तत्रैवेति-हासशैल्या आदरमात्रम् नेतिहासत्वम्। यत्रार्थवादाः सन्ति तत्र तु विधि-स्तुतौ तेषामुपयोगः । सार्थवादा इव निरर्थवादा अपि विधयो भवन्ति । तत्र विधीनामेव स्तावकत्वमपि। अर्थवादसार्थक्यायैव विधिना त्वेकवाक्य-तया स्तुत्यर्थतोक्ता ।

न चार्थवादैर्धर्मनिर्णयः कर्तुं शक्यः । तदुक्तमेव रुद्रः अरोदीदितीहासानुसारेण नास्मदादिभी रोदितव्यमिति विधिकल्पना संभवति । यत्रार्थवादैर्धर्मनिर्णयस्तत्र विधिसरूपत्वमेव तेषाम् । अतएव निर्विधिकार्थवादस्थलेऽर्थवादस्यैव विधित्वमिति वृत्तिकारमतम् । 'विरोधे गुणवादःस्यादनुवादोऽवधारिते । भूतार्थ वादस्तद्धाना' दिति त्रैविध्यमर्थ-वादस्योक्तमेव।

यत्र प्रमाणान्तरविरोधस्तत्र गुणवादेन प्राशस्त्यलक्षणलक्षित-लक्षणा । यत्र तु प्रमाणान्तरसंवादस्तत्र प्रमाणान्तरादिवार्थवादादपि सोऽर्थः प्रसिद्ध्यति। परस्परानपेक्षयोः प्रत्यक्षानुमानयोरिवैकार्थे प्रमाणापेक्षया त्वनुवादकत्वम्। तावतापि न स्मृतिवत्सापेक्षत्वम् किन्तु तुल्यविषय-कत्वमेव । शास्त्रस्येतिहासमूलकत्वे युक्तिमूलकत्वे चावश्यं युक्ते-रेव प्राबल्यं स्यात् । तदपूर्वकत्वे तु तर्करूपाया युक्तेरितिहासरूपा-याश्च न प्रावल्यम्, प्रत्यक्षाद्यविषयस्य धर्मादेस्तदविषयत्वात् । इतिहासो हि तात्कालिकानुभवविशेष एव। धर्मत्वञ्च न स्वरूपतः क्रियायाः संभवति किन्तु स्वर्गादिविशिष्टसाधनत्वेनैव।

न च क्रियानुष्ठानानन्तरमेव फलं दृश्यते। तस्मान्न तयोः साध्यसाधनभावः प्रत्यक्षगम्यः। दृष्टार्थान्यपि कारीर्य्यादीनि किञ्चित्कालव्यवधानेनैव फलजनकानि भवन्ति। व्यवधाने तु कारीरी फलमुतान्यफलमिति संशयः शास्त्रादेव परिहरणीयः । भोजनादिकं लौकिकं कारीर्य्यादिकं तु शास्त्रैकगम्यम्।

यदुक्तम् 'अत्यन्तपरोक्षे स्वर्गादौ व्यवहाराभावात्कथं शक्तिग्रहः ?' इति तदपि तुच्छम्। वाक्यशेषाच्छक्तिग्रहसंभवात्। 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तर' मित्यादिवाक्यशेषेण सुखविशेषस्य स्वर्गशब्दवाच्यत्वावगतेः।

ननु वेदस्यापि वाक्यत्वादर्थानुभवः कस्यचन पूर्वमपेक्षित इति चेन्न, नैयायिकरीत्या ईश्वरस्य नित्यप्रमारूपानुभवपूर्वकत्वाभ्युपगमात्। मीमांसकमते तु वेदे न कस्यापि स्वातन्त्र्यम् घटादिशब्दानामिव वेदवाक्यानामपि नित्यत्वे बाधाभावात्। उत्तरमीमांसकरीत्या तु ईश्वरस्यापि वेदमूलकमेव वेदार्थज्ञानमिति वेदविषये तस्यापि न स्वातन्त्र्यम्।

वस्तुतस्तु नैयायिकमतेऽपि वेदवाक्येनेश्वरस्वातन्त्र्यम्। 'सूर्याचन्द्रमसौधाता यथा पूर्वकल्पयत्' इतिवत् वेदानुपूर्व्या अपि प्रतिकल्पमेकरूपत्वाभ्युपगमात् सर्वव्यापीश्वरातिरिक्तोनुभवो न वेदप्रवृत्तेर्मूलम्। अतएव न धर्मपरिवर्त्तनमपि संभवति। प्रवर्त्तकस्यास्मरणात्, त्यागपत्रदानात्, अपदस्थत्वेन बहिष्करणात्, पराजयादज्ञानस्वीकाराच्च धर्मपरिवर्तनं सम्भवति। न चेश्वरस्य धर्मप्रवर्त्तकस्य तत्संभवति, नित्यत्वादजेयत्वात् सर्वज्ञत्वाच्च। अल्पज्ञनिर्मितसंविधाने देशकालपरिस्थिति विशेषे परिवर्त्तनापेक्षा संभवति। न तु सर्वदेशकालपरिस्थितिविशेषज्ञपरेशनिर्मिते नित्ये वा विधाने तत्संभवति। ईश्वरावतारा महर्षयश्च धर्मरक्षका एव न धर्मप्रवर्त्तकाः। पराशरादयोऽपि मानवानामशक्तिपर्य्यालोचनया नैमित्तिकानां प्रायश्चित्तानामेव सङ्कोचं कल्पयामासुः। दृष्टफलार्थानां कृष्यादिप्रकाराणां परिवर्त्तनं तु न विवादास्पदम्। येषां कार्य्यकारणभावो न मानान्तरगम्यस्तेषां तु परिवर्त्तनं कथं स्यादिति न प्रमाणमुपलभ्यते।

'मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥' इति

कुसुमाञ्जलिरीत्या यथार्थानुभवत्वमेव प्रमात्वम्। तथाचेश्वरज्ञानस्याजन्यत्वेऽपि प्रमात्वमेव। न च तावता निसर्गविरोधः, अस्मदादेरिवेश्वरस्यापि निसर्गासिद्धेः।

सम्प्रदायाविच्छेदे सत्यस्मर्य्यमाणकर्त्तृकत्वेनापौरुषेयत्वं मन्त्रब्राह्मणात्मकस्य वेदस्यैव। न बौद्ध-जैन-ख्रिस्तीय-मोहम्मदादि ग्रन्थानां वेदतुल्यता।

तेषां ततः पूर्वं सम्प्रदायासिद्धेः। न च कठादिवत्प्रवक्तृत्वमेव तेषामपि, तैस्तथानभ्युपगमात्। न हि 'वाचा विरूपनित्यये'तिवत् तेषां ग्रन्थेषु तदागम-नित्यत्वबोधकवचनमुपलभ्यते।

कैश्चिदाधुनिकैस्तु—वैदिकानामनुकरणमेव क्रियते। आधुनिकैरपि यज्ज्ञानं पूर्वं यत्रोद्भूतं तद्देशस्यैव तदुद्भावकत्वं मन्यते। तदेव ज्ञान-मन्यत्रापि चेल्लभ्यते तदा तत एव तैर्गृहीतमित्येव निश्चीयते। न स्वा-तन्त्र्येण तदाविष्कारकत्वमुपगम्यते।

ननु बुद्धादयः सर्वज्ञा एवेति चेन्न, तत्सार्वज्ञ्ये प्रमाणाभावात्। न चेदानीं सर्वज्ञो दृश्यते। नाप्यनुमानं लिङ्गाभावात्। तेऽपि न सर्वज्ञा पुरुषत्वादस्मादिववदिति विपरीतानुमानसंभवाच्च।

शरच्चन्द्रश्च स्वीये 'समाज धर्म राजनीति' पुस्तके "व्याकरणगतधातु प्रत्ययबलेन, पौर्वापर्य्यसम्बन्धविचारेण, ऐतिहासिकतथ्यनिर्णयेन, तात्पर्य्यपर्य्यालोचनया च मन्त्राणां व्यख्यानं परिवर्त्यते" इति वदति तत्सत्यम्, यतो 'यत्परः शब्दः स शब्दार्थः' इति रीत्या तात्पर्य्यनिर्ण-यादिभिरर्थनिर्धारणं युक्तमेव, न तत् परिवर्त्तनम्। तेनैवोक्तम्—"ब्राह्मसमाज प्रवर्त्तकाः असंगतैर्निर्मूलैर्निरर्थकैर्देशाचारैः कुरीतिनिरा-चिकीर्षया प्रतिष्ठितसमाजविद्रोहमुद्भाव्य ब्राह्मसमाजं संस्थाप्य ततः पृथग्भूताः। समाजदृष्ट्या च ते म्लेच्छाः कृश्चियनाः संवृत्ताः। भोजन-पाननियमोल्लङ्घनेन गिर्जागृहादिवत् समाजगृहे पादत्राणमविमुच्यैव प्रार्थना परायणाः प्रावर्त्तन्त। हिन्दूनां वेदमूलको धर्मः सर्वस्वमिति तैर्न विचा-रितम्! ग्रामीणास्तान् कृश्चियनान् मन्यन्ते। तेषां तथाभूताचारेण ते उपहासास्पदभूयस्त्वं गताः। यद्यपि संस्कारोऽपेक्षितः तथापि स स्वात-न्त्र्येण न कर्तव्यः। मनुष्यशरीरादीनां संस्कारास्तद्रीत्यैव जायन्ते। वायविलकुरानादयोऽति प्रशस्ता अपि नहि समाजोपयोगिनः।

यद्येतावत्कालं समाजसंचालनं ब्राह्मणाः कृतवन्तस्तर्हि तैरेवा-द्यापि समाजसंस्कारः कार्य्यः। सर्वोच्चन्यायाधीशा लोकोत्तरधिषणावन्तोऽपि नात्र साहाय्यं कर्तुं प्रभवन्ति। सम्पूर्णो देशो येषामुपरि समास्थावान् भवेत् कश्चिदपि तानपसारितुं न प्रभवति।

यदि मनुपरिचालितविधानेन हिन्दूनामवनतिर्वृत्ता तद्वान्यापि स्वोन्नतिः संपादनीया । यस्मिन् विधाने सौभाग्यजनकत्वं दुःखदारिद्र्यनिवर्त्तकत्वञ्च भवेत्तस्यैवादरणीयत्वम् युक्तम्" ।

वस्तुतस्तु सर्वस्यैवविधिनिषेधात्मकस्य शास्त्रस्यानर्थनिवर्हणामभ्युदय-निःश्रेयसहेतुत्वमक्षुण्णमेव । तत्रास्थां विधाय पारम्पर्य्येण तदर्थाधिगमानुष्ठान-मेवावश्यकम् । शास्त्रमनपेक्ष्य स्वातन्त्र्येण यत्किञ्चिदनुष्ठानमवश्यं भयावहम् । देशकालपरिस्थित्यनुरोधेन शास्त्रार्थो न परिवर्त्तयितुं शक्यते । तदर्था-धिगमायैव प्रभवामः, न परिवर्तनायाऽपि । प्रत्यक्षेणान्वयव्यतिरेकादि-युक्तिभिश्च यत्र साध्यसाधनभावोऽधिगम्यते तत्रैव तदनुरोधेन परिवर्त्तनं शक्यते कर्तुम् । यत्र तु शास्त्रैकसमधिगम्यः कार्य्यकारणभावस्तत्र तदनुरोध्येव परिवर्त्तनमादरणीयं नान्यत् ।

"अद्यत्वे विविधैरधर्मैं विधर्मैः परधर्मैश्च सार्धम् हिन्दूधर्मस्य संघर्षो विद्यते । अस्यां वेलायां शास्त्रेषु यदि निस्तारोपायो न भवेत्त-दाऽविष्करणीयो नवीनोऽपि मार्गः । वेदादिशास्त्रस्यापौरुषेयत्वं यथा हिन्दुभिरुच्यते तथैव परैरपि स्वाभिमतधर्मग्रन्थानां तदुच्यते । किं वैचित्र्यं वेदादिष्विति न परिलक्षयितुं शक्यते । प्रक्षिप्तांशानामद्यापि तत्र वाहुल्यं विद्यत एव । यथाकालं स्मृतयः पुराणानि तदन्तर्गतानि । विविध-विरुद्धविधानानि च निर्मितान्येव । कानिचित्कालान्तरेऽपेक्षितान्यप्यन्यदा निषिद्धानि सर्वत्र समाजे तथा रीतिः सुपरिचितैव । परमेश्वरप्रदत्ता बुद्धिर्न वेदादिशास्त्रतट्टीकोपटीकादिकण्ठस्थकरणार्थमुपयुज्यते किन्तु विवेकपूर्वकतन्निर्माणार्थमेव । शास्त्रतट्टीकाभ्यासिनो नैतद्वक्तुं प्रभवंति यत् किमुद्दिश्य के आचाराः कानि च शास्त्रवाक्यानि निर्मितानि । केषां दुःख-व्यसनहेतूनां निराचिकीर्षार्थं विधिनिषेधवाक्यान्यारचितानि । चातुर्वर्ण्य प्रतिपादकस्य ब्राह्मणोऽस्य मुखमासीदिति मन्त्रस्य दशममण्डलस्थत्वादर्वा-चीनत्वमप्युच्यते । मोक्षमूलरादिभिःस्तेन गुणकर्माद्यनुरोध्येव चातुर्वर्ण्य पूर्व मासीदिति कल्प्यते । एतस्मिन् मन्त्रेऽस्मिन्युगे विश्वासः सर्वथा न संभाव्यते । तेन तत्र सत्यम्, किन्तु रूपकमेव । मनुष्यजातिविकासोऽद्य नव्यशिक्षितैर्यथाङ्गीक्रियते तद्विपरीतं नोरीकर्तुं शक्यम् ।

मुखाद् ब्राह्मण: अर्थात्ब्राह्मणधर्म: यजनयाजनाध्ययनाध्यापनादि:, क्षत्रिय-धर्म: बलशक्त्यादिधारणं बाहु: ।" इत्याद्यपि स तत्रैव वदति । तदसमीक्षिताभिधानम्, शास्त्रार्थाभ्यासतदर्थानुष्ठानसंस्कृतबुद्धीनां तादृग्व्यसनसंतरणमार्गप्रतिभानावश्यम्भावित्वात् ।

किञ्च तादृक्संघर्षे सत्यप्यन्यधर्मानुपायिभिर्दाढर्य्येन स्वधर्मोऽनुष्ठीयते, न तैस्तत्परिवर्त्तनमिष्यते । किमुतापौरुषेयवेदमार्गानुसारिभि: स्वमार्गो नोपेक्ष्यत इति । सम्प्रदायाविच्छेदे सत्यस्मर्य्यमाण-कर्त्तृकत्वमेव वेदस्येतरधर्मग्रन्थापेक्षया वैलक्षण्यम् । अन्येषामपि तदुक्तिस्तु तदनुकरणमेव, सर्वापेक्षया वेदस्य प्राचीनत्वात् । तत्प्राचीनत्वं तु सर्वसम्मतमेव । प्राचीनत्वमेव सर्वोत्कर्षहेतुस्तदनभ्युपगमेऽप्यनुकार्य्यत्वं तु तेन सिद्ध्यत्येव । एवंत: प्राचीनतासिद्ध्या नित्यत्वं सम्प्रदायाविच्छेदोऽस्मर्य्य-माणकर्त्तृकता चापि सिद्धन्त्येव । तेनैव च प्रक्षिप्ततोक्तिरप्यपार्थिकैव ।

दशममण्डलस्यान्यवेदमन्त्राणाञ्चार्वाचीनत्वादिकमपि निराधारमेव । परमेश्वरप्रत्ताऽपि बुद्धि: प्रमाणानुसारिण्येव प्रमां जनयति, स्वातन्त्र्येण तु भ्रमजनकत्वेनानर्थावहैव सा स्यात् । यथा निर्दोषचक्षुर्जन्यत्वेनैव रूपज्ञानस्य प्रमात्वमन्यथा त्वप्रमात्वमेव तथैवापौरुषेयवेदादिशास्त्रजन्यत्वेनैव धर्माधर्मज्ञान-स्य प्रमात्वमन्यथाऽप्रमात्वमेव । 'जातिखोज' जात्यन्वेषणपुस्तकस्य रचयित्रा महता परिश्रमेण जातयोऽन्विष्टा: । यद्यपि स मन्यते सृष्टिप्रारम्भाद्बहुकालं यावद्वर्णव्यवस्था नासीत्, बहो: कालादनन्तरं तत्प्रयोजनवशात् गुणकर्मानु-सारेण जातिप्रथा प्रचलिता । पुनश्चानेकवारं सा व्यवस्था लुप्ता, पुनश्च प्रवर्त्तिता । सुधारवादप्रभावात् सोऽस्पृश्यताऽपलापविधवाविवाहादिकञ्च प्रचार-यति । आर्य्यसमाजप्रभावात्क्वचित्सनातनधर्मप्रभावाच्च प्रभावित: । क्वचिद्-गुणकर्मानुसारिणीं वर्णव्यवस्थामङ्गीकुर्वन्नप्यन्यत्र कांश्चिज्जन्मना निकृष्ट-जातीयान् प्रतिलोमसंकरान् पतितांश्च मन्यते इत्याश्चर्य्यम् । हिन्दूवर्णव्यवस्था-मण्डलद्वाराऽपीममेव सिद्धान्तं स प्रचारयतिस्म । सगोत्रसप्रवरविवाहञ्च महता समारोहेण प्रतिषेधति । तत्राज्ञानत: सगोत्रसप्रवरविवाहे चान्द्रायणप्रायश्चित्तं कार्य्यम् । ज्ञानतो द्विगुणम् एवं कन्याया एतदर्धम् ।

'असपिण्डा च मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥'

मनुः ( ३।५ ) इत्यादि स्मृतिभ्यः।

परन्तु गुणकर्मानुसारेण वर्णपरिवर्त्तने गोत्रप्रवरादिपरिवर्त्तनमप्यनिवार्य्यमेव। ततश्चेदृग्वचनानां का गतिः। जातिभास्करादितुल्योऽयमपि ग्रन्थो जातिनिर्णायकः। मिश्रदेशः सर्वप्राचीनसभ्यः। तत्र भौमिकाः श्रमिकाः क्रीतदासाश्चेति श्रेणी त्रयमुपलभ्यते। क्रमेण तत्र योद्धृणां पुरोधसाञ्च प्राधान्यं जातम्। शिल्पिनः क्रीतदासाश्च नीचतामुपगताः। चीनदेशेऽपि भद्रश्रेणी, कर्षकाः, । शिल्पिनो वणिजश्चेति वर्गचतुष्टयमासीत्। जापानेऽपि त एव। तत्र एटा हिनिन इत्यादयोऽन्त्यज तुल्या एव। तेषु श्रेणीभेदेषु परस्परं भोजनस्पर्शादिकं श्रेणी परिवर्त्तनञ्च नाशक्यमासीत्।

केषुचित् सभ्यदेशेषु ये साम्प्रतमप्यन्तिमावस्थायां वर्त्तन्ते अतिकठोरस्पर्शास्पर्शादिविचारः। तत्र स्पर्शदोषेण स्वात्मशक्तिक्षयोऽन्यतोऽमङ्गलग्रहश्च संभाव्यते। तत्रादिमावस्थायामयमेव धर्म आसीत्। अफ्रीका-फीजी-प्रशान्तमहासागरस्थ-वोर्निट्सादिस्थानेस्वयं विचारः प्रचलति। मेक्सिको देशे स्येनिया एव सर्वोत्तमाः, मिश्रिता मध्यमाः, आदिमजातयोऽधमा उच्यन्ते। अरबदेशस्य दक्षिणभागे शिल्पिन एवान्त्यजा आसत्। सभ्येषु रोमादिदेशेष्वपि-अभिजात-अनभिजातेति श्रेणीद्वयमासीत्। पराजिताः शत्रव एव तत्र दासा भवन्तिस्म। पारसीकेष्वपि-आखेटकाः पशुपाः कर्षकाः इति श्रेणी त्रयमासीत्।

भारते जन्मना जातिव्यवहारः। एवमाधुनिकानां रीत्यापि तत्र तत्र जातिभेदव्यवहारः। जातिपरिभाषादुष्करा। जीवितावस्थायां विवाहभोजनादयो मरणानन्तरं शवसंस्कारश्च स्वजातिष्वेव भवन्ति ( जा० भे० पृ० ५ )।

यद्यपि नूतनशिक्षा प्रभावात्तादृङ्नियमाःशैथिल्यमुपगताः। भारते ब्राह्मण जातिरेव सर्वोत्कृष्टा तत्राप्युत्कर्षतारतम्यं निर्णेतुं न शक्यते। एवमेव सर्वतो निकृष्टा जातिरपि दुर्ज्ञेया। येषां जलं ब्राह्मणैः पातुं शक्यते ते शुद्धजातीया येषां घृतपक्वं ग्रहीतुं शक्यते ते ततोऽपि श्रेष्ठाः। सूपौदनादिकं तु स्वजातिष्वेवचलति। ब्राह्मणानाम् दक्षिणभारते ततोऽप्यधिकः स्पर्शास्पर्शविचारः।

यस्य स्पृष्टं जलमग्राह्यं तदपेक्षयाऽपि यस्य स्पर्शेन मृण्मयं पात्रमशुद्धं भवति, यस्य च मन्दिरप्राङ्गणप्रवेशे मन्दिरमशुद्धं भवति, यस्य प्रवेशाद् ग्रामोऽपि-अशुद्धो भवति, ते सर्वेऽपि क्रमेणाशुद्धितारतम्यौपेताः । तत्रापि निम्न-जातिष्वपि स्वापेक्षया निम्नजातीयेषु तिरस्कारभावना भवति ।

स्वामीदयानन्द एवं जल्पति-यत् गुणकर्मानुरोधेन चत्वारो वर्णाः सर्वेऽपि वेदाधिकारिणः । गान्धिमहाशयस्तु यद्यप्यस्पृश्यता विरोधी समासीत् तथापि वर्णाश्रमव्यवस्थामभ्युपैतिस्म । वर्णाश्रमधर्मो मनुष्याणां स्वभावसिद्धः । हिन्दूधर्मे वैज्ञानिकरूपेण स सुप्रतिष्ठितः । वर्णनिर्णयश्च जन्मनैव भवति न स्वेच्छया । 'स्टडी आफ कास्ट' ग्रन्थे लक्ष्मीरसूदेव्या तद्वाक्यं समुद्धृतम् । सर्वञ्चैतदृग्वेदीयपुरुषसूक्तेन प्रायेण साधयन्ति ।

वस्तुतस्तु साम्प्रतिका ऐतिहासिकाः विभिन्नाभिप्रायेणेतिहासानारच-यन्ति । राष्ट्रस्य जातेश्च गौरवं येन वर्धते तादृगेवेतिहासं पूजयन्ति ते ।

यदप्युक्तम् "सायणेन 'इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकोपायं यो वेदयते स वेद' इति वेदपरिभाषा कृता । ऋग्वेदे विद्धातोर्निष्पन्नस्य वेद शब्दस्य धनमर्थः । तदुपायस्तज्ज्ञानञ्च तदर्थः । तेन प्रजापश्वादिप्राप्ति-साधनं वेदः । पुरुषसूक्तोक्तपुरुषोत्पत्तेः प्रागुत्पन्नत्वादपौरुषेयत्वम् । परवर्तिभी रचना न दृष्टा तेन तैरनादित्वमुच्यते । भौतिकसम्पत्तिमन्तरा जीवनं न संभवतीति मनुष्योद्भवानन्तरमेव धनं जन्म, ततः प्रागेव तदानीमेव वेदजन्मा-पीत्यादि तर्कैस्तर्क्यते स्मार्य्यैः" इति, तत्तुच्छम् , तथात्वे प्रजापश्वादिसाधनेषू-पायेषु वेदशब्दव्यवहारापत्तेः । पुरुषबुद्ध्यप्रसूतत्वेन त्वपौरुषेयत्वमुक्तमेव ।

यदप्युक्तम्—"यैर्वेदाः सङ्कलितास्ते प्राञ्चः सत्यवादिनः । तद्रीत्या वेदेषु वास्तविकं चित्रणम् कल्पनावर्णनञ्च । कल्पनामिश्रितयथार्थवादः शुद्ध-काल्पनिको भवति । यदा स आत्मविरोधि यथार्थः वास्तविकताधारेण प्रमाण-यितुमिष्यते" इति तदपि तुच्छम् , वेदानामपौरुषेयत्वेनापास्तसमस्तदोषत्वेन तत्त्वावबोधकत्वस्यैव सत्त्वात् , अर्थवादादीनामपि पर्य्यवसितार्थस्याबाधित-त्वाच्च ।

यदपि तेनैव हिन्दूज्ञानस्य त्रैविध्यमुक्तम् । तथाहि—"येषां छन्दसां यथार्था ऋषिभिः स्वयं दृष्टास्तस्मादेव ते मन्त्रद्रष्टारः । येषां यथार्थाः श्रुता

ते भागाः श्रुतयः। श्रुतिषु यथार्थकल्पनयोर्मिश्रणम्। अन्ते स्मृतिः, यत्र केवलं स्मरणमवशिष्यते। एवं हिन्दूसाहित्यस्य ज्ञानस्य वा दर्शनेन परिवर्त्तमानसामाजिकसंघटनप्रतिबिम्बातिरिक्तं न किञ्चिदित्येव ज्ञायते। तदानीन्तनानां मनुष्याणां मस्तिष्केषु बाह्यशक्तीनां काल्पनिकप्रतिबिम्बातिरिक्तं धर्मतत्त्वं नासीदेव। तत्र प्रतिबिम्बे भौतिकशक्तय आध्यात्मिकशक्तिरूपेण परिवर्त्तन्ते। विकासाभिवृद्धया भौतिकशक्तिष्वेव चैतन्यारोपणम्। सामाजिकशक्तयोऽपि प्राकृतिकशक्तिवदेव बाह्या अबोध्याश्च व्यज्यमानास्तद्वदेव प्रत्यक्षरूपेण मनुष्यान् शासति। अस्यामवस्थायां तत्र सामाजिकगुणानुप्रवेशादैतिहासिकप्रतिनिधित्वमपि कुर्वन्ति।

प्राचीना वैदिकसाहित्यविश्लेषकाः प्राकृतिकशक्तिषु चैतन्यारोपणमुपगच्छन्ति, अन्याः प्रक्रिया उपेक्षन्ते। धार्मिककथासु देवानां सामाजिकगुणानां क्रियाशीलतानाञ्च विश्लेषणेन काल्पनिकस्वरूपापाकरणनान्तरं साम्यसंघस्य चित्रं स्पष्टमवलोक्यते। धर्मकथासु निरर्थककल्पना अपि सन्ति" इत्यादि तदपि तुच्छम्, चक्षुरादिवच्छब्दस्यापि तत्त्वावेदकत्वे बाधाभावात्। भौतिकवादाभिनिविष्टबुद्धित्वादेव वेदेष्वादिमसाम्यसंघस्य ब्रह्मत्वं सामूहिकोत्पादनप्रणाल्याश्च यज्ञत्वं परिकल्प्यते। वेदार्थपर्य्यालोचनया तत्सर्वं विरुद्धयते। तद्विरोधपरिहारायैव विरुद्धानां कल्पनाप्रायत्वमुच्यते।

वस्तुतस्तु सर्वो मन्त्रब्राह्मणात्मको वेदो नित्योऽपौरुषेयश्च। वेदमात्रस्यानुश्रवत्वं श्रुतित्वञ्च। गुरोर्मुखादनुश्रूयते तेन तस्यानुश्रवत्वम्। श्रूयत एव परं न केनापि क्रियते इति श्रुतित्वमपि वेदानाम्। 'श्रुतिः स्त्री वेद आम्नाय' इति कोषानुसारेण श्रुतिवेदाम्नायादीनां पर्य्यायवाचकत्वमेव।

'अमुष्मै फलायामुकं कर्मानेन मन्त्रेणैवं कर्त्तव्यमि'ति दर्शनमेवर्षित्वप्रयोजकमिति निरुक्तटीकादावुक्तम्।

स्मृतित्वं तु वेदार्थोपनिबन्धृमहर्षिनिर्मितपौरुषेयग्रन्थानामेव। श्रुतिमूलकत्वेन तत्प्रामाण्याभ्युपगमात्। वेदरचनायाः परवर्तिभिरदृष्टत्वादपौरुषेयत्वे पूर्ववर्त्तिरचितसमस्तग्रन्थानामिदानीन्तनपुरुषादृष्टत्वादपौरुषेयत्वं स्यात्। प्रपञ्चितञ्चापौरुषेयत्वमन्यत्र वेदानाम्। धर्मब्रह्मतत्त्वावेदका वेदाः। तत्प्रसङ्गेनान्यदप्यर्थजातं तदौपयिकमेव वेदैः प्रतिपाद्यते। भौतिकशक्तिषु न चैतन्य-

मारोप्यते किन्तु तत्त्वभूते चेतन एव भौतिका भावाः परिकल्पिताः। वेदा यद्यपि धर्मग्रन्था नेतिहासग्रन्थास्तथापि धर्मब्रह्मावबोधपर्य्यवसायिनीभिराख्यायिकाभिर्भूतभविष्यद्वर्तमाना घटना अपि बोधयन्त्येव वेदाः। नहि चैतन्यमन्तरा भूतान्यात्मलक्षणान्यपि भवन्ति, किमु विलक्षणानि कार्य्याणि संपादयितुम्।

केषाञ्चिद्वाक्यानां कल्पनामात्रार्थकत्वोक्त्या केषाञ्चित् वाक्यानां स्वाभ्यूहितनिष्प्रमाणार्थकल्पनया कस्यापि ग्रन्थस्य कोऽपि स्वकपोलकल्पितः स्वाभ्यूहितोऽर्थः कल्पयितुं सुशकः, तथापि न सोऽर्थः प्रामाणिकतापदवीमारोढुं क्षमः।

यदपि "अग्निपशुपालनज्ञानेनादिमसाम्यसंघस्य प्राकृतिकशक्तिसंघर्ष जनितनाशभयमुच्छिन्नम्। यद्यपि विकासोन्मुखान्युत्पादनसाधनानि तथाप्यल्पविकासित्वात्तेषां वस्तुदारिद्र्यात्कठिनपरिश्रमेण वस्तूनि प्राप्यन्ते स्म, भुज्यन्ते च तदानीमेव। श्रमशक्तिः स्वजीवनरक्षणोपयोगि धनादधिकस्याप्युत्पादनक्षमेति तद्बलेनान्ये श्रममन्तराऽपि जीवितुं शक्नुवन्तीति ज्ञानं साम्यसंघस्य नासीत्। तदानीं विनिमयप्रश्न एव नासीत्। अतएवापणमुद्रादि प्रभेदो नासीत्। वाटैर्गोचरैरावृतासु वसतिषु महावेद्यामुत्पादितद्रव्याणि तत्साधनानि च रक्ष्यन्ते। मध्ये च वह्निरेव एतावन्मात्रलघुभूतस्तेषां संसारः। श्रमविभागस्य स्वल्पकालिकत्वात् स्थिरस्यार्थिकहितस्याविकासात् तदानीं जातिवर्गादिभेदो नासीत्। श्रमविभागानन्तरं वर्णव्यवस्था प्रवृत्तेति प्रायेण सर्वैर्मन्यते। पुरुषा मृगयार्थं युद्धार्थं पशुपालनार्थञ्च प्रवर्तन्ते। स्त्रियो गृहप्रबन्धपाकनिर्माणदुग्धदोहनादिकं कुर्वन्तिस्म। सर्वं सामूहिकमेवासीत्। न तत्र प्रातिस्विकं गृहगृहिण्यादिकमासीत्। जनसंख्याया अनधिकतया उत्पादनविनिमयाद्यभावात् शोषकशोषितधनिकदरिद्रादिवर्गाभावाच्च शासनसत्ता तदङ्गं सैन्यशक्त्यादिकञ्च नासीत्। अतएवान्तरिकनियमाय सुरक्षायाः सञ्चालनाय च विधानं किमासीदिति प्रश्नस्योत्तरं न वेदसाहित्ये मिलति। तत्र तादृग्विधानस्य प्रश्नो नोत्थितः। व्यक्तिगता व्यवहाराः समूहस्य व्यक्तिसम्बन्धः तत्सम्बन्धे त्रुटयस्तदर्थं दण्डविधानं धनमादिविषयास्तत्र वेदे चर्चिताः। विश्वं कथमुत्पन्नम्? मनुष्यस्य पश्वादीनां कथमुत्पत्तिः? ब्राह्मण-

ग्रन्थेषु सत्ताया आचारव्यवहारादीनां सम्बन्धे विवादो दृश्यते। वैदिक-साहित्येषु सृष्टि-युद्ध-संघर्ष-तत्फलानाञ्च चर्चा। आचारविषये यौनसम्बन्धेऽपि प्रश्नाः। राज्ञां शासनसत्ताया शासकशिष्टादीनां कर्त्तव्याधिकारादिसम्बन्धे वैदिकसाहित्ये विवादो नावलोक्यते। तेन साम्यसंघानामान्तरिकसंघटन-- विषयेषु यद्वैशेष्यं येन परवर्ति समाजभिन्नता तेषामासीत्तद्विषये लिखितम्।

यदा साम्यसंघभङ्गानन्तरं तत्स्थानापन्ना वर्गसत्ता प्रवृत्ता। गृहयुद्ध-शासनशक्ति करसंग्रहसदाचारसंघटनाद्यर्थञ्च नियमानामावश्यकतानुभूता तदा प्राचीनसाम्यसंघनियमजिज्ञासायां तद्विचारःप्रवृत्तो महाभारतादि काव्येषु स्मृतिषु चोपवर्णितः। स्वयंचालितस्य सशस्त्रसंघटनस्यादिमसाम्यसंघस्य शासनाय शासनशक्तेरावश्यकता नासीत् विरोधिवर्गाणामभावात्। प्राकृतिकावश्यकता एव तत्सदस्यान् सामूहिककार्येषु नियोजयन्तिस्म। लघीयस्यस्त्रुटयो निन्दा-दिना दूरी क्रियन्तेस्म। गणसदस्यस्यान्यसदस्यकर्तृकवधे गणान्निष्कासनं दण्ड आसीत्। तदेव मरणाय कल्पते स्म। नियमनाय सेनाशक्तिर्नासीत्। व्यवस्था-चालनाय बहुमतद्वारा कश्चिन्नियुज्यते स्म। तदर्थं श्रममन्तराऽपि बाल-वृद्धादिभ्य इवोत्पादितवस्तुषु भागो दीयतेस्म। कुलेन रक्तसम्बन्धेन सदस्यता निर्णीयते। शोषको राजा शोषितो नियम्यो दण्डविधानादिकञ्च नासीत्'' इत्यादि जल्पितम् तदपि तुच्छम्, निष्प्रमाणत्वात्।

उपचयापचयोन्नत्यवनतिप्रवाहमयस्यानादिसंसारस्य देशकालादि-भेदेन अनेका अवस्था आयान्त्यपयान्ति च तथापि नैकान्तिकतया सर्वत्र नियतः कश्चन विकासक्रमोऽवधारयितुं शक्य इत्युक्तमेव। वेदेभ्यस्तु तत्साधनं सर्वथोप-हासास्यदमेव, समेषामेव प्रमाणानामज्ञातज्ञापकत्वनियमात्। प्रत्यक्षानुमाना-नधिगतार्थज्ञापकत्वेनैव वेदानां प्रामाण्यम्। प्रत्यक्षादिसिद्धवस्तुबोधकत्वे-नानुवादकत्वेनाप्रामाण्यापत्तेः। कश्चित्त्वत्कल्पितः साम्यसङ्घयो यथातथा भवतूहापोहाकुशलः।

वैदिका ऋषयस्तु धर्मयोगतपोवलात्सुनिरङ्कुशैश्वर्यपूर्णामशेषविशेषा-तीतपरमानन्दमयी कैवल्यावस्थाञ्चास्थातुमवुद्धयन्तैव। बहवो जनाः समानदेशे देशान्तरे वा विद्यादिप्रभावादुन्नता भवन्ति, पराभूता अप्रगतिशीलाश्चान्ये भवन्ति।

यदुक्तं 'विरोधिवर्गाणामभावात् शासनशक्तेरावश्यकतानासी' दिति तत्तुच्छम्। ज्ञानविज्ञानशून्ये समाजे वर्गव्यवहाराभावेऽपि वर्गभेदः तन्मूलकः संघर्षो विरोधश्च सर्वदैव भवति मत्स्यादिषु तथा दर्शनात्, मूषकमार्जारयोरहिनकुलयोरजव्याघ्रयोः स्वाभाविकविरोधदर्शनाच्च। श्रमिकवर्गेष्वपि परस्परविरोधानुभवाच्च। वर्गभेदसापेक्ष एव विरोध इत्यशक्य शङ्कम्, यतोहि गणसदस्यकर्तृकसदस्यान्तरवधो गणात् तस्य निष्कासनञ्चेति वर्गवादिनो प्यभ्युपगच्छन्त्मेव। साम्यसङ्घ सदस्यान् इतरसङ्घीयसदस्यानां शत्रूश्चामिश्रयन्ति। अतोऽविवेके मात्स्यन्यायः स्वभावसिद्धः। तन्निवृत्त्यर्थमेव शासनस्यावश्यकत्वात्। सत्त्वगुणाधिक्यादहिंसादिधर्मप्रभावाद् ब्रह्मात्मविज्ञानात्समेषाममृतपुत्रत्वविज्ञानाच्च शासनानपेक्षा शान्तिः संभवति नान्यथा। यत्र कश्चिन्नियोजको भवेत् नियोगोल्लङ्घने कार्य्यविपत्तौ निन्दादिरूपोऽपि दण्डश्चेदभ्युपगतस्तदा शासनमभ्युपगतमेव। राजतन्त्राभावेऽपि लोकतन्त्र-पञ्चायततन्त्र-शासन प्रणाल्यां प्रवृत्तायाँ तस्या अपि शासनानतिरिक्तत्वात्।

तेन कृतयुगे सत्त्वाधिक्याज्ज्ञानविज्ञानप्राधान्येन राजादिकं नापेक्षितमासीत्। धर्मेणैव मुख्यं नियन्त्रणमासीत्। धिग्दण्ड एव सर्वनिवारणायालमासीत्।

हाब्स लाक प्रभृति विद्वांसो वर्गवादिनश्चाज्ञानसारल्यादिप्रयुक्तां तथाविधाऽवस्थामुपगच्छन्ति। ज्ञानविज्ञानधर्मादिप्रभावन्तु नोपगच्छन्ति। कथा रोचनार्थं कल्पनामात्रं तत्सर्वमित्याचक्षते। परं तन्न युक्तं यतो भारतादौ रजस्तमप्रभावाज्ज्ञानह्रासाल्लोभक्रोधादिविस्तारादेव मात्स्यन्यायप्रवृत्तिर्वर्णिता। ततस्तदपनोदनार्थं राज्यव्यवस्योक्ता।

समानजन्ममरणः समः सर्वैर्गुणैर्नृणाम्।
विशिष्टबुद्धीन् शूरांश्च कथमेकोऽधितिष्ठति॥ (शान्ति ५९।८)
'न वै राज्यं न राजासीन्नच दण्डो न दाण्डिकः।
धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम्॥ (शा. ५९।१४)
पाल्यमानास्तथान्योन्यम् (शा० प० ५९।१५)
श्रूयन्ते च पुराणेषु पुरा धिग्दण्डशासनाः। २६७।१९
वर्गवादिभिस्तु धर्मपदेन स्वास्तित्वरक्षको नियम उक्तः।

तच्च निर्मूलम्, त्वन्मतरीत्या स्वशब्दार्थस्य देहादेरक्षणार्थं भोजन-पानादितदन्वेषणरूपस्य धर्मस्य पशुसाधारणत्वापत्तेः। पशवोऽपि हि स्वास्तित्वरक्षकं नियममनुतिष्ठन्त्येव। नहि तावताऽपि ते धार्मिका भवन्ति। सम्यज्ज्ञानादेवाहन्ताममतादिकं नश्यति। ज्ञानविज्ञानप्रधाने कृतयुगे धर्म प्रधानानां जनानां राज्यराजशक्तिदण्डविधानादिकमन्तरापि कार्यं निर्वहतिस्म, परं रागरोषबहुले तत्त्वज्ञानदुर्भिक्षे कलावधर्मबाहुल्याद्राजशक्तिमन्तरा राष्ट्ररक्षणादिकमपि न संभवति तत एव कौटल्यस्तन्निन्दति। 'वैराज्ये तु जीवतः परस्याच्छिद्य 'नैतन्मम' इति मन्यमानः कर्शयति, अपवाहयति पापं वा करोति, विरक्तं वा परित्यज्यापगच्छतीति (प्र० २८ अ० २' अधिकरण ८) वैराज्ये नहि कस्यचित्किञ्चित्स्वं भवति। तेन देशाभिमानाद्यभावात् स्वल्पैरपि रागरोषादिभी राज्यं परस्मै प्रयच्छति। शत्रुहस्ते विक्रीणाति।

यदपि गणधातोर्जनधातोर्निष्पत्ति निरुच्य तेन प्रजापशुधनाद्युत्पाद-कत्वेनैव जनगणशब्दयोरुत्पत्तिरिति तन्न, धातोः स्वयमेव प्रकृतित्वेनान्य-प्रकृत्यनपेक्षत्वात्। 'जनिप्रादुर्भावे' 'गणसंख्याने' इतिधात्वर्थभिन्नताया उक्तत्वात्।

यदुक्तम् 'गण एककुलरक्तसम्बन्धिनां जनानां समूहः' इति, तन्न कुलरक्तादिभेदेन त्वन्मते वर्णजात्यादिभेदप्रसक्तेः। त्वन्मतरीत्या जात्यादेः काल्पनिकत्वोक्तिविरोधात्। जेना लैसन जेनोस यूनीनी जनि कूनी गौथिक क्यन प्राचीननोर्स आदि धातूनामुत्पत्तिरेवार्थः न तन्मूलकं संघटनमपि। गण शब्दस्य तु समूहवाचित्वमेव। गोत्रशब्दोऽपि तद्भिन्नार्थकः।

यद्यपि यदु तुर्वसु द्रुह्यु अणु पुरु अङ्ग वङ्ग कलिङ्ग पुण्ड्र सुह्म दशगणाः ययातिबलिप्रभवत्वेनैव प्रसिद्धाः। तत्रोत्पादनेन सार्द्धं रक्त-सम्बन्धोऽप्यासीदिति वर्गवादिभिरुच्यते। तथापि विशेषणप्रभावात्तथा विशिष्टार्थबोधकत्वं गणशब्दस्य न स्वतः। अत एव धातुगणे भ्वादिगणादि-स्थलेऽपि विशेषणभेदादेव गणभेदः।

यदपि "मा माने इति धातुनिष्पन्नत्वान्मातृशब्दस्यान्नमांसादि विभाजकत्वेन मापनान्मातृत्वम्। मातुर्मापनकार्य्यादेवादिसाम्यसङ्घस्य ब्रह्मणः पुनः पुनरुत्पद्य जीवनं सम्पद्यतेस्म। मृगयायां सावधानतया मातृत्वात् पितृत्वम्। गवादि दोग्धृत्वाद् दुहितृत्वम्" तदपि तुच्छम्, तद्रहितेषु पश्वा-दिष्वपि तत्प्रयोगात्। गर्भधारणेन सन्ततेर्धारकत्वेन मापनमिव भवतीति

मातृत्वं सन्तते रक्षकत्वेन पितुः पितृत्वं प्रपूरकत्वाच्च दुहितृत्वं माति गर्भोऽस्यामिति माता, अथवा मान पूजायामिति धातोर्मान्यते पूज्यते या सा माता इति सर्वाधिकपूज्यत्वान्मातृत्वम्। उत्पादस्य मुख्यस्रोतःस्वरूप-गवादिपालनसम्बन्धेन गोत्रशब्दोऽपि तद्रीत्या तदर्थकः। एवं साम्यसंघे गणगोत्रादिशब्दानां प्रवृत्तिः।

कैश्चित्तु गावस्त्रायन्ते तत्रेति व्युत्पत्त्या समानगोचरभूमित्वेन गोत्रशब्दप्रवृत्तिरङ्गीक्रियते तदानीं साम्यसङ्घ एव सर्वसंसारः एक संघसदस्यानां कृतेऽन्यसंघीयाः सदस्याः शत्रवः। अन्येषामन्यत्र प्रवेशाधिकारो नासीत्। यज्ञे तेषामेवाधिकारः। तेषां स्वगोत्र एव यौन—सम्बन्धोऽपि। पश्चात्तद्दोषदर्शनात् सगोत्रसप्रवरविवाहो निषिद्धः। तदेतत्सर्वमपि निर्मूलम्। सर्वज्ञेश्वरोद्भूततदनुसारि शास्त्रेषु सगोत्रविवाहस्य सर्वदैवनिषिद्धत्वात्। जडप्रकृतेश्चेतनविकासस्तत्क्रमेण मनुष्यविकासः। मनुष्योऽपि पूर्वमज्ञो वन्योऽर्धवन्यः पश्चात्क्रमेण सभ्यो बभूव। तन्मतरीत्या पूर्णज्ञानविज्ञानविकासोऽद्य यावन्नास्त्येव। अत एव शास्त्रमप्यपूर्णमेवोत्तरोत्तरं परिवर्त्तनशीलम्। नित्यसर्वज्ञेश्वरपूर्विकेयं सृष्टिरीश्वराज्ञारूप शास्त्रात्मकसंविधानेनैव परिचाल्यते। संविधानं तु नित्यमेवेति मते पूर्वोक्त मतमसंगतमेव।

यदप्यादिमसाम्यसङ्घे विवाहप्रसंगेन वक्ति—"प्रकृतिर्मनुष्यश्च विकासशीलत्वेन प्रगतिशीलौ" नापरिवर्त्तनीयौ। न तत्रेश्वरीयशास्त्र-नियन्त्रणं संभवति। युगपरिवर्त्तनेन सार्द्धं शास्त्रादिपरिवर्तनस्यावश्यभावित्वात्। वापूटोकेन महोदयरीत्या यूथ विवाहेन मातृसत्तोद्भूता। मारगेन मार्क्स एङ्गेल्स प्रभृतीनामुक्त्या ऐतिहासिकभौतिकवादरीत्यासामाजिकार्थिक-सम्बन्धानुरोधेनैव परिवारोत्पत्तिः। उत्पादनप्रणाल्याःप्रभावस्तद्युगीयेषु परिवारेषु फलतिस्म। आधुनिके भारते नैतिकता पानाचारान् घृणा दृष्ट्या पश्यन्ति। ते सर्वेऽपि वैवाहिका यौनसम्बन्धा हिन्दूनां पवित्रतम इतिहास उपलभ्यन्ते। महापुरुषेषु देवेषु च ते व्यवहारा लब्धास्पदाः। ऐतिहासिक-दृष्ट्या सर्वोच्चसामाजिकसंघटनोपयोगित्वेनैतदालोचनमुपयोगि। भीष्मादिभिः स्पष्टमेव कृतादिभेदेन संकल्पसंस्पर्शमैथुनद्वन्द्वभेदेन विवाहचतुष्टय-व्यवस्थोक्ता। कृते साम्यसङ्घे बन्धनाभावात्संकल्पेन स्त्रीपुंसयो

रिच्छया यौनसम्बन्धो भवति स्म। द्वितीययुगे स्पर्शविवाहे सगोत्रविवाह-वर्जनादिसामाजिकनियमेन प्रतिबद्धत्वात् असगोत्रस्त्रीपुंसयोः यौन-सम्बन्धः। तृतीये युगे दम्पत्योर्यथाकामं विवाहसम्बन्धावद्धयोर्यौन-सम्बन्धः। चतुर्थे कलौ तु द्वन्द्वविवाहरीत्या पतिपत्न्योः स्थिरः सम्बन्धः यौनसम्बन्धः। अत्र नारी पुरुषस्य सर्वदा दासी भवति। पुरुषस्यैकाधि-पत्यम्।' तदेतत्सर्वमविचारितरमणीयम्, भीष्माद्युक्तिविरुद्धत्वात्।

वस्तुतस्तु नास्तिक्याक्रान्तबुद्धित्वाद्धर्माविरुद्धत्वाच्च भौतिकवादिनां सर्वं विरुद्धं हितावहं प्रतीयते। धर्मश्चाहितकरः प्रतीयते। भीष्मवचनानि त्वित्थं,—

कृते न चैषां मैथुनो धर्मो बभूव भरतर्षभ।
सङ्कल्पादेव चैतेषामपत्यमुपपद्यते॥ (शा० २७–३८)
ततस्त्रेतायुगे काले संस्पर्शाज्जायते प्रजा।
नह्यभून्मैथुनो धर्मस्तेषामपि जनाधिप॥ ३९॥
द्वापरे मैथुनो धर्मः प्रजानामभवन्नृप।
तथा कलियुगे राजन् द्वन्द्वमापेदिरे जनाः॥ ४०॥

अत्र यौनसम्बन्धरूपो मैथुनधर्मः कृतत्रेतयोर्नासीदित्येव स्पष्टमुच्यते। ज्ञानविज्ञानसिद्धत्वात्, धर्मनिष्ठत्वात्, सत्यसङ्कल्पत्वेन कृते सङ्कल्पादेव प्रजो-त्पत्तिः। त्रेतायां स्पर्शसापेक्षसङ्कल्पात्सृष्टिः। द्वापरे यौनसम्बन्धरूपान् मैथुनात्सृष्टिर्भवति। तेन तत्र सन्तानार्थं पौनःपुन्येन सम्बन्धार्थं द्वन्द्वात्मकतैव भवति स्त्रीपुंसयोः। नात्र वर्गवाद्यभिमतं यथेष्टाचरणम्। सगोत्रादिविवेकवैधुर्य्येण यौनसम्बन्धस्य सर्वथा स्वातन्त्र्यं कृत आसी-दित्यादिकल्पनमुच्छृङ्खलं निर्मूलञ्च, पूर्वोक्तवचनविरोधात्।

मार्क्सप्रभृतयस्तु धर्मतत्त्वानभिज्ञाः स्वैरमेवेतिहासं कल्पयन्ति। यदुक्तम् 'पाण्डुना नियोगार्थं कुन्त्याः प्रोत्साहनार्थं बहुजल्पितम्। प्राचीनकाले दम्पत्योरिदानीमिव बन्धनं नासीदित्यादि' तदपि न, तात्पर्यानवधारणात्। तथाहि—'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्यु'रिति रीत्या नियोगप्रशंसार्थायास्तदुक्तेः स्वार्थे तात्पर्य्याभावात्। नहि प्रमाणान्तरविरुद्धा अर्थवादाः स्वार्थे पर्य्यवस्यन्ति, तेषां गुणवादत्वेन विधिप्रशंसामात्रपरत्वमेव।

यदप्युक्तम्—'पूर्वमपि कुन्त्या सूर्यात्कर्ण उत्पादितः' तदपि तुच्छम्, तस्यापवादमात्रत्वात्। अतएव नेतिहासस्य धर्मे प्रामाण्यं, धर्मविरुद्धाया अप्रिय-घटनाया अपि संभवात्। धर्मशास्त्राविरुद्धस्यैवेतिहासस्यानुकरणीयता भवति। न धर्मशास्त्रविरुद्धस्यापवादभूतस्य वा कस्यचिदितिहासस्य धर्मे प्रामाण्यम्, रामयुधिष्ठिरादिवृत्तान्तवद्रावणादिवृत्तान्तस्यापि तत्र सत्त्वात्।

यदपि वन्यावस्थायामर्धवन्यावस्थायाञ्च सम्पत्तेरिव नारीणामपि सामूहिकोपभोग आसीत्। प्रकृतेरुत्थाय प्रकृतिविजयाय यतमानास्तदानीं यौनसम्बन्धस्वातन्त्र्येण दोषमपश्यन्तः मातरं दुहितरं भगिनीञ्चाविशेषं मन्यमाना अभिगच्छन्ति स्म। 'प्रजापतिः स्वां दुहितरमभ्यैत्' इत्यादि श्रुतिप्रमाणैरीदृशैरेव योनसम्बन्धैरेव सृष्टिरुत्पन्ना। वायुपुराणेऽपि—तादृशी कथाऽस्ति, परं तत्र तादृग्यौनसम्बन्धस्य निषिद्धत्वान्मृगो भूत्वा दुहितर-मुपजगाम। सा च मृगीभूता। तथापि देवानां बाणैस्तौ हतौ नक्षत्रतामुप-गतौ। ( ऐतरेय ब्रा० ३-३३। ५-३२ ) रूपकमपि सर्वथा निर्मूलं न भवत्येव। हरिवंशे वसिष्टप्रजापतेः पुत्री शतरूपा वसिष्ठपत्नी संजाता। ( अ० २ ) मनुना स्वपुत्री इडा इला वोढा। ( अ० १० ) जह्नुना स्वपुत्री जाह्नवी पत्नीत्वेन गृहीता। ( अ० २७ )

दश प्रचेतसो भ्रातर एकां सोमपुत्रीं मारिषामुपयेमिरे। तत्पुत्रः सोमः सोमस्य चैका पुत्री मारिषा तस्यां दशभिः प्रचेतोभिः सोमेन च मिलित्वा दक्षः प्रजापतिरुत्पादितः। दक्षेण च सप्तविंशतिः कन्यका उत्पाद्य सोमाय सन्तानो-त्पादनार्थं दत्ताः। दक्षो ब्रह्मपुत्रत्वेनापि प्रसिद्धः। ब्रह्मणेऽपि तेन स्वपुत्री दत्ता। यतो नारदो जज्ञे। हरिवंशे सन्तानोत्पत्तये प्रगतये च निन्दितयौन-सम्बन्धस्य घातकत्वोपपत्त्यापितृपुत्रसम्बन्धा निषिद्धाः। ततः सगोत्रविवाहो निषिद्धः, ततो भगिनीसम्बन्धो निषिद्धः। परवर्त्तिषु यमयमीसंवादसूक्तेषु कियता काठिन्येनायं नियमः प्रवृत्त इति स्पष्टं ज्ञायते। यम्या स्वस्यां सन्तानोत्पादनाय यमः सहोदरो भ्राताऽभ्यर्थितः। तेन च वरुणस्तद्दृष्ट्वा कुप्यतीत्युक्त्वा सा निषिद्धा। यम्या तद्विरोधः कृतः।

तैत्तरीयब्राह्मणे—सीता सावित्री स्वभ्रातरं सोमं चकमे। स तामना-दृत्यान्यां भगिनीं श्रद्धां कामितवान्। पश्चात् पितृदत्तेन मन्त्रेणाङ्गरागेण च

सा सोमं वशीकृतवती। हरिवंशे—ब्रह्मणो दक्षपादाङ्गुष्ठेनोत्पन्नो दक्षो-वाम पादाङ्गुष्ठजेन दक्षेण विवाहं कृतवान्। अत्रापि भगिनीविवाहः सिद्ध्यति। ततः षष्ठिः कन्या जाताः। मरीचिर्धर्मश्च तद्भ्रातरौ, तासां दशकन्या धर्माय ददौ। मरीचिपुत्राय कश्यपाय त्रयोदशकन्या ददौ। तथापि सगोत्रविवाहत्वा-देते विवाहा निषिद्धा" इति, तन्न, दिव्यादिव्यप्राणिभेदेन धर्मभेदात् देवा-ऋषयः पितरोऽयोनिजा दिव्यज्ञानसम्पन्ना नित्यमुक्तप्राया भवन्ति। मनुष्याधि-कारीणि शास्त्राणि न तत्र प्रवर्तन्ते, मलविक्षेपावरणादिदोषावृत्तानामेव तन्निवर्तकतया शास्त्राण्यधिक्रियन्ते।

यदुक्तम्—"यौनसम्बन्धस्वातन्त्र्येण तदानीं मातृ–दुहितृ–भगिन्यादि-विवेको नासी" दिति, तदपि न, तथात्वे प्रजापतेः काल्पनिकस्यापि दुहितृ-गमनस्य निन्द्यत्वानापत्तेः। त्वदुक्तरीत्यापि तदर्थमुभयोर्मृगरूपधारणेन मनुष्याणां कृते तन्निन्द्यत्वावगमात् देवकर्तृकदण्ड्यत्वावगमाच्च। किञ्च—

"पिता यत् स्वां दुहितरमधिष्कन्" ( ऋ० १०।६१।७ ) पिता प्रजा-पतिः स्वां पुत्रीं प्रधर्षितवान्।

'प्रजापतिः स्वां दुहितरमभ्यध्यायत" ( ऐ० ३।३३ )

"प्रजापतिः स्वां दुहितरभिदध्यौ" ( श० १।७।४।१ )

स तां रमणाय ध्यातवान्।

"पिता दुहितुर्गर्भमाधात्" ( अथर्व ९।१५।१२ )

पिता प्रजापतिः स्वपुत्र्यां गर्भं धारितवान्।

"प्रजापतिर्वा इदमासीत्तस्य वाग् द्वितीयासीत्तां मिथुनं समभवत्सा-गर्भमादधत्त" ( ताण्ड्य २०।१४।२ )।

सर्वकारणत्वात्पूर्वं प्रजापतिरेवासीत्तस्य वाक् सरस्वती द्वितीयासीत्। तयोः सङ्गमेन सरस्वती गर्भिणी जाता। 'प्रजापतिरुषसमभ्यैत् स्वां दुहितरम्' ( ताण्ड्य ८।२।१० )। प्रजापतिः सूर्य्यः स्वामुषसं दुहितरमुपगतवान् इत्यादि श्रौतवचनानां पर्य्यालोचनया प्रजापतिदुहितृकथास्वारस्यं ज्ञायते। पुराणैश्च तद्भाष्यं क्रियते। 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभे-त्यल्पश्रुताद् वेदो मामयं प्रहरिष्यती'ति ( आ० १।२६८ ) भारतवचनैः बहुश्रुतैरेव वेदार्थोऽधिगन्तुं शक्यो नाल्पश्रुतैः। पुराणेषु—

'वाचं दुहितरं तन्वीं स्वयंभूर्हरतीं मनः ।
अकामां चकमे क्षत्तः सकाम इति नः श्रुतम् ॥ २८ ॥
तमधर्मे कृतमतिं विलोक्य पितरं सुताः ।
मरीचिमुख्या मुनयो विश्रम्भात्प्रत्यबोधयन् ॥ २९ ॥
नैतत्पूर्वैः कृतं त्वद्य न करिष्यन्ति चापरे ॥ ३० ॥
स इत्थं गृणतः पुत्रान् पुरो दृष्ट्वा प्रजापतीन् ।
प्रजापतिपतिस्तन्वं तत्याज व्रीडितस्तदा ॥ ३३ ॥'

( श्रीभागवते ३।१२ )

उपर्युक्तैर्वचनैर्वेद ( मन्त्रब्राह्मण ) वाक्यानां व्याख्यानमेव कृतम् । यद्यपि प्रोक्तं मन्त्रादि वाक्यानां रहस्यभूतोऽन्य एवार्थस्तथापि लोकमर्य्यादाया रक्षणाय स्वशरीरत्यागरूपं प्रायश्चित्तं ब्रह्मणा कृतमिति स्पष्टमुक्तम् । दुहित्रादिगमनस्य यौनसम्बन्धस्वातन्त्र्यमूलकत्वे तन्नोपपद्यते ।

मन्त्रादिवाक्यानां तु भौतिकविज्ञानसम्मतोऽयमर्थः । हेमन्तशिशिरर्त्तुषु सूर्योदयकालेषु नीहारो जायते । सूर्य्यसंसर्गे गतस्य द्रवभूतस्य जलकणस्य शस्यपत्रादिषूपलम्भात् ।

"यो ह्येव सविता स प्रजापतिः' ( श० १२।३।५।१ ) "प्रजापतिर्वै सविता" ( ताण्ड्य ८।२।१० ) इति रीत्या सूर्य्य एव प्रजापतिरिति विज्ञायते । एवमेव सूर्य्योत्पन्नत्वात् उषसः प्रातः कालिकारुणमन्दप्रकाशरूपसूर्यदुहितृत्वव्यपदेशः । प्रतिदिनं सूर्यस्तामनुधावत्येवेतीदमेवालङ्कारिकभाषया प्रजापतिदुहितृगमनकथारूपेण वर्णितम् । सूर्य्यरश्मिभिराकृष्टा जलकणाः स्तिमिताः नीहाररूपेण परिणमन्ते । तां दिशो जुगृहुर्घोरां नीहारं यद्विदुस्तमः" ( भा० ३।१२।३३ ) तथा च सूर्यरूपस्य प्रजापते रुषसोऽनुधावनेन किरणरूपाणां पुत्राणां प्रबोधनेन तस्य वाष्पमयशरीरत्यागः । दिग्भिस्तु सा तनुर्गृहीता । सैव सर्वत्र दिक्षु नीहाररूपेण प्रसृता । इदमेव सूर्य्येण प्रजापतिना स्वस्यामुषसि दुहितरि नीहाररूपगर्भाधानम्, रक्तरश्मिरूपगर्भाधानम् वा कृतम् । तदेव भट्टपादैर्विशदीकृतम् । प्रजापतिस्तावत्प्रजापालनाधिकारादादित्य एवोच्यते । सचारुणोदयवेलायामुषसमुद्यन्नभ्यैत् । सा तदागमनादेवोप-

जायते इति तद्दुहितृत्वेन व्यपदिश्यते । तस्याञ्चारुणाख्यबीजनिःक्षेपात् स्त्रीपुरुषयोगवदुपचारः । ( तन्त्रवार्तिक १।३।७ ) 'तस्य मत एव ब्रह्मा' ( कौ० १७।७ ) 'मत एव ब्रह्मा' ( गोपथ २।१०।१४ ) 'यत्प्रजापतिस्तन्मनः' ( जैमिनि उपनिषद् १।३३।२ ) प्रजापतिर्वै मनः' ( शत ४।१।१।२२ ) 'वाग्वै सरस्वती' ( कौ० ५।१ ) 'वाक् तु सरस्वती' ( ऐ० ३।१ ) 'मतो ह वै पूर्ववाचो यद्धि मनसाभिगच्छति तद्वाचा वदति' ( ताण्ड्य १।१।१।३३ ) 'स ( प्रजापतिः ) वाचमयच्छत' ( ए० २।३३ ) इत्यादि रीत्या पुरुषस्य मन एव ब्रह्मा भवति । मनः प्रजापतिशब्देन व्यपदिश्यते । वागेव सरस्वती मनसैव ब्रह्मणा वाग्रूपा सरस्वती नियम्यते । यन्मनसा मन्यते तदेव वाचोच्यते । तथा च वाचो मन.पूर्वकत्वेन सा मनसो दुहितेव भवति । तथा मनसः पितुः स्वपुत्र्यां वाचि वीर्य्याधानेन शब्दः समुत्पद्यते । तदुक्तं– ब्रह्मवैवर्त्ते—"मनः स्वरूपो ब्रह्मा मे ज्ञानरूपो महेश्वरः ।

वागधिष्ठात्री देवी या स स्वयञ्च सरस्वती ॥"

आधिदैविकदृष्ट्या सिसृक्षोरेकस्यैव ब्रह्मणः स्वशक्तिभूतायां प्रकृतौ स्वात्मप्रतिविम्बसमर्पणरूपगर्भाधाने न सर्वस्यैव जगत उत्पत्तिः ।

'मम योनिर्महद् ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥' ( श्री. म. गी. )

महद् ब्रह्म प्रकृतिरेव तस्य योनिस्तत्रैव चित्प्रतिबिम्बार्पणं गर्भाधानम् । चिच्छायापन्नायाः प्रकृतेरेव प्रपञ्चसृष्टेः ।

'स वै नैव रेमे । तस्मादेकाकी न रमते । सद्वितीयमैच्छत् । सह एतावानास । यथा स्त्रीपुमांसौ परिष्वक्तौ स इममेवात्मानं द्विधापातयत् । ततः पतिश्च पत्नी च अभवताम् । ततो मनुष्या अजायन्त । सा हेयमीक्षाञ्चक्रे । कथं नु आत्मन एव जनयित्वा संभवति हंत तिरोऽसानीति । सा गौरभवत्, वृषभ इतरः सतामेव समभवत् । ततो गावोऽजायन्त । बडवा-इतरा भवदश्व इतरः । गर्दभी इतरा अभद् गर्दभ इतरः । सतामेवाभवत्तत एकशफा अजायन्त । अजा इतराभवद् बस्त इतरः । अविरितरा मेष इतरः ।

ततः अजा अवयश्च अजायन्त । यदिदं किञ्च मिथुनमापिपीलिकाभ्य-स्तत्सर्वमस्राक्षीत् । सो वेद अहं वावसृष्टिरस्मि । अहं सर्वमसृक्षीति ततः सृष्टिरभवत् ।' ( श० १४।३।४।३ )

द्विधाकृत्वाऽऽत्मनो देहमर्धेन पुरुषोऽभवत् ।
अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः ॥ मनु० १।३२ ।

एवमादिश्रुतिस्मृतिवचनैः स्पष्टं विज्ञायते यत् मानससृष्ट्या प्रपञ्चानभिवृद्धया मैथुन्याः सृष्टेः प्रवृत्तये हिरण्यगर्भरूपः परमेश्वर एकाकित्वेनारत्या स्वात्मानमेव विविधपतिपत्नीरूपेणाविर्भाव्य सर्वं विश्वं व्यरचयत् । श्रुत्यर्थस्तु—स एकाकी न रेमे तत एवाद्यापि जन एकाकी न रमते । सद्वितीयमैच्छदरतिनिवृत्त्यर्थं स एतावान् सञ्जात इच्छामात्रेण यावान् परिष्वक्तौ स्त्रीपुमांसौ भवतः । स इममेव तादृशमात्मानं द्विधापादयत् । ततः पतिश्च पत्नी एवमीक्षाञ्चक्रे । कथं नु मां स्वात्मन एव जनयित्वायं पुत्र्यामपि रमते । हंत तिरोसानि तिरोभवामि । स तिरोधानार्थं गौरभवत् । सोऽपि वृषभोऽभवत् । स प्रजापतिरूपः पतिस्तस्यां रमित्वा गा उदपादयत् । सा पुनः तिरोधानार्थमेव वडवाभवत् । सोऽपि तां तथाभूतां ज्ञात्वाऽश्वोऽभवत् । इतरा गर्दभी जाताऽपरोऽपि गर्दभो जातः । तथा भूताभ्यां ताभ्यां एकशफा अजायन्त । तत इतरा अजा जाता । अन्यो बस्तो जातः । इतरा अविरितरो मेषस्ततः अजा अवयश्चाजायन्त । एवमेव पिपीलिकापर्य्यन्तं तत्तन्मिथुनसृष्टिर्जाता । स आत्मन उत्पन्नत्वात्सृष्टेरात्मानमेव सृष्टिं ज्ञातवान् ।

संक्षपेण मनुरपि तदेवाह—ब्रह्माऽऽत्मनो देहं द्विधाकृत्वा अर्धेन पुरुषोऽर्धेन नारी अभवत् । तस्याञ्च विराजमसृजत् । स पुरुषो मनुनाम्ना स्त्री च शतरूपा नाम्ना प्रसिद्धे । बहुरूपधारणाच्छतरूपा सैव ब्रह्मण उत्पन्नत्वात् तत्पुत्रीत्वेनापि व्यवह्रियते ।

वस्तुतस्त्वनादिप्रकृतिरूपा पत्नीअनादिना पुरुषरूपेण पत्या तादात्म्यापन्ना सती तैस्तै रूपैरुत्पन्ना । अन्यथा एकस्मादेव परमेश्वराद्विश्वसृष्टावभ्युपगम्यमानायां समेषां स्त्रीपुंसां भ्रातृभगिनीरूपता भवेत् । तस्मात् स्त्रीपुरुषगोवृषभवडवाऽश्वादिसृष्टिरेव रूपकालङ्कारेण बुबोधयिषिता अत्र आलङ्कारिकरूपेणाप्ययमादर्शो न भवेदित्येतदर्थमेव ब्रह्मणा तद्देहत्यागरूपं प्रायश्चित्तं कृतम् । यौनसम्बन्धस्य स्वातन्त्र्ये तदानीमेतन्निन्दादण्डनप्रायश्चित्तादिकं सर्वमस्थाने स्यात् ।

एवमेव शिवविवाहेऽग्निप्रकमणप्रसङ्गे शिवाङ्गुष्ठप्रदर्शनात्ब्रह्मणः स्खलनं जातम्। तदुत्सङ्गपतिताद्वीर्याद्वालखिल्या जाताः। ते च वटुका भूत्वा सूर्य्यसेवापरायणाः सन्तः सूर्य्यस्य रथपृष्ठे धावन्ति। शिवस्तु तद्दृष्ट्वा कुपितः पश्चात्प्रसादितोऽनुजग्राह गङ्गया पावयामास। (शि० पु० ज्ञान संहिता १८।)

'तस्माद्वीर्य्यमुदक्रामत्। तं देवा अग्नौ प्रावृञ्जन्।' (श० ७।१।२।१६) यद्वा उर्वरयोरसंभिन्नं भवति खिलमिति वै तदाचक्षते। बालमात्रा उहे मे प्राणा असंभिन्नास्तद्यदसंभिन्नास्तस्माद्वालखिल्या (कौ० ३०।८) प्राणा वै बालखिल्याः प्राणानेवोपदधाति ता यद् बालखिल्या नाम।

आधिदैविकदृष्ट्या तथाविधायां घटनायामपि तस्यानिन्द्यतां मत्वैव तद्गोपनादिचेष्टा शिवप्रसादनतदनुग्रहेण गङ्गया च तत्पावनमुक्तम्। 'शिवोऽपि बटुकान् दृष्ट्वा ब्रह्मणो कुपितस्तदा। देवीं गङ्गाञ्च दत्त्वा स पावितः। अनुगृह्य पुनस्तत्र स्थापितश्च पितामहः।' अत्रापि प्रातीतिकं रूपमिदं वस्तुभूतम् परमेश्वरो रुद्रस्तच्छक्तिश्चोमा। तस्या अङ्गुष्ठः पृथ्वी। तद्दर्शनेन सूर्य्यरूपस्य ब्रह्मणः किरणसमूहरूपस्य रेतसः स्खलनम्। तेनैव प्रजा प्राणोज्जीवनम्। "उद्यन्नु खलु वा आदित्यः सर्वाणि भूतानि प्राणयति। तस्मादेनं प्राण इत्याचक्षते' (ऐ० ५।३१) प्राणनशक्तेरेव बालखिल्या भवन्ति। ते विग्रहधारिरूपा वटुरूपा बालखिल्या ऋषयः। यद्यपि सूक्ष्मदृष्ट्या सर्वथा निर्दोषोऽयं विषयः, तथापि स्थूलदृष्ट्या पुष्यनक्षत्रे विवाहो न कर्त्तव्य इति निषेधस्यार्थवादोऽयम्। निषिद्धपूर्वाफाल्गुनीनक्षत्रे विवाहेन यथा सीताया यावदायुर्दुःखमेव जातं तथैव पुष्ये विवाहेन ब्रह्मणः कामवर्धनं जातमित्युभयोर्नक्षत्रयोर्विवाहो न कर्त्तव्य इति बोधनार्थमेवायं प्रपञ्चः।

तदुक्तम्—प्राचेतसः प्राह शुभं भगर्क्षम् सीता तदूढा न सुखं सिषेवे।
पुष्यस्तु पुष्यत्यतिकाममेव प्रजापतेराप स शापमस्मात्।'
त्रिवाहवृन्दावने।

एवमेव देवोऽदेवाञ्जघनतः सृजति स्माति लोलुपान्।
त एनं लोलुपतया मैथुनायाभिपेदिरे॥ २३॥

ततो हसत्स भगवानसुरैर्निरपत्रपैः ।
अन्वीयमानस्तरसा क्रुद्धो भीतः परापतत् ॥ २४ ॥
स उपव्रज्य वरदं प्रपन्नार्तिहरं हरिम् ।
अनुग्रहाय भक्तानामनुरूपात्मदर्शनम् ॥ २५ ॥
पाहि मां परमात्मंस्ते प्रेषणेनासृजे प्रजाः ।
ता इमा यभितुं पापा उपाक्रामन्ति मां प्रभो ॥ २६ ॥
सोऽवधार्य्यास्य कार्पण्यं विविक्ताध्यात्मदर्शनः ।
विमुञ्चात्मतनुं घोरमित्युक्तो विमुमोच ह ॥ २७ ॥
तां क्वणाच्चरणाम्भोजां मदविह्वललोचनाम् ।
काञ्चीकलापविलसद्दुकूलच्छन्नरोधसम् ॥ २८ ॥
उपलभ्यासुरा धर्म सर्वे सम्मुमुहुः स्त्रियम् ॥ ३१ ॥
इति सायंतनीं सन्ध्यामसुराः प्रमदायतीम् ।
प्रलोभयन्तीं जगृहुर्मत्वा मूढधियः स्त्रियम् ॥ ३७ ॥

(श्रीभा० ३।२०।)

ब्रह्मरूपसूर्य्यस्य जघनादधोभागादन्धकारोत्पत्तिः यथा सूर्यस्य पुरस्तादुषसः सर्पणम् । तथैव सूर्यस्य पश्चादन्धकारस्य धावनमपि भवति । नियामकशक्तेर्विष्णोर्वशात् स्वीयमन्धकाराक्रान्तं भागं सूर्यः परित्यजति । तस्मादेव तदुन्मुक्तरश्मयोऽरुणिमानं भजन्ति । अन्धकारस्य क्रमेण प्रमदायतीमरुणां तां सन्ध्यामात्मसात्करोति । स्थूलाख्यानेनासुर्याः शक्तेः स्वरूपञ्चोपदर्शितम्, परिजिहीर्षोस्तज्ज्ञानस्यावश्यकत्वात् ।

वृन्दायाः कथया वृन्दायाः पातिव्रत्यमाहात्म्यं सूच्यते । जालन्धरेण तत्पतिना तस्या पातिव्रत्यबलेनावध्येन सता देवाङ्गनानां पातिव्रत्यभङ्गाय यतितम् । श्रीपार्वत्या पातिव्रत्यभङ्गाय महादेवरूपमपि तेनानुकृतम् ।

कामतः स जगामाशु यत्र गौरी स्थिताभवत् ।
दरदोर्दण्डपञ्चास्यस्त्रिनेत्रश्च जटाधरः ॥
महावृषभमारुढः सर्वथा रुद्रसन्निभः ।
आसुर्या मायया व्यास स बभूव जलन्धरः ॥

अथ रुद्रं समायान्तमालोक्य हरवल्लभा ।
अभ्याययौ सखीमध्यात्तद्दर्शनपथेऽभवत् ॥
यावद्ददर्श चार्वङ्गीं पार्वतीं दनुजेश्वरः ।
तावत्स वीर्य्यं मुमुचे जडाङ्गश्चाभवत्तदा ॥
( शिवपुराणे युद्धखण्डे २२।३७-४१ )

'सतीत्वहानिस्तत्पत्न्या यत्र काले भविष्यति ।
तत्रैव काले तन्मृत्यु रिति दत्तो वरस्त्वया ॥'
( देवी भागवते ९।१९।९१ )

'शंखचूडस्य रूपेण जगाम तुलसीं प्रति ।' ( दे० भा० ९।२३।११ )

धर्मस्य गौरवं लाघवञ्च द्रष्टव्यं भवति। बह्वीनां पातिव्रत्यरक्षणार्थैकस्याः पातिव्रत्यभङ्गो गुण एव न दोषः। योऽन्यासां प्रातिव्रत्यभङ्गाय प्रवर्त्तते, तस्य पत्न्या अपि पातिव्रत्यं सुरक्षितं न भवति। 'अन्ये जायां परिमृशन्त्यस्य' ( ऋ० १०।३४।४ ।

किञ्च रागानुगाया भक्तेर्लोकोत्तरं माहात्म्यम्, यया वशीभूतो दुर्गमोऽपि भगवान् सुगमो भवति । दुष्करैस्तपोभिर्यं कल्पकल्पान्तरेण सिद्धा आप्नुवन्ति स एव यं वृणुते तं तिरस्कृतोऽपि शापितोऽपि मर्य्यादामतिक्रम्यापि भजत्येव न जहाति कथमपि । तत एवं वृन्दाया अन्यनिष्ठायाः शापादिप्रदानप्रतिकूलाया अपि स्वपतिना सहाग्निनिविष्टाया—अपरक्ताया अपि वशीभूतो भगवान् सम्बन्धं न जहौ। तेन भगवान् न केवलं प्रेमगोचरः किन्तु प्रेमाश्रयोऽपि। यथा कश्चन प्रेमान्धो विवेकशून्यो मानावमानादिकमविगणय्य प्रेयसीमन्यपरायणामप्यनुसरत्येवेति तद्वत्। जन्मान्तरीयानन्याराधनादिभिर्वशीभूतो भक्तगुणदोषादिकं न पश्यत्येव । सर्वज्ञोऽप्यनन्तैश्वर्य्योऽपि कमलालयालालितललितचरणयुगलोऽपि राधापादारविन्दमकरन्दमिलिन्दो भवति । क्षीरसिन्धुसुताकान्तोऽपि व्रजसीमन्तिनी नवनीतदध्यादिलुब्धमानसश्चौर्य्यमप्यङ्गीकरोति ।

वृन्दाया भगवदीयाया महाशक्तेरेव कर्मवशेन लीलया विस्मृतभगवद्वैभवाया अज्ञाया इव भगवदन्यपरायणाया अपि सर्वात्मभावेन स्वमाहात्म्यविस्मरणेनानुसरणं भगवतः पूर्णकामस्य भक्तिपारवश्यमेव सूचयति ।

विज्ञानरसिकास्तु जलन्धरमेव जालन्धरं तद्गतां विद्युच्छक्तिमेव वृन्दां मन्यन्ते। जलधरस्य च क्षणे क्षणे विविधरूपधारणेन प्रकृतिमोहकत्वं प्रसिद्धमेव। स एव अविच्छिन्नप्रवाहाया विद्युच्छक्त्या विश्वजीवनं स्ववशामापाद्य विश्वमेवोद्वेजयति। यदा विश्वहिताय वृष्टिहेतुना वायुना विष्णुना सा शक्तिस्ततो विच्छिद्यते तदैव वृष्टिर्भवति।

यदवृश्चत् तद्वृष्टिः (तै० ३।१।९।१) अयं वै वर्षस्येष्टे योऽयं पवते (वायुः श० १।८।३।१२)

महासमुद्रस्थानीयस्य विष्णोस्तरङ्गस्थानीयाः सर्वेऽपि जीवास्तदालिङ्गिता एव भवन्तीति वृन्दापि तदालिङ्गितेति न दोषः।

श्रीदामापि श्रीकृष्णांशसमुद्भवः। तुलसीचापि तदंशा तत्सखी प्रिया। देवीभागवते (९।१८।२३-२८) तथाच श्रीदामरूपो जालन्धरोऽपि कृष्णांश एव। तत एव लक्ष्म्यंशरूपा तुलसीस्तेन संसृष्टा अन्ते अंशिना कृष्णेन सा संश्लिष्टा।

व्यवहारदृष्ट्या यथा बहूनां हिंसकस्य बहुवधनिरोधाय हिंसनं धर्म एव तथैव बह्वीनां पातिव्रत्यरक्षणाय एकस्या सतीत्वभङ्गेनान्यपातिव्रत्यध्वंशकस्य बधो ज्यायानेव।

तस्याश्च निरपराधायाः शापाङ्गीकारेण विष्णोः शालग्रामपाषाणत्वावाप्तिः। तस्यै च सर्वदुर्लभब्रह्मसायुज्यप्रदानम्। लक्ष्म्याद्यपेक्षयाऽपि तन्माहात्म्यवर्धनम्। तत एव भगवान् तत्साहचर्य्येण नैवेद्यानि गृह्णाति। सर्वधर्मानुष्ठानानन्तरमपि भगवदर्पणमन्तरा तन्न फलपर्य्यवसायि। तथा च सर्वधर्मार्पणेन यत्समर्हणमिष्यते, स एव सर्वथा वशीभूतः सञ्जातस्तदा किमन्यत् पातिव्रत्यधर्मेणापि कर्त्तव्यम्?

चन्द्रमसा बृहस्पतेः पत्नी ताराऽपहृता। बृहस्पतिग्रहकक्षायां भ्राम्यन् तारात्मक उपग्रहश्चन्द्रपिण्डस्याकर्षणवशाच्चन्द्रकक्षामागतः। ताभ्यामाकर्षणविकर्षणाभ्यां तारकामयः समरः सञ्जातः। सूर्यरूपस्य प्रजापतेराकर्षणवशात्पुनर्बृहस्पतिकक्षां गतः। चन्द्रतारयोरंशेनैव बुधाख्योऽन्यो ग्रहोऽजनि।

यद्वा चन्द्रो मनः गुरोः सकाशात्तारां तारिणीं ब्रह्मोपनिषदं गृह्णाति। तत एव बुधं ज्ञानमुत्पादयति।

चन्द्रमाः सर्वमनोभिमानि तत्त्वं यथा सर्वाणि शिरांसि व्यष्टिगतानि समष्टिपरमेश्वरस्य सहस्रशिरसः शिरांसि, सर्वाणि व्यष्टिगतान्यक्षीणी तस्यैवाक्षीणि, सर्वे बाहवः पादास्तस्यैव बाहवः पादश्च भवन्ति । वृक्षगतान्यङ्गानि वनाङ्गानीव व्यष्टिगतानि शिरोक्षिबाहूपादादीनि महतो विराजो भगवत एवाङ्गानि । एवमेव सर्वे जीवभोगा अपि परमेशभोगाः सम्पद्यन्ते । चन्द्रमा भगवतो मनः । व्यष्टिगतानि सर्वाणि मनांसि तत्रैवान्तर्भवन्ति । तेन सर्वमनःकृता भोगा अपि चन्द्रभोगाः सम्पद्यन्ते । तथाच गुरु-बृहस्पतिमनोऽपि चन्द्रमस्यन्तर्भवतीति तन्मनः कृतभोगोऽपि चन्द्रभोग एव । तथापि—व्यावहारिकप्रातीतिकैतिहासिकदृष्ट्या तत्कृत्यपरिणामस्वरूपेण चन्द्रः कलङ्कितः क्षयितश्च जातस्तस्मान्नैवंविधः साहसो धर्मव्यतिक्रमश्चान्यैरनुष्ठेयः ।

एवमेव "पिता दुहितुर्गर्भमाधात्" ( ऋ. सं. १।१६४।३३ ) 'मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोत नः । भ्रातेन्द्रस्य सखा मम ।' ( ऋ. सं. ६।५५।५ )

"स्वकीयाञ्च सुतां ब्रह्मा विष्णुदेवः स्वमातरम् ।
भगिनीं भगवाञ्छम्भु र्गृहीत्वा श्रेष्ठतामगात् ॥'

इत्यादीनामपि यौनसम्बन्धस्वातन्त्र्यबोधने न तात्पर्यम् किन्तु सजातीयादिभेदशून्यस्य परमात्मनः प्रकृतितद्विकारतारतम्येनैवौपाधिको भेदो भासत इत्यत्रैव । तदेव पुराणेषूक्तम्—

'प्रकृतिर्जननी देवी गुणभिन्ना गुणैकिका ।
एका सा प्रकृतिर्माता गुणसाम्यात् सनातनी ॥ २३ ॥
सत्त्वभूता च भगिनी रजोभूता च गेहिनी ।
तमो भूता च सा कन्या तस्यै देव्यै नमोनमः ॥
बहवः पुरुषा ये वै निर्गुणश्चैकरूपिणः ।
चैतन्या ज्ञानवन्तश्च लोके प्रकृतिसंभवा ॥
अलोके पापजाः सर्वे देवब्रह्मसमुद्भवाः ।
या तु ज्ञानमयी नारी वृणोद्यं पुरुषं शुभम् ॥
कोऽपि पुत्रः पिता भ्राता स च तस्याः परिर्भवेत् ।

स्वकीयाञ्च सुतां ब्रह्मा विष्णुदेवः स्वमारतम् ।
भगिनीं भगवाञ्छम्भुर्गृहीत्वा श्रेष्टतामगात् ॥
( भविष्य प्र० प्रतिसर्ग ख० ४।अ०१८ )

प्रकृतिरेव समेषां माता प्रकृतिपतिर्भगवानेव सर्वपिता ।
सर्वभूतेषु कौन्तेय मूर्तयः संभवन्ति याः ।
तासां ब्रह्म ( प्रकृति ) महद्योनिरहं वीजप्रदः पिता ॥

तादृश्या साम्यावस्थापन्नया मात्रा संवलितः ब्रह्मात्मकः पुरुषो विष्णुर्भवति । एवमेव सत्त्वप्रधाना प्रकृतिर्भगिनी भवति । तया युक्तः पुरुषो महादेवो भवति । तमः प्रधाना प्रकृतिःकन्या भवति, तया संवलितःपुरुषो ब्रह्मा भवति । यथा पुरुषस्तत्तत्सम्बन्धापेक्षया पिता पुत्रो भ्राता च भवति, तथैव प्रकृतेः सत्त्वादिगुणयोगादेक एव परमात्मा विष्ण्वादिभेदभिन्नो भवति । अत्र मातृ-भगिन्यादयःशब्दास्तत्तद्गुणविशिष्टांप्रकृतिमेव बोधयन्ति । तस्माद् भ्रातृत्वादिकं प्रकृतेः पारिभाषिकमेव, तथैव प्रकृतेरजात्वं पुरुषाणामजत्वञ्च रूपकोपन्यासे-नोक्तम् ।

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
जहात्येनां भुक्तभोगामजोऽन्यः अजा ह्येको जुषमाणोऽनुशेते ॥"
( श्वेताश्वतरोपनिषदि )

यथा लोहितशुक्लकृष्णवर्णा लोके काचित् कर्बुरवर्णा बर्करी भवति । सा च समानाः कर्बुराः प्रजाः सन्ततीः सृजति । ताञ्च कश्चिदजः जुषमाणोऽनुसरति । अन्यश्च निवृत्तभोगस्तां त्यजति । तथैव प्रकृतिः सत्त्व-रजस्तमोमयी तादृशीरेव सुखदुःखमोहात्मिका महदादिप्रजाः सृजति । ताञ्चाकृतार्थोऽनुसरति कृतार्थश्च त्यजति । नात्र यथा मुख्यं प्रकृतेरजात्वं नात्र यथा जीवानां मुख्यमजत्वं तथैव प्रकृतेरपि न मुख्यं मातृत्वादिकम्

एवमेव बृहस्पतिरन्तर्वत्यां भ्रातृपत्न्यां मैथुनाय प्रवृत्तो वारितोऽपि वीर्यमवासृजत् । गर्भस्थेन दीर्घतमसा तद्वीर्यं नात्रावकाश इत्युक्त्वा बहिः क्षिप्तम् । ततो भरद्वाजोत्पत्तिरित्यनयाऽपि कथया तन्न सिद्ध्यति, तस्या अपि रूपकोपन्यासे तात्पर्यात् ।

वाग्वै बृहती तस्याः पतिः बृहस्पतिर्मनः । जीव उतथ्यस्तस्य पत्नी व पत्नी ममता रागात्मिका बुद्धिः । तस्यां बृहस्पतिः ज्ञानमयभरद्वाजो-त्पादनाय स्ववीर्य्यं सामर्थ्यमवासृजत् । तत्रत्यो मोहमयो दीर्घतमास्तदस-

हमानस्तच्चिक्षेप । तथापि ताभ्यां द्वाभ्यां जातं 'मूढे भरद्वाजमिम' मित्युक्त्वा देवैः पालितं ज्ञानं जातमेवमैतिहासिकदृष्ट्यापि देवर्षिचरितमतिमानुषं भवति । दिव्यत्वे विधिनिषेधात्मकशास्त्राधिकाराविषयत्वात् । निन्द्यं शास्त्रविरुद्धञ्चैतिहासिकं वृत्तमननुकरणीयमित्यप्युक्तमेव ।

'अहल्यायाह मैत्रेय्याः ( इन्द्र ) जार आस' ( षड्विश १।१ )

'अहल्यायै जारेति' ( षड्विंश १।१ )

इन्द्रस्याहल्यागमनचर्चयाऽपि यौनसम्बन्धस्वातन्त्र्यं न सिद्ध्यति । अत्र चन्द्रो गोतमः । तस्य पत्नी रात्रिरल्पा । अहनि लीयते सा यस्मात् परमैश्वर्य्यशीलसूर्य एवेन्द्रः ।

'य एषस्तपति एष उ एव इन्द्रः' ( श. ४।५।९।४ ) इति श्रुतेः । सूर्येण रात्रिर्जीर्य्यते तस्मात्सूर्यरूप इन्द्र अहल्याया जारः । आदित्योऽत्र जार उच्यते । 'रात्रेर्जरयिता' ( निरुक्ते ३।१।४ )

ऐतिहासिकदृष्ट्या ब्रह्मणो मानसी दुहिताऽहल्या । इन्द्रश्च दिव्यो देवः । मनुष्याधिकारस्याविषयत्वात्तत्र न तद्विधिनिषेधाः प्रवर्त्तन्ते । ब्रह्मवित्त्वाच्च स विधिनिषेधातीतः । गोतमशापेन तस्यापि संकटप्राप्तिरिति सर्वथा तन्नानुकरणीयम् । शास्त्रनिषिद्धस्येतिहासस्य धर्मेऽप्रमाणत्वात् । गौतमस्योग्रतपोभङ्गचिकीर्षया क्रोधोत्पादनाय तथाकृतमिन्द्रेणेत्यपि प्रसिद्धिः ।

कुर्वता तपसो विघ्नं गोतमस्य महात्मनः ।
क्रोधमुत्पाद्य हि मया सुरकार्य्यमिदं कृतम् ॥

( बाल्मीकीये १।४९।२ )

इन्द्रस्य ब्रह्मवित्त्वेनाश्लिष्टपातकत्वेऽपि लोकसंग्रहाय ब्रह्महत्यादि प्रायश्चिताचरणम् । विश्वरूपं त्वाष्ट्रमभ्यमंस्त । वृत्रमस्तृत । यतीन् शालावृकेभ्योः प्रादात् । अरुन्मुखानवधीत् ।' ( ऐ. ७।२८ )

इन्द्र उवाच—दिवि प्रह्लादीयानतृणमहमन्तरिक्षे पौलोमान् पृथिव्यां कालखाञ्जांस्तस्य मे तत्र लोमच नामीयत । स यो मां वेद न ह वैतस्य केनचन कर्मणा लोको मीयते । न स्तेयेन, न भ्रूणहत्यया, न मातृवधेन, न पितृवधेन, नास्य पापं कृत्वा मुखान्नीलं वेत्तीति ।' कौषीतकिः इत्यादि श्रुतिभिर्ब्रह्मवित्त्वेनेन्द्रस्य ब्रह्मभावापन्नस्य तस्य वेदितुश्च पापकर्माश्लेष-

उक्तः । प्राह्लादीयादीनां वधेन वेदान्तबहिर्मुखानां यतीनां वधेनान्यैश्च स्तेयमात्रादिवधादिभिश्च दितिभ्रूणहत्यादिभिश्च पापकर्माऽश्लेष उक्तः ।

दितिभ्रूणहत्या स्वात्मरक्षायै च नीत्यनुसारिणी । या महत्या तपस्याया कश्यपमाराध्य पुत्रमिन्द्रहणं वृणे, इति वरं वृत्वा तन्नाशं चिकीर्षति तस्या गर्भच्छेदो नातीव दोषावहः ।

भौतिकविज्ञानवादिनस्तु—अन्तरिक्षकक्षामेवादितिं मन्यन्तेऽखण्डनीयत्वात् । अग्निपिण्डप्रायां पृथ्वीञ्च खण्डनीयत्वाद्दितिमभ्युपगच्छन्ति । पुंसवनव्रतेन कालान्तरे सा पुंसां प्राणिनामुत्पादनधारणा क्षमाशीतला समपद्यत । तद्गर्भे क्रियमानस्य महतोऽग्निपुञ्जस्यैवानलप्रभसत्त्वम् । युगसन्ध्यारम्भे जलाभावादेवास्पृष्टवार्य्यधौताङ्घ्रिः सती सा विधि विमोहितेव मूर्च्छितप्राया जाता । तदानीं वायुभूत इन्द्रो ज्वालामुखीरूपेण तद्विस्फोटभिया तादृश्या धरित्र्या गर्भमाविश्य तद्विच्छेदं कृतवान् । विच्छिन्नोऽप्यग्निपुञ्जो वायुतादात्म्यापन्नो भूत्वेन्द्रपक्षमाविश्य सप्तधा बभूव । शरीरे रक्तमेदोमज्जामांसत्वगस्थिशुक्राणामिव पृथिव्या स्वर्णरौप्यताम्ररङ्गसीसत्रपुलौहांशानां संसर्गेणैकस्यापि सप्तधा विभागः । तस्याश्चैकस्य पुनः सौरसप्तरश्मिसम्बन्धेन सप्तधा विभागः । तेनैव सप्त सप्त एकोनपञ्चाशत् संख्याका मरुतो जाताः । तेष्वेव वृष्टिकारकाः केचित् ।

'मनसो रेतः प्रथमं यदासीत्' ( अथर्व १९।५२।१ ) उतासि मैत्रावरुणो वशिष्ठोर्वश्या ब्रह्मन् मनसोऽधिजातः । द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वेदेवाः पुष्करे त्वा ददन्त' । ( ऋ. सं. ७।३४।११ ) 'अप्सरसः परिजज्ञे वसिष्ठः ।' ( ऋ. सं, ७।३३।१२ ) 'सत्रे ह जाता विषिता नमोभिः कुम्भे रेतः सिषिचतुः समानम् । ततो ह मान उदियाय मध्यात्ततो जातमृषिमाहुर्वसिष्ठम् ।' ( ऋ. ७।३३।१३ )

हे वसिष्ठ ! त्वं मैत्रावरुणोऽसि मैत्रावरुणपुत्रोऽसि । उर्वश्यां निमित्तायां हे ब्रह्मन् मित्रावरुण द्रप्सं वीर्य्यं स्कन्नं स्खलितं ततस्त्वमधिजातः । विश्वेदेवा दैव्येन ब्रह्मणा वेदेन सहितं त्वां पुष्करे आददन्त धारितवन्तः । अप्सरसो निमित्तान्नतु तद्गर्भाद् वसिष्ठो जज्ञे जातः ।

सत्रे यज्ञे दीक्षितौ नभोभिः विषितौ व्याप्तौ समानं कुंभे रेतः सिषिचतुः। ततो ह मान उदियाय ततो मध्याज्जातं वसिष्ठमाहुः।

तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम्।
रेतश्चस्कन्द तत्कुम्भे न्यषत वा सतीवरे॥
तेनैव तु मुहूर्त्तेन वीर्य्यवन्तौ तपस्विनौ।
अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतुः॥

इति सायणेन बृहद्देवता उद्धृता।

ननु कथं प्रकृतिविरुद्धाद् घटाद्वसिष्ठस्योत्पत्तिरिति चेन्न, मित्रावरुणयोरमोघवीर्य्यत्वात्।

वस्तुतः सर्वत्र शिवशक्त्योः संयोगेन सृष्टिर्जायते, शीतोष्णयोस्तन्त्रयोर्विद्युत्प्रकाशहेतुत्ववत् तयोरेवाग्नीषोमादिरूपेणाविर्भावः। शुक्रशोणितयोरपि तयोरेवोद्भवः, देवानां महातपसाञ्च सत्यसङ्कल्पत्वात्। यथेश्वरः सङ्कल्पमात्रेण सृष्टिमारचयति तथैव तेषां सङ्कल्पवशादेव शिवशक्तिसमागमः सृष्टिश्च, प्रकाशविमर्शात्मकयोरुभयोः सार्वत्रिकत्वात्। तत्र केचित्सङ्कल्पेन केचित् स्पर्शेनाभीष्टप्रजाः सृजन्ति। यज्ञप्रसङ्गे वसतीवरीनाम्नि घटविशेषे तयोरमोघरेतसोः प्रभावाच्छक्तेर्योगाद्रजोंशकार्यसंपत्तिरपि। पञ्चाग्निसंसर्गेण जन्मलाभः साधारणीरीतिः। द्रोणकृपवसिष्ठादीनां चतुरग्नियोगाद् द्रौपद्यादीनामग्नित्रययोगादेव जन्म सम्पन्नम्। उत्सर्गापवादभावस्य प्रामाणिकत्वात्।

वैज्ञानिका अपि शुक्रमादाय संरक्षन्ति यथेष्टं क्वचिद् गर्भाशये यन्त्रेण स्थापयित्वा सृजन्ति सन्ततीः। पूर्वेषां ततोऽप्यधिकविज्ञानमासीदिति।

वसिष्ठस्यापि कुम्भजत्वेनायोनिजत्वाज्ज्ञानित्वाच्च शास्त्रीयविधिनिषेधातीतत्वमेव। प्रजापतेः पुत्री शतरूपा प्रजापतिपत्नी जातेति पूर्वं समाधानेनैव समाहितम्। रूपकालङ्कारेण सृष्टिवैविध्यप्रतिपादनस्यैतद्ग्रन्थतात्पर्य्यविषयत्वात्। जाह्नवी तु जह्नुना पुत्रीत्वेनाङ्गीकृतेति वाल्मीकीयादौ स्पष्टमेव। तादृग्यौनसम्बन्धस्य निषिद्धत्वादिति त्वयाप्युक्तमेव। मृगीभूतावपि तौ बाणेन हताविति दण्डविधानमप्युपगतमेव। मारिषाया दशप्रचेतसां पत्नीत्वं तु परमेश्वरप्रभावाज्जातमित्यपवादभूतमेव तत्। प्रचेतसां मारिषाया अमानुषत्वाच्च मनुष्याधिकारं शास्त्रं तत्र न बाधकं भवति। सोमो-

ऽपि देव एव। सर्वमनसामधिष्ठातेति सोऽपि न विधिनिषेधगोचर इति न तदुदाहरणेन धर्मव्यवस्थापनं न वा तदनुकरणमिष्यते। "यानि मेऽनवद्यानि तानि त्वयोपास्यानि नो इतराणि" इति श्रुतेः। सन्तानोत्पत्तयेऽनियन्त्रितयौन-सम्बन्धो घातक इत्यार्य्यैर्विज्ञातम्। तेन तन्नियन्त्रणं जातमिति त्वयाभ्युप-गम्यत एव। वेद एव यमयमीसंवादेन भगिन्यादिसम्बन्धस्य निषिद्धत्वात्। न च वेदमन्त्रेषु परवर्त्तित्वं पूर्ववर्त्तित्वं वा समेषां नित्यत्वेनानादित्वात्। तत एव पूर्वकाले भगिन्यादिसम्बन्धोऽनिषिद्धः परवर्त्तिकाले तु निषिद्धः। मन्त्रश्च निषेधकः परवर्त्तिकालिक इत्यादि कल्पनं निर्मूलमेव।

यत्तु तन्नियमपालनकाठिन्येन तन्नवीनता प्रतीयते इत्युक्तिः साप्यज्ञानविजृम्भिता। शास्त्रपारम्पर्य्यसंस्कारसंस्कृतानां तदकाठिन्येऽपि तद्विहीनानामद्यापि तादृङ्निषेधपालनस्य दुष्करत्वात्। पूर्वपूर्वज-पितृपितामहादि पारम्पर्य्यप्राप्तसंस्कारसंस्कृतानां तु शास्त्रज्ञानहीनानामपि घोरे कलावपि भगिन्यादिषु कामः कुण्ठत्येव अत्यन्तकामुकस्यापि वृत्तिः कुण्ठति मातरीत्यभियुक्तोक्तेः। यमयमीसंवादस्तूपन्यस्यते सभाष्यम्—

"ओचित्सखायं सख्यावववृत्यां तिरःपुरुचिदर्णवं जगन्वान्।
पितुर्नपातमादधीत वेधा अधिक्षमि प्रतरं दीध्यमानः॥

(ऋ० सं० १०।१०।१)

अत्रास्मिन्सूक्ते वैवस्वतयोर्यमयम्योः संवाद उच्यते। अस्यामृचि यमं प्रति यमी प्रोवाच। तिरः अन्तर्हितमप्रकाशमानम् निर्जनप्रदेशमित्यर्थः। पुरुचित् बह्वपि विस्तीर्णञ्च अर्णवं समुद्रैकदेशमवान्तरं द्वीपं जगन्वान् गतवती यमी। चित् इति पूजार्थे। जितमिष्टं श्रेष्ठमित्यर्थः। सखायं गर्भवासादारभ्य सखीभूतं यमं सख्या सख्याय स्त्रीपुरुषसम्पर्क-जनितमित्रत्वाय ओववृत्याम् आवर्तयामि। आभिमुख्येन स्थित्वा लज्जां परित्यज्य त्वत्संभोगं करोमीत्यर्थः। अपि च पितुः आवयोर्भविष्यतः पुत्रस्य पितृभूतस्य तवार्थाय अधिक्षमि अधि पृथिव्याम् पृथ्वीस्थानीये ममोदर इत्यर्थः। प्रतरं प्रकृष्टं। सर्वगुणोपेतमित्यर्थः। न पातम् गर्भलक्षणमपत्यं वेधाः विधाता प्रजापतिः दीध्यमानः आवयोरनुरूपस्य पुत्रस्य जननार्थमावां ध्यायन् आदधीत।

"न ते सखा सख्यं वष्ट्येतत् स लक्ष्मा यत् विषुरूपा भवाति ।
महस्पुत्रासो असुरस्य वीरा दिवो धर्तार उर्विया परिख्यन् ॥

( ऋक् सं० १०।१०।२ )

यम आत्मानं परोक्षीकृत्य यमीं प्रत्युवाच। हे यमि ते तव सखा गर्भवासलक्षणेन सखीभूतो यमः—एतत् ईदृशं त्वयोक्तं स्त्रीपुरुषलक्षणं सख्यं न वष्टि न कामयते। यत् यस्मात्कारणात् यमी सलक्ष्मा समानयोनित्व-लक्षणा विषुरूपा भगित्वाद्विषमरूपा भवाति भवति ।

तस्माद्यमयमीसंवादेन भगिनीसम्बन्धनिषेधदार्ढ्यमेव सिद्ध्यति। रागानुगाया अपि यम्या यमेन प्रतिषिद्धत्वात् ।

एवमेव सोमसावित्र्योरुदाहरणेनापि न यौनसम्बन्धस्वातन्त्र्यं सिद्ध्यति, तयोर्भ्रातृभगिनीभावस्यौपचारिकत्वात् । सोमस्य सौरप्रकाशेन प्रकाशवत्त्वात्तस्मिन् तत्पुत्रत्वव्यवहारः । सौरी प्रभायां सावित्र्याश्च सूर्य-पुत्रीत्वव्यपदेशः । सोमसौरप्रभासम्बन्धादेव तस्मिन् तत्पतित्वव्यवहारः। ब्रह्मप्राप्तेन मन्त्रेणाङ्गरागेण सा सोमं स्ववशमापाद्य तत्तादात्म्यं गता। तादृगौपचारिकसम्बन्धेन विवाहनिषेधाभ्युपगमे—'अमृतस्य पुत्राः' इति ऋङ्मन्त्ररीत्या सर्वेऽपि स्त्रीपुरुषाः परमेशपुत्रत्वेन भ्रातृभगिनीरूपा एव भवन्ति। तथा च केषाञ्चनापि सम्बन्धो न योग्यः स्यात्। तस्मान्मानवे लोके मनुष्यभूतानामेव भ्रातृभगिन्यादिविवाहनिषेधः ।

यत्तु—"आदिमसाम्यसङ्घे तु गोत्रं यौनसम्बन्धि संघटनमासीत्। तदनुसारेण सर्वाः पत्न्यः सर्वेषामासन्। स एव यूथविवाहोऽपि। तदानीं पत्नीनां पतिः साक्षात्सम्बन्धी नासीत् । अत एव पतयः पत्न्यश्च पृथक्पृथग्यूथस्य सदस्या भवन्ति स्म । एते यूथाः समूहा वा गोत्रसंज्ञका-भवन्ति स्म। एतेन यूथविवाहपद्धतिरनुमीयते । अस्यां यूथविवाहपद्धतौ साक्षात्सम्बन्धिनां पितृपुत्रभ्रात्रादीनां सम्बन्धो न भवति स्म। असगोत्रविवाह एव तत्समाधानम्। परमेकनिष्ठविवाहारम्भाद् गोत्रप्रथा व्यर्था, तथापि केचित्तत्र संलग्ना एव। असगोत्रविवाहनियमेऽपि एकस्मिन्नेव राष्ट्रे सदृशे वा समूहे विवाह आवश्यक आसीत्। आदिमे युगे लघुकाया एव समूहा आसन्। यत्र साक्षात्सम्बन्धिन एव निवसन्ति स्म। अर्धवन्यावस्थायां मध्य-

युगे द्विपुरुषानन्तरं संघा विभज्यन्ते स्म। तदानीमेकमातृजानां सन्ततीनां यौनसम्बन्धो न भवति स्म। तदा भगिनीनामेकस्या अनेकासां वा परिवारः समूहस्य केन्द्र आसीत्। तासां भ्रातृणां परिवारोऽन्यसमूहकेन्द्रः। भगिन्यश्च सर्वभगिनीपतीनां पत्न्यो भवन्ति स्म। यूथविवाहे मातृणां जनकत्वमेव ज्ञातुम् शक्यमासीत्। यज्ञ (आर्थिक) व्यवस्थायां तासामेव प्राधान्यम्। मातृपरम्परया ता एव गणगोत्रस्वामिन्यः। भ्रातरश्च स्वपत्नीनां गणगोत्रं प्रविशन्ति स्म। दक्षस्य षष्ठिः पुत्र्यो दश त्रयोदश सप्तविंशतिश्चतस्रो द्वे द्वे द्वे इति सप्तधा विभक्ताः सप्तप्रजापतीन् पतिरूपेण गृहीत्वा सृष्टिं कृतवत्यः। अत्र परिवारमूलत्वेन ता एव गणगोत्रप्रवर्त्तिकाः।

प्रजारणिस्तु पत्नी ते कुलशीलसमन्विता।
सदृशी मम गोत्रेण वहामेनां क्षमस्व माम्॥

"तदानीं परिवारस्य मातृणां वा सन्ततयः साम्यसंघस्यैवेति गोत्रनाम्ना व्यवह्रियन्ते स्म। मातृसत्ताया नाशात् कनिष्ठवैवाहिकमर्यादया पितृवंशावलिः प्रवृत्ता। प्राचीनसमाजेऽवैधानिकसन्ततिनामकं वस्त्वेव नासीद्यदिदानीमिव घृणया दृश्येत त्यज्येत वा। भारते मातृसत्ताबहुकालमासीत् यत्रैका पत्नी अनेकैः पतिभिः सम्बद्धासीत्। द्रौपदी तत्रोदाहर्त्तुं शक्या। यद्यपि सा प्रथा न गोपायितुं शक्या, न वाऽन्यार्थत्वेन कल्पयितुं शक्या तथापि लज्जया कैश्चिन्न स्वीक्रियते पुराणेषु तद्विव्रियते।" इति, तदपि तुच्छम्, निष्प्रमाणत्वात्। नहि किञ्चिदपि तादृक्प्रमाणमुपलभ्यते येन कश्चित्तादृशः संघस्तत्र वा भ्रातृभगिन्यादिविवाहविधानं सिद्ध्यति। प्रजारणिस्तु पत्नी ते इति वचनं घटनामात्रबोधकं नतु तद् धर्मत्वबोधकमपि, विधिविरुद्धेतिवृत्तस्य धर्मेऽप्रमाणात्वादित्युक्तमेव। नहि गोत्रमात्रसादृश्येन विवाहिताया अपि पाणिग्रहणं धर्म्यम्। किन्तु या मातुरसपिण्डा पितुरसगोत्रा अक्षतयोनिश्च स्यात् तस्या एव पाणिग्रहणं विहितम्।

'असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने॥" मनु ३।५
सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते॥' (म. १०।५)

अत एव मातृणां सन्ततयो गोत्रशब्देन व्यवह्रियन्ते स्मेत्यपि निर्मूलमेव । विशिष्टानामृषीणां गोत्रप्रवर्त्तकानां सन्ततिष्वेव गोत्रव्यवहारस्य दर्शनात् । यस्यर्षेर्वंशे ये जातास्ते तदृषिसन्ततयस्तदृषिनाम्ना व्यपदिश्यन्ते, तेन तद्गोत्रा इति व्यपदिश्यन्ते । अतः विधिविरुद्धोत्पत्तिकाः सन्ततयस्तदानीमपि निन्द्या एवासन् । अतएव कर्णादीनां देवजत्वेन निर्दुष्टत्वेऽपि लोकव्यवहारदृष्ट्या तद्गोपनाय तत्त्यागो महाभारते स्मर्य्यते । अत एका पत्नी अनेकपतिसम्बद्धेत्यपि नोत्सर्गः किन्त्वपवाद एव । तदिहैवान्यत्रोक्तमेव ।

इह त्रिगुणात्मकेऽनादौ संसारेऽनुकूलाः प्रतिकूलाश्च विविधा घटना घटन्ते, न ताः सर्वा अनुकरणीया भवन्ति । वेदादिशास्त्रविधानानुसारिण्यस्तु ता आद्रियन्तेऽनुक्रियन्ते च ।

परमेश्वरः पूर्णकामः प्राणिनां कर्मानुसारेण तेभ्यः फलप्रदानायाभ्युदयनिःश्रेयससंपादनाय च विश्वं रचयति । तस्य सुव्यवस्थापनाय चानादिसिद्धं वेदादिशास्त्रमुपदिशति । तदेव मुख्यं संविधानम् । संविधानानुसारिणामेव बाहुल्यं सर्वदा भवति । विशेषतः कृतादियुगेषु । विपरीतगामिनोऽपि भवन्त्येव केचित् । तत एवेतिहासेषु शास्त्रविपरीता अपि घटनाः स्मर्य्यन्ते ।

यदपि—"मातृसत्तयैव मूलप्रजापतीनामितिहासः यद्यपि पुरुषैरितिहासविलेखकैर्विलोपितस्तथापि सोमयागसंस्कारे तत्प्रत्यक्षं क्रियते । तथाहि—तत्प्रथमसंस्कारे अदिति ( नारी ) देवता केन्द्रे स्थाप्यते । तेन गणस्य प्रथमविभाजने पथ्यास्वस्ति, अग्नि-सोम-सवित्रदिति इति पञ्चदेवीनामनुमतिरपेक्षिता भवति ।

पथ्यास्वस्तिमार्गमंगलकारिणी, द्वितीया गणाग्निनिःसृतोऽग्निर्यस्यान्यत्र स्थापनीयता, सोमः अन्नाद्यधिष्ठात्री देवी, सविता समयाधिष्ठात्री देवी विभाजितगणस्य यात्रायां चतस्रो देव्यश्चतुर्षु कोणेषु तिष्ठन्ति । सृष्टिदेव्यादयः मध्ये भवन्ति । अत्र केवलमदित्यै घृताक्ततण्डुलहोमः अन्य देवताभ्यो घृताक्तलाजाहोमः । एतेनादिमसमाजस्य निर्माणं मातृसत्तया सिद्ध्यति ।"

तत्सर्वमेतत्कपोलकल्पितम् । अग्निसोमसवित्रादीनां पुंस्त्वेन स्त्रीत्वाभावात् । विधिना यदुद्दिश्य द्रव्यत्यागो विधीयते तस्यैव देवतात्वेन तत्र स्त्रीत्वं पुंस्त्वं वा भवेत् । सृष्टिमूलस्य परमेश्वरस्य प्रकृतिप्राधान्येन स्त्रीत्वं पुरुषप्राधान्येन पुंस्त्वम् । अत एव देवीभागवतादौ भगवत्याः सृष्टि-वर्णनम् । विष्णुशिवपुराणादौ विष्ण्वादेः सृष्टिवर्णनम् । मातृसत्ताशब्देन त्वदभिमतोच्छृङ्खलतावादो न सिद्धयति, यूथविवाहादेः सर्वथाऽप्रामाणि-कत्वात् । द्रौपदी-मारिषादीनां बहुपतिसम्बन्धकारणन्तु स्पष्टमन्यदेवोक्तम् ।

'कुटीगता सा त्वनवेक्ष्य पुत्रौ प्रोवाच भुङ्क्तेति समेत्य सर्वे ।
पश्चाच्च कुन्ती प्रसमीक्ष्य कृष्णां कष्टं मया भाषितमित्युवाच ॥

( म. भा. आ. प. १९७।२ )

इति धर्मचारिण्या मातुर्वचनानुसारेण—

सूक्ष्मो धर्मो महाराज नास्य विद्मो वयं गतिम् ।
पूर्वेषामानुपूर्वेण यातं वर्त्मानुयामहे ॥ २९ ॥
न मे वागनृतं प्राह नाधर्मे धीयते मतिः ।
एवञ्चैव वदत्यम्बा मम चैतन्मनोगतम् ॥ ३० ॥
एष धर्मो ध्रुवो राजंश्चरैनमविचारयन् ।
मा च शंका तत्र ते स्यात्कथञ्चिदपि पार्थिव ॥ ३१ ॥

( म. भा. आ. प. १९५ )

इति युधिष्ठिरवचनेन च—"सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तः-करणप्रवृत्तयः" इति रीत्या तस्य धर्मत्वम् ।

ऋषिकल्पोपाख्याने वर्णितकथानके 'पतिं देहि' इति पञ्चवारोक्त्या श्रीशिवस्य वरदानविशेषेण तस्याः पञ्चपतिसम्बन्धस्य धर्मत्वम् ।

'द्रुपदस्य कुले जज्ञे सा कन्या देवरूपिणी ॥ १४ ॥
निर्दिष्टा भवतां पत्नी कृष्णा पार्वत्यनिन्दिता ॥' १५ ॥

( आ. प. १६९ )

यदीदमाख्यानं कपोलकल्पितं तर्हि द्रौपद्युपाख्यानमपि तथैव किन्न स्यात् । नहि कुक्कुट्या एको भागः पाकाय प्रसवाय चापर उपकल्पते ।

मार्कण्डेय पुराणानुसारेण च पञ्चमेऽध्याये—

पञ्चधा भगवानित्थमवतीर्णः शतक्रतुः ॥ २३ ॥
तस्योत्पन्ना महाभागा पत्नी कृष्णा हुताशनात् ॥
शक्रस्यैकस्य सा पत्नी कृष्णा नान्यस्य कस्यचित् ॥ २४ ॥
योगीश्वराः शरीराणि कुर्वन्ति बहुलान्यपि ॥ २५ ॥

पञ्चेन्द्रा एव शापवशात्पञ्चपाण्डवरूपेणावतीर्णाः । किञ्च पञ्चाग्निसम्बन्धेन येषां पञ्चग्निविद्याक्रमेण जन्म भवेत्तेषामेव मनुष्याधिकारिकशास्त्रनियन्त्रणम् । द्रौपद्याः स्त्रीपुरुषसम्बन्धमन्तराग्निकुण्डसमुद्भूत्वेन शास्त्रातीत्वेनापि न मानवधर्मातिक्रमणं दोषः ।

कुमारी चापि पाञ्चाली वेदिमध्यात्समुत्थिता ।
(आ० प० १६७।४४)

यदपि चासमविवाहैरुत्पन्नाः सन्ततयः पूर्वापेक्षयाऽधिकयोग्या भवन्ति स्म । तेनैव भिन्नगोत्रेषु विवाहः प्रकृतिवरेण्यतानुसारीति, तदपि न, धर्मशास्त्रदृष्ट्या सगोत्रविवाहवदसवर्णविवाहस्यापि निषिद्धत्वात् ।

यदपि च 'यूथ विवाहाभावादेव स्त्रीदुर्भिक्षता । तत एव रुक्मिणीसुभद्रादिहरणकथा । व्यक्तिगतसम्पत्तिप्रभावादेकनिष्ठविवाहः प्रचलितः । तेनैव कुटुम्बे पुरुषाधिपत्यम् । नियोगविधिनाऽन्यपुरुषैरपि सन्तत्युत्पादनप्रथा पाण्डवादीनां तथोत्पत्तिः । दीर्घतमसा अन्यैश्च नियोगेनानेके उत्पादिताः । सर्वमेतद् व्यक्तिगतसम्पत्तिरक्षणार्थम् । आदिमसाम्यसंघेऽपि स्त्रियः प्रजासंजननार्थमासन् । परं ताः महामातृरूपेणादररणीया भवन्ति स्म । तासां परिवारेषु सम्पत्तिषु च समानाधिकारो भवति स्म । एकनिष्ठविवाहयुगे तु गोमिथुनं स्त्रिया मूल्यमासीत् । ता भोगार्थं संतानोत्पादनार्थमेवासन् ।

"प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः ।'
पुत्रार्थे क्रियते भार्य्या पुत्रपिण्डप्रयोजना ॥ ( मनु० ९।२६ )

"पूर्वं युगे तु समान एवाधिकारः । अर्धनारीनटेश्वररूपेणापि सैव समानता व्यज्यते ।" तदपि तुच्छम्, विपरीतस्यैव सुवचत्वात् । यथाम्रादिवृक्षेषु विषमजातीयसंयोगेन यद्यपि रूपरसगन्धाकार वैलक्षण्येन मूलभूतबीजपरम्पराजनितफलापेक्षया वैलक्षण्यं प्रतीयते,

तथापि रसवीर्य्यविपाकादिदृष्ट्या तस्यानिष्टकरत्वमेव निश्चीयते, पारम्पर्य्यञ्च विच्छिद्यते । अश्वगर्दभादि योगेनाश्वतरादिस्वरूपवैलक्षण्यानुभूतावपि सन्ततिविच्छेद एव फलति । तथैवासमविवाहे क्वचिदापातरमणीयतानुभूतावपि परिणामभयावहत्वं विलोक्यते । द्वित्रादिपुरुषानन्तरं सन्ततिपारम्पर्य्यविच्छेदस्त्वनिवार्य्य एव । यूथविवाहकल्पना तु वर्गवादिनां पशुप्रायाणामेव शोभते, न तु मनुष्याणां तेषां शास्त्रपराधीनत्वात् । शास्त्रेषु यौनसम्बन्धस्य सर्वथा नियन्त्रितत्वात् । रुक्मिणीसुभद्रादिहरणं तु सौन्दर्य्यादिगुणविशेषलुब्धतामूलकं न स्त्रीदुर्भिक्षता मूलकम् । श्रीकृष्णादीनां बहुपत्नीकत्वस्य स्मर्य्यमाणत्वात् । नियोगादि समाश्रयणन्तु विशिष्टकुलपारम्पर्य्यरक्षणार्थं क्वाचित्कमपवादभूतमेव तस्यानौत्सर्गिकत्वात् । व्यक्तिगतसम्पत्तेरदूषणत्वादेव तद्रक्षणार्थं प्रयत्नोऽपि युक्त एव । कृते कलौ च सन्तानोत्पादनं पितृपितामहादिसंतोषाय तदृणापाकरणायाद्रियते । स्त्रियः प्रजननार्थाः सुखार्थाश्च गृहदीप्तयः श्रिय इव सर्वदाऽऽदरणीया इति शास्त्रसम्मतमेव ।

यदपि—यत्तु 'गणपुत्रा गणमुत्सृज्य नवीनान् गणान् स्थापयन्ति स्म । नारदोपदेशेन दक्षपुत्राः पञ्च सहस्रसंख्याका गणमुत्सृज्यान्यत्र गतवन्तः । अग्निष्टोमे सारस्वतसत्रे गणयात्रैव वर्णिता । वसन्ते पौर्णमास्याममावास्यायां वा स यज्ञ आरभ्यते । केभ्यः केभ्यो यूथेभ्यो निःसृत्य के के यास्यन्तीति ऋत्विजोऽन्ये च साम्यसङ्घस्य प्रतिष्ठिता अग्नि परितः स्थित्वा निर्णयन्ति स्म । गन्तृभ्यो दीक्षा नूतनानि वस्त्राणि दीयन्ते स्म । दीक्षया नूतनं जन्म गणपुत्राणां मन्यते स्म । पात्राणि गावः, अजाः, सूराः, अन्नम् , शकटम् , अन्योऽग्निरपि तत्र स्थाप्यते । प्रस्थानारम्भे सहभोजः सोमरसपानादिकं कुर्वन्ति । निष्पापाः सहयोगिनश्च भविष्याम इति गन्तारः प्रतिजानन्ति । षड्रात्रक्रत्वध्ययनेन सारस्वतसत्राध्ययनेन च तद्विवरणं विज्ञायते । अध्वर्युः शम्यामादाय पुरतो गच्छति । गणनिर्वाहयोग्या भूमिरपेक्षिता भवति । यत्र शतं गावः गवेन्द्राश्च घासं प्राप्नुवन्ति । पश्वपेक्षयाऽपि मनुष्यास्तदानीमल्पमूल्याः ।

कदाचित् स्थानान्वेषणकाल एव रोगैः शत्रुभिश्च गणाः समाप्यन्ते स्म । दुर्बलावस्थायामन्ते स्वगणे समाविश्यन्ते । गणः स्वयमेव तदन्यगणे निविशते ।

संख्यावृद्ध्या गणाद् गणान्तरक्रमेण सर्वत्र प्रसृतिः। नद्यादिभिः प्लावनैश्च विनाशोऽपि जलप्लवे मत्स्याधारेण यथा मनो रक्षणं भारतीय-ग्रन्थे तथैव वायबिल जिन्दावेस्तादावपि सा कथा।' इति, तदपि यत्किञ्चित्, कुटुम्बिवृद्धौ गृहान्तरनिर्माणवत् ग्रामनगरादि वृद्धौ ग्रामनगरान्तर-निर्माणवत्संघान्तरनिर्माणस्य स्वाभाविकत्वात्। अद्यापि मनुष्याणां कुले जाति–सभा–समित्यादिरूपेण पृथक्-पृथक् सामूहिकसंघादिनिर्माणं दृश्यत एव। आरण्यकाः पक्षिणः पशवश्चापि स्वात्मरक्षणार्थं संघीभूताश्चरन्ति। नैतावता वर्गवादिकल्पित आदिमसाम्यसङ्घः सिद्ध्यति। दक्षपुत्राणां नारदोपदेशान्न सङ्घान्तरनिर्माणं किन्तु प्रवृत्तिमार्गपरित्यागेन निवृत्तिमार्गा-श्रयणमेव, श्रीभागवतादौ तथैव वर्णनदर्शनात्।

अग्निष्टोमसारस्वतादियागेषु तु गणयात्रादिकं न सिद्ध्यति। अग्निष्टोमादिसम्पत्त्यर्थं वनीवाहनाख्याया यात्राया अग्निष्टोमसाधनसंग्रहार्थ-स्यैवोक्तत्वात्। अत एव तत्प्राप्त्यनन्तरं पुनः प्रत्यावर्त्तनं भवति। न तत्र गणान्तरस्थापनं भवति। सारस्वतसत्रेऽपि न पूर्वसम्बन्धविच्छेदः। सरस्वत्या उद्गमस्थाने दीक्षां विधाय प्रतिशम्याप्रक्षेपं यागमनुष्ठाय क्रमेण प्रयागं प्राप्य गोसहस्र दक्षिणां दत्त्वाऽवभृथस्नानं कृत्वा स्वगृहं गम्यते।

अवभृथस्नानानन्तरं पुनः स्वस्थानप्रत्यागमनविधानात्। किञ्च न तत्र सर्वत्र गणाद् गणान्तरस्य विच्छेदः, न वा गणस्य तत्र यात्रा। किन्तु— एकस्य यजमानस्यैव यात्रा भवति। अन्ये तु ऋत्विजो भवन्ति। सर्वमेतद्याग-स्वरूपनिरूपणप्रसंगे निरूपितमेव। निष्पापतया सहयोगेन कार्य्यसम्पत्त्यर्थम् तानूनप्त्रघृतस्पर्शस्तु ज्योतिष्टोमादावपि भवत्येव पात्रगवादिनयनन्तु प्रात्याहिक-तत्तत्कर्मसंपादनार्थमेव।

विघ्नास्तु लघीयस्यामपि यात्रायां संभवन्ति किमु महत्यां सारस्वत-यागनिमित्तायां यात्रायाम्। भीषणजलप्लावनमत्स्यकृतरक्षणादिकथा तु स्वतन्त्रा, न सा सारस्वतयागनिमित्तयात्रासम्बन्धिनी किन्तु कादाचित्की सा घटना। सारस्वतयागानुष्ठानं तु यदैव यजमानस्य तादृशी श्रद्धोत्पद्यते तदैव संपद्यते। पारसीकादि कथा ततो विभिन्नेतीहैवान्यत्र स्पष्टम्।

यदपि च 'संदेशप्रापणसाधनाभावात् दूराद्दूरं प्रसृतेषु जनसमूहेषु परस्परं सम्बन्धो नासीत्तेनैव गणगोत्राणां भाषाभेदः संवृत्तः । गणानां भाषाः मूलभाषातोऽत्यन्तभिन्ना एव जाताः । पाणिन्यादिभारतीय-व्याकरणानुसारेण युष्मदस्मच्छब्दयोः सप्तसु कारकेषु—एकविंशती रूपाणि भवन्ति । तदर्थं पाणिनिना—त्रयोविंशति नियमा निर्मिताः ।

ऐतरेये—ब्रह्मेन्द्राग्निप्रजापत्यादीनामपि मरणशीलत्वमुक्तम् । सामाजिकरूपेण तेषामपि संघटनम् । वसोरष्टगणाः, रुद्रस्यैकादशगणाः, मरुतामेकविंशतिगणः, आदित्यस्य द्वादशगणाः सर्वेऽपि विभिन्नगोत्रेषु विभक्ताः । साक्षात्सम्बन्धिषु सगोत्रेषु च विवाहादिनिषेधात् दूराद्दूरमुपगतास्तेनैवोपभाषा बहुधा भिन्नास्तेषाम् परस्परशत्रवश्च पुरदेव सुरदेव शिश्नदेव सूरदेवादयः सञ्जाताः ।

ऋग्वेदे—देवगणानां गवामपहारकैः पाणिभिर्युद्धं जातम् । तत्र तत्र देवगणानां नेतृत्वं सरमया कयाचिन्नार्य्या कृतम् । सरितोऽरण्यानि चातिक्रम्य तपापणयोऽन्विष्टाः । साम्यसङ्घस्य शान्तिकालीनोऽध्वर्य्युरेव युद्धकाले युद्धनेतृत्वं करोति स्म । स च न शोषकवर्गस्य सेनापतिरिवोच्चवेतनभागी अपरिहार्य्यश्च किन्तु साम्यसंघवृतः साम्यसङ्घस्य कार्यं करोति स्म, अन्यसदस्यानामिव सामूहिकोत्पादनात्तस्यापि भागो धनोत्पादने युद्धे च समानः यानि धननामानि तानि युद्धनामान्यपि । गवादिप्राप्त्यर्थं युद्धमपि यज्ञ एवासीत् ।' इति तदपि तुच्छम्—कपोलकल्पितत्वेन प्रमाणशून्यत्वात्, तदभिमतवेदवचनानामन्यपरत्वेन प्रकृते प्रमाणाभासत्वाच्च । वेदानामनादित्वेन धर्मबोधकत्वेन चेतिवृत्तपरत्वं नास्त्येव । अन्यपरैरपि वचनैर्यद्वृत्तं विज्ञायते तन्न वन्यार्धवन्यावस्थाज्ञापकं शतचक्ररथशतारित्रनौकाऽन्तरिक्षयानादिव्यवस्थाया ज्ञापकत्वात्, स्वर्णभूषणरथारोहणधनुर्बाणवज्रादिदिव्यास्त्रबोधकत्वाच्च दूरात्संदेशप्रेषणादिकमपि नासीदिति न वक्तुं शक्यते । मन्त्रभावनादिबलेन दूरस्थदेवानां यागादावावाहनदर्शनाच्च ।

समुद्रे दूरात्सुदूरे विपन्ननौकानां ज्ञानमाश्विनप्रार्थनया साहाय्यप्रेषणञ्च ऋङ्मन्त्रैरेव विज्ञायते । सामान्यजनानान्त्वद्यापि तन्त्रीसंदेशयन्त्रवार्तादिकं दुर्लभमेव । न च सुदूरगमनसन्देशप्रेषणदौर्लभ्ये भाषाभेद-

प्रयोजके भवतः। मात्रादिव्यवहारेण मातृभाषाया शिक्षणदर्शनात्। तेनाशक्त्या भाषान्तरसंसर्गेण च भाषाभेदोऽङ्गीकरणीयः। व्याकरणज्ञस्याप्यनभ्यासविस्मृत्यादिनाऽशुद्धशब्दोच्चारणं भवति। बालानामनधीतव्याकरणानां विस्मृतितद्वित्संसर्गराहित्येन च शब्दानामशुद्धयोगापत्तेः। वेदेभ्योऽपि संस्कृता वाचो भिन्ना ततोऽपि भिन्ना मानुष्यो वाचो विज्ञायन्ते। अत एव यज्ञादिप्रसंगे मानुषीवाग्व्याहरणेन प्रायश्चित्तं श्रुतम्। 'स यदि मानुषीं वाचं व्यहरेत् वैष्णवीमृचं यजुर्वा जपेत्।' तेन पुण्यपापयोरिव साध्वसाधुशब्दानामप्यनादित्वमेव। तत एव साध्वसाधुशब्दानां मिश्रणं जायते। 'दैवी वाग्व्यवकीर्णेयमशक्तैरभिधातृभिरि'ति (ब्र. का. १५४) वाक्यपदीयरीत्या—शुद्धाशुद्धसंस्कृतापभ्रंशशब्दसाङ्कर्य्यं जायते। व्याकरणलक्षणैरसाधुशब्देभ्यः साधुशब्दानां विविच्य ग्रहणं भवति। तदेव 'तितउना पुनन्तो' इत्यादिना यथा चालन्याऽग्राह्येभ्यो विविच्य ग्राह्यान् गृह्णन्ति, तथैवासाधुशब्देभ्यो लक्षणैर्विविच्य साधुशब्दान् गृह्णन्ति। अयमेव संस्कारस्तेनैव शब्दानां संस्कृतत्वम्, नत्वत्र मलापनयनातिशयाधानादिलक्षणः संस्कारः संभवति शब्दानां नित्यत्वात्।

एवं गणगोत्राणां परस्परासम्बन्धोऽपि न शक्यसमर्थनः, विवाहसम्बन्धस्यागोत्रेष्वेव विधानात्।

'असगोत्रा च या पितु' (म. ३।५) रित्युक्तत्वात्। संस्कृतभिन्नभाषाणां शुद्ध्यशुद्ध्योर्व्यवहारमूलकत्वेन व्यवहारभेदाद् भेदो युज्यते। तत्र सामाजिकपरिवर्त्तनमपि संभवति, न संस्कृतशब्दानाम्, तच्छुद्ध्यशुद्ध्योः पुण्यापुण्यमूलकत्वात्। पुण्यापुण्ये चापौरुषेयवेदमूलके, न व्यवहारमूलके, व्यवहारस्याव्यवस्थिततत्वात्, तयोश्च नियतत्वात्। तेन संस्कृतभाषया सार्द्धमनेका मानुष्यो भाषास्तत्तद्देशानुसारिण्यो भवन्त्येव। तासां संमेलनेन सांकर्य्यमपि जायते। यथा गौर्जरी महाराष्ट्रीयादिभाषासु उर्दू इङ्गलिश प्रभृतिभाषाणां शब्दा मिश्रिता दृश्यन्ते।

एवमेव व्रात्यस्तोमानुष्ठानेनान्यगणस्थानां शुद्धिः क्रियते स्म इत्यपि निर्मूलम्। वैदिकसंस्कारशून्यानामधिकारिणामेव कृते व्रात्यस्तोमविधानात्। नहि वेदानधिकारिणामत्रैवर्णिकानां व्रात्यस्तोममात्रेण

वैदिककर्मार्हता भवति । न वा संस्कृतानां त्रैवर्णिकाना-मन्यगणस्थानामपि प्रायश्चित्तार्हता । तस्माद्यत्किञ्चिदेतत्, तादृग्गणस्य खपुष्पायितत्वाच्च । गणानन्तर्गतत्वाद् गणानङ्गत्वादेव च कश्चन निष्कारणं मार्य्यते स्मेत्यपि निराधारम् । गोचरभूमिप्राप्त्यर्थं निवासार्थञ्च सर्वदैव भूमिरपेक्षिता भवति, तल्लाभाय संघर्षोऽपि स्वाभाविकः । परन्तु महाभारते तादृग्युद्धवर्णनमस्तीति निर्मूलमेव ।

वसुरुद्रादिगणास्तु देवगणाः । देवा, दिव्या भवन्ति, न तेषां गोचरभूम्याद्यर्थं युद्धं संभवति । तेषां मानुषत्वे प्रमाणाभावात्, देवत्वे प्रमाणस्योक्तत्वात् ।

आदित्या दैत्या दानवाः काद्रवेया इतिमातृनाम्ना तत्पुत्राणां प्रसिद्धयो न गणप्रसिद्धयः । काद्रवेया अपि दिव्यशक्तिसम्पन्नाः सर्पनागादयो न मानवाः । वैनतेयास्तु पक्षिण एव । सुदासदिवोदासादियुद्धकालः पितृसत्ताकाल इत्यपि निर्मूलकल्पनम् । मातृसत्ता कालः पितृसत्ताकालः तद्भेदमूलकश्च संघर्षो न वेदेषु ।

एवमेव व्यक्तिगतसम्पत्तिदासत्ववर्गसंघर्षादि कल्पनाऽपि वर्गवादिनां कपोलकल्पनैव, वेदे तत्प्रमाणानुपलम्भात् । ज्योतिष्टोमादिकर्मणां न कालविशेषो निर्धारयितुं शक्यस्तेषामनादित्वात् । तेषाञ्चानुष्ठानं व्यक्तिगतसम्पत्त्यैव । तत्रैको यजमानो भवति । तदङ्गभूता अन्ये ऋत्विजस्तु दक्षिणाभिः परिक्रीयन्ते । दासत्वप्रथाऽपि सर्वदैवासीत्, अङ्गत्वशेषत्वरूपस्यैव दासत्वात् । अङ्गाङ्गिभावस्तु सर्वदैव भवति । गुरूणां सविधे शिष्या दासा एव भवन्ति । "हरिदासस्य राजर्षेः" 'हरिदासवार्य्य' इति भागवतादौ राजादावपि दासपदप्रयोगदर्शनात् । अत एव अहयः दासा आर्य्याश्च न जातिविशेषा नवा गणविशेषाः किन्तु अहयः सर्पा भवन्ति । क्वचित्कौटल्यगुणयोगेन दैत्येष्वेवाहिपदप्रयोगः । तेऽपि मानवभिन्ना एव । आर्य्यदासाश्च यद्यपि मानवास्तथापि न जातिविशेषाः । तद्व्यवहारस्य तु आचारश्रेष्ठत्वाश्रेष्ठत्वाऽङ्गत्वानङ्गत्वभेदमूलकत्वमेव । अत एव कीथ महाशयोऽपि आर्यशब्दं जातिपरं न मन्यते, न वा सायणादयस्तथा अभ्युपगच्छन्ति ।

दैत्या आदित्याश्च कश्यपपुत्रास्तत एव सर्वेऽपि यज्ञाधिकारिणो भवन्त्येव । मन्त्रोच्चारणाशुद्धिस्तु प्रमादकृता, नाभिसन्धिमूलिका। अशुद्धयु्च्चारणपराभवहेतुत्वेन वर्जनीयमिति प्रदर्शनार्थमेव 'तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुस्तस्माद् ब्राह्मणो न म्लेछितैव नापभाषित वै म्लेच्छो ह वा एष यदपशब्दः' इति महाभाष्योद्धृतश्रुत्या अशुद्धोच्चारणेनासुराः पराबभूवुरित्याद्युक्तम् ।

एवं युद्धाहृतधनवितरणं गणप्रणाल्यैव भवति स्मेत्यपि यत्किञ्चित् । यतः सामूहिकयुद्धे व्यक्तिविशेषस्य फलभागित्वाभावः स्वाभाविक एव। एवमेवादिमसाम्यसंघस्य सामूहिकोत्पादनप्रणाली च मनःपरिकल्पितैव।

यदुक्तं 'देवानां व्यापकत्वामृतत्वं यद्यप्यारोपितं तथापि तेषां मर्त्त्यत्वादिकमप्युक्तमेवे' ति तत्तुच्छम्, मनुष्यापेक्षया देवानां चिरस्थायित्वेनामृतत्वेऽपि कल्पान्ते तेषामपि नाशाभ्युपगमेन मर्त्त्यत्वोक्तेर्युक्तत्वात्। न च काल्पनिकं देवानाममृतत्वादिकं 'अपाम सोमममृता अभूम' अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती' ति प्रमाणसिद्धत्वात् । 'आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते ।' इति रीत्या महाप्रलयपर्य्यन्तावस्थायित्वेन तेषाममृतत्वाभिधानात् ।

'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामत्र पुण्यचितो लोकः क्षीयते' इति श्रुत्या 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति स्मृत्या च तेषां कल्पान्ते पुण्यान्ते वा नाशश्रवणान्मर्त्त्यत्वमपि युक्तमेव । अनपेक्षिकममृतत्वन्तु ब्रह्मभावापन्नानामुक्तानां केवलिनामेव ।

अग्न्यादित्यादीनां विश्वोत्पत्तिस्थितिहेतुत्वेन विश्वरचयितृत्वमप्यापेक्षिकमेव मुख्यं रचयितृत्वन्तु परमेश्वरस्यैव ।

वसोरष्टगणा रुद्रस्यैकादशगणा इत्यादि कल्पनाप्यशुद्धा निष्प्रमाणत्वात् । 'अष्टौ वसव' इत्यादिवचनन्तु वस्वादिसंख्यानिर्धारकं न गणसंख्या निर्धारकम् । मरुताञ्च नैकविंशतिगणाः किन्तु मरुत एकोनपञ्चाशत्संख्याकास्तद्विवरणस्यान्यत्रोक्तत्वात् ।

एवमेव सगोत्रविवाहनिषेधेन भाषाभेदः शत्रुभावः परस्परं विप्रकर्षश्चेत्यादि कल्पनमपि निःसारम् । विवाहादिना सम्बन्धस्थापनेन मित्रत्वसन्निकृष्टत्वपरस्परभाषाभिज्ञत्वादीनां वृद्धिदर्शनात् ।

एवमेव पुरदेवशिश्नदेवादिकल्पनापि तुच्छा । शिश्नोदरपरायणानां निन्दितत्वेन देवत्वाभावात् । सुरदेवादिशब्दानां पर्य्यायवाचकत्वाच्च। देवदूती सरमा च न नारी किन्तु शिक्षिता देवशुनीति तस्यापि ऋङ्मन्त्रैरेव विज्ञानात् ।

एवमेवादिमसाम्यसङ्घस्य यज्ञकर्त्ता अध्वर्य्युरेव युद्धनेता भवति स्मेत्यपि निर्मूलम् । यज्ञानां यजमानकर्तृकत्वेन व्यक्तिगता भिन्ना एवाध्वर्य्यवो भवन्ति । ते च ब्राह्मणा भवन्ति । युद्धनेतारस्तु प्रायेण क्षत्रिया अभूवन् । गणयाजकत्वस्य निन्दितत्वाच्च नादिमसाम्यसङ्घकर्तृको यागः संभवति । सत्रेऽपि व्यक्तिगतसामग्रीसम्पन्नाः कृताग्निष्टोमा विभिन्ना यजमाना एव संभूय सत्रं संपादयन्ति । सत्रान्ते पुनश्च पृथक् पृथक् नित्याग्निहोत्राद्यनुष्ठायिनो भवन्ति ।

अध्वर्य्युरपि दक्षिणया परिक्रीयते। तेन सोऽपि रूपान्तरेण वेतनभागेव ।

यदुक्तम्–'समानत्वेनैव युद्धं यज्ञश्च समाननामनी भवत इति' तदपि न । सिंहवानरविष्णूनां विलक्षणानामपि हरिपदवाच्यत्वदर्शनात् । धर्मबुद्धयानुष्ठीयमाने युद्धेऽप्यादरातिशयादेव यज्ञत्वाभिधानं क्वचिद् दृश्यते । नहि तद्भिन्नस्य यज्ञस्य यज्ञशब्दवाच्यतैव न संभवति ।

यदुक्तम्—"सशस्त्रस्य साम्यसंघस्य सर्वेऽपि युद्धन्ते स्म, कालान्तरे श्रमविभागादिना क्षत्रियाणां युद्धम्, ब्राह्मणानां पौरोहित्यं विभक्तम् । प्राचीनतमे युगे सामूहिके संघटने सर्वं ब्रह्मसम्बद्धमासीत् । पश्चात् ब्राह्मणो नेता बभूव अर्धवन्यावस्थायां यथा सर्वजातीयाः सर्वाणि सामूहिकवस्तूनि वितरणानि वा देवत्वेन धार्मिकानुष्ठानरूपेण प्रतिष्ठापयन्ति स्म। तथैवार्या ब्रह्मणा साम्यसंघेन युद्धाद्यर्थं वृतो युद्धपरिचालको ब्रह्मणस्पति—बृहस्पति-गणपतिप्रभृतिरूपेणाद्रियते स्म । युद्धसम्बन्धे योग्यमन्त्रणादातृत्वेन कश्चिद्विद्वान् बृहस्पतिर्गणपतिस्त्वद्यापि पूज्यते ।

वस्तुतः स्वसाम्यसंघस्य नेतैवासीत् । तेनैव संघस्तस्मै सामूहिकोत्पादने हविर्यज्ञे भागं ददाति स्म । तदर्थमेव तदाह्वानम् । स रक्ताम्बरः पाशहस्तश्च शूलहस्तिदन्तधरः शत्रुभिर्युद्ध्यते स्म । शत्रुपराजयानन्तरं

तदीयपशुधनस्त्रीबालादीन् वशीकृत्य भोग्यवस्तूनि गणे वितीर्यन्ते स्म। तत्र केन्द्रस्थाने वेद्यामासन्द्यां गणपतिमुपवेश्य सहभोजे गणो गणपतिश्च स्तूयते स्म । स गणपतिः स प्रियपतिः स निधिपतिस्तस्यैव निरीक्षणे धनवितरणम् । शत्रुप्रदेशे प्रथमप्रविष्टोऽश्वोऽश्वमेधयज्ञस्य मुख्यः पशुः। पवित्रभोजनञ्च तं स्नपयित्वा यूपे बध्नन्ति स्म । तन्मारणात् प्राक् सुरामांसादिभक्षणैः श्रृङ्गाररसपूर्णैर्नृत्यै र्यौनसम्भोगैश्च महोत्सवं कुर्वन्ति स्म।

विजितगणस्य सुन्दर्यो यद्यप्युपहाररूपेण गृहीता भवन्ति स्म तथापि तासां सौन्दर्यप्रभावाद्यूथपत्न्य उपेक्षिता भवन्ति स्म। तासां विलापः क्षत्रृपलगली संवादे दृश्यते। यद्यपि तदश्लीलं परं यज्ञे तत्पवित्रमुचितञ्च। गणस्य मूलपत्न्यो गणिका उच्यन्ते स्म । ततः पुरुषमेधयज्ञे विजितवशीकृतशत्रूणां हत्या ब्रह्ममेधे शवसंस्काराः क्रियन्ते स्म इति।

तदपि तुच्छम्, भवदुक्तसर्वकल्पनानां प्रमाणाभासयुक्त्याभासमूलकत्वेन निःसारत्वात् । पूर्वं सर्वे सर्वकार्य्यकरा आसन् पश्चात् श्रमविभागेन क्षत्रियादयो जाता इति श्रुतिविरुद्धमेव। पुरुषसूक्ते मुखजत्वादिना जन्मनैव ब्राह्मणादीनामुत्पत्तिश्रवणात्। 'मुखबाहूरुपज्जाना–( म० १।८७ तथा १०।४५ ) मिति मन्वादिभिस्तथैव व्याख्यातत्वाच्च । ऋग्वेदादिप्रमाणमन्तरा त्वत्कल्पनामात्रेण वेदमन्त्रेषु प्राचीनार्वाचीनत्वादिकं नाभ्युपगन्तुं शक्यम् त्वत्कल्पनाया निष्प्रामाणिकत्वात्। अत एवादिमसाम्यसङ्घस्य ब्रह्मपदवाच्यता तन्नेतुश्च ब्रह्मणस्पतित्वमिति कल्पनं निःसारम्, सायणादिभिर्ब्रह्मणस्पतिशब्दस्य यथास्थानं भिन्नार्थत्ववर्णनाच्च। अर्धवन्यावस्थायां ज्ञानविज्ञानविकासाभावात् कथं दिव्यशक्तिसम्पन्नदेवादिज्ञानं, कथं वा लौकिकेषु वस्तुषु तदारोपः संभवति । देहातिरिक्तनित्यात्मविज्ञानाभावादामुष्मिकफलाय धर्मानुष्ठानं धर्मस्य च गम्भीरस्वरूपविज्ञानं नार्धवन्यानां संभवति। तत एवेश्वरीयवेदानुसारेणैव धर्मोपासनादिज्ञानं संभवति । गणपतिबृहस्पति—ब्रह्मणस्पत्यादिशब्दैरादिमसाम्यसङ्घस्य सेनापतिरभिधीयते इति कल्पना सर्वथा निर्मूलैव । गणपत्यथर्वशीर्षादिरीत्या वक्रतुण्डत्वगजाननत्वलम्बोदरत्वादिविशिष्टदेवविशेषस्य गणपतिनाम्नाभिहितत्वात् । तस्य

च ब्रह्मरूपता प्रपञ्चोत्पत्तिस्थितिलयकारणता चोक्ता । नहि तत्सर्वमौपचारिकं वर्णयितुं शक्यम् । उपक्रमोपसंहारादिभिर्लिङ्गैस्तत्रैव तात्पर्यानिर्णयात् । शासनसत्तानङ्गीकारेण त्वन्मते तस्य गणपतित्वासंभवाच्च । निधिपतित्वमपि तस्य न संभवति । त्वन्मतरीत्या निधीनां सामूहिकत्वात् । मूलवचनेषु न तस्य हस्तिदन्त आयुधम् किन्तु तस्यैव हस्तिमुखत्वेन दन्तधरत्वेन परशुरामेण युद्धेऽपरस्य दन्तस्य भग्नत्वादेकदन्तत्वमुक्तम् । न चात्र सहभोगादिकं प्रकृतं न वा वचनसिद्धम् । युद्धाहृतधनस्त्रीवितरणमपि न वचनसिद्धमिति निर्मूलमेव तत्कल्पनमपि । बृहस्पतिस्तु ततो भिन्नो देवगुरुः । देवाश्च मनुष्यापेक्षया भिन्ना दिव्यशक्तय इत्यप्युक्तमेव ।

अश्वमेधीयोऽश्वो वैधो न तु युद्धाङ्गभूतोऽश्वः । अश्वमेधे तु युद्धमङ्गं केनचिदश्वमेधीयाश्वग्रहण एव तत्संभवात् । साधारणे युद्धे तु बहवोऽप्यश्वाः भवन्ति । अत एव न तद्भोजनाय भवति । किन्तु यजनाय तदपेक्षा भवति ।

वस्तुतः लोकायतभूता मार्क्सीयाः सर्वमपि वेदं लोकायतीकर्त्तुमिच्छन्ति । तत्र एवादृष्टपरमपि वेदं दृष्टार्थं कर्त्तुमिच्छन्ति ।

एवमेव पूर्वमीमांसापि लोकायतीकृताऽसीत् । तामास्तिकपथे प्रतिष्ठापयितुमाचार्याणां महान् प्रयत्नो जातः ।

"प्रायेणैव हि मीमांसा लोके लोकायतीकृता ।
तामास्तिकपथे नेतुं सैष यत्नः कृतो मया ।" श्लोकवार्त्तिके ।
"लोकायतिकमूर्खाणां नैवान्यत्कर्म विद्यते ।
यावत्किञ्चिददृष्टार्थं तद् दृष्टार्थं हि कुर्वते ।
वैदिकान्यपि कर्माणि दृष्टार्थान्येव ते विदुः ।
अल्पेनापि निमित्तेन विरोधं योजयन्ति ते ।

एवमेव वर्गवादिनोऽश्वमारणं भोजनार्थं मन्यन्ते । सुरामांसभक्षणं रसपूर्णं नृत्यसंभोगादिकञ्चाश्वमेधे मन्यन्ते । परं सर्वमेतन्निर्मूलम्, शास्त्राज्ञानविजृम्भितञ्च । अपौरुषेयवेदग्रन्थस्य धर्मप्रतिपादने प्रवृत्तिर्न संभोगादिप्रबोधने, तस्य लौकिकत्वेन लोकगम्यत्वेन शास्त्रैकसमधिगम्यत्वाभावात्, अश्वमेधप्रकरणे सुरापाननृत्यसंभोगादिबोधकपदवाक्याद्यभावाच्च । अश्वमेधयागस्वरूपञ्चैतद्ग्रन्थेऽन्यत्रोट्टङ्कितमेव ।

एवमेव विजितगणस्य सुन्दर्य्यो गृह्यन्ते इत्यपि निर्मूलम्, तद्बोधकपदानां मन्त्रेष्वभावात्। स्वकलुषितभावनामेव मन्त्रेष्वारोपयन्ति वर्गवादिनः। तासां सौन्दर्य्येण यूथपत्न्य उपेक्षिता भवन्ति।

एवमेव गणानां मूलपत्न्यो गणिका भवन्ति स्म इत्यादि शब्दसाम्यदर्शनमूलिकादुष्कल्पनैव, निर्मूलत्वात्। किन्तु स्वस्वरूपानुसारिण्येवैषा कम्युनिस्टानां कल्पना। यदि च भावत्कस्यादिमसाम्यसङ्घस्य पत्न्यो-गणिकास्तदा तत्पतयोप्यादिमसाम्यसङ्घीया भण्डा एवेत्यपि मन्तव्यम्। त्वदर्थमेव सा कल्पना साध्वी। सा वेदमन्त्रे वैदिकेषु याज्ञिकेषु नारोपयितुं शक्या। एतदादर्शानुसारेण भाविन्यपि साम्यवादे साम्यवादिनो भण्डतमास्तत्पत्न्यश्च गणिकातमा भविष्यन्ति।

यदुक्तम् "नारीणां दासीत्वं मातृसत्तायाश्च समाप्तिः। वन्यावस्थायां स्त्रीपुरुषयोः सर्वथा समानाधिकार आसीत्। अर्धवन्यावस्थायां शस्त्रास्त्रादिषु पुंसामधिकारो नारी तत्र भोगमात्रभागिनी। वन्यावस्थायां युद्धमृगयादिपरः पुमान् गृहे नार्याः प्रमुखसत्तामभ्युपगम्य तुष्यति स्म। परं तदपेक्षया तु सभ्यः पशुपालनपरायणः पुमान् तत्रातुष्यंस्तस्याः प्रमुखतामपसार्य स्वीयं प्रभुत्वं स्थापितवान्। तदाश्रिताऽपि नारी संतुष्टैवासीत्। तत्रापि गृहाभ्यन्तरे विद्यमानश्रमविभागानुसारेण संपत्तिविभागोऽप्यासीत्। बहिः श्रमविभागेन सम्बन्धः सर्वथा परिवृत्तः। बाह्यश्रमविभागेनैवान्तस्तस्याः प्रमुखाधिपत्यमासीत्। जीवनोपयोगिवस्तुमहत्त्वापेक्षया यदा गृहश्रमस्य प्रामुख्यं नष्टम् ततो मातृसत्तां समाप्य पितृसत्ता स्थापिता।" इति,

एवमेव गणस्याभ्यन्तरे भ्रातृणां युद्धकल्पनाऽपि निर्मूलैव। अदितिपुत्राणां दितिपुत्रैः विनतापुत्राणां कद्रूपुत्रैश्च युद्धं प्रवृत्तमित्यनेन सर्वत्र सर्वदा च राजसतामसभावोद्रेके मातृषु पितृषु सगोत्रेषु असगोत्रेषु च युद्धं (संघर्षो) जायते। सत्त्वोद्रेके तु सर्वत्र सौहार्दं सामञ्जस्यञ्च सम्पद्यते इत्येव सिद्ध्यति।

व्यक्तिगतसम्पत्त्युदयो गणे वाऽदिमसाम्यसंघे वा नासीदिति कथनमपि निर्मूलम्, सत्रात्पूर्वं वैयक्तिकयागसत्त्वेन वैयक्तिकसम्पत्तिसत्त्वसिद्धेः। गणयुद्धं गृहयुद्धञ्च राजसतामसभाववृद्धौ सर्वत्रैव प्रवर्त्तते। अतएव

सम्पत्तेः शोषणस्य कस्मिंश्चित्कालविशेषे प्रादुर्भाव इति न वक्तुं शक्यते। अतएव विष्णुपुराणे सत्त्वादिविकासानुक्रमेणैव शान्तिलाभादिविकास उक्तः। सृष्टेः प्रारम्भे सत्त्वबाहुल्येन राज्यराजादिनैरपेक्ष्येण सुव्यवस्थोक्ता। धर्म-विभ्रमादेव क्रोधलोभादिविकासाद्युद्धादिप्रवृत्तिरुक्ता। नहि कृतादियुग-गता मनुष्या वन्यावस्थावन्तस्तेषां ज्ञानविज्ञानसम्पन्नत्वात्। न तु राज्यादि-व्यवस्थाज्ञानाभावाद्राज्याद्यभावः किन्तु सर्वेषां परस्परोपकारकत्वात्पोषक-त्वाच्च शोषणादिलक्षणस्य मात्स्यन्यायस्याभावादेव व्यक्तिगतसम्पत्ति-कामनादिकमपि तमोरजोजनितमोहक्रोधलोभाद्यन्तर्भूतमेव। गुणाश्च यद्यपि विपरिणमनशीला एव 'क्षणविपरिणामिनो हि भावा ऋते चितिशक्ते' रिति साङ्ख्यसिद्धान्तात्, तथापि साम्येन परिणामे प्रलयो भवति। समष्टि रूपेण कर्मणामुद्भवे सृष्टिरेव भवति। समष्टिरूपेण कर्मणामुद्भवे सृष्टिस्त-दुपरमे तु सृष्टिरेव न भवति। समष्टिरूपेण कर्मणामुद्भवे सृष्टिस्तदुपरमे तु प्रलयः। कारणवैलक्षण्यमन्तरा कार्यवैलक्षण्यानुपपत्त्या जगद्वैचित्र्याय तद्धेतुभूतकर्मवैलक्षण्यन्तूपेयमेव। साम्यवादिभिरपि प्रयत्नसहस्रैरपि योन्यादि-भेदकृतसुखदुःखतत्साधनादिप्रयुक्तवैलक्षण्यस्यापोहितुमशक्यत्वात्। उत्पाद-शक्तिषु क्रान्तिकारिपरिवर्त्तने सत्यपि वैमनस्याद्यभावेन युद्धं न भवति सद्भावनया सामञ्जस्यस्थापनसंभवात्।

देवेषु दानवेषु विविधयान्त्रिकविकासेऽपि समन्वय आसीत्। इदानीं तु वैज्ञानिकेषु शिल्पिषु क्रान्तिकारिपरिवर्त्तनहेतुष्वपि सद्भावनया सांमनस्यं, दौर्मनस्यञ्च दुर्भावनया दृश्यते। नैता उत्पादशक्तयोऽपि सर्वथा नूत्ना अनादौ संसारे नैकधोत्पादनशक्तिविकासदर्शनात्। सर्वत्रैव कालक्रमेण ज्ञानक्रियाशक्तिविकसेन साधनसाध्यविकासे समुन्नतिकामनया च संघर्षो मात्स्यन्यायावतारश्च। तदन्ते पुनःसुशासनव्यवस्थया मात्स्यान्यायनिराकरणं सुखशान्तिसमृद्धिश्च जायते।

॥ समाप्तम् ॥

# पूज्य स्वामी श्री करपात्री जी के ग्रन्थ

| | |
|---|---|
| वेदार्थपारिजात | १८०·०० |
| रामायण मीमांसा | ४०·०० |
| श्रीविद्यारत्नाकर | ३०·०० |
| मार्क्सवाद और राम-राज्य | २५·०० |
| विचार-पियूष | २२·०० |
| श्रीभगवत्तत्व | २०·०० |
| भक्ति-सुधा | २५·०० |
| चातुर्वर्ण्य संस्कृति विमर्श प्रथम भाग | ५·०० |
| द्वितीय भाग | १५·०० |
| संकीर्तन मीमांसा एवं वर्णाश्रमधर्म | २·५० |
| श्रीविद्यावरिवस्या | ८·०० |
| वेद का स्वरूप और प्रामाण्य ( २ भाग ) | ७·५० |
| अहमर्थ और परमार्थसार | ६·०० |
| राष्ट्रीय स्वयं सेवक संघ और हिन्दू धर्म | ५·०० |
| भक्तिरसार्णव | ५·०० |
| वेदस्वरूपविमर्श | ७·०० |
| पूँजीवाद, समाजवाद और राम-राज्य | ५·०० |
| संघर्ष और शान्ति | ४·०० |
| क्या सम्भोग से समाधि | २·२५ |
| राहुल जी की भ्रान्ति | [illegible]·०० |
| वेदप्रामाण्यमीमांसा | १·०० |
| काल-मीमांसा | ३·०० |
| तिथ्यादिनिर्णय: कुम्भनिर्णयश्च | १·०० |
| धर्म और राजनीति | १·०० |
| संक्षिप्त जीवनी | १·०० |
| ईश्वर साध्य एवं साधन | १·०० |

प्रकाशक—श्री स्वामी वेदान्ती जी, धर्मसंघ, दुर्गाकुण्ड, वाराणसी ।